रश्मिः ।

प्राणोधितिष्ठतीत्याद्यनुगमादत्रापि प्राणो विष्णुरेव ।

'विष्णुमेवानयन् देवा विष्णुमूर्तिमुपासते ।
स एव सर्ववेदोक्तसारथो देह उच्यते' ॥ इति स्कान्दे ।

इतिश्रीति । अणुभाष्येति अणुभ्यो द्वा सुपर्णेति श्रुत्युक्तेभ्यो भाष्यमिति चतुर्थीसमासः तस्य प्रकाश इत्यर्थः ।

'इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते ।
एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञमिति तद्विदः ॥
क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत ।
क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तज्ज्ञानं मतं मम ॥
तत्क्षेत्रं यच्च यादृक्च यद्विकारि यतश्च यत् ।
स च यो यत्प्रभावश्च तत्समासेन मे शृणु ॥
ऋषिभिर्बहुधा गीतं छन्दोभिर्विविधैः पृथक् ।
ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितम्' ॥

इतिगीतात्रयोदशाध्यायवाक्येभ्यः ॥ ३० ॥ १० ॥

इति दशमाधिकरणम् ॥ १० ॥

**इति श्रीविट्ठलेश्वरैश्वर्यनिरस्तसमस्तान्तरायेण श्रीगोविन्दरायपौत्रेण संपूर्णवेत्रा विट्ठलरायभ्रात्रीयगोकुलोत्सवात्मजगोपेश्वरेण कृते भाष्यप्रकाशरश्मौ प्रथमाध्यायस्य प्रथमः पादः संपूर्णतामगमत् ।**

१. स एव प्राण इत्युक्त । २. आपम् ।

# ब्रह्मसूत्राणुभाष्यविषयानुक्रमणिका ।

## प्रथमोऽध्यायः ।

इति प्रथमाध्याये तृतीयः पादः

---

अथ प्रथमाध्याये चतुर्थः पादः

इति प्रथमाध्याये चतुर्थः पादः

॥ श्रीकृष्णाय नमः ॥

॥ श्रीगोपीजनवल्लभाय नमः ॥

॥ श्रीमदाचार्यचरणकमलेभ्यो नमः ॥

श्रीमद्गोस्वामिश्रीव्रजभूषणचरणान्तेवासिश्रीश्रीनिर्भयरामविरचितः

# अधिकरणसङ्ग्रहः ।

---

व्याचख्युर्ये ब्रह्मवादं भक्तिमार्गाविरोधतः ।
वन्दे ताञ्छ्रीमदाचार्यान् वेदवेदान्तपारगान् ॥ १ ॥

अथ वेदस्मृतिपुराणादिप्रतिपाद्यो ब्रह्मपरमात्मभगवच्छब्दवाच्यः श्रीकृष्णः स्वात्मना सर्वं जगदुत्पाद्य तत्रासक्तान् स्वांशान् जीवान् स्वस्वरूपं बोधयितुं शब्दब्रह्मात्मकवेदरूपेणाविर्भूय, तदर्थस्य दुर्बोधत्वं मत्वा ज्ञानकलया व्यासरूपेणावतीर्य, ब्रह्मविचारशास्त्रं चकार । तस्यापि दुर्बोधत्वेन व्याख्यानसापेक्षतया तस्य व्याख्यातारो विष्णुस्वामिमध्वप्रभृतयो ब्रह्माद्वैतवादस्य सेव्यसेवकभावस्य च विरोधं मन्वाना अभेदबोधकश्रुतिषु लक्षणया भेदपरत्वं स्वीकृत्य शुद्धं भेदमङ्गीचक्रुः । विशिष्टाद्वैतवादिनोऽपि ब्रह्मवादं सेव्यसेवकभावं च स्थापयितुमशक्ता विशिष्टाद्वैतवादं शरणीकुर्वन्तोऽप्यन्ततो गत्वा भेदपर्यवसायिन एव ज्ञेयाः । मायावादिनोऽप्यत एव मायावादमवलम्बन्ते । एवं सति "वेदान्तकृद्वेदविदेव चाह"मितिवचनात् "किं विधत्ते किमाचष्टे किमनूद्य विकल्पयेत् । इत्यस्या हृदयं लोके नान्यो मद्वेद कश्चने"त्येकादशस्कन्धीयवचनाच्च, भगवदितरस्य वेदतात्पर्यज्ञानाभावाद्भगवान् श्रीमदाचार्यरूपेणाविर्भूय ब्रह्मविचारशास्त्रं व्याख्यातवान् । तत्र ब्रह्मवादं भक्तिमार्गं चाविरोधेन स्थापितवान् । अत पयान्ये भक्तिमार्गाः सगुणाः, अयमेव निर्गुणो भक्तिमार्गः । तथा चोक्तं तृतीयस्कन्धसुबोधिन्यां द्वात्रिंशाध्याये "प्रावोचं भक्तियोगस्य स्वरूपं ते चतुर्विध"मित्यत्र, "ते च साम्प्रतं विष्णुस्वाम्यनुसारिणस्तत्त्ववादिनो रामानुजाश्च तमोरजःसत्त्वैर्भिन्ना अस्मत्प्रतिपादितश्च नैर्गुण्यः, एवं चतुर्विधोऽपि भगवता प्रतिपादितः 'अभिसन्धाय यो हिंसा'मित्यादिने"ति । तस्माच्छ्रीमदाचार्याः सर्वोपनिषदामविरोधेन ब्रह्मविचारशास्त्रं व्याख्यातवन्तः ।

तत्राध्यायाश्चत्वारः, क्रमेण समन्वयाविरोधसाधनफलनिर्णायकाः । तत्र प्रथमाध्याये स्वरूपबोधकवाक्यानि विचार्यन्ते । तानि द्विविधानि, सन्दिग्धानि निःसन्दिग्धानि च । तत्र निःसन्दिग्धानां निर्णयो न वक्तव्यः । सन्दिग्धानि पुनश्चतुर्विधानि कार्यप्रतिपादकानि, अन्तर्यामिप्रतिपादकानि, उपास्यरूपप्रतिपादकानि, प्रकीर्णकानि चेति । तत्र प्रथमाध्यायस्य प्रथमपादे कार्यप्रतिपादकानि वाक्यानि विचार्यन्ते । द्वितीयपादेऽन्तर्यामिप्रतिपादकानि । तृतीयपाद उपास्यरूपप्रतिपादकानि । चतुर्थपादे प्रकीर्णकानीति प्रथमाध्यायपादार्थसङ्ग्रहः ।

द्वितीयाध्यायस्य प्रथमपादे श्रुतिस्मृत्यविरोधः । द्वितीयपादे साङ्ख्ययोगन्यायमायावादबाह्यादिवादानां स्वातन्त्र्येण निराकरणम् । तृतीयपादे श्रुतिवाक्येषु परस्परविरोधपरिहारः । चतुर्थपादे जीवशरीरमध्यवर्तिप्राणादीनां विचारः ।

तृतीयाध्यायस्य प्रथमपादे जीवस्य ब्रह्मज्ञानोपयोगिजन्मविचारः । द्वितीयपादे जीवस्य मुक्तियो-

न्यता, अत्रैव विरोधपरिहारेण ब्रह्मस्वरूपनिरूपणं "न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र ही"त्यारभ्य पादशेषेण । तृतीयपादे गुणोपसंहारः । चतुर्थपादे कर्माद्यङ्गविचारः ।

चतुर्थाध्यायस्य प्रथमपादे ब्रह्मविदो जीवद्दशायां कर्तव्यस्य श्रवणादेर्विचारः । द्वितीयपादे म्रियमाणस्य सर्वेन्द्रियलयादिविचारः । तृतीयपादे क्रममुक्तिमार्गादिनिरूपणम् । तुरीयपादे पुष्टिमर्यादाभेदेन फलं, लीलानित्यत्वादिकं च वर्ण्यते । इतिपादार्थसङ्ग्रहः ॥

अथाधिकरणानि सङ्क्षेपतः सङ्गृह्यन्ते । तत्र विषयसंशयपूर्वपक्षसिद्धान्तसङ्गतिरूप पञ्चावयवघटितं ह्यधिकरणम् । तत्र सङ्गतेः सर्वत्र स्पष्टत्वात् प्रत्यधिकरणमवयवचतुष्टयमेव प्रदर्श्यते । यत्र तु सिद्धान्तमात्रं तत्र सिद्धान्तविषयाभाव एव पूर्वपक्षविषयः कल्पनीयः । अत्राधिकरणविभागो भाष्यप्रकाशानुसारी ।

अथ ब्रह्मविचारशास्त्रमारभमाणो भगवान् सूत्रकारः स्वचिकीर्षितशास्त्रारम्भकत्वं बोधयितुं प्रथमाधिकरणमारभते "अथातो ब्रह्मजिज्ञासे"त्येकेन सूत्रेण । अत्र व्यासेन स्वयमारभ्यमाणं विचारशास्त्रं विषयः, तदारम्भणीयं न वेति संशयः व्याकरणादिनैव वेदार्थनिर्णयान्नारम्भणीयमिति पूर्वः पक्षः, विचारशास्त्रं विना व्याकरणादिना वेदार्थसन्देहनिरासासम्भवादारम्भणीयमितिसिद्धान्तः । तथाहि छान्दोग्ये प्रथमप्रपाठके श्रूयते "अस्य लोकस्य का गतिरित्याकाश इति होवाचे"त्यादि, तत्राकाशशब्दवाच्यो भूताकाशो वा परमात्मा वेति संशयनिरासो ब्रह्मविचारशास्त्रैकसाध्यो न तु व्याकरणादिसाध्य इति विचारशास्त्रमारम्भणीयमिति सिद्धम् । अथशब्दोऽर्थचतुष्टये वर्तते मङ्गले, अधिकारे, आनन्तर्ये, अर्थान्तरोपक्रमे च । तत्र प्रकृतेऽर्थान्तरस्यासम्भवादधिकारार्थक एवाथशब्दः । अतःशब्दो हेतौ । तथाचायं सूत्रार्थः, यस्मात्कर्मादिभ्यो ब्रह्मज्ञानमेव पुरुषार्थसाधनमतस्तज्ज्ञानाय ब्रह्मविचारोऽधिक्रियत इति ॥ १ ॥

अथ द्वितीयाधिकरणं—"जन्माद्यस्य यतः शास्त्रयोनित्वा"दित्येकेन सूत्रेण । अत्र ब्रह्म कर्तृ अकर्तृ वेति संशये, अकर्तृ इति पूर्वपक्षे, कर्तृ इतिसिद्धान्तः । पूर्वपक्षो यथा "सत्यं ज्ञानमनन्तं ब्रह्मे"ति श्रुतौ ब्रह्मणि सत्यत्वादिधर्मोक्त्या कर्तृत्वसत्यत्वयोर्विरोधात् न जगत्कर्तृ ब्रह्मेति प्राप्ते उच्यते, "यतो वा इमानि भूतानि जायन्ते" इतिश्रुत्या ब्रह्मणि जगत्कर्तृत्वं स्वीकार्यमेव लोके कर्तृत्वादेः सत्यत्वादिविरोधेऽपि सर्वभवनसमर्थे ब्रह्मणि कर्तृत्वसत्यत्वयोरुभयोरपि श्रुतिसिद्धत्वेन विरोधाभावात्, तस्माज्जगत्कर्तृ ब्रह्मेति सिद्धम् ॥ २ ॥

अथ तृतीयाधिकरणं—"तत्तु समन्वया"दित्येकेन सूत्रेण । अत्र ब्रह्म समवायिकारणं निमित्तकारणमेव वेति संशये, निमित्तकारणमेव न तु समवायिकारणमिति पूर्वपक्षे, समवायिकारणमपि ब्रह्मेति सिद्धान्तः । लोके समवायिकारणस्य विकृतत्वेऽपि ब्रह्मणि समवायित्वाविकृतत्वयोरुभयोरपि श्रुतिसिद्धत्वेन विरोधाभावात्, विरुद्धधर्माश्रयत्वाद्ब्रह्मणः । तथा च समवायिकारणं ब्रह्मैवेति सिद्धम् ॥ ३ ॥

अथ चतुर्थाधिकरणं—"ईक्षतेर्नाशब्द"मित्यादिभिः सप्तभिः सूत्रैः । सर्ववेदान्तप्रतिपाद्यं ब्रह्म न भवति, भवति वेतिसंशये, न भवतीतिपूर्वपक्षे, भवतीतिसिद्धान्तः । "यतो वाचो निवर्तन्त" इतिश्रुतेः सर्वव्यवहारातीतोऽपि "स ईक्षाञ्चक्रे" इत्यादिश्रुतेः सृष्टिद्वारा व्यवहार्यो भविष्यामीतिच्छया व्यवहार्यो भवत्येव, चक्षुरादिबलेनाग्राह्योऽपि भगवदिच्छयाऽऽसरूपवेदप्रतिपाद्यो भवतीतिसिद्धम् ॥ ४ ॥

अथ पञ्चमाधिकरणं—"आनन्दमयोऽभ्यासादि"त्यादिभिरष्टभिः सूत्रैः। तैत्तिरीयकेऽन्नमयप्राणमयमनोमयविज्ञानमयानन्दमयसन्दर्भेप्यानन्दमयशब्देनान्नमयादिवत् पदार्थान्तरं परमात्मा वेतिसंशये, पदार्थान्तरमितिपूर्वपक्षे, अन्नमयादयो विभूतिरूपा आनन्दमयस्तु परमात्मेतिसिद्धान्तः। अत्राधिकरणे "ब्रह्मविदाप्नोति परं, तदेषाभ्युक्ता सत्यं ज्ञानमनन्तं ब्रह्म, यो वेद निहितं गुहायां परमे व्योमन्, सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिते"त्यादिश्रुतिर्व्याख्याता बहुविस्तरेण भाष्ये ॥ ५ ॥

अथ षष्ठाधिकरणं—"अन्तस्तद्धर्मोपदेशा"दित्यादिसूत्रद्वयेन। छान्दोग्ये प्रथमप्रपाठके "य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश" इत्यादि। अत्र हिरण्मयशब्देन अधिष्ठातृदेवताशरीरमाहोस्वित्परं ब्रह्मेति ब्रह्मणो वा शरीरमितिसंशये, देवताशरीरं ग्राम्यः कश्चिज्जीव एवाधिकारी सूर्यमण्डलस्य इतिपूर्वपक्षे, परमात्मैव सूर्यमण्डलस्य इति सिद्धान्तः ॥ ६ ॥

अथ सप्तमाधिकरणं—"आकाशस्तल्लिङ्गा"दित्येकेन सूत्रेण। छान्दोग्ये प्रथमप्रपाठके "अस्य लोकस्य का गतिरित्याकाश इति होवाच सर्वाणि ह वा इमानि भूतानि आकाशादेव समुत्पद्यन्त" इत्यादि। अत्राकाशशब्देन भूताकाशो वा परमात्मा वेतिसंशये, भूताकाश इति पूर्वपक्षे, परमात्मेति सिद्धान्तः ॥७॥

अथाष्टमाधिकरणं—"अत एव प्राण" इत्येकेन सूत्रेण। छान्दोग्ये प्रथमप्रपाठके श्रूयते "कतमा सा देवतेति प्राण इति होवाचे"ति। अत्र प्राणशब्दो मुख्यप्राणवाचको ब्रह्मवाचको वेतिसंशये, मुख्यप्राणवाचक इतिपूर्वपक्षे, ब्रह्मवाचक इति सिद्धान्तः ॥ ८ ॥

अथ नवमाधिकरणं—"ज्योतिश्चरणाभिधाना"दित्यादिभिश्चतुर्भिः सूत्रैः। छान्दोग्ये "अथ यदतः परो दिवो ज्योतिर्दीप्यते" इत्यादि। अत्र ज्योतिःशब्देन प्राकृतं ज्योतिराहोस्विद्ब्रह्मेतिसंशये प्राकृतं ज्योतिरितिपूर्वपक्षे ब्रह्मैवेति सिद्धान्तः ॥ ९ ॥

अथ दशमाधिकरणं—"प्राणस्तथानुगमा"दित्यादिभिश्चतुर्भिः सूत्रैः। कौषीतकिब्राह्मणोपनिषदि इन्द्रप्रतर्दनसम्वादे परमपुरुषार्थकामस्य प्रतर्दनस्य तत्त्वज्ञानोपदेशाय "प्राणो वा अहमस्मी"ति निर्वाच्ये प्राणशब्देनासन्यो वा ब्रह्म वेतिसंशये, आसन्य इति पूर्वपक्षे, ब्रह्मेतिसिद्धान्तः। तथा हि पूर्वोक्तोपनिषदि पञ्चमाध्याये "प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम युद्धेन च पौरुषेण चे"त्यादि। अस्यार्थः, दिवोदासस्यापत्यं पुमान् दैवोदासिः प्रतर्दनो राजा इन्द्रस्य गृहं जगामेति, तं दृष्ट्वा इन्द्र उवाच "प्रतर्दन वरं ते ददामीति स होवाच प्रतर्दनः हे इन्द्र ! त्वमेव वरं वृणीष्व यं त्वं मनुष्याय हिततमं मन्यसे" इति, तत इन्द्र उवाच "प्राणोऽस्मी"त्यादि। वामदेवस्य ऋषेर्यथा ज्ञानावेशात् स्वस्मिन् सर्वधर्मस्फूर्तिः "अहं मनुरभवं सूर्यश्चे"तिश्रुतौ। तथेहापि स्वस्मिन् ब्रह्मावेशात्प्रतर्दनाय स्वस्मिन्नेव ब्रह्मत्वमुपदिष्टवान् "मामेव विजानीही"ति। तथा च परमपुरुषार्थकामाय प्रतर्दनाय "प्राणोऽहमस्मी"त्यादिना इन्द्रेणोपदिश्यमानः प्राणः कथं प्राणवायुः स्यात् ? तस्मादत्र प्राणशब्देन परमात्मेतिसिद्धम् ॥ १० ॥

॥ इति प्रथमाध्याये प्रथमः पादः ॥

अथ द्वितीयपादे—

प्रथमाधिकरणं—"सर्वत्र प्रसिद्धोपदेशा"दित्यादिभिश्चतुर्भिः सूत्रैः। प्रथमपादे शब्दसन्देहो निवारितः, अर्थसन्देहनिरासाय द्वितीयाद्यारम्भः। तत्रार्थो द्वितीयाद्यारम्भः। तत्रार्थो द्विविधो जीवजडात्मकः, प्रत्येकसमुदायाभ्यां त्रिविधः, तत्रास्मिन् पादे जीवपुरःसरेण सन्देहा निवार्यन्ते, तृतीयपादे जडपुरःसरेण, चतुर्थपाद उभयपुरःसरेण, छान्दोग्ये "सर्वं खल्विदं ब्रह्मे"त्यारभ्य

"मनोमयः प्राणशरीर"इत्यादि। अत्र मनोमयशब्देन जीव एव ब्रह्मत्वेतिसंशये जीव एव ब्रह्मत्वेनोपास्य इतिप्राप्ते, ब्रह्मैवेति सिद्धम् ॥ १ ॥

अथ द्वितीयाधिकरणं—"शब्दविशेषादि"त्यादिभिश्चतुर्भिः सूत्रैः। वाजिशाखायां "यथा व्रीहिर्वा यवो वा श्यामाको वा श्यामाकतण्डुलो वा तथायमन्तरात्मन् पुरुषो हिरण्मय"इत्यादि। तत्र हिरण्मयः पुरुषः किं जीव उत ब्रह्मेतिसंशये, जीव इतिपूर्वपक्षे, ब्रह्मेतिसिद्धान्तः। तथाहि 'व्रीहिर्वा यवो वे"त्यादिना सूक्ष्मपरिमाणश्रवणाद् ब्रह्मणो व्यापकत्वेन सूक्ष्मपरिमाणासम्भवाज्जीववाक्यत्वमेव युक्तमितिपूर्वपक्षे प्राप्ते उच्यते "शब्दविशेषादि"ति। शब्देनोक्तो विशेषः शब्दविशेषस्तस्मात्। हिरण्मयस्यानन्दमयत्वमन्तस्तद्धर्मोधिकरणे सिद्धं, न तज्जीवे सम्भवति, किन्तु ब्रह्मण्येवेति। एवं सति पूर्वोक्तश्रुतौ व्रीह्यादितुल्यतया यत्प्रतिपादनं तच्चतुर्विधभूतान्तर्हृदये वर्तमानत्वस्यापनाय, तेषां हृदयानां तावत्परिमाणकत्वात्, तत्तद्धृदयाकाशे वर्तमानस्य सर्वतःपाणिपादान्तस्य तादृशरूपत्वेऽपि न व्यापकत्वविरोधः, तेन हिरण्मयः पुरुषो ब्रह्मेति सिद्धम्। अत्रैवाधिकरणे "स्मृतेश्चे"तिसूत्रव्याख्याने गीतायाः श्रुतित्वं स्मृतित्वं चोपपादितं, "तादृशरूपं निःश्वसितवेदोद्गमजनकं स्मृत्वा तदर्थमपि स्मृत्वा भगवान् पुरुषोत्तमो वाक्यान्युक्तवान् स्मृतिरूपाणि" "चकारस्तन्मूलभूतनिःश्वासोऽप्युच्यत" इति ॥ २ ॥

अथ तृतीयाधिकरणं—"अत्ता चराचरग्रहणादि"त्यादिसूत्रद्वयेन। कठवल्लीषु द्वितीयवल्लीसमाप्तौ श्रूयते "यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः मृत्युर्यस्योपसेचनं क इत्था वेद यत्र स"इति। अत्र उपसेचनशब्दार्थो घृतमितिसुबोधिन्यां प्रथमस्कन्धपञ्चदशाध्याये "वाचं जुहाव मनसी"तिश्लोकविवरण उक्तम्, अत्र यच्छब्दोक्तो भोक्ता जीवो ब्रह्म वेतिसंशये, भोक्तृत्वस्य जीवधर्मत्वादुपासनोपचितालौकिकसामर्थ्यो महादेवादिरत्ता भविष्यतीति पूर्वपक्षे, ब्रह्मक्षत्रयोरशक्यत्वयोः सर्वमारकस्य मृत्योश्च भक्षयिता जीवो न भवत्येवेति भगवानेव भोक्ता, ब्रह्मक्षत्रयोरपि मोक्षापेक्षितत्वान्मृत्युसम्बन्धमात्रेण भगवति भोक्तरि प्रवेशयोग्यत्वमेवौदनत्वं, प्राणानां तत्रैव समवलयात्, मृत्युरपि तत्रैव लीनोऽग्रे तेषां जन्माद्यभावाय भगवत्येव प्रविशति। तस्मादस्मिन् वाक्ये ब्रह्मक्षत्रमृत्यूनामत्ता भगवानेवेतिसिद्धम् ॥ ३ ॥

अथ चतुर्थाधिकरणं—"गुहां प्रविष्टावात्मानौ हि तद्दर्शनादि"त्यादिसूत्रद्वयेन। काठके तृतीयवल्ल्यां श्रूयते "ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्द्धे"इत्यादि। किमिदं जीववाक्यमाहोस्विद्ब्रह्मवाक्यमितिसंशये, द्विवचननिर्देशात् जीवप्रकरणपठितत्वाद् बद्धमुक्तौ जीवौ निरूप्येते इतिपूर्वपक्षे प्राप्ते, उच्यते, गुहायां हृदयाकाशे जीवपरमात्मानावेव निरूप्यते। तथा च ब्रह्मैव वाक्यार्थः। जीवनिरूपणं तूभयोस्तुल्यतया स्वरूपामृतभोगनिरूपणार्थं, तेन ब्रह्मवाक्यमेवेतिसिद्धम् ॥४॥

अथ पञ्चमाधिकरणं—"अन्तर उपपत्तेरि"त्यादिभिः पञ्चभिः सूत्रैः। छान्दोग्ये षष्ठे प्रपाठके "य एषोऽक्षिणि पुरुषो दृश्यत"इत्यादि। अत्र अक्षिप्रतिबिम्बितपुरुषस्य ब्रह्मत्वेनोपासनापरमिदं वाक्यं ब्रह्मवाक्यमेव वेतिसंशये, प्रतिबिम्बी एवायमितिपूर्वपक्षे, ब्रह्मैवेतिसिद्धम्। तथा चाक्षिपुरुषशब्देन अक्षिप्रतिबिम्बो न ग्राह्यः, किन्तु, सर्वव्यापकस्य ब्रह्मणोऽक्षिस्थानस्योत्तमत्वात् तत्रोपदेशो ज्ञेयः, तद्दर्शनं तु आर्षज्ञानेनेति ॥ ५ ॥

अथ षष्ठाधिकरणं—"अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशादि"त्यादिभिश्चतुर्भिः सूत्रैः। बृहदारण्यके श्रूयते "यः पृथिव्या अन्तरो यं पृथिवी न वेदे"त्यादि। तत्रा"धिदैवमधिलोकमधिवेदमधियज्ञमधिभूतमध्यात्मं च कश्चिदन्तरवस्थितो यमयितान्तर्यामी"ति। अत्र किमन्तर्याम्यधिदैवा-

दिषु सर्वत्र एक एव भगवान्, अथाधिदैवादीनां भेदात् तत्तत्सञ्ज्ञाविशिष्टा अन्ये, इतिसंशये, अन्य इतिपूर्वपक्षे, भगवानेवेतिसिद्धम् ॥ ६ ॥

अथ सप्तमाधिकरणं—"अदृश्यत्वादिगुणको धर्मोक्ते"रित्यादिभिस्त्रिभिःसूत्रैः, मुण्डके हि श्रूयते तत्र शौनकेन "कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवे"दितिपृष्टे अङ्गिरा "द्वे विद्ये वेदितव्ये" इत्युत्तरमाह—तत्र नामरूपात्मकजगतो विज्ञानार्थं नामांशवेदादिविद्यारूपांशापरा, परा च यथा "अथ परा यया तदक्षरमधिगम्यत"इत्यादि । तत्र वेदादिविद्यायां न सन्देहः, परायां सन्दिह्यते किमेषा साङ्ख्यमतविद्या ब्रह्मविद्या वेति ? "दिव्यो ह्यमूर्तः पुरुष"इत्यादौ पुरुषपदश्रवणात् साङ्ख्यविद्येतिपूर्वपक्षेऽत्र न साङ्ख्यपरिकल्पितौ प्रकृतिपुरुषौ वाक्यार्थः, किन्त्वक्षरशब्देन पुरुषशब्देन च ब्रह्मैव प्रोक्तमिति ब्रह्मविद्यैव परेतिसिद्धम् ॥ ७ ॥

अथाष्टमाधिकरणं—"वैश्वानरः साधारणशब्दविशेषादि"त्यादिभिर्नवभिः सूत्रैः । छान्दोग्ये सप्तमप्रपाठके श्रूयते "को न आत्मा किं ब्रह्मे"त्यादि । अग्रे च "यस्त्वेतमेवं प्रादेशमात्रमभिविद्यमानमात्मानं वैश्वानरमुपास्ते"इत्यादि । तत्र संशयः, किं वैश्वानरशब्देन ब्रह्म प्रतिपादयितुं शक्यते न वेति ? अर्थस्यातिसन्दिग्धत्वात्सन्देहः । तत्रेदं वाक्यं हिरण्यगर्भोपासनापरमितिपूर्वपक्षे, भगवतो विरुद्धधर्माश्रयत्वात् प्रादेशमात्रो व्यापक इति वैश्वानरो भगवानेवेतिसिद्धम् । अत्रैवाधिकरणे "साक्षादप्यविरोधं जैमिनि"रित्यादिसूत्रैः परिमाणविशेषो विचारितः । प्रादेशमात्रत्वं भगवतः स्वाभाविकं कृत्रिमं वेति, तत्रास्मिन्नर्थे चत्वारो ऋषयो वेदार्थचिन्तकाः प्रकारभेदेनाहुः, तत्र केवलं शब्दबलविचारको वेदव्यासाचार्यः, शब्दार्थयोर्जैमिनिः, आश्मरथ्यस्तु शब्दोपसर्जनेनार्थविचारकः, केवलार्थविचारको बादरिरिति । तत्र व्यासस्य मुख्यसिद्धान्ते प्रादेशमात्रोऽपि व्यापक इति वैश्वानरो भगवानेवेतिसिद्धम् ॥ ८ ॥

॥ इति प्रथमाध्याये द्वितीयः पादः ॥

अथ तृतीयपादे—

प्रथमाधिकरणं—"द्युभ्वाद्यायतनं स्वशब्दादि"त्यादिभिः सप्तभिः सूत्रैः, द्वितीयपाद आधेयरूपो भगवान् प्रतिपादितः, आधाररूपोऽत्र प्रतिपाद्यते, तेन सर्वं ब्रह्मेति फलिष्यति । अथर्वशाखायां मुण्डकोपनिषदि द्वितीयमुण्डके श्रूयते "यस्मिन् द्यौः पृथिवी चान्तरिक्ष"मित्यादि । तत्र द्युभ्वादीनामायतनं ब्रह्म आहोस्वित् साङ्ख्यमतोक्ता प्रकृतिरितिसंशये, प्रकृतिरेवेतिपूर्वपक्षे, परमात्मैवेतिसिद्धम् ॥ १ ॥

अथ द्वितीयाधिकरणं—"भूमा सम्प्रसादादध्युपदेशादि"त्यादिसूत्रद्वयेन, छान्दोग्ये नवमप्रपाठके श्रूयते "यो वै भूमा तत्सुख"मित्यारभ्य "यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमे"ति । अत्र भूमशब्देन सुषुप्तिरूपं सुखबाहुल्यं ब्रह्म वेतिसंशये सुखबाहुल्यमितिपूर्वपक्षे, ब्रह्मैवेतिसिद्धम् ॥२॥

अथ तृतीयाधिकरणं—"अक्षरमम्बरान्तधृते"रितिसूत्रत्रयेण । बृहदारण्यके गार्गीब्राह्मणे "स होवाचैतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्ती"त्यादि । तत्र अक्षरशब्देन ब्रह्म वा पदार्थान्तरं वेतिसंशये पदार्थान्तरमितिपूर्वपक्षे, ब्रह्मैवेतिसिद्धम् ॥ ३ ॥

अथ चतुर्थाधिकरणं—"ईक्षतिकर्मव्यपदेशात्स"इत्येकेन सूत्रेण । आथर्वणानां प्रश्नोपनिषदि पञ्चमप्रश्ने "एतद्वै सत्यकाम परं चापरं च यदोऽङ्कार"इत्यादिना ओङ्कारोपासनायां एकमात्रोपासनया

मनुष्यलोकप्राप्तिं, द्विमात्रोपासनया सोमलोकप्राप्तिं, त्रिमात्रोपासनया सूर्यलोकप्राप्तिं, पुनरागमनं च निरूप्य अर्धचतुर्थमात्रोपासनया 'परं पुरुषमभिध्यायीते'त्यादि । अत्र परः पुरुषः परमात्मा ध्यानविषयो विराट् पुरुषो वा ब्रह्मा वेतिसंशये विराट् ब्रह्मा वा ध्यानविषय इतिपूर्वपक्षे, अभिध्यानविषयः परमात्मैवेतिसिद्धम् ॥ ■ ॥

अथ पञ्चमाधिकरणं—"दहर उत्तरेभ्य" इत्यादिभिरष्टभिः सूत्रैः । छान्दोग्ये दशमप्रपाठके श्रूयते "यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यं तद्वा विजिज्ञासितव्य"मित्यादि । अत्र दहरशब्दोक्तो जीवोऽन्वेष्टव्यो ब्रह्म वेतिसंशये जीव एव दहर इतिपूर्वपक्षे, दहरः परमात्मैवेतिसिद्धम् ॥ ५ ॥

अथ षष्ठाधिकरणं—"अनुकृतेस्तस्य चे"त्यादिसूत्रद्वयेन । कठवल्ल्यां मुण्डके च श्रूयते "न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोयमग्निः, तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाती"त्यादि । अत्र तेजोविशेषो वाक्यार्थो ब्रह्म वेतिसंशये तेजोविशेष इतिपूर्वपक्षे, ब्रह्मैव, वाक्यार्थ इतिसिद्धम् । तथा हि—"यस्मिन् द्यौरि"तिदहरवाक्ये सूर्यादीनां ब्रह्माधारत्वमुक्तं, अस्मिंश्च वाक्ये तत्र सूर्यादीनां भानं निषिध्यते, अत्र ब्रह्म चेद्वाक्यार्थः स्यात्, तदा सूर्यादिभाननिषेधो न स्यादतस्तेजोविशेष एव वाक्यार्थ इतिप्राप्त उच्यते, "न तत्र सूर्यो भाती"तिवाक्येन न सर्वथा सूर्यादीनां भानं तत्र निषिध्यते, किन्तु, सूर्यादिप्रकाशस्य तत्प्रकाशाधीनत्वं बोध्यते, एवं च सूर्यादीनां स्वतःप्रकाशो नास्त्येव, भगवत्प्रकाशेनैव प्रकाश इति भगवानेव वाक्यार्थ इतिसिद्धम् ॥ ७ ॥

अथ सप्तमाधिकरणं—"शब्दादेव प्रमित" इत्यादिसूत्रद्वयेन । कठवल्ल्युपनिषदि चतुर्थवल्ल्यां श्रूयते "अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठती"त्यादि छान्दोग्ये तु "यावान् वा अयमाकाश" इतिव्यापकत्वं श्रूयते, अत्र तु अङ्गुष्ठमात्रता प्रतीयते, अतो विरोधादङ्गुष्ठमात्रशब्देन तावत्परिमाणकदेहवान् जीवो वाक्यार्थो भगवान् वेतिसंशये, जीव इतिपूर्वपक्षे,विरुद्धधर्माश्रयत्वात् तावत्परिमाणको मनुष्यहृदयस्थो भगवानेव वाक्यार्थ इतिसिद्धम् ॥ ७ ॥

अथाष्टमाधिकरणं—"तदुपर्यपि बादरायणः सम्भवादि"त्यादिभिरष्टभिः सूत्रैः । ब्रह्मविद्यायां कर्मणि च मनुष्याणामेवाधिकारो वा देवादीनामपीतिसंशये मनुष्याणामेवेति पूर्वपक्षे, देवानामपि ज्ञाने कर्मणि चाधिकार इतिसिद्धम् । अस्मिन्नेवाधिकरणे "शब्द इति चेन्नातः प्रभवात् प्रत्यक्षानुमानाभ्या"मितिसूत्रव्याख्याने वैदिकः पदार्थः सर्वोऽप्याधिदैविको भिन्न इति । अत्रैव 'अत एव च नित्यत्व'मितिसूत्रव्याख्याने वेदस्य नित्यत्वं च प्रतिपादितम् ॥ ८ ॥

अथ नवमाधिकरणं—"शुगस्य तदनादरश्रवणात्तदाद्रवणात् सूच्यते ही"त्यादिपञ्चभिः सूत्रैः, सम्वर्गविद्यादौ जातिशूद्रस्याधिकारोऽस्ति नास्ति वेतिसंशये,अस्तीति पूर्वपक्षे, नास्तीति सिद्धान्तः । अत्रैवाधिकरणे श्रवणाध्ययनार्थप्रतिषेधात् 'स्मृतेश्चे'तिसूत्रव्याख्याने शूद्रस्य वेदश्रवणमध्ययनमर्थज्ञानमेतद्द्वयमपि निषिद्धम् । "अथास्य वेदमुपशृण्वतस्त्रपुजतुभ्यां कर्णप्रपूरण"मित्यादि "उच्चारणे जिह्वाच्छेदो धारणे शरीरभेद" इति ॥ ९ ॥

अथ दशमाधिकरणं—"कम्पनादि"त्येकेन सूत्रेण । कठवल्ल्यां श्रूयते "यदिदं किञ्च जगत् सर्वं प्राण एजति निःसृतं महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ती"ति । अत्र प्राणोपासना वा ब्रह्मवाक्यं वेतिसंशये, प्राण इन्द्रो वा वाक्यार्थ इतिपूर्वपक्षे, भगवानेव वाक्यार्थ इतिसिद्धान्तः ॥ १० ॥

अथैकादशाधिकरणं—"ज्योतिर्दर्शना"दित्येकेन सूत्रेण, छान्दोग्ये दशमप्रपाठके श्रूयते 'य एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरभिसम्पद्यत स्वेन रूपेणाभिनिष्पद्यत इति, तत्र परं ज्योतिर्महाभूतं ब्रह्म चेतिसंशये महाभूतमेवेतिपूर्वपक्षे ब्रह्मैवेतिसिद्धम् ॥ ११ ॥

अथ द्वादशाधिकरणं—"आकाशोऽर्थान्तरत्वादिव्यपदेशा"दित्येकेन सूत्रेण, छान्दोग्यसमाप्तौ श्रूयते 'आकाशो वै नामरूपयोर्निर्वहिताते यदन्तरा तद्ब्रह्मे'ति, तत्राकाशशब्देन भूताकाशः परमात्मा वेति-संशये, भूताकाश इतिपूर्वपक्षे, परमात्मैवेतिसिद्धम् ॥ १२ ॥

अथ त्रयोदशाधिकरणं—"सुषुप्त्युत्क्रान्त्योर्भेदेने"ति सूत्रद्वयेन । बृहदारण्यके षष्ठे प्रपाठके ज्योतिः ब्राह्मणे "याज्ञवल्क्य किं ज्योतिरयं पुरुष" इत्यारभ्य "अभयं ह वै ब्रह्म भवति य एवं वेदे"त्यन्ते सन्देहः किं ब्रह्मवाक्यमेतदुत जीवस्येति, जीववाक्यमितिपूर्वपक्षे, ब्रह्मवाक्यमितिसिद्धम् । एतत्सूत्रव्याख्याने सर्वमेव विषयवाक्यं विस्तरेण व्याख्यातं भाष्ये ॥ १३ ॥

॥ इति प्रथमाध्याये तृतीयः पादः ॥

अथ चतुर्थपादे—

प्रथमाधिकरणं—"आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति चे"त्यादिभिः सप्तभिः सूत्रैः । काठके श्रूयते "महतः परमव्यक्तमव्यक्तात्पुरुषः परः पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिरि"ति । अत्र महदव्यक्तपुरुषशब्दानां साङ्ख्यशास्त्रप्रसिद्धानां श्रवणात्साङ्ख्यमतमपि श्रौतं भवति न वेतिसंशये, भवतीतिपूर्वपक्षे, साङ्ख्यमतं श्रौतं न भवतीतिसिद्धम् । एवं च पूर्वोक्तश्रुतौ अव्यक्तशब्देन साङ्ख्योक्ता प्रकृतिर्न ग्राह्या किन्तु भगवद्रूपाऽक्षरं वाऽव्यक्तशब्देन ग्राह्यमिति ॥ १ ॥

अथ द्वितीयाधिकरणं—"चमसवदविशेषादि"त्यादिभिस्त्रिभिः, श्वेताश्वतरोपनिषदि चतुर्थाध्याये श्रूयते "अजामेकां लोहितशुक्लकृष्णा"मित्यादि । अत्र अजाशब्देन साङ्ख्यप्रसिद्धा प्रकृतिरुच्यते वाग्निसूर्यसोमविद्युदादिरूपं ज्योतिरुच्यत इतिसंशये, प्रकृतिरितिपूर्वपक्षे, अजाशब्देन ज्योतिरेवोच्यत इति सिद्धम् ॥ २ ॥

अथ तृतीयाधिकरणं—"न सङ्ख्योपसङ्ग्रहादपि नानाभावादतिरेकाच्चे"त्यादिभिस्त्रिभिः सूत्रैः । बृहदारण्यकषष्ठे श्रूयते "यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठित तमेवमन्य आत्मानं विद्वान् ब्रह्मामृतोमृतं," अत्र पञ्चगुणिताः पञ्चेतिव्याख्याय साङ्ख्योक्तानि पञ्चविंशतितत्त्वानि ग्राह्याणि वा प्राणचक्षुःश्रोत्रान्नमनांसि पञ्चजनशब्देन ग्राह्याणीतिसंशये, साङ्ख्योक्ततत्त्वानीतिपूर्वपक्षे, प्राणादय एवेतिसिद्धम् । तथा च पञ्चसङ्ख्योक्ताः पञ्चजना इतिव्याख्येयं, बुद्धेः पञ्चवृत्तीर्जनयन्तीति पञ्चजनाः प्राणादय इतिव्युत्पत्तिसिद्धः पञ्चजनशब्द इति ॥ ३ ॥

अथ चतुर्थाधिकरणं—"कारणत्वेन चाकाशादिषु यथा व्यपदिष्टोक्ते"रित्येकेन सूत्रेण । तत्र ब्रह्मणो जगत्कारणताप्रतिपादिकानां श्रुतीनां परस्परविरोधात् कपिलोक्तप्रकारेण प्रकृतिकारणताबोधिका साङ्ख्यस्मृतिरेव ग्राह्या वा विप्रतिषेधपरिहारेण ब्रह्मकारणताबोधिका श्रुतिरेवादर्तव्येतिसंशये, श्रुतीनां परस्परविरोधादर्थवादत्वं स्वीकृत्य साङ्ख्यस्मृतिरेव ग्राह्येतिपूर्वः पक्षः, तथा हि तैत्तिरीये "एतस्मादात्मन आकाशः सम्भूत" इत्यत्राकाशादिका सृष्टिरुक्ता, क्वचिच्छान्दोग्यादौ तेजःप्रभृतिका "तत्तेजोऽसृजते"ति, क्वचिदन्यथैव "एतस्माज्जायते प्राण" इति, एवं सति श्रुतीनां परस्परविरोधादर्थवादत्वं स्वीकृत्य कपिलस्य भगवज्ज्ञानांशावतारत्वात् जन्म तत्प्रकारेणैव जगद्व्यवस्थोचितेत्येवमप्राप्त उच्यते,

भगवतोऽचिन्त्यानन्तशक्तिमत्त्वेन सृष्टिप्रकाराणां नानात्वं स्वीकृत्य विरोधपरिहारेण ब्रह्मकारणताबोधिका श्रुतिरेवादर्तव्येतिसिद्धम् । कार्यप्रकारभेदस्तु माहात्म्यज्ञापको न तु बाधक इति ॥ ४ ॥

अथ पञ्चमाधिकरणं—"समाकर्षादि"त्येकेन सूत्रेण । अत्र पूर्वाधिकरणापेक्षया किञ्चिदेव वैलक्षण्यं तद्यथा "असद्वा इदमग्र आसी"दिति, क्वचि"त्सदेव सौम्येदमग्र आसी"दित्यादिश्रुतीनां परस्परविरोधाद् ब्रह्म कारणं न भवति भवति वेतिसंशये, शब्दावैलक्षण्येन श्रुतिविप्रतिषेधाद् ब्रह्म कारणं न भवतीतिपूर्वपक्षे, सर्वशब्दवाच्यत्वाद्ब्रह्मणोऽसदादिशब्दवाच्यत्वमपि तस्यैवेतिश्रुतिविप्रतिषेधाभावाद् ब्रह्मैव कारणमितिसिद्धम् । यथा कंसादीनां मारकत्वेनासत्त्वेन च भावनात् तान् प्रति तादृशत्वादसच्छब्दवाच्योऽपि भवति, एवमव्याकृतत्वेन असत्तुल्यत्वादपि तादृशशब्दवाच्यत्वं ज्ञेयमितिप्रकारभेदेन सर्वशब्दवाच्यत्वात् श्रुतिविप्रतिषेधो नास्तीति सिद्धम् ॥ ५ ॥

अथ षष्ठाधिकरणं—"जगद्वाचित्वादित्या"दिभिस्त्रिभिः सूत्रैः । कौषीतकिब्राह्मणे षष्ठाध्याये बालाक्यजातशत्रुसम्वादे बालाकिनाम्ना ब्राह्मणेनादित्यादिषु पुरुषेषु ब्रह्मत्वेनोक्तेषु राजा तं निराकृत्य स्वयमाह "यो वै बालाके एतेषां कर्ता यस्य चैतत्कर्म स वेदितव्य" इति । तत्र जीवाधिष्ठिता प्रकृतिः कारणं वा ब्रह्मेतिसंशये, प्रकृतिरितिपूर्वपक्षे, ब्रह्मैव कारणमितिसिद्धम् ॥ ६ ॥

अथ सप्तमाधिकरणं—"वाक्यान्वया"दित्यादिभिश्चतुर्भिः सूत्रैः । बृहदारण्यके षष्ठाध्याये याज्ञवल्क्यमैत्रेयीसम्वादे "न वा अरे पत्युः कामाय पतिः प्रियो भवति आत्मनस्तु कामाय पतिः प्रियो भवती"त्यादि । तत्र जीवस्य प्रकरणित्वं ब्रह्मणो वेति संशये, जीवस्येतिपूर्वपक्षे, ब्रह्मण एव प्रकरणित्वमितिसिद्धम् ॥ ७ ॥

अथाष्टमाधिकरणं—"प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधा"दित्यादिभिः षड्भिः सूत्रैः । समवायिकारणं प्रकृतिर्निमित्तकारणं ब्रह्म उत द्विविधमपि कारणं ब्रह्मैवेतिसंशये, समवायिकारणं प्रकृतिर्निमित्तकारणं ब्रह्मेतिपूर्वपक्षे, सर्वविधमपि कारणं ब्रह्मेतिसिद्धम् ॥ ८ ॥

॥ इति प्रथमोऽध्यायः ॥

अथ द्वितीयाध्यायस्य प्रथमपादे—

प्रथमाधिकरणं—"स्मृत्यनवकाशदोषप्रसङ्ग इतिचेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गादि"त्यादिसूत्रद्वयेन । प्रथमाध्याये वेदान्तवाक्यानां विवादास्पदानां ब्रह्मपरत्वेन समन्वयः प्रतिपादितः । अधुना श्रुतिस्मृत्यविरोधः प्रतिपाद्यते । अत्राध्याये प्रथमद्वितीयपादयोरधिकरणरचना न स्पष्टेति यथाकथञ्चिदूह्या, प्रकृतिकारणताप्रतिपादककपिलस्मृत्या शुद्धब्रह्मकारणताप्रतिपादकश्रुतीनां ब्रह्मणि समन्वयो बाध्यते न वेतिसंशये, भेदस्य धर्मे सावकाशत्वात् कपिलस्मृतेर्मन्वादिस्मृतिवत्कर्मण्युपयोगो नास्तीति मोक्षमात्रोपयोगित्वात्तत्राप्यनवकाशे वैयर्थ्यापत्तेः साङ्ख्यस्मृत्या वैदिकः समन्वयो बाध्यत इतिपूर्वपक्षे, "अहं सर्वस्य जगतः प्रभवः प्रलयस्तथे"त्यादीनां शुद्धब्रह्मकारणताप्रतिपादकस्मृतीनां श्रुतिसम्वादिनीनामनवकाशदोषप्रसङ्गात् साङ्ख्यस्मृत्या वैदिकः समन्वयो न बाध्यत इतिसिद्धम् । कपिलादिमहर्षीणां साङ्ख्यादिशास्त्रनिर्माणे प्रवृत्तिस्तु शुद्धब्रह्मवादेऽनधिकृतानां हीनाधिकारिणामात्मानात्मविवेकद्वारा तत्तच्छास्त्रोक्तफलसम्पादनार्था, निषिद्धयोगसाङ्ख्ययोस्तु नरक एव फलमेवमन्येषां शाक्तादिमतानामपि, एवं केषाञ्चिच्छास्त्राणां मन्दमध्यमाधिकारिभेदेन तथाविधफलसाधकत्वं, सर्वथा निषिद्धशास्त्राणां तु न केवलं वैयर्थ्यमेव प्रत्युत भगवद्विरोधाचरणान्नरकपातोपि, एतत्सर्वं निबन्धे सर्वनिर्णयप्रकरणे विवेचितम् ॥ १ ॥

अथ द्वितीयाधिकरणं—"एतेन योगः प्रत्युक्त"इत्येकेन सूत्रेण। योगस्मृत्या वैदिकसमन्वयस्य सङ्कोचोऽस्ति न वेतिसंशयेऽस्तीतिपूर्वपक्षे, नास्तीतिसिद्धम् ॥ २ ॥

अथ तृतीयाधिकरणं—"विलक्षणत्वादस्य तथात्वं च शब्दा"दित्यादिसूत्रत्रयेण। विलक्षणत्वाद्य- तर्केण ब्रह्मणो जगत्कारणताबोधकश्रुतीनां समन्वयो बाध्यते न वेतिसंशये, अचेतनं जगच्चेतनाद्ब्रह्मणो न जायते विलक्षणत्वादितिपूर्वपक्षे, अचेतनाद् गोमयाच्चेतनस्य वृश्चिकस्योत्पत्तेश्चेतनात् पुरुषादचे- तनानां केशादीनामुत्पत्तेश्च पूर्वोक्तव्याप्तिव्यभिचाराच्छुष्कतर्केण समन्वयो न बाध्यत इति सिद्धम् ॥३॥

अथ चतुर्थाधिकरणं—"असदितिचेन्न प्रतिषेधमात्रत्वा"दित्यादिभिः पञ्चभिः सूत्रैः। "असद्वा इदमग्र आसी"दित्यादिश्रुत्या समन्वयो बाध्यते न वेतिसंशये, सतः कारणत्वोक्त्या सतो ब्रह्मणः कारणत्वासम्भवाद् ब्रह्मकारणताबोधकश्रुतीनां ब्रह्मणि समन्वयो बाध्यत इतिपूर्वपक्षे, "कथमसतः सज्जायेते"त्यादिश्रुत्या पूर्वोक्तवचनस्य निषेधार्थत्वबोधनात् समन्वयो न बाध्यत इति सिद्धम् ॥ ४ ॥

अथ पञ्चमाधिकरणं—"एतेन शिष्टापरिग्रहा अपि व्याख्याता"इत्येकेन सूत्रेण। साङ्ख्यमतस्य वैदिकप्रत्यासन्नत्वात् केषाञ्चिच्छिष्टानां परिग्रहोऽप्यस्ति, अणुमायाकारणवादास्तु सर्वथा न शिष्टैः परिगृह्यन्त इति तेषां तर्काः पूर्वोक्तन्यायेन सुतरामेव निरस्ता वेदितव्याः। अत्र श्रीपुरुषोत्तमगोस्वामिन आहुर्भाष्यप्रकाशे, "इदं च केवलं सूत्रमेव नाधिकरणं विषयादेरस्फुटत्वाद्विचाराभावाच्चे"ति। अन्ये तु कणादादिस्मृतिभिः समन्वयो बाध्यते न वेतिसंशये, बाध्यत इतिपूर्वपक्षे, न बाध्यत इति सिद्धान्त इत्यधिकरणं रचयन्ति ॥ ५ ॥

अथ षष्ठाधिकरणं—"भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवदि"त्येकेन सूत्रेण। ब्रह्मण एव समवायि- कारणत्वे भोग्यस्य स्रक्चन्दनादेर्भोक्तृत्वं भोक्तुश्च जीवस्य भोग्यत्वं स्यादित्याशङ्क्य यथा लोके कटक- कुण्डलादीनां सुवर्णकारणकत्वेन सुवर्णानन्यत्वेऽपि न कटकस्य कुण्डलत्वं तथा न भोग्यस्य भोक्तृत्व- मिति समाहितम्। अत्र भाष्यप्रकाशे "अत्राधिकरणविभागस्त्वव्यवस्थितः, कैश्चित्क्वचिदन्यैरन्यत्र तत्स- माप्त्यङ्गीकारात्। आचार्यैस्तु, एषां सूत्रत्वमेव केवलमङ्गीक्रियते नाधिकरणत्वं, क्वचिदप्यधिकरणत्वाव- चनात्, "सूत्रत्रयमाहे"ति सूत्रत्वस्यैव कथनाच्च। तथापि, बोधसौकर्याय किञ्चिद्विषयैक्यमादायासत्सू- भावादारभ्य एतदवध्येकाधिकरणमङ्गीक्रियत इत्यदोष" इति पुरुषोत्तमगोस्वामिन आहुः। मध्येऽधिकरण- विभागस्तु विवक्षाभेदेनेति प्रतिभाति ॥ ६ ॥

अथ सप्तमाधिकरणं—"तदनन्यत्वमारम्भणशब्दादिभ्य" इत्यादिभिः सप्तभिः सूत्रैः। छान्दोग्ये "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्य"मित्यत्र कार्यमात्रस्यापाततो मिथ्यात्वं प्रतीयते, तत्रैव श्रुतौ यथा "सौम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं भवती"तिदृष्टान्तेन ब्रह्मणि समवायि- कारणत्वं प्रतिपाद्यते, तत्र श्रुतिविरोधो भवति न वेतिसंशये, भवतीतिपूर्वपक्षे, विरोधो न भवतीति- सिद्धम्। वाचारम्भणवाक्येषु कार्ये कारणानन्यत्वं बोध्यते न तु मिथ्यात्वमिति। अत्रैवाधिकरणे "पटवच्चे"तिसूत्रव्याख्याने यथा सम्वेष्टितः पटो न व्यक्तं गृह्यते विस्तृतस्तु गृह्यते, तथा आविर्भावा- नाविर्भावेन जगतोऽपीति ॥ ७ ॥

अथाष्टमाधिकरणं—"इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्ति"रित्यादिसूत्रत्रयेण। ब्रह्मणो जग- त्कारणत्वे कदाचिज्जीवस्य हितं न करोतीति हिताकरणादिदोषो भवति न वेतिसंशये, दोषोऽस्तीति- पूर्वपक्षे, नास्तीतिसिद्धम्। अत्रैवाधिकरणे "अश्मादिवच्च तदनुपपत्ति"रितिसूत्रव्याख्याने "यथा पार्थि-

त्वाविशेषेऽपि हीरकमाणिक्यपाषाणानां पलाशचम्पकचन्दनानामुच्चनीचत्वमेवं जीवस्यांशत्वाविशेषेऽपि ब्रह्मादिस्थावरान्तानामुच्चनीचत्वम् ॥ ८ ॥

अथ नवमाधिकरणं—"उपसंहारदर्शनान्नेतिचेत् क्षीरवद्धी"त्यादिभिः षड्भिः सूत्रैः । ब्रह्म एकमेव जगत्कारणं साधनान्तरसापेक्षं वेतिसंशये, सापेक्षमितिपूर्वपक्षे, एकमेवेतिसिद्धम् ॥ ९ ॥

अथ दशमाधिकरणं—"सर्वोपेता च दर्शना"दित्यादिभिरष्टभिः सूत्रैः । ब्रह्मणो जगत्कर्तृत्वं सम्भवति न वेतिसंशये, निरिन्द्रियत्वान्न सम्भवतीति पूर्वपक्षे, सर्वशक्तिमत्त्वात्सम्भवतीति सिद्धान्तः ॥१०॥

॥ इति द्वितीयाध्याये प्रथमः पादः ॥

अथ द्वितीयपादे—

प्रथमाधिकरणं—"रचनानुपपत्तेश्च नानुमान"मित्यादिभिः षड्भिः सूत्रैः । साङ्ख्यमतसिद्धमचेतनं केवलं प्रधानं भूर्भुवरादिलोकानां कारणं भवति न वेतिसंशये, भवतीतिपूर्वपक्षे, न भवतीतिसिद्धम् ॥ १ ॥

अथ द्वितीयाधिकरणं—"पुरुषाश्मवदितिचेत्तथापी"त्यादिचतुर्भिः सूत्रैः । केवलप्रधानस्य कारणत्वाभावेऽपि पुरुषाधिष्ठितं प्रधानं जगत्कारणं भवति न वेतिसंशये, भवतीतिपूर्वपक्षे, न भवतीति सिद्धम् ॥ २ ॥

अथ तृतीयाधिकरणं—"महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्या"मित्यादिभिः सप्तभिः सूत्रैः । नैयायिकादिमतसिद्धपरमाणूनां द्व्यणुकादिक्रमेण कारणत्वं सम्भवति न वेतिसंशये, सम्भवतीतिपूर्वपक्षे, न सम्भवतीतिसिद्धम् ॥ ३ ॥

अथ चतुर्थाधिकरणं—"समुदाय उभयहेतुकेऽपि तदप्राप्ति"रित्यादिभिरेकादशभिः सूत्रैः । अथ बाह्यादिमतानि निराक्रियन्ते, त एवं मन्यन्ते, परमाणुसमूहो रूपादिस्कन्धपञ्चकसमुदायश्चेतिसमुदायद्वयं, स्कन्धपञ्चकं तु रूपस्कन्धो, विज्ञानस्कन्धो, वेदनास्कन्धः, सञ्ज्ञास्कन्धः, संस्कारस्कन्धश्चेति, तत्समुदायद्वयसम्बन्धे जीवस्य संसारस्तदपगमे मोक्ष इति । तत्र पूर्वोक्तसमुदायद्वयाज्जीवस्य संसारप्राप्तिर्युक्ता न वेतिसंशये, युक्तेतिपूर्वपक्षे, तन्मते सर्वस्य क्षणिकत्वे जीवमात्रस्य क्षणिकत्वे वा पूर्वोक्तसमुदायद्वयसम्बन्धाज्जीवस्य संसारप्राप्तिर्न युक्तेतिसिद्धम् । अत्रैवाधिकरणे "नासतोऽदृष्टत्वा"दितिसूत्रव्याख्याने "व्यासोऽपि कलहं कृत्वा शङ्करं शप्त्वा तूष्णीमास, अतोऽस्मिना मया सर्वतः सदुद्धारार्थं यथाश्रुतानि श्रुतिसूत्राणि योजयता सर्वो मोक्षो निराकृतो वेदितव्य" इत्युक्तं भाष्ये ॥ ४ ॥

अथ पञ्चमाधिकरणं—"नाभाव उपलब्धे"रित्यादिसूत्रपञ्चकेन । विज्ञानवादिसम्मतं प्रपञ्चासत्यत्वं निराक्रियते, विज्ञानातिरिक्तः प्रपञ्चो नास्ति अस्ति वेतिसंशये, नास्तीतिपूर्वपक्षे अस्तीतिसिद्धम् ॥ ५ ॥

अथ षष्ठाधिकरणं—"नैकस्मिन्नसम्भवा"दित्यादिभिश्चतुर्भिः सूत्रैः । विवसनानां सिद्धान्तो निराक्रियते । तेषां मते जीवोऽजीवश्चेति द्वौ पदार्थौ । तत्र जीवश्चेतनः, अजीवः षड्विधः । महीमहीधरादिरेकः, आस्रवसम्वरनिर्जरबन्धमोक्षाख्याः पञ्च च, इति सप्त पदार्थाः । तेषां साधकः सप्तभङ्गीन्यायः । स्यादस्ति, स्यान्नास्ति, स्यादस्ति च नास्ति च, स्यादवक्तव्यः, स्यादस्ति चावक्तव्यश्च, स्यान्नास्ति चावक्तव्यश्च, स्यादस्ति च नास्ति चावक्तव्यश्चेतिसप्तभङ्गीन्यायः । स्याच्छब्दोऽभीष्टवचनः । तत्र जीवादिषु पदार्थेष्वेकैकस्मिन् पदार्थे सप्तभङ्गीनयोऽवतारणीय इति तेषां मतम् । तत्रैकस्मिन् सप्तप्रकारयोजनं युक्तं न वेतिसंशये, युक्तमितिपूर्वपक्षे, न युक्तमितिसिद्धम् ॥ ६ ॥

अथ सप्तमाधिकरणं—"पत्युरसामञ्जस्या"दित्यादिभिः पञ्चभिः सूत्रैः। तार्किकमतसिद्धो जीव-
भिन्नेश्वरवादो युक्तो न वेति, संशये, युक्त इति पूर्वपक्षे, न युक्त इति सिद्धान्तः ॥ ७ ॥

अथाष्टमाधिकरणं—"उत्पत्त्यसम्भवा"दित्यादिभिश्चतुर्भिः सूत्रैः। पञ्चरात्रमते कश्चिदंशं निरा-
करोति, वासुदेवात्सङ्कर्षणाख्यो जीव उत्पद्यते, सङ्कर्षणात् प्रद्युम्नाख्यं मनः, प्रद्युम्नादनिरुद्धाख्योऽहङ्कार
इतिमतं युक्तं न वेति संशये, युक्तमितिपूर्वपक्षे, न युक्तमितिसिद्धम् ॥ ८ ॥

॥ इति द्वितीयाध्याये द्वितीयः पादः ॥

अथ तृतीयपादे श्रुतिवाक्येषु परस्परविरोधः परिह्रियते—
तत्र प्रथमाधिकरणं—"न वियदश्रुते"रित्यादिभिः सप्तभिः सूत्रैः। अत्राकाशमुत्पद्यते न वेतिसं-
शये, नोत्पद्यत इतिपूर्वपक्षे, उत्पद्यत इतिसिद्धान्तः ॥ १ ॥

अथ द्वितीयाधिकरणं—"एतेन मातरिश्वा व्याख्यात" इत्येकेन सूत्रेण। वायोरुत्पत्तिर्नास्ति
अस्ति वेति संशये, नास्तीतिपूर्वपक्षे, अस्तीतिसिद्धम् ॥ २ ॥

अथ तृतीयाधिकरणं—"असम्भवस्तु सतोऽनुपपत्ते"रित्येकेन सूत्रेण। सतो ब्रह्मण उत्पत्तिरस्ति
न वेति संशये, अस्तीतिपूर्वपक्षे, नास्तीतिसिद्धम् ॥ ३ ॥

अथ चतुर्थाधिकरणं—"तेजोऽतस्तथा ह्याहे"त्येकेन सूत्रेण। तेजः किं साक्षाद्ब्रह्मजन्यमुत वायु-
द्वारेतिसंशये, साक्षाद्ब्रह्मजन्यमितिपूर्वपक्षे, वायुभावापन्नमेव ब्रह्म तेजोजनकमितिसिद्धम् ॥ ४ ॥

अथ पञ्चमाधिकरणं—"आप" इत्येकेन सूत्रेण। अपां सृष्टिः साक्षाद्ब्रह्मणो वा तेजोद्वारेतिसंशये,
साक्षाद्ब्रह्मण इति पूर्वपक्षे, तेजोभावापन्नादेव ब्रह्मणोऽपां जन्मेतिसिद्धम् ॥ ५ ॥

अथ षष्ठाधिकरणं—"पृथिव्यधिकाररूपशब्दान्तरेभ्य" इत्येकेन सूत्रेण। छान्दोग्ये "ता अन्नम-
सृजन्ते"त्यद्भ्योऽन्नजन्म श्रूयते। तत्रान्नशब्देन लोकप्रसिद्धं व्रीहियवादिकं ग्राह्यं वा अन्नशब्दार्थः
पृथिवीतिसंशये, व्रीह्यादिकमितिपूर्वपक्षे, पृथिवीतिसिद्धम् ॥ ६ ॥

अथ सप्तमाधिकरणं—"तदभिध्यानादेव तु तल्लिङ्गात्स" इत्येकेन सूत्रेण। तैत्तिरीये "आका-
शाद्वायुरि"त्यादावाकाशादयः स्वतन्त्रा एव वाय्वाद्युत्पादका वा इतिसंशये, स्वतन्त्रा इतिपूर्वपक्षे,
ब्रह्माधीना एवेतिसिद्धम् ॥ ७ ॥

अथाष्टमाधिकरणं—"विपर्ययेण तु क्रमोऽत उपपद्यत" इत्येकेन सूत्रेण। सृष्टिक्रमेण प्रलयो ज्ञेयो वा
विपरीतक्रमेणेतिसंशये, सृष्टिक्रमेणेतिपूर्वपक्षे, सृष्टिविपरीतेन पृथिव्यादिक्रमेण प्रलय इतिसिद्धम् ॥ ८ ॥

अथ नवमाधिकरणं—"अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषा"दित्यादि
सूत्रद्वयेन। तैत्तिरीये आकाशाद्यन्नपर्यन्तमुत्पत्तिमुक्त्वा अन्नमयादयो निरूपिताः, तत्रान्नमयस्य प्राण-
मयस्य च सामग्री पूर्वमुत्पद्योक्ता, आनन्दमयस्तु परमात्मा, मध्ये विज्ञानमनसी विद्यमाने क्वचिदुत्पन्ने
अनुत्पन्ने वा इतिसंशये, उत्पन्ने इतिपूर्वपक्षे, विज्ञानमयस्य जीवत्वान्मनोमयस्य च वेदत्वाद् भूतभौ-
तिकप्रवेशाभावान्न तयोरुत्पत्तिर्वक्तव्येतिसिद्धम् ॥ ९ ॥

अथ दशमाधिकरणं—"नात्माश्रुतेर्नित्यत्वाच्च ताभ्य" इत्येकेन सूत्रेण। जीवोऽप्युत्पद्यते न वेति-
संशये, उत्पद्यत इतिपूर्वपक्षे, नोत्पद्यत इतिसिद्धम् ॥ १० ॥

अथैकादशाधिकरणं—"ज्ञोऽत एवे"त्येकेन सूत्रेण। जीवश्चैतन्यस्वरूपो भवति न वेतिसंशये, चैत-
न्यवानपि न चैतन्यस्वरूप इतिपूर्वपक्षे, चैतन्यस्वरूपो भवतीतिसिद्धम्। भाष्ये एतत्सूत्रव्याख्याने

मायावादिनो माध्यमिकावतारत्वमुक्तं, "माध्यमिकस्यैवायमपरावतारो निरयं सन्निरुपेक्ष्य" इति । भाष्यप्रकारे तु "शङ्करः शङ्करः साक्षा"दित्याख्यायिकया दिवावतारत्वेऽपि माध्यमिकोऽपि तत्राविष्ट इत्युभयावतारत्वं तस्येतिव्याख्यातं, माध्यमिकश्चतुर्विधेषु बौद्धेषु निबन्धे गणितः ॥ ११ ॥

अथ द्वादशाधिकरणं—"उत्क्रान्तिगत्यागतीना"मित्यादिभिश्चतुर्दशभिः । जीवोऽणुर्व्यापको वेति संशये, व्यापक इतिपूर्वपक्षे, अणुरेवेतिसिद्धम् ॥ १२ ॥

अथ त्रयोदशाधिकरणं—"कर्ता शास्त्रार्थवत्त्वा"दित्यादिभिरष्टभिः सूत्रैः । साङ्ख्यवत् प्रकृतिगतमेव कर्तृत्वं जीवे तत्सम्बन्धाद्व्यपदिश्यते वा स्वाभाविकमितिसंशये, कर्तृत्वमितिसिद्धम् ॥ १३ ॥

अथ चतुर्दशाधिकरणं—"परात्तु तच्छ्रुते"रित्यादिसूत्रद्वयेन । जीवस्य यत् कर्तृत्वं तत् स्वातन्त्र्येण वा ब्रह्माधीनमेवेतिसंशये, स्वातन्त्र्येणेतिपूर्वपक्षे, ब्रह्माधीनमेव कर्तृत्वमिति, कर्ता कारयिता भगवानेवेतिसिद्धम् ॥ १४ ॥

अथ पञ्चदशाधिकरणं—"अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके" इत्यादिभिरेकादशभिः सूत्रैः । जीवो भगवदंशो भवति न वेतिसंशये, न भवतीतिपूर्वपक्षे, भवतीतिसिद्धान्तः ॥ १५ ॥

॥ इति द्वितीयाध्याये तृतीयः पादः ॥

अथ चतुर्थपादे—

प्रथमाधिकरणं—"तथा प्राण" इत्यादिभिः पञ्चभिः सूत्रैः । अत्र प्राणशब्द इन्द्रियवाची, प्राणस्य नित्यत्वमनित्यत्वं वेतिसंशये, अनित्यत्वमितिपूर्वपक्षे, जीववन्नित्यत्वमितिसिद्धान्तः । अत्र मतान्तरे विपरीताधिकरणरचना, प्राणशब्दवाचकानामिन्द्रियाणां नित्यत्वं पूर्वपक्षीकृत्यानित्यत्वं सिद्धान्तितं, तत्तु न प्रामाणिकमिति ॥ १ ॥

अथ द्वितीयाधिकरणं—"हस्तादयस्तु स्थितेऽतो नैव"मित्येकेन सूत्रेण । प्राणशब्दवाच्यानीन्द्रियाणि सप्त एकादश वेतिसंशये, सप्तेतिपूर्वपक्षे, एकादशैवेन्द्रियाणीतिसिद्धम् ॥ २ ॥

अथ तृतीयाधिकरणं—"अणवश्चे"त्येकेन सूत्रेण । सर्वे प्राणा व्यापका अणवो वेतिसंशये, व्यापका इतिपूर्वपक्षे, अणव इतिसिद्धम् ॥ ३ ॥

अथ चतुर्थाधिकरणं—"श्रेष्ठश्चे"त्यादिसूत्रद्वयेन । मुख्यः प्राणो नित्योऽनित्यो वेतिसंशये, अनित्य इतिपूर्वपक्षे, नित्य इतिसिद्धम् । गतिमान् अणुपरिमाणश्चेति च ॥ ४ ॥

अथ पञ्चमाधिकरणं—"चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्य" इत्यादिभिश्चतुर्भिः सूत्रैः । स प्राणः स्वतन्त्रः परतन्त्रो वेतिसंशये, स्वतन्त्र इतिपूर्वपक्षे, मुख्यपक्षे भगवदधीनो व्यवहारे जीवाधीन इतिसिद्धम् ॥ ५ ॥

अथ षष्ठाधिकरणं—"ज्योतिराद्यधिष्ठानं तु तदामनना"दित्येकेन सूत्रेण । वागादीनां देवताद्यधिष्ठितानां प्रवृत्तिर्वा स्वत एव वेतिसंशये, स्वत एव प्रवृत्तिरितिपूर्वपक्षे, देवताधिष्ठितानामेव प्रवृत्तिरितिसिद्धान्तः ॥ ६ ॥

अथ सप्तमाधिकरणं—"प्राणवता शब्दा"दित्यादिसूत्रद्वयेन । अग्न्यादीनां यद्वागाद्यधिष्ठातृत्वं तत्किं स्वत एव अन्यसहितानां वेतिसंशये, स्वत एवेतिपूर्वपक्षे, प्राणसहितानामेवाग्न्यादीनामधिष्ठातृत्वमितिसिद्धम् ॥ ७ ॥

अथाष्टमाधिकरणं—"तदिन्द्रियाणि तद्व्यपदेशा"दित्यादिसूत्रद्वयेन। इन्द्रियाणि प्राणवृत्तिरूपाणि तत्त्वान्तराणि वेतिसंशये, प्राणवृत्तिरूपाणीतिपूर्वपक्षे, तत्त्वान्तराण्येवेतिसिद्धान्तः ॥ ८ ॥

अथ नवमाधिकरणं—"सञ्ज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशा"दित्येकेन सूत्रेण। नामरूपप्रपञ्चस्य कर्ता जीवो वा भगवान् वेतिसंशये, जीव इतिपूर्वपक्षे, भगवानेवेतिसिद्धान्तः ॥ ९ ॥

अथ दशमाधिकरणं—"मांसादि भौमं यथाशब्दमितरयोश्च"त्यादिसूत्रद्वयेन। "अन्नमयं हि सौम्य मनः आपोमयः प्राणस्तेजोमयी वागि"ति, "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि चे"ति-श्रुतिविप्रतिषेधात् संशयः, तत्र वाक्प्राणमनांसि किं भौतिकानि आहोस्वित् स्वतन्त्राणीतिसंशये, भौतिकानीतिपूर्वपक्षे, स्वतन्त्राणीति सिद्धान्तः। अन्नादिभिः कृत्वा मनःप्रभृति सम्यक् स्वकार्यक्षमं भवति न त्वन्नमयाद्येवेति ॥ १० ॥

॥ इति द्वितीयोऽध्यायः ॥

अथ तृतीयाध्यायप्रथमपादे—

प्रथमाधिकरणं—"तदन्तरप्रतिपत्तौ रंहति सम्परिष्वक्तः प्रश्ननिरूपणाभ्या"मित्यादिभिः सप्तभिः सूत्रैः। जीवस्य ब्रह्मज्ञानोपयोगिशरीरनिष्पत्त्यर्थं या गतिः, सा किं केवलस्य संस्कृतैर्भूतैः सहितस्य वेतिसंशये, केवलस्य एव गच्छतीति पूर्वपक्षे, संस्कृतैर्भूतैः सहैव गच्छतीतिसिद्धान्तः। तथा हि निष्कामयज्ञकर्ता स्वर्गमारुह्य यागस्यावान्तरफलं भुक्त्वा पञ्चाग्निविद्याप्रकारेण मोक्षोपयोगिदेहं प्राप्नोति। पञ्चाग्निविद्याप्रकारस्तु, छान्दोग्ये सप्तमप्रपाठके उक्तः। तद्यथा प्रवाहणाख्यस्य राज्ञः सभां प्रविष्टं श्वेतकेतुं पञ्चाग्निविद्याप्रकारं जानन्नेव राजा पप्रच्छ "वेत्थ यथा "पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ती"ति। एवमृष्टः श्वेतकेतुः, पितरं गौतममागत्योवाचैवं राज्ञाहं पृष्टोऽस्मि तस्योत्तरं न जानामीति। स च गौतमः स्वयमप्यज्ञः सन् राजसमीपं गत्वा, तां विद्यां पृष्टी-स्तुवाच। एवमुक्तस्य राज्ञो गौतमं प्रति पञ्चाग्निविद्योपदेशः, "असौ वाव लोको गौतमाग्निस्तस्यादित्य एव समिद्रश्मयो धूमोऽहरर्चिश्चन्द्रमा अङ्गारा नक्षत्राणि विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति तस्या आहुतेः सोमो राजा सम्भवति" ॥ १ ॥ "पर्जन्यो वाव गौतमाग्निस्तस्य वायुरेव समिदभ्रं धूमो विद्युदर्चिरशनिरङ्गारा ह्रादुनयो विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवाः सोमꣳराजानं जुह्वति तस्या आहुतेर्वर्षꣳसम्भवति" ॥२॥ "पृथिवी वाव गौतमाग्निस्तस्याः सम्वत्सर एव समिदाकाशो धूमो रात्रिरर्चिर्दिशोऽङ्गारा अवान्तरदिशो विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवा वर्षं जुह्वति तस्या आहुतेरन्नꣳसम्भवति' ॥ ३ ॥ "पुरुषो वाव गौतमाग्निस्तस्य वागेव समित्प्राणो धूमो जिह्वार्चिश्चक्षुरङ्गाराः श्रोत्रं विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवा अन्नं जुह्वति तस्या आहुते रेतः सम्भवति" ॥ ४ ॥ योषा वाव गौतमाग्निस्तस्या उपस्थ एव समिद्यदुपमन्त्रयते स धूमो योनिरर्चिर्यदन्तः करोति तेऽङ्गारा अभिनन्दा विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवा रेतो जुह्वति तस्या आहुतेर्गर्भः सम्भवति" इति। तदग्रे तु 'पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ती"ति ॥ ५ ॥ "पुरुषवचसो भवन्ती"त्येतस्य पुरुषशब्दवाच्या भवन्तीत्यर्थः। प्रथमाहुतिवाक्ये श्रद्धां जुह्वतीत्यत्र श्रद्धाशब्देनाप उच्यन्ते। यद्यप्यन्यान्यपि भूतानि हूयन्ते तथाप्यपामेव ग्रहणे भूयस्त्वं हेतुः। तच्च शुद्धत्वं पयःसोमादिरूपबहुहेतुकत्वं वृष्ट्यन्नरेतःशोणितरूपेण बहुधा परिणतत्वं द्रव्यभूयोवरेण द्रव्यभूयस्करत्वादिरूपं च ज्ञेयम्। एवं पञ्चाग्निविद्याप्रकारेण मोक्षपथोपयोगिशरीरनिष्पत्तिः, तस्मात्तादृशशरीरप्राप्त्यर्थं या जीवस्य गतिः, सा, न केवलस्य, किन्तु संस्कृतैर्भूतैः सहितस्यैवेतिसिद्धम् ॥ १ ॥

अथ द्वितीयाधिकरणं—"कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवं चे"त्यादिभिश्चतुर्भिः सूत्रैः। जीवः स्वर्गं गत्वा तत्र यज्ञस्यावान्तरफलमुपभुज्य ततोऽवरोहणे सर्वमेवावान्तरफलं भुक्त्वा फलावशेषरहितोऽवरोहति तत्सहितो वेतिसंशये, निरवशेषोऽवरोहतीतिपूर्वपक्षे, सावशेष इति सिद्धम् ॥ २ ॥

अथ तृतीयाधिकरणं—"अनिष्टादिकारिणामपि च श्रुत"मित्यादिभिः पञ्चभिः सूत्रैः। पापिनां सुकृतिनां च सर्वेषामेवाहुतिसम्बन्धेन सोमभावो वा केषाञ्चित्सुकृतिनामेवेतिसंशये, सर्वेषामेवेतिपूर्वपक्षे, पापिनां यमलोकप्राप्तिः, केषाञ्चित्सुकृतिनामेव पूर्वोक्तप्रकार इतिसिद्धम् ॥ ३ ॥

अथ चतुर्थाधिकरणं—"विद्याकर्मणोरिति तु प्रकृतत्वादि"त्यादिभिश्चतुर्भिः सूत्रैः। अर्चिरादिमार्गधूमादिमार्गाभ्यामतिरिक्तस्तृतीयो यममार्गो नास्त्यस्ति वेतिसंशये, नास्तीतिपूर्वपक्षे अस्तीतिसिद्धान्तः ॥ ४ ॥

अथ पञ्चमाधिकरणं—"तृतीयशब्दावरोधः संशोकजस्ये"त्यादिसूत्रत्रयेण। "वृष्टेरन्नं भवती"त्यसङ्गतं न वेतिसंशये, असङ्गतमितिपूर्वपक्षे, सङ्गतमितिसिद्धम् ॥ ५ ॥

अथ षष्ठाधिकरणं—"अन्याधिष्ठिते पूर्ववदभिलापादि"त्यादिसूत्रद्वयेन। अन्नस्य रेतोभावो युक्तो न वेतिसंशये, न युक्त इतिपूर्वपक्षे, युक्त इतिसिद्धम् ॥ ६ ॥

अथ सप्तमाधिकरणं—"रेतःसिग्योगोथे"त्येकेन सूत्रेण। अत्र रेतसो होम्यत्वमुपपद्यते न वेतिसंशये, नोपपद्यत इतिपूर्वपक्षे, उपपद्यत इतिसिद्धान्तः ॥ ७ ॥

अथाष्टमाधिकरणं—"योनेः शरीर"मित्येकेन सूत्रेण। "तस्या आहुतेर्गर्भः सम्भवती"त्युच्यते, तत्र सन्देहः गर्भशब्देन योनावन्तःस्थितमेवोच्यते बहिर्निर्गतं वेति, तत्रान्तःस्थितमेव गर्भशब्देनोच्यते, ततश्च षण्मासानन्तरं गर्भे ज्ञानसम्भवात् जननानन्तरं न गुरूपसत्त्यादि कर्तव्यमितिपूर्वपक्षे, योनेर्निर्गतं शरीरमेव गर्भशब्देनोच्यत इतिसिद्धान्तः। एवं चोत्पत्तिसमये वैष्णव्या मायया तस्य ज्ञानस्य तिरोधानाच्च गुरूपसत्त्यादिवैयर्थ्यं, तस्माद्योग्यदेहः साधनसहितो ब्रह्मज्ञानार्थं निरूपितः ॥ ८ ॥

॥ इति तृतीयाध्याये प्रथमः पादः ॥

अथ द्वितीयपादे—

प्रथमाधिकरणं—"सन्ध्ये सृष्टिराह ही"त्यादिभिः षड्भिः सूत्रैः। अत्र स्वप्नसृष्टिः सत्या मायामात्रं वेतिसंशये, सत्येतिपूर्वपक्षे, मायामात्रमितिसिद्धान्तः ॥ १ ॥

अथ द्वितीयाधिकरणं—"तदभावो नाडीषु तच्छ्रुतेरात्मनि चे"त्येकेन सूत्रेण। अत्र सुषुप्तावपि प्रपञ्चनिर्माणमस्ति न वेतिसंशयेऽस्तीतिपूर्वपक्षे, नास्तीतिसिद्धम् ॥ २ ॥

अथ तृतीयाधिकरणं—"अतः प्रबोधोऽस्मा"दित्यादिसूत्रत्रयेण। द्विविधा हि सुषुप्तिः, जीवस्य कासुचिन्नाडीषु प्रवेशे भगवत्समीपगमने वा पुनर्जागरणे सन्देहः, नाडीभ्यो हृदयदेशं गत्वा भगवतः सकाशाद्वा समागत्य जागर्ति आहोस्विद्यत्र स्थितस्तत एव जागर्तीति, तत्र हृदयदेशमागत्य जागर्तीतिपूर्वपक्षे, यत्रैव तिष्ठति तत एव प्रबोध इतिसिद्धम्। अत्रैवाधिकरणे "स एव तु कर्मानुस्मृतिशब्दविधिभ्य" इतिसूत्रव्याख्याने सुप्त एव जीवः प्रबुध्यते अन्यो वेति संशयं प्रदर्श्य, स एव प्रबुध्यते इतिनिर्णीतम्। ततो "मुग्धेऽर्द्धसम्पत्तिः परिशेषा"दितिसूत्रविवरणे प्रबुध्यते इतिनिर्णीतम् ॥ ३ ॥

अथ चतुर्थाधिकरणं—"न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र ही"तिसूत्रत्रयेण। इदानीं विषय-

निर्धारार्थं ब्रह्मस्वरूपं विचार्यते पादशेषेण । तत्र प्रथममन्योन्यविरुद्धवाक्यानां निर्णयः क्रियते । तत्र
स्वगतधर्माणामविरुद्धानामग्रिमपादे विचारः, जडजीवधर्मत्वेन प्रतीयमानानामत्र विचारः क्रियते । तत्र
क्वचिज्जडजीवधर्मा बोध्यन्ते क्वचिन्निषिध्यन्ते, यथा "सर्वकर्मा सर्वकामः", यथा च "निष्कलं निष्क्रियं
शान्त"मित्यादि । अत्र केचित्प्रकारान्तरेण विरोधं परिहरन्ति तन्मतमनूद्य दूषितं भाष्ये । तथाच स्थान-
भेदेन ब्रह्मण उभयधर्मवत्त्वं न सम्भवतीतिसिद्धान्तः ॥ ४ ॥

अथ पञ्चमाधिकरणं—"अरूपवदेव हि तत्प्रधानत्वा"दित्यादिभिः पञ्चभिः सूत्रैः । अत्र जड-
जीवधर्मा ब्रह्मणि सन्ति न वेतिसंशये, सन्तीतिपूर्वपक्षे, सर्वकामत्वादयो धर्मा न सन्तीतिसिद्धान्त
इत्येकदेशिमतम् ॥ ५ ॥

अथ षष्ठाधिकरणं—"अम्बुवदग्रहणात्तु न तथात्व"मित्यादिभिश्चतुर्भिः सूत्रैः । मुख्यसिद्धान्तं
वक्तुमेकदेशिमतं दूषयति, सर्वकामत्वादयो धर्मा ब्रह्मण्युपाधिसम्बन्धादौपचारिका वा ब्रह्मधर्मा एवेति-
संशये, औपचारिका इतिपूर्वपक्षे, विरुद्धधर्माश्रयत्वाद्ब्रह्मधर्मा एवेतिसिद्धान्तः । अत्रैवाधिकरणे "प्रकृ-
तैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूय" इतिसूत्रविवरणे परमार्थतो विरोधं परिहृत्य युक्त्याऽपि,
प्रतिषेधति, सर्वत्र लौकिकं प्रतिषेधत्यलौकिकं विधत्त इति युक्त्या निर्णयः, तस्माद् युक्त्याप्य-
विरोधः ॥ ६ ॥

अथ सप्तमाधिकरणं—"तदव्यक्तमाह ही"त्यादिसूत्रद्वयेन । विरुद्धवाक्यान्युदाहृत्य चिन्त्यन्ते, "न
चक्षुषा गृह्यते कश्चिद्धीरः प्रत्यगात्मानमैक्षत् नापि वाचा", "सर्वे वेदा यत्पदमामनन्ति", "अप्राप्य
मनसा सह", "मनसैवैतदाप्तव्यं", "अस्पर्शमगन्धमरसं", "सर्वरूपः सर्वगन्धः सर्वरसः", "अपाणि-
पाद" इत्यादि, "विश्वतश्चक्षु"रित्यादि, एतेषु विरुद्धवाक्येष्वेकस्य स्वार्थे प्रामाण्यमपरस्योपचरितार्थत्वं
युक्तं वा उभयविधानामपि स्वार्थे प्रामाण्यमितिसंशये, एकस्य स्वार्थे प्रामाण्यमन्यस्योपचरितार्थत्वमि-
तिपूर्वपक्षे, उभयविधानामपि स्वार्थे प्रामाण्यमितिसिद्धम् ॥ ७ ॥

अथाष्टमाधिकरणं—"प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासा"दित्यादिसूत्रत्रयेण । पुनः
प्रकारान्तरेण पूर्वोक्तमेव स्थिरीकर्तुमधिकरणारम्भः । अत्र भगवति विरुद्धधर्माश्रयत्वं निर्णीतम् ॥ ८ ॥

अथ नवमाधिकरणं—"प्रकाशाश्रयवद्वा तेजस्त्वा"दित्यादिभिस्त्रिभिः सूत्रैः । ब्रह्मधर्माः किं
ब्रह्मणो भिन्नाः कार्यरूपा आहोस्विद्ब्रह्मैवेतिसंशये, धर्माः प्रपञ्चवद्ब्रह्मकार्या इतिपूर्वपक्षे, ब्रह्मस्वरूपा
एवेतिसिद्धम् ॥ ९ ॥

अथ दशमाधिकरणं—"परमतः सेतून्मानसम्बन्धभेदव्यपदेशेभ्य" इत्यादिभिः सप्तभिः सूत्रैः ।
ब्रह्मणः सकाशात्परमन्यदुत्कृष्टं फलमस्ति न वेतिसंशये, अस्तीतिपूर्वपक्षे, नास्तीतिसिद्धम् ॥ १० ॥

अथैकादशाधिकरणं—"फलमत उपपत्ते"रित्यादिभिश्चतुर्भिः सूत्रैः । फलदाता भगवान् वा देवा-
न्तरं वा कर्म वेतिसंशये, अन्यस्मादेव फलमितिपूर्वपक्षे, भगवानेव फलदातेतिसिद्धान्तः ॥ ११ ॥

॥ इति तृतीयाध्याये द्वितीयः पादः ॥

अथ तृतीयपादे—

प्रथमाधिकरणं—"सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषादि"त्यादिभिः "आत्मशब्दाच्चे"त्यन्तैः पञ्च-
दशभिः सूत्रैः । सर्ववेदान्तप्रत्ययं शुद्धसच्चिदानन्दविग्रहवत्त्वं ब्रह्मणो निरूपितम् । पूर्वपादे जडजीवधर्मनिराकरणेन ब्रह्मगता एव धर्मा विचार्यन्ते । ते चेदेकस्मिन् वाक्ये एव सर्वे पठिता भवेयुस्तदा न विचार
इह तु, ब्रह्मगता एव धर्मा विचार्यन्ते ।

णीया भवेयुर्विरोधाभावात्। पठिताश्च तत्तदुपासनप्रकरणेषु । क्वचित्त एव क्वचिद्भिन्नाः । यथा वाजसनेयिनः पञ्चाग्निविद्यां प्रस्तुत्य षष्ठमन्यमग्निं पठन्ति "तस्याग्निरेवाग्निरि"ति । छन्दोगास्तु पञ्चसङ्ख्ययैवोपसंहरन्ति, "अथ य एतानेवं पञ्चाग्नीन् वेदे"ति । तथा प्राणसम्वादे मुख्यप्राणादन्यांश्चतुरः प्राणान् वाक्चक्षुःश्रोत्रमनांसि पठन्ति । वाजसनेयिनस्तु तमपि पञ्चमं पठन्ति । अपरञ्च, अथर्वोपनिषत्सु क्वचिद्गोकुलवृन्दाकाननसञ्चरद्गोपरूपमित्यादि, क्वचित्कोदण्डमण्डितभुजदण्डखण्डितप्रचण्डदशमुण्डमित्यादिरामस्वरूपम् । क्वचि"द्दतिकरालवदनवित्रासिते"त्यादिनृकेसरिरूपम् । क्वचिदुरुक्रमादिरूपं च निरूप्यते" । अत्र सर्वेषामुपासनाविषयाणां भेदादब्रह्मत्वमभेदाद् ब्रह्मत्वं वेतिसंशये, अब्रह्मत्वमितिपूर्वपक्षे, अभेदाद्ब्रह्मत्वमेवेतिसिद्धान्तः । ब्रह्मणोऽनन्तरूपत्वेपि यानि यानि रूपाणि विविधैर्जीवैरुपासितुं शक्यानि तानि तानि रूपाणि तैस्तैर्वेदैर्निरूप्यन्त इतितावद्रूपात्मकमेकमेव ब्रह्मेत्यर्थः । यथैकस्मिन्नग्निष्टोमे शाखाभेदेऽपि चोदना तथैव भवति "अग्निष्टोमेन यजेते"ति, तथेहापि सर्वेषु वेदान्तेषु ब्रह्मत्वेनैवोपासना विधीयत इति । तथा च यथा शाखाभेदेन बहुप्रकारकोऽप्यग्निष्टोम एक एव, तथा तावद्रूपात्मकमेकमेव ब्रह्मेत्यर्थः । अत्रैवाधिकरणे "भेदान्नेति चेदेकस्यामपी"तिसूत्रव्याख्याने "यत्रैकस्मिन्नुपास्ये रूपेऽन्यस्माद्रूपादधिका गुणा उच्यन्ते तत्र तेषामुपसंहारो युक्त इतिभावः । अत्रायं विशेषो ज्ञेयः, उपासनाविषयेष्वखिलेष्वविशिष्टं ब्रह्मत्वं ज्ञात्वा तेष्वेकतरं रूपं य उपास्ते तस्य तत्र सर्वे गुणा उपसंहर्तुमुचिताः, यस्त्वनन्तेषु विभूतिरूपेषु "ओमित्येतदक्षरं ब्रह्मे"तिज्ञात्वोपास्ते तस्य शाखान्तरीया अप्येतदक्षरोपासनप्रकरणोक्ता एवोपसंहर्तव्या नान्ये, तद्रूपमधिकृत्यैव तेषां गुणानां कथनादन्यथाऽतिप्रसङ्गात् । इयं तूपासनादिमार्गीया व्यवस्थोक्ता । भक्तिमार्गीया त्वेतद्विलक्षणा साग्रे वाच्येति अस्मिन्नेवाधिकरणे "स्वाध्यायस्य तथात्वेन समाचारेऽधिकाराच्च सववच्च तन्नियमः" इतिसूत्रव्याख्याने यथा सर्वेषां शाखिनां स्वस्वशाखोक्तकर्मण्येवाधिकारो न परशाखोक्तेपि, अतिरिक्तकरणे प्रायश्चित्तश्रवणात्, प्रकृतेपि यद्रूपोपासनाप्रकरणे यावन्तो धर्मा उक्तास्तस्मिन् रूपे तावद्धर्मवत्त्वेनैवोपासना कार्या तद्बोधकप्रमाणानुरोधात्, न तु रूपान्तरोपासनप्रकरणोक्तसाधारणधर्मवत्त्वेनापि, तथासति मत्स्योपासकस्य चापशरादिकमपि भावनीयं स्यात्, पुरुषरूपोपासकस्य च लक्षयोजनायामशृङ्गादिकम् । मन्वथर्वोपनिषत्सु श्रीरामोपासनायां मत्स्यकूर्माद्यवताररूपत्वमुच्यते, सत्यमुच्यते, तत्रायमभिसन्धिः, परमकाष्ठापन्नं ब्रह्मस्वरूपमिदमिति ज्ञात्वा ह्युपासना कार्या, तेनैतस्यैवान्येवतारास्तत्तद्रूपेण तानि तानि कर्माण्ययमेव कृतवानितिज्ञेयम्, परं, न तु तस्मिन्नेवरूपेऽन्यावतारधर्मरूपत्वमपीति । तथा च तस्मिंस्तस्मिन्नवतारे तत्तद्धर्मवानिति श्रुत्या बोध्यते न तु सर्वथापि । तत्र बाधकमुक्तमेव, प्राणाद्युपासनास्वेतावान् विशेषः, यथा कर्मण्यतिरेके प्रायश्चित्तश्रवणं बाधकं श्रीरामस्वरूपाद्युपासनासु च तेनावतारेणाकृततत्कर्मणस्तत्र भावनेऽपराधो बाधको "योन्यथा सन्त"मितिवाक्यं च, न तथा प्राणाद्युपासनास्वधिकगुणस्येतरत्रोपसंहारे किञ्चिद्बाधकं दृश्यत इति तत्कर्तुं शक्यत इति । नन्वन्येषामवताराणां मध्ये श्रीकृष्णावतारस्य श्रैष्ठ्यं निरूप्यते "एते चांशकलाः पुंसः कृष्णस्तु भगवान् स्वय"मित्यादिवचनैः, पूर्वोक्तरीत्या तु सर्वतुल्यता प्रतीयत इति नैकतरनिर्धारः सम्भवति, किञ्च, ब्रह्मणो निरवयवत्वेनैकस्यांशित्वमन्येषामंशत्वमित्यपि वक्तुमशक्यमितिप्राप्तेऽभिधीयते, "सत्त्वं यस्य प्रिया मूर्तिः" "विशुद्धसत्त्वं तव धाम शान्त"मित्यादिवाक्यैरप्राकृतो भगवत्स्थानभूतः सत्त्वनामा भगवद्धर्मरूप एव कश्चनास्ति, यादृशेन रूपेण भगवान् कार्यं कर्तुमिच्छति तादृग्रूपं तं प्रकटीकृत्य तस्मिन् स्वयमाविर्भूयायःपिण्डे वह्निरिव तत्तत्कार्याणि करोति, यस्मिन् यस्मिन्नवतारे सं सोंऽश इत्युच्यते, तत्र हि विग्रहस्तत्राधि-

भूतं ब्रह्मस्वरूपं च प्रतीयते, विग्रहस्य सत्त्वात्मकत्वेन धर्मरूपत्वात्तत्राविर्भूतस्यैव ब्रह्मत्वात्समुदितस्या-
वतारत्वेन गणनात्तत्रैकस्यैवांशस्य तद्रूपत्वं यत्तदेवांशत्वं, यत्राधिष्ठानमनपेक्ष्य स्वयमेव शुद्धं साकारं
ब्रह्माविर्भवति भक्तार्थं, स स्वयं पूर्णो भगवानुच्यते, एतदेव श्रैष्ठ्यम् । अत एव सर्वतः पाणिपादान्तत्वं
स्वस्मिन् स्फुटं ज्ञापयितुं तोकादिभावेनाविर्बभूव, तेन यादृग्यादृग्लीलाविशिष्टं यद्यद्बालपौगण्डाद्यवस्था-
विशिष्टं तत्तद्रूपं नित्यमेवेति वयं जानीमः । मन्वाद्यधिष्ठातृरूपाणि तु विभूतिरूपाणि । विभूतित्वं
च हीनाधिकारिणां तत्तत्फलदानार्थमैश्वर्यादिरूपेण तत्र तत्र स्थितत्वमेव । ननु किमर्थं नानाविध-
प्राकट्यमितिचेदुच्यते, प्राकट्यं हि भक्तिनिमित्तकम् । सा तु, बहुविधेति, तदनुरूपं प्राकट्यमपि बहु-
विधम् । सर्गादिकार्येष्वधिकृतानां भक्तानामितरासक्तिरप्यस्तीत्युपाध्यन्तरितस्नेहवत्त्वाच्च अनन्तरूपत्वेन
मत्स्यादिरूपोऽपि तदर्थं तद्व्यवहित एव प्रकटीभवति । ये तु भगवत्स्वरूपमात्रासक्तास्तदर्थं स्वयमेव
सत्त्वाव्यवधानेन प्रादुर्भवति । एतेनैव निराकारत्वशङ्कापि निरस्ता । एतेन सोपधिस्नेहवदर्थमेव मत्स्या-
दिरूपप्राकट्यस्य प्रमाणसिद्धत्वान्निरुपधिस्नेहवदर्थमेव श्रीव्रजनाथप्राकट्यस्यापि तथात्वात् । इदं
श्रैष्ठ्यं, अत्रैवाधिकरणे "उपसंहारोऽर्थाभेदाद्विधिशेषवत् समाने चे"तिसूत्रे यथाऽग्निहोत्रादीनामग्निहो-
त्रत्वाविलक्षणे समानेऽपि सति स्वस्वशाखोक्तप्रकारस्यैव करणं नान्यशाखोक्तधर्मोपसंहार एवमिहापि
तत्तदवतारोपासकस्य तत्तदसाधारणधर्मवत्त्वेनैवोपासनं नान्यावतारधर्मवत्त्वेनापीत्यर्थः । न वा
प्रकरणभेदात्परोवरीयस्त्वादिवदितिसूत्रे व्यवस्थितविकल्पमाह न वेत्यादिना, सर्वेष्ववतारेषु भगव-
दवतारत्वेन साधारणी भक्तिर्यस्य स सर्वत्रोपसंहारं करोतु नाम, यस्त्वेकान्ती तस्य स्नेहोत्कर्षेणान्तः-
करणमेकस्मिन्नेव रूपे पर्यवसितमिति रूपान्तरमन्तःकरणारूढं न भवत्येवेति नोपसंहारसम्भावनापीति
तदेतदुच्यते न वेत्यन्तेन । तत्र हेतुः प्रकरणभेदादिति । अत्रैवाधिकरणे "आत्मशब्दाच्चे"तिसूत्रे एतेन
यत्परम्परासम्बन्धैरपि विभूतिरूपाणामुपास्यत्वं तदस्य महत्त्वं कियदवधि वाच्यमिति ज्ञाप्यते । एवं
सत्युपासनामार्गीयोपास्यं विभूतिरूपं न [illegible] मूलरूपमितिज्ञेयम् ॥ १ ॥

अथ द्वितीयाधिकरणं—"आत्मगृहीतिरितरवदुत्तरा"दित्यादिसूत्रद्वयेन । अन्नमयादिष्वानन्दम-
यस्य जीवत्वं ब्रह्मत्वं वेतिसंशये, जीवत्वमितिपूर्वपक्षे, ब्रह्मत्वमितिसिद्धम् ॥ २ ॥

अथ तृतीयाधिकरणं—"कार्याख्यानादपूर्व"मित्यादिषड्भिः सूत्रैः । तैत्तिरीयके "तस्माद्वा एतस्मा-
दात्मन" इत्यारभ्य महाभूतसृष्टिमुक्त्वाऽऽम्नायते "पृथिव्या ओषधयः ओषधीभ्योऽन्नं अन्नात्पुरुषः स वा
एष पुरुषोऽन्नरसमय"इति । एतदग्रे "येऽन्नं ब्रह्मोपासत" इत्युच्यते । तत्र "स वा एष पुरुषोऽन्नरसमय"
इत्यत्र पूर्वोक्त एवोच्यते उत तद्भिन्न इति भवति संशयः, पूर्वोक्त एवेतिपूर्वपक्षः, सिद्धान्तस्तु "अन्ना-
त्पुरुष" इत्यनेनाधिभौतिकः, "स वा एष पुरुषोऽन्नरसमय"इत्यनेनाध्यात्मिको ब्रह्मरूप इति । अथवा
वाजसनेयिशाखाया"मात्मन्येवोपासीते"त्युपक्रम्य"तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोऽन्यस्मात्सर्वस्मादन्तरं
यदयमात्मे"त्येतदग्रेऽन्यस्य प्रियत्वं निराकृत्येश्वरो हि तथा स्यादात्मानमेव प्रियमुपासीतेति पठ्यते ।
अत्रात्मपदेन जीवात्मन एवात्मत्वेनोपासना विधीयत उतेश्वरपदात्परमात्मन इतिसंशये, जीवात्मन
इतिपूर्वपक्षे, पुरुषोत्तमस्यैव प्रियत्वं भवितुमर्हतीतिसिद्धम् । तेनाविकृतत्वपरमानन्दत्वादयो धर्मा उप-
संहर्तव्याः । अत्रैवाधिकरणे "सम्बन्धादेवमन्यत्रापी"तिसूत्रे अन्यत्रापि जीवेऽप्येवं ब्रह्मणीवोपासना
कार्या, तत्र हेतुः सम्बन्धादिति, अयोगोलके वह्नेरिव तस्मिन्नावेशलक्षणः सम्बन्धोऽस्तीति । अत्रैवं
ज्ञेयम् । अयं तु जीवोऽत्राविष्टं भगवन्तमहमुपास इति जानाति चेत्तदा न सा जीवगामिन्युपासना, किन्तु
ब्रह्मगामिन्येव । तत्राखिलधर्मोपसंहारे न किञ्चिद्बाधकम् । यत्र ब्रह्मत्वेनैव ज्ञात्वोपास्ते तत्रापि तं यथा-

३ ब्र०अ०सू०

यथोपासते तथैव भवति तद्धैतान् भूत्वावती"तिश्रुतेर्गुणवादो जीवत्वबुद्धिनिषेधाच्च । तथा तत्र यादृ-
गुपासकस्तदुपासनासिद्ध्यर्थं तत्फलदानार्थं च तादृग्रूपो भगवानाविशतीति च तथा । यस्त्वन्तर-
ङ्गभगवद्भक्तं हृद्याविर्भूतभगवत्कं ज्ञात्वा तद्भजनेनाहं भगवन्तं प्राप्स्यामीति ज्ञात्वा तमेव भजते स
प्रेमविश्वासयोरुत्कर्षाद् भक्तिमार्गीय इति । भक्तहृदयाविर्भूतेऽपि रूपे उपसंहारो धर्माणां तेन न कार्य
इत्यग्रिमे पठति न वाविशेषादि"ति । अस्य भक्तत्वेन तद्भजनरसास्वादनेन विस्मृततदाविष्टभग-
वत्कत्वेन तन्निरपेक्षत्वेन वा तदाविष्टभगवति गुणोपसंहारेऽनुपसंहारे वा भक्तोपासनायां विशेषाभा-
वादित्यर्थः । "विशेषादिति वा" नञ्प्रश्लेषरहितः पदच्छेदः । पूर्वं विहितत्वेन भगवदाकारादिषु
भजनं कुर्वन्नन्युक्तरूपभक्तसङ्गेन तद्भजनेन च पूर्वस्माद्विशिष्टं रसमनुभूतवानिति रसास्वादे विशेषाद्गु-
णोपसंहारं स न करोतीत्यनुवादः । विहितत्वेन गुणोपसंहारपूर्वकोपासनायां नीरसत्वेनानादरज्ञापनाय
वाशब्दः । अपि च उपसंहारो हि तत्रानुक्तानामन्यत्रोक्तानां गुणानां तत्र सत्त्वेन ज्ञानमात्रं, उक्तरू-
पभक्ताय तु तद्भजनीये भक्त एवालौकिकानुभावान् भगवान् प्रत्यक्षं दर्शयतीति न तत्रोपसंहारा-
पेक्षागन्धोऽपीति ॥ ३ ॥

अथ चतुर्थाधिकरणं—"पुरुषविद्यायामिव चेतरेषामनाम्नाना"दित्येकेन सूत्रेण । तैत्तिरीयके
"सहस्रशीर्षा पुरुष" इत्यादिना पुरुषविद्या निरूप्यते । तत्रैव "ब्रह्मविदाप्नोति पर"मितिप्रपाठके "स
वा एष पुरुषोऽन्नरसमय" इत्यारभ्य प्राणमयमनोमयविज्ञानमयानन्दमयाख्यं ब्रह्मस्वरूपं निरूप्यते । तत्र
सर्वत्र स च "पुरुषविध एवे"ति पठ्यते । अत्रान्नमयादिषु पुरुषसूक्ते च पुरुषपदश्रवणादन्नमयादिषु
सहस्रशीर्षत्वाद्युपसंहारः कर्तव्यो न वेतिसंशये, विद्यैक्यात्र कर्तव्य इतिपूर्वपक्षे, पुरुषपदमात्रसाम्ये-
ऽप्यैऽपि विद्याभेदान्नोपसंहारः कर्तव्य इतिसिद्धम् । "सहस्रशीर्षा पुरुष" इत्यत्र पुरुषपदं ब्रह्मपरं, अन्न-
मयादिषु विज्ञानमयान्तेषु पुरुषपदं विभूतिपरं, अत एव भृगूपाख्याने अन्नमयादिब्रह्मज्ञानेऽपि जिज्ञा-
सैवोक्ता, भृगोरानन्दरूपपरब्रह्मज्ञाने तु नोक्ता, तेनाशेषगुणपूर्णं ब्रह्मेत्युक्तं भवत्यत उत्तमाधिकारिभि-
स्तदेवोपासनीयं न विभूतिरूपमितिज्ञापितम् ॥ ४ ॥

अथ पञ्चमाधिकरणं—"वेधाद्यर्थभेदा"दित्यादिसूत्रद्वयेन । भगवत्सम्बन्धाभावे दोषसम्बन्धमुक्त्वा
तथासति गुणहानिं च वदंस्तत्र विशेषमाह, हानौ तूपायनशब्दशेषत्वात् कुशाच्छन्दःस्तुत्युपगान-
वत्तदुक्त"मितिसूत्रे "तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैती"त्याथर्वणिकैर्मुण्डके
पठ्यते । परमपदेन ब्रह्मोच्यते । तत्र कतिपयधर्मैः साम्यं वाऽशेषतन्निष्ठधर्मैरितिसंशयेऽशेषधर्मैरितिपूर्व-
पक्षे, कतिपयधर्मैरेव साम्यमितिसिद्धान्तः । "ये धर्मा जीवनिष्ठा आनन्दांशैश्वर्यादयो भगवदिच्छया
तिरोहितास्ते ब्रह्मसम्बन्धे सति पुनराविर्भूता इति तैरेव साम्यमित्यर्थः ॥ ५ ॥

अथ षष्ठाधिकरणं—"साम्पराये तर्तव्याभावात्तथा ह्यन्य" इत्यादिसूत्रद्वयेन । वाजसनेयिशाखायां
"स एष नेति नेति" इत्युपक्रम्य "सर्वं पाप्मानं तरती"ति पठ्यते । अत्र पाप्मतरणादिरूपं ब्रह्मज्ञान-
माहात्म्यमुच्यते, ज्ञानस्य संसारमुक्तिहेतुत्वात् । अथर्वणोपनिषत्सु "परब्रह्मैतयो धारयती"त्यारभ्य
"भजति सोऽमृतो भवती"तिभगवद्भक्तेर्मुक्तिहेतुत्वमुच्यते । अत्रैतावान् सन्देहः, "य एवं वेद स पाप्मानं
तरती"तिवचनाज्ज्ञानदशायामपि पापसत्त्वं वाच्यमन्यथा तरणासम्भवापत्तेः । एवं सति भक्तिदशाया-
मप्येवमेव न वेति भवति संशयः । तत्र भक्तिदशायामप्येवमेवेति पूर्वपक्षे, नैवमितिसिद्धान्तः । ज्ञान-
मार्गेऽक्षरप्राप्त्या भक्तिमार्गे पुरुषोत्तमप्राप्त्या तस्माद्विशेषमत्र ज्ञापयितुमेवद्वयथनं, अतो भक्तेः पूर्वमेव
पापनाशो युक्त इति भावः । ननु भक्तिमार्गीयाणामपि गोपस्त्रीणां "दुःसहप्रेष्ठविरहतीव्रतापधुता-

शुभाः। ध्यानप्राप्ताच्युताश्लेषनिर्वृत्या क्षीणमङ्गला" इतिवचनेन दुष्कृतसुकृतयोरपि हानिश्रवणात्पूर्वो-
क्तवचनैर्विरोध इत्याशङ्कायामुत्तरं पठति "छन्दत उभयाविरोधा"दितिसूत्रे। एवंसति भक्तेः पूर्वमेव
पापनाश औत्सर्गिकः, स क्वचिद्विशेषेच्छयाऽपनोद्यत इतिभावः। अनेनाविशेषे किञ्चिदुच्यते, चिकीर्षि-
तलीलामध्यपातिभक्ता न सोपाधिस्नेहवत्यो न वा सगुणविग्रहा न वा सुरतादियुक्ता इति ज्ञापयितुं
कतिपयगोपीस्तद्विपरीतधर्मयुक्ताः कृत्वा तस्यां दशायां स्वप्राप्तौ प्रतिबन्धं कारयित्वा स्वयमेव तां दशां
नाशयित्वा स्वलीलामध्यपातिनीः कृतवानिति। न ह्येतावता सार्वदिक एवायं भावो भवति। न हि
मन्त्रप्रतिबद्धशक्तिरग्निरदाहक इति स्वभावत्वमेव तस्य सार्वदिकमितिवक्तुं शक्यम्॥ ६॥

अथ सप्तमाधिकरणं—"गतेरर्थवत्त्वमुभयथान्यथा हि विरोध" इत्येकेन सूत्रेण। "ननु "सत्यं
ज्ञानमनन्तं ब्रह्म यो वेद निहितं गुहायां परमे व्योमन्नि"ति, "तमेवं विद्वानमृत इह भवति नान्यः
पन्था विद्यतेऽयनाये"त्यादिश्रुतिभिर्ब्रह्मज्ञाने सत्येव मोक्ष इत्युच्यते। "यमेवैष वृणुते तेन लभ्य" इति-
श्रुत्यात्मीयत्वेनाङ्गीकारात्मकवरणस्य भक्तिमार्गीयत्वात्तस्मिन् सति भक्तिमार्गे प्रवेशाद्भक्त्यैव मोक्ष इत्यु-
च्यते। किञ्च, "भक्त्या मामभिजानाती"त्युक्त्वा "ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तर"मिति-
भगवतोक्तमिति भक्तिमार्गेऽपि पुरुषोत्तमज्ञानेनैव मोक्ष इत्युच्यते। ज्ञानमार्गे त्वक्षरज्ञानेनेति विशेषः।
"तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः, न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिहे"तिवचनेन
भक्तिमार्गीयस्य ज्ञाननैरपेक्ष्यमुच्यते। तथाचैवं मिथः श्रुत्योः स्मृत्योश्च विरोधान्नैकतरनिर्धारः सम्भवति।
अपरञ्च "मत्कामा रमणं जार"मितिवाक्याज्ज्ञानमार्गीयभक्तिमार्गीयज्ञानरहितानामपि भगवत्प्राप्तेस्त-
त्साधनत्वनिरूपकश्रुतिविरोधः। तथा च क्वचिज्ज्ञानं मुक्तिसाधनत्वेनोच्यते, क्वचिद्भक्तिः, क्वचिन्नोभय-
मपीत्येकतरसाधनानिश्चयान्मुक्तिसाधने मुमुक्षोः प्रवृत्त्यसम्भव इतिप्राप्ते आह "गतेरर्थवत्त्व"मित्यादि।
ज्ञानभक्तिभ्यां मुक्तिर्मर्यादा, तद्रहितानामपि स्वस्वरूपबलेन स्वप्रापणं पुष्टिरित्युच्यते। तथा च, यं
जीवं यस्मिन् मार्गेऽङ्गीकृतवांस्तं तत्र प्रवर्तयित्वा तत्फलं ददातीति सर्वं सुस्थम्। अत्रायं विवेकः, मर्या-
दायामङ्गीकृतानां मुक्तीच्छयैव श्रवणादौ प्रवृत्तिस्तद्द्वारत्वेनैव भगवति प्रेमापि, न तु निरुपधिरतो
मर्यादामार्गे मुक्तिरेव भवित्री। अस्मिन्मार्गे श्रवणादिभिः पापक्षये प्रेमोत्पत्तिस्ततो मुक्तिः। पुष्टिमार्गेऽङ्गी-
कृतेस्त्वनुग्रहसाध्यत्वाचत्र पापादेर्न प्रतिबन्धकत्वम्। अत्र श्रवणादिकमपि फलरूपमेव स्नेहेनैव क्रिय-
माणत्वान्न विधिविषयोऽतः पापादेर्न पुष्टिमार्गे प्रतिबन्धकत्वम्। तदुक्तं श्रीभागवते "स्वपादमूलं भजतः
प्रियस्ये"त्यादि॥ ७॥

अथाष्टमाधिकरणं—"उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकव"दित्येकेन सूत्रेण। मर्यादामार्गीयाणां सर्वत्र
मुक्तेरेव फलत्वमुच्यते। पुष्टिमार्गीयभक्तानां तु तदनपेक्षितत्वात् पुरुषोत्तमप्राप्तिरेव फलमित्युच्यते।
तत्र श्रौतत्वभगवत्सम्बन्धित्वयोरविशेषात्कतमो गरीयानिति संशये, मुमुक्षोः सकाशाद्रहस्यभजनकर्तैव
श्रेष्ठ इति सिद्धम्॥ ८॥

अथ नवमाधिकरणं—"अनियमः सर्वासामविरोधः शब्दानुमानाभ्या"मित्येकेन सूत्रेण। अथ-
र्वणोपनिषत्सु गोपालतापनीये पठ्यते "परब्रह्मैतद्यो धारयति रसति भजति ध्यायते प्रेमति शृणोति
श्रावयत्युपदिशत्याचरति सोऽमृतो भवति सोऽमृतो भवती"ति। अत्र धारणादीनां समुदितानामेवामृत-
साधकत्वमुत प्रत्येकमपीतिसंशये, समुदितानामिति पूर्वपक्षे, प्रत्येकमप्यमृतसाधकत्वमिति सिद्धान्तः॥९॥

अथ दशमाधिकरणं—"यावदधिकारमवस्थितिराधिकारिकाणा"मित्येकेन सूत्रेण। "यस्मिन् जीवे
यत्कार्यसाधनार्थमधिकारो भगवता दत्तस्तत्कार्यसाधनक्षमास्तस्मिन् ये धर्मा भगवता स्थापितास्ते आधि-

कारिका इत्युच्यन्ते, तैर्धर्मैर्मुक्तिर्भवति न वेतिसंशये, भवतीतिपूर्वपक्षे, तेषां धर्माणां यावदधिकारं स्थितिर्नियमेन तेषां न मुक्तिसाधकत्वं, किन्तु तेषामपि भक्त्यैव मुक्तिरिति सिद्धान्तः ॥ १० ॥

अथैकादशाधिकरणं—"अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत्तदुक्त"मित्यादि-सूत्रद्वयेन । ननूक्ताथर्वणोपनिषद्वाक्यैर्भगवद्धर्माणां मुक्तिसाधनत्वमुच्यते, श्रुत्यन्तरेषु "तमेव विदित्वा-ऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाये"त्यादिषु ज्ञानस्यैव मुक्तिसाधनत्वमुच्यते, श्रुतित्वाविशेषा-दुभयोस्तथात्वे कारणवैजात्ये कार्यवैजात्यस्यावश्यकत्वान्मुक्तौ च वैजात्यासम्भवाद् "भक्त्या मामभि-जानाती"तिवाक्याद्भक्तौ ज्ञानस्यापि सम्भवाज्ज्ञानेनैव मुक्तिरितिपूर्वपक्षे, ज्ञानसाधनत्वनिरूपकश्रुतिता-त्पर्यं निरूपयन् पुरुषोत्तमप्राप्तेरेव मुक्तिपदवाच्यत्वाद्भजनस्यैव तत्प्रापकत्वमिति हृदि कृत्वा आह अक्षर-धियामित्यादि । ज्ञानमार्गीयाणामक्षरप्राप्तिर्भक्तिमार्गीयाणां पुरुषोत्तमप्राप्तिरितिवैलक्षण्यम् । तत्रापि मर्यादाभक्तिमार्गीयाणां पुरुषोत्तमसायुज्यं पुष्टिस्थानां भजनानन्दानुभव इतिविवेकः ॥ ११ ॥

अथ द्वादशाधिकरणं—"अन्तरा भूतग्रामवत् स्वात्मन" इत्यादिसूत्रत्रयेण । अथ ज्ञानमार्गे यथा स्वात्मत्वेन ब्रह्मणो ज्ञानं तथा भक्तिमार्गेऽपि भक्त्या पुरुषोत्तमज्ञाने स्वात्मत्वेन पुरुषोत्तमज्ञानं भवति न वेतिसंशये, भवतीतिपूर्वपक्षे, न भवतीतिसिद्धान्तः । स्वात्मत्वेन ज्ञानस्य भजनानन्दान्तराय-रूपत्वाद्भगवता तन्न सम्पाद्यते, किन्तु "सर्वस्य वशी सर्वस्येशान"इत्यादिश्रुतिभिरैश्वर्यमेव सर्वेश्वरत्वा-दिना भक्तानां ज्ञानमिति । अत्रैवाधिकरणे "अन्यथाभेदानुपपत्तिरिति चेन्नोपदेशान्तरव"दितिसूत्रे क्वचिदुद्धवादिषु यो ज्ञानोपदेशस्तस्य फलं तु न ज्ञानमार्गीयं ज्ञानं, किन्तु, यथा योगाख्यसंस्कारसं-स्कृतं योगिवपुर्नाग्न्यादिभिरुपहतं भवति, तथा ज्ञानाख्यसंस्कारसंस्कृतं भक्तशरीरं विप्रयोगाग्निना नान्यथाभवतीति ज्ञानोपदेशफलम् । अन्यथोपदेशानन्तरं बदरीं गच्छन् विदुरं प्रति "इहागतोऽहं विरहा-तुरात्मे"ति न वदेत् । एवमेवान्येष्वपि भक्तेषु ज्ञेयम् । अथवा पुरुषोत्तमे निरुपधिस्नेहस्तत्सम्बन्धि-त्वेनात्मनि स्नेहसिद्ध्यर्थमात्मत्वेनोपदेशः । अग्रे जीवनसम्पत्तिरेवोपदेशकार्यं न तु तेन पूर्वभावोपमर्दः सम्भवतीतिसारं, तेन ज्ञाने सर्वाधिक्यं मन्वानाय भक्तिबलप्रदर्शनं च सिद्ध्यति । अत्रैव "व्यति-हारो विंशिषन्ति हीतरव"दितिसूत्रे क्वचिद्भक्तानामपि "कृष्णोऽहं पश्यत गति"मित्याद्यभेदज्ञानम् । रसात्मकत्वाद्भक्तेः संयोगविप्रयोगात्मकत्वाद् द्वितीयभावोद्रेके यथेतरेऽश्रुव्यपलापाद्यो व्यभिचारि-भावास्तथातिविगाढभावेन तदभेदस्फूर्तिरप्येको विगाढभावो, न तु सार्वदिक इत्याशयेन, रसमार्गीयं न तु ज्ञानमार्गीयमितिज्ञेयम् । एवं सति ज्ञानमार्गे मुख्यं यदद्वैतज्ञानं तद्भक्तिभावैकदेशव्यभिचारिभावे-ष्वेकतरदिति सर्षपस्वर्णाचलयोरिव ज्ञानभक्त्योस्तारतम्यं कथं वर्णनीयमितिभावः ॥ १२ ॥

अथ त्रयोदशाधिकरणं—"सैव हि सत्यादय" इत्यादिसूत्रद्वयेन । प्राप्तभक्तेः पुरुषस्य शमदमा-दयो विधीयन्ते न वेतिसंशये, विधीयन्त इतिपूर्वपक्षे, तादृशस्य शमदमादयो न विधीयन्त इति सिद्धम् । तत्र हेतुः, "हि यस्माद्धेतोः, सैव भक्तिरेव सत्यादिसर्वसाधनरूपा, तस्यां सत्यां सत्यादयो ये ज्ञानमार्गे विहितत्वात् कष्टेन क्रियन्ते मुमुक्षुभिस्ते भक्तहृदि भगवत्प्रादुर्भावात्स्वत एव भवन्तीति न विधिमपेक्षन्त इत्यर्थः । अत्रैवाधिकरणे "कामादीतरत्र तत्र चायतनादिभ्य" इतिसूत्रे भक्तिवद्भगवद्विषय-ककामादीनामपि मुक्तिसाधकत्वम् । एवं गृहेषु भगवत्सेवां कुर्वतां गृहेभ्योऽपि मुक्तिर्भवति । आदिपदेन स्त्रीपुत्रपश्वादयः सङ्गृह्यन्ते । एतेन ज्ञानमार्गादुत्कर्ष उक्तो भवति । बाधकानामपि साधकत्वात् ॥ १३ ॥

अथ चतुर्दशाधिकरणं—"आदरादलोप"इत्यादिसूत्रद्वयेन । "ननु नित्यानां वर्णाश्रमधर्माणां भग-वद्धर्माणां चैककाले प्राप्तौ युगपदुभयोः करणासम्भवादन्यतरबाधे प्राप्ते कस्य बाधः स्यान्न कस्येति

स्यात् संशयः, तत्र कर्मणां स्वस्वकाले विहितानामकरणे प्रत्यवायश्रवणादितरत्र प्रत्यवायाश्रवणादन्य-
दापि भगवद्धर्मकृतिसम्भवात् सावकाशत्वेन तेषामेव याथो युक्तो न तु निरवकाशानां कर्मणामिति
पूर्वः पक्षः, तत्र सिद्धान्तमाह आदरादिति। "तावत्कर्माणि कुर्वीते"त्यादिवचनैर्वर्णाश्रमधर्मेभ्यो भग-
वद्धर्मेष्वादरश्रवणात् तयोर्युगपदुपस्थितौ बलाबलविचारे क्रियमाणे बलवत्त्वात्पूर्वं भगवद्धर्मान् कृत्वा
ततोऽवकाशं प्राप्य पश्चाद्वर्णाश्रमधर्माः कर्तव्या इति ॥ १४ ॥

अथ पञ्चदशाधिकरणं—"तन्निर्धारणानियमस्तद्दृष्टे"रित्येकेन सूत्रेण। "अथेदं विचार्यते, पुरुषो-
त्तमविदः कर्म कर्तव्यं न वेति संशये, न कर्तव्यमितिपूर्वपक्षे, यथाधिकारं कर्तव्यमेवेतिसिद्धान्तः।
तथाहि, भक्तिमार्गे मर्यादापुष्टिभेदेनास्ति द्वैविध्यम्। एवंसत्युभयविधानां मध्ये मम कर्मकरणे प्रभो-
रिच्छास्तीति यो निर्धारयति स करोति। यस्तु इच्छा नास्तीति निर्धारयति स न करोति यथा
जडादिः, एवंसतीच्छाज्ञानवता तत्सन्देहवता च कर्म कर्तव्यमितिसिद्धम्। तत्फलं तु पुष्टिमार्गी-
यस्य वेदमार्गरक्षा लोकसङ्ग्रहश्च। द्वितीयस्य तु मध्यमाधिकारात् कामसङ्गादिजनितचित्तमालिन्येन
भगवत्सान्निध्ये प्रतिबन्धः स्यात्, तन्निवृत्तिर्मर्यादामार्गीयकृतकर्मणः फलमित्यर्थः। अथवा सर्वात्म-
भाववतो भक्तस्य "न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवे"दितिवचनात् विधेयाभावाच्च कर्मज्ञानयो-
र्विहितमक्तेश्च करणं न भवतीति तस्य सर्वात्मभाववतः किं फलमित्याकाङ्क्षापूरणाय तदनुवदति
"तन्निर्द्धारणे"त्यादिना। एतादृशस्य प्रभुसङ्गमात्रमपेक्षितमिति, प्रासङ्गिकमेतत्सूत्रम् ॥ १५ ॥

अथ षोडशाधिकरणं—"प्रदानवदेव तदुक्त"मित्येकेन सूत्रेण। "सर्वात्मभावो हि विहितकर्म-
ज्ञानभक्तिसाध्यो न वेति"संशये साध्य इतिपूर्वपक्षे, न साध्य इतिसिद्धान्तः। क्वचिदुद्धवादिषु साध-
नोपदेशस्तु वरवद्यथा वरेणासाध्यमपि सिद्ध्यति ॥ १६ ॥

अथ सप्तदशाधिकरणं—"लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपी"त्यादिभिर्दशभिः सूत्रैः। प्रतिबन्धक-
कालादृष्टादिसद्भावेऽपि सर्वात्मभावरूपं वरणकार्यं स्यादुत प्रतिबन्धकनिवृत्तावेवेतिसंशये, प्रतिबन्धका-
भावस्य सर्वत्र हेतुत्वात्तन्निवृत्तावेव वरणकार्यं भवतीतिपूर्वपक्षे, सर्वतोऽधिकत्वात्तद्वरणं सर्वतः काला-
देर्बलीय इतिसिद्धान्तः। सामोपनिषत्तु नवमप्रपाठके सनत्कुमारनारदसम्वादे "यो वै भूमा तत्सुख"-
मित्यादिभूम्नः स्वरूपजिज्ञासायामाह "यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमे"ति,
एतेन सर्वात्मभावस्वरूपमेवोक्तं भवति। तत्र विरहभावेतिविगाढभावेन सर्वत्र तदेव स्फुरतीति "स एवा-
धस्तात्स उपरिष्टा"दित्याद्युक्तं, तद्वरणं विना न भवतीति वरणमेव सर्वतः कालादेर्बलीय इति ॥ १७ ॥

अथाष्टादशाधिकरणं—"व्यतिरेकस्तद्भावाभावित्वान्न तूपलब्धिव"दित्यादिभिस्त्रिभिः सूत्रैः
ननु "ब्रह्मविदाप्नोती"तिश्रुत्याक्षरब्रह्मविदः परब्रह्मप्राप्तिरुच्यते, तत्रेतरसाधनसापेक्षं ब्रह्मज्ञानं परं
प्रापयत्युत तन्निरपेक्षमितिसंशये इतरसाधननिरपेक्षमितिपूर्वपक्षे इतरसाधनसापेक्षमेवेतिसिद्धान्तः।
तथाहि, "यमेवैष वृणुते तेन लभ्य"इतिश्रुतेर्भगवद्वरणेन गुहायां यदाविर्भूतं परमं व्योम पुरुषोत्तम-
गृहात्मकं व्यापिवैकुण्ठं भवति तदा तत्र भगवानाविर्भवतीति। तथाच ज्ञानिनां गुहासु परमव्योमा-
विर्भावो न भवत्येव। अन्यथा ज्ञानिनामपि पुरुषोत्तमप्राप्तिः स्यात्। किञ्च, "ज्ञानिज्ञानविषयभक्तगुहा-
विर्भूताक्षरयोर्भेदोऽस्ति" न वेतिसंशयः, तत्रैवं निर्णयः, एकत्वेऽपि सच्चिदानन्दत्वादिना ज्ञानिनामक्षर-
विज्ञानम्, भक्तानामेव पुरुषोत्तमाधिष्ठानत्वेनेतिविज्ञेयम्। "मल्लानामशनिरि"तिश्लोकोक्तरीत्या पुरुषो-
त्तमस्यैव प्रभुणा ये यथा विचारिताः सन्ति ते तथा भवन्तीति तद्विचार एव सर्वेषामधिकाररूप इति-
निर्णयः, अस्मिन्नर्थे कैमुतिकन्यायेन निदर्शनमाह "अङ्गावबद्धास्तु न शाखासु हि प्रतिवेद"मितिसूत्रे,
"यागे तत्तदृत्विङ्नियतकर्तव्यान्यन्वाधानाद्यङ्गानि, तत्रावबद्धाः सर्वे एवर्त्विजो यजमानेन। भवबन्धनं

नाम"अध्वर्यु त्वां वृणे होतारं त्वां वृणे उद्गातारं त्वां वृणे"इत्यादिरूपं वरणमेव । अन्यथा सर्वयमं- विदुषां तत्कृतिपट्टूनामृत्विजामेकत्राधिकारो नान्यत्रेतिनियमो न स्यात् । तस्य तस्य तथा वरणे तु यजमानेच्छैव हेतुः । ते च तदा न सर्वासु शाखासु विहितान्यङ्गानि कर्तुं सर्वे शक्ताः किन्तु यजमा- नवरणनियमिता एव कुर्वन्ति । तत्र हेतुमाह, हि यतः कारणात्, प्रतिवेदं नियमितान्यङ्गानि "होत्रं ऋचा आध्वर्यवादि यजुषा औद्गात्रं साम्ने"ति । तथाचालौकिके वैदिके कर्मणि जीवेच्छा नियामिका यत्र तत्र किमु वाच्यं प्रतिलोमकूपं सावकाशममितब्रह्माण्डस्थितिमतस्तदीदितुरिच्छैव नियामिका तत्तत्साधनफलसम्पत्ताविति ॥ १८ ॥

अथैकोनविंशाधिकरणं—"भूम्नः क्रतुवज्ज्यायस्त्वं तथा हि दर्शयती"त्यादिसूत्रद्वयेन । छान्दोग्ये नवमप्रपाठके "यो वै भूमा तत्सुख"मितिश्रुतौ भूमपदेन मुक्तिर्वा सर्वात्मभावो वेतिसंशये, मोक्ष इति पूर्वपक्षे, सर्वात्मभाव एव भूमशब्देनोच्यत इतिसिद्धान्तः । सर्वात्मभावस्य दुःखहेतुत्वेऽप्यनन्यलभ्यसा- क्षात्पुरुषोत्तमानन्दप्राप्तिहेतुत्वेन सुखरूपत्वमुच्यत इत्यन्येभ्यः सर्वेभ्यो ज्यायस्त्वं मन्तव्यमित्यर्थः । अत्रोपपत्तिमाह "तथा हि दर्शयती"तिसूत्रे । सर्वात्मभावस्य लौकिकत्वमलौकिकत्वं वेतिसंशये, लौकि- कत्वमितिपूर्वपक्षे, अलौकिकत्वमितिसिद्धान्तः । सर्वात्मभावो लीलास्थभक्तेष्वेव नान्यत्र लौकिक- पुरुषे नार्या वा रसाभासो रसशास्त्रे निरूप्यते, तद्दृष्टान्तेन भगवद्भावविशिष्टभक्तरीतिभावनीये, न ऋषीणां लौकिके तात्पर्यं भवितुमर्हति ॥ १९ ॥

अथ विंशाधिकरणं—"नाना शब्दादिभेदा"दित्येकेन सूत्रेण । "अथ मत्स्याद्यवताराणां भगव- द्वतारत्वमविशिष्टमिति सर्वेषां समस्योपासना कार्येत पार्थक्येनेतिविचारयति । तत्रोपास्याभेदेऽपि रूपभेदादेकत्रोपासकस्यान्यत्रानुपासनलक्षणापचारसम्भवादस्या अन्यसिद्धिसम्भवादपि समस्यैव कार्येति- प्राप्ते सिद्धान्तमाह सर्वेष्ववतारेषु नानैवोपासना कार्या, तत्र हेतुः शब्दादिभेदादिति, तत्तत्स्वरूपवा- चकशब्दानां मन्त्राणां चादिपदादाकारकर्मणां च भेदादित्यर्थः । एतेनैव मिथो विरुद्धानामाकारकर्मणा- मेकत्र भावनस्याशक्यत्वमयुक्तत्वं चेतिभावः सूचितः ॥ २० ॥

अथैकविंशाधिकरणं—"विकल्पोविशिष्टफलत्वा"दित्यादिसूत्रद्वयेन । पार्थक्येनोपासनानि कर्त- व्यानीतिस्थिते विचार्यते, किं दर्शपूर्णमासादिवदेषां समुच्चय उत विकल्प इति, तत्र विधिफलयोः समानत्वात् समुच्चय इतिप्राप्ते निर्णयमाह उपासनानां विकल्प एव, तत्र हेतुरविशिष्टफलत्वात्, मुक्तिफलत्वं हि सर्वेषामुपासनानामविशिष्टं, एवंसत्येकेनैव मुक्तिसिद्धौ अपरस्याप्रयोजकत्वादग्नि- होत्रादिवन्नित्यतावोधकश्रुत्यभावान्मुमुक्षुर्थिनो विकल्प एव । अत्रैवाधिकरणे "काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावा"दितिसूत्रे येषु तूपासनेषु भिन्नानि भिन्नानि फलान्युच्यन्ते तत्र त्वनेक- फलार्थिनस्तत्तत्फलकोपासनानि समुच्चीयेरन्, अविशिष्टफलत्वाभावात्, यत्र त्वेकस्यैवोपासनस्य स्वकामितानेकफलत्वं श्रूयते, तत्र तथैव चेदुपासनं करोति तदा न समुच्चीयेरन्नपि, तथापि न विकल्पः, स्वकामितेषु फलेष्वेकतरस्य फलतदन्यफलवैशिष्ट्येनाविशिष्टफलत्वरूपस्य विकल्पहेतोरभावा- दिति । समुच्चयपक्षे, समुच्चयाभावपक्षे, च विकल्पाभावहेतुबोधकं पूर्वहेत्वभावादितिपदं श्लिष्टप्रयोगा- भिप्रायेणोक्तमितिज्ञेयम् । अथवा कामैस्ये नियतफलकानि तानि न समुच्चीयेरन् तत्र विकल्पाभावे हेतुः स्पष्टः । तथाच कर्ममार्गीये परोपासनेषु त्रैविध्यं, विकल्पः समुच्चयस्तदभावे तन्मात्रोपासनं चेति ॥२१॥

अथ द्वाविंशाधिकरणं—"अङ्गेषु यथाश्रयभाव" इत्यादिसूत्रद्वयेन । प्रधानेषु निर्णयमुक्त्वाङ्गेषु तमाह, उपासनाङ्गानां तदेवाश्रयस्तया च यदङ्गं यदुपासनाश्रितं तत्रैव तस्य भावः सत्त्वेत्यर्थः । अत्र

हेतुमाह शिष्टेश्चेतिसूत्रे, तदुपासनं तत्तदङ्गविशिष्टमेव वेदे शिष्यत इति तथेत्यर्थः। चकारादति-रिक्तकरणे प्रायश्चित्तोक्तिरपि बाधिकेतिसूच्यते ॥ २२ ॥

अथ त्रयोविंशाधिकरणं—"समाहारा"दित्यादिसूत्रद्वयेन। कर्ममार्गीयोपासने निर्णयमुक्त्वा ज्ञानमार्गीयोपासने तमाह, अथर्वोपनिषत्सु नृसिंहोपासनादिषु मत्स्यकूर्मादिरूपत्वेनापि स्तुतिः श्रूयते, श्रीभागवते च "नमस्ते रघुवर्याये"त्यादिरूपा प्रजनार्थे। एवंसति रूपभेदेऽपि भगवदवतारत्वस्याविशिष्टत्वादेकस्मिन् रूपे रूपान्तरसमाहारो दृश्यत इतिसर्वरूपत्वेनैकत्रोपासनमपि साध्वित्यर्थः। "गुणसाधारण्यश्रुतेश्चे"तिसूत्रे "ऐश्वर्यादिगुणानां सर्वेष्ववतारेषु साधारण्यं श्रूयते, तेन धर्मिधर्माणामैक्यात् पूर्वोक्तं साध्वित्यर्थः ॥ २३ ॥

अथ चतुर्विंशाधिकरणं—"न वा तत्सहभावाश्रुते"रित्यादिसूत्रद्वयेन। "नन्वेवं सर्वरूपत्वेनैकत्रोपासनं नित्यमुत वैकल्पिकमितिसंशय उक्तरीत्या नित्यत्वे प्राप्ते तन्निषेधमाह नेति। किन्तु, वा विकल्प एवैवमुपासने ऐच्छिकस्तत्र हेतुमाह–सहभावाश्रुतेरिति। नियमतस्तेषां रूपाणां सहभावश्रवणं चेत्स्यात् तदा स्यात्तथोपासनस्य नित्यता, न त्वेवमतो विकल्प एवेत्यर्थः। "दर्शनाच्च," 'योऽपि रूपान्तरसमाहारपूर्वकमुपास्ते सोऽप्येकं रूपमुपास्यत्वेन मत्वा तत्तथोपास्त इति फलं तस्यैकस्यैव रूपस्य दर्शनं, न तु सर्वेषामितोऽपि हेतोर्विकल्प एवेत्यर्थः। एतदृष्टान्तेन यस्मिन् रूपे यादृग्धर्मवत्त्वं श्रूयते तादृग्धर्मविशिष्टमेवैकं रूपमुपास्यमितिन्यासद्वयमितिज्ञायते, उपासनानिर्णयान्ते दर्शनात्मकहेतूक्त्या सर्वोपासनानां भगवत्साक्षात्कारः फलमिति ध्वन्यते माहात्म्यज्ञापनार्थम्। एवं सर्वावताररूपत्वं यथार्थमेव कैश्चिज्ज्ञाप्यते यथार्थत्वात्तदप्यविरोधीति ज्ञेयम् ॥ २४ ॥

॥ इति तृतीयाध्यायस्य तृतीयः पादः ॥

अथ चतुर्थपादे—

प्रथमाधिकरणं—"पुरुषार्थोऽतःशब्दादिति बादरायण" इत्यादिचतुर्विंशतिसूत्रैः। उपासनाभेदेऽप्युपास्याभेदाच्छाखान्तरोक्तगुणानामप्युपसंहारः कर्तुमुचित इतिपूर्वपादे निरूपितमिति तन्न्यायेनोत्तरकाण्डप्रतिपाद्यब्रह्मफलकसर्वात्मभावेऽपि पूर्वकाण्डप्रतिपादितकर्मणामुपसंहारः प्राप्नोति न वेतिसंशये, प्राप्नोतीतिपूर्वपक्षे, सर्वात्मभावस्यैव फलसाधकत्वमितिसिद्धान्तः। अग्रे ज्ञानस्य कर्मशेषत्वमाशङ्क्य परिहृतं बहुविस्तरेणो"पमर्दं च"तिसूत्रे। द्वैतभाने हि यथाकथञ्चित्कर्मस्फूर्तिसम्भावनापि, यस्य त्वखण्डब्रह्माद्वैतभानं ब्रह्मत्वेव न त्विदं ब्रह्मेति सखण्डम्। अत्रेदंरूपत्वेन प्रपञ्चस्यापि भानात्सखण्डत्वम्। तथाचाखण्डतज्ज्ञाने कर्मतदधिकारादेरुपमर्दं चैके शाखिनः पठन्तीति न ब्रह्मज्ञानस्य कर्मशेषत्वसम्भावनापीत्यर्थः ॥ १ ॥

अथ द्वितीयाधिकरणं—"सर्वापेक्षा च यज्ञादिश्रुतेरश्ववदि"त्यादिभिः षड्भिः सूत्रैः। उक्तन्यायेन ज्ञानं प्रति कर्मणः फलोपकारित्वाभावेऽपि स्वरूपोपकारित्वमस्ति न वेतिसंशये, नास्तीतिपूर्वपक्षे, अस्तीतिसिद्धान्तः। अत्रैवाधिकरणे "सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शना"दितिसूत्रे "चाक्रायणः किलापद्रापद्गत इभ्येन सामिखादितान् कल्माषांश्चखादे"तिछान्दोग्यश्रुतेरापद्गतस्यैव सर्वान्नभक्षणानुमतिः, "अनापदि तु ज्ञानिनोऽपि विहितत्यागोऽविहितकरणं च चित्तमालिन्यजननेन ज्ञानतिरोधायकमितिश्रुत्यभिमतमिति ज्ञाप्यते। एवा ज्ञानमार्गीयज्ञानवतो व्यवस्थेतिज्ञेयम्। भक्तिमार्गीयस्यैवमापद्सम्भवात्, "अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहमि"तिभगवद्वाक्यात् ॥ २ ॥

अथ तृतीयाधिकरणं—"विहितत्वाच्चाश्रमकर्मापी"त्याद्यष्टभिः सूत्रैः। आत्मज्ञानस्याश्रमकर्म कर्तव्यं न वेतिसंशये, न कर्तव्यमितिपूर्वपक्षे, कर्तव्यमेवेतिसिद्धान्तः। अत्रैव "सर्वथापि त एवोभयलिङ्गा"दितिसूत्रे भगवद्धर्माणामात्मधर्मत्वेनान्तरङ्गत्वादाश्रमधर्माणां बहिरङ्गत्वात् तदविरोधेनैव कर्तव्यमितिस्थितम्। अत्रैवाग्रे "अन्तरा चापि तु तद्दृष्टे"रितिसूत्रे भगवद्धर्मेभ्य आश्रमधर्मा हीना इत्यप्यल्पमुच्यतेऽपि तु तस्मिन् पुरुषोत्तमे इष्टिर्येस्य पुंसस्तस्याश्रमधर्मा अन्तरा च फलसिद्धावन्तरायरूपाश्चेति "किं प्रजया करिष्याम" इत्यादिश्रुतिभिः। प्रजाया अभीष्टत्वेऽपि तदुत्पादनव्यासङ्गेन भगवद्भानन्दानुभवेऽन्तरायो भविष्यतीतिदृष्ट्या तत्रोपेक्षां दर्शयति "अतस्त्वितरज्ज्यायो लिङ्गाच्चे"तिसूत्रे। मुक्तानां तु आत्मस्वरूपमात्रम्। भक्तानां तु भजनानन्दोपयोग्यलौकिकदेहादिकमपि। अतो मोक्षादपि भगवदीयत्वमेव श्रेष्ठमिति ॥ ३ ॥

अथ चतुर्थाधिकरणं—"तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमातद्रूपाभावेभ्य" इत्येकेन सूत्रेण। तदीयानामपि कदाचित् सायुज्यमुक्तिरस्ति न वेतिसंशये, अस्तीतिपूर्वपक्षे, नास्तीतिसिद्धान्तः। पञ्चमस्कन्धे "भगवदीयत्वेनैव परिसमाप्तसर्वार्थो" इतिवचनात् ॥ ४ ॥

अथ पञ्चमाधिकरणं—"नचाधिकारिकमपि पतनानुमानात्तदयोगा"दित्यादिसूत्रद्वयेन। पुष्टिमार्गीयेभ्यो ध्रुवायेव ब्रह्मादिलोकाधिकारं दत्वा तत्सम्बन्धिफलं ददाति न वेति संशये, ददातीतिपूर्वपक्षे, न ददातीतिसिद्धान्तः ॥ ५ ॥

अथ षष्ठाधिकरणं—"बहिस्तूभयथापि स्मृतेराचाराच्चे"त्यादिसूत्रचतुष्टयेन। प्रचुरभगवद्भावमाप्नवतः साक्षात्स्वरूपभोगवतो वा भक्तस्य गृहत्यागः कर्तव्यो न वेतिसंशये, फलस्य सिद्धत्वान्न कर्तव्य इतिपूर्वपक्षे, "त्वं तु सर्वं परित्यज्य स्नेहं स्वजनबन्धुषु, मय्यावेश्य मनः सम्यक् समदृग्विचरस्व गा"मितिभगवद्वाक्यरूपस्मृतेरुद्धवस्य तथाचाराच्च गृहत्याग आवश्यक इतिसिद्धान्तः। गृहस्य प्रभुरसास्वादे प्रतिबन्धकत्वेन त्यागस्य विप्रयोगरसानुभावकत्वेन च स कर्तव्यः ॥ ६ ॥

अथ सप्तमाधिकरणं—"सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिव"दित्येकेन सूत्रेण। ननु "यमेवै"तिश्रुतिः, साधनान्तरनिषेधपूर्वकं वरणस्यैव साधनत्वमाह, "तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षु"रित्यादिश्रुतिः साधनान्तरमप्याह, एवंविरोधे श्रुतित्वाविशेषात् किमादरणीयं किं नेतिसंशये, साधनान्तरविधिरेवादरणीयोऽन्यथा शास्त्रवैयर्थ्यं स्यादितिप्राप्ते उच्यते, मर्यादापुष्टिभेदेन वरणं द्विधोच्यते, तत्र सहकार्यन्तरविधिस्तु मर्यादापक्षेणोच्यते, पुष्टौ तु नान्यापेक्षेति न विरोधगन्धोऽपि ॥ ७ ॥

अथाष्टमाधिकरणं—"कृत्स्नभावात्तु गृहिणोपसंहार" इत्यादिसूत्रचतुष्टयेन। तादृग्भाववतैव त्यागः कार्यस्तद्रहितेन तु गृह एवोक्तरीत्या भजनं कार्यं, तेनैव तल्लाभ इतिव्यासहृदयमितिज्ञायते, उक्तभावाभावे त्यागधर्मानिर्वाहादिति। केचन भक्ता आपणादिलीलादर्शनं विना स्थातुमशक्ताः प्रचुरभावविवशाशया गृहांस्त्यक्त्वा वने गच्छन्ति। "अनाविष्कुर्वन्नन्वया"दित्यत्र भगवद्भावस्य रसात्मकत्वेन गुप्तस्यैवाभिवृद्धिस्वभावकत्वादाश्रमधर्मैरेव लोके स्वं भगवद्भावमनाविष्कुर्वन् भजेतेत्येतदाशयेन ते धर्मा उक्ताः। यावदन्तःकरणे प्रभोः साक्षात्प्राकट्यं नास्ति तावदेव बहिराविष्करणं भवति प्राकट्ये तु तथा न सम्भवतीतिज्ञापितम् ॥ ८ ॥

अथ नवमाधिकरणं—"एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृते" रित्येकेन सूत्रेण। उक्तगृहस्थस्य पुरुषोत्तमलीलारसानुभवात्मकं फलं नियमेन भवति न वेतिसंशये, अत्यनुग्रहेण पुष्टौ प्रवेशने सति कस्यचिदेव भवतीतिसिद्धान्तः। तत्फलस्य भगवदिच्छाधीनत्वात्, साधनाप्राप्यत्वात्,

"मुक्तानामपि सिद्धानां नारायणपरायणः सुदुर्लभः प्रशान्तात्मा कोटिष्वपि महामुने"रितिस्मृतेर्मुक्तेः फलं भक्तिरसानुभव एवेति ॥ ९ ॥

॥ इति तृतीयोऽध्यायः ॥

अथ चतुर्थाध्यायस्य प्रथमपादे—

प्रथमाधिकरणं—"आवृत्तिरसकृदुपदेशा"दित्यादिसूत्रद्वयेन। "आत्मा वा अरे द्रष्टव्यः श्रोतव्य" इत्यादिवाक्यैर्विहितं श्रवणादिकं किं सकृदेव कर्तव्यमुतासकृदिति संशये सकृदेवेतिपूर्वपक्षे श्रवणादीनामावृत्तिः कर्तव्येतिसिद्धान्तः ॥ १ ॥

अथ द्वितीयाधिकरणं—"आत्मेति तूपगच्छन्ति ग्राहयन्ति चे"त्यादिसूत्रत्रयेण । ज्ञानिनो हि भगवन्तमात्मत्वेनैवोपासते, एवंसति प्रारब्धसमाप्तौ देहापगमे तत्रैव प्रविष्टा भवन्ति । तत्रेदं चिन्त्यते, "न स पुनरावर्तत"इतिश्रुतिर्ज्ञानिनां सर्वथानावृत्तिमाहोत सावधिकीं तामभरशब्देन मरणनिवृत्तिमिवेतिसंशये, सावधिकीमेवेतिपूर्वपक्षे, सर्वथानावृत्तिमाहेतिसिद्धान्तः । ननु "यतो वाचो निवर्तन्ते" "अग्राह्यो न हि गृह्यते"इत्यादिश्रुतिभ्यो ब्रह्मज्ञानासम्भवात् मुक्तिरेव न सम्भवतीतिचेन्मैवं, सर्वधर्माश्रयत्वेऽपि यदा यं धर्मं पुरस्कृत्य लीलां करोति तत्कार्यमेव तदा सम्पद्यते, हितकारिस्वभावात्तस्य, "अग्राह्यत्वग्राह्यत्वविरोधापहारस्तु जीवसामर्थ्येश्वरेच्छाभ्यां पूर्वं कृत इति नाधिकमत्र निरूपणीयम् । नन्वात्मत्वेनोक्तिरुपासनार्थेति नोक्तं साधीय इत्यत उत्तरं पठति, "न प्रतीकेन हि स" इतिसूत्रे, अतद्रूपे तत्त्वेनोपासनं हि प्रतीकमित्युच्यते। तथा च तादृशेन तेन मोक्षो न भवतीत्यर्थः । श्रुतिसिद्धत्वान्नास्ति मोक्ष इति न वक्तुं शक्यमितिभावः । तथा च भगवति आत्मत्वेनोपासनं, न प्रतीकोपासनं, तस्य सर्वात्मकत्वात्, किन्तु आत्मरूपे भगवति अनात्मत्वं ज्ञात्वा यदुपासनं तदेव प्रतीकोपासनं, तादृशोपासनेन मोक्षो न भवतीतिभावः ॥ २ ॥

अथ तृतीयाधिकरणं—"आदित्यादिमतयश्चाङ्ग उपपत्ते"रित्यादिभिः पञ्चभिः सूत्रैः । छान्दोग्ये "सत्ययज्ञं पौलुषि"मित्यादौ आदित्यवायुप्रभृतय आत्मत्वेनोपासनाविषया उक्ताः। अत्रेदं चिन्त्यते, अत्र प्रतीकोपासनत्वमस्ति न वेति, आदित्यादीनां पृथक्पृथगुपासनोक्त्या ब्रह्मत्वासम्भवात् प्रतीकोपासनत्वमस्तीतिपूर्वपक्षे, आदित्यादीनां भगवदङ्गत्वात् "सर्वं खल्विदं ब्रह्मे"तिश्रुतेः प्रतीकोपासनत्वं नास्तीतिसिद्धान्तः । "ध्यानाच्चे"तिसूत्रे भावनोत्कट्यदशायां व्यभिचारिभावात्मकस्ततस्फूर्तिरूपध्यानादपि हृदि प्रकटः, सन्नासीनो भवतीत्यर्थः । तेन स्थैर्यमुक्तं भवति । एवं भक्तेच्छयैव स्वरूपप्राकट्यमित्युक्त्वा लीलानाविष्करणमाविष्करणं चापि तदिच्छयैवेत्याह "अचलत्वं चापेक्ष्ये"त्यत्र, भक्तेच्छामपेक्ष्याचलत्वं चकाराच्चलत्वमपीत्यर्थः ॥ ३ ॥

अथ चतुर्थाधिकरणं—"यत्रैकाग्रता तत्राविशेषा"दित्येकेन सूत्रेण । अत्रेदं विचार्यते, यद्धिराविर्भावो येभ्यो भक्तेभ्यो येभ्यश्चान्तस्तेषां तेषां च मिथस्तारतम्यमस्ति न वेतिसंशये, भावभेदादस्तीतिपूर्वपक्षे, भगवत्स्वरूपे विशेषाभावाच्च तारतम्यमस्तीतिसिद्धान्तः ॥ ४ ॥

अथ पञ्चमाधिकरणं—"आप्रायणात्तत्रापि हि दृष्ट"मित्येकेन सूत्रेण । "उक्तेऽर्थे एवायं संशयः, अन्तःप्राकट्यवतो भक्तस्य यदा बहिः सम्वेदने सत्यपि पूर्वानुभूतभगवत्स्वरूपानुभवस्तदा पूर्वमन्तरमन्वभूवमधुना बहिरनुभवामीत्यनुव्यवसायो भवति न वेतिसंशये, वैलक्षण्यान्नवितुमर्हतीतिपूर्वपक्षे, एकैव सैवावस्था सार्वदिकी, न तु बहिःप्राकट्येऽपि बहिष्ट्वानुसन्धानमितिसिद्धान्तः । ततस्तस्य

तत्र सायुज्यं भवति न वेतिसंशये, प्रभुणा सममालापश्रीचरणनलिनस्पर्शादिकं दृष्टमेव फलं न त्वदृष्टं सायुज्यमितिनिर्णयः ॥ ५ ॥

अथ षष्ठाधिकरणं—"तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशा"दित्यादिभिश्चतुर्भिः सूत्रैः। मर्यादामार्गीयस्य ज्ञानिभक्तस्य ज्ञानोदयानन्तरं कर्मसापेक्षा मुक्तिर्वा ज्ञानादेवेतिसंशये, कर्मसापेक्षेतिपूर्वपक्षे, ज्ञानेनैव मुक्तिरिति सिद्धान्तः। "अनारब्धकार्ये एव तु पूर्वे तदवधेरि"तिसूत्रे ज्ञानेन प्रारब्धेतरकर्मनाशो न तु प्रारब्धस्य, तस्य भोगादेव नाशः, तत्र भगवदिच्छैव हेतुः, यत्र प्रारब्धस्यापि दहनेच्छा तत्र तथैवेतिनिगूढाशयः। एवंसति मणिमन्त्रादिप्रतिबद्धशक्तेरग्नेरिव ज्ञानस्याप्यदाहकत्वे न काचिद्धानिरिति सर्वमनवद्यम्। तथेच्छा च स्वकृतमर्यादापालनाय, पुष्ट्यङ्गीकृते तु न तथेति। अग्निहोत्रादि तु तत्कार्यायैव "तद्दर्शना"दितिसूत्रे ब्रह्मविदां कर्मकरणं तु अग्निहोत्रादिकारकप्रारब्धनाशायैवेति ॥ ६ ॥

अथ सप्तमाधिकरणं—"अतोऽन्यापि ह्येकेषामुभयो"रित्यादिसूत्रत्रयेण। पुष्टिमार्गीयस्य विनैव भोगं प्रारब्धं नश्यति न वेतिसंशये, न नश्यतीतिपूर्वपक्षे, नश्यत्येवेतिसिद्धान्तः। "भोगेन त्वितरे क्षपयित्वाऽथ सम्पद्यत"इतिसूत्रे, इतरे अग्रे प्राप्यालौकिकदेहाद्भिन्ने स्थूललिङ्गशरीरे क्षपयित्वा दूरीकृत्य अथ भगवल्लीलोपयोगिदेहप्राप्त्यनन्तरं भोगेन सम्पद्यते इत्यर्थः ॥ ७ ॥

॥ इति चतुर्थाध्यायस्य प्रथमः पादः ॥

अथ द्वितीयपादे—

प्रथमाधिकरणं—"वाङ्मनसि दर्शनाच्छब्दाच्चे"त्यादिभिश्चतुर्भिः सूत्रैः। "पूर्वपादे लौकिकशरीरे क्षपयित्वाऽलौकिकं तत्प्राप्य फलेन सम्पद्यत इति निरूपितम्। अथात्रेदं चिन्त्यते, भक्तस्य सूक्ष्मशरीरस्य क्षपणं नाम किं तत्स्वरूपनाशनमुत मणिस्पर्शादयसश्चामीकरत्वमिव तस्यैवालौकिकत्वसम्पादनं भगवदनुग्रहादितिसंशये, तस्यैव शरीरस्यालौकिकत्वसम्पादनपक्ष एव साधीयानितिपूर्वपक्षे, प्राचीनदेहप्राणादेः साक्षात्पुरुषोत्तमसम्बन्धायोग्यत्वात्ते भगवत्येव लीना भवन्ति। तदनन्तरं पुरुषोत्तमात्मकतल्लीलोपयोगिदेहेन्द्रियादिसम्पत्त्या पुरुषोत्तमस्वरूपं प्राप्नोतीतिनिर्णय इति। तत्र प्राणानां लय एकदैवोत क्रमनियमोऽस्तीतिसंशये एकदैवेतिपूर्वपक्षे, वाङ्मनसि सङ्गता सती भगवदानन्देन सम्पद्यते, ततः पश्चात्सर्वाणीन्द्रियाणि मनसि सङ्गतानि भगवदानन्देन सम्पद्यन्ते, ततः सर्वेन्द्रियविशिष्टं मनः प्राणे सम्पद्यते, ततश्च सर्वेन्द्रियविशिष्टमनोविशिष्टः प्राणो भगवति सम्पद्यत इति सिद्धान्तः ॥ १ ॥

अथ द्वितीयाधिकरणं—"भूतेषु तच्छ्रुते"रित्यादिसूत्रद्वयेन। ननु मर्यादामार्गीयाणामप्येवमेव वागादिलय उतान्यथेतिसंशये निर्णयमाह, तेषां वागादयो भूतेषु लीयन्ते न तु भगवति। ननु वागादेरेतोन्तलयेन प्रारब्धस्यापि नाशात् शुद्धं जीवं विष्यविषयं कदाचित् पुष्टौ प्रवेशयति न वेतिसंशये, मर्यादामार्गे एव स्थितत्वात् मुक्त एवं भवति न तु पुष्टौ प्रविशतीतिनिर्णयः। ननु मर्यादामार्गीयो भक्तो ज्ञानी च भवतः, उक्तनिर्णयस्तु ज्ञानमार्गीयविषय एव, भक्तं तु तादृशमपि कदाचित् पुष्टौ प्रवेशयतीत्याशङ्क्य तन्निर्णयमाह "नैकस्मिन् दर्शयतो ही"तिसूत्रे, "एकस्मिन् ज्ञानिनि भक्ते वा मर्यादानियमो न, किन्तूभयोरपि ॥ २ ॥

अथ तृतीयाधिकरणं—"समाना चासृत्युपक्रमादमृतत्वं चानुपोष्ये"त्यादिभिर्नवभिः सूत्रैः। साधनक्रमेण मोचनेच्छा हि मर्यादामार्गीया मर्यादा, विहितसाधनं विनैव मोचनेच्छायां मर्यादामार्गीयाया मुक्तेः संसार इत्येव व्यपदेशो भजनानन्दानुभवाभावात्। तर्हि ब्रह्मविदामिव तादृशानां भक्ता-

नामपि स्वमार्गोपदेशनं क्वचित् श्रूयेत, नचैवं, अतः पूर्वोक्तं न साधीय इति भातीत्युत्सन्नमाशङ्क्य तत्र
हेतुमाह "नोपमर्देनात"इतिसूत्रे। ज्ञानिनामिव भक्तानां स्वास्थ्याभावान्नोपदेशः सम्भवति, यतस्तेषां
विरहदशा प्रियसङ्गमदशा चेति दशाद्वयमेव, पूर्वस्यास्तस्यास्तु अतिदुःसहत्वेन सर्वेषां भावानामुप-
मर्देन तिरोधानेन उपदेशो न सम्भवतीत्यर्थः। सङ्गमे तु पुरःप्रकटपरमानन्दाद्भगवत एवोपदेशो न
सम्भवति। न हि भगवदग्रे उपदेशः सम्भवतीतिभावः। "अस्यैव चोपपत्तेरूष्मे"तिसूत्रे आनन्दा-
त्मकरसात्मकस्यास्यैव ऊष्मा विरहताप इत्यर्थः। "स्पष्टो ह्येकेषा"मितिसूत्रे "को ह्येवान्यात् कः
प्राण्यात् यदेष आकाश आनन्दो न स्यादि"तिश्रुतौ नीलाम्बुदश्यामोऽतिक्लेशवशाद् हृदयादपगच्छ-
त्वितिभावेऽपि हृदयान्नापसारयितुं शक्यत इतिज्ञापनाय चाकाशत्वमुक्तम् ॥ ३ ॥
अथ चतुर्थाधिकरणं—"अविभागो वचना"दित्येकेन सूत्रेण। "ननु लीलाया नित्यत्वेन तन्मध्य-
पातिनां तद्दर्शनं यथा नित्यं तथा तादृक्साधनाभावेऽपि निजानुकम्पया कदाचित् कमपि भक्तं तत्र नयति
चेत्, तदा कञ्चित्कालं स्थापयित्वा ततस्तं वियोजयति न वेतिसंशये, तोषस्य कादाचित्कत्वात्तत्साध्या
स्थितिरपि तथैवेति वियोजयतीतिपूर्वपक्षे, "तद्विष्णोः परमं पदं सदा पश्यन्ति सूरय"इत्यादिवचनान्नैव
वियोजयतीतिसिद्धान्तः। एतेनापि लीलानित्यत्वं सिद्ध्यति। एतद्यथा तथा विद्वन्मण्डने प्रपञ्चितम् ॥४॥
अथ पञ्चमाधिकरणं—"तदोकोग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृति-
योगाच्च हार्दानुगृहीतः शताधिकये"त्येकेन सूत्रेण। पूर्वं मर्यादामार्गीयस्य वागादिलय उक्तोऽधुना
तस्य जीवात्मन उत्क्रमणप्रकार उच्यते। ज्ञानमार्गीयजीवस्य उत्क्रमणप्रकारो लोकसाधारणो विलक्षणो
वेतिसंशये, लोकसाधारण इतिपूर्वपक्षे, विलक्षण इति सिद्धान्तः। तथाहि "शतं चैका च पुरुषस्य
नाड्य"इत्यादिछान्दोग्योक्तप्रकारेण नाडीशतद्वारा उत्क्रमणमन्येषां विदुषां तु शताधिकतया नाड्येति-
भेदः ॥ ५ ॥
अथ षष्ठाधिकरणं—"रश्म्यनुसारी"त्यादिसूत्रचतुष्टयेन। "अथास्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मि-
भिरूर्ध्वमाक्रमत"इतिश्रुत्युक्तप्रकारेण जीवस्य शरीरादुत्क्रमणकाले यदादित्यरश्म्यनुसारित्वं विद्वदविद्वत्सा-
धारणं वा विदुष एवेतिसंशये, सर्वसाधारणमितिपूर्वपक्षे, विद्वानेव रश्म्यनुसारी निष्क्रामतीतिसिद्धम्।
अत्रादित्यशब्देनादित्यांशभूतं तेजोरूपं पित्तं शरीरस्थं बोध्यम्। तस्य नाडीरूपरश्मिभिर्विदुष एव
निष्क्रमणं नान्यस्येति सिद्धान्तः। "योगिनः प्रति स्मर्यते स्मार्ते चै"तिसूत्रे ज्ञानमार्गाद्योगमार्गो भिन्नः,
तथा च योगिनमुद्दिश्यैव कालविशेषस्य गतिविशेषहेतुत्वं स्मर्यते, न तु ज्ञानमार्गीयश्रौतस्य, इतरनिर-
पेक्षत्वादिति ॥ ६ ॥

॥ इति चतुर्थाध्याये द्वितीयः पादः ॥

अथ तृतीयपादे—
प्रथमाधिकरणं—"आर्चिरादिना तत्प्रथितेरि"त्यादिसूत्रचतुष्टयेन। ननु ज्ञानमार्गीयस्येव मर्या-
दामार्गीयभक्तस्यापि अर्चिरादिमार्गेणैव गमनमुत सद्योमुक्तिरेव भवतीतिसंशये, यथा ज्ञानिनो
नियमाभावस्तथात्रापीतिपूर्वपक्षे, ज्ञानी एव तेन मार्गेण गच्छति न तु भक्तोऽपीतिसिद्धान्तः ॥ १ ॥
अथ द्वितीयाधिकरणं—"आतिवाहिकास्तल्लिङ्गा"दित्यादिसूत्रत्रयेण। छान्दोग्ये "विद्युदनन्तरं तत्पु-
रुषोऽमानवः स एतान् ब्रह्म गमयती"तिपठ्यते। क्वचिद् विद्युल्लोकानन्तरं वरुणादिलोकगमनं श्रूयते।
तत्र संशयः, उक्तश्रुतेर्गमयित्रैव ब्रह्मप्राप्तिरितिनिश्चीयते, स च विद्युल्लोकानन्तरमेव पठ्यते, एवंसति
यस्य वरुणादिलोकागमनं तस्य वचनाभावेन गमयितृप्राप्त्यभावाद् ब्रह्मप्राप्तिर्भवति न वेति, वचना-

भावेन सा न भवतीति पूर्वपक्षे, तत्राप्यातिवाहिको भगवदीय एव ब्रह्म प्रापयतीतिसिद्धान्तः। अतिवहनं अतिवाहस्तत्सम्बन्धी आतिवाहिकः, अतिक्रम्य प्रापयिता, ते बहव आतिवाहिका भगवत्सेवकाः सन्तीति बहुवचनम्। "वैद्युतेनैव ततस्तच्छ्रुते"रितिसूत्रे वाजसनेयके "ब्रह्मलोकान् गमयती"तिपठ्यते, छान्दोग्ये तु "ब्रह्मेति", तत्रायंभावः, भक्तं तु वैकुण्ठलोकं नयति ते बहुविधा इति ब्रह्मलोकानित्युक्तं, ज्ञानमार्गीयं तु अक्षरं ब्रह्म प्रापयतीति ब्रह्मेत्युक्तम्॥ २ ॥

अथ तृतीयाधिकरणं—"कार्यं बादरिरस्य गत्युपपत्ते"रित्यादिभिरष्टभिः सूत्रैः। "स एतान् ब्रह्म गमयती"त्यत्र ब्रह्मपदेनाविकृतं परब्रह्मोच्यते उत कार्यरूपो ब्रह्मलोक इतिसंशये, कार्यरूप इतिपूर्वपक्षे, ब्रह्मपदेन परमेव ब्रह्मोच्यत इतिसिद्धान्तः। "दर्शनाच्चे"त्यत्र ब्रह्मणि विशेषाणामौपाधिकत्वं जीवस्य पुरुषोत्तमाभेदश्च पुरस्तादेव निरस्त इत्युक्तम्॥ ३ ॥

अथ चतुर्थाधिकरणं—"अप्रतीकालम्बनान्नयतीति बादरायण उभयथा दोषात्तत्क्रतुश्चे"त्येकेन सूत्रेण। अर्चिरादिलोकप्राप्तिर्हि उपासनाफलम्। एवंसति अमानवः पुरुषस्तान् सर्वानेव ब्रह्म प्रापयत्युत कांश्चिदेवेतिसंशये, सर्वानेवेतिपूर्वपक्षे, कांश्चिदेवेतिसिद्धान्तः। उपास्येषु रूपेषु अब्रह्मत्वं ज्ञात्वा ये उपासते ते प्रतीकालम्बना इत्युच्यन्ते, तेषां न ब्रह्मप्राप्तिः, किन्तु शुद्धब्रह्मत्वं ज्ञात्वा ये उपासते तेषामेव ब्रह्मप्राप्तिरिति बादरायण आचार्यो मन्यते। भक्तस्य तु अमानवपुमपेक्षाभावात्स्वयमेव ब्रह्मलोकान् प्राप्नोति। ननु क्वचिद्विभूतिरूपेषु उत्तरोत्तरमाधिक्यमुच्यते, अतो न ब्रह्मत्वं सर्वेषामुपास्यानां वक्तुं शक्यमितिचेत्, मैवं, विभूतिरूपाणां नियतफलदातृत्वाद्येन रूपेणाल्पफलदानं तत्राधिकगुणप्राकट्ये प्रयोजनाभावात्तावन्मात्रगुणप्रकटनं, येन रूपेण ततोऽधिकफलदानं तत्र ततोऽधिकगुणप्रकटनमिति पूर्वस्मादाधिक्यमुच्यते, एवमेव सर्वत्र। नियतफलदानं तु स्वतन्त्रेच्छत्वाल्लीलारूपमिति नानुपपन्नं किञ्चित्। प्रतिमादिष्वावाहने सन्निहिते विभूतिरूपे तद्भावनं पूजामार्गे। भक्तिमार्गे तु भक्त्या तत्र प्राकट्ये तथा, गुरौ तु "शाब्दे परे च निष्णातं ब्रह्मणी"तिविशेषणवत्त्वेन भगवदावेशात्तत्र तद्भावनमिति सर्वमवदातम्॥ ४ ॥

अथ पञ्चमाधिकरणं—"विशेषं च दर्शयती"त्येकेन सूत्रेण। अत्रेदं चिन्त्यते, ज्ञानमार्गीयाणां भक्तिमार्गीयाणां चाविशेषेणैव परप्राप्तिरुत कश्चिद्विशेषोऽस्तीति संशये, नास्ति विशेष इतिपूर्वपक्षे, अस्ति विशेष इतिसिद्धान्तः। तैत्तिरीयके पठ्यते "ब्रह्मविदाप्नोति परं तदेषाभ्युक्ता सत्यं ज्ञानमनन्तं ब्रह्म यो वेद निहितं गुहायां परमे व्योमन् सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिते"ति। तत्पूर्वोक्तं प्रतिपाद्यत्वेनाभिमुखीकृत्यैषर्गुक्ता तदनुभवकर्त्रीमितिविशेषः, ब्रह्मविदक्षरब्रह्मविदाप्नोति सान्निध्यादक्षरमेवाप्नोति, एतावानर्थो यो वेदेत्यन्तयर्चोक्तः। अथ परमाप्नोतीत्यस्यार्थ उच्यते निहितमित्यादिना। अत एव मध्ये क्रियापदमुभयसम्बन्धित्वज्ञापकमुक्तम्। तत्प्राप्तिश्च, मर्यादापुष्टिभेदेन द्वेधा। तत्रादौ मर्यादायामुच्यते। इहायमाशयः, "नायमात्मा प्रवचनेने"तिश्रुत्या भगवद्वरणातिरिक्तसाधननिरासः क्रियते पुरुषोत्तमप्राप्तौ। एवंसत्यक्षरब्रह्मज्ञानस्य तत्साधनत्वे उच्यमाने तद्विरोधः स्यात्तेनैवमर्थो निरूप्यते। ज्ञानमार्गीयाणामक्षरज्ञानेनाक्षरप्राप्तिस्तेषां तदेकपर्यवसायित्वात्। भक्तानामेव पुरुषोत्तमपर्यवसायित्वात्। तथा च ब्रह्मविदं चेद्भगवान् वृणुते तदा भक्तिस्तेति, तत्प्रचुरभावे सति स्वयं तद्धृदि प्रकटीभविष्णुः स्वस्थानभूतं व्यापिवैकुण्ठं तद्गुहायां हृदयाकाशे प्रकटीकरोति तत्परमव्योमशब्देनोच्यते। तथा च गुहायां परमे व्योम्नि निहितं यो वेद स परमाप्नोतीत्यर्थः सम्पद्यते। अथ शुद्धपुष्टिमार्गेऽङ्गीकृतस्य व्यवस्थामाह "सोऽश्नुते"इत्यादिना। अत्रायमभिसन्धिः, यथा स्वयं प्रकटीभूय लोके लीलां करोति

तथाप्यनुग्रहवशात् स्वान्तःस्थितमपि भक्तं प्रकटीकृत्य तत्स्नेहातिशयेन तद्वशः सन् स्वलीलारसानुभवं कारयतीति स भक्तो ब्रह्मणा परब्रह्मणा पुरुषोत्तमेन सह सर्वान् कामानश्नुत इति, चकारादुक्ता श्रुतिः स्मृतयश्च सङ्गृह्यन्ते। एवंसति ज्ञानमार्गीयाणामक्षरप्राप्तिरेव भक्तानामेव। पुरुषोत्तमप्राप्तिरितिसिद्धम् ॥५॥

॥ इति चतुर्थाध्यायस्य तृतीयः पादः ॥

अथ चतुर्थपादे—

प्रथमाधिकरणं—"सम्पद्याविर्भावः स्वेने"त्यादिचतुर्भिः सूत्रैः। "ब्रह्मविदाप्नोतिपर"मित्युपक्रम्य "सह ब्रह्मणा विपश्चिते"ति तैत्तिरीयके पठ्यते। तत्रेदं सन्दिह्यते, किमन्तःस्थित एव अश्नुते उत पुनर्जन्म प्राप्येति, अन्तःस्थित एवेतिपूर्वपक्षे, प्रभोरत्यनुग्रहवशात् स्वरूपात्मकभजनानन्ददित्सायां तत्कृत आविर्भावो मुक्तानामपि भवत्येवेतिसिद्धान्तः ॥ १ ॥

अथ द्वितीयाधिकरणं—"ब्राह्मेण जैमिनिरुपन्यासादिभ्य" इत्यादिसूत्राष्टकेन। आविर्भूतो जीवः प्राकृतेन शरीरेण भजनानन्दं भुङ्क्ते उताप्राकृतेनेतिसंशये, प्राकृतेनेतिपूर्वपक्षे, अप्राकृतेनैवेतिसिद्धान्तः। सत्यज्ञानानन्दात्मकेन शरीरेण भगवतैव सम्पादितेन पूर्वोक्तानश्नुत इतिजैमिनिराचार्यो मन्यते। अक्षरब्रह्मणः पुरुषोत्तमायतनरूपत्वात्तदात्मकमेव तस्य शरीरं वक्तुमुचितं, न तु प्राकृतं, "चिति तन्मात्रेण तदात्मकत्वादित्यौडुलोमि"रितिसूत्रे चिन्मात्रेण रूपेण कामान् भुङ्क्ते न तु विग्रहेणेति औडुलोमिराचार्यो मनुते। "एवमप्युपन्यासात् पूर्वभावादविरोधं बादरायण" इतिसूत्रे परमाचार्यो बादरायणस्तु नैवं मनुते, किन्तु ब्रह्मसम्बन्धयोग्यानि शरीराणि नित्यानि सन्त्येव, यथाऽनुग्रहो यस्मिन् जीवे तादृशं तदाविश्य भगवदानन्दमश्नुते इति ॥ २ ॥

अथ तृतीयाधिकरणं—"तन्वभावे सन्ध्यवदुपपत्ते"रित्यादिसूत्रद्वयेन। अत्र भगवच्छरीरे अप्राकृतत्वं निर्णीतं, स्वप्ने यथा वासनावशादविद्यमानानामप्यर्थानां दर्शनं भवति, तथा भगवदिच्छावशात्तत्रापि प्राकृततुल्यत्वदर्शनमितिज्ञेयम्। भगवान् आसुराणां प्राकृतगुणे तमस्येव दुःखात्मके लयं चिकीर्षुः स्वस्मिन् प्राकृतबुद्धिसम्पादनाय तादृशीमिव लीलां प्रदर्शयत्यतो न प्राकृतत्वशङ्कागन्धोऽप्यत्र। भगवति विपरीतलीलादर्शनं तु आसुरव्यामोहायेतिनिश्चयः। एतच्च ब्रह्माण्डपुराणे नारदं प्रति ब्रह्मणोक्तं, तथाहि, स्त्रीपुम्मलानुषङ्गात्मा देहो नास्य विजायते किन्तु निर्दोषचैतन्यसुखनित्यां स्वकां तनुं प्रकाशयति सैवेयं जनिर्विष्णोर्न चापरा तथाप्यसुरमोहार्थं परेषां च क्वचित् क्वचित् दुःखाज्ञानभ्रमादींश्च दर्शयेच्छुद्धसद्गुणः क्व व्रणादि क्व चाज्ञानं स्वतन्त्राचिन्त्यसद्गुणे दौर्लभ्यायैव मोक्षस्य दर्शयेत्तानजो हरिः कृष्णो ह्यत्यक्तदेहोऽपि त्यक्तदेहस्य देहवत् लोकानां दर्शयामास स्वरूपसदृशाकृति"मिति ॥ ३ ॥

अथ चतुर्थाधिकरणं—"प्रदीपवदावेशस्तथाहि दर्शयती"त्यादिसूत्रद्वयेन। ननु पूर्णज्ञानक्रियाशक्तिमता ब्रह्मणा सह अतादृशस्य भक्तस्य भोगकरणमनुपपन्नमित्याशङ्कायां भगवांस्तस्मिन्नाविशति यदा तदाऽयमपि तथैव भवतीति सर्वमुपपद्यते। यथा प्राचीनः प्रकृष्टो दीपः स्नेहयुक्तायां वर्त्यामर्वाचीनायामाविष्टः स्वसमानकार्यक्षमां तां करोति स्नेहाधीनस्थितिश्च भवति स्वयं तथात्रापीत्यर्थः। तथा च श्रुतिः "भर्ता सन् ध्रियमाणो बिभर्ति एको देवो बहुधा निविष्ट"इति। अत एव देवपदं स्वरूपानन्ददानाद्भावाद्दीपनात् पूतनामुक्तिदानेन स्वमाहात्म्यद्योतनाद्वैकुण्ठादिस्थितेश्च। तदुक्तं निरुक्ते"दिवो दानाद्वा दीपनाद्वा द्योतनाद्वा द्युस्थानो भवतीति वा यो देव" इति। किञ्च, भक्तानां कामभोजनार्थं क्रीडाकरणात् क्रीडायामेव जयेच्छाकरणाद्भक्तैः सह व्यवहारकरणाद्भक्तेषु माहात्म्येच्छादिद्योतनात् "न पारयेहं", "न त्वादृशी प्रणयिनी"मित्यादिभिः स्तुतिकरणात् भक्तप्रतिपत्तिदर्शनेन

कालीयदमनादौ मोदकरणात् तेष्वेव भक्तिमदकरणात् "ते स्वप्नेऽपि प्रियमेव पश्यन्ती"ति स्वप्नकरणात्तेषां कान्तिकरणादिच्छाकरणाद्वा तन्निकटे गमनादपि देवः । तदुक्तं धातुपाठे दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिष्विति ॥ ४ ॥

अथ पञ्चमाधिकरणं—"जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्चे"त्यादिषड्भिः सूत्रैः । ब्रह्मणा सह भोगकरणं लौकिकव्यापारयुतमुत नेति संशये, तद्युतमितिपूर्वपक्षे, तद्रहितमितिसिद्धान्तः । अत्रैव प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्ते"रित्यादिसूत्रैर्लीलानित्यत्वनिर्णयः । "अनावृत्तिः शब्दादनावृत्तिः शब्दा"दितिसूत्रे अनावृत्तिर्भक्तानां ज्ञानिनां चोच्यते । तत्र पूर्ववाक्येन भक्तानामाद्यानावृत्तिः, उत्तरवाक्येन च ज्ञानिनामितिज्ञायते । पुष्टिमार्गीयभक्तविशेषप्रवर्तकनियर्तकवेणुशब्दाद्भगवन्निकटगतावनावृत्तिः पूर्वेणोक्ता । मर्यादामार्गीयाणां वेदरूपाच्छब्दात्तदुक्तसाधनादनावृत्तिर्द्वितीयेनेत्यपि तात्पर्यविषयः श्लिष्टोऽर्थो ज्ञेयः । तथासति परमफलमग्रे स्वत एव भावीति भाव इत्यलं विस्तरेण ॥

जानीत परमं तत्त्वं यशोदोत्सङ्गलालितम् ।
तदन्यदिति ये प्राहुरासुरांस्तानहो बुधाः ॥

॥ इति चतुर्थोऽध्यायः ॥

नमामि श्रीमदाचार्यपादपद्मं यदाश्रयात् ।
कालव्यालभयभ्रान्तो निर्भयत्वं जनोऽश्नुते ॥

॥ इति श्रीमदखण्डवरपण्डितप्रसूतचण्डपाखण्डवादिविखण्डनसुचण्डिमाधरणिमण्डलाखण्डलनमन्नृपतिमण्डलीमुकुटताण्डवमण्डितश्रीमदाचार्यचरणवंशावतंसगोस्वामिश्रीव्रजभूषणात्मजपरनिर्भयरामेण रचितोऽयमधिकरणसङ्ग्रहः समाप्तः ॥



શેઠ નારણદાસ આસનમલ.



જન્મઃ—સંવત્ ૧૯૨૦ શ્રાવણ સુદી ૭.
અવસાનઃ—સંવત્ ૧૯૮૪ શ્રાવણ વદી ૭,
ઇ. સ. ૧૯૨૮ તા. ૬ ઠી સપ્ટેમ્બર.

શેઠ જેઠાનંદ આસનમલ.



જન્મઃ—સંવત્ ૧૯૨૮ ના ફાલ્ગુન વદી ૧૧,
અવસાનઃ—સંવત્ ૧૯૮૫ પોષ વદી ૧૨,
ઇ. સ. ૧૯૨૯ તા. ૬ ઠી ફેબ્રુઆરી.



જગદીશ્વર પ્રેસ, મુંબઈ—૪.

श्रीकृष्णाय नमः ।

श्रीगोपीजनवल्लभाय नमः ।

श्रीमदाचार्यचरणकमलेभ्यो नमः ।

# श्रीमद्ब्रह्मसूत्राणुभाष्यम् ।

## गोस्वामिश्रीगिरिधरजित्कृतविवरणसमेतम् ।

### अथ प्रथमोऽध्यायः ।

#### प्रथमः पादः ।

श्रीश्रीनाथमुकुन्दरायरसिकस्वानन्दशोपोज्ज्वल-
श्रीमद्वल्लभविट्ठलेशसुभगश्रीशैलराजाः सदा ।
अत्रागत्य मदीयमूर्धनि कृपावश्या मुदा स्वासते
लीलारासपरास्तदीयचरणाम्भोजे नमाम्यर्थदे ॥ १ ॥
श्रीश्रीनाथं नमामि श्रीनवनीतप्रियं तथा ।
नौमि श्री[1]मथुरेशं श्रीविट्ठलेशं दयार्णवम् ॥ २ ॥
नौमि श्रीद्वारिकाधीशं सर्वकामार्थदायकम् ।
श्रीमद्गोकुलनाथं च नौमि कारुण्यविग्रहम् ॥ ३ ॥
तथा नमामि तं शश्वद्यः श्रीगोकुलचन्द्रमाः ।
श्री[2]मन्मुकुन्दरायाख्यं नौमि भक्तार्थपूरकम् ॥ ४ ॥
नमामि लीलाललितं श्रीमन्मदनमोहनम् ।
नमामि श्री[3]बालकृष्णं श्री[4]मन्नटवरं तथा ॥ ५ ॥
यः स्वीयान्गतसाधनानगणयन्नानापराधान्परा-
नेकेनैव कृपासुधाजलधरासारेण संसिञ्चति ।
यद्गौरता
श्यामत्वं निजशोभयाऽपरवपुर्ध्यानेन
तं रायोत्तरशब्दमुद्धृतनिजं श्रीमन्मुकुन्दं भजे ॥ ६ ॥
श्रीमन्मुकुन्दराय त्वच्चरणसरोजे मन्मनोभृङ्गः ।
वासं करोतु सततम[6]तस्त्वां पतिं प्रभुं नौमि ॥ ७ ॥
श्री[5]मद्गोपाललालं मृगमदविलसद्भालमालं कृतं स्व-
स्वामिन्या सुस्मितास्यं ललितगतिलसन्मालगोपालबालम् ।

---

१ श्रीविवरणकाराणामभिमतः सप्तस्वरूपक्रमः । असिद्धपद्योक्तक्रमो नाङ्गीकृतः, स्वस्य स्वतन्त्रतया षष्ठगृहस्थापकत्वादन्न चान्येषां वैमत्यम् । २ नाथद्वारत आनीतं स्वसेव्यस्वरूपम् । ३ तृतीयगृहान्तर्गतम् । ४ प्रथमगृहान्तर्गतम् । ५ श्रीगोवर्धननाथपादयुगलमिति । ६ मतिरिति प्रामादिकः पाठस्त्रिसूनीसंशोद्धुः । ७ पाण्डुलिपिपुस्तके, इत आरभ्य मङ्गलाचरणं निवेशितमिति दृश्यते । मन्ये श्रीमन्मुकुन्दरायाणां प्राप्तेः प्रागेव विरचितमिदं विवरणम्; तत्प्राप्त्यनन्तरं च श्लोकषट्कं निवेशितमिति ।

वेणौ विन्यस्तहस्तं रतिपतिमदहृत्स्वर्णगात्रं सुनेत्रं
रासक्रीडादिलोलं सुललितवसनं राधिकेशं नमामि ॥ ८ ॥

आनन्दरूपिणं देवं विश्वाविर्भावकारणम् ।
श्रीगोपालमहं वन्दे श्रीगोपीजनवल्लभम् ॥ ९ ॥

नानामतेषु प्रविवेककारि श्रीपुष्टिमार्गप्रवहृप्रदर्शि ।
श्रीवल्लभाचार्यपदारविन्दं सुषट्पदीभूतमना नतोऽस्मि ॥ १० ॥

सुखेनैव परावाप्तिसाधिकायाश्च पद्धतेः ।
बोधकौ श्रीमदाचार्यचरणौ प्रणतोऽस्म्यहम् ॥ ११ ॥

रासादिलीलारसपूरिताङ्गं निजान्तरङ्गाम्बुजराजहंसम् ।
मायीन्द्रकुम्भीन्द्रहरीन्द्रमीशं श्रीविठ्ठलेशं प्रणमामि नित्यम् ॥ १२ ॥

श्रीहरेः प्रीतिनिष्ठायाः सतां स्वान्ते नियोजकौ ।
श्रीविठ्ठलेशचरणौ प्रणमामि पुनः पुनः ॥ १३ ॥

वन्दे श्रीयदुनाथांश्च भाष्यार्थस्यावबोधकान् ।
सर्वेषामनुकम्पार्थं निजमार्गप्रदर्शकान् ॥ १४ ॥

गुरोर्गोस्वामिनः श्रीमद्द्वारिकानाथशर्मणः ।
पादारविन्दयुगलं प्रणमामि स्मरामि च ॥ १५ ॥

श्रीमत्प्रभुचरणात्मजगोस्वामीन्द्रो महाराजः ।
यत्कृपया मयि राजति पुष्टिफला राज्यवरलक्ष्मीः ॥ १६ ॥

तत्सूनोर्मधुसूदनस्य चरणौ प्रद्युम्ननामा विभु-
र्योऽभूत् तत्तनयस्तदीयचरणौ नौम्यर्थदौ सन्ततम् ।
श्रीमद्विठ्ठलनाथनामतनयो योऽभूत्तु सर्वार्थद-
स्तत्पादौ प्रणमामि तस्य तनयः प्रद्युम्ननामा विभुः ॥ १७ ॥

तत्पादाब्जयुगं नमामि तनयो यस्तस्य सेवार्थभूः
श्रीमद्विठ्ठलनाथनामपुरुषस्तत्पादयुग्मे नतिः ।
तस्यासीत्तनयो मदीयजनको गोपालनामा विभु-
र्गोस्वामिकुलवारिधौ हिमकरस्तत्पादपद्मे नतिः ॥ १८ ॥

कृष्णपादाम्बुजद्वन्द्वप्रेमपूर्त्याः शिवोदयम् ।
श्रीमन्मातुः पादयुगं कृष्णावत्या नतोऽस्म्यहम् ॥ १९ ॥

---

१ काश्यां विराजमानं स्वपूर्वजाना सेव्यस्वरूपम् । २ चकारः पादपूरणार्थं । ३ नास्तीदं पद्यं पाण्डुलिपिपुस्तके । ४ अत्र पद्यटीकोपेतत्रिसूत्रीसंशोद्धुः प्रामादिकः पाठः श्रीहरेः प्रीतिनिष्ठानामिति । ५ मन्ये श्रीयदुनाथैरपि भाष्यटीका व्यरचि, परं नाद्य तल्लाभ इति । ६ पाटलीपुत्रे ( पटनानगरे ) विराजमानाः श्रीव्रजरायतनयाः, एतेषां प्राकट्यं जन्माष्टम्यां रामेन्दुवसुभूवत्सरे ( १८१३ ) जातम् । गुरुत्वं तु ब्रह्मसम्बन्धप्रदातृत्वेन । नेमानि पद्यानि पाण्डुलिपिपुस्तके । ७ अत्र श्रीमदाचार्यचरणद्वितीयतनयादारभ्य वंशक्रमः, [illegible] श्रीगोस्वामिनः, श्रीमहाराजाः ( श्रीयदुनाथाः ), श्रीमधुसूदनाः, श्रीप्रद्युम्नाः, श्रीविठ्ठलाः [illegible] पूर्वपुरुषाः । [illegible]

श्रीकृष्णस्य कृपाप्राप्तसुखो गिरिधरः सुधीः ।
कुर्वे विवरणं श्रीमदणुभाष्ये यथामति ॥ २० ॥
क्वाहं मन्दमतिः क्वेदमणुभाष्यार्थचिन्तनम् ।
अत्रार्थे श्रीमदाचार्यचरणौ शरणं मम ॥ २१ ॥
भाष्यस्याक्षरगुम्फोऽयं न बुद्ध्या कलितुं क्षमः ।
तथापि श्रीमदाचार्यकृपयात्र कृतिर्मम ॥ २२ ॥

---

( जिज्ञासाधिकरणम् )

## अथातो ब्रह्मजिज्ञासा १।१।१।

---

अथ खलु परमकारुणिका भगवन्तो बादरायणा अनेकपरिवत्सरसमयादारभ्य भगवद्वियोगजनितानन्दतिरोभावानधिगतसाङ्गस्वाध्यायान् प्रेक्षायुतान् त्रैवर्णिकान् प्रवाहमार्गपतितान् समीक्ष्य केवलं विचारमात्रेणैव तेषां मननादिद्वारा नित्यलीलास्थपरात्परपुरुषोत्तमप्राप्तिं विधातुं विचारशास्त्रं प्रारिप्सितवन्तः प्रथमं जिज्ञासाधिकरणं रचयाञ्चक्रुः । **अथातो ब्रह्मजिज्ञासा** । अथशब्दस्तु श्रीमदाचार्यचरणैर्भाष्ये 'अथ वा'इत्यादिना अधिकार एव सिद्धान्तितः । व्याकरणभाष्ये तु 'अथेत्ययं शब्दोधिकारार्थः प्रयुज्यते' इत्युक्तम् । तत्राधिकारः प्रस्तावो द्योत्यत्वेनास्य प्रयोजनमिति कैय्यटः । तत्र प्रस्तावः प्रारम्भ इति विवरणम् । एवं च अथेत्ययं शब्दः प्रारम्भार्थे प्रयुज्यमानः स्वरूपतो मङ्गलार्थमपि भवति मृदङ्गध्वनिवत्; यथा अन्यार्थं नीयमानस्य दध्यादेर्मङ्गलार्थत्वमपि । यद्यपि अधिकारो नाम त्रिप्रकारक इति '**षष्ठीस्थाने योगा**'इति सूत्रे व्याकरणभाष्ये उक्तम्, तथापि प्रकृते अथपदसमभिव्याहारे प्रारम्भापरपर्याय एवाधिकारो ह्यत्र गृह्यत इति; एवं चारभ्यत इत्यर्थः । अत्र आङ्पूर्वकरभधातोराद्यकृतिरर्थः । तस्य च विषयतासम्बन्धेन विचारार्थैकदेशे व्यापारे अन्वयः । आद्यकृतित्वं च स्वविषयकृतिध्वंसासमानकालीनस्वविषयककृतित्वम् । स्वं विचारः, तद्विषयिणी या कृतिः, तादृशकृतेर्ध्वंसः तृतीयादिक्षणे वर्तते, तदसमानकालिका या विचारविषयिणी कृतिः सा प्रथमद्वितीयक्षणे वर्तत इति कृत्वा तत्रारभ्यत इति व्यवहारः । अत इति चतुर्थ्यन्तम् । 'आद्यादिभ्य उपसङ्ख्यानम्'इत्यनेन एतच्छब्दात् सार्वविभक्तिकस्तसिः । एतदर्थमित्यर्थः । अस्य च ज्ञानार्थं विचार इत्यस्मिन्नर्थे तात्पर्यग्राहकत्वम् ।

---

१ अत्र "प्रणम्य पितरौ सम्यक् सम्प्रदायानुसारतः, समाम्नायार्थमाश्लिष्टान् ग्रन्थानालोच्य यत्नतः" इत्यधिकं पठ्यते । श्रीकृष्णेत्यत्र "श्रीमद्गोस्वामी गोपालसुतुरि"ति च पाठः । २ प्रवहणं प्रवाहः, सर्गपरम्पराया अविच्छेदः । "जीवास्ते ह्यासुराः प्रोक्ताः प्रवृत्तिं चेति वर्णिताः" इत्युक्तेरासुरा जीवाः प्रावाहिकाः । परं नैते तादृशाः, किन्तु तन्मार्गपतिताः; अतस्तदुद्धारार्थं शास्त्रप्रवृत्तिः । "प्रवाहेऽपि समागत्य पुष्टिस्थस्तैर्न युज्यते" इत्युक्तेः । ३ प्रस्तावः प्रारम्भ इत्यर्थः । स चार्योद्यमानस्य । अर्थशब्दः प्रयोजनवाचीति भावः । निपातानां (उपसर्गभिन्नानाम्) वाचकत्वं द्योतकत्वं चेति वाक्यपदीये । अव्ययं विभक्तीति सूत्रभाष्ये, उपसर्गातिरिक्तनिपातानां द्योतकत्ववाचकत्वोभयस्य स्पष्टत्वात् । प्रारम्भं द्योतयत्यथशब्द इति हरदत्तः । महाभाष्ये–"अथेत्ययं शब्दोऽधिकारार्थः प्रयुज्यते" इति वर्तमाननिर्देशेन सर्वलोकसिद्धमधिकारार्थत्वं न तु वृद्ध्यादिवत् पारिभाषिकमिति ज्ञेयम् । यद्यप्युपसर्गातिरिक्तानां निपातानां द्योतकत्ववाचकत्वोभयस्वीकारः, 'तथाप्यत्रानेकक्रियाविषयस्यापि शब्दानुशासनस्य' आरभ्यमाणताऽथशब्दसन्निधानेन प्रतीयते, तेन द्योतकत्वमिति ज्ञेयम् । एतन्निखिलमप्यनुसन्धाय कैयटोक्तिरत्रोपन्यस्ता विवरणकृद्भिः । ४ अत्र महाभाष्यम्–अधिकारो नाम त्रिप्रकारः । कश्चिदेकदेशस्थः सर्वं शास्त्रमभिज्वलयति, यथा प्रदीपः सुप्रज्वालितः सर्वं वेश्माभिज्वलयति । अपरोऽधिकारो यथा–रज्ज्वा अयसा वा बद्धं काष्ठमनुकृष्यते तद्वदनुकृष्यते चकारेण । अपरोऽधिकारः प्रतियोगं तस्यानिर्देशार्थ इति, योगे योगे उपतिष्ठते । इति ॥ ५ एतच्छब्दात्, तसिः, सुब्लुक् एतदोऽन् सर्वादेशः नलोपश्च ।

( शास्त्रारम्भविचारः )

इदमत्रविचार्यते वेदान्तानां विचार आरम्भणीयो न वेति। किं तावत् प्राप्तम्? नारम्भणीय इति।

कुतः?

( पूर्वपक्षः )

साङ्गोऽध्येयस्तथा ज्ञेयो वेदः शब्दाश्च बोधकाः।
निःसन्दिग्धं तदर्थाश्च लोकवद्व्याकृतेः स्फुटाः ॥ १ ॥

---

इदं चानुपदमेव भाष्ये स्फुटीभविष्यति। जिज्ञासापदस्य विचारार्थकत्वं श्रीमदाचार्यचरणैर्भाष्य एव, श्रीपुरुषोत्तमैः प्रकाशे प्रतिपादितम्। (अत्र यत् 'ब्रह्मविदाप्नोति पर'मिति परप्राप्तिसाधनीभूतविचारो न सम्भवतीत्यतो विचारघटकीभूतं ब्रह्मधर्मिकतात्पर्यज्ञानजन्यं उपनिषद्वाक्यजन्यं ब्रह्मविषयकं शाब्द-बोधात्मकं ज्ञानं तत् परोक्षमित्युच्यत इति विवेकः। एवमग्रेऽपि सूत्रेषु वाक्यार्थो बोध्य इति दिक्।) अथ श्रीमदाचार्यचरणैर्विचारितम्, मन्दबुद्धीनां तु सूत्राणां स्वल्पाक्षरपदवत्त्वेन दुरूहत्वादर्थज्ञाना-भावादुद्धारो न भविष्यतीत्यधिकरणानां पञ्चावयववर्णनद्वारा यावत्सूत्रार्थो भाष्यरीत्या(त्यो) वर्णितः ॥

तत्र प्रथमसूत्रे अधिकरणाङ्गपञ्चकविचारं कर्तुं प्रतिज्ञामाहुः—**इदमत्रेति**। इदं बुद्धिस्थम्। अधिकरणा-ङ्गपञ्चकमिति शेषः। "विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम्। सङ्गतिश्चेति पञ्चाङ्गं शास्त्रेऽधिकरणं स्मृतम्" इति लक्षणात्। विशयः संशयः—अत्र पञ्चाङ्गतात्पर्यकेऽस्मिन् सूत्रे। (अथ सूत्रस्य स्वल्पाक्षरपदवत्त्वात् कथं तेन पञ्चाङ्गावयवरूपमधिकरणं बोद्धव्यमिति चेत्, मैवम्;) विचारे प्रसक्ते कर्तव्याकर्तव्यसंशयस्यापि प्रसक्तिः। एवंरीत्या पूर्वपक्षादीनां प्रसक्तौ पञ्चकतात्पर्येण बोधकत्वं सूत्रस्य बोध्यम्। **विचार्यते**। उपोद्घातसङ्गत्येति शेषः। एतेन पञ्चावयवमध्ये चरमा सङ्गतिर्दर्शिता। अथ साधारणधर्मवद्धर्मिज्ञानस्य संशयजनकत्वात्, विचाररूपधर्मिज्ञानं विना संशयो न भविष्यतीति, विचाररूपं विषयं, यत्प्रथमममङ्गं तमाहुः—**वेदान्तानामिति**। संशयमाहुः—**न वेति**। पूर्वपक्षमाहुः—**नारम्भणीय इति**। वेदान्तविचारस्य श्रुत्यर्थबोधे कारणत्वं 'वेदान्तविज्ञानसुनिश्चितार्था' इति श्रुत्या प्रतिपाद्यत इत्याशयेन पृच्छति **कुत इति**। कारिकया पूर्वपक्षं समर्थयति **साङ्ग इति**। **वेद इति** पूर्वान्वयी। **व्याकृतेः** व्याकरणात्। कारिकार्थमाहुः—

---

१ स्वाध्यायविधिमाश्रित्य वैदिकैकदेशिनां वैयाकरणानामयं पूर्वपक्षः, नैरुक्तिकानां वा। २ नेदं पाण्डुलिपिपुस्तके। ३ लघूनि सूचितार्थानि स्वल्पाक्षरपदानि च। सर्वतः सारभूतानि सूत्रं सूत्रविदो विदुः। इत्युक्तेः। ४ इदमा सधर्मकं निर्धर्मकं वा ब्रह्मेति सन्देह आक्षिप्यत इति प्रदीपाशयः। ५ ( ) एतच्चिह्नान्तर्गतं शोधपत्रस्थमिति ज्ञेयम्। ६ **वेदान्तानामिति**। ननु "प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते" इति न्यायेन किमस्या ब्रह्ममीमांसायाः प्रयोजनम्? अर्थज्ञानार्थमिति चेत्, न; "अथातो धर्मजिज्ञासा" इत्यत्र स्वाध्यायविधिप्रयुक्तमर्थज्ञानं प्रतिज्ञातम्। तत्राथातःशब्दार्थपर्यालोचनया कृत्स्नस्यापि वेदस्य विचारश्चिकीर्षित इत्यवधारणात्। तत्र हि अथशब्देन कृत्स्नस्वाध्यायाध्ययनानन्तर्यं कर्तव्यस्योच्यते। अतःशब्देन कृत्स्नस्य स्वाध्यायस्य विवक्षितार्थत्वं तत्र हेतुत्वेनोच्यते। एवं च अथातो ब्रह्मजिज्ञासेति ब्रह्ममीमांसायाः आरम्भः प्रयोजनाभावाद्व्यर्थतां सेत्स्यति। अत्र ब्रूमः—"स्वाध्यायोऽध्येतव्यः" इति विधिवाक्ये यथा कृत्स्नस्यापि वेदस्याध्ययनं नियम्यते विध्यर्थकतव्यप्रत्ययात्, न तथा अथातो धर्मजिज्ञासेत्यत्र कृत्स्नस्यापि वेदस्य विचारः। चोदनालक्षणोऽर्थो धर्मः इत्यत्र प्रतिज्ञासूत्रे प्रतिज्ञातस्य धर्मस्य लक्षणं ब्रूते भगवाञ्जैमिनिः। चुद प्रेरणे इति धातुनिष्पन्नचोदनाशब्दोक्तप्रवर्तकवाक्यप्रमे-योऽर्थः स धर्म इति तदर्थकथनेन यस्य श्रेयस्साधकत्वं विध्येकगम्यं तस्यैव धर्मशब्दार्थत्वावगमात्। अन्वाहार्ये च दर्शनात् इत्यन्तशास्त्रस्य पूर्वकाण्डविचारमात्रपरत्वाच्चावशिष्यते वेदान्तानां विचारः, तदेतत्सर्वं मनसि निधायाहुः—**वेदान्तेति**। ७ व्याकृतेरित्यत्र रक्षोहागमलघ्वसन्देहाः प्रयोजनमिति महाभाष्यमनुसन्धेयम्। वैयाकरणानामिदं वाक्यम्।

अर्थज्ञानार्थं विचार आरम्भणीयः । तस्य च ब्रह्मरूपत्वात् तज्ज्ञाने पुरुषार्थो भवतीति न मन्तव्यम् । विचारं विनापि वेदादेव साक्षादर्थप्रतीतेः । न चार्थज्ञानमविहितम्, अविचारिताश्च शब्दा नार्थं प्रत्याययन्तीति वाच्यम्, "ज्ञेयश्च" इति विधानात् ।

"गीती शीघ्री शिरःकम्पी तथा लिखितपाठकः ।
अनर्थज्ञोऽल्पकण्ठश्च षडेते पाठकाधमाः" ॥१॥ (पा. शि. ३२) इति

बाधोपलब्धिश्च, । शब्दश्चक्षुरादिवन्न सन्दिग्धार्थप्रतिपादकः, तदर्थश्च व्याकरणादिना निश्चीयते, यथा लौकिकवाक्ये तथा वेदेऽपि, न च तद्विरुद्धं निर्णेतव्यम्, अप्रामाणिकत्वप्रसङ्गात्, तस्माद्वेदार्थज्ञानार्थं विचारो नारम्भणीयः ।

स्यादेतत् । न वेदार्थज्ञानमात्राय विचारः किन्तु ब्रह्मज्ञानाय, तस्य चात्मरूपत्वात् तस्य चाविद्यावच्छिन्नत्वाद् देहात्मभावदृढप्रतीतेस्तदतिरिक्तस्य ब्रह्मणोऽभावान्न वेदमात्रादसम्भावनाविपरीतभावनानिवर्तकं ज्ञानमुत्पद्यते, प्रत्युत देहात्मभावदृढप्रतीतेः श्रुतेरुपचरितार्थत्वं स्तुतित्वं वा कल्पयिष्यतीति ।

---

अर्थेति । तस्य च वेदार्थस्य च । तज्ज्ञाने ब्रह्मज्ञाने सतीत्यर्थः । पुरुषार्थ इति । 'ब्रह्मविदाप्नोति परम्' इति श्रुतिप्रतिपाद्यो मोक्षो भवतीति हेतोर्ब्रह्म न मन्तव्यं न विचार्यमित्यर्थः । ब्रह्मज्ञानं मोक्षसाधनं न तु ब्रह्मविचारः । तत्तु साङ्गवेदाध्ययने सति व्याकरणादेव भविष्यतीति भावः । 'स्वाध्यायोऽध्येतव्यः' इति विधिनाऽध्ययनमेव विहितं, नार्थज्ञानम् । केवलं व्याकरणेन विना शब्दा अपि नार्थबोधका भविष्यन्तीत्याशयेनाऽऽहुः न चेति । बाधोपलब्धिरिति । 'अधमे विधिर्न प्रवर्तेत' इति अध्ययनविधिर्बाधोपलब्धिरित्यर्थः ॥

न सन्दिग्धार्थप्रतिपादक इति । दूराद्दृष्टे उच्चैस्त्वविशिष्टे अयं स्थाणुर्वा पुरुषो वेति सन्देहे केनचिदाप्तेनायं पुरुष इति शब्दप्रयोगे क्रियमाणे अयं पुरुष इति निश्चय एव जायत इति भावः । तद्विरुद्धम् । व्याकरणविरुद्धम् । अत्रैकदेशी स्वमतेन सिद्धान्तं वक्ति स्यादेतदिति । एतत् अग्रिमरीत्या विचारकर्तव्यत्वं स्यात् तर्हि उपपद्यताम् । तस्य ब्रह्मणः विशेषणस्यैव तच्छब्देन परामर्शः । 'पटोलपत्रं पित्तघ्नं नाडी तस्य कफापहा' इत्यत्र दर्शनात् । तस्य आत्मनः । अयं भावः—एकदेशिना उच्यते यदि विचारो न क्रियते चेत्, वेदात् जीवात्मस्वरूपत्वं ब्रह्मण इति ज्ञानं भविष्यति, जीवात्मनस्तु अविद्यावच्छिन्नत्वेन मनुष्योऽहमित्यहम्प्रत्ययेन देहे एवात्मप्रतीतिर्दृढा भविष्यति, ततश्चाहं सार्धत्रिवितस्तिकायः, अल्पः, परममहत्परिमाणवदचिन्त्यगुणगणवदेतादृशं ब्रह्म न भवामीत्यसम्भावना देह एवात्मेति विपरीतभावनायाश्च निवृत्तिर्न भविष्यति । देहाद्विलक्षणो नित्यशुद्धबुद्धमुक्तस्वभाव आत्मा इत्याद्यर्थप्रतिपादिकानां श्रुतीनां आरोपितार्थकत्वरूपौपचारिकत्वं स्तुत्यर्थत्वं वा कल्पयिष्यतीति । विचारे क्रियमाणे निश्चयात्मकं

---

१ एकदेशिमतम् । २ अर्थेति । "साङ्गो वेदोऽध्येयो ज्ञेयश्च" इति साङ्गवेदाध्ययनविधेरेव व्याकरणादिना सेत्स्यत्यर्थज्ञानमतो नारम्भणीयेयमुत्तरमीमांसेति पूर्वपक्षाशयः । ३ अर्थज्ञानस्य पुरुषार्थतां परिहरन्ति पुरुषार्थ इतीति । ४ विपरीतप्रमात्वं बाधत्वम् ।

( निरुक्तव्याकरणादिना वेदार्थसमर्थनम् )

मैवम्,

अलौकिको हि वेदार्थो न युक्त्या प्रतिपद्यते ।
तपसा वेदयुक्त्या तु प्रसादात्परमात्मनः ॥ २ ॥

न हि स्वबुद्ध्या वेदार्थं परिकल्प्य तदर्थं विचारः कर्तुं शक्यः, ब्रह्म पुनर्यादृशं वेदान्तेष्ववगतं तादृशमेव मन्तव्यम्, अणुमात्रान्यथाकल्पनेऽपि दोषः स्यात्,

( अन्यथार्थकरणे दोषः )

"योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते ।
किं तेन न कृतं पापं चौरेणात्मापहारिणा" इति
"नैषा तर्केण मतिरापनेया" (कठ. १–२–९) इति श्रुतेश्च ।

न च विरुद्धवाक्यानां श्रवणात्तन्निर्धारार्थं विचारः, उभयोरपि प्रामाणिकत्वेनैकतरनिर्धारस्याशक्यत्वात्, अचिन्त्यानन्तशक्तिमति सर्वभवनसमर्थे ब्रह्मणि विरोधाभावाच्च। अत एवोपनिषत्सु तत्तदुपाख्याने बोधाभावे, औपाधिकबोधे च तपस एवोपदेशः ।

---

ज्ञानं भविष्यतीति विचार आवश्यकः । दूषयन्ति मैवमिति । पूर्वपक्षी, विचारकर्तव्यतां कारिकया साधयति अलौकिकेति । लौकिकेर्थे युक्त्यादिप्रसरः, अलौकिकेर्थे तप आदीनाम् ।

कारिकार्थमाहुः न हि स्वबुद्ध्या वेदार्थं परिकल्प्येति । 'अपाणिपादो जवनो ग्रहीता' इति, 'अस्थूलमनणु', इति चोपनिषद्वाक्यं निर्विशेषब्रह्मप्रतिपादकम् । 'यतो वा इमानि भूतानि जायन्त' इत्युपनिषद्वाक्यं सविशेषब्रह्मप्रतिपादकम् । एवं च उभयोरेकवाक्यतासिद्ध्यर्थं किञ्चित् कल्पनीयमिति स्वबुद्धिः । तया परिकल्प्यो यो वेदार्थः अध्यारोपापवादौ स्वीकृत्य विरोधपरिहाररूपोर्थः तं परिकल्प्य तदर्थं विचारो न कर्तव्यः । अध्यारोपापवादयोः खण्डितत्वात् । इदं च श्रीमत्प्रभुचरणैर्विद्वन्मण्डने विस्तरेणोक्तमित्यत्रोपरम्यते । विरुद्धयोर्वाक्ययोरेक एवार्थो मन्तव्य इत्याहुः ब्रह्मेति । अणुमात्रेति । स्वल्पमात्रेत्यर्थः । दोषः स्यात् । श्रोतुर्वक्तुरपीति शेषः । श्रोतुर्दोषमाहुः योऽन्यथेति । वक्तुर्दोषमाहुः नैषेति । 'मतिरपनेये'त्यपपाठः । 'मतिरापनेयेत्ये'व पाठः । अर्थस्त्वेक एव । वेदत्वात् पाठ एव मुख्यः ॥

विचारेण निर्धारो न भविष्यतीत्याहुः उभयोरपीति । ननु विरोधपरिहारस्याशक्यत्वेऽपि यावदाशङ्कं तर्कानुसरणादिति न्यायात् विरोधपरिहारार्थं विचारः कर्तव्य इत्यत आहुः अचिन्त्येति । ननु मास्तु परब्रह्मणि विरोधः, परन्तु मन्दबुद्धीनामेकधर्मिविशेष्यकं विरुद्धोभयप्रकारकं ब्रह्मज्ञानं निश्चयात्मकं विचारं विना कथं भविष्यतीति चेन्न; तपसैव सर्वकार्यसिद्धेः । ननु सर्वान्तर्गतं ब्रह्मज्ञानमित्यत्र किं प्रमाणमित्यत आह अत एवेति। उपनिषत्सु तैत्तिरीयछान्दोग्यादिषु। तैत्तिरीये भृगोर्बोधाभावे 'तपसा ब्रह्म विजिज्ञासस्वे'ति वरुणेन कृतः, छान्दोग्ये इन्द्रप्रजापतिसम्वादे इन्द्रस्यौपाधिके देह एवात्मेति विपरीतबोधे जाते तपस एवोपदेशः कृतः । अत्र पूर्वपक्षी तप आलोचने इत्यनेन तपःपदस्य विचारार्थ-

---

१ वेदयुक्त्येत्यत्र वेदोक्ता युक्तिर्वेदयुक्तिस्तया, न्यग्रोधफलमाहरेत्यादिरूपा । २ नहि स्वबुद्ध्येत्यत्राध्यासभाष्यमनुसन्धेयम् । ३ वस्तुन्यवस्त्वारोपोऽध्यारोपः, अवस्तुनो वस्तुमात्रत्वमपवादः । "अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते" इति मायावादिनः ।

## न च तपःशब्देन विचारः, तस्य पूर्वानाधिक्यात्तप एव ।

### ( उपाख्यानानामर्थवादत्वं नास्ति )

न चोपाख्यानानां मिथ्यात्वम्, तथा सति सर्वत्रैव मिथ्यात्वं भवेद्विशेषाभावात्, न ह्यप्रामाणिकोक्ते विधौ वोपाख्याने वा ब्रह्मस्वरूपे वा कस्यचिदपि विश्वासो, यथा लोके; तस्माद्वेदे अक्षरमात्रस्याप्यसत्यार्थज्ञानस्याभावाद्वैदिकानां न सन्देहोऽपि, किं पुनर्विरुद्धार्थकल्पना ?

---

कत्वं स्वीकृत्याग्रहणे शङ्कते **न चेति** । तप आलोचने इत्यत्र सर्वधातुभ्योऽसुन् इत्यनेन तप इत्यस्मात् असुन्, उकारनकारयोर्लोपः, रुत्वविसर्गौ, तप इति सिद्धम् । **पूर्वानाधिक्यादिति** । अयं भावः । ब्रह्मणि परस्परविरुद्धानामर्थानां उपनिषद्वाक्यात् प्रतिभानं भवतीति कृत्वा विचारेण अध्यारोपापवादिनः परमते, स्वमते तु ब्रह्मणः सामर्थ्यप्रदर्शनेन वा विरोधपरिहारं कृत्वा वाक्यार्थः सम्पादनीयः । स च पूर्वमेव साङ्गवेदाध्ययनानन्तरं भविष्यति । गुरुसमीपगमनानन्तरं गुरुणा विचारार्थकतपस उपदेशे कृते पूर्वोक्तमेवोक्तं गुरुणा नाधिकं किञ्चिदुक्तमित्युपेक्षणीयत्वं स्यादित्ययमर्थः पूर्वानाधिक्यादित्यनेन ध्वन्यते । **तप एवेति** । छान्दोग्ये इन्द्रस्य द्वात्रिंशतं वर्षाणि ब्रह्मचर्यमित्यर्थकतपःशब्दस्य उपदेशात् । एवकारेण विचारव्यवच्छेदः ।

ननूपाख्यानानामर्थवादरूपत्वेन स्तावकत्वात् क्वचिदविद्यमानार्थबोधकत्वेनाप्रामाण्यमिति । कुतः ? विद्यमानगुणानुवादः अविद्यमानगुणानुरूपो वा इत्युभयोरपि स्तुतित्वादित्यत आहुः **न चेति** । वेदैकदेशस्याप्रामाणिकत्वे सर्वत्र विश्वासो न हीत्यर्थः । कुत इत्यत आहुः **तथा सतीति** । वेदैकदेशस्याप्रामाणिकत्वे सर्वत्र विश्वासो गच्छतीत्याहुः **न हीति** । विश्वास इत्यनेनान्वितम् । **अप्रमाणिकोक्त** इति । उपाख्यानरूपे किञ्चिदंशे अप्रमाणिको यो वेदः तदुक्त इत्यर्थः । इदं च विशेषणं विध्यादित्रयेन्वितं । **यथा लोक इति** ।

१ आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां तस्मादनित्यमुच्यते १-२-१ इत्यकार्यबोधकवाक्यप्रामाण्याधिकरणे सकलस्यैव वेदस्य क्रियार्थत्वमनूद्यातदर्थानामानर्थक्यमिति पूर्वपक्षे विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्युः १-२-७ इत्यनेनार्थवादानां स्तावकत्वमिति प्रतिपाद्यते । तथा हि—"स्वाध्यायविधिना वेदः पुरुषार्थाय नीयते । सर्वस्तेनार्थवादानां प्राशस्त्येन प्रमाणता" इत्यादिना सिद्धान्तितम् । तथा हि—"स्वाध्यायोऽध्येतव्यः" इति विधिवाक्येऽयम्भावः प्रयोजनवदर्थज्ञानोद्देशेन स्वाध्यायाध्ययनं विधीयते, प्रयोजनवदर्थज्ञानादिसाधनीभूतस्वाध्यायोद्देशेन वाऽध्ययनमात्रम्; तव्यप्रत्ययेन स्वाध्यायस्य कर्मत्वाभिधानात् । अतश्च स्वाध्यायार्थस्य प्रयोजनवत्त्वसिद्धौ तात्पर्यग्राहकवशेन लक्षणा अर्थवादेषु । लक्षणीयश्चार्थः सन्निहितविधिनिषेधापेक्षितत्वात्स्तुतिनिन्दारूपः । एवं च लिङाद्यर्थो लोके पुरुषाशयः । वेदे तदभावाल्लिङादिशब्दनिष्ठ एव कश्चिद्धर्मः । वाच्यतावच्छेदकं चोभयसाधारणं व्यापारत्वं, न तु प्रवृत्तिनिवृत्तिप्रयोजकत्वमपि; तस्यान्यलभ्यत्वात् । तत्र नञोऽभावो नाख्यातार्थप्रवृत्तिप्रयोजकत्वम्, तत्सत्त्वे तु तदर्थप्रवृत्त्यभावप्रयोजकः संसर्ग इति विशेषः । प्रयोजकत्वं चात्र प्रवृत्तितदभावकारणीभूतेष्टानिष्टसाधनताज्ञानजनकज्ञानविषयत्वम् । अभावकारणता च योगक्षेमसाधारणी । तत्त्वं च प्रवृत्तिसामग्रीघटकत्वमित्यन्यत्र विस्तरः । स च लिङाद्यर्थो विधिवाक्ये प्रवर्तनाप्रेरणाविध्यपरपर्यायः । निषेधवाक्ये च निवर्तनानिवारणानिषेधप्रतिषेधापरपर्यायः । इयं च द्विविधाऽपि शाब्दीभावना । तस्याश्च भाव्यं यथायोगं प्रवृत्तिनिवृत्ती । शाब्दभावनाज्ञानं करणम् । करणत्वं चात्र भावनाभाव्यनिष्पादकत्वम् । इतिकर्तव्यता च यथायोगं स्तुतिनिन्दे । स्तुतिनिन्दाज्ञानस्य हि प्रवृत्तिप्रयोजकसहकारित्वं ध्यवदच्युत्पादनद्वारा लोकसिद्धम् । स्तुतिनिन्दापदवाच्ये प्राशस्त्याप्राशस्त्यापरपर्याये बलवदनिष्टाननुबन्धित्वानुबन्धित्वयोग्यत्वरूपे । ते च यथायोगं विधिनिषेधापेक्षितत्वात्तत्समभिव्याहृतार्थवादैर्लक्षणया प्रतिपाद्यते । तत्र "वायुर्वै क्षेपिष्ठा देवता" इत्यादौ स्वरान्यक्षेपिष्ठत्वादिगुणैरेव लक्षणया । "यजमानः प्रस्तरः" इत्यादौ तु गौणीगम्यस्वकार्यकर्तृत्वादिगुणैरिति । अतः भावनान्वितस्तुतिनिन्दाविषयकप्रमाजनकत्वेनार्थवादानां धर्माधर्मयोः प्रामाण्यमित्येवं पूर्वमीमांसकानां मतमनूद्य श्रीगिरिधरचरणा आहुर्नन्वित्यादिना ।

( मीमांसाया वेदाङ्गत्वनिरसनम् )

**विद्यासु च तदश्रुतेः ।** यदि वेदार्थज्ञाने विचारस्योपयोगः स्यादङ्गत्वेन व्याकरणस्येव विद्यासु श्रवणं स्यात् । स्वातन्त्र्ये च पुराणादेरिव मीमांसाया अपि प्रकारभेदेन प्रतिपादकत्वं स्यात्, "तं त्वौपनिषदं पुरुषं पृच्छामि" ( बृ. ३-९-२६ ) इति तु तेषां निषेधः, अन्यथाज्ञानं नोपनिषदुक्तं फलं समर्पयति, तस्मान्नारम्भणीय एव ब्रह्मविचारः ।

अनेन धर्मविचारोऽप्याक्षिप्त एव, न ह्येतन्निराकर्तुः सोऽयमतिभार इति पूर्वः पक्षः ।

( विचारेणैवार्थज्ञानं भवति )

सिद्धान्तस्तु—

> सन्देहवारकं शास्त्रं बुद्धिदोषात्तदुद्भवः ।
> विरुद्धशास्त्रसम्भेदादङ्गैश्चाशक्यनिश्चयः ॥ ३ ॥
> तस्मात् सूत्रानुसारेण कर्तव्यः सर्वनिर्णयः ।
> अन्यथा भ्रश्यते स्वार्थान्मध्यमश्च तदादिमः ॥ ४ ॥

परम्परया पाठवदर्थस्यापि गुरुमुखादेव श्रवणेऽपि मन्दमध्यमयोः सन्देहो भवेत् समानधर्मदर्शनात् पदादिपाठवत्, तत्र यथा लक्षणानामुपयोग एवमेव मीमां-

---

प्रामाणिकपुरुषस्य किञ्चिदंशे प्रामाण्यापगमे सर्वत्रैव गच्छतीत्यर्थः । **विद्यासु** वेदाङ्गविद्यासु । अन्यथा मीमांसायाः चतुर्दशसु विद्यासु पाठात् तदश्रुतेरित्यसङ्गतम् । **तदश्रुतेः** विचाराश्रुतेः । तदेवाऽऽह **यदी**ति । ननु मास्त्वङ्गत्वेनोपयोगः, पार्थक्येन तु चतुर्दशविद्यासु श्रवणादुपयोगोऽस्त्वित्यत आह—**स्वातन्त्र्ये**ति । **प्रकारभेदे**नेति । उपनिषत्प्रतिपाद्यपुरुषबोधकप्रकारभिन्नप्रकारेणेत्यर्थः । ननु प्रकारभेदे को दोष इत्यत आहुः **तं त्वि**ति । **ब्रह्मविचारः** । उत्तरमीमांसेत्यर्थः । अनेन 'स तृतीयमतप्यत, स एतं दीक्षितवादमपश्यत्' इत्यादौ तपस एवोपदेशेनेत्यर्थः । गुरोर्मतनिराकर्तुः[१] शिष्यमतनिराकरणे सङ्कोचो नास्ती'**त्यतिभार**' इत्यनेन सूचितम् । व्याससूत्रात्पूर्वमङ्गैरेव सन्देहनिवृत्तिर्यथा तथेदानीमपि भविष्यतीति पूर्वपक्षिरहस्यम्[२] । सिद्धान्तमाहुः **सिद्धान्त** इत्यादि । ननु घटमानयेत्युक्ते लोके सर्वोऽपि घटानयनं करोति न तु पटानयनं, एवं वेदेऽपि सन्देहो न भविष्यतीत्यत आहुः **बुद्धी**ति । बुद्धिदोषात्, अनेकशास्त्रेषु बुद्धिप्रसरात् । नन्वङ्गैर्निर्णयो भविष्यतीत्यत आहुः **विरुद्धे**ति । न्यायमीमांसादिमेलनात् । **निर्णय** इति । पूर्वोत्तरकाण्डात् निर्णय इत्यर्थः । **मध्यमः** किञ्चित् बुद्धिमान्, **तदादिमः** मन्द इत्यर्थः । कारिकार्थमाहुः **परम्परये**ति । **समाने**ति । साधारणधर्मदर्शनादित्यर्थः । **यथा लक्षणाना**मिति । प्रातिशाख्यादीनामित्यर्थः । तत्र हि वेदे तैत्तिरीयशाखायां तृतीयाष्टके पठ्यते 'देवाय ते यजमानाय शर्म' इति । संहितायां वकारे दीर्घः पठ्यते । पदपाठकाले 'देवयते' इत्यत्र वकारे ह्रस्वः पठ्यते । अत्र सन्देहे प्रातिशाख्यसूत्रं 'अथादावुत्तरे विभागे ह्रस्वं व्यञ्जनपरः' इत्यधिकारसूत्रम् । अत्र भाष्यम् । आदौ पदादौ उत्तरे पदान्ते च वर्तमानः संहितायां यो दीर्घः असौ पदविभागे पदसमये व्यञ्जनपरः सन् ह्रस्वत्वमापद्यते, व्यञ्जनपरत्वं यथा संहितास्थं ज्ञेयम्,

---

१ गुरोर्व्यासस्य मतनिराकर्तुर्वैयाकरणस्य, शिष्यमतनिराकरणे जैमिनिमतनिराकरणे । २ शाङ्करभाष्ये तु 'तत्पुनर्ब्रह्म प्रसिद्धमप्रसिद्धं वा स्यात्' इत्यादिनाऽनारम्भत्वनिर्णयस्य निरास । शाबरभाष्येऽपि प्रसिद्धाप्रसिद्धिमाश्रित्यैव विचार इत्यवधेयम् ।

साया अपि । तदुक्तम्—

> असन्दिग्धेऽपि वेदार्थे स्थूणाखननवन्मतः ।
> मीमांसानिर्णयः प्राज्ञे दुर्बुद्धेस्तु ततो द्वयम् ॥ ५ ॥ इति ।

तथा च निर्णये येन केनचिद्वक्तव्ये हरिः स्वयं व्यासो विचारं चिकीर्षुस्तत्कर्तव्यतां बोधयति ब्रह्मजिज्ञासा कर्तव्येति; व्यासोक्तत्वादपि कर्तव्यता ।

( कर्तव्यपदाध्याहारविचारः )

कर्तव्यपदाध्याहारे स्वातन्त्र्यं न भवति । अन्यथा "अथ योगानुशासनम्" (यो. सू. १–१) इतिवत् स्वतन्त्रता स्यात् । तथा च ज्ञानानुपयोगः । तथाहि–"तं त्वौपनिषदं पुरुषं पृच्छामि" (बृ. ३–९–२६) इति केवलोपनिषद्वेद्यं ब्रह्म, न शास्त्रान्तरवेद्यम् । तद्यदि मीमांसा स्वतन्त्रा स्यात् तज्जनितं ज्ञानं न ब्रह्मज्ञानं भवेत् ।

---

व्यञ्जनं अस्मात्परं इति व्यञ्जनपर इति । अपरमुदाहरणसूत्रं 'देवाशीकासुम्नाश्वत्तविच्छुना हृदयाकाशाद्वा' । अत्र भाष्यम् । देवाशीका इत्यादिषु ग्रहणे अवग्रहेषु अन्त्यस्वरो विभागे ह्रस्वत्वमापद्यते, यथा देवायते इत्यादि । यथा वा शीकायते स्वाहा, शीकायत इति शीकऽयते स्वाहा । इदं सप्तमाष्टके । एवं सुम्नायन्तो हवामहे इत्यादिषु लक्षणानां यथा उपयोगः, तथा मीमांसाया अपि । यथा आकाशपदस्य भूताकाशपरत्वं वा चिदाकाशपरत्वं वेति सन्देहे 'आकाशस्तल्लिङ्गा'दिति सूत्रात् चिदाकाशपरत्वं निर्णीयते; यथा वा विरुद्धवाक्यैः कर्तृत्वकर्तृत्वाभावसमानाधिकरणं ब्रह्मत्वमिति शाब्दबोधानन्तरं कर्तृत्वाकर्तृत्वविषयकसन्देहे सर्वभवनसमर्थे ब्रह्मणि विरोधाभावप्रतिपादनेन निर्णय इत्यर्थः । अस्मिन्नर्थे सम्मतिं दर्शयन्ति **तदुक्तमिति** । **असन्दिग्धेऽपीति** । इदं वाक्यं श्रीमदाचार्यचरणैर्निबन्धे सर्वनिर्णये उक्तम्; टीकायां च व्याख्यातं तैरेव । पाठदशायां सत्यपि न सन्देहे, कालान्तरे सन्देहो भविष्यतीति लक्षणवन्मीमांसाकरणम् । तत्र लौकिको दृष्टान्तः **स्थूणाखननवदिति** । स्थूणा निखाता अपि पुनरुद्धृत्य निखात्यते; तथा निःसन्दिग्धोऽपि सन्देहमापाद्य दार्ढ्याय निरूप्यते मीमांसानिर्णयकारैः । इदमुत्तमान् प्रति । तेषां प्रयोजनं सफलं भवति । मन्दमध्यमान्प्रति तु–द्वयमिति । सन्देहाभावो दार्ढ्यं च । सूत्रार्थमाहुः **तथा चेति** । विचारस्य आवश्यकत्वे चेत्यर्थः । इदं महत्कार्यं केन कर्तव्यमित्याकाङ्क्षायामाहुः हरिरिति । **व्यासोक्तत्वादिति** । जैमिन्युक्तधर्मविचार इवेत्यपिकारार्थः । ननु सूत्रे कर्तव्यपदं नास्ति, दोपादध्याहारः कर्तुं न शक्यते, इत्याकाङ्क्षायामाहुः **कर्तव्यपदेत्यादि** भवेदित्यन्तम् । अयं भावः–कर्तव्यपदाध्याहारे तव्यप्रत्ययस्य विधित्वादिष्टसाधनताबोधकत्वम्, इष्टं च, 'औपनिषदं पुरुषं पृच्छामी'त्युपनिषत्प्रतिपाद्यं ब्रह्मज्ञानम्, तत्तु मीमांसाप्रतिपाद्यं न भवतीति परम्परया साधनत्वं मीमांसायाः । अस्वातन्त्र्यं गुणः । स्वातन्त्र्ये च चित्तवृत्तिनिरोधबोधकयोगवत् [3]ब्रह्मण्यबोधकत्वाद्दोषः । एतत्परिहारार्थमेव कर्तव्यपदाध्याहारः ॥

---

१ यथा देवायते यजमानाय शीकायते स्वाहेति संहितायाम् । पदपाठे तु देवयते शीकयते स्वाहेतीति पाठः शोधितपुस्तके । २ इत आरभ्य प्रतिलिख्यन्तं हस्ताक्षरैरङ्कितपुस्तके शोधितपुस्तके च नास्ति । ३ ब्रह्मान्यबोधकत्वादिति पुस्तकान्तरे पाठः ।

(तत्र मतान्तरम्)

**अथवा अध्याहारकरणापेक्षयाऽथशब्द एवाधिकारे व्याख्येयः, वेदाध्ययनानन्तर्यं तु सिद्धमेव, न ह्यनधीत एव विचारमर्हति, तत्रैतत् स्यात्, स्वतन्त्रतेति, तत्र प्रतिविधास्यामः, वेदार्थब्रह्मणो वेदानुकूलविचार इति।**

**किमत्र युक्तम्?**

**व्याख्यानमिति, व्याख्यानतो विशेषप्रतिपत्तेः। यथा कर्मणि "दर्शपूर्णमासौ तु पूर्वं व्याख्यास्यामः", "अथातो दर्शपूर्णमासौ व्याख्यास्यामः" (आ. श्रौ. सू. १–१) इति।**

(अथशब्दार्थविचारः)

**अथैतर्हीमानि सिध्यन्ति प्रयोजनानि; अधिकाकाङ्क्षा न भवेत्, अध्याहारश्च, पुरुषार्थश्च सिध्येत्, उच्छेदश्च न भवेदिति।**

**कथम्?**

**अथशब्दोऽर्थचतुष्टये वर्तते; मङ्गले, अधिकारे, आनन्तर्ये, अर्थान्तरोपक्रमे च।**

---

अस्मिन्पक्षे वक्ष्यमाणदोषात् पक्षान्तरमाहुः **अथवेति**। **अधिकारे** प्रारम्भे। इदं पूर्वमेव व्याख्यातम्। आनन्तर्यार्थकत्वं खण्डयन्ति **वेदेति**। अधिकारपक्षे स्वातन्त्र्यदोषमनूद्य परिहरन्ति **तत्रेति**। तत्र अधिकारपक्षे, एतत् दूषणम्। किं दूषणमित्यत आहुः **स्वतन्त्रतेति**। दूषणविधानस्य प्रतिविधानप्रतिज्ञामाहुः **प्रतिविधास्याम** इति। इदानीमेव दूषणपरिहारं कुर्मः। परिहारप्रकारमाहुः **वेदेति**। वेदानुकूल इत्यनेन स्वतन्त्रतापरिहारः। ननु पक्षद्वये दूषणाभावात्किं युक्तमित्यत आहुः **व्याख्यानमिति**।

अथशब्दार्थपक्ष एव युक्त इत्यर्थः। कुत इत्यत आहुः **व्याख्यानत** इति। 'व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणम्' इयं प्राचीनवैयाकरणतन्त्रे वाचनिका, पाणिनितन्त्रे ज्ञापकसिद्धा परिभाषा[1]। अस्यार्थः, विशेषस्य अन्यतरार्थरूपस्य व्याख्यानात् शिष्टकृतात्, प्रतिपत्तिर्निश्चयः, हि यतः सन्देहात् शास्त्रं अलक्षणं अननुष्ठापकम्, तथा न, नो चेत् सूत्रं व्यर्थं स्यात्। शास्त्रस्य निर्णयजनकत्वौचित्यादिति। अत्रोदाहरणम् 'अणुदित्सवर्णस्य चाप्रत्ययः' इदं सूत्रम्। अत्राण् परेण णकारेण पूर्वेण वेति सन्देहे सूत्रं व्यर्थं स्यात्। अतः शिष्टैर्व्याख्यातं परेण णकारेणेति। एवमत्रापि अथशब्दः पाणिनिभाष्यकारैरधिकारे व्याख्यात इति प्रारम्भार्थकत्वमेवाथशब्दस्येति दिक्। ऋग्वेदे यजुर्वेदे च कर्मप्रतिपादके कल्पसूत्रे उदाहरणार्थं व्याख्यानं दर्शयन्ति **यथेति**। प्रथमतः ऋग्वेदसूत्रे उदाहरणं दर्शयन्ति **कर्मणि दर्शेति**। यथात्र तु[2] शब्देन पशुसोमादीनां पूर्वं निरूपणस्य व्यवच्छेदः। अथशब्दस्याधिकारार्थत्वात्। व्याख्यानरूपमेव समाधानं कृतं, न तु किञ्चित्तत्राध्याहृतं तद्वदित्यर्थः। दर्शपूर्णमासयोः सर्वयागानां प्रकृतित्वात् प्रथमतः तस्यैव विधानं वक्तुं पूर्वं व्याख्यास्याम इत्युक्तम्। व्याख्यानदृष्टान्तार्थं यजुर्वेदान्तर्गतापस्तम्बसूत्रमाह **अथात** इति। नन्वध्याहारस्य सर्वसम्मतत्वात्स एव कुतो नाद्रियते इत्यतस्तत्र स्वमते भूषणानि परमते दूषणान्याहुः **अथवेति**। **अर्थचतुष्टये वर्तत** इति। अत्र सूत्रे सम्भावितो वर्तत इत्यर्थः। एतेन 'मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथे'ति। 'अथाथो संशये स्यातामधिकारे च मङ्गले, विकल्पानन्तर–

---

१ परिभाषेन्दुशेखरे नागेशकृतं व्याख्यानमिदम्। २ तुशब्देनेत्यारभ्येत्यर्थं इत्यन्तं शोधितपुस्तके नास्ति। 'यथाकृतु' इति तु त्रिपुरीसंशोधु' प्रामादिक एव पाठः, मूले दर्शपूर्णमासौ तु व्याख्यास्यामः इत्यत्र 'तु' शब्दस्य विद्यमानत्वात्। कृतुशब्दस्यानाप्रयोजकत्वाच।

तत्र श्रुतिमात्रेणैव मङ्गलसिद्धेरर्थान्तरस्य च पूर्वोक्तत्वाभावान्नात्र तत्कल्पनम्, अथावशिष्येते, आनन्तर्ये चाधिकारे चेति। आनन्तर्ये त्वध्ययनस्य स्वतःसिद्धत्वादधिकाकाङ्क्षा भवति, तथा सति तदभावान्न विचारः सिध्येत्।

तथाहि—न तावद्धर्मविचारानन्तर्यम्, विपर्ययसम्भवात्। न च पाठतो नियमः, तत्रापि तथा। न चाचाराद् व्यवस्था, तत्राप्यनियमसम्भवात्, प्रत्यवायाश्रवणात्, सम्भवेऽपि न वक्तव्यत्वमध्ययनवत्, तथा च ततोऽप्याकाङ्क्षा भवेत्। न च वैराग्यशमदमादिः पूर्वसिद्धः। तेषामेवाभावात्। न च यदैव सम्भवस्तदैव तत्

---

प्रश्नकात्स्न्र्यारम्भसमुच्चय' इति कोशोक्त्या न विरोधः; अध्याहारश्चेति न भवेदिति पूर्वेणान्वयः। **अर्थान्तरस्येति** । पूर्वं किञ्चिदुक्त्वाथेदमुच्यत इत्यर्थान्तरस्येत्यर्थः। **अधिकाकाङ्क्षा न भवेदित्यस्य** प्रयोजनमाहुः **आनन्तर्ये त्विति संन्यासानुपपत्तिश्चेत्यन्तम्**। मीमांसकमते आक्षिप्तस्यापि शाब्दबोधे मानं स्वीक्रियते। एवं च वेदाध्ययनं विना विचारो न भवतीत्यनुपपत्त्या अध्ययनानन्तर्यमाक्षिप्यत इत्याक्षेपादेव तस्य लाभेऽथशब्देनाधिकं किं बोद्धव्यमित्यधिकाकाङ्क्षा भवेदित्यर्थः। ननु भवत्वधिकाकाङ्क्षा, अधिकं किञ्चित् कल्प्यत इत्यत आह **तथा सतीति**। **तदभावात्** कस्याप्यधिकस्याभावात्। तदेवोपपादयति **विपर्ययसम्भवादिति**। 'अथातो धर्मजिज्ञासे'ति पूर्वतन्त्रसूत्रे अथशब्दस्याप्यानन्तर्यत्वेन ब्रह्मविचारानन्तरं धर्मविचार इत्यस्यापि सम्भवादित्यर्थः। **पाठत इति**। पूर्वं वेदे धर्मः पठ्यतेऽनन्तरं ब्रह्मेति तदेवाथशब्दस्य धर्मानन्तर्यार्थत्वे नियामकमित्यर्थः। **तत्रापि** पाठेऽपि। **तथा** अनियमः। **तत्रापि** आचारेऽपि। **प्रत्यवायेति**। विध्युक्तक्रमभङ्गे प्रत्यवायः। यथा षष्ठाष्टके तृतीये प्रपाठके पशुप्रकरणे अवदानक्रमो विहितः। तथा हि 'हृदयस्याग्रेऽवद्यत्यथ जिह्वाया अथ वक्षसो यद्वै हृदयेनाभिगच्छति तज्जिह्वया वदति, यज्जिह्वया वदति, तदुरसोऽधिनिर्वदत्येतद्वै पशोर्यथापूर्वमिति'। अत्र भाष्यम्। लोके प्रथमं हृदयेन यन्निश्चिनोति तत्पश्चात् जिह्वया वदति। पुनरपि तदेव निःशेषेणोच्चध्वनिना यदा वदति तदानीमुरस ऊर्ध्वदेशगतबलेन वदति तस्माद्धृदयादीनां त्रयाणामंशक्रमेणावद्येत, एतदेव क्रमादवदानं पशोरङ्गेषु यथापूर्वं भवति। यथा लोकेभिवदनव्यवहारः पूर्वं प्रवृत्तस्यैव भवतीति। अत्र तु तदभावात् विहितक्रमाकरणनिमित्तप्रत्यवायाभावादिति भावः। नन्वाचारस्य श्रुतिस्मृतिमूलकत्वेन प्रामाण्यात्; क्वचित् श्रुतौ कर्मब्रह्मविचारयोः क्रमो विहितः स्यादिति विहिताकरणरूपप्रत्यवायः सम्भवेदित्यत आह **सम्भवेऽपीति**। **न वक्तव्यमिति**। अथशब्देन न बोद्धव्यमित्यर्थः। **अध्ययनवदिति**। अन्यथानुपपत्त्या कर्मविचारस्यापि पूर्वत्वबोधादित्यर्थः। पूर्वोक्तदूषणमाह। **तथा चेति**। **आकाङ्क्षा भवेदिति**। अधिकाकाङ्क्षा भवेदित्यर्थः। ननु मास्तु कर्मविचारानन्तर्यं वैराग्यादिसम्पन्नानामेव वेदान्तविचारेऽधिकारात्तदानन्तर्यमथशब्देन बोद्धव्यमित्याशङ्क्ते **न चेति**। न हीत्यर्थः। **तेषामिति**। 'पराञ्चि खानी'त्युपनिषदा इन्द्रियाणां बहिर्मुखता प्रतिपादिता; तेन चेहामुत्र भोगार्थं सामान्यतः पुरुषः प्रवर्तते। अतो नित्यानित्यवस्तुविषयकविचारानन्तरं वेदान्तविचारं विना वैराग्यादीनामसम्भवादित्यर्थः। वेदान्तविचारं विनैव यस्य कस्यचित् पुरुषस्य यागादिना चित्तशुद्धौ; यदैव वैराग्यादीनां सम्भवस्तदैव कर्तव्यमित्याह **न चेति**। तत् निरूपणम्।

---

१ रामानुजशैवादिमत। २ शाङ्करमतानुसारेण। ३ 'स्वाध्यायोऽध्येतव्यः' इति विधिवाक्यमनुसृत्यार्थज्ञानार्थं विचार आरम्भणीयः। तत्राध्ययनानन्तरम् 'अधीत्य स्नायात्' इत्यत्राधीत्य विचार्य च स्नायादित्याक्षेपः। ४ विषयका नन्तराविचारमिति प्रामादिकः पाठस्त्विसम्यास्। ५ न च साङ्ख्यादिना सेत्स्यतीति मन्तव्यम्, वेदाध्ययनवत् वेदान्तविचारप्राक् तदध्ययने नियमाभावात्।

कर्तव्यमिति वाच्यम् । तदसम्भवापत्तेः । तथाहि-ब्रह्मणः परमपुरुषार्थत्वे ज्ञाते, तज्ज्ञानस्यैव साधनत्वेवगते, तच्छेषत्वे च यागादीनामवगते, तदर्थकर्मकरणे, चित्तशुद्धौ सत्यां वैराग्यादि । इदं च वेदान्तविचारव्यतिरेकेण न भवतीत्यन्योन्याश्रयः । निर्धारिते तु वेदान्ते विचारो व्यर्थ एव ।

न च साक्षात्कारस्तत्फलम् । तस्य शब्दशेषत्वेन तत्कल्पनायां प्रमाणाभावात् । दशमस्त्वमसीत्यादौ प्रत्यक्षसामग्र्या बलवत्त्वाद्देहादेः प्रत्यक्षत्वात् । स्वदेहमपि पश्यन् दशमोऽहमिति मन्यते । न तथा प्रकृते । मनननिदिध्यासनविधीनामानर्थ-

---

तदसम्भवापत्तेरिति । अन्योन्याश्रयदोषेणेत्यादि । तयोर्विचारवैराग्ययोः, असम्भवापत्तेरित्यर्थः । अन्योन्याश्रयमेवाऽऽहुः तथा हीत्यादिना । ज्ञाते इति । वेदान्तवाक्यादिति शेषः । तच्छेषत्वे । ब्रह्मज्ञानाङ्गत्वे । अन्योन्याश्रय इति । अयं चक्रकस्याप्युपलक्षकः । स्वापेक्षापेक्षितत्वमात्माश्रयः । स्वापेक्षापेक्षापेक्षितत्वमन्योन्याश्रयः । एकामधिकामपेक्षां निवेश्य चक्रकम् । इदं जागदीश्यां तर्कग्रन्थे स्पष्टम् ।

ननु गुरुमुखात् पठनसमये एव वेदान्तार्थनिर्द्धारे जाते वैराग्यादि, तदा नान्योन्याश्रय इत्यत आहुः—निर्धारित इति । निर्धारिते तु निश्चिते तु । वेदान्तार्थे इति शेषः । निश्चयस्य संशयोच्छेदकत्वात् निश्चये संशय एव नोदेतीति विचारो व्यर्थ इति भावः । ननु विचारस्यात्मसाक्षात्कारार्थत्वमेवास्त्वित्यत आहुः न चेति । तस्य विचारस्य । शब्दशेषत्वेन । शब्दाङ्गत्वेन । शब्दजन्यशाब्दबोधोपयोगित्वेनेति यावत् । तथा च शाब्दबोध एव भविष्यति न साक्षात्कार इत्यर्थः । ननु दशमस्त्वमसीत्यादौ दशमोऽहमित्याकारकं प्रत्यक्षं दृश्यते इत्यत आह—दशम इति । बलवत्त्वादिति । समाने विषये प्रत्यक्षसामग्र्या बलवत्त्वादित्यर्थः । पश्यन्निति । चक्षुःसन्निकर्षरूपसामग्र्येत्यादिः । मन्यत इति । दशमः क्व गत इति व्यामोहाक्रान्ते पुरुषे दशमस्त्वमसीति परेण बोधिते सङ्ख्यारूपे दशमत्वे चक्षुःसंयुक्तदेहसमवायरूपसन्निकर्षात् कृशोऽहमितिवद्दशमत्वविशिष्टोऽहमिति देहविषयकं प्रत्यक्षं जायत इति भावः । न तथा प्रकृत इति । विचारे न तथा । वाक्याद्देहवद्ब्रह्मत्वेनात्मसाक्षात्कारो न भवतीति दृष्टान्तवैषम्यम्; ब्रह्मत्वात्मनोरुभयोरप्यान्तरत्वात्, बहिरिन्द्रियजन्यशब्दप्रमाणाग्राह्यत्वादिति भावः ।

ननु 'आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य' इति वाक्येन दर्शनोत्तरं श्रवणविधानेन ग्राह्यत्वं स्वीक्रियत इत्यत आहुः मननेति । ननूत्तमस्य साक्षात्कारः, मन्दस्य मननमिति, अधिकारिभेदेन

---

१ अभ्यासखण्डनम् । २ मायावादिमतम् । तन्मते तत्त्वमस्यादिवाक्यजन्यं ज्ञानमेव ब्रह्मापरोक्षत्वसाधनम्, दशमस्त्वमसीत्यादाविव । अन्यथा शास्त्रवैयर्थ्यापत्तेः । शास्त्रस्याज्ञातज्ञापकत्वात्, सप्रयोजनत्वाच्च । भाष्यप्रकाशे विकल्पचतुष्टयेनास्य मतस्य खण्डनं त्ववश्यं द्रष्टव्यं सुधीभिः । ३ मुख्यफलाजनकत्वे सति मुख्यफलजनकव्यापारजनकत्वमङ्गत्वम् । तदेव च पारार्थ्यम् । "शेषः परार्थत्वात्" ( ३-१-२ ) इति पारमर्षसूत्रात् । न च 'येन विना यन्न सम्भवति तत्तदङ्गम्' इति श्रीमत्प्रभुचरणोदीरितं टिप्पणीस्थमङ्गलक्षणमत्रानुसन्धेयमिति वाच्यम्, तस्य बहुधा खण्डितत्वात्तत्प्रकारानुसारित्वाच्च । तथाहि—शेषलक्षणमानोचाचार्यात्स्याच्छेषित्वलक्षणम् । अतः शेषः परार्थत्वादित्युक्तं शेषलक्षणम् ॥ × × × यथान्यदविनाभावप्रयोज्यत्वादिकारणम् । तत्र सर्वं निराकर्तुं पारार्थ्यमिह गृह्यते ॥ × × × शेषत्वं केचिदिच्छन्ति त्वविनाभावकारणम् । प्रयोज्यलक्षणं त्वन्ये तदाधिक्येन चापरे ॥ अन्ये त्वन्ततया तस्य विध्यन्तत्वपरिग्रहात् । उपकारेण शेषत्वं बहुभिर्येन लक्षितम् ॥ तद्भावित्वेन तावद्यो येन विना न भवति स तस्य शेषः । तद्यथाङ्कुरस्तोयादिभिर्विना न भवति, घटश्च मृत्पिण्डदण्डचक्रादिभिरिति तयोस्तानि शेषत्वेन भाव्यन्ते । तत्रोच्यते—अयुक्तमेवं शेषत्वमविनाभावलक्षणम्, व्यभिचारात् तथाहीदमशेषेष्वपि दृश्यते, सर्वदा ह्यविनाभूता रूपस्पर्शादयः क्षितौ । न चैषां तुल्यकल्पत्वाद् भवन्त्यन्योन्यशेषता । स्वामिना च विना दासा न भवन्ति कदाचन ॥ तथा गृहादयस्तेषां शेषः स्वामी न चेष्यते । प्रधानानां प्रधानैश्च विनाभावो न दृश्यते ।

क्यप्रसङ्गात् । न चाधिकारिभेदः कल्पनीयः । शब्दज्ञाने तत्कल्पनायां प्रमाणाभावात् । अत्यन्तासत्येऽप्यर्थे शब्दस्य ज्ञानजननात् । प्रमाणसङ्करापत्तिश्च । मनसा तज्जननेपि तथा । तस्मात् प्रथमं शाब्दमेव ज्ञानमिति मन्तव्यमनुभवसिद्धत्वात् । इदानींतनानामपि शमादिरहितानां निर्विचिकित्सितवेदार्थज्ञानोपलब्धेः । संन्यासानुपपत्तिश्च ।

( अध्याहारपक्षे दूषणम् )

किंच, अध्याहारश्च कर्तव्यः स च कर्तव्यादिपदानाम् । यदि तत्स्वार्थं व्यर्थमेव वाक्यं स्यात् । परार्थत्वे त्वशक्यम् । न हि तैर्विचारः कर्तुं शक्यते । स्वकृति-

---

व्यवस्था स्वीक्रियत इत्यत आहुः—**शब्दज्ञान** इति । शाब्दबोधरूपे । **प्रमाणाभावादि**ति । अधिकारिभेदकल्पनायां प्रमाणाभावादित्यर्थः । कुत इत्यत आह—**अत्यन्ते**ति, खपुष्पं सुरभीत्यादौ अत्यन्तासतोऽपि ज्ञानं जायते, अपरोक्षं तु न जायत इति प्रमाणाभावादित्यर्थः । शाब्दापरोक्षवादमेव दूषयन्ति **प्रमाणसङ्करे**ति । एकत्र शब्दत्वसाक्षात्कारत्वयोः सत्त्वादित्यादिः । सङ्करस्य प्रमाणत्वबाधकत्वात् । ननु तत्त्वमस्यादिवाक्यात् 'मनसानुद्रष्टव्य' इति श्रुतिसहकृतात् केवलात्साक्षात्कारो भविष्यतीत्यधिकारभेदो युक्त इति चेत्तत्राऽऽहुः—**मनसे**त्यादि । **तज्जनने** साक्षात्कारजनने । **तथा** मननादिविधिवैयर्थ्यम् । सिद्धमाहुः—**तस्मादि**ति । **मन्तव्यमि**ति । सर्वेषां भवतीति स्वीकर्तव्यमित्यर्थः ।

अनुभवमेवाऽऽहुः **इदानीमि**ति । अस्मिन् युग उत्पन्नानां त्रैवर्णिकानामपीत्यर्थः । **उपलब्धेरि**ति । विचारेणेति शेषः । दूषणान्तरमाहुः—**संन्यासे**ति । उपनिषदि 'वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्त्वाः' इत्यादिना वेदान्तार्थनिश्चयोत्तरं संन्यासस्य प्रतिपादितत्वात्, वेदान्तार्थविचाराभावे संन्यासानुपपत्तिरित्यर्थः । **कर्तव्यादी**ति । आदिपदेन विधिबोधकपदानां सङ्ग्रहः । द्वितीयं दूषणमाहुः—**तदि**ति । विचारकरणम् । **वाक्यमि**ति । मीमांसावाक्यमित्यर्थः । वाक्यप्रयोगाभावे स्वयमेव मनसि विचारं कर्तुं शक्यत्वादिति भावः । **अशक्यमि**ति । अशक्यत्वमेवाऽऽहुः **न ही**ति । **तैः**, अन्यैः । शक्यत इति । मीमांसाविचारस्यातिदुरूहत्वादिति शेषः । **स्वकृती**ति । अशक्यत्वात् परैर्विचारो न

---

तत्र स्याच्छेषशेषित्वं तेषामपि परस्परम् ॥ एवमङ्गप्रधानानामङ्गानां च परस्परम् । प्रसज्येतैव शेषत्वमविनाभावलक्षणम् ॥
××× एतेनाध्ययनाध्यापनकृषिद्रव्यार्जनादिषु वाच्यं प्रसक्तशेषित्वम्, तैर्विना क्रत्वसम्भवात् । तस्मात्सत्यविनाभावे विनाभावेऽपि वा क्वचित् । प्रयोज्यो यस्य यस्तस्य स शेष इति निश्चयः ॥" इत्याहुर्भट्टपादाः । श्रीमत्प्रभुचरणोदीरितं लक्षणं तु सुबोधिन्यास्तत्प्रसङ्गानुसारेण व्याख्येयमिति मया सुबोधिन्यनुवादटिप्पण्यां बहुशः प्रपञ्चितं, प्रस्थानरत्नाकरटीकायामानन्दलहर्यां, किरणावल्यां चेति तत्ततोऽवगन्तव्यम् ।

१ शशशृङ्गादाविति प्राभाकरमतम् । २ न तावदयमेकान्तेनाविषय इत्यारभ्याध्यासभाष्यमनानुसन्धेयम् । तत्खण्डनं च प्रकारो द्रष्टव्यम् । साङ्कर्यं च परस्परात्यन्ताभावसमानाधिकरणयोर्धर्मयोरेकत्र समावेशात् । तथाच दशमस्त्वमसीत्यादाविव तत्त्वमस्यादिवाक्येनापरोक्षज्ञाने साङ्कर्यम् । प्रत्यक्षाप्रत्यक्षयोरेकत्र समावेशात् । शब्दापरोक्षं तु; लोके, गामानय, अश्वं यथा नैत्यायावापोद्वापाभ्यामनुभवगम्यत्वात् । न तथा ब्रह्मावगमः, परोक्षत्वात् । एवं च शाब्दज्ञानं द्विविधम्, लौकिकं वैदिकं चेति । 'यजेत स्वर्गकामः' इत्यादौ स्वर्गपदार्थस्य शब्दैकसमधिगम्यत्वात् । एवं ब्रह्मापि । अतः प्रत्यक्षत्वशब्दत्वयोरत्रापि साङ्कर्यमिति बोध्यम् । अथवा शब्दरूपेण प्रमाणेन प्रत्यक्षत्वपरोक्षत्वजात्योः साङ्कर्यं स्यात् । इन्द्रियकार्यतावच्छेदकतयाऽनुमानादिकार्यतावच्छेदकतया च सिद्धे प्रत्यक्षत्वपरोक्षत्वजाती इति गूढार्थदीपिकाकारोक्तदिशावगन्तव्यम् । एवं च स्वसामानाधिकरण्य–स्वाभावसामानाधिकरण्य–स्वसमानाधिकरणाभावप्रतियोगित्व–एतत्त्रितयसम्बन्धेन यत्किञ्चिज्जातिविशिष्टत्वं सङ्करत्वमिति समुदितार्थः । विस्तरस्तु तन्त्रान्तरे द्रष्टव्यः । प्रत्यक्षत्वशब्दत्वजातिविचारोऽपि तन्त्रान्तरे द्रष्टव्यः सुधीभिः । ३ संशयानुपपत्तिरिति न सङ्गच्छते । पञ्चस्वपि व्याख्यानेषु संन्यासेति प्रतीकदर्शनात् । ४ आनन्तर्यार्थे इमानि चत्वारि दूषणानि ।

वैयर्थ्यं च । असङ्गतिश्चास्य सूत्रस्य भवेत् ।

किञ्च । अधिकारपक्षे पुरुषार्थः सिध्यति, नानन्तर्यपक्षे । उक्तन्यायात् ।

( आनन्तर्ये दूषणान्तरम् )

किञ्च । तादृशस्याधिकारिणः श्रवणमात्रेण कृतार्थस्य समाधिनिरतस्य प्रवचनासम्भवाच्छास्त्रोच्छेदः । शास्त्रविरोधश्च । साधनानामग्रे स्वयमेव वक्तव्यत्वात् । अतोऽनेकदोषदुष्टत्वादधिकारार्थ एव श्रेयान् ।[1]

( जिज्ञासायां विशेषविचारः )

नच ज्ञातुमिच्छा जिज्ञासा नाधिकर्तुं शक्येति वाच्यम् । जिज्ञासापदस्य विचारार्थत्वात् । अत एव 'जिज्ञासितुमिच्छेदि'ति ( शाबरभा० १-१-१ ) पुराविदां

---

क्रियते चेत् मीमांसाविषयिणी या स्वकृतिस्तस्या वैय्यर्थ्यमिति भावः । कैश्चिदुक्तैर्विचारः कर्तुं शक्यते चेत्तत्राऽऽहुः—असङ्गतिश्चेति । तथा च ब्रह्मजिज्ञासा परैः कर्तव्येति प्रतिज्ञा कृता, अग्रिमसूत्राणि तु स्वेन प्रकृतानीति प्रतिज्ञाहानिरूपाऽसङ्गतिर्भवेदित्यर्थः । पुरुषार्थासिद्धिरूपं तृतीयं दूषणमाहुः—किञ्चेति । पुरुषार्थ इति । विचारे क्रियमाणे मननद्वारा मोक्षः सिद्ध्यतीत्यर्थः । उक्तन्यायादिति । अन्योन्याश्रयदोषाद्विचाराभावादित्यर्थः ।

चतुर्थं दूषणमाहुः—किञ्चेति । साधनचतुष्टयसम्पन्नेन श्रवणं कृतं चेत्, तेनैव कृतार्थत्वात्समाधिनिरतत्वेनाध्यापनाभावात् शास्त्रोच्छेद इति भावः । अग्रे तृतीयाध्याये । यौगिके जिज्ञासापदे दूषणमुद्भाव्य परिहरन्ति न चेति । शक्येति । इच्छायाः प्रारम्भस्य कर्तुमशक्यत्वादित्यर्थः । जिज्ञासापदस्य रूढ्या विचारार्थकत्वे पूर्वमीमांसाभाष्यकारसम्मतिमाहुः अत एवेति । पुराविदां शाबरभाष्यकृताम् । ननु विचारपदमेव कुतो

---

१ वस्तुतो जिज्ञासापदस्य रूढ्या विचारार्थकत्वमेवाङ्गीकार्यम् । योगाद्रूढेर्बलवत्त्वात् । ननु यद्यपि जिज्ञासितुमिच्छेदिति शाबरभाष्यं जिज्ञासापदस्य विचारार्थकत्वं प्रदर्शयितुमुदाहरन्ति, तथापि तत्र न तथाभिप्रायः । भट्टपादैरिच्छायामिच्छाप्रदर्शनात् । मन्दाग्नीनां हि भोजनेच्छायामिच्छा दृश्यत एव । तथा चाहुर्भट्टपादाः—"सन्वाच्येच्छान्तरं कर्म ज्ञानं व्याप्नोति तावता । ज्ञानोपसर्जना सैव न तु विध्यादि गम्यते । इष्येत्तु कर्मवाच्यः स्याद्धर्मः सा वाऽथवा द्वयम् । समानकर्तृकत्वं तु तुमुनोक्तं लिङा विधिः । एवं विषयनानात्वान्न काचित्पुनरुक्तता । सृष्टिवेच्छाभिनिर्वृत्त्यै द्वितीयेच्छात्र सूचिता" इति । प्रभाकरगुरवोऽपि—"धर्मं जिज्ञासितुमिच्छेदिति कस्य सूत्रावयवस्य व्याख्यानमेतत्? धर्मजिज्ञासापदस्येति ब्रूमः । ननु धर्मं जिज्ञासेदिति वक्तव्यम् । प्रकृतिप्रत्यययोर्हि प्रत्ययार्थस्य प्राधान्यमित्युत्सर्गः । धर्मजिज्ञासापदे पुनः प्रकृत्यर्थप्राधान्यप्रदर्शनायायं प्रयत्नः ।" इत्याहुः शाबरभाष्यटीकायां बृहतीसंज्ञिकायाम् । तद्विवरणे च शालिकनाथमिश्राः प्राहुः—"कस्य सूत्रावयवस्य व्याख्यानमेतदिति द्वितीयेच्छाश्रवणात्पृच्छति । धर्मजिज्ञासापदस्येति । अत्रायमभिप्रायः—जिज्ञासां प्रति धर्मस्य प्राधान्यम्, तच्च प्रधानं यत्नेन व्याचिख्यासिष्यते । अतश्च प्राधान्यं वक्तुं द्वितीयेच्छेति । ननु धर्मं जिज्ञासेदिति वक्तव्यमित्येतमभिप्रायमजानतः प्रश्नः । प्रकृतिप्रत्यययोर्हि इत्यभिप्रायं विवरणम्—यदि हि द्वितीयेच्छा न प्रदर्श्यते ततो धर्मप्राधान्यं न स्यात् । द्वितीयेच्छाप्रदर्शनेन हि धर्मस्य प्राधान्यं शक्यते दर्शयितुम् । यदि तु न तथा प्रदर्श्येत, तदा प्रत्ययार्थत्वादिच्छायाः प्राधान्यं स्यात्, प्रकृत्यर्थो विज्ञानं तद्विशेषणं स्यात् । ज्ञानविशेषणं च धर्मः स्यात्, न तु प्रधानम् । तेन धर्मजिज्ञासापदे प्रकृत्यर्थस्य प्राधान्यप्रदर्शनाय द्वितीयेच्छा प्रदर्शिता । द्वितीयेच्छायां हि दर्शितायां धर्मस्य प्राधान्यम्, तत्प्राधान्यं च तादर्थ्ये ज्ञानस्य, तादर्थ्यं च ज्ञानस्येच्छायास्तादर्थ्ये भवतीति द्वितीयेच्छाप्रदर्शनेन धर्मस्य प्राधान्यमुक्त्वा प्रकृत्यर्थप्राधान्यप्रदर्शनं कृतं भवतीति । तेनायमर्थः—"धर्माय जिज्ञासा धर्मजिज्ञासेति ।" शाबरभाष्येऽपि "सा हि तस्य ज्ञातुमिच्छा" इत्यग्रे वक्ष्यमाणत्वाज्ज्ञातुमित्यस्य विचारयितुमित्यर्थे सोऽव्ये वदतो व्याघातापत्तिः । एवं च शबरस्वामिनां नायमभिप्रायः । भाट्टे प्राभाकरे च इच्छाद्वयस्य सुस्पष्टतया प्रतिपादितत्वाच्च । तेन पुराविदां वचनोपन्यासोऽकिञ्चित्कर इति पूर्वपक्षे—वयं ब्रूमः—इच्छाया अकर्तव्यत्वात्सामान्यतो ज्ञाते विशेषजिज्ञासा विचारं विना न सम्भवतीत्यन्तर्णीतविचारार्थकजिज्ञासापदसामर्थ्याद्वेदाध्ययनानन्तरं तद्धेतुको धर्मविचारः कर्तव्य इति "अथातो धर्मजिज्ञासा" इति प्रतिज्ञासूत्रार्थः सम्पद्यते । अथवा "अथाधिक्रियते यस्मा-

वचनानि। जिज्ञासापदेन चैतज्ज्ञापयति । ब्रह्मज्ञानं पुरुषार्थसाधनत्वादिष्टम्। तदिच्छापूरणाय विचार आरभ्यत इति।

( अतःशब्दविचारः )

यस्मात् कर्मादिभ्यो ज्ञानमेव पुरुषार्थसाधनमित्यतस्तज्ज्ञानाय विचारोऽधिक्रियत इत्यतःशब्दार्थः।

( अधिकारिविचारः )

अधिकारी तु त्रैवर्णिक एव। न हि वेदविचारस्य वेदाधिकार्यतिरिक्तः शक्यते

---

नोक्तमित्यत आह—जिज्ञासापदेनेति । इष्टम् । इच्छाविषयीभूतम्। तदिच्छा ब्रह्मज्ञानविषयिणीच्छा।

अधिकारपक्षे वाक्यार्थं वक्तुं अतःशब्दार्थमाहुः—यस्मादित्यादि। ननु सामान्यतः अतःशब्दस्य पूर्वावधौ प्रयोगदर्शनात्। 'अथातो गोभिलोक्तानामन्येषां चैव कर्मणाम्। असपणानां विधिं सम्यक् दर्शयिष्ये प्रदीपवत्' इति कात्यायनस्मृतौ। किं पूर्वमित्याकाङ्क्षायां कर्मविचारस्य पूर्वत्वं वक्तव्यम्, तच्च न सम्भवति, तस्य पूर्वत्वं पूर्वमेव खण्डितमत आहुः अत इति। यथा धर्मो यशःप्रदः, सुखदश्चातः करोमीत्यादौ इष्टेऽपि अतःपदप्रयोगो दृश्यते, तथात्रापि ब्रह्मज्ञानं पुरुषार्थसाधनम्, अतः ब्रह्मज्ञानार्थं विचार आरभ्यत इति अतःशब्द इत्यर्थः। एवं च अथातो ब्रह्मजिज्ञासेत्यत्र ब्रह्मपदस्य ब्रह्मवाचकत्वम्, अतःपदस्य ज्ञानार्थे तात्पर्यग्राहकत्वम्। तथा च ब्रह्मविषयकज्ञानानुकूलो विचार आरभ्यते, इति वाक्यार्थः । अत्र यथा एकं पदं एकस्मिन्नर्थे यौगिकं अन्यस्मिन्नर्थे रूढं तद्यौगिकरूढमित्युच्यते। यथा उद्भिदादिपदं यागविशेषे रूढं वृक्षे यौगिकम्, तथात्रापि जिज्ञासापदस्य यौगिकरूढत्वम्। ज्ञानेच्छायां यौगिकम्, प्रकृते विचारे रूढत्वं स्वीक्रियते।

ननु ब्रह्मनिरूपणे प्रतिज्ञाते प्रेक्षावतां प्रवृत्त्यर्थं, अधिकारिविषयसम्बन्धप्रयोजनानि वक्तव्यानि, तत्र विषयादीनामग्रे वक्तव्यत्वात् अधिकारिनिर्णयमाहुः—अधिकारीति। ननु वेदार्थविचारे च त्रैवर्णिक एवाधिकारीति सत्यम्, परन्तु, वेदान्तार्थविचारे गृहानुरक्तस्य फलाभावात् विरक्तत्वमधिकारिविशेषणं देयम्,

---

र्धर्मज्ञानफलं महत्। अतो धर्मावबोधाय विचारो योगरूढितः" इति श्रीमदाचार्यचरणोक्त्या धर्मज्ञानस्य महाफलबोधकत्वादतो हेतोर्धर्मविचारोऽधिक्रियते–इति शास्त्रारम्भसूत्रार्थः। तेन जिज्ञासितुं विचारयितुमिच्छेदित्यर्थ एव साधीयान्। अन्यथा "सा हि तस्य ज्ञातुमिच्छा" इति न वदेत्, पुनरुक्तिदोषप्रसङ्गात्। नहि द्वितीयेच्छयैव धर्मस्य प्रधानताभ्युपगमः, जिज्ञासाशब्दस्य विचारार्थकत्वेऽपि न हीयते प्राधान्यम्। निःसन्दिग्धं ज्ञानं हि मीमांसायाः प्रयोजनम्। तच्च न ज्ञानेच्छामात्रेण सम्भवति। तथाहि–"जिज्ञासितं सुसम्पन्नमपि ते महदद्भुतम्" "जिज्ञासितमधीतं च ब्रह्म यत्तत्सनातनम्" इति प्रथमे, "एवं जिज्ञासयापोह्य नानात्वभ्रममात्मनि। उपारमेत विरजं मनो मय्यर्प्य सर्वगम्" इत्येकादशे च श्रीमद्भागवते जिज्ञासापदस्य विचारार्थकत्वे रूढ्या प्रयोगः। एवं च जिज्ञासितुं नाम विचारयितुमिच्छेदित्यर्थ एव श्रेयान्। ढुसुनस्त्वादध्यर्थरूपमुद्देश्यम्। तथाच धर्मकर्मकविचारकर्तृकेच्छानुकूलो व्यापारो मीमांसकानां मते। वयं [illegible] धर्मसम्बन्धिविचारकर्तृकत्वमेव ब्रूमः। श्रेपषष्ठीस्वीकारात्। उद्भिदादिपदवज्जिज्ञासापि योगरूढः शब्दः, योगेन ज्ञानेच्छां रूढ्या च विचारं वक्ति। अत एव "सा हि तस्य ज्ञातुमिच्छा" इत्युक्तं शबरस्वामिना। ज्ञातुं निःसन्दिग्धतया। अयमेव विचारः। अन्यथा व्युत्पत्तिप्रदर्शनं व्यर्थतां सेत्स्यति। पौनरुक्त्यं चापरिहार्यताम्। सिद्धान्तशोभाकाराश्चानैवमपि प्राहुः—ब्रह्मजिज्ञासाशब्दौ योगरूढिभ्यां सगुणनिर्गुणयोर्ज्ञानेच्छाविचारयोश्च द्वयोर्द्वयोः प्रत्येकं बोधकौ। तेनाधिकारार्थरङ्गतिरिति।

१ अथात इत्यारभ्य स्मृतावित्यन्तं पचटीकोपेतेऽणुभाष्ये न दृश्यते। प्रमादेव स्खलनमस्य वचनस्य स्यादपि। अतःशब्दो हेत्वर्थः, अन्ये त्वतःशब्दस्य हेत्वर्थत्वं जगदुः। २ इष्टसाधनतायामित्यर्थः। 'इष्टे' तु प्रामादिकः पाठः। अयमभिसन्धिरित्यारभ्य भामती च। तदन्न न यस्माद्वेद इत्यारभ्य कर्तव्येत्यन्तं शाङ्करभाष्यमत्रानुसन्धेयम्। प्रतिभातीतीष्टसाधनत्वेन निरस्यते विवरणकृद्भिः। अत एव प्रारम्भे चतुर्थ्यर्थे सार्वविभक्तिकस्तसिल्प्रत्ययोऽत्र प्रदर्शितः।

कल्पयितुम् । न हि मन्दमतेर्वेदो नायातीति त्रैवर्णिके मतिमत्त्वमधिकारिविशेषणं कल्प्यते । अन्धपङ्ग्वादीनामिव कर्मणि, गृहाद्यासक्तस्य मननाद्यसम्भवात् साक्षात्कारो न भविष्यति ।

न च धर्मन्यायेन गतार्थत्वमस्य । अप्रतिज्ञानादनुपलब्धेश्च । न च जगत्कारणं परमात्मा वा प्रकृतिर्वा परमाणवो वेति सन्देहे किञ्चिदधिकरणमस्ति ।

( कथं न पूर्वया गतार्थतेति )

स्यादेतत् । अथातो धर्मजिज्ञासा ( जै. सू. १-१-१ ) इति धर्मविचारं प्रतिज्ञाय नोदकवाक्यार्थस्य धर्मत्वमुक्त्वा प्रामाण्यपुरःसरं सर्वे सन्देहा निवारिताः । तत्र

---

तथा च साधनचतुष्टयसम्पन्नस्यैव विरक्तत्वात् मन्मतप्रवेश इत्यत आहुः न हीति । कल्प्यत इत्यत्रान्वयः । मन्मते त्रैवर्णिक एवाधिकारी । अनुरक्तस्य तु फलाभावेनार्थादेवानधिकारित्वाद्व्यर्थं विरक्तत्वं विशेषणम् । यथा वेदाधिकारिणि मतिमत्त्वं कर्माधिकारिणि अन्धपङ्ग्वादिभिन्नत्वं विशेषणं न कल्प्यते तथात्रापीति समुदितार्थः । यथा अन्धपङ्ग्वादीनां फलाभावस्तथा प्रतिपादितं कल्पसूत्रे । तथाहि दर्शपूर्णमासप्रकरणे यजमानस्य 'आज्यमसि सत्यमसि सत्यसाध्यक्ष्यमसि' इत्यादिमन्त्रेण आज्यावेक्षण विहितम्, तत्रावेक्षणस्य लोपात् अङ्गवैकल्येन फलाभावः । एवं दर्शपूर्णमासेष्टौ अन्ते यजमानस्य 'विष्णोः क्रमोऽस्यभिमानिहा गायत्रेण च्छन्दसा दिवमनुविक्रमे निर्भक्तः स यन्द्विष्मः' इत्यादिमन्त्रेण गमनरूपं विष्णुक्रमणं विहितम् । तच्च पङ्गोर्न सम्भवतीति फलाभाव इति ।

एवं रीत्या वेदान्तविचाररूपमीमांसाया आवश्यकत्वमुक्तम् । विचारे च त्रैवर्णिकानामधिकारः, इत्यपि स्वीकृतम् । परन्तु, तत्र कर्मण्यपि त्रैवर्णिकानामधिकारोऽस्तीति कर्ममीमांसया चरितार्थत्वमस्या मन्यमानं मीमांसकं कटाक्षयन्त आहुः—न चेति । न हीत्यर्थः । अथातो धर्मजिज्ञासेत्यत्र धर्मशब्दस्य वेदार्थमात्रार्थत्वेन धर्मविचारप्रतिज्ञयैव ब्रह्मविचारस्य जायमानत्वेन भिन्नतया न वक्तव्येत्यर्थः । अस्या वेदान्तमीमांसायाः । यद्यपि क्वचित्पुस्तकेषु अस्येति पाठः, तथापि अत्रैव भाष्ये नार्थोऽनया मीमांसयेत्युक्तत्वात् क्वचित्पुस्तके अस्याः इति पाठस्य दृष्टत्वाच्च स एव पाठ इति प्रतिभाति । अप्रतिज्ञानात् । जैमिनिना, अथातो ब्रह्मजिज्ञासेति प्रतिज्ञाया अकृतत्वात् । अनुपलब्धेरिति । ब्रह्मप्रतिपादकाधिकरणानुपलब्धेरित्यर्थः । तदेवाऽऽहुः न चेति । अत्र मीमांसकमते जगतः प्रवाहरूपेण नित्यत्वमतः कारणताविचार एव नास्ति । ब्रह्ममीमांसकः शङ्कते स्यादेतदिति । नोदकवाक्यार्थस्य नुदप्रेरणे इति धातुनिष्पन्नं नोदकं प्रेरकं यत् सोमेन यजेतेत्याकारकं वेदवाक्यं तदर्थस्य यागानुकूलभावनारूपार्थस्य धर्मत्वमुक्त्वा चोदनालक्षणोऽर्थो धर्म इति सूत्रेण धर्मे प्रामाण्यं प्रतिपाद्येत्यर्थः ।

ननु वेदस्य विध्यर्थवादमन्त्रनामधेयरूपेण चतुर्विधत्वम्, तन्मध्ये विधेस्तु प्रामाण्यं प्रतिपादितम् । अर्थवादानां निरर्थकत्वेनाप्रामाण्यमत आहुः प्रामाण्यपुरस्सरमिति । 'विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः' इति सूत्रेण 'स्वाध्यायविधिना वेदः पुरुषार्थाय नीयते । सर्वस्तेनार्थवादानां प्रायस्तेन प्रमाणता'

---

१ साङ्ख्यमते । २ वैशेषिकमते । ३ मीमांसकस्य पूर्वपक्षः । ४ अन्धस्येत्यपेक्ष्यत इति क्वचित्, तन्न रुचिरम्; अर्थादेव प्राप्तत्वात् ।

ब्रह्मज्ञानस्यापि धर्मत्वम्। "आत्मेत्येवोपासीत" (बृ.१-४-७) "आत्मानं लोकमुपासीत" (बृ. १-४-१५) "तद्ब्रह्मेत्युपासीत" (तै.३-१०-४) "आत्मा वारे द्रष्टव्यः" (बृ. २-४-५) इत्यादिनोदनावाक्यार्थत्वात्। "अयं हि परमो धर्मो यद्योगेनात्मदर्शनम्" (या. स्मृ. १-८) इति स्मृतेश्च। सृष्ट्यादिवाक्यानां त्वर्थवादत्वम्। आरोपापवादविषयधर्मप्रतिपादकत्वेन विधेयोपासनाविषयस्तावकत्वात्। न च ज्ञानादीनामविधेयत्वं प्रमाणवस्तुपरतन्त्रत्वेनाकृतिसाध्यत्वादिति वाच्यम्। न हि सर्वात्मनाऽसाध्यं प्रकारभेदस्त्वप्रयोजकः। सर्वस्यापि कारणेषु पुरुषव्यापृतिः। तदत्र वृत्तिसम्पादने प्रमाणसम्पादने वा पुरुषकृतिसाध्यत्वम्। अन्यथा

---

इति कारिकया च अर्थवादानां प्राशस्त्यबोधकत्वेनार्थांशे प्रामाण्यम्, मन्त्रादीनां देवताप्रकाशनद्वारा शब्दांशे प्रामाण्यं च प्रतिपाद्य, नामधेयानां नामावच्छिन्नधात्वर्थनिष्ठभावनाख्यधर्मप्रमितौ च प्रामाण्यं च प्रतिपाद्य, सकलवेदे अर्थवादानां प्ररोचकतयेव मन्त्राणामपि स्मारकतया प्रामाण्यव्यवस्थापनपुरःसरं शब्दार्थोभयविषयकाः सन्देहा निवारिता इत्यर्थः। ब्रह्मज्ञानस्य धर्मत्वप्रतिपादकविधीनाह—आत्मेति।

ननु जगत्कारणप्रतिपादकवाक्यविचारो न कृत इत्यत आहुः—सृष्ट्यादीति। अस्माकं मते जगतो नित्यत्वात् कर्तुरभावेन तत्प्रतिपादकानां 'यतो वा इमानि भूतानि जायन्ते' इत्यादिवाक्यानां अर्थवादत्वमित्यर्थः। ननु कथमस्यार्थवादत्वमित्यत आहुः—आरोपेति। धर्मेति। कर्तृत्वाकर्तृत्वरूपधर्मप्रतिपादकत्वेन विधेयस्तावकत्वात्प्रामाण्यमित्यर्थः। ननु कृतिसाध्यत्वस्यैव विध्यर्थत्वात् सामान्यतो ज्ञाने यत्नापेक्षाया अभावात् ब्रह्मज्ञाने विध्यर्थत्वरूपधर्मत्वाभाव इत्याशयेनाशङ्कते—न चेति। प्रमाणेति। प्रमाणं चक्षुरादि, वस्तु घटादि। परतन्त्रत्वेन, उभयाधीनत्वेन। न हि केवलं ज्ञाने प्रमाणवस्त्वपेक्षा, किन्तु, प्रत्यक्षादिज्ञाने चक्षुःसन्निकर्षापेक्षाप्यस्तीति यत्नं विना चक्षुःसन्निकर्षो न जायत इति कृत्वा परम्परया कृतिसाध्यत्वं ज्ञानेऽप्यस्तीत्याशयेनाऽऽहुः सर्वात्मना। सर्वप्रकारेण। असाध्यमिति। ज्ञानमिति शेषः। ननु यागस्य साक्षात्कृतिसाध्यत्वमस्तीति तस्यैव धर्मत्वमित्यत आहुः—प्रकारेति। प्रकारो विशेषणं तस्य भेदः। यागे साक्षात् यत्कृतिसाध्यत्वं विशेषणं तदेव धर्मत्वे प्रयोजकम्। परम्परया यत्कृतिसाध्यत्वं विशेषणं तद्धर्मत्वे प्रयोजकं न भवतीत्येवंरूपो भेद इत्यर्थः।

अप्रयोजक इति। धर्मत्वे प्रयोजको न भवतीत्यर्थः। साक्षाद्वा परम्परया वा केवलं कृतिसाध्यत्वमेव धर्मत्वे प्रयोजकमिति स्वीकर्तव्यमिति भावः। नन्विदं किमर्थं स्वीकर्तव्यमित्यत आहुः—सर्वस्यापीति। यागरूपधर्मस्य यागजन्यापूर्वरूपधर्मस्यापीत्यर्थः। कारणेषु यागे करणीभूताः क्रियाकलापा अपूर्वे कारणीभूताः प्रधानप्रयाजादयः तेषु सर्वेषु पुरुषस्य व्यापृतिर्यत्नरूपो व्यापारोऽस्तीत्यर्थः। प्रकृते ज्ञाने। उपसंहरति तदिति। तत्तस्मात्कारणात्। अत्र ब्रह्मज्ञाने। वृत्तिसम्पादने। वृत्तेः सम्पादनं वृत्तिसम्पादनम्, वृत्तेः ब्रह्माकारवृत्तेः, बुद्ध्यवस्थाविशेषरूपाया इति यावत्। सम्पादने उत्पादने। प्रमाणसम्पादने। प्रमाणस्य चक्षुरादेर्मनसश्च 'आवृत्तचक्षुः अमृतत्वमिच्छन्' इति श्रुत्या चक्षुषि आवृत्तत्वसम्पादने। 'अतो निर्विषयं नित्यं मनः कार्यं मुमुक्षुणा' इति श्रुत्या मनसो निर्विषयत्वसम्पादने पुरुषप्रयत्नसाध्यत्वमित्यर्थः। ननु वृत्तिसम्पादनादिषु किमर्थं यत्नापेक्षेत्यत आह—अन्यथेति। अन्यथा वृत्तिसम्पादने सर्वथा वृत्ति-

---

१ यथा "वायुर्वै क्षेपिष्ठा देवता" इत्यादिवाक्यानां "वायव्यं श्वेतमालभेत भूतिकामः" इति नोदकवाक्यान्तर्गतवायुदेवतास्तावकत्वेन प्रवृत्त्युपयोगितया तद्वाक्यप्रयोजनेनैव सप्रयोजनत्वात्तेषां प्रामाण्यं प्रसाधितम्, तथात्राप्युपासनाविषयेश्वरस्तावकत्वेन "यतो वे"त्यादिवाक्यानामपि प्रामाण्यमिति भावः। अर्थवादत्वं च प्राशस्त्यनिन्दान्यपरत्वे सति वाक्यत्वम्। तत्र "विरोधे गुणवादः स्यादनुवादोऽवधारिते। भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मतः" इति त्रैविध्यं केचिज्जगुः। अन्ये पुनः, विधिशेषः, निषेधशेषश्चेति द्वैविध्येन विभेजिरे। अपरे चासङ्ख्यातत्वमाहुः।

२ ब्रह्मसूत्र०

**सिद्धान्तेऽपि मननादिशास्त्रवैफल्यापत्तेः । साधनप्रतिपादकश्रुतिविरोधश्च । येनापि सर्वक्रियाफलत्वं निराकार्यं तेनापि गुरूपसत्त्यादिना यतितव्यमेव ज्ञानार्थं । तस्माद्यत्रापि विध्यश्रवणं तत्रापि विधिं परिकल्प्य तत्रत्यानां तच्छेषत्वं कल्प्यमिति नार्थोऽनया मीमांसया । अन्यथा विरोधोऽपि ।**

**स्यादेतत् । ब्रह्मविचार एवारम्भणीयो न धर्मविचारः । सर्ववेदव्यासकर्त्रा वेदव्यासेनाकृतत्वात् तुच्छफलत्वाच्च । कल्पोक्तप्रकारेण निःसन्दिग्धं करणसम्भवाच्च । आचारपरम्परयापि करणसम्भवाच्च । एतर्ह्यपि सन्देहे सूत्रभाष्ययाज्ञिकानामेवानुवृत्तिः क्रियते न मीमांसकस्य तस्मात् साङ्गवेदाध्येतुर्निःसन्देहकरणसम्भवान्न पूर्वयापि कृत्यम् । किञ्च । परमकृपालुर्वेदः संसारिणः संसारान्मोचयितुं कर्माणि चित्तशुद्ध्यर्थं बोधितवानिति कूपेऽन्धपातनवदप्रामाणिकत्वभियाऽवसीयते । विपरीत-**

---

,साध्यत्वास्वीकारे । **सिद्धान्तेऽपि** वेदान्तिमतेऽपि । **मननादीति** । मन्तव्य इति विधिवैफल्यापत्तेरित्यर्थः । वृत्त्यादिसम्पादनस्य मननोपकारकत्वात्, तत्र कृतिजन्यत्वास्वीकारे तव्यप्रत्ययार्थस्य कृतिसाध्यत्वस्य तत्राभावाद्वैयर्थ्यमिति भावः ।

सर्वथा ज्ञाने यत्नानादरे दूषणान्तरमाह—**साधनेति** । **श्रुतिविरोधः** । 'तपसा ब्रह्म विजिज्ञासस्वे'ति श्रुतिविरोधः । तपःपदस्य यत्ने पर्यवसानमेव । तप इन्द्रियनिग्रहः इति वाक्यादन्ततो निग्रहे यत्नापेक्षायाः सत्वादिति भावः । कर्मवादी साधारणरीतिमाश्रित्य वदति—**येनापीति** । **तेनापीति** । येन पुरुषेण साक्षात्परम्परया वा सर्वकृतिफलत्वं लोके पाकादौ वेदे च यागादौ स्वीक्रियते ज्ञाने तु निराक्रियते तेन पुरुषेणापीत्यर्थः । **गुरूपसत्त्यादिना** 'समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठमि'ति श्रुत्या कृतिजन्यगुरुसमीपगमनरूपक्रियाजन्यत्वं ज्ञानेऽवश्यं स्वीकर्तव्यमित्यर्थः । स्वमतमुपसंहरति **तस्मादिति** । यत्र वेदान्तवाक्ये, तत्रत्यानां वाक्यानां पदानामित्यादिः । **तच्छेषत्वम्** । तादृशविध्यङ्गत्वम् । **अन्यथेति** । विध्यकल्पने । **विरोधोऽपीति** । वाक्यभेदेन पूर्वकाण्डे अन्यप्रतिपादनमुत्तरकाण्डे चान्यप्रतिपादनमित्येवं रूपो विरोध इत्यर्थः । अपिपदेन सर्वस्य वेदस्य धर्मप्रतिपादकाभावे 'वेदोऽखिलो धर्ममूलमि'ति स्मृतिविरोधोऽपि सङ्गृह्यते ।

वितण्डावादी प्रत्यवतिष्ठते—**स्यादेतदिति** । **वेदव्यासकर्त्रा** वेदविभागकर्त्रा सर्वज्ञेनेति यावत् । **तुच्छफलत्वात्** । पुनरावृत्त्या स्वर्गस्य तुच्छफलत्वात् । ननु पूर्वमीमांसाभावे केवलं स्वर्गकामनावता पुरुषेण कथं यागः कर्तव्य इत्यत आह—**कल्पोक्तेति** । तत्रापि संशये सत्याह—**आचारेति** । इदानीं स्वर्गकामार्थं यागः कर्तव्य इति श्रुत्यभिप्रायो नास्तीति वदति—**किञ्चेति** । वेदः स्वस्मिन्नप्रामाणिकत्वभिया संसाराख्यान्धकूपपतितान् चित्तशुद्धिद्वारोद्धर्तुं कर्माणि बोधितवानित्यवसीयत इत्यर्थः । कामना तु प्रवृत्त्यर्थं बोधितवानिति भावः । अप्रामाणिकांशे दृष्टान्तमाह—**कूपेति** । अयमेव मार्ग इति केनचित्प्रतारकेण कूपे अन्धस्य पातनं यथा क्रियते तद्वदित्यर्थः ।

---

[१] अतएवाहुर्वार्तिककाराः "एतेन उपनिषदो व्याख्याताः" इत्यर्थवादाधिकरणे । तदनुसारेण प्रभावलीकाराश्च एवं दूरस्थानामपि मिनादिवेदव्यतिरिक्तनित्यकर्तृभोक्तृरूपात्मप्रतिपादकान्तमुपनिषदां परलोकफलककर्मविध्यपेक्षितोक्तरूपात्मपरत्वमेव; उक्तविषयज्ञानस्यानारभ्याधीतस्यापि मिश्रमते सामर्थ्यात्सामान्यसम्बन्धबोधकप्रमाणाभावेऽपि विनियोजकत्वात्, न्यायसुधाकारमते "यदेव विद्यया करोति तदेव वीर्यवत्तरं भवति" इति वाक्याद्वा फलत्वम् । असंसारिसगुणनिर्गुणात्मप्रतिपादकानामुपनिषदामुभयविधोपासनाविध्यपेक्षितत्वेन स्वार्थपरत्वमेवेति ज्ञेयम्, इति प्राहुः ।

बोधिका तु पूर्वमीमांसा तस्मादपि न कर्तव्येति । मैवम् । किं विचारमात्रमेव न कर्तव्यं पूर्वकाण्डविचारो वा ? नाद्यः । तुल्यत्वात् समर्थितत्वाच्च । द्वितीये सामान्यन्यायेन सन्देहे निवार्ये लक्षणवत् तदुपयोगः । अनिष्टतया निरूपणं न मीमांसादोषः। किन्तु विचारकाणां स्वभावभेदात् । किञ्च । आवश्यकत्वादपि । निवृत्तानामपि यागादिज्ञानस्यावश्यकत्वं चित्तशुद्ध्यर्थत्वात् । परमाश्रमभेदेन प्रकारभेदः कायिकादिभेदात् । तत्राद्यस्य वाचिको द्वितीयतृतीययोः कायिकश्चतुर्थस्य मानसिक इत्याश्रमिणाम् । तस्मादेकेनैव चरितार्थत्वात् किं द्वितीयेनेति प्राप्ते; उच्यते-उपासनाया धर्मत्वेपि न ब्रह्मणो धर्मत्वम्, ज्ञानरूपत्वात् । धर्मस्य च क्रियारूपत्वात् । न चार्थवादानां धर्म इव ब्रह्मण्युपयोगः कर्तुं शक्यः । उत्प-

---

**अपीति** । परा न कर्तव्या चेदस्तु नाम परन्तु पूर्वा त्वयापि न कर्तव्येत्ययमर्थोऽपिशब्देन ध्वन्यते । एतेनास्य वैतण्डिकत्वं बोध्यम् । इदं च वैतण्डिकत्वं तवैव शोभते न ममेत्यभिमानेन स्वमतस्थापनं कर्तुं मीमांसकः समाधत्ते—**मैवमिति** । **तुल्यत्वादिति** । परमते यद्दूषणं तदेव स्वमते चेन्नोद्भाव्यमिति भावः । ननु मयापि स्वीक्रियतेऽयं दोष इत्यत आह—**समर्थितत्वादिति** । त्वया तु अप्रतिज्ञानादित्यादिना विचारः प्रतिपादित एवेत्यर्थः । **सन्देह इति** । 'त९ हैतमेके पशुबन्ध एवोत्तरवेद्यां चिन्वते' इति श्रुत्या पशुबन्धेनाचिकेताङ्गत्वेन 'अक्ताः शर्करा उपदधाती'ति विधिना शर्करोपधानं विहितम् । तत्र घृताक्ता वा तैलाक्ता वा इति सन्देहे 'तेजो वै घृतमि'ति वाक्यशेषात् घृताक्ता एव शर्करा ग्राह्येति पूर्वमीमांसाया उपयोग इत्यर्थः । **लक्षणवदिति** । प्रातिशाख्यादिवदित्यर्थः । इदं चोक्तं प्राक् । ननु पुनरावृत्तिरनिष्टा, स्वर्गे च पुनरावृत्तिश्रवणादनिष्टजनकयागादिप्रतिपादकत्वात्पूर्वमीमांसायां दोष इत्यत आह—**अनिष्टतयेति** । वेदे तु कामनाश्रवणं प्रवृत्त्यर्थम् । सूत्रस्य वेदतात्पर्यावगाहित्वान्नायं मीमांसादोष इत्यर्थः ।

ननु केषाञ्चित् मीमांसाविचारकाणां ग्रन्थे स्वर्गार्थं सोमेन यक्ष्ये इत्यादिसङ्कल्पो दृश्यते इति चेत्तेषामेव दोष इत्याह—**विचारकाणामिति** । ननु ये सदा मीमांसया विचारं कुर्वन्ति तेषामयं दोषः कथमित्यत आह—**स्वभावभेदादिति** । 'तेषां प्रकृतिवैचित्र्यादि'त्येकादशस्कन्धोक्तत्वादित्यर्थः । ननु स्वर्गादिकामना तु प्रवृत्त्यर्था, अन्यत्किञ्चित्फलं तु न दृश्यते इति तवैवास्त्वा आवश्यकत्वमस्त्वित्यत आह—**किञ्चेति** । **अपीति** । त्वयापि पूर्वमीमांसाकर्त्रेति शेषः । आवश्यकत्वमेवाऽऽह—**निवृत्तानामपीति** । **प्रकारभेद इति** । कायिकवाचिकमानसिकभेदात् प्रकारभेद इत्यर्थः । **आद्यस्य** ब्रह्मचारिणः । तस्य वेदपाठ एवाधिकारत्वात् । एवमग्रेऽपि बोध्यम् । उपसंहरति—**तस्मादिति** । त्रैवर्णिकाधिकारपक्षस्वीकारात् । समाधानमाहुः—**उच्यत इति** । 'आत्मेत्येवोपासीते'ति विधिवाक्यं उपासनाविधायकम् । तस्मात्तु ब्रह्मज्ञानसाधनत्वान्न मुख्यत्वमित्याशयेनाऽऽह—**उपासनेति** । तथा च सर्वोपनिषद्वाक्यानां ब्रह्मणि तात्पर्यात् मुख्यत्वेन ब्रह्मप्रतिपादकमेव न तु धर्मप्रतिपादकत्वमिति भावः ।

**ज्ञानरूपत्वादिति** । ब्रह्मण इत्यनुषज्यते । अर्थवादवाक्यानां ब्रह्मण्युपयोगं खण्डयन्ति—**न चेति** । नहीत्यर्थः । **उत्पत्तीति** । कर्मणि विद्यमानानामुत्पत्त्यादित्रयाणां ब्रह्मण्यभावादर्थवादवाक्यं तत्र न प्रवर्तत

---

१ उत्पत्तिरुत्पत्तिविधिः, प्रकारः प्रयोगविधिः (विनियोगविधिरिति केचित्), फलमधिकारविधिः । उत्पत्तिप्रकारे फलभेदानामिति श्रीधरपाठकपरिकल्पितः पाठ इति प्रतिभाति । [illegible] चाप्रामाणिकत्वात्, सर्वेषामपि टीकाकाराणामसम्मतत्वाच्चोपेक्ष्य एव ।

त्त्रिप्रकारफलभेदानामभावात् । प्रकृते तु माहात्म्यज्ञानार्थं तदुपयोगः । तस्य च ज्ञानोपयोगो यथा, तथा वक्ष्यते चतुर्थे । उपासनादर्शनादिपदानां मनोव्यापारत्वमेव । विचारस्यापि यथा ज्ञानोपयोगित्वं तथा वक्ष्यते । किञ्च । औपनिषदज्ञानस्यापि कर्मोपयोगित्वम्–"यदेव विद्यया करोति श्रद्धयोपनिषदा वा तदेव वीर्यवत्तरं भवति" ( छां. १-१-१० ) इति । अत एव ब्रह्मविदामेव जनकादीनां कर्मणि सर्वदेवसान्निध्यम् । अन्यथाभासत्वमेव । न च ब्रह्मरूपात्मविज्ञाने देहाद्यध्यासाभावेन, कर्तृत्वाभावात् कर्मानधिकार इति वाच्यम् । निरध्यस्तैरेव देहादिभिः कर्मकरणसम्भवात् । अत एव जीवन्मुक्तानां सर्वे व्यापाराः । तथा च स्मृतिः—

"नैव किञ्चित् करोमीति युक्तो मन्येत तत्त्ववित् ।
पश्यञ्छृण्वन् स्पृशञ्जिघ्रन्नश्नन् गच्छन् स्वपञ्छ्वसन् ॥
प्रलपन् विसृजन् गृह्णन्नुन्मिषन्निमिषन्नपि ।
इन्द्रियाणीन्द्रियार्थेषु वर्तन्त इति धारयन् ॥
ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः ।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥ (भ.गी.१०-८-१०) इति ।

अतो ब्रह्मविदामेव कृतं कर्म शुभफलं भवति । अतो धर्मविचारकाणामपि ब्रह्म जिज्ञास्यमेव । तस्मान्न गतार्थत्वानुपयोगौ ।

---

इत्यर्थः । ननु कथमुत्पत्त्यादित्रयेऽर्थवादानां प्रवृत्तिरिति चेत्, इत्थम्; तथा हि–उत्पत्तावर्थवादवाक्यं यथा 'असावादित्यो न व्यरोचत तं देवाः प्रायश्चित्तिमैच्छन्नि'त्यादि । प्रकारे यथा, 'अयं वै सोमेनेजानादि'त्यादि । फले यथा–'वायुर्वै क्षेपिष्ठा देवते'त्यादि । ननु ब्रह्मणि उत्पत्त्यादित्रयाणामभावः किमर्थं स्वीकर्तव्य इति चेत्, न; नित्यत्वात्सर्वदैकरसत्वात्फलरूपत्वाच्चेति भावः । ननु 'यतो वा इमानि भूतानि' इत्यादिवाक्यानां कुत्रोपयोग इत्यत आह–प्रकृते इति । तस्य माहात्म्यज्ञानस्य । चतुर्थे चतुर्थाध्याये 'आदित्यादिमतयः' (४-१-६) इत्यस्मिन्सूत्रे तस्य भक्तिद्वारा भगवत्प्राप्तिरूपसाक्षात्कार उपयोग इति वक्ष्यते ॥

ननूपासनारूपधर्मस्य कथं क्रियारूपत्वमत आह–उपासनेति । "आत्मेत्येवोपासीत" "आत्मा वारे द्रष्टव्यः" इत्यादिविधीनामित्यर्थः । मनोव्यापारत्वमेव मानसिकक्रियाबोधकत्वमेव । तथा चैतादृशव्यापारविषयत्वात् ब्रह्मणो मुख्यत्वेन प्रतिपादनं क्वचित् माहात्म्यप्रतिपादकानां च सर्वेषां वाक्यानां ब्रह्मण्येव तात्पर्यमिति मुख्यतया ब्रह्मप्रतिपादकत्वमेव मानसक्रियोपासनाधर्मप्रतिपादकत्वम् । एवं चैतादृशवाक्यविचारेण कृत्वा मननादिमनोव्यापारस्तेन च ब्रह्मसाक्षात्कारोऽग्रे च भगवत्प्राप्तिरित्येवंरीत्या उत्तरमीमांसाया अत्यावश्यकत्वमिति न पूर्वया गतार्थत्वमित्याखण्डलार्थः । इदं च सर्वं साधनप्रकरणे तृतीयाध्याये द्वितीये पादे उभयव्यपदेशाधिकरणे (३-२-२७) विस्तरेण वक्ष्यन्ति श्रीमदाचार्यचरणाः । इदानीमुत्तरमीमांसयैव पूर्वमीमांसायाश्चरितार्थ्यमन्यथा नेति विपरीतदूषणमुद्भावयन्ति—किञ्चेति । अन्यथा, औपनिषदज्ञानाभावे । आभासत्वमेव । कर्माभासत्वमेव । कर्माभासत्वं फलाजनकत्वम् । कर्म चाभासते सः कर्माभासस्तस्य भावस्तत्त्वम् । अनुमितिजनकहेत्वाभासवदित्यर्थः । अन्यत् सुगमम् ।

(कथं न विरक्तोऽधिकारी भवेत्?)

ननु फलप्रेप्सुरधिकारी। फलं च विचारस्य शाब्दज्ञानम्। तस्य मननादिद्वारानुभवः। तस्य चानर्थनिवृत्तिपूर्वकपरमानन्दावाप्तिः। तथा च विरक्तोऽनर्थजिहासुः परप्रेप्सुश्चाधिकारी कस्मान्न भवति?

शब्दब्रह्मणि निष्णातो न निष्णायात् परे यदि।
श्रमस्तस्य फलं मन्ये ह्यधेनुमिव रक्षतः॥ (भा. ११-११-१८)

इति भगवद्वचनात् केवलस्य निन्दाश्रवणादिति चेत्, न; फलकामनाया अनुपयोगात्। अन्येनैव तत्समर्पणात्। नित्यत्वादप्यर्थज्ञानस्य न फलप्रेप्सुरधिकारी। निन्दार्थवादस्तु मननादिविधिशेष इति मन्तव्यम्।

ननु ब्रह्मणो विचारे प्रतिज्ञाते विरोधनिराकरणादीनामप्रतिज्ञातार्थत्वम्। न चा-

---

वैराग्यानन्तर्यवादी सिंहावलोकनन्यायेन पुनराशङ्कते—**नन्विति**। **फलं चेति**। अस्य च **आनन्दावाप्तिरि**त्यनेनान्वयः। **तथा च** फलप्रेप्सोरधिकारित्वे च। एवं च "साङ्गो वेदोऽध्येयो ज्ञेयश्चे"ति विधिना सार्थवेदाध्ययनं विहितम्। तथा च वेदार्थज्ञानवान् त्रैवर्णिकः विरक्तः सन्नेव फलप्रेप्सुर्भविष्यतीति वैराग्यानन्तर्यमावश्यकमिति भावः॥

ननु वेदार्थज्ञानस्य साक्षात् विचार एव फलं न तु परप्राप्तिः। एवं च न तत्र वैराग्यापेक्षेत्यत आह—**शब्देति**। **भगवद्वचनात्**। भागवते एकादशस्कन्धे निन्दार्थवादरूपभगवद्वचनादित्यर्थः। अत्र समाधानमाहुः—**नेति**। **अनुपयोगादिति**। फलकामनावान् अधिकारी तदा वक्तव्यः, यदा "स्वर्गकामो यजेते"ति वाक्यवत्, फलकामनावता पुरुषेण विचारः कर्तव्य इत्याकारकबोधजनकं प्रतिज्ञावाक्यं चेत्, तदेव नास्ति। कुतः? "अथातो ब्रह्मजिज्ञासे"त्यस्माद्वाक्यात्कामनाया अप्रतीतेरतस्त्रैवर्णिक एवाधिकारीति भावः। ननु तर्हि परप्राप्तिरूपं फलं मुख्यम्, तदेव केनचिद्वाक्येन न बोधितं चेत्, कस्यापि शास्त्रे प्रवृत्तिरेव न स्यादित्यत आहुः—**अन्येनैवेति**। "ब्रह्मविदाप्नोति परमि"त्यनेन वाक्येनैव तत्समर्पणात्, परप्राप्तिरूपफलबोधनात्। तथा च वेदाध्ययनानन्तरं ब्रह्ममीमांसापूर्वकवेदार्थज्ञाने जाते "ब्रह्मविदाप्नोति परमि"त्यस्य वाक्यार्थज्ञानानन्तरं फलकामनोत्पद्यते। ततः पूर्वं कामनाया अभावादर्थजिज्ञासुस्त्रैवर्णिक एवाधिकारी, न तु फलप्रेप्सुरिति भावः। ननु तर्हि, अर्थज्ञानमेव फलमस्तु तावतैव फलप्रेप्सुरधिकारी भवतीत्यत आह—**नित्यत्वादिति**। सन्ध्यावन्दनादिवत् "ज्ञेयश्चे"ति, विधिबोधितत्वेन नित्यत्वात्; नित्ये कामनाया अभावादित्यर्थः।

ननु यदि अर्थजिज्ञासुरेवाधिकारी तर्हि तस्य परनिष्णातत्वाभावात् "शब्दब्रह्मणी"त्यादि निन्दार्थवादस्य का गतिरित्यत आह—**निन्दार्थवादेति**। "आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इत्यत्र श्रवणोत्तरं मननं विहितं, निन्दार्थवादवाक्येऽपि शब्दे निष्णातः परे यद्यनिष्णातस्तस्य निन्दा श्रूयते, तेन च कृत्वा मननविधेरर्थवादोऽयमिति ज्ञायते। एवं च मननविध्यैकवाक्यतया प्रामाण्यं मन्तव्यमिति भावः। एतावता प्रबन्धेनाधिकारी, परप्राप्तिरूपं, प्रयोजनं चोक्तम्।

शङ्कामुखेन विषयं निर्वक्तुमाहुः—**नन्विति**। **विरोधेति**। द्वितीयाध्यायोक्तानामिति शेषः। विरोधनिराकरणादीनामनावश्यकत्वादस्त्वप्रतिज्ञातार्थत्वमित्याशयेन शङ्कते—**न चेति**। न हीत्यर्थः।

**वक्तव्यत्वं निर्विचिकित्सज्ञानानुदयप्रसङ्गादिति चेत्, ब्रह्मण इति न कर्मणि पष्ठी किन्तु शेषपष्ठी। तथा च ब्रह्मसम्बन्धि तज्ज्ञानोपयोगि सर्वमेव प्रतिज्ञातं वेदितव्यम्। न च गौणतापत्तिरजिज्ञास्यत्वं च स्यादिति वाच्यम्। ब्रह्ममात्रे सन्देहाभावात्। सन्दिग्धस्यैव जिज्ञास्यता। गौणत्वं तु शब्दत एव। न त्वर्थतः। वेदप्रामाण्यं**

---

**अवक्तव्यत्वम्**। द्वितीयाध्यायार्थस्यानिरूपणीयत्वं स्वीक्रियते इति न हीत्यर्थः। तथा सति दूषणमाहुः—**निर्विचिकित्से**ति। परमतनिराकरणपूर्वकस्वमतव्यवस्थापनं हि निरूपणम्। एवं चैतादृशनिरूपणाभावात्, साङ्ख्यादीनां निराकरणाभावे जगत्कर्तृ ब्रह्म वा प्रधानं वेति सन्देहे निःसन्दिग्धं ब्रह्मविषयकं शाब्दबोधात्मकं ज्ञानं न स्यादिति भावः।

समाधानमाहुः **नेत्यादि**। **न कर्मणि पष्ठीति**। कर्मषष्ठ्यां स्वीकृतायां केवलं ब्रह्मकर्मकज्ञानोपयोगिविचार एव प्रतिज्ञातः स्यात्। तथा च, द्वितीयाध्यायार्थस्याप्रतिज्ञातत्वेनाकस्मिकत्वापत्तिरूपदोषः स्यात्। शेषषष्ठ्यां स्वीकृतायां तु तस्याश्च सम्बन्धवाचकत्वात् सम्बन्धस्य च द्विनिष्ठत्वेन ब्रह्मसम्बन्धि यद्विरोधनिराकरणादि, माहात्म्यविशिष्टं ब्रह्म च, एतदुभयज्ञानोपयोगि सर्वमेव प्रतिज्ञातं वेदितव्यमिति भावः। ननु विवक्षाधीनशेषषष्ठ्यां स्वीकृतायां तु दोष एव नास्ति, परन्तु न कर्मणि षष्ठीति भाष्यं न सङ्गच्छते, कुतः, "प्रतिपदविधाना षष्ठी न समस्यते" इति वार्तिकात् समासनिषेधेन कर्मषष्ठ्यां समासप्राप्त्यभावादिति चेत्, न; "कृद्योगाच्च षष्ठी समस्यते" इति प्रतिप्रसवात् समासो भविष्यतीति कर्मषष्ठ्येव स्वीकार्येति प्राप्ते न कर्मणि षष्ठीति भाष्यं सङ्गतमिति भावः। अत्र शेषषष्ठ्याः ज्ञोविदर्थस्य करणे इत्यादि जगत्कर्तृत्वादीनां विधानाभावात् प्रतिपदेति वार्तिकस्याप्रवृत्त्या समासो भविष्यतीत्यलमप्रकृतविचारेण। ननु तर्हि प्रथमाध्यायोक्तानां भगवद्गुणानां द्वितीयाध्यायोक्तानामविरोधादीनां ब्रह्मसम्बन्धिनां जिज्ञास्यत्वेन प्रतिज्ञातार्थत्वे धर्मांशे ब्रह्मणो गुणभूतत्वाद्गौणत्वापत्तिः। एवं यदंशे प्रतिज्ञा तदंश एव जिज्ञासा प्रवर्तत इति ब्रह्मणोऽजिज्ञास्यत्वं च स्यादित्याशयेन शङ्कते—**न चेति**।

सर्वज्ञानं धर्मिण्यंशेऽभ्रान्तं प्रकारेषु विपर्यय इत्यनेन धर्म्यंशे भ्रान्तिरेव नास्ति। यथा दूराद्दृष्टे पुरुषे उच्चैस्त्वविशिष्टे पुरोवर्तिनि सन्देह एव नास्ति; स्थाणुत्वपुरुषत्वांश एव सन्देह इति तत्रैव जिज्ञासा। तथा पठनकाल एव "सत्यं ज्ञानमनन्तं ब्रह्म"त्यस्य वाक्यार्थे ज्ञाते केवलं ब्रह्मांशे तु सन्देह एव नास्ति। परन्तु, एतादृशं ब्रह्म जगत्कारणं वा न वा द्युभ्वादीनां विधारकं न वेति सन्देहो जायते। कुतः? साङ्ख्यैः साङ्ख्यादिस्मृत्युक्तप्रधान एवैतादृशगुणवत्त्वस्वीकारात्। एवं च यदंशे संशयस्तदंश एव जिज्ञासेति भगवद्गुणानां जिज्ञास्यत्वे सिद्धे, एतादृशगुणवत्त्वेन ब्रह्मण एव जिज्ञासासिद्धेर्नाजिज्ञास्यत्वम्, न वा गौणत्वमित्याशयेन समाधानमाहुः—**ब्रह्ममात्रे**ति। ब्रह्मांशे निश्चये सति ब्रह्म एतादृशं वा न वा, ब्रह्म एतादृशमेव कुतो नेत्याकारकः संशयो वा विचारो वा प्रवर्तत इत्येतदर्थं मात्रपदम्। **सन्दिग्धस्यैवे**ति। सन्देहविषयीभूतस्य, जगत्कर्तृत्वादिधर्मस्येत्यर्थः। **जिज्ञास्यता** विचार्यता। राज्ञा सहागतोऽमात्य इत्यत्र शब्दतो राज्ञो गौणत्वेऽपि तद्गौणत्वं मुख्यत्वविघातकं न भवतीत्याशयेनाऽऽहुः—**गौणत्वन्त्वि**ति। इष्टापत्त्यर्थे तु शब्दः। निराधारगुणवर्णनासम्भवात्, भगवत्सम्बन्धिगुणवर्णने भगवद्वर्णनमेवेत्याशयेनाऽऽहुः—**नत्वर्थत** इति।

ननु वेदप्रामाण्यांशे संशये सति वेदार्थविचारस्याजागलस्तनायमानत्वान्नैव कर्तव्य इत्यत आहुः—**वेदप्रामाण्यमिति**। न्यायादितप्रसिद्धत्वान्न विचार्यत इत्यर्थः। आस्तिकानां वेदप्रामाण्यांशे सन्देह एव नास्तीति

तु प्रतितन्त्रसिद्धत्वान्न विचार्यते । तस्माद्ब्रह्म जिज्ञासितव्यमिति सिद्धम् ॥ १।१।१ ॥

---

तदर्थमेव विचार इति भावः । तस्मादिति । गुणविचारे ब्रह्मणोऽर्थतो मुख्यत्वादित्यर्थः । विद्यमानगुणवत्त्वेयैव ब्रह्म जिज्ञास्यमिति शेषषष्ठ्येव युक्तेत्यत्र गमकमाहुः—किञ्चेत्यादि, इतीत्यन्तम् । ब्रह्मविचारविषयिणीं प्रतिज्ञां कृत्वा अग्रे कार्यलक्षणे वदति तेन कृत्वा किं ज्ञायते ब्रह्मसम्बन्धिगुणबलेन ब्रह्मण एव वेदार्थत्वमिति सम्बन्धषष्ठ्या बोध्यत इति भावः । एवं चैतादृशगुणविशिष्टब्रह्मप्रतिपादनं विषयः । सम्बन्धश्च प्रतिपाद्यप्रतिपादकभावः; अधिकारी प्रयोजनं च द्वयं पूर्वमुक्तम् । एतावता प्रबन्धेन अधिकारिविषयसम्बन्धप्रयोजनरूपमनुबन्धचतुष्टयं प्रेक्षावतां प्रवृत्त्यर्थं निरूपितमिति **प्रथमाधिकरणम्** ।

---

१ अथात्र जिज्ञासाधिकरणसमीक्षा—ब्रह्मसूत्रभाष्याणां बहूनां सत्त्वात्सूत्रकाराभिमतस्य नैकेनापि निर्णयः सम्भवतीति प्रायः सर्वेषामपि शुद्धान्तःकरणानां विपश्चितामभिप्रायः । अतस्ते नवीनां समीक्षापद्धतिमनुसृत्य तत्संशोधनाय प्रवर्तमानाः समवलोक्यन्ते । अत एवास्माभिरुपलब्धानां भाष्याणां तत्तत्सूत्रेषु कीदृशं व्याख्यानमिति, प्रातःस्मरणीयचरणानां दार्शनिकसार्वभौमनैयायिककेसरि-श्रीबालकृष्णमिश्रमहाभागानामस्मद्गुरुचरणानां निदेशेन वाराणस्यामेव सङ्गृहीततत्तद्भाष्याणां सङ्क्षेपो निर्मत्सराणां, विचारैकप्रवणान्तःकरणानां विपश्चिदपश्चिमानां, विनोदाय समुपस्थाप्यते । "अयमेव सूत्रकाराभिप्रेत आशयः" इति तु को नाम वक्तुं शक्नोति । यस्मै यद्रोचते तेन तद्ग्राह्यम् । तत्र तावत् (१) श्रीमच्छङ्कराचार्याः—अथ=नित्यानित्यवस्तुविवेकः, इहामुत्रफलभोगविरागः, शमदमादिसाधनसम्पत्, मुमुक्षुत्वं चेति साधनचतुष्टयसम्पत्त्यनन्तरम्; अतः=अग्निहोत्रादीनामनित्यफलकत्वात्, ब्रह्मज्ञानस्य च नित्यत्वाद्धेतोः, ब्रह्मजिज्ञासा, ब्रह्मणो जिज्ञासा ब्रह्मजिज्ञासा ब्रह्मविषयकज्ञानेच्छा कर्तव्या; इत्याहुः ।

(२) श्रीमद्रामानुजाचार्याः—अथ=साङ्गवेदाध्ययनानन्तरम्; अतः=कर्मणामनित्यफलकत्वज्ञानात्; मोक्षेच्छावतोऽनन्तफलप्रयोजिका ब्रह्मजिज्ञासा=ब्रह्मज्ञानेच्छा भवतीति प्राहुः ।

(३) श्रीमध्वाचार्याः—अथशब्दो मङ्गलार्थोऽधिकारानन्तर्यार्थश्च, अतःशब्दो हेत्वर्थः यतो नारायणप्रसादमृते न मोक्षः, अतो ब्रह्मजिज्ञासा कर्तव्या इति स्वीचक्रुः । एतन्मते ब्रह्मपदं विष्णुपरम् ।

(४) श्रीनिम्बार्काचार्याः—अथ=अधीतषडङ्गवेदेन मुमुक्षुणाऽनन्ताचिन्त्यस्वाभाविकस्वरूपगुणशक्त्यादिभिर्बृहत्तमो यो रमाकान्तः पुरुषोत्तमो ब्रह्मशब्दाभिधेयस्तद्विषयिका जिज्ञासा सततं सम्पादनीयेत्यर्थं विभावयाञ्चक्रुः ।

(५) श्रीभास्कराः—अथ कर्मविचारानन्तरम् । अतःशब्देनारम्भे फलाप्तौ च हेतुत्वमुच्यते । कर्मणि पूर्ववृत्तेस्तदपेक्षा ब्रह्मजिज्ञासा कर्तुं शक्यत इत्यारम्भे हेतुत्वम् । कर्मणा समुच्चितं ज्ञानं क्षेमप्राप्तिनिमित्तमिति फलप्राप्तौ हेतुत्वम् । ब्रह्म च कारणात्मना, कार्यात्मना, जीवात्मना च त्रिधा वस्थितम् । तत्राविशेषण ब्रह्मजिज्ञासा प्रस्तूयत इति सूत्रार्थं प्रदद्शुः ।

(६) श्रीकण्ठशिवाचार्याः—अथशब्द आनन्तर्यार्थः । 'अतःशब्दो वृत्तस्य हेतुभावे वर्तते । अतोऽधीतवेदेन धर्मो विचारितः, अतस्तदनुष्ठानसम्पन्नचित्तशुद्धिना तत्कालसम्पन्नविवेकादिसमुल्लसितपरमभक्तिसम्भावितेनानेन ब्रह्मापि निरतिशयनिःश्रेयसकरं विचारणीयमिति शास्त्रारम्भाधिकरणार्थमूचुः ।

(७) श्रीविज्ञानभिक्षवः—अथशब्द उच्चारणमात्रेण मङ्गलरूपोऽधिकारवाचकः । अत इत्यनेदमा प्रकृतसूत्रमुच्यते । पञ्चमी चावधौ । तथाचेदं सूत्रमारभ्येत्यर्थः । ब्रह्मणो ब्रह्मशब्दार्थस्य जिज्ञासा विचारः प्रस्तूयत इति बोधयामासुः ।

सर्वत्रात्र वैलक्षण्यं साधुत्वासाधुत्वं च प्रेक्षावद्भिरेवाकलनीयम् ।

---

## अथात्र भाष्ये प्रथमाधिकरणे पूर्वोत्तरपक्षाः

तत्र तावत्—

(१) विचारशास्त्रस्य वैधत्वम्—तत्र, "स्वाध्यायोऽध्येतव्यः" "अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीत", "साङ्गो वेदोऽध्येयो ज्ञेयश्च" इति विधिवाक्यानि त्रीणि समुपलभ्यन्ते ।

(क) तत्र भाट्टाः—अक्षरग्रहणपर्यवसितमध्ययनं नाङ्गीकार्यम्, अदृष्टफलकल्पनापत्तेः । अध्ययनविधेरर्थज्ञानरूपदृष्टफलस्य जागरूकत्वात्, दृष्टे सम्भवत्यदृष्टकल्पनाया अन्याय्यत्वात् । "वसन्ते ब्राह्मणमुपनयीत" इत्यादिवाक्येषु द्वितीयानिर्देशेन त्रैवर्णिकानां संस्कार्यत्वावगमात्, संस्कारस्य च कार्यान्तरयोग्यतासम्पादनरूपत्वादुपनीतानामध्ययनादृते कार्यान्तराभावात्तत्सन्निधिपठितस्याध्ययनस्य च निर्दिष्टकर्तृकत्वेन कर्त्रपेक्षतया परस्पराकाङ्क्षासन्निधियोग्यत्वैरध्ययनविधेस्त्रैवर्णिकान्तं यज्ञरूपकार्यान्तराधिकारनियमार्थत्वान्नियमविधित्वम्, तथाऽऽधानादिविधयोऽपि त्रैवर्णिकानेव विदुषोऽधिकुर्वन्तीत्यध्ययनविधिरर्थज्ञानमाक्षिपति; तच्च विचारशास्त्राधीनमिति तस्यापि वैधत्वम् । तथाहि—"स्नानोपलक्षिता चात्र निवृत्तिर्गुरुवेश्मनः । विरोधित्वेन बाध्येत न तु मध्वादिभक्षणम् ॥ तस्माद्गुरुकुले तिष्ठन् मधुमांसाद्यवर्जयन् । जिज्ञासेताविरुद्धत्वाद्धर्ममित्यवगम्यते" । धर्मशब्देन ब्रह्माप्युपलक्षितम् "वेदान्तवाक्यनिषेवणादि"ति श्लोकवार्तिकपद्येन । एवं विचारशास्त्रस्य विधिदर्शितत्वं प्राहुः ।

(ख) प्राभाकरास्तु—"सम्माननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः" इति पाणिनाचार्येणाचार्यकरणे बोधितेनात्मनेपदप्रत्ययेनोपनयनरूपसंस्कारस्याचार्यत्वसिद्धिप्रयोजनत्वं प्राप्यते; उपनयनेन संस्कृतोऽपि माणवको न तूष्णीं स्थितः, सन्निधिमात्रेणाचार्यत्वं साधयतीति तद्व्यापारापेक्षायां सन्निहितमध्यापनविधिप्रयुक्तमध्ययनमेव तद्व्यापारतयाध्यवसीयते; अध्यापनस्यापि प्रयोजने विचार्यमाणे स्वसमवेतत्वेनान्तरङ्गत्वादर्थज्ञानमेव तथात्वेन निश्चीयते; आचार्यत्वसिद्धिस्त्वध्यापनस्यैव प्रयोजनम्, अध्यापकसमवेतात्; एवमर्थज्ञानस्य विध्याक्षिप्तत्वात्तदाक्षिप्तस्य विचारशास्त्रस्य वैधत्वमित्याहुः ।

यद्यपि भाट्टप्राभाकरयोः पूर्वयैव गतार्थत्वान्नोत्तरस्या आरम्भणीयत्वम् । तथापि सामान्यतया विचारशास्त्रस्य वैधत्वं क्रमेण "स्वाध्यायोऽध्येतव्यः", "अष्टवर्षं ब्राह्मणमुपनयीत, तमध्यापयीत" इति श्रुतिप्रयुक्तमध्ययनमध्यापनं च विचारशास्त्रस्यारम्भणीयतामाक्षिपति ।

(२) रामानुजास्तु—पूर्वोत्तरयोरेकशास्त्रत्वमभ्युपगम्याध्ययनविधिना स्वाध्यायाख्यस्य वेदस्याक्षरग्रहणमात्रं विधीयते, तन्नेतिकर्तव्यताकाङ्क्षायामध्यापनविधिनोपकरणपूर्वकाध्ययनविधिना चाध्ययनेऽपेक्षितान्यङ्गानि विधीयन्ते; तेन चार्थोच्चारणानूच्चारणरूपमध्ययनमक्षरराशिग्रहणफलकमित्यवगम्यते; तच्चाध्ययनं विधिवाक्ये कर्मत्वेन बोधितस्य चतुर्वर्गफलस्य स्वाध्यायाख्यस्य वेदस्य संस्काररूपम्, ततश्चोत्सर्जनोत्तरमङ्गाध्ययनस्योक्तत्वात् तैः सह यथाविध्यधीयानः स्वाध्यायः

स्वभावादेवापाततोऽर्थं बोधयति, न तु सामस्त्येनेत्यर्थाक्षिप्तो विचार इति तच्छास्त्रस्यापि विधिप्राप्तत्वमित्याहुः ।

(३) शाङ्करास्तु—व्यवहारे वयं भाट्टा इति वदन्तस्तानेवानुसरन्ति ।

अथवा, "विजिज्ञासस्व" इति विधिकारितं विचारशास्त्रस्य विधिदृष्टत्वं प्रोचुः ।

(४) रामानुजाननुसरन्तः शैवा अपि, अर्थाक्षिप्तत्वमेव विचारशास्त्रस्य विधियुक्तत्वमिति वदन्ति ।

(५) भास्कराचार्याः, स्वाध्यायविधेरर्थज्ञानपर्यवसितत्वेऽपि न तस्य ब्रह्मज्ञानाक्षेपकत्वं वक्तुं शक्यम् । "यज्ञेन दानेन" "शान्तो दान्त उपरतस्तितिक्षुः श्रद्धान्वितो भूत्वात्मन्येवात्मानं पश्येत्" इतिश्रुत्या ब्रह्मज्ञानस्योपायान्तरसापेक्षत्वबोधनात्, "श्रवणयापि बहुभिर्यो न लभ्यः" इत्यादिश्रुत्या ब्रह्मणो दुर्ज्ञेयत्वाच्च, "श्रोतव्यो मन्तव्यः सोऽन्वेष्टव्यः, स विजिज्ञासितव्यः" इत्यादिवेदान्तविधिकारितैव ब्रह्मजिज्ञासेति, तेन शास्त्रस्यास्य विधिप्रयुक्तत्वमित्याकलयाञ्चक्रुः ।

(६–७) माध्वा भैक्षवाश्चैवमेवाहुः ।

(८) श्रीमद्वल्लभाचार्याणां मते तु प्राथमिकाध्ययनमध्यापनविधिरेव प्रयुङ्क्ते, माणवकोपनयनस्याध्ययनार्थत्वेऽपि तस्य बालत्वेनाध्ययने स्वतःप्रवृत्त्यभावात् । तथाध्यापनविधिप्रयुक्तमध्ययनं गुरूच्चारणानूच्चारणरूपं वेदाक्षरग्रहणफलमेव । ततः सत्सङ्गादिवशात् तत्र रुचावुत्पन्नायां वयसा सामर्थ्ये च जातेऽध्येतव्य इति कृत्यप्रत्ययेन तस्यावश्यकतावगम्यते । एतदेव मनसि निधाय "साङ्गो वेद" इत्यादिपूर्वपक्षोपक्षेपस्तत्समाधिश्च । अन्यत्रापि श्रुतिवाक्यमेतत् पुरस्कृत्य "तव्यस्त्वावश्यके प्रोक्तो न विधित्वात्प्रबोधनात् । स्वाध्यायपदतो ज्ञेयं तन्माहात्म्यफलं तथा ॥ अध्यापनतासिद्ध्यै द्वितीयं वाक्यमीर्यते । वसुरुद्रादित्यपर्यैस्त्रयो वर्णाः क्रमाद्विजाः ॥ अध्याप्या इति तस्यापि नियोगः श्रुतिचोदितः । पराधीनतया बाले न विधिः श्रुतिचोदितः ॥ तथाध्यापनसिद्ध्यर्थं तृतीयं वाक्यमीर्यते । साङ्गेऽधीते तथा ज्ञाते स्वाध्यायस्तस्य सिद्ध्यति ॥" इत्यादिना, "स्वातन्त्र्ये वयसा जाते तस्यावश्यकमीर्यते" इत्यनेन, "अध्यापनप्रयुक्तं हि तस्मादध्यापनं मतम्" इत्यनेन च सुस्पष्टं विचारितम् । "ज्ञानस्मृतेरबाधश्च ज्ञेयश्चेति विधेर्बलात्" इति स्वकृतपूर्वमीमांसाकारिकया च "अधीत्य स्नायात्" इति स्मृतिवचनविषयको विचारोऽपि परामृष्ट एव । स्वाध्यायशब्दस्तु योगेन रूढ्या च वेदार्थकः । तथाहि—"स्वाध्यायशब्दो वेदे हि रूढो योगोऽपि वर्तते । सुष्ठुसमन्तादध्येयः शोभनं नियमैर्युतम् । देशे काले गुरौ स्वस्मिन् येऽपेक्ष्यन्ते गुणा इह । आ सर्वतः पुनस्तत्र यथा शङ्का न जायते । शब्दे ह्यर्थे ह्यनुष्ठाने तथाऽध्येयो हि वैदिकैः" इत्यादि । न चात्रार्थवादाधिकरणोक्तरीत्या "एतेन उपनिषदो व्याख्याताः" इति पूर्वकाण्डविचारेणैव गतार्थतेति वाच्यम्, "काण्डद्वयार्थसिद्ध्यर्थं स्वाध्यायविधिरुच्यते" इत्यादिना पत्रावलम्बने समाहितत्वात् । एवं चैतेषां मते, अध्यापनविधिप्रयुक्तमेवाध्ययनम्, वाक्यत्रितयस्यापि विमर्शात् । मीमांसायाश्च वेदाध्ययनादृते कर्तव्यासम्भवात्तदानन्तर्यं तु स्वतःसिद्धमेव; न तु तदर्थमथशब्दप्रयोगः, तस्याधिकारवाचित्वादिति दिक् ।

(९) अत्र वैयाकरणा वैदिकाश्च प्राहुः "साङ्गो वेदोऽध्येयो ज्ञेयश्च" इति विधिबलादेवार्थज्ञानमङ्गैर्भविष्यति, तस्मान्नारम्भणीयं विचारशास्त्रम्; "रक्षोहागमलघ्वसन्देहाः प्रयोजनम्" इति फणिभाष्योक्तेः ।

(१०) तत्रेत्थं समाधिः—प्राचीनपरम्परयार्थज्ञानं तु तदैव सम्भवति, यद्यध्येतॄणां स्वभावभेदो न स्यात्। जाते तु स्वभावभेदे सात्त्विकादीनामपि बुद्धिमान्द्ये भगवान् व्यासो बहुधा वेदान् विभज्य शिष्यैः शाखाभेदं च कारयित्वा, तेषां परमपुरुषार्थसिद्धये स्वयमेव वेदार्थं मीमांसया प्रोवाच। तथाहि—"जिज्ञासितमधीतं च यच्चब्रह्म सनातनम्" इति। एवं च विरुद्धशास्त्रसम्भेदादज्ञैरशक्यनिर्णयात्, उत्तमस्य स्थूणानिखननन्यायेन दार्ढ्यं मध्यममन्दयोश्च संशयनिवारणं दार्ढ्यं च मीमांसायाः प्रयोजनमिति। तस्मादारम्भणीयं विचारशास्त्रम्।

(क) अत एव चरणव्यूहे मीमांसाया उपाङ्गेषु गणना। अतो विचारशास्त्रस्यार्थाक्षिप्तत्वम्, विधिप्राप्तत्वम्, वेदान्तविधिकारितत्वं वास्तु तत्रास्माकं नाग्रहः। उपयोगस्तु मध्यममन्दयोः सन्देहनिवारणे, दार्ढ्ये च। उत्तमस्य तु दार्ढ्य एवेति निश्चयः। अतो विचारशास्त्रावतरणे भगवतो व्यासस्य करुणैव सङ्गतिः।

(११) न चात्र पूर्वया गतार्थता "अयं हि परमो धर्मो यद्योगेनात्मदर्शनम्" इति स्मृतेरात्मसाक्षात्कारस्य धर्मत्वेऽपि "सर्वे वेदा यत्पदमामनन्ति", "वेदैश्च सर्वैरहमेव वेद्यः", "वेदास्त्रिकाण्डविषया ब्रह्मात्मविषया इमे" "मां विधत्तेऽभिधत्ते माम्", "धर्मो यस्यां मदात्मकः" इत्यादिश्रुतिस्मृतिपुराणवाक्यैर्ब्रह्मण एव सर्ववेदार्थत्वावगमात्। तत्र धर्मस्यापि ब्रह्मात्मकत्वेन प्रतिपाद्यत्वात्। जैमिनिस्त्वेकदेशमादाय पुरःस्फूर्तिकमेवार्थमुक्तवान्, अतो न तन्मीमांसया गतार्थता।

(१२) साधनचतुष्टयानन्तर्यपक्षे तु–साधनानामग्रे तृतीयाध्याये वक्ष्यमाणत्वात्तदज्ञाने ब्रह्मविचारे प्रवृत्त्यभावात्; ज्ञाते तु विचारवैयर्थ्यप्रसङ्गात् सर्वथोपेक्षणीयोऽयं पक्ष इति।

(१३) पूर्वमीमांसानन्तर्ये प्रमाणाभावात्, विपर्ययसम्भवाच्च न तदानन्तर्यम्। नापि पूर्वोत्तरयोरेकशास्त्रत्वम्, येन "अथातः शेषलक्षणम्" इत्यादिवत् तदानन्तर्यं स्यात्। विषयविभेदात्। पूर्वस्यां धर्मस्य, उत्तरस्यां च ब्रह्मणो मुख्यत्वात्। न चाङ्गाङ्गिभावः, मानाभावात्।

(१४) न च सृष्ट्यादिवाक्यानामर्थवादरूपत्वम्। उत्पत्तिप्रकारफलभेदानामभावात्। ब्रह्मणः सदैकरसत्वाच्च।

(१५) अत्राधिकारस्त्रैवर्णिकानाम्। तेषामेवाध्ययनाधिकारात्।

(१६) जिज्ञासाशब्दो विचारे रूढो यौगिकश्च।

(१७) ब्रह्मण इति शेषषष्ठी।

(१८) अत्र (१) वेदान्तानां विचारो विषयः, (२) आरम्भणीयो न वेति सन्देहः, (३) नारम्भणीय इति पूर्वपक्षः, (४) लक्षणवत्तदुपयोगः सन्देहवारणे, इति सिद्धान्तः, (५) उपोद्घातरूपा सङ्गतिश्चेति पञ्चाङ्गरूपमधिकरणं बोध्यम्।

इति प्रथमं जिज्ञासाधिकरणम्।



## २ जन्माद्यधिकरणम् ।

( किं लक्षणकं ब्रह्म ? )

**किञ्च तत्र किंलक्षणं किम्प्रमाणकमिति जिज्ञासायामाह सूत्रकारः—**

**जन्माद्यस्य यतः शास्त्रयोनित्वात् ॥ १।१।२ ॥**

**इति। ननु कथमत्र सन्देहः। यावता—"सत्यं ज्ञानमनन्तं ब्रह्म" (तै.२-१) इत्याह श्रुतिरेव। विरुद्धं चैतत्। स्वरूपलक्षणाकथने कार्यलक्षणस्य वक्तुमशक्यत्वात्। विवादाध्यासितत्वाच्च।**

---

पूर्वसूत्रेण ब्रह्मविचारे प्रतिज्ञाते कथं कर्तव्य इति कथंभावाकाङ्क्षा जायते, तदर्थं समन्वयाविरोधाभ्यां कर्तव्य इति बोधयितुं सर्वेषां वाक्यानां ब्रह्मणि समन्वयः प्रथमाध्याये प्रतिपाद्यते। अविरोधश्च द्वितीयाध्याये। तत्रादौ "यतो वा इमानि भूतानी"त्यादिवाक्यानां ब्रह्मणि समन्वयं वक्तुं लक्षणप्रमाणबोधकं जन्माद्यधिकरणमवतारयन्ति–तत्रेति। लक्षणज्ञाने सति संशयो न जायत इति कृत्वा जगज्जन्मादिकर्तृत्वं ब्रह्मत्वमिति ब्रह्मलक्षणं वक्तव्यम्। तच्च न सम्भवति। स्वरूपलक्षणेनैव संशयानुदयादित्याशयेन शङ्कते–नन्विति। यावदित्यवधारणे। तथा चाध्ययनानन्तरं विचारात्पूर्वमेव लक्षणज्ञाने जाते संशयो नोदेतीति भावः। **विरुद्धमिति।** वेदे यस्मिन्प्रपाठके स्वरूपलक्षणं तदग्रिमप्रपाठके कार्यलक्षणमुक्तम्। अत्र तु विपरीतमिति श्रुतिविरुद्धमित्यर्थः। **चोऽप्यर्थे। एतत्।** कार्यलक्षणप्रतिपादनमपीत्यर्थः। **वक्तुमशक्यत्वादिति।** लक्ष्याज्ञानात्, लक्ष्ये लक्षणसमन्वयं कर्तुमशक्यत्वादित्यर्थः। **विवादेति।** कार्यलक्षणस्य विवादग्रस्तत्वेन संशयनिराकरणं न भविष्यतीति भावः।

---

१ त्रिविधा हि शास्त्रप्रवृत्तिः (१) उद्देश्यम्, (२) लक्षणम्, (३) परीक्षा चेति। तत्र–उद्देशानन्तरं लक्षणं ततः प्रवृत्तिः। लक्षणस्य प्रयोजनं तु "सर्वं हि लक्षणमितरपदार्थव्यवच्छेदकम्" इति न्यायवार्तिके; "व्यावृत्तिर्व्यवहारो वा लक्षणस्य प्रयोजनम्" इति तर्कदीपिकायाम्; "उद्दिष्टस्यातत्त्वव्यवच्छेदको धर्मः" इति वात्स्यायनभाष्ये च प्रदर्शितम् (१-१-२)। अयमेवासाधारणो धर्मः। अत्र च "अनेन सूत्रेणैव ब्रह्मसम्बन्धिलक्षणप्रमाणयोः प्रदर्शनाच्छेषपृष्ठेव सूत्रकाराशयगोचरा" इति वेदान्तचन्द्रिकाकारः। २ जन्माद्यस्य यतः शास्त्रयोनित्वादित्येकं सूत्रम्। अन्ये तु योगविभागेन सूत्रद्वयमङ्गीचक्रुः। अग्रिमसूत्रेषु साध्यहेतुनिर्देशपूर्वकमधिकरणरचनादर्शनादत्रापि तथैवेति ज्ञेयम्। विस्तरेण योगविभागखण्डनं [illegible] प्रकाशे द्रष्टव्यम्। सिद्धान्तशोभाकारास्तु—जन्माधिकरणसमयतिरोभावानधिकरणसमयसम्बन्धः। समयः सत्ता। "यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः" इति वैतानिकी सृष्टिः शास्त्रदृष्ट्या निरूप्यते। शास्त्रदृष्टिविशिष्टा हि सृष्टिः पुष्टेर्मता, यतः, शास्त्रप्रवर्तको देवस्तां निरूपयितुं क्षमः, अत एव भाष्ये सूत्रैक्यम्। तथाहि—स्रुवादियूपादिपदार्थानां संस्कारविशेषविशिष्टत्वेन सृष्टिर्वैदेकनियम्येति वेदकर्तृसर्वज्ञकर्तृकसृष्टेर्निधेयायाः शास्त्रेत्यादिसूत्रावयवसमभिव्याहारादेव लाभाद्योगविभागस्य सूत्रैक्योपजीवकत्वाच्च प्रथमातिक्रमे कारणाभावादधिकरणान्तरत्वायोगात्। सत्तया वा सा, "आत्मनेदं सर्वमसृजत्" इतिश्रुतेः। न च यत इत्यादिना विषयवाक्यलाभाच्छास्त्रेत्यादिव्यर्थमः; उक्तरीत्या वैदिकसृष्टेरप्राप्तेः। सूत्रावयवस्य यत इत्यस्य वेदावयवत्वेऽपि अक्षमात्रस्फोरकत्वेन शब्दस्य शाब्दबोधविषयत्वानियमाच्चेति प्राहुः। ३ शाङ्करास्तु जन्मादिसूत्रोक्तं तटस्थलक्षणमाहुः। यथा काकवद्देवदत्तगृहम्। अत्रोदासीनोऽपि काको देवदत्तगृहं बोधयति। तथा चाह परिमलकारः—सकलेतरव्यावृत्तलक्ष्यबोधनसमर्थमिह लक्षणं निर्धारणीयम्, जगज्जन्मादिकं तु न तथा; किन्तु शाखाग्रे चन्द्र इतिवत्तटस्थलक्षणम्। ये हि तुलनात्मकविचारपद्धतिं रोचयन्ते तैः "किं पुनस्तद्वेदान्तवाक्यं यत्सूत्रेणेह लिलक्षयिषितम्" इत्यारभ्य शाङ्करभाष्यमप्यनुसन्धेयम्। ४ स्वरूपान्तर्गते सति व्यावर्तकं स्वरूपलक्षणम्। स्वरूपलक्षणं हि कार्यलक्षणस्योपजीव्यम्।

नहि ब्रह्मणो जगत्कर्तृत्वं सर्वसम्मतम् । न चागमोदितमिति वेदमात्रस्य ब्रह्मप्रमाणकत्वं वक्तुं शक्यते । किञ्च । व्यर्थश्चैवं विचारः । लक्षणप्रमाणाभ्यां हि वस्तुज्ञानं भवति । तच्च स्वरूपलक्षणेनैव भवतीति किमनेन । तस्मादयुक्तमुत्पश्याम इति ।

( शास्त्रस्य सन्देहवारकत्वम् )

उच्यते—

सन्देहवारकं शास्त्रं वेदप्रामाण्यवादिनाम् ।
क्रियाशक्तिज्ञानशक्ती सन्दिह्येते परस्थिते ॥ ६ ॥

नहि श्रुतिं व्याख्यातुं प्रवृत्तः सूत्रकारः किन्तु सन्देहं वारयितुम् ।

( ब्रह्मणः कर्तृत्वादिराहित्यम् )

तत्र—"सत्यं ज्ञानमनन्तम्" ( तै. २–१ ) "नित्यशुद्धमुक्तस्वभावम्" ( नृ. ता. ९ ) इति श्रुत्या कर्तृत्वादिप्रापञ्चिकधर्मराहित्यं प्रतीयते ।

( ब्रह्मणः कर्तृत्वम् )

"यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति" ( तै. ३–१ ) इति कर्तृत्वं च ।

( सन्देहोद्भावनम् )

तत्र सन्देहः किं ब्रह्म कर्तृ, आहोस्विदकर्तृ ?

---

ननु तस्यागमोक्तत्वान्निराकरणं भविष्यतीत्यत आह—न चेति । आगमोदितमिति । कर्तृत्वमिति शेषः । मात्रस्येति । वेदस्यैवेत्यर्थः । अनुमानस्यापि ब्रह्मणि प्रमाणत्वादिति भावः । ननु वेदनिरूपितं प्रामाण्यमेव गृह्यते इत्यत आह—किञ्चेति । अयुक्तमिति । सूत्रोक्तं कार्यलक्षणमिति शेषः ।

कार्यलक्षणेन यः संशयो निवर्तते, तं संशयं वक्तुं समाधानमाहुः—उच्यत इति । सन्देहवारकमिति । न तु वेदव्याख्यानकारकमित्यर्थः । शास्त्रं मीमांसारूपम् । परस्थिते । परे ब्रह्मणि स्थितिर्ययोस्ते परस्थिते एतादृशे ये क्रियाशक्तिज्ञानशक्ती, उपनिषत्प्रतिपाद्ये सर्वज्ञत्वजगत्कर्तृत्वे, ते उभे अपि । सन्दिह्येते । स्वरूपलक्षणे सन्देहविषयीभवतः । स्वरूपलक्षणस्य निर्विशेषब्रह्मप्रतिपादकत्वादिति भाव इति कारिकार्थः । सूत्रकार इति । सूत्रकारो व्याख्याने प्रवृत्तश्चेत्, क्रमेण व्याख्यानं कर्तव्यमिति पूर्वोक्तं श्रुतिविरुद्धत्वं लक्षणयोः पूर्वापरकथनरूपं दूषणं च स्यात्, तदेव नास्तीति भावः ।

स्वरूपलक्षणप्रतिपाद्यमाहुः—तत्रेति । कार्यलक्षणप्रतिपाद्यमाहुः—यतो वेति । एतदधिकरणाङ्गभूतसंशयाकारमाहुः—तत्रेति ।

---

१ परस्थिते—परस्मिन् ब्रह्मणि स्थिते ये क्रियाशक्तिज्ञानशक्ती वे स्त. नवेति सन्दिह्येते । अत्रेति शेषः । २ तेनात्र शाब्दमेव प्रमाणम् । नानुमानादिना कारणत्वं विचार्यत इति ध्येयम् । प्रपञ्चितं चैतत्प्रकाशे पण्डितपुरन्दरैः श्रीमत्पुरुषोत्तमचरणैः । सिद्धान्तशोभाकारैश्च विद्वन्मण्डनविवृतौ ।

(तत्र पूर्वपक्षः)

किं तावत् प्राप्तम्? अकर्तृ। कथम्? "ब्रह्मविदाप्नोति परम्" (तै. २-१) इति प्रधानवाक्यम्, फलसम्बन्धात्, ऋचापि विवृतम् "सत्यं ज्ञानमनन्तं ब्रह्म, यो वेद निहितं गुहायाम्, परमे व्योमन्, सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता" (तै. २-१) इति। फलार्थं च ब्रह्मज्ञानम्, फलं च फलवाक्योक्तधर्मज्ञानादेव, नान्यथा। कर्तृत्वं च परविवरणतयोक्तम्। परं किमित्युक्ते, यः सर्वान्तर आनन्द इति। कथं सर्वान्तरमित्याकाङ्क्षायां परिचयार्थं भूतभौतिकसृष्टिमुक्त्वा गौणानन्त्यं परिहृतम्, गौणोपासनाफलं च प्रधानशेषतयोक्तम्, तत्रान्यगतकर्तृत्वारोपानुवादोऽपि सम्भवति। ततश्च—"भृगुर्वै वारुणिः" (तै. ३-१) इत्युपाख्यानेऽपि परिचायकत्वाद्गौणकर्तृत्वमेवानूद्यते फलाश्रवणादिति पूर्वः पक्षः[1]।

---

पूर्वपक्षमाहुः—**किं तावदिति**। कार्यलक्षणं न सम्भवतीति पूर्वपक्ष्याशयं वक्तुं पूर्वपक्षं विवृण्वन्ति—**ब्रह्मविदेति**। यथा "स्वर्गकामो यजेते"ति वाक्यस्य स्वर्गरूपफलसम्बन्धात् प्रधानत्वं तथा परप्राप्तिरूपफलसम्बधात् प्रधानवाक्यत्वमित्यर्थः। ननु पूर्वकाण्डेऽयं नियमोऽस्तु नतूत्तरकाण्ड इति नास्य प्रधानत्वमित्यत आह—**ऋचापीति**। यद्यस्य प्रधानवाक्यत्वं न स्यात्तर्हि ऋचा विवरणं न स्यादित्यपिनायमर्थो ध्वन्यते। विवरणमाहुः—**सत्यमिति विपश्चितेत्यन्तम्**। **धर्मज्ञानादिति**। परत्वज्ञानादित्यर्थः। परत्वज्ञानं च जगज्जन्मादिकर्तृत्वेनेति बोधयितुमाह—**कर्तृत्वमिति**। "तस्माद्वा एतस्मादित्यादि" वाक्येनोक्तमित्यर्थः। **आनन्द इतीति**। "अन्योन्तर आत्मानन्दमयः, तेनैष पूर्णः" इत्यादिवाक्येन बोधित इत्यर्थः। अनेन परस्वरूपमुक्तमिति भावः। ननु "ब्रह्मविदाप्नोती"त्यस्मिन्प्रपाठके, अयं क्रम उक्तः। परन्तु "अन्योन्तर आत्मा" इति वाक्यं पश्चादुक्तमिति परस्य गौणत्वं स्यादित्यत आह—**कथमित्यादिना**। **परिचयार्थमिति**। उपलक्षणविधया ज्ञानार्थमित्यर्थः। **भूतभौतिकेति**। आकाशाद्यन्नादिसृष्टिम्। **परिहृतमिति**। यथा अन्नानन्तरं प्राणस्य गौणत्वं पर्यवसानाभावात्, तथाऽऽनन्दस्य तु वक्तुं न शक्यते; अन्ते पर्यवसानात्, सृष्ट्यादिकर्तृत्वाच्चेति भावः। **गौणोपासनेति**। "येऽन्नं ब्रह्मोपासते" इत्यादिवाक्येनोक्ता गौणी या अन्नब्रह्मोपासना तस्या यत्फलमित्यर्थः। **प्रधानशेषतयेति**। प्रधानस्य यत्फलं ब्रह्मानन्दावाप्तिरूपं तच्छेषतया तदङ्गत्वेनेत्यर्थः। एतेन परस्य सर्वोत्कृष्टत्वं ध्वनितम्। एतावता प्रबन्धेन परे ब्रह्मणि कर्तृत्वं प्रतीयते। स्वरूपलक्षणे तु प्रापञ्चिकधर्मराहित्यं ब्रह्मणि प्रतिपाद्यत इति कृत्वा "ब्रह्मविदाप्नोति परमि"ति वाक्यप्रतिपाद्यं परप्राप्तिसाधनीभूतं यत् ब्रह्मज्ञानं तद्विषयीभूते ब्रह्मणि कर्तृत्वं न प्रतीयत इति विरोधः। एतादृशविरोधपरिहारार्थं "प्रजापतिरकामयत प्रजाः सृजेये"ति पूर्वकाण्डोक्तप्रजापतिगतस्य साङ्ख्योक्तप्रकृतिगतस्य वा कर्तृत्वस्य परे ब्रह्मणि आरोपं कृत्वा अनुवादस्यापि सम्भव इत्याशयेनाऽऽह **तत्रान्यगतेति**। ननु भृगुप्रपाठके "यतो वा इमानी"त्यादिना यत्कर्तृत्वमुक्तं तस्य का वा गतिरित्यत आह—**ततश्चेति**। **गौणकर्तृत्वमेव**। आरोपितकर्तृत्वमेव। ननु तत्र कथमेवं ज्ञायते इत्यत आह—**फलेति**। तथा च कार्यलक्षणं न सम्भवतीति पूर्वपक्ष्याशयः।

---

[1] गौणकर्तृत्वेन शाङ्कराणां तटस्थलक्षणं सूचयन्ति।

( कर्तृत्वव्यवस्थापनम् )

**सिद्धान्तस्तु—**

**उत्पत्तिस्थितिनाशानां जगतः कर्तृ वै बृहत् ।**
**वेदेन बोधितं तद्धि नान्यथा भवितुं क्षमम् ॥ ७ ॥**
**नहि श्रुतिविरोधोऽस्ति कल्पोऽपि न विरुध्यते ।**
**सर्वभावसमर्थत्वादचिन्त्यैश्वर्यवद्बृहत् ॥ ८ ॥**

**वेदेनैव तावत्कर्तृत्वं बोध्यते । वेदश्च परमाप्तोऽक्षरमात्रमप्यन्यथा न वदति । अन्यथा सर्वत्रैव तदविश्वासप्रसङ्गात् । न च कर्तृत्वे विरोधोऽस्ति सत्यत्वादिधर्मवत्कर्तृत्वस्याप्युपपत्तेः, सर्वथा निर्धर्मकत्वे सामानाधिकरण्यविरोधः, सत्यज्ञानादिपदानां धर्मभेदेनैव तदुपपत्तेः । न च कर्तृत्वं संसारिधर्मो देहाद्यध्यासकृतत्वादिति वाच्यम् ;**

---

सिद्धान्तं विवृण्वन्ति—**सिद्धान्तस्त्विति** । बृहत् ब्रह्मेत्यर्थः । **तद्धीति** । कर्तृत्वं हीत्यर्थः[1]। **अन्यथा** । आरोपितं गौणमिति यावत् । **कल्पोऽपीति** । कल्पसूत्रमपीत्यर्थः । तत्र सर्वभावः सर्वभवनमित्याकारकम् । क्वचित् कल्प्य इत्यपपाठः । **सर्वभावेति** । सर्वभवने समर्थत्वाद्बृहदकर्तृ कर्तृ भवतीत्यर्थः । ननु कथं श्रुतिविरोधो नास्तीत्यत आह—**वेदेनेति** । "ब्रह्मविदाप्नोति परमि"त्यनेन साधनं फलं चोक्तम् । तत्र साधनविषयीभूते ब्रह्मणि "सत्यं ज्ञानमि"त्यादिना स्वरूपलक्षणमुक्त्वाऽकर्तृत्वं प्रतिपादितम् । फलकर्मीभूते परे ब्रह्मणि "तस्माद्वा एतस्मादि"त्यादिवाक्येन कार्यलक्षणमुक्त्वा कर्तृत्वं प्रतिपादितम् । अथ च ब्रह्मणा विपश्चितेत्येतद्वाक्यगततृतीयान्तेन ब्रह्मपदेन परस्यैव विवरणं क्रियते, तेन च कृत्वा किं ज्ञायते लक्षणद्वयस्यैकं ब्रह्मैव लक्ष्यमिति लक्षणयोर्विरोधाभावः । तथा चाचिन्त्यैश्वर्यवत्वात् वेदेनैव कर्तृत्वमकर्तृत्वं च बोध्यत इति भावः । ननु क्वचिद्वेदस्याप्यारोपितार्थबोधकत्वं स्यादित्यत आह—**वेदश्चेति** । **अन्यथा** आरोपितमर्थम् । **अन्यथा** । क्वचित्स्थले तथा स्वीकारे । **अस्तीति** । आरोपितार्थस्य "स्वर्गकामो यजेते"त्यत्रापि सत्वेन सन्मार्गोच्छेदापत्तिः । **न चेति** । अस्तीत्यनेनान्वितम् । **विरोध इति** । शुद्धब्रह्मणो निर्धर्मकत्वेन तत्र कर्तृत्वस्वीकारे स्वरूपलक्षणविरोध इत्यर्थः । शुद्धस्य निर्धर्मकत्वमेव नास्तीत्याहुः—**सत्यत्वादीति** । आदिना ज्ञानत्वानन्तत्वपरिग्रहः । **सामानाधिकरण्येति** । एकार्थप्रतिपादकत्वरूपसामानाधिकरण्यविरोध इत्यर्थः । तदेवोपपादयति—**सत्येति** । **धर्मभेदेनैवेति** । यथा नीलोत्पलमित्यादौ नीलत्वं उत्पलत्वं चैकस्मिन्नुत्पले वर्तत इति कृत्वा नीलाभिन्नं उत्पलं इत्यभेदप्रकारकः अभेदसंसर्गको वा शाब्दबोधो जायते, तथा "सत्यं ज्ञानमि"त्यादावपि धर्मभेदेनैवोपपत्तिर्भविष्यतीति भावः । **संसारीति** । जीवधर्म इत्यर्थः ।

---

१ अनेन शुद्धाद्वैतसिद्धान्तं प्रतिपादयन्तः श्रीमदाचार्यचरणाः स्ववेदश्रद्धां दर्शयन्ति । २ 'यदि क्वापि तथा वदेत्,' "स्वर्गकामो यजेत" इत्यादिविध्यंशे स्वरूपलक्षणादंशे चाविश्वसनीयः स्यात् ततश्च सन्मार्गमात्रमुच्छिद्येत । अतो यद्यथा वदति तत्तथेति मन्तव्यम् । तेन कर्तृत्वं वेदोक्तत्वादपि वास्तवमित्येव सिद्ध्यति । न च कर्तृत्वाङ्गीकारे स्वरूपलक्षणविरोधोऽस्ति, येन तदनुरोधादवास्तवत्वं तस्य कल्प्येत । तदुक्तसत्यत्वादिधर्मवत् कर्तृत्वस्याप्युपपत्तेः । न च ब्रह्म यावद्धर्मरहितमिति वक्तुं शक्यम् । स्वरूपलक्षणविरोधात् । तत्र ब्रह्मणि सत्यत्वादिधर्माङ्गीकारात् । न चासत्यजडसान्तव्यावृत्तत्वेनैक एवार्थः सत्यादिपदैरुच्यत इति वक्तुं युक्तम् । व्यर्थपौनरुक्त्यापत्तेः । तत्तद्भेदधर्मकत्वसिद्ध्या घटकुड्यां प्रभाताच्च । अतः सत्यादिपदानां स्वार्थत्यागोऽपार्थ एवेति प्रकाशकाराः प्राहुः ।

(दूषणपरिहारः)

**प्रापञ्चिके कर्तृत्वे तथैव, न त्वलौकिककर्तृत्वे।**

(श्रुत्यर्थविचारः)

**अत एवास्येत्याह। अस्येति पुरोवर्ती प्रपञ्च इदमा निर्दिश्यते। अनेकभूतभौतिकदेवतिर्यङ्मनुष्यानेकलोकाद्भुतरचनायुक्तब्रह्माण्डकोटिरूपस्य मनसाप्याकलयितुमशक्यरचनस्यानायासेनोत्पत्तिस्थितिभङ्गकरणं न लौकिकम्। प्रतीतं च निषेध्यं नाप्रतीतं न श्रुतिप्रतीतम्। सत्यत्वादयश्च लौकिकास्ततः सर्वनिषेधे तदज्ञानमेव**

---

**तथैवेति**। देहाध्यासकृतत्वमेव।

अस्मिन्नर्थे सूत्रकारसम्मतिमाहुः—**अत एवेति**। **अस्येति**। अलौकिककर्तृत्वं भगवन्निष्ठमेवेत्यभिप्रायेणैव जन्माद्यस्येत्यस्मिन्सूत्रे अस्येत्युक्तमित्यर्थः। **इदमेति**। इदंशब्देनेत्यर्थः। अलौकिककर्तृत्वमेवाऽऽहुः—**अनेकेति**। ननु "अस्थूलमनणु"इत्यादिवाक्यानां निर्धर्मकब्रह्मप्रतिपादकत्वात् स्थूलत्वादीनां निषेध इव कर्तृत्वनिषेधोऽपि सम्भवतीत्यत आहुः—**प्रतीतमिति**। अभावज्ञाने प्रतियोगिज्ञानस्य कारणत्वादनेकब्रह्माण्डकर्तृत्वस्य लोके प्रतीत्यभावादप्रतीतकर्तृत्वस्य निषेधो न सम्भवतीत्याशयेनाऽऽहुः—**नाप्रतीतमिति**। ननु "तस्माद्वा एतस्मादि"त्यादिश्रुतिप्रतीतकर्तृत्वस्य निषेधः स्यादित्यत आहुः—**न श्रुतिप्रतीतमिति**। "अतिरात्रे षोडशिनं गृह्णाती"त्यनेन षोडशिग्रहस्य ग्रहणं विहितम्। तदङ्गत्वेन "समयाध्युषिते सूर्ये षोडशिनः स्तोत्रमुपाकुर्यादि"त्यनेन स्तोत्रोपाकरणमपि विहितम्; कुत्रचित्, "नातिरात्रे षोडशिनं गृह्णाती"त्यनेन वाक्येनातिरात्रे षोडशिग्रहस्य निषेधोऽपि बोध्यते, तेन च कृत्वा विकल्पः प्रतीयते यथा, तथात्रापि श्रुतिप्रतीतकर्तृत्वस्य निषेधे तुल्यबलत्वाद्विकल्पस्यात्र तु निषेधः स्यादित्यतो न श्रुतिप्रतीतं निषेध्यमिति भावः। ननु मास्तु कर्तृत्वनिषेधः श्रुत्युक्तं सत्यत्वादिकं तु लोकप्रसिद्धमपि तस्यैव निषेधोऽस्त्वित्यत आह—**सत्यत्वेति**। **लौकिका** लौकिकत्वेनादृताः। **तत इति**। तदनन्तरमित्यर्थः। **सर्वनिषेधे** लोकश्रुतिप्रतीतसाधारण्येन सर्वनिषेधे। **तदज्ञानमेव**। ब्रह्माज्ञानमेव। केनचिद्रूपेण निरूपणं कर्तव्यम्, सर्वनिषेधे

---

१ अभावलौकिकप्रत्यक्षं प्रति प्रतियोगिज्ञानस्य हेतुत्वम्, अन्यथा प्रतियोगिज्ञानशून्यकाले नेत्याकारकप्रतियोग्यमिश्रिताभावलौकिकप्रत्यक्षं स्यादिति प्राञ्चो नैयायिकाः। २ लोके तस्याप्रतीतावपि श्रुतौ प्रतीतत्वात्साप्रतीतत्वमित्याशङ्क्याहुः—**न श्रुतिप्रतीतमिति**। न हि लौकिकैः प्रमाणैस्तन्निषेद्धुं शक्यम्; श्रुतेः सर्वतोऽभ्यर्हितत्वेन तेषां तत्रासामर्थ्यात्, समानविषयत्वाभावाच्च। अन्यथा समस्तोपाध्यनवच्छिन्नानन्तानन्दचैतन्यैकरसमुदासीनमेकमद्वितीयामात्मतत्त्वं श्रुतिस्मृतीतिहासपुराणसिद्धमहमित्यनुभवेन प्रादेशिकानेकविधशोकदुःखादिप्रपञ्चोपप्लुतमात्मतत्त्वं दर्शयता बाध्येत। न च ज्येष्ठप्रमाणप्रत्यक्षविरोधादाम्नायस्यैव तदपेक्षस्याप्रामाण्यमुपचरितार्थत्वं वेति साम्प्रतम्। तस्यापौरुषेयत्वेन निरस्तसमस्तदोषाशङ्कस्य स्वतःसिद्धप्रमाणभावस्य स्वकार्ये प्रमितौ प्रमाणान्तरानपेक्षत्वात्। ननु प्रमितावनपेक्षत्वेऽपि स्वोत्पत्तौ प्रत्यक्षापेक्षत्वात्तद्विरोधादनुत्पत्तिलक्षणमप्रामाण्यं स्यात्, इति चेत्, न; उत्पादकाप्रतिद्वन्द्वित्वात्। नह्याम्नायजन्यं ज्ञानं व्यावहारिकं प्रत्यक्षस्य प्रामाण्यमुपहन्ति, येन कारणाभावात्स्वयं न भवेदपि तु पारमार्थिकम्। नचैवमतात्त्विकप्रमाणभावेभ्यः कथं तात्त्विकप्रमाणोत्पत्तिरिति वाच्यम्। अतात्त्विकप्रमाणभावेभ्योऽपि साम्व्यावहारिकेभ्यस्तत्त्वज्ञानोत्पत्तिदर्शनात्। यथा वर्णे ह्रस्वत्वदीर्घत्वादयोऽन्यधर्मा अपि समारोपितास्त्वप्रतिपत्तिहेतवः। इदं शाब्दानुभवस्य ज्येष्ठप्रमाणजन्यत्वमङ्गीकृत्योक्तम्। वस्तुतस्तु यत्र लौकिके शाब्द इयं रीतिस्त्वत्रापौरुषेये तस्मिन् का शङ्का प्रत्यक्षजन्यस्य बाधस्य। ननु लौकिकप्रमाणैर्निषेधासम्भवेऽपि "निष्क्रियम्" इत्यादिश्रुत्यैव तन्निषेध्यमिति चेत्; स्वोक्तनिषेधे प्रतारकत्वप्रसङ्गेन परमाप्तत्वं श्रुतेर्व्याहन्येत। उभयोरपि श्रुतित्वाविशेषाद्बाध्यबाधकभावानुपपत्तेश्चेति श्रीमुरलीधराः।

भवेत्। न च सत्यत्वादिकं लोके नास्त्येव, व्यवहारमात्रत्वात्, कारणगतमेव सत्यत्वं प्रपञ्चे भासत इति वाच्यम्; तर्हि कर्तृत्वं तथा कुतो नाङ्गीक्रियते? स्मृतिश्च स्वीकृता भवति "कर्ता कारयिता हरिः" इति। न चारोपन्यायेन वक्तुं शक्यम्। तथा सत्यन्यस्य स्यात्। तत्र न प्रकृतेः। अग्रे स्वयमेव निषिध्यमानत्वात्। न जीवनाम्। अस्वातन्त्र्यात्। न चान्येषाम्। उभयनिषेधादेव। तस्माद् ब्रह्मगतमेव कर्तृत्वम्। एवं भोक्तृत्वमपि। न वा काचिच्छ्रुतिः कर्तृत्वं निषेधति। विरोधभानात्कल्प्या तु लौकिकपरा। फलवाक्येष्वश्रुतानां गुणोपसंहारः कर्तव्यः।

( सूत्रार्थः )

तथा चायं सूत्रार्थः। जन्म आदिर्येषामित्यवयवसमासादतद्गुणसम्विज्ञानो बहुव्रीहिः।

---

निरूपणं कर्तुमशक्यत्वाच्छास्त्रवैयर्थ्यं स्वरूपलक्षणवैयर्थ्यं च स्यादिति भावः। **न चेति**, ब्रह्माज्ञानाभावाय श्रुतिप्रतीतमेव सत्यत्वं न लोकप्रतीतमिति न तस्य निषेध इति भावः। समाधानमाहुः—**तर्हीति**। तर्हि श्रुतिप्रतीतनिषेधास्वीकारे। **तथा**। श्रुतिप्रतीतत्वादनिषेध्यम्। कर्तृत्वस्य स्मृतिप्रतीतत्वमप्याहुः—**कर्तेति**। ननु, स्वरूपलक्षणभङ्गान्यथानुपपत्त्या सत्यत्वं ब्रह्मणि वक्तव्यं, कर्तृत्वं तु न वक्तव्यं, तस्मादित्यादिश्रुत्युक्तकर्तृत्वोपपत्तिस्त्वारोपादेवेत्याशङ्कते—**न चेति**। शक्यमित्यनेनान्वितम्। **तथा सति**। अन्यगतकर्तृत्वस्य ब्रह्मणि आरोपे क्रियमाणे सति। कर्तृत्वस्यान्यगतत्वमेव नास्तीत्याहुः—**न प्रकृतेरिति**। अग्रे ईक्षत्यधिकरणे। **अस्वातन्त्र्यादिति**। प्रपञ्चमध्यपातित्वेन उत्पत्तिस्थितिभङ्गकरणे सामर्थ्याभावादिति भावः। **न चान्येषामिति**। इदानीन्तनानामित्यर्थः। **उभयनिषेधादिति**। इन्द्रादीनां जीवान्तःपातित्वाज्जडजीवयोरुभयोर्निषेधादेवान्येषां निषेध इत्यर्थः। उपसंहरन्ति—**तस्मादिति**। **कर्तृत्वमिति**। श्रुतिप्रतिपाद्यमलौकिकमिति शेषः। एतावता ग्रन्थेन परब्रह्मणि फलवाक्योक्तकर्तृत्वं प्रतिपाद्य कार्यलक्षणस्वरूपलक्षणयोर्विरोधः परिहृतः। इदानीं फलवाक्यानुक्तानां सर्वज्ञत्वादिधर्माणां सकलानां तत्तच्छ्रुतिप्रतिपाद्यानां ब्रह्मणि निरूपयितुं भूमिकां रचयन्ति—**एवमिति**। **भोक्तृत्वमिति**। श्रुतिप्रतिपाद्यमलौकिकं भोक्तृत्वमित्यर्थः। "भुङ्क्ते भोजयते हरिः" इति। अपिना सर्वज्ञत्वादीनां परिग्रहः। ननु यद्यलौकिककर्तृत्वं ब्रह्मणि स्वीक्रियते चेत्, अकर्तृत्वप्रतिपादिकानां श्रुतीनां कर्तृत्वनिषेधकत्वं स्यादित्यत आह—**न वेति**। **श्रुतिरिति**। "असङ्गो ह्ययं पुरुषः" इत्याद्यकर्तृत्वप्रतिपादिका श्रुतिरित्यर्थः। **विरोधेति**। श्रुतिप्रतिपाद्ययोः कर्तृत्वाकर्तृत्वयोरचिन्त्यैश्वर्यवति भगवति विरोधाभावादित्यर्थः। ननु ब्रह्मण्यकर्तृत्वप्रतिपादकश्रुत्यन्यथानुपपत्त्या साक्षात्कर्तृत्वनिषेधिका श्रुतिः कल्प्यत इत्यत आह—**कल्प्येति**। **लौकिकेति**। जीवनिष्ठं यल्लौकिककर्तृत्वं तन्निषेधपरत्वेन व्याख्येयमित्यर्थः। ननु फलवाक्यविवरणरूपात् "तस्माद्वा एतस्मादि"त्यादिवाक्यात् भोक्तृत्वसर्वज्ञत्वादीनामप्रतीतेः कया रीत्या ब्रह्मणि तेषां धर्माणां विद्यमानत्वबोधो भवतीत्यत आह—**फलवाक्येति**। **गुणोपसंहारेति**। अग्र उक्तानां गुणानां उपास्ये यथोपसंहारस्तथाऽग्रे चराचराधिकरणीयविषयवाक्योक्तभोक्तृत्वस्य भूमाद्यधिकरणोक्तभूमत्वस्यात्र उपसंहारं कृत्वा तत्तद्धर्माणां ब्रह्मणि विद्यमानत्वमनया रीत्या बोध्यमिति दिक्।

एतावता कार्यलक्षणस्य ब्रह्मणि समन्वयं कृत्वा अतद्गुणसम्विज्ञानबहुव्रीहिं स्वीकृत्य पुष्टिसृष्टिप्रकारेण सूत्रार्थमाहुः—**तथा चेति**। जन्म आविर्भावः येषां प्रकाराणामित्यर्थः। **अवयवसमासादिति**। भावप्रधानो

१ अग्रे प्रथमाध्यायस्य चतुर्थपादारम्भे आनुमानिकाधिकरणे, इति पाण्डुलिपिपुस्तकस्य पाठः।

( पक्षान्तरम् )

**अथवा जन्मप्रभृति सर्वे भावविकारा आदिशब्देन गृह्यन्ते। तथाच जन्म**

---

निर्देशः। अवयवसमासत्वादित्यर्थः। तथा च जन्म आविर्भावः तद्रूपं यदवयवं तत् आदिः प्रथमं येषां स्थितिप्रलयाभिसम्वेशानां प्रकाराणां ते जन्मादि। ननु जन्मादय इति वक्तव्ये कथं जन्मादीति चेत्, न; अस्य सूत्रस्य वेदरूपत्वं बोधयितुं छान्दसः सुपां सुलुगिति सूत्रेण जसो लुक्। ब्रह्मण इत्यधिकार लभ्यं यतः ब्रह्मणः सकाशात् अस्य जगतः जन्मादि आविर्भावतिरोभावादिप्रकारा भवन्तीति सूत्रार्थः। तथा च श्रुतिः "सो अङ्ग वेद यदि वा न वेद। किंस्विद्वनं क उ स वृक्ष आसीत्, यतो द्यावापृथिवी निष्टतक्षुः। मनीषिणो मनसा पृच्छते दु तत् यदध्य तिष्ठद्भुवनानि धारयन्, ब्रह्म वनं ब्रह्म स वृक्ष आसीत्, यतो द्यावापृथिवी निष्टतक्षुः। मनीषिणो मनसा विब्रवीमि वः। ब्रह्माध्यतिष्ठद्भुवनानि धारयन्" इत्यादि श्रुत्या जगतो जन्मादिप्रकाराणामाविर्भावादिर्बोध्यते। तथा च तत्तद्रूपेण जगद्रूपेण च भगवानेव क्रीडतीति पुष्टिसृष्टिप्रकारः सूत्रेण बोधित इति सर्वमनवद्यम्। ननु सर्वे तद्गुणसम्विज्ञानत्वमत्र स्वीकुर्वन्तीति चेत्, न; अत्रातद्गुणसम्विज्ञानत्वस्यैव स्वीकारात्। तथा हि–तद्गुणसम्विज्ञानत्वं नाम तस्य गुणस्य अवयवपदार्थस्य सम्विज्ञानं विशेष्यान्वयिनान्वयित्वम्। अन्वयित्वं च संयोगसमवायान्यतरसम्बन्धेन, यथा शुक्लवाससमानय लम्बकर्णमानयेत्यादौ। यत्र विशेषणस्य कार्ये सम्बन्धाभावस्तत्रातद्गुणसम्विज्ञानत्वम्, यथा चित्रगुमानय। तथा च प्रकृते जन्म आदिर्येषामित्यत्र आदिपदार्थः प्राथम्यं तच्चापेक्षाबुद्धिजन्यमिति तस्य बुद्धिकर्तृकत्वं न ब्रह्मकर्तृकत्वमिति, ब्रह्मकर्तृकभवनक्रियायां तस्य सम्बन्धाभावात्तद्द्वारा जन्मनोऽपि सम्बन्धाभावादतद्गुणसम्विज्ञानत्वमिति मन्तव्यम्। अधिकं प्रकाशे द्रष्टव्यमिति दिक्।

प्रवाहसृष्टिप्रकारेण सूत्रार्थमाहुः—**अथवेति**। **भावविकारा**[3] इति। "जायतेऽस्ति विपरिणमते वर्द्धतेऽपक्षीयते नश्यती"ति वेदाङ्गनिरुक्तोक्ताः षड् भावविकारा इत्यर्थः। **गृह्यन्त** इति। पञ्चेति शेषः।

---

१ तस्य, अन्यपदार्थस्य गुणो विशेषणम्, तस्य सम्विज्ञानं येनेति। स वर्तिपदार्थो गुणो यस्यान्यपदार्थस्य तस्य सम्विज्ञानं येनेति च। एवं च, अन्यपदार्थविशेषणस्य यत्र सम्बन्धसामर्थ्यात्कार्यसम्बन्धस्तत्र तद्गुणसम्विज्ञानो बहुव्रीहिः। २ बहुव्रीहौ बहुधाऽवयवार्थकानां पदानामतद्गुणसम्विज्ञानत्वमेवेत्यवधार्यम्। अतद्गुणसम्विज्ञानत्वं च संयोगसमवायान्यसम्बन्धेन कार्यान्वयित्वेन गुणानां वृत्तिघटकीभूतपदानामर्थस्यान्यपदार्थे प्रधानेऽन्वययोग्यत्वम्। अत एव "सर्वादीनि सर्वनामानि" इत्यत्र सर्वशब्दस्य सर्वनामसंज्ञाप्रयुक्तसुडागमसिद्ध्यर्थं तद्गुणसम्विज्ञानो बहुव्रीहिः "हलि सर्वेषाम्" इति ज्ञापकबलेनाङ्गीकृतः। तेन ज्ञापकादतेऽवयववाचके बहुव्रीहौ न तद्गुणसम्विज्ञानो बहुव्रीहिरिति राद्धान्तः। न च "जन्मोत्पत्तिरादिरस्य" इति "लाघवाय सूत्रकृता जन्मादीति नपुंसकः प्रयोगः कृतः" अन्यथा "जन्म आदिर्ययोः स्थितिभङ्गयोस्तौ जन्मादी, इत्यन्यपदार्थो यदि विशेषणत्वेन विवक्ष्यते, तर्हि जन्मादी अस्येति निर्देशे गौरवं स्यात्" इति वाच्यम्; "जन्म आदिर्येषामि"ति विग्रहलाभाज्जन्मादयोऽस्य यत इति सूत्ररचनापत्त्या जन्मस्थितिभङ्गरूपसामान्यविवक्षायामेवातिगौरवं स्यादिति; येषामित्युक्त्या कर्मधारयगर्भत्वं बहुव्रीहेः सूच्यत इति नोक्तदोषावकाशः। तद्गुणसम्विज्ञानपक्षे तु विशेषणस्यारुणाधिकरणन्यायेनान्वयाङ्गीकारे एकविशेषणत्वेनोपस्थितस्येत्यादिनियमानुगृहीते एकपदार्थनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेनान्वयबोधं प्रति विशेष्यतान्तरानिरूपितप्रकारतयोपस्थितेः कारणत्वे मुख्यप्रकारकत्वं प्रविष्टम्, तच्चोपपद्यते; आरुण्यादेर्विधेयभावनायामनन्यगतिकोऽन्वयः, अन्यथा सर्वत्र परम्परासम्बन्धानामन्वये पटत्वादेरनित्यत्वान्वयवारणाय बाधबुद्धेः, प्रतिबन्धकत्वान्तरकल्पने गौरवाच्च। एवं चैकशेषेण, जन्मच तदादिश्च जन्मादिः, जन्मादिर्येषां तानि जन्मादीनि, जन्मादिश्च जन्मादी च जन्मादीनि च जन्मादीति विग्रहेण, जन्मादयोऽस्य यत इति सूत्ररचनापत्तिः पराहता। नपुंसकमनपुंसकेनैकवच्चान्यतरस्याम् इति सूत्रेणैकवद्भावस्य वैकल्पिकत्वप्रदर्शनार्थं मूले येषामिति बहुवचननिर्देशः। अतद्गुणसम्विज्ञानपक्षे रुचिस्तु पुष्टिपक्षपातात्; पुष्टिसृष्टेः स्वस्मादेवाविर्भावात् "पुष्टिकायेन निश्चयः" इत्युक्तेः। ३ तथा चाह भगवान् यास्कः—"षड्भावविकारा भवन्तीति वार्ष्यायणिर्जायतेऽस्ति विपरिणमते वर्धतेऽपक्षीयते विनश्यतीति।" नामाख्यातोपसर्गनिपातेषु भावप्रधाना आख्याता भवन्ति। भावो भावना। तथाचो-

च आदिश्चेत्येकवद्भावः । आदिशब्दश्च धर्मवाची सच स्वसम्बन्धिनं लक्षयति । तस्योभयसापेक्षत्वात् । उत्पत्तेर्विद्यमानत्वादन्यानेव भावविकारानुपलक्षयतीत्या-दिशब्देनान्ये भावविकाराः ।

( तृतीयः पक्षः )

अथवा जन्मनो नादित्वम् । तदाधारस्य पूर्वमविद्यमानत्वात् । अन्ये त्वादि-मन्तः । तदाधारस्य पूर्वं विद्यमानत्वात् । अत आदिशब्दः स्वाधारसद्धर्मवाची तद्धर्माणामुपलक्षकः ।

( मर्यादाष्टिप्रकारः )

अथवा गमनप्रवेशयोर्भेदाज्जन्म आदिर्येषामिति . जात्यपेक्षयैकवचनम् । जन्म

---

जन्मपदादिपदयोर्द्वन्द्वेन जन्मादिपदस्य षड्वाचकत्वमाहुः—तथा चेति । एकवद्भाव इति । सर्वोऽपि द्वन्द्वो विभाषैकवद्भवतीत्यर्थः । धर्मवाचीति । पूर्वोत्तरमीमांसकयोर्वृत्तिविषये सिद्धान्तसैक्यात् जातिश-क्तिवादिनां मीमांसकानां मते प्राथम्यरूपधर्मवाचीत्यर्थः । स्वसम्बन्धिनम् । प्राथम्यरूपधर्मसम्बन्धिनम् । ननु कथं लक्षयतीत्यत आह—तस्येति । उभयसापेक्षत्वादिति । जन्मनि यत्प्राथम्यं तदस्त्या-दिपञ्चनिरूपितं जन्मनश्चाश्रयत्वमेवंरीत्या प्राथम्यस्योभयसापेक्षत्वादित्यर्थः । आदिशब्देनेति । यद्यप्या-दिशब्दार्थस्योभयत्र सम्बन्धात् षड्भावविकारे लक्षणां वक्तुं शक्यते । तथापि जन्मपदस्य विद्यमानत्वात् पञ्चैव लक्षयतीत्यर्थः ।

नन्वेवं चेदुभयत्र सम्बन्धेन षट्स्वेव लक्षणाऽस्तु जन्मपदं व्यर्थमित्यस्वरसादाह—अथवेति । अनादित्वमिति । जन्मनः पूर्वं प्रपञ्चाभावादाश्रयं विना तस्य स्थितिर्नास्तीति जन्मनोऽनादित्वमि-त्यर्थः । इदं चासत्कार्यवादिमतेन । अन्ये त्विति । अस्त्यादीत्यर्थः । तदाधारस्य । प्रपञ्चस्येति शेषः । स्वाधारसद्धर्मवाचीति । स्वं आदित्वं तदाधारभूतः सद्धर्मः, अस्तिपदवाच्यो धर्मः; अस्तित्वं तस्य वाची तद्बोधकः, अन्यापेक्षया प्राथम्यात्तद्वाचकः सन् विपरिणामादीनां लक्षक इत्यर्थः । एतेनाजहत्स्वार्था लक्षणा सूचिता । तथा च जन्मपदेन प्रथमो विकारः । आदिपदेन पञ्च विकारा बोध्या इति न जन्मपदवैयर्थ्यमिति भावः।

इदानीं मर्यादाष्टिप्रकारेण तद्गुणसम्विज्ञानपक्षमाश्रित्य सूत्रार्थमाहुः—अथवेति । गमनप्रवेशयो-रिति । जन्मप्रलययोर्मध्ये यत्कार्यस्वरूपं तस्येत्यर्थः । भेदात् । कारणतो भेदात् । जन्मेति । जन्म आदि-

---

त्यम्—"धात्वर्थो भावश्च तिङ्पदैरभिधीयते" इति, "यावत्सिद्धमसिद्धं च साध्यत्वेनाभिधीयते । आश्रितक्रमरूपत्वात्सा क्रियेत्यभिधीयते" इति च । अयमेव भावः षड्भिः प्रकारैर्विकारार्थकः । तत्र—(१) "जायत इति पूर्वभावस्यादिमाचष्टे नापरभावमाचष्टे, न प्रतिषेधति ।" (२) "अस्तीत्युत्पन्नस्य सत्त्वस्यावधारणम् ।" (३) "विपरिणमत इत्यप्रच्यवमानस्य तत्त्वाद्विकारम् ।" (४) "वर्धत इति स्वाङ्गाभ्युच्चयं सायोगिकाना वार्थानाम् ।" "वर्धते विजयत इति वा ।" "वर्धते शरी-रेणेति वा" (५) "अपक्षीयत इत्यनेनैव व्याख्यातः प्रतिलोमम् ।" (६) "विनश्यतीत्यपरभावमाचष्टे, न पूर्वभावमाचष्टे, न प्रतिषेधति ।" इति ।

१ जन्म तु "यस्मिन्निदꣳ सं च वि चैति सर्वम्" इति तैत्तिरीये श्रुतत्वात् व्ययनात्मकबहिर्गमनरूपं सिद्धम् । तच्च सजा-तीयसम्मलनवियोगादि समुक्तत् समनयरूपं प्रवेशं च स्मारयतीति तद्गुणसम्विज्ञोऽपि युक्त इत्यर्थः । अस्मिन् पक्षे विग्रहस्त्व-यमेव सर्वं आदिर्येषामितिवत् । इह आदिशब्दस्यावयववाचित्वादुद्भूतावयवभेदः समुदायः समासार्थः । उद्भूतावयवभेदत्वं चारोपितावयवगतसङ्ख्यत्वम् । तस्य च समुदायस्य युगपत् क्रियान्वयासम्भवात्, तदन्तर्भूतानामवयवानामेव पृथगन्वयः । श्रीमच्छङ्कराचार्यैस्तु जन्म आदिरस्येति विग्रहीतम् । २ ननु पूर्वमतद्गुणसम्विज्ञानबहुव्रीहिराश्रितः, पुनरिदानीं तद्गुणसम्वि-ज्ञानाश्रयणमनुचितमिति चेत्, न, पुष्टिप्रवाहमर्यादाभेदेन सृष्टीनां त्रिविधत्वात्समासभेदस्य सामञ्जस्यात् ।

तु श्रुतत्वात् सिद्धम् । अथवा किमनया कुसृष्ट्या । जन्माद्यस्य आकाशस्य यत इति । तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः ( तै. २।१ ) इत्येव विचार्यते । फलसम्बन्धित्वात् तेनैकत्र सिद्धः शास्त्रार्थः प्रकारान्तरेऽपि । "यतो वा इमानि" ( तै. ३-१ ) इत्यत्र विस्फुलिङ्गवत्सर्वोत्पत्तिः । अत्र तु क्रमेणेति

---

येषां तत्, तज्जातीयं जन्मादि जातिस्त्वत्र विकारत्वम् । एवं च यतः ब्रह्मणः सकाशात् अस्य जगतः जन्मादिषड्भावविकारा भवन्तीत्यर्थः । तथाच ब्रह्मकर्तृकभवनक्रियायां विकाराणामन्वयात्तद्गुणसम्विज्ञानबहुव्रीहिरिति भावः। अस्मिन्नर्थे कारणमाहुः—श्रुतत्वादिति । "यस्मिन्निदं सञ्च विचैति सर्वं यस्मिन् देवा अधि सर्वे निषेदुः" इत्युपनिषदि श्रुतत्वादित्यर्थः । सिद्धमिति । यत्सिद्धं तदन्यं सजातीयं स्मारयतीति न्यायात् सञ्चरस्य प्रतिसञ्चरस्मारकत्वं युक्तमेवेति भावः । अस्य सूत्रस्य "तस्माद्वा एतस्मादि"त्येव विषयवाक्यम् । ननु यतो वेति वाक्यमिति बोधयितुं प्रकारान्तरेण सूत्रार्थमाहुः—अथवेति । ननु सूत्रात्केवलाकाशस्यैवोत्पत्तिः प्रतीयते, न तु जगदुत्पत्तिः, एवं च कार्यलक्षणबोधकत्वं सूत्रस्य न स्यादित्यत आह—तेनेति । सिद्ध इति । दिक्प्रदर्शनरीत्या अन्यान्यपि वाक्यान्यत्र बोद्धव्यानीति ब्रह्मणो जगज्जन्मादिकर्तृत्वं सिद्धमिति शास्त्रार्थः सिद्ध इत्यर्थः । प्रकारान्तरेऽपीति । बोध्य इति शेषः । ननु कुत्र प्रकारान्तर इत्यत आह—यतो वेति ।

---

१ पुरोदीरितप्रकारेण पक्षत्रयेण—"स आत्मानं स्वयमकुरुत" इति, "सोऽकामयत बहु स्यां प्रजायेय" इति, "तस्माद्वा एतस्मादाकाशः सम्भूतः" इति च तैत्तिरीयोक्तेन पुष्टि-प्रवाह-मर्यादा-बोधकपक्षत्रयेण व्याख्यायैवेषामन बोधनस्यानतिप्रयोजनत्वात् प्रतिपत्तिगौरवाद्यारुचिसूचनाय प्रकारान्तरेण सूत्रव्याख्यानमेतदिति प्रकाशादिटीकादिभिरवधेयम् । २ सुस्पष्टत्वं त्ववयवसमासपक्षे जन्मग्रहणप्रयासः अतद्गुणसम्विज्ञानपक्ष एव । अवयविसमासपक्षेतु समुदायस्य युगपत् क्रियान्वयक्लेशः । द्वन्द्वेतु-आदिशब्दस्य लाक्षणिकत्वं जगन्मिथ्यात्वं चापद्यत इति । न च यथा कतन्तेभ्यः कण्वादिभ्य इत्यत्र कतस्यान्तः कतन्तः । शकन्ध्वादित्वात् पररूपम् । कतः अन्तो येषां ते कतन्ताः कतन्तश्च कतन्ताश्च कतन्तास्तेभ्य इत्येकशेषः । कण्वस्यादिः कण्वादिः कण्व आदिर्येषां ते कण्वादयः, ततः पूर्ववदेव बहुव्रीहितत्पुरुषयोरेकशेषः । तद्वज्जन्म चादिर्जन्मादि, जन्म आदिर्येषां तज्जन्मादि, जन्मादिश्च जन्मादि च जन्मादि । नपुंसकमनपुंसकेनेति स्वरभिन्नानां यस्योत्तरस्वरः स शिष्यत इति वा बहुव्रीहेः शेषः । तथा च जन्मनस्तदादीनां च ग्रहणं भविष्यतीति वाच्यम् । एवं तर्हि जन्मादीत्यत्र सारूप्यार्थमेवादिशब्द उपादीयतेऽन्यस्य प्रयोजनाभावात्; तथा च गौरवप्रस्तावबोधकत्वाद्यर्थत्वमिति ध्येयम् । ३ "ब्रह्मविदाप्नोति परम्" इति फलमुपक्रम्य पठितत्वेन तत्पदेन फलरूपपदस्यैव परामर्शेन फलसम्बन्धित्वादित्यर्थः । अत्रैवं प्रतिभाति-अवयवसमासे येषामिति बहुवचनं विकाराभिप्रायेण समर्थनीयं तदनुपपन्नमभिसम्विशन्तीत्यनेनोक्ताभिसम्वेशस्याविकारत्वात् सुषुप्तिसुखत्वेन विकाराणां यथायथं जन्मस्थितिभङ्गेष्वन्तर्भावाज्जगतः स्थितिकाले सम्भाव्यमानत्वाच्चेत्याशङ्कया द्वन्द्वपक्ष उक्तः । अस्मिन्नपि पक्षे जगतो नित्यत्वापत्त्या लक्षणत्वव्याघातः । अवयविसमासे च समासार्थस्य समुदायस्य क्रियान्वयक्लेश इति पूर्वोक्तमेव लक्षणं साधु । ४ वाक्यान्तरे ब्रह्मभेदापत्तिवारणाय न्यायोपन्यासः । यद्वा, यतो वेत्यादिवाक्यं विषयत्वेनादरणीयं तदाप्ययं न्यायस्तु सर्वथाऽऽदरणीय एव । अन्यथा आकाशवाक्येऽपि ब्रह्मान्तरापत्तिः स्यात् । अतो जननप्रकारस्यैव भेदो न तु ब्रह्मण इति न कोऽपि दोष इत्यभिप्रेयम् । यतो वेति श्रुतौ, यत् प्रयन्त्यभिसम्विशन्तीत्यस्य भागस्य यद् ब्रह्म प्रयन्ति, प्रकर्षेण सृष्टिसामयिकदु खराहित्येन प्रलये गच्छन्ति, अभितः सम्विशन्ति स्वपन्ति सुषुप्ताविव सत्सम्पन्ना भवन्तीत्यर्थोऽवगन्तव्यः । ५ पुष्टिप्रवाहमर्यादाप्रकारेण व्याख्यायैषां कथनस्यानतिप्रयोजनत्वाच्छिष्यगौरवाच्चेत्यरुच्या प्रकारान्तरेण सूत्रार्थमाहुः—अथवेतीति । अयं पाठस्त्रिसूत्र्यां प्रतीकान्तरेष्वपि । किञ्च हस्ताक्षरशोधिते तदभावाच्च मध्ये प्रक्षिप्यतेऽस्माभिः । केनचनान्येन प्रक्षिप्तेयं पङ्क्तिरित्येतदपि सम्भवत्येव । वाराणसीस्थपुस्तकेषु, परिपत्पुस्तके, जटाशङ्करशास्त्रिप्रेषितपुस्तके च तदभावात् । ६ एवं च केवलाकाशजनकत्वस्यैव ब्रह्मलक्षणत्वमायाति, ननु जगज्जन्मादिकर्तृत्वस्येति, यतो वेत्यादिवाक्ये ब्रह्मभेदापत्तिः स्यादित्यत आह—तेनेतीति पाठस्त्रिसूत्र्यां मुद्रितः । सचास्मत्प्रतीकेषु कुत्रापि नोपलभ्यते ।

**विशेषः। एतेन सर्व एव प्रकाराः सूचिता वेदितव्याः[1]। ब्रह्मविचारे ब्रह्मणोप्य-धिकृतत्वात् तद्ब्रह्मेत्यायाति न त्वध्याहारः।**

**( प्रमाणनिर्देशः )**

**शास्त्रे योनिः शास्त्रयोनिः। शास्त्रोक्तकारणत्वादित्यर्थः[2]। शास्तीति शास्त्रं वेदः। सामान्यग्रहणं पूर्वकाण्डे पूर्वसृष्टिवाक्यानां सङ्ग्रहार्थम्[3]। यथास्यैव कारणत्वं नान्यस्य तथोपरिष्टाद्वक्ष्यामः।**

**( ब्रह्मणो विकारित्वनिरसनम् )**

**मतान्तरवज्जन्मादीनां न विकारित्वं किन्त्वाविर्भावतिरोभावावेव। तथोत्तरत्र वक्ष्यते तदनन्यत्वाधिकरणे ( ब्र. सू. २-१-१५ )। नामलीलाया अपि न पृथङ्-निरूपणं प्रपञ्चमध्यपातात्।**

---

भृगुप्रपाठके इति शेषः। **विशेष** इति। उभयत्रापि शास्त्रार्थस्यैक्यात् कर्त्रैक्यं भगवदिच्छया उत्पत्ति-प्रकारभेद इति विशेष इत्यर्थः। ननु सूत्रे किमर्थमयं श्लिष्टप्रयोगः कृतः येनानेकव्याख्यानं सम्वृत्तमत आहुः—**एतेनेति**। जन्माद्यस्येति श्लिष्टप्रयोगेणेत्यर्थः। **प्रकारा** इति। स्वमते साक्षात् कर्तृत्वम्, परमते तटस्थत्वम्, कुत्रचित् क्रमेणेति प्रकारा इत्यर्थः। **सूचिता** इति। व्यासचरणैरित्यादि। अत एव मयापि व्याख्याता इत्यर्थः। ननु लक्ष्ये लक्षणसमन्वयार्थं लक्ष्यबोधकं पदमवश्यं वक्तव्यमत आहुः—**ब्रह्मेति**। **आयातीति**। अर्थादित्यादिः। एतावता लक्षणांशो व्याख्यातः।

प्रमाणांशं व्याख्यातुमाहुः—**शास्त्र** इत्यादिना। शास्त्र इति विषयसप्तमी। विषयत्वं च प्रतिपाद्यत्व-मित्यभिप्रायेणाऽऽहुः—**शास्त्रोक्तेति**। वेदप्रतिपाद्येत्यर्थः। **वेद** इति। प्रभुसम्मितः, सुहृत्सम्मितः, कान्तासम्मितश्चेति शब्दस्य त्रिविधत्वादयं प्रभुसम्मितः शब्द इत्यर्थः। एवं च तदाज्ञाभङ्गो न कर्तव्य इति भावः। ननु उपनिषद्वाक्यमेवात्र प्रमाणमिति वक्तव्ये वेदसामान्यग्रहणं किमर्थमित्यत आहुः—**सामान्येति**। **पूर्वसृष्टिवाक्यानामिति**। भाववृत्तसूक्ते पूर्वकाण्डे द्वितीयाष्टके ब्राह्मणेऽष्टमप्रपाठके-ऽन्तिमेऽनुवाके ब्रह्मप्रतिपादकसूक्ते, "सो अङ्ग वेद यदि वा न वेद" इत्यादिवाक्यानामित्यर्थः। एतेन सकलवेदार्थरूपो भगवानिति सूचितम्। ननु केषाञ्चिन्मते ब्रह्मणो निमित्तकारणत्वम्, योनिपदमपि निमित्तकारणवाचीति किमर्थं कारणत्वं ब्रह्मणः स्वीक्रियत इत्यत आहुः—**यथेति**। **उपरिष्टात्**, अग्रिमसूत्रे।

ननु साङ्ख्यैर्यावन्नामरूपात्मकप्रपञ्चजन्मादीनां प्रकृतिविकारत्वं स्वीक्रियते, कुतः, "मूलप्रकृति-रविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त"ति स्मरणात्, तथा च तत्कारणत्वं कथं ब्रह्मण इत्यत आहुः—**मतान्तरवदिति**। अस्मिन्नर्थे सूत्रकारसम्मतिमाहुः—**वक्ष्यत** इति। द्वितीयाध्याये इति शेषः।

---

१ नन्वत्र सूत्रे लक्ष्यानुपादाने, प्रतिज्ञाया च सम्बन्धिविचारस्यैवाधिकृतत्वेन ब्रह्मणोऽनधिकृतत्वादत्र ब्रह्मानुवृत्तेरशक्य-वचनेन ब्रह्मपदमध्याहार्यम्। कर्मषष्ठीस्वीकारे प्रकृतत्वादेव तत्प्राप्तेर्नायं दोषस्तस्यार्थादेव प्राप्तत्वादिति। २ लक्षणप्रमा-णाभ्यां वस्तुसिद्धिरिति नियमात्, एतावता प्रबन्धेन लक्षणं व्याख्यातम्। अथावशिष्यते "रिक्तप्रमाणकमि"ति प्रमाणांशः। स चेत आरभ्य व्याकुर्वन्ति। लक्षणांशप्रमाणांशयोरेकत्रैव निर्देशः शाभीयानित्यपि सूत्रेऽस्य हृदयम्। ३ पूर्वकाण्डइत्यारभ्य सूक्त इत्यन्तं शोधितपुस्तक एव। प्रतीकान्तरेषु तु तथावलोक्यते।

( सूत्रे योगविभागविचारः )

केचित्[1] पृथग्रूपनामप्रपञ्चकर्तृत्वं योगविभागेन प्रतिज्ञाय समन्वयादिसूत्रेष्वेव हेतून्वर्णयन्ति । अन्वयसिद्ध्यर्थं च । अतति व्याप्नोतीत्यत्[3] । शास्त्रे योनित्वं प्राप्तं तदिति ।

नैतत्[2]सूत्रकारसम्मतमिति प्रतिभाति, तस्मात्सर्वज्ञत्वं सर्वशक्तिमत्त्वं च सिद्धं निरङ्कुशजगत्कर्तृत्वेन ।

( न हि सर्वो वेदः कर्तृत्वे मानमित्याक्षेपः )

ननु न सर्वो वेदो ब्रह्मणो जगत्कर्तृत्वे मानम् । तपोयज्ञादियुक्तप्रजापतिप्रभृतीनामेव जगत्कारणत्वस्य पूर्वकाण्डे तत्तदुपाख्यानेष्ववगम्यमानत्वात् । न

---

ननु तस्माद्वा एतस्मादित्यादिवाक्येनाकाशवाय्वादिरूपार्थजनकत्वं प्रतिपादितं न तु आकाशवाय्वादिशब्दजनकत्वमिति न्यूनता स्यादित्यत आहुः—नामेति । प्रपञ्चेति । नामरूपात्मकप्रपञ्चस्य शब्दार्थोभयरूपत्वात्, प्रपञ्चवाचकस्य पदस्य सूत्रे विद्यमानत्वान्न न्यूनतेति भावः ।

मतान्तरमाह—केचिदिति । योगविभागेनेति । युज्यते, लक्ष्येण सहेति योगः । सूत्रं तस्य विभागेनेत्यर्थः । एवं च रूपप्रपञ्चकर्तृत्वबोधकं जन्माद्यस्येत्येकं सूत्रम् । नामप्रपञ्चकर्तृत्वबोधकं शास्त्रयोनित्वादित्यपरं सूत्रमिति विभागेन प्रतिज्ञां कृत्वेत्यर्थः । ननु सूत्रं तु पञ्चम्यन्तमर्थादायातं यद्ब्रह्मपदं तत् प्रथमान्तमिति समानविभक्तिकत्वाभावेनान्वयाभावात्कथं तद्बोधकत्वं तस्येत्यत आहुः—समन्वयादीति । तथा च समन्वयादिसूत्रादारभ्य सूत्रेषु हेतुपञ्चम्यन्तत्वं स्वीकुर्वन्ति । अत्र तु शास्त्रयोनित्वादिति प्रथमान्तमेव वर्णयन्तीति भावः । नन्वस्य प्रथमान्तत्वे कोऽर्थ इत्यत आहुः—अन्वयेति । शास्त्रयोनित्वं अततिव्याप्नोत्यत्, तस्य भावस्तत्त्वम् । शास्त्रयोनित्वात् । शास्त्रेति । सप्तम्या निरूपितत्वमर्थः । शास्त्रनिरूपितकारणत्वाश्रयं ब्रह्मेति सूत्रार्थः । एवं च शास्त्रस्य शब्दस्वरूपत्वात् नामप्रपञ्चकर्तृत्वं भगवतः सूत्रेण बोधितमिति भावः ।

एतन्मतं खण्डयन्ति—नैतदिति । प्रतिभातीति । शास्त्रयोनिरित्येतावतैव त्वदीयार्थसिद्धौ शेषवैयर्थ्यम् । मात्रालाघवस्य सूत्रकाराणां हर्षजनकत्वादक्षरद्वयगौरवस्य दुःसहत्वादिति भावः । जगत्कर्तृत्वेनेति । शास्त्रप्रतिपाद्यस्वतन्त्रजगत्कर्तृत्वलक्षणेनेत्यर्थः । प्रकृत्यादिवारणाय शास्त्रेति । केवलशास्त्रप्रतिपाद्यस्यैव लक्षणत्वे धर्मे व्यभिचार इत्यतो जगदिति । शास्त्रप्रतिपाद्यजगत्कर्तृत्वं प्रजापतेरप्यस्तीत्यतः स्वतन्त्रेति ।

अत्र पूर्वकाण्डे निर्भरं मन्यमाना ब्रह्मणि स्वातन्त्र्येण जगत्कर्तृत्वमसहमाना मीमांसकाः प्रत्यवतिष्ठन्ते—नन्विति । तपोयज्ञादियुक्तेति । क्वचित्पुस्तके तपोयज्ञादिप्रयुक्तेत्यपपाठः । अवगम्यमानत्वादिति । "प्रजापतिरकामयत प्रजाः सृजेय" इत्यादिना तपःसाहचर्येण प्रजापतेर्यज्ञसाहचर्येणान्यस्य

---

[1] केचिदित्यनेन शाङ्करमतोपन्यासः । [2] तत्खण्डनं नैतदित्यादिना । तन्मते च दशसूत्रं जन्माद्यधिकरणम् । तत्र द्वाभ्यां प्रतिज्ञा । तत्र द्वितीयसूत्रे पञ्चम्यन्तान्वयादन्वयसिद्ध्यर्थं तथा वर्णयन्ति । तत्रैव दूषणं नैतदित्यनेन । शास्त्रयोनिरित्येतावतैव प्रतिज्ञासिद्धावपि त्वादित्यधिकस्य कथनादग्रिमसूत्रे पुनः साध्यपरामर्शाच्च तथेत्यर्थः । [3] "अतति व्याप्नोतीति तत्" इति परिपत्पुस्तकस्थ. पाठः । मुद्रिते पञ्चटीकोपेते पुस्तके हि "अन्वयेति" प्रतीकमपि न दृश्यते ।

चावान्तरकारणत्वम् । परस्याश्रवणात् । उत्तरकाण्डे तु द्वयप्रतिपादनाद्विरोधः । सन्देहश्च ।

मीमांसायाः सन्देहनिवारकत्वेऽप्येकांशस्याप्रामाण्यं स्यात् । उभयसमर्थने शास्त्रवैफल्यं वा; वेदप्रामाण्यादेव तत्सिद्धेः । बाधितार्थवचनं वेदे नास्तीत्यवोचाम ।

---

जगत्कारणत्वप्रतिपादनादित्यर्थः । **नचेति** । न हीत्यर्थः । **अवान्तरेति** । भूतादीनां यथा यत्किञ्चित्कारणत्वं तथा प्रजापतेरिति न हीत्यर्थः । **अश्रवणादिति** । प्रजापत्यादिव्यतिरिक्तस्याश्रवणादित्यर्थः । ननूत्तरकाण्डे श्रवणं वर्तत इत्यत आह—**उत्तरेति** । **द्वयप्रतिपादनादिति** । कर्तृत्वाकर्तृत्वयोर्द्वयोः प्रतिपादनादित्यर्थः । **सन्देह इति** । उभयप्रतिपादकवाक्ययोः प्रामाण्यादेकतरपक्षपातस्याशक्यत्वात् सन्देह इत्यर्थः । नन्वत एव मीमांसाया उपयोग इत्यत आह—**मीमांसेति** । **उभयसमर्थनेति** । कर्तृत्वाकर्तृत्वोभयसमर्थने । **अवोचाम इति** । बाधितार्थप्रतिपादकत्वरूपाप्रामाण्यं वेदे नास्तीत्युक्तं प्रागित्यर्थः । एवं च स्वतन्त्रजगत्कारणत्वं कुत्रापि नास्तीति बीजाङ्कुरन्यायेनानादिसृष्टिवाद एव स्वीकार्य इति "यतो वा"इत्यादिना कार्यलक्षणं न सम्भवतीति भावः ।

---

यत्तुनः शास्त्रस्य योनिरिति षष्ठीतत्पुरुषमङ्गीकृत्य, महत ऋग्वेदादिशास्त्रस्य सर्वार्थावद्योतिनः सर्वज्ञकल्पस्य सम्भवो, न सर्वज्ञत्वादन्यतः सम्भवतीत्येवं ब्रह्मणः सर्वज्ञत्वं समर्थितम् । "अस्य महतो भूतस्य निःश्वसितं यदृग्वेद" इत्यादिबृहदारण्यकश्रुतिमादाय पुरुषनिश्वासवद्वेदमम्भवश्च तत्र उक्तः । तत्तु जयतीर्थ्यां दूषितम् ।

इदं शास्त्रस्य निर्मितत्वं किमर्थमुपलभ्य रचितत्वं वा, निःसृतमात्रत्वं वा ? नाद्यः । कणादाक्षचरणानुसरणप्रसङ्गात्, श्रुत्यादिविरोधाच्च । न द्वितीयः । शास्त्रयोनित्वस्य सार्वज्ञ्यसाधकत्वाभावप्रसङ्गादिति । इदमपि युक्तम् । पूर्वविकल्पे वेदस्यानित्यत्वप्रसङ्गात् । द्वितीये निःश्वासस्याबुद्धिपूर्वकत्वेन तथात्वादिति । एतेन विमतं ब्रह्म, वेदगतसर्वविषयप्रकाशनशक्त्याधारः । वेदोपादानत्वात्, दीपगतप्रकाशनशक्त्याधारदीपोपादानवह्निवदित्यनुमानं, निःश्वासात्मकवेदोपादानत्वेनाबुद्धिपूर्वकनिःश्वासोपादानपुरुषदृष्टान्तसनाथेन प्रतिसाधनेनापास्तम् ।

भामतीनिबन्धे, वर्णनित्यत्वपक्षेऽपि पदानामानुपूर्वीविशिष्टवर्णात्मकत्वाद्वाक्यानां च तादृशपदात्मकत्वादानुपूर्व्याश्च व्यक्तिधर्मत्वादानुपूर्व्युपगृहीतानां नित्यानामपि वर्णानां पदत्ववाक्यत्वयोरनित्यत्वेन लोके वेदे च न तयोः पौरुषेयत्वे विवादः, किन्तु वेदवाक्ये पुरुषस्वातन्त्र्यास्वातन्त्र्ययोः । तत्र स्वातन्त्र्यकोटिः काणादादीनाम् । द्वितीया तु जैमिनीया वेदाध्ययनं प्रति गुरुशिष्यपरम्परानादित्वेन समर्थयन्ति । वैयासास्तु—अनाद्यविद्योपधानलब्धसर्वशक्तिज्ञानस्य परमात्मनो वेदजनकत्वेऽपि पूर्वपूर्वसर्गानुसारितादृक्तादृगानुपूर्वीविरचनेन । अतः पुरुषस्वातन्त्र्यमात्रमेव वेदे अपौरुषेयत्वमित्युक्तम् । अनेत्थं चिन्तनीयम् । वर्णवद्वैदिकपदादीनामपि नित्यत्वात्" वाचा विरूपनित्यया", "वेदो नारायणः साक्षात्स्वयम्भूरिति शुश्रुम", "वेदस्य चेश्वरात्मत्वात्" इत्यादि श्रुतिपुराणवाक्येषु वेदपदादानुपूर्वी वैशिष्ट्य एव वेदत्वेन तादृशस्यैवेश्वरात्मकत्वात् । ईश्वरस्याविद्योपधानेन सार्वज्ञ्यलब्धेरप्यभ्युपगमैकशरणत्वात् । तादृशानुपूर्वीरचनयाऽस्वातन्त्र्ये राजाज्ञानुवादकराजदूतवदानुपूर्वीरचनामात्रेणेश्वरसार्वज्ञ्यासिद्ध्या व्याख्येयमन्यविरोधाच्च । अतः स्थितस्य गतिचिन्तनमात्रायायं प्रयासः । जगत्कर्तृत्वेनैवोभयविधशास्त्रकर्तृत्वस्य, तेनैव सार्वज्ञ्यस्यापि सिद्धौ भाष्यकारस्याप्यपार्थ एव प्रयास इति ।

अन्येस्तु शास्त्रं योनिः कारणं प्रमाणमस्येति व्याचक्षाणैर्बहुव्रीहिरङ्गीकृतः । सोऽप्ययुक्तः । लक्षणाप्रसङ्गात्, स्वारसिकार्थत्यागाच्च । विज्ञानेन्द्रभिक्षुणा तु शास्त्रं योनिर्मूलप्रमाणं यस्मिन्निति सप्तम्यर्थे बहुव्रीहिमङ्गीकृत्योक्तम् । अत्र शास्त्रादिति वक्तव्ये यच्छास्त्रयोनित्वादित्युक्तं, तच्छास्त्राविरुद्धानुमानस्मृतियोगिप्रत्यक्षादिसङ्ग्रहाय । अत एवाग्रे, उपपत्तेश्चेत्यादावनुमानम् । स्मृतेश्चेत्यादौ स्मृतिः । आचारदर्शनाच्चेत्यादावाचारदर्शनमुखेन योगिप्रत्यक्षादिकं च सङ्गृहीतम् । तत्र दूषणादिकं तु प्रकाशे द्रष्टव्यम् ।

१ तथाच मीमांसायाः कर्तृत्वाकर्तृत्वान्यतरप्रसाधकत्वेऽप्रबाधितांशबोधकवेदान्ताप्रामाण्यापत्तिरुभयप्रसाधकत्वे मीमांसाया एव वैयर्थ्यमित्युभयथापि मीमांसायाः तस्याः निर्णायकत्वमिति सर्वेसिद्धमपि वेदे निरङ्कुशं जगत्कर्तृत्वं कुत्रापि कस्यापि न सिद्ध्यतीत्यनादिसृष्टिवाद एवादरणीय इत्यर्थः ।

## ( वेदोपरा वेदान्ता इत्याक्षेपस्तत्खण्डनं च )

**किञ्च । वेदान्ताः किं वेदशेषा वेदा वा । नाद्यः । अनुपयोगात् । अनारभ्याधीतत्वेन तदुपयोगित्वे पूर्वकाण्डविचारेणैव गतार्थत्वं विद्याप्रवेशश्च । न द्वितीयः ।**

---

इदानीं वेदान्तविचारस्य निष्फलत्वात् स न कर्त्तव्य इत्याक्षिपति—किञ्चेति । **वेदशेषा** इति । वेदस्य वेदोक्तकर्मणः शेषाः अङ्गभूता इत्यर्थः । **वेदा** इति । प्रयोगानुष्ठापकवाक्यरूपा इत्यर्थः । **अनुपयोगा**दिति । वेदान्तानां ज्ञानाङ्गब्रह्मप्रतिपादकत्वेन द्रव्यदेवतादिप्रकाशकत्वाभावादनुपयोगादित्यर्थः । **अनारभ्य** प्रकरणमप्राप्य । **अधीतत्वेन** पठितत्वेन । **तदुपयोगित्वे** वेदोक्तकर्मोपयोगित्वे । यथा अनारभ्याधीतत्वेन सूत्राणि "अष्टवर्षं ब्राह्मणमुपनीयत" इत्यादिवाक्येनोपनयनादावुपयुक्तानि

---

१ एवं ब्रह्मस्वरूपविचारेण जगत्कर्तृत्व आक्षिप्तेऽपि यदि तद्बोधकप्रमाणप्राबल्यं स्यात्तदानुपलब्धस्य धर्मस्येव तत्सिद्धिः
स्यादिति वेदान्तानां प्रामाण्यमाक्षिपति किञ्चेत्यादिना । यदि वेदशेषाः स्युस्तदा द्रव्यदेवतादि प्रकाशयन्त इतिकर्तव्यतां वा
बोधयन्तो वेदार्थे यागे क्वचिदुपयुक्ताः स्युः । न तथा दृश्यते । अनारभ्याधीता अपि स्मृतयो गृह्यसूत्राणि च यथा "मानवी
ऋचौ धाय्ये कुर्यात्," "यद्वै किञ्च मनुरवदत्तद्भेषजम्," "अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीत" इत्यादिवाक्यैराग्निस-
मिन्धनादावुपनयनादौ चोपयुज्यमानाः शेषभावं भजन्ते; तथैवैते वेदान्ता अपि, "यदेव विद्यया करोति" इत्यादिना वेदोक्त-
कर्मसूपयुज्यमाना वेदशेषा इत्युच्यते तदा पूर्वमीमांसायां तृतीये शेषशेषिभावस्याये स्मृतिपादे तत्प्रामाण्यस्य विचारितत्वा-
त्तयैव गतार्थत्वाद्व्यर्थैवोत्तरमीमांसा । वेदान्तानां च स्मृतिवद्विद्यास्वेव प्रवेशो न वेदे । नापि धर्माद्यन्यतमपुरुषार्थप्रकाशकत्वेन
तत्र प्रवेशः । स्मृतावपि तौल्यात् । अत एव शिक्षोपनिषदि "वेदमनूच्याचार्योऽन्तेवासिनमनुशास्ति" इति वेदानुवचना-
नन्तरमुपनिषदनुसन्धानं पठितम् । पुराणेऽपि "साङ्गोपनिषदः" इति वेदेभ्यः पृथङ्निर्देशश्चेति युज्यत इति विद्याप्रवेशश्चेति
चकारेण समुच्चीयते । यदि वेदास्तदा "आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्" इति "तद्भूतानां क्रियार्थेन समाम्नायः,"
इत्यादि पूर्वतन्त्रवाक्यात्, "वेदोऽखिलो धर्ममूलम्" इत्यादिस्मृतिवाक्याच्च यागतच्छेषान्यतरप्रतिपादकाः स्युः । यथा,
"अग्निहोत्रं जुहोति"त्यादयः । "तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा," "वारणो यज्ञावचरो वैकङ्कतो यज्ञावचरः"
इत्यादयश्च । ब्रह्म तु ज्ञानशेष इति नोभयरूपमिति तत्प्रतिपादकानां कथं वेदत्वमिति तदाशयः ।
किञ्च, वेदो हि मन्त्रब्राह्मणसमुदायात्मकः । तत्र मन्त्रा नाम प्रयोगसमवेतार्थस्मारकाः । तद्भिन्नं च ब्राह्मणम् । "तच्चोदकेषु
मन्त्राख्या" "शेषे ब्राह्मणशब्दः" इति सूत्राभ्यां तल्लक्षणं निर्णीतम् । "अहे बुध्निय मन्त्रं मे गोपाय" इति वेदप्रयुक्तमन्त्र-
शब्दार्थनिर्णयोऽप्यत्रैव लक्षणं निरूप्य विहितः । अत्र प्रयोगकालेऽर्थस्मारकत्वस्यानृक्सामादिषु प्रयाजादिविधिषु क्रमस्मारकेषु
चाव्याप्त्यतिव्याप्तिग्रस्तत्वात्प्राचीनलक्षणमुपेक्ष्य श्रीखण्डदेवैर्लक्षणान्तरमप्युक्तम् । "यत्राभियुक्तानां मन्त्रपदवाच्यत्वप्रकारिका
उपस्थितिर्विषयतासम्बन्धेन स मन्त्रः । वाच्यतावच्छेदकं च मन्त्रत्वमखण्डोपाधिर्वेदवत्" इति । उपस्थितिर्ज्ञानम् । विशेष्यता-
सम्बन्धेन तादृशज्ञानवत्त्वं तादृशज्ञानविशेष्यतावत्त्वं वा मन्त्रलक्षणम् । मन्त्रत्वप्रकारकोपस्थितिविषयत्वस्य मन्त्राभासेषु
भाषामन्त्रेष्वपि सत्त्वादतिव्याप्तिः स्यात् । अतो मन्त्रवाच्यत्वोपस्थितिपर्यन्तानुधावनम् । न च भाषामन्त्रेषु मन्त्रत्वप्रकारकभ्र-
मसत्त्वेऽपि मन्त्रत्वप्रकारकप्रमाविषयत्वाभावात्तद्भिन्नस्यैव दोषवारणसम्भवे किं पदवाच्योपस्थितिपर्यन्तानिवेशनेनेति वाच्यम्;
एतदर्थसूचनायैव तत्पर्यन्तानुधावनम् । एतेन मन्त्रपदवाच्यत्वप्रकारकभ्रममादायातिव्याप्तिरिति निरस्तम् । विषयतासम्बन्धेन
मन्त्रत्वप्रकारकप्रमावत्त्वस्यैव लक्षणत्वात् । न चैवमपि लाघवात् मन्त्रत्वमेव लक्षणमस्त्विति वाच्यम्; तथा सति लक्षणलक्ष्य-
तावच्छेदकयोरैक्यापत्तेः । न चेष्टापत्तिः लक्षणेनेतरभेदसाधने पक्षतावच्छेदकहेत्वोरैक्यप्रसङ्गेन सिद्धसाधनापत्तेः । न चैवमपि
भाषामन्त्रेष्वपि मन्त्रपदप्रयोगदर्शनेन मन्त्रत्वप्रकारकप्रमाविषयत्वसत्त्वादतिव्याप्तिर्दुर्वारेति वाच्यम्; गौण्या शक्तिभ्रमेण वा तत्र
मन्त्रपदप्रयोगेणोक्तलक्षणासत्त्वात् । न च तेषां मन्त्रत्वे किं बाधकमिति वाच्यम्; तस्येहानिरूपणीयत्वात् । वेदार्थनिरूपणाय
प्रवृत्त आचार्यः किमिति भाषामन्त्रान् सङ्गृह्णीयात् । अत एव भगवदापस्तम्बहिरण्यकेशिप्रभृतिभिः "मन्त्रब्राह्मणयोर्वेदनामधे-
यम्" इति वेदविभागपूर्वकं मन्त्रलक्षणमुक्तमिति । मन्त्रत्वघटितत्वादुक्तलक्षणस्यात्माश्रयः स्यादिति निर्वचनं मन्त्रत्वमिति ।
जातिसाधकप्रमाणाभावादखण्डेति । सूत्रार्थस्तु—तत्=अभिधानम्, चोदकं=प्रयोजकं येषां तेषु मन्त्राख्येति ॥
एवं च, वेदान्तेषु विध्यनङ्गीकारेण प्रयोगायभावात् तद्घास्येषु मन्त्रत्वाद्यभावः । अत आर्यप्रसिद्धिमात्रेण वक्तव्ये वेदत्वे
तेषामूषरभूमिवद् वेदोपरत्वेनापार्थत्वात् तेषां विचारे किं फलं स्यात् । सर्वोऽपि फलोद्देशेनैव प्रवर्तत इति फलाभावात् प्रवृ-
त्तिविघाते, तन्मीमांसाप्यपार्थेति तत्साधिते ब्रह्मणो जगत्कर्तृत्वेऽत्यन्ताभिनिवेशो न कार्यः ।

**यज्ञाप्रतिपादनात् । मन्त्रब्राह्मणत्वाभावाच्च । तस्माद्वेदोपरा वेदान्ता इति तेषां किं स्यादिति चेत्; मैवम् । अस्ति तावद्वेदत्वमध्ययनादिभ्यः । स्मरणाच्च । प्रमाणं च सर्वोऽपि वेदः स्वार्थे । स च न यज्ञश्चेद् ब्रह्म भवतु ।**

---

भवन्ति, तथा प्रकरणमप्राप्य विहिता वेदान्ता अपि "यदेव विद्यया करोति" इति वाक्येन वेदोक्तकर्मसूपयोगित्वे स्वीक्रियमाणे सतीत्यर्थः । **पूर्वकाण्डविचारेणैवेति** । पूर्वमीमांसायां तृतीयाध्याये, "अथातः शेषशेषिभावलक्षणमि"त्यनेन; प्रथमाध्याये स्मृतिपादे च सूत्रादीनां प्रामाण्यविचारः कृत इति तेनैव गतार्थत्वमस्या इति भावः । **विद्याप्रवेशश्चेति** । वेदशेषत्वेन स्मृतीनां चतुर्दशविद्यासु यथा प्रवेशस्तथाऽस्यापीत्यर्थः । चकारात्पुराणेऽपि । **यज्ञेति** । यागतदङ्गप्रधानप्रयाजादीनामप्रतिपादनादित्यर्थः । ननु यज्ञाप्रतिपादनेऽपि "यदेव विद्यया करोति" इत्यनेन यागोपयोगिविद्याप्रतिपादनमस्तीत्यत आहुः—**मन्त्रेति** । उपसंहरन्ति—**तस्मादिति** । **वेदोपरा** इति । वेदान्तानामार्यप्रसिद्धिमात्रेण वेदत्वे, उपरभूमितुल्या इत्यर्थः । **तेषामिति** । विचारेति शेषः । **किं स्यादिति** । फलमिति शेषः । तस्माद्वेदान्तविचारस्य निष्फलत्वात्, स न कर्तव्य इति भावः । समाधानमाहुः—**मैवमिति** । **वेदत्वमिति** । वेदान्तेषु वेदत्वमेव, न वेदोपरत्वमित्यर्थः । **अध्ययनादिभ्य** इति । वेदान्तेषु आचारपरम्परया शूद्राश्रवणादिनियमेनार्यकर्तृकस्वरपूर्वकाध्यापनादिसत्त्वादित्यर्थः । ननु आचारपरम्परया अन्धपरम्परातुल्यत्वं स्वीक्रियत इत्यत आहु—**स्मरणादिति** । "स्वयम्भूरेष भगवान् वेदो गीतस्त्वया पुरा, शिवाद्या ऋषिपर्यन्ताः स्मर्तारोऽस्य न कारकाः" इति पुराणवाक्यात् । वेदान्तानामपि स्मरणं प्रतीयते न तु कर्तृजन्यत्वमित्यर्थः । **सर्वोऽपि** पूर्वोत्तरकाण्डद्वयात्मकोऽपि । **स्वार्थे** अलौकिकेर्थे । **स च** अलौकिकार्थश्च ।

---

१ न वेदान्तेषु वेदोपरत्वम्, किन्तु वेदत्वमेव । अध्ययनाध्यापनज्ञानविधिभिर्वेदं पठन्तः पाठयन्तोऽर्थं चावगच्छन्त आर्याः स्वरपूर्वकमनध्यायशूद्राश्रवणादिनियमान् पालयन्त एव तथा कुर्वन्तीत्याचारपरम्परया "स्वयम्भूरेष भगवान्" इत्यादिपुराणोक्तस्य स्मरणस्यात्रापि तुल्यत्वेन च तन्निर्धारात् । किञ्च, औत्पत्तिकसूत्रे बादरायणग्रहणं पूजार्थं कृत्वाऽलौकिकेऽर्थे परानपेक्षं वेदस्य प्रामाण्यं जैमिनिना प्रतिपादितम् । ततश्चासावलौकिकोऽर्थः को वेत्यपेक्षायां यथा तन्मते यज्ञस्तथा व्यासमते ब्रह्म । अनुपलब्धार्थस्योभयत्रापि तौल्यात् । किञ्च, यागप्रतिपादकत्वेन वेदत्वं मन्वानो भवान् ब्रूताम्—किं यावद्यज्ञप्रतिपादकत्वं वेदत्वम्, उत यत्किञ्चित्तत्प्रतिपादकत्वम्, अथवा यथाकथञ्चित्तत्प्रतिपादत्वम् ? नाद्यः । अग्निहोत्रादिप्रतिपादकस्य भागस्य तदितरयज्ञाप्रतिपादकत्वेनावेदत्वप्रसङ्गात् । न द्वितीयः, सर्वस्य तथात्वप्रसङ्गात् । मनुपुत्रेभ्यो दायं व्यभजदित्याद्यर्थवादस्यापि तथात्वप्रसङ्गाच्च । तृतीयश्चेत्, सिद्धं ब्रह्मप्रतिपादकत्वेऽपि वेदत्वम् । न चैतावता ब्रह्मप्रतिपादत्वेनावेदत्वमग्निहोत्रादिप्रतिपादकवेदभागेषु । अतिप्रसङ्गात् वेदत्वप्रसङ्गात् । यतोऽग्निहोत्रदर्शपूर्णमासादीनां मन्त्रविधिनिषेधनामधेयार्थसम्बन्धिनां मध्येऽन्यतरदेकतरद्वेदेऽनन्तर्भाव्य वेदाद्बहिःकृत्य वेदे वेदत्वं वक्तुं शक्यतेऽपि तु न, तस्मादतिप्रसङ्ग इति ध्येयम् । किञ्च, श्रीमत्कुमारिलभट्टमहाभागा अपि "इत्याह नास्तिक्यनिराकरिष्णुरात्मास्तितां भाष्यकृदत्र युक्त्या । दृढत्वमेतद्विषयप्रबोधः प्रयाति वेदान्तनिषेवणेन" इति वदन्तो वेदान्तानां कण्ठरवेण वेदत्वमङ्गीचक्रुः । अतो वेदोपरा वेदान्ता इति प्रजल्पन्तो मीमांसका स्वाचार्याचारच्छेदनमेव कुर्वन्तो भ्रान्ता एवेत्याकलनीयम् । स्वाध्यायाध्ययनविषयत्वेन वेदान्तानामपि पुरुषार्थपर्यवसायित्वमस्त्येव । न हि स्वाध्यायशब्दवाच्यत्वं पूर्वकाण्डस्यैव भवितुमर्हति । "ऋचां मूर्धानं यजुषामुत्तमाङ्गं साम्नां शिरोऽथर्वणां मुण्डमुण्डनम् । नाधीतेऽधीते वेदमाहुस्तमज्ञं शिरश्छित्त्वासौ कुरुते कबन्धम्" इत्यनेन केवलपूर्वकाण्डाध्ययने दोषश्रवणादिति दिक् ।

२ "अथातः शेषलक्षणम्" एतावदेव जैमिनीयं सूत्रम् । अत्र हि सूत्रशब्देन न सूत्रस्वरूपमुच्यते; अपितु तदर्थ एवेत्यवधेयम् ।

न चैतावताऽवेदत्वमतिप्रसङ्गात् । शक्यते ह्यग्निहोत्रादीनामन्यतरदनन्तर्भाव्य तथा वक्तुम् । तस्माद् ब्रह्मापि प्रतिपादयन्तो वेदान्ता वेदत्वं न व्यभिचरन्तीति ।

(उपनिषत्सु वेदत्वाभिधानम्)

मन्त्रब्राह्मणरूपत्वं चोत्पश्यामः । ऋगेव मन्त्रः । ब्रह्मप्रतिपादकं ब्राह्मणम् ।

---

न यज्ञश्चेदिति । उत्तरकाण्ड इति शेषः । न चैतावतेति । यज्ञातिरिक्तब्रह्मप्रतिपादकत्वेनावेदत्वं न हीत्यर्थः । अतिप्रसङ्गादिति । अग्निहोत्रादिप्रतिपादकवाक्यानां यज्ञाप्रतिपादकत्वादवेदत्वप्रसङ्गादित्यर्थः । नन्वेवं चेत्, तर्हि अग्निहोत्रप्रतिपादकवाक्येषु वेदत्वमेव न वक्तव्यमित्यत आहुः—शक्यते हीति । वक्तुमित्यनेनान्वयः । अग्निहोत्रादिप्रतिपादकवाक्यानामित्यर्थः । अन्यतरदिति । यावद्यज्ञप्रतिपादकत्वं यत्किञ्चिद्यज्ञप्रतिपादकत्वं चेत्युभयोर्मध्ये एकमित्यर्थः । अनन्तर्भाव्येति । यावत्त्वं यत्किञ्चित्त्वमनिवेश्येत्यर्थः । तथा वक्तुम् । यथाकथञ्चिद्यज्ञप्रतिपादकत्वं वेदत्वमिति वक्तुं शक्यत इत्यर्थः । केवलहोमप्रतिपादकानां वाक्यानां साक्षात् यज्ञाप्रतिपादकत्वाद्यत्किञ्चिद्यज्ञप्रतिपादकत्वं, यावद्यज्ञप्रति-पादकत्वं वा नास्तीत्यन्यतस्तदन्तर्भाव्य, यथाकथञ्चिद्यज्ञप्रतिपादकत्वं वेदत्वमिति वक्तव्यम्; तच्च अग्निहोत्रादिप्रतिपादकवाक्येषु होमं विना यज्ञादिसिद्धिर्न भवतीति, होमद्वारा यथाकथञ्चित् यज्ञप्रति-पादकत्वं वक्तुं शक्यत इति भावः । तस्मादिति । एतादृशवेदलक्षणादित्यर्थः । ब्रह्मापीति । "यदेव विद्यया करोति" इति वाक्येन ब्रह्मज्ञानस्यापि यज्ञोपकारकत्वादग्निहोत्रवाक्यानामिव ब्रह्मप्रतिपादकवेदान्त-वाक्यानामपि यथा कथञ्चिद्यज्ञप्रतिपादकत्वं वेदत्वमस्तीति भावः । ननु कथं वेदत्वं वक्तव्यमत्र ब्राह्मण-रूपत्वं तु नास्तीत्युक्तमेवेत्यत आह—मन्त्रेति । यद्यपि पूर्वकाण्डे मन्त्रलक्षणं बहुधा कथितं तथापि ब्रह्मवादिभिर्यत्र मन्त्र इति समाख्या क्रियते स मन्त्रः, यत्र ब्राह्मणमिति समाख्या तद्ब्राह्मणम् । तदुभयं वेदत्रये प्रसिद्धम् । अत्राप्युत्पश्याम इत्यर्थः । नन्वत्र कथं प्रतीयते इत्यत आहुः—ऋगेवेति । "सत्यं ज्ञानमि"ति ऋगेवेत्यर्थः । ब्रह्मेति । ब्रह्मप्रतिपादकं यद्यद्वाक्यं तत्सर्वं ब्राह्मणमित्यर्थः । तच्छेषा

---

१ "तेषामृग्यत्रार्थवशेन पादव्यवस्था" इति पूर्वमीमांसायामृग्लक्षणसूत्रम् । "ऋचः सामानि यजूंषि" इति मन्त्रे मन्त्राणां त्रैविध्यमुक्तम् । तत्र भेदकाभावे त्रैविध्यं नोपपद्यते तदर्थमृगादीनां लक्षणमुक्तम् । पादव्यवस्थाव-न्मन्त्रत्वमृक्त्वम् । पादव्यवस्थावत्त्वमात्रोक्तौ श्लोकेष्वतिव्याप्तिः । अत उभयमुपात्तम् । केचित्तु—अर्थवशेन इत्यर्थ-पदं पादप्रमाणानां छन्दःशास्त्रप्रसिद्धानामुपलक्षणम् । अतएव "अपर्यवसितेऽर्थे वृत्तवशेन व्यवस्था" इति वार्तिकम् । वस्तु-तस्तु "तदप्येष श्लोको भवति" "तदेतदृचाऽभ्युक्तम्" इत्यादिना "मरुतः परिवेष्टारो मरुत्तस्यावसन् गृहे" इत्यादिश्लोका-नाम् "ऋचो अक्षरे परमे व्योमन्" इत्यादीनामृचां व्यवस्थयैव वेदे व्यवहारदर्शनादभियुक्तप्रसिद्धिरेव सर्वत्र शरणम् । उक्तलक्षणस्य वैदिकश्लोकेष्वतिव्याप्तेरित्याहुः श्लोकभिन्नत्वे सतीति । विशेषणनिवेशादेवातिव्याप्तिवारणसम्भवात्तत्परित्यागोऽ-सङ्गत इत्यन्ये । वस्तुतस्तु वैदिकश्लोकेषु ऋक्त्वाङ्गीकारेऽपि निगदानामिव व्यवहारभेदापत्तेः त्रयाणामेव मन्त्रभेदानामाम्नानेन यत्रकाप्यन्तर्भावस्यावश्यकत्वात् मन्त्रत्वप्रसिद्धिसत्त्वेन ब्राह्मणत्वायोगात् पादव्यवस्थादर्शनेन यजुस्साम्नोरन्तर्भावासम्भवात् वैदिकश्लोकानामृक्त्वमेव युक्तमिति श्लोकभिन्नत्वनिवेशो व्यर्थ इति ध्येयम् । सूत्रार्थस्तु—यत्र मन्त्रे, अर्थवशेन—अर्थैकत्व-प्रयुक्ता पादव्यवस्था अस्ति स मन्त्रः ऋक् इत्युच्यते इति अर्थैकत्वप्रयुक्तेति विवक्षणात् "अग्निमीळे" इत्यस्यामृचि "अग्निः पूर्वेभिः" इतिपादमेलनेन चतुष्पात् त्रिष्टुप्त्वं स्यादिति शङ्का निरस्ता ।

६ ब्रह्मसूत्र०

तच्छेषाः सृष्ट्यादिप्रतिपादकाः । यद्यपि न विधीयते तथापि तादृशमेव ज्ञानं फलायेति युक्तमुत्पश्यामः । पूर्ववैलक्षण्यं तु भूषणाय । काण्डद्वयस्यान्योन्योपकारित्वाय साधारणग्रहणम् । "यदेव विद्यया करोति" ( छां. १-१-१० ) इत्यादिना पूर्वशेषत्वं सर्वस्य । "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति" ( बृ. ४-४-२२ ) इत्यादिना सर्वस्योत्तरशेषत्वम् । कर्मब्रह्मणोः क्रियाज्ञानयोर्धर्मिपरत्वेनैक्यात् कर्तृवाक्येषु सर्वत्र न विरोधः । तस्माच्छास्त्रयोनित्वं सिद्धम् ॥

( अनुमाननिरसनम् )

केचिदत्र जन्मादिसूत्रं लक्षणत्वादनुमानमिति वर्णयन्ति ।

---

इति । ब्रह्मप्रतिपादकवाक्यशेषा इत्यर्थः । **सृष्ट्यादीति** । आदिना उपासनाप्रतिपाकवाक्यपरिग्रहः । "तस्माद्वा एतस्मात्" इत्यादिभागा इत्यर्थः । प्रतिपादका इत्येव पाठः । न तु प्रतिपादिकः इति पाठः । ननु तथाप्यस्तु नाम वेदत्वं निष्फलत्वरूपवेदोपरत्वनिवारणं तु न जातमित्यत आहुः—**यद्यपीति** । **न विधीयत** इति । ब्रह्मज्ञानमिति शेषः । यथा "स्वर्गकामो यजेते"ति वाक्यस्य विधित्वात् स्वर्गरूपफलजनकयागप्रतिपादकत्वं, तथात्र मोक्षरूपफलजनकब्रह्मज्ञानविधायकविध्यभावाद्वेदोपरत्वमिति भावः । वेदोपरत्वं खण्डयन्ति—**तथापीति** । तादृशविध्यभावेऽपीत्यर्थः । **ज्ञानमिति** । "तस्माद्वे"त्यादिवाक्यादेव ब्रह्मणि जगत्कर्तृत्वज्ञानमित्यर्थः । **फलायेति** । परप्राप्तिरूपफलायेत्यर्थः । **युक्तमिति** । फलयुक्तमित्यर्थः । तथा च कुत्रापि वेदोपरत्वं नास्तीति भावः । ननु पूर्वकाण्डे विधिवाक्यादेव फलं प्रतीयते, अत्र तु तथा नास्तीति वैलक्षण्यमित्यत आहुः—**पूर्वेति** । **भूषणायेति** । विधिवाक्याभावेऽपि केवलवाक्यार्थज्ञानादेव फलं जायते, इत्याधिक्यमेव भूषणार्थं भवतीत्यर्थः । एवं रीत्या मीमांसकमतं निराकृत्य शास्त्रयोनित्वादित्यत्र शास्त्रपदस्वारस्यमाहुः—**काण्डेति** । **अन्योन्येति** । उभयोरेकवाक्यत्वबोधनायेत्यर्थः । **साधारणेति** । सूत्रे उभयसाधारणशास्त्रपदग्रहणमित्यर्थः । एकवाक्यत्वमेवाऽऽहुः—**यदेवेति** । चतुर्थाध्याये 'यदेव विद्ययेति हि' ( ४-१-१८ ) इति सूत्रे वक्ष्यते । **पूर्वशेषत्वं** प्रथमतः ब्रह्मज्ञानं सम्पाद्यानन्तरं कर्मकरणे कर्मणः पौष्कल्यं जायत इति वेदान्तस्य पूर्वकाण्डाङ्गत्वमित्यर्थः । एवं पूर्वस्योत्तराङ्गत्वमाहुः—**तमेवेति** । **कर्मणा** च भगवत्प्रसादेन चित्तशुद्धौ ज्ञानमुत्पद्यत इति परस्परापेक्षितत्वेन साकाङ्क्षत्वादेकार्थप्रतिपादकत्वाच्चैकवाक्यत्वमिति भावः । ननु कथमुभयोरेकार्थत्वमत आहुः—**कर्मब्रह्मणोरिति** । कर्मणः क्रियारूपत्वेन ब्रह्मणो ज्ञानरूपत्वेन "धर्मो यस्यां मदात्मकः" इत्येकादशस्कन्धोक्तेः; ब्रह्मणोऽपि धर्मरूपत्वेन धर्मिणोः क्रियाज्ञानयोरैक्यात्पूर्वोत्तरमीमांसयोरपि क्रियाज्ञानरूपधर्मिविचारात्मकत्वेनैक्यादेव पूर्वोत्तरकाण्डगत कर्तृत्वं ब्रह्मण्येव पर्यवस्यतीति न विरोध इति भावः । **सिद्धमिति** । ब्रह्मणि वेदप्रतिपाद्यं जगत्कर्तृत्वं सिद्धमित्यर्थः ।

नैय्यायिकमतमनूद्य दूषयन्ति—**केचिदत्रेति** । अत्र ईश्वरस्य जगत्कर्तृत्वविषये, लक्षणत्वादिति, लक्षणबोधकत्वादित्यर्थः । **अनुमानमिति** । तेषां मते लक्षणस्येतरभेदसाधकत्वात् गन्धवत्त्वस्य पृथिव्या लक्षणकरणेन पृथिवीतरेभ्यो भिद्यते गन्धवत्त्वात्, यन्नैवं यथा जलमिति व्यतिरेक्यनुमानेन यथा पृथिव्यां जलादिभेदः सिद्ध्यति तथाऽनुमानद्वयेन जगत्कर्तृत्वस्येश्वरस्य च सिद्धौ सूत्रे जगज्जन्मादिकर्तृत्वरूपलक्षणकरणेन ब्रह्मस्वरूपं जीवजडव्यतिरिक्तं भवितुमर्हति, जगज्जन्मादिकर्तृत्वात् यन्नैवं तन्नैवं यथा जीव इति जीवभिन्नत्वसाधकं व्यतिरेक्यमनुमानमित्यर्थः । ननु कीदृशानुमानद्वयमिति चेदुच्यते, प्रथमं जगति

( विज्ञानभिक्षुमतेनानुमाननिरसनम् )

अन्ये पुनः श्रुत्यनुवादकमाहुः । सर्वज्ञत्वाय श्रुत्यनुसार्यनुमानं च ब्रह्मणि प्रमाणमिति । तत्तु—"तं त्वौपनिषदं पुरुषं पृच्छामि" (बृ. ३।९।२६) इति केवलोपनिषद्वेद्यत्वादुपेक्ष्यम् । अनधिगतार्थगन्तृत्वात्प्रमाणस्य । मनननिदिध्यासनयोः

---

कार्यत्वसाधकमेकमनुमानम्; तथा हि—जगत् कार्यं सावयवत्त्वात् महत्वे सति क्रियावत्त्वात्, महत्त्वे सति मूर्तत्वाच्च घटादिवदित्यनुमानेन जगतः कार्यत्वसिद्धौ सत्यामनन्तरं कार्यहेतुकमपरमनुमानम्; तदित्थम्—जगतः बुद्धिमत्कारणपूर्वकत्वं कार्यत्वात्, घटादिवदित्यनुमानेन जगति बुद्धिमत्कारणपूर्वकत्वसिद्धिः । अथ च जगत्कारणीभूतश्चतुर्दशभुवनात्मकविचित्रप्रपञ्चरचनासमर्थः बुद्धिमान् को वेत्याकाङ्क्षायामीदृशजगदुपादानोपकरणसम्प्रदानप्रयोजनाभिज्ञः कश्चिन्मन्तव्य इति जीवस्य तादृशाभिज्ञत्वाभावात् प्रकृतेश्च जडत्वादुभयभिन्नो भगवानेवैतादृश इत्यनुमानमेव ब्रह्मणि जगत्कर्तृत्वे प्रमाणम्, न तु श्रुतिरिति सूत्रकाराशयो लक्षणकरणेन ज्ञायते इति नैय्यायिका वर्णयन्ति । अधिकं प्रकाशेऽनुसन्धेयमिति दिक् । ज्ञानेन्द्रभिक्षुमतमाहुः—**अन्ये पुनरिति** । **श्रुत्यनुवादकमिति** । सूत्रमिति शेषः । सूत्रमनुमानोपष्टम्भकश्रुत्यनुवादकमित्यर्थः । तथा च अस्मिन् सूत्रे "यतो वा इमानि भूतानि जायन्ते" इति विषयवाक्यम् । तेन च केवलं कर्तृत्वमेव बोध्यते, न तु जगदुपादानादिकारणज्ञानत्वम् । तदभावे ईश्वरस्य सर्वज्ञता न स्यादित्येतदर्थं श्रुतिबोधितकर्तृत्वहेतुना जगदुपादानाभिज्ञत्वं साधनीयम् । तच्चेत्थम्—ब्रह्म पक्षीकृत्य जगदुपादानादिगोचरापरोक्षज्ञानेच्छाकृतिमत्त्वं साध्यते, जगत्कर्तृत्वात् हेतुः, कुलालवत्; कुलालस्य घटकर्तृत्वमस्ति, घटाद्युपादानमृत्तिकाचक्रचीवरादिज्ञानमप्यस्तीति, तस्य यथा तद्विषयकज्ञानत्वम्; तथा, ईश्वरस्यापि जगदुपादानविषयकज्ञानेच्छाकृतिमत्त्वस्य सत्त्वात्, सर्वज्ञत्वं सर्वशक्तिमत्त्वं च सिद्ध्यतीति भावः । **सर्वज्ञत्वायेति** । ईश्वरस्य सर्वज्ञत्वसिद्ध्यर्थमित्यर्थः । **श्रुत्यनुसार्यनुमानमिति** । यथादौ धूमप्रत्यक्षे जातेऽनन्तरं वह्न्यनुमितिं कर्तुं शक्यत इति श्रुत्यनुसारित्वमनुमानस्येत्यर्थः । **अनुमानं चेति** । सर्वज्ञत्वे सर्वशक्तिमत्त्वे चानुमानं प्रमाणम्; कर्तृत्वे च श्रुतिः प्रमाणमिति चकारार्थः । एवं च नैय्यायिकमते सूत्रे विषयवाक्यमेव नास्ति केवलं लक्षणमुक्तं तेन च ब्रह्मण्यनुमानमेव प्रमाणं श्रुतिस्पर्शोऽपि नास्ति । भिक्षुमते तु "यतो वे"ति विषयवाक्यं वर्तते; परन्तु तेन विना कर्तृत्वरूपहेतुज्ञानाभावेऽनुमितिर्न भविष्यतीत्यनुमानोपष्टम्भकमेव सूत्रमिति रहस्यम् । तन्मतद्वयमेकोक्त्यैव दूषयन्ति—**तत्त्विति** । **औपनिषदमिति** । बृहदारण्यके शाकल्यब्राह्मणे इदं वाक्यम् । **पुरुषमिति** उपनिषन्मूलप्रमाणकं पुरुषार्थः । **केवलेति** । ब्रह्मणः यावत्प्रमाणागोचरत्वेऽपि प्रतिप्रसवेनोपनिषद्वेद्यत्वार्थं केवलपदम् । तेन च विश्वरूपदर्शनं "धातुः प्रसादादि"ति श्रुत्या मननादिद्वारा दर्शनमपि "आत्मा वा अरे द्रष्टव्यः" इति श्रुत्या प्रतिपाद्यते इति नानुमानवेद्यत्वमिति भावः । **उपेक्ष्यमिति** । एकेन श्रुतिं विहायानुमानवेद्यत्वमपरेण च श्रुतिसहकारेणानुमानवेद्यत्वमुक्तमिति मतद्वयमपि दूरतस्त्याज्यमित्यर्थः । अथैवं येन श्रुतिप्रामाण्यमेव न स्वीक्रियते तादृशबाह्यं प्रति किं वक्तव्यमिति चेत्, मैवम्; नानायुक्तिप्रसारणशीलानां बाह्यानां निराकरणार्थमेव त्वदीयं मतं न तु ब्रह्मणि प्रामाण्यसिद्ध्यर्थम् । एवं च वेदप्रामाण्यमभ्युपगच्छता त्वयापि उपनिषद्वेद्यत्वं स्वीकर्तव्यम्, तथा च ब्रह्मणः प्रमाणान्तरवेद्यत्वादनुमानप्रसर एव नास्तीत्यलमधिकेन । **अनधिगतार्थेति** । न अधिगतः अनधिगतः, अनधिगतः अज्ञातः, एतादृशो योऽर्थः, तत्र गन्तृत्वात्तद्विषयकबोधजनकत्वादित्यर्थः । **प्रमाणस्य** । अनुमानादिप्रमाणस्येत्यर्थः । तथा च श्रुतिसिद्धेऽर्थे नानुमानं

**श्रवणाङ्गत्वम् । सन्देहवारकत्वाच्छास्त्रस्यापि तदङ्गत्वमिति ॥ १।१।२ ॥**

---

प्रमाणमिति भावः । न चैवं सर्वज्ञत्वसिद्धिर्न स्यात्, श्रुत्या कर्तृत्वस्यैव बोधितत्वादिति वाच्यम् । "ब्रह्मणा विपश्चिता" "यः सर्वज्ञः सर्वविदि"त्यादिना सर्वज्ञताबोधनात् । ननु युक्तिभिरनुचिन्तनं मननम्, युक्तयश्चानुमानरूपा इति मननोपयोगित्वात्कथमनुमानस्य निरास इत्यत आह—**मननेति । श्रवणाङ्गत्वमिति ।** श्रवणेन कृत्वाऽऽत्मदर्शने जननीये मननादीनां सहकारित्वमित्यर्थः । एवं च मननोपयोगित्वेनानुमानस्यावश्यकत्वमिति भावः । नन्वेवं चेदनुमानेनैव मननसिद्धौ वेदान्तमीमांसाशास्त्रं व्यर्थमित्यत आह—**सन्देहेति ।** श्रवणानन्तरं सन्देहे सति मननं न सम्भवतीति शास्त्रस्य सन्देहवारकत्वादित्यर्थः । **तदङ्गत्वमिति ।** मननाङ्गत्वमित्यर्थः । शास्त्रस्यापीत्यपिकारेणानुमानस्य सङ्ग्रहः । एवं च मनने सहकारिकारणत्वमेवानुमानस्य बोध्यमिति सर्वमनवद्यम् ।

इति द्वितीयाधिकरणम् ॥

---

१ जन्माद्यधिकरणे सर्वेषां भाष्यकृतां मतोपक्षेपः—तत्र तावत्—

(१) शाङ्कराः—जिज्ञास्यस्य ब्रह्मणो लक्षणमाह—जन्माद्यस्य यतः "यतो वा इमानि भूतानि जायन्ते" इत्यादिश्रुतेः, अस्य प्रपञ्चस्य जन्मादि यतः कारणाद्भवति, तद्ब्रह्मेत्यर्थः, जगज्जन्मस्थितिलयकारणं ब्रह्मणो लक्षणम् ।

लक्षणमुक्त्वा प्रमाणमाह—शास्त्रयोनित्वात् "तं त्वौपनिषदं पुरुषं पृच्छामि" इत्यादिश्रुत्या शास्त्रप्रमाणकत्वाद्ब्रह्मणोऽप्रामाणिकत्वं नास्तीत्यर्थः । इति प्राहुः ।

(२) रामानुजाः—जन्मादीति सृष्टिस्थितिप्रलयम् । तद्गुणसंविज्ञानो बहुव्रीहिः । अस्याचिन्त्यविविधविचित्ररचनस्य नियतदेशकालफलभोगब्रह्मादिस्तम्बपर्यन्तक्षेत्रज्ञमिश्रस्य जगतो यतो यस्मात्सर्वेश्वरान्निखिलहेयप्रत्यनीकस्वरूपात्सत्यसङ्कल्पाज्ज्ञानानन्दाद्यनन्तकल्याणगुणात्सर्वज्ञात्सर्वशक्तेः परमकारुणिकात्परस्मात्पुंसः सृष्टिस्थितिप्रलयाः प्रवर्तन्ते तद्ब्रह्मेति सूत्रार्थः ।

जगज्जन्मादिकारणं ब्रह्म वेदान्तवेद्यमित्युक्तम्, तदयुक्तम्, तद्धि न वाक्यप्रतिपाद्यमनुमानेन सिद्धेरित्याशङ्कानिरासार्थं शास्त्रयोनित्वादिति सूत्रम् । तदर्थश्च—

शास्त्रं योनिः कारणं प्रमाणं तच्छास्त्रयोनि । तस्य भावः । शास्त्रयोनित्वम् । तस्मात् । ब्रह्मज्ञानकारणत्वाच्छास्त्रस्य तद्योनित्वम् । ब्रह्मणोऽत्यन्तातीन्द्रियत्वेन प्रत्यक्षादिप्रमाणाविषयतया ब्रह्मणः शास्त्रैकप्रमाणत्वादुक्तस्वरूपं ब्रह्म "यतो वा इमानि भूतानि जायन्ते" इत्यादि वाक्यं बोधयत्येवेत्यर्थः । एवमूचुः ।

(३) माध्वाः—ब्रह्मणो लक्षणमाह—सृष्टिस्थितिसंहारनियमनज्ञानाज्ञानबन्धमोक्षा यतः । उत्पत्तिस्थितिसंहारा नियतिर्ज्ञानमावृतिः । बन्धमोक्षौ च पुरुषाद्यस्मात्स हरिरेकराट् ॥ इतिस्कान्दे । यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति । तद्ब्रह्मेति । य उ त्रिधातु पृथिवीमुत द्यामेको दाधार भुवनानि विश्वा । चतुर्भिः साकं नवतिं च नामभिश्चक्रं न वृत्तं व्यतीँरवीविपत् । परो मात्रया तन्वा वृधान न ते महित्वमन्वश्नुवन्ति । न ते विष्णो जायमानो न जातो देव महिम्नः परमं तमाप । योनिः पिता जनिता यो विधाता धामानि वेद भुवनानि विश्वा इत्यादि च ॥ २ ॥

शास्त्रं योनिः प्रमाणमस्येति शास्त्रयोनि ॥ ३ ॥

अनुमाननिरासनपूर्वकं शास्त्रप्रमाणकत्वमेवानेन सूत्रेण प्रतिपाद्यते, इति प्रतिपादयाम्बभूवुः ।

(४) नैम्बार्काः—अस्याऽचिन्त्यविचित्रसंस्थानसम्पन्नस्यासङ्ख्येयनामरूपादिविशेषाश्रयस्याचिन्त्यरूपस्य विश्वस्य सृष्टिस्थितिलया यस्मात्सर्वज्ञाद्यनन्तगुणाश्रयाद्भद्देशकालादिनियन्तुर्भगवतो भवन्ति, तदेव पूर्वोक्तनिर्वचनविषयं ब्रह्मेति लक्षणवाक्यार्थः ।

शास्त्रमेव योनिस्तज्ज्ञप्तिकारणं यस्मिंस्तदेवोक्तलक्षणलक्षितं वस्तु ब्रह्मशब्दाभिधेयमिति प्राहुः ।

(५) भास्कराचार्यमते—जन्म आदिर्यस्य तदिदं जन्मादि सृष्टिस्थितिप्रलयम् । अस्येति त्रिजगन्निर्दिश्यते । यत इति कारणम् । यस्मादीश्वरात्सर्वज्ञात्सर्वशक्तेः परमकारणादस्य जगतो नामरूपाभ्यां व्याकृतस्य विविधविभक्तभोक्तृसंयुक्तस्य नियतदेशकालफलोपभोगाश्रयस्याचिन्त्यरचनस्य सृष्टिस्थितिप्रलयाः प्रवर्तन्ते तद् ब्रह्मेति प्रतिपत्तव्यम् । उपादानकारणं चेह लक्षितम् ।

प्रमाणविशेषावधारणाय–शास्त्रयोनित्वादिति सूत्रम् ।

तदर्थश्च–शास्त्रं योनिः प्रमाणं यस्य तदिदं शास्त्रयोनि ब्रह्म तस्य भावः शास्त्रयोनित्वं शास्त्रप्रमाणकत्वादिति यावदित्यूचुः ।

(६) विज्ञानेन्द्रभिक्षुमते—अस्य जगतो नामरूपाभ्यां व्याकृतस्य चेतनाचेतनरूपस्य प्रतिनियतदेशकालसंस्थानव्यापारादिमतोऽचिन्त्यरचनात्मकस्य जायतेऽस्ति वर्धते विपरिणमतेऽपक्षीयते विनश्यतीत्येवं रूपं जन्मादिषट्कं यतः परमेश्वरादन्तर्लीनप्रकृतिपुरुषाद्यखिलशक्तिकात्स्वतधिष्ठाद्विशुद्धसत्त्वाख्यमायोपाधिकात्क्लेशकर्मविपाकाशयैरपरामृष्टाच्चेतनविशेषाद्भवति, आकाशादिव वायुर्महाजलादिव च पृथिवी पृथिव्या इव स्थावरजङ्गमादिकं तद्ब्रह्मेति वाक्यशेषः । अत्र चैतद्यत इत्याद्यनुक्त्वा जन्माद्यस्य यत इति वचनादव्यक्तरूपेण जगन्नित्यमेवेत्याचार्याशयोऽवगन्तव्यः । यत इति पञ्चमी चात्राधिष्ठानकारणत्वे । महदाद्यखिलजगदधिष्ठानकारणत्वं च ब्रह्मण एव "आधारमानन्दमखण्डबोधं यस्मिन् लयं याति पुरत्रयं च" "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च" इत्यादिश्रुतेरिति न प्रकृतिपुरुषादिष्वतिव्याप्तिः ।

एतन्मते, अधिष्ठानकारणं नाम यन्नाविभक्तं येनोपष्टब्धं च तदुपादानकारणं कार्याकारेण परिणमते, यथा सर्गादौ जलाविभक्ताः पार्थिवसूक्ष्मांशास्तन्मात्राख्या जलेनैवोपष्टम्भात्पृथिव्याकारेण परिणमन्त इत्यतो जलं महापृथिव्या अधिष्ठानकारणमिति । तथा च स्मृतिः—

> यस्य यत्कारणं प्रोक्तं तस्य साक्षान्महेश्वरः ।
> अधिष्ठानतया स्थित्वा सदैवोपकरोति हि ॥ इति ।

उद्दिष्टं लक्षितं च ब्रह्म प्रमाणेन परीक्षणीयमिति सामान्यतः प्रमाणमुपन्यस्यते—शास्त्रयोनित्वात् ।

शास्त्रं योनिर्मूलप्रमाणं यस्मिन्निति शास्त्रयोनि । तज्जगज्जन्मादिकरणं ब्रह्म शास्त्रमूलकत्वात्सिद्ध्यतीत्यर्थः । शास्त्रं वेदान्ताः तच्छेषभूताः स्मृतयश्च तैरत्र ब्रह्मणो विचारणीयत्वात् । × × × अत्र शास्त्रादिति वक्तव्ये शास्त्रयोनित्वादित्युक्त शास्त्राविरुद्धानुमानादीनां ग्रहणाय । शास्त्रं हि ब्रह्मणि मूलं प्रमाणम् "तं त्वौपनिषदं पुरुषं पृच्छामि" इति श्रुतेः । इति प्रतिपादितम् ।

तत्रेत्थं पूर्वोत्तरपक्षोपन्यासः—

(१) शाङ्करास्तु—जन्माद्यधिकरणोक्तं तटस्थलक्षणमित्यभ्युपगच्छन्ति । सिद्धान्ते हि कार्यलक्षणमिति । कर्तृत्वे सधर्मकत्वमिति पूर्वपक्षनिरासायैव "सर्वथा निधर्मकत्वे सामानाधिकरण्यविरोधः" इति भाष्यम् ।

(२) कर्तृत्वे संसारिधर्म इति मायावादानुवर्तिनामाक्षेपः । तत्र "अस्य" इति सूत्रस्थपदं व्याख्याय इदमा पुरोवर्ति जगदेव निर्दिश्यत इति-अद्भुतरचनायुक्तस्य जगत उत्पत्त्यादिकरणस्यालौकिकत्वादलौकिककर्तृत्वे न संसारिधर्म आपतति । एतदेव प्रतीतं च निषेध्यम्, नाप्रतीतम्, न श्रुतिप्रतीतमित्यनेन प्रतिपादितम् ।

(३) अस्थूलादिवाक्ये लोकप्रतीता एव धर्मा निषिध्यन्ते, नत्वलौकिकाः । तथा सति नित्यशुद्धबुद्धमुक्तस्वभावादेरपि निषेधः स्यात् । एवं च अभावस्यापि प्रसक्तिं कर्तुमशक्यत्वेन प्रतिषेधानर्हत्वादप्रतीतं च न निषेध्यम् । श्रुतिप्रतीतं च न निषेध्यम् । तुल्यबलत्वात्—"उपजीव्यतः श्रौतवाक्यतोऽन्यपरत्वतः । अन्तरङ्गत्वतश्चापि तुल्यमत्रोभयोर्बलमि"ति निर्गुणप्रतिपादिकासु आधारनिरूपकत्वेनोपजीव्यत्वं-कारणत्वमत एवान्यपरत्वं निर्गुणप्रतिपादकत्वरूपमत एवान्तरङ्गत्वं धर्मनिरपेक्षत्वेन स्वरूपापेक्षत्वरूपम् । एवं सगुणप्रतिपादिकास्वपि विरहप्रतियोगिनिरूपकत्वेनाधारनिरूपकत्वेन चोपजीव्यत्वमन्यपरत्वं च । कार्यस्वरूपयोरेकब्रह्मलक्षणत्वाद्धर्मनिरपेक्षत्वस्य स्वरूपलक्षणेऽपि प्रकाशाश्रयन्यायेन वक्तव्यत्वात्प्रकृतेऽपि तत्सम्भवेनान्तरङ्गत्वं च तुल्यम् । एवमप्युपपादनसौष्ठवाच्छ्रौता धर्मा निषेध्या इति चेत्, न; प्रत्यानयनवैयर्थ्यापातात् । तथासति प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरमिति न्यायेन धर्मान्नप्रत्यानयेत् । श्रुत्युक्ताः सत्यत्वादयोऽपि यदि लौकिकत्वेनादृतास्ततो लोकश्रुतिप्रतीतसाधारण्येन सर्वनिषेधे ब्रह्माज्ञानमेव भवेत् । तथाच स्वरूपलक्षणवैयर्थ्यं सर्वनाशश्च स्यात् । न च तदभावाय लोकव्यवहारमात्रत्वात्, तत्रापि कारणगतमेव सत्यत्वमतो न तत् प्रतिषेध्यं किन्तु कर्तृत्वमेवेति वाच्यम्; तदा तु धर्मसङ्कोचस्य तौल्यात्कर्तृत्वमपि तथाङ्गीकार्यम्, तेन कल्पस्मृतिस्वीकाररूपो गुणो भविष्यति ।

(४) नचारोपन्यायेन शक्यवचनत्वादिति वाच्यम्; तथासति अन्यस्य स्यादित्यादिः ।

(५) कर्तृत्वे प्रतिपादिते पुष्टिप्रवाहमर्यादाभेदेन सृष्टेस्त्रैविध्यात् व्युत्पत्तिप्रदर्शनपूर्वकं सूत्रव्याख्यानम् । तत्र "तथाचायं सूत्रार्थ" इत्यारभ्य पुष्टिसृष्टिप्रकारः "अथवा जन्मप्रभृति" इत्यारभ्य प्रवाहसृष्टिप्रकारः । "अथवा गमनप्रवेशयोर्भेदाभावादि"त्यादिना मर्यादासृष्टिप्रकारः । आत्मसृष्टित्वं पुष्टिसृष्टित्वम् । "स आत्मानमकुरुते"ति श्रुतेः । "पुष्टिं कायेन निश्चय" इति श्रीमदाचार्यचरणोक्तेश्च । सदसद्ग्रन्थिरूपत्वं प्रवाहत्वम् । सन्ध्याधिकरणोक्तेः । कर्मज्ञानादितत्तत्प्रकारनियमा मर्यादा । "वचसा वेदमार्गं ही"ति श्रीमदाचार्यचरणोक्तेः । यदेतत्सर्वमपि समासस्य वैलक्षण्येनैव साधितम् ।

(६) यतो वेत्यादिना विस्फुलिङ्गादिवद्युगपदेव सर्वसृष्टिः । तस्माद्वेत्यत्र च क्रमेण । एवंच "आपो वा इदमग्र आसीत्", "तत्तेजोऽसृजदि"त्यादिवाक्यैः प्रदर्शिता अपि सर्वे प्रकाराः सङ्ग्राह्याः । तदेव भाष्ये "एतेन सर्वे एव प्रकाराः सूचिता वेदितव्याः" इत्युक्तम् ।

(७) एतावता प्रपञ्चेन मायावादिमतानुसारि तटस्थलक्षणस्य मिथ्याकाधिष्ठानकारणस्य चास्वीकार्यता प्रतिपादिता ।

(८) ब्रह्मविचारेत्यादिना "अथातो ब्रह्मजिज्ञासा" इत्यत्र कर्मषष्ठ्या अस्वीकारे ब्रह्मपदं ब्रह्म वाध्याहार्यतया मीमांसकमतेन प्राप्नोति, तत्परिहारः ।

(९) शास्त्रयोनित्वादित्यत्र, शास्त्रेयोनिरिति व्युत्पत्तिं प्रदर्श्य मतान्तरनिरासः ।

(१०) तत्र-शाङ्करमते शास्त्रस्य ऋग्वेदादेः सर्वज्ञकल्पस्य योनिः कारणमित्युक्त्याऽपौरुषेय-

त्वभङ्गः। कथंचित्–उपलभ्य रचितत्वाभावेनापौरुषेयत्वे साधिते जगन्मिथ्यात्ववद्वेदस्यापि मिथ्यात्वप्रसङ्गो दुर्वारः। अप्रामाण्यापत्तिश्च।

द्वितीयवर्णके शास्त्रमृग्वेदादि योनिः प्रमाणं यस्येति व्युत्पत्त्या, "शास्त्रादेव प्रमाणाज्जगतो जन्मादिकारणं ब्रह्माधिगम्यते" इत्यभिप्रायप्रदर्शनेन; तस्य शास्त्रैकगम्यत्वात्, जगतश्च यतो वेत्यादिना ब्रह्मोपादानकत्वादध्यासनिरासो दुर्वारः। एवं चासङ्गतिरेव पूर्वापरयोः फलति।

यत्तु, पञ्चपादिकाकारादिभिरपौरुषेयत्वस्य साधितत्वान्न दोष इति, तदपि न विचारचारु। भाष्ये सर्वज्ञकल्पस्य वेदस्येत्युक्त्या–पञ्चपादिकायामपि वेदस्य कल्पप्रलयेन जगदन्तःपातित्वाच्च मिथ्यात्वे साधिते दुर्वारैवानित्यता। रज्जुसर्पवदित्युक्त्या च संसाधिता तदनित्यता, तथाहि—"अनेकनानाविधविषयविद्यास्थानोपबृंहितस्य वेदाख्यस्यापि शास्त्रस्य प्रपञ्चान्तःपातित्वात् तत एव जन्म। न च तेनाविपर्यीकृतस्य सद्भावे प्रमाणमस्ति। अतः सर्वविषयत्वात्सर्वज्ञं तत्। कल्पप्प्रत्ययप्रयोगो भाष्ये चोक्तत्वाभावादीषदपरिसमाप्त्या।" इति। एवं च शास्त्रमपि सर्वथा प्रमाणभावं नाप्नोति। अतस्तन्मतस्यात्यन्तादरणीयतायां स्वयमेवोपहासास्पदत्वं प्रदर्शयतीति सन्दिग्धपेक्ष्यमेव तत् सौगतानामिव। वेदानां सर्वज्ञत्वं श्रीमद्वल्लभाचार्यैः कण्ठरवेणाङ्गीकृतमेव प्राक्। जैमिनीया अपि तथा। परमस्ति मीमांसकशुद्धाद्वैतिनोर्वैलक्षण्यं तदन्यत्र दर्शयिष्यते।

(११) रामानुजा माध्वा भैक्षवादयश्च शास्त्रं योनिः प्रमाणं यस्य–यस्मिन्–इति बहुव्रीहिं स्वीचक्रुः। तत्र योनिपदे लक्षणाप्रसङ्गः। स्वारसिकार्थत्यागश्च।

सप्तम्यर्थे भैक्षवा बहुव्रीहिमङ्गीकुर्वन्ति, ब्रह्मणश्चाधिष्ठानकारणत्वम्। तदपि पण्डितपुरन्दरैर्गोस्वामिश्रीमत्पुरुषोत्तमचरणैः प्रकाशे समन्वयाधिकरणे खण्डितमेव।

(१२) सिद्धान्ते तु सप्तमीतत्पुरुषः प्रदर्शित एव। तत्र सप्तम्या विषयत्वमर्थः। विषयत्वं च प्रतिपाद्यत्वम्। शास्तीति शास्त्रमिति व्युत्पत्त्या राजाज्ञावित्त्वं प्रदर्शितम्। योनिशब्दश्च कारणतया व्याख्यातः। एवंच शास्त्रप्रतिपाद्या कारणता। तद्विरोधे च राजाज्ञाविरोध इवापराधः।

(१३) शास्त्रशब्देन सामान्यतः, पूर्वोत्तरकाण्डयोरुभयोरपि सृष्टिप्रतिपादकवाक्यानां सङ्ग्रहः। तथाच वेदार्थतयैव सूत्रकृता ब्रह्मणो जगज्जन्मादिकर्तृत्वं विवक्षितमिति।

(१४) योनिशब्दस्य "तासां ब्रह्म महद्योनिरहं बीजप्रदः पिता" इति मातृरूपत्वबोधनात् केवलनिमित्तकारणवाचित्वं सूत्रेणानेनाभिन्ननिमित्तत्वप्रतिपादनाद् परिहृतम्। अग्रिमसूत्रे च विस्तरेण समवायिकारणत्वं प्रतिपादयिष्यते।

(१५) मूले "मतान्तरवज्जन्मादीनां न विकारित्वम्, किन्त्वाविर्भावतिरोभावावेव" इत्यनेन स्वाभिमतः "अविकृतपरिणामवादः" स्फुटीकृतः।

(१६) आविर्भावत्वं नाम विद्यमानस्य वस्तुनो व्यवहारयोग्यत्वम्। तदयोग्यत्वं तिरोभावत्वम्।

(१७) यत्तु, जन्मादिसूत्रस्थेन यत इति पदेनैव विषयश्रुतेः स्मरणात् सिद्धे शास्त्रप्रमाणकत्वे शास्त्रयोनित्वादिति सूत्रं व्यर्थम्, तन्न; यत इत्यस्य हेतुकोटौ प्रवेशे जन्माद्यस्येति भागस्य प्रपञ्चवृत्तान्तपरतया ब्रह्मलक्षणत्वायोगेनासङ्गतत्वप्रसङ्गात्। न च लक्षणे प्रविष्टस्यैव यतःशब्दस्योक्तश्रुतिसारकत्वमित्यपि युक्तम्, श्रुतौ भूतानीति बहुवचनेन लक्षणस्य तद्विरुद्धत्वापत्तेः। न च जात्यपेक्षयैकवचनान्न विरोधः, तथासति लक्षणवाक्ये यत इति श्रुतिसन्दंष्टे विस्फुलिङ्गपरत्वयौत्पा-

दकाद्ब्राह्मणो वाक्यान्तरे क्रमसृष्टिबोधके ब्रह्मभेदापत्तेः । यथा पृथिवी इतरेभ्यो भिद्यते गन्धवत्त्वादेवं सर्वोत्पादकाद्ब्रह्मणः "तस्माद्वा एतस्मात्" इति क्रमेणोत्पादक आत्मा भिद्यते यत इति श्रुत्यसङ्ग्रहात्, आद्यस्याकाशस्य जनकत्वादिति ।

(१८) शाङ्करास्तु—जन्माद्यस्य यत इत्यत्र प्रदर्शितानुमानस्य स्वातन्त्र्यं माभूदिति शास्त्रयोनित्वादित्युक्तमित्याहुः ।

(१९) अथ पूर्वमीमांसाराद्धान्तनिराकरणाय केचन पूर्वपक्षा भगवता भाष्यकारेण समुपक्षिप्ताः । तत्र यद्यपि सूत्रकाराशयगोचरत्वं प्रत्यक्षतः शब्दतोऽर्थतश्च न दृश्यते, भाट्टे प्राभाकरे च तत्र तत्र ईश्वरास्तित्वे, तत्सर्वज्ञत्वे, तस्य सकलकारणत्वे च वेदान्ताभिप्रायाविरोधित्वेऽपि "न कदाचिदनीदृशं जगत्" इति राद्धान्ते "अपूर्व"रूपपदार्थान्तरस्वीकाराच्च प्रायः सर्वेऽपि वेदान्तभाष्यकाराः पूर्वमीमांसां पुरस्कृत्य खण्डने प्रवृत्ताः, परं नैकेनापि तद्विषये सूत्रं वा कारिका वा तन्त्रं वाऽक्षरशः उद्धृत्य परिहारो विहितः । मीमांसका ईश्वरसत्तां नाङ्गीकुर्वन्ति, ब्रह्मणो जगज्जन्मादिकारणतां नाभ्युपगच्छन्ति, ईश्वरस्य फलदातृत्वं न मञ्जूरीकुर्वन्ति, इत्येवमाद्य आक्षेपास्तत्र तत्र दृश्यन्ते । नात्र वयं मीमांसाशयविवरणे प्रवृत्ताः, अपि तु प्रकृतभाष्याशयालोचनायैव । तथैवात्र विचारः प्रवर्तिष्यते । तथापि कस्यचनापि राद्धान्तस्यान्यथाभावो माभूदिति स्वयस्यं द्रष्टव्यम् । अतएवात्रास्माभिर्भाट्टानां प्राभाकराणां च राद्धान्त एव पूर्वं स्थाप्यते; अनन्तरं च तत्खण्डने प्रवृत्ताः पूर्वपक्षोत्तरपक्षाः ।

(क) तत्र तावदित्थं विचारप्रवृत्तिः—सूत्रकारो भगवाञ्जैमिनिः कुत्रापि सूत्रे नैव जीवेश्वरमोक्षतत्साधनादिकं सूत्रयामास । वेदे तदखिलस्यापि सत्त्वात् । सिद्धानेव पदार्थान् पुरस्कृत्य केवलं धर्मविचाराय तत्प्रवृत्तिः । भगवन्तो व्यासपादास्तु ब्रह्मविचारे प्रवृत्ता अतस्तत्र तैस्तत्सर्वं विचारितमेव । एवंच पूर्वमीमांसायां जगज्जन्मादिकर्तृत्वविचारस्यानवसरादेव न तत्र प्रवृत्तो महर्षिर्जैमिनिः । नापि कुत्रचित्तेन तदस्तित्वं निषिद्धम् ।

(ख) भाष्यकारा भाष्ये आपयन्ति तदपि न सूत्रारूढम्; अपि तु प्रकृतविचारोपयोगितया ।

(ग) श्रीकुमारिलचरणा अपि "विशुद्धज्ञानदेहाय त्रिवेदीदिव्यचक्षुषे । श्रेयः प्राप्तिनिमित्ताय नमः सोमार्धधारिणे" इत्यादिकेन मङ्गलेनैव प्रवृत्ताः पूर्वमीमांसां व्याख्यातुम् । को नाम शक्नोति वक्तुं यत्कुमारिलमते नेश्वरस्वीकार इति । स चेश्वरः सोमार्धधारी वा भवतु मयूरपिच्छधारी वा भवत्वित्यन्यदेतत् ।

(घ) "अभिवन्द्य गुरूनादौ शिष्यधीपद्मिनीरवीन् । तत्प्रसादात्करिष्येऽहं मीमांसाश्लोकवार्तिकम्" इत्यनेन नमस्यस्य "यस्य देवे परा भक्तिः" इत्यादि वाक्यप्राप्तेश्वराभिन्नगुरोरुत्कर्षः स्वस्य च जीवत्वादपकर्षः कण्ठरवेणैव स्वीकृतः । प्रसादादिति पदेन तस्य स्वतन्त्रतया फलदत्वमप्यङ्गीकृतमेव । अपूर्वस्वीकारः किमर्थमिति तच्छास्त्रत एवावगम्यते । अपूर्वस्वीकारे भगवतोऽप्यहतं फलदानस्वातन्त्र्यमिति तु पूर्वमीमांसासारस्यानभिज्ञताविलसितमेव, तदग्रैव वक्ष्यते ।

न चात्रातीव कर्तव्यं दोषदृष्टिपरं मनः । दोषो ह्यविद्यमानोऽपि तच्चित्तानां प्रकाशते ॥
कुतो वा गृह्यते दोषं सूरयो मद्विधोक्तिषु । नेष्यते यः परस्योऽपि स स्वयं गृह्यते कथम् ॥
निर्दोषत्वैकवाच्यत्वं क्व वा लोकस्य दृश्यते । सापवादा यतः केचिन्मोक्षस्वर्गावपि प्रति ॥
आगमप्रवणश्चाहं नापवाद्यः स्खलन्नपि । नहि सद्वर्त्मना गच्छन् स्खलितेष्वप्यपोद्यते ॥

यथाकथञ्चिदारब्धा त्रयीमार्गानुसारिणी । वाग्वृत्तिरल्पसाराऽपि श्रद्दधानस्य शोभते ॥
मीमांसाशास्त्रतेजोभिर्विशेषेणोज्ज्वलीकृते । वेदार्थज्ञानरत्ने मे तृष्णातीव विजृम्भते ॥
प्रायेणैव हि मीमांसा लोके लोकायतीकृता । तामास्तिकपथे कर्तुमयं यत्नः कृतो मया ॥

इत्यादिषु प्रास्ताविकेषु पद्येषु श्रीमट्टपादैः न केवलं स्फुटमेव मीमांसाया निर्दोषता प्रतिपादिता । प्रत्युत स्वस्य वेदमार्गैकवर्तित्वं परमास्तिकत्वं च सुस्पष्टतया प्रदर्शितम् । सापवादा यतः केचिन्मोक्षस्वर्गावपि प्रतीत्यनेन मोक्षः, जीवः, जगदित्यादिकं यथोपनिषत्सु प्रतिपादितं तथैव स्वीकृतम् ।

(च) सम्बन्धाक्षेपपरिहारप्रकरणे यत् प्रायेण शताधिकं श्लोका ईश्वर–सृष्टि–प्रलयादिनिरासपरा दृश्यन्ते, तत्र न किमप्यपराद्धं भट्टपादैः; प्रत्युत तान् दृष्ट्वा "निरीश्वरा मीमांसकाः" "नास्ति सर्वज्ञत्वाद्युपेतं ब्रह्मेति मीमांसकाः" इति वदतामेव श्लोकवार्तिकस्वारस्याज्ञतया पयोपहासः । यतस्तत्रानुमानिकेश्वरस्यैव निषेधः, न श्रुतिसिद्धस्य । "सर्वज्ञवन्निषेध्या नः स्रष्टुः सद्भावकल्पना" इत्यत्र "सर्वज्ञवत्" इति पदेन यथा बुद्धस्य सर्वज्ञत्वमनुमानेन निर्णेतुमशक्यम्, तथा ईश्वरोऽपि नानुमानेन सिद्ध्यतीति स्वारस्यम् । पौर्वापर्यपर्यालोचनया वेदापौरुषेयत्वसाधन एव तात्पर्यं भट्टपादानां न तु ईश्वरनिराकरणे । वेदापौरुषेयत्वसिद्ध्यै बद्धपरिकरा भट्टपादाः स्पष्टमेवं जगुः "एवं ये युक्तिभिः प्राहुस्तेषां दुर्लभमुत्तरम्" इति । तथाच वेदापौरुषेयत्वमहिम्ना न केवलमीश्वरः किन्तु सृष्टिप्रलयादिकं सर्वमेव अनुमन्यन्ते । शास्त्रदीपिकाकारैः पार्थसारथिमिश्रैश्च "नित्यत्वे वेदस्यावसिते तद्बलेनेश्वरसिद्धिर्भवतु वा मा वा" इत्युक्तम्; तत्राप्ययमेवाशयः, यत्, वेदस्य नित्यत्वे तद्बलेनेश्वरसिद्धिस्तु वर्तत एव तत्र विशेषतो विचारणीयमेव नास्तीति । किञ्च, "ईश्वरो गतकल्पीयं वेदं स्मृत्वोपदिशति" इत्यादिमीमांसाप्रकाशवाक्येनेश्वरः कल्पश्च मीमांसकानामभिमतावितिति । भाट्टचिन्तामणौ–ईश्वरस्यैव गतकल्पीयवेदप्रवचनकर्तृत्वोपपत्तेर्वेदानां नित्यत्वमिति भाव इत्युक्तम् । तेन मीमांसका अनीश्वरवादिन इत्याक्षेपो मीमांसाया अपरिचय एव पर्यवसितो भवति ।

(छ) प्राभाकरा अपि–"एवं चेश्वरे परोक्तमनुमानं निराकृतं नेश्वरोऽपि निराकृतः इति प्रभाकरविजये स्पष्टतयोक्तत्वान्नानीश्वरवादिनः । अपरञ्च, प्रभाकरविजये "आनुमानिकेश्वरनिराकरणाख्ये सप्तदशे प्रकरणे जागर्ति सत्यपि प्राभाकरा नेश्वरमङ्गीकुर्वन्तीति कथनं केवलं तद्ग्रन्थालोचनाभावमात्रं द्योतयति नान्यत् ।

(ज) प्रभाकरगुरूणां वेदान्तोपरि कियन्ती श्रद्धा वर्तते, कीदृशश्च तेषां तत्राशय इत्यत्र बृहतीगतमेतद्वाक्यत्रयमेव निदर्शनम्–( १ ) यत्तु अहङ्कारममकारौ अनात्मनि आत्मधर्माध्यास इति, मृदितकषायाणामेतत् कथनीयम्, न तु कर्मसङ्गिनाम्, तदुक्तं भगवता द्वैपायनेन–न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम्" इति । (२) "यत्तु ब्रह्मविदामेष निश्चयः, यदुपलभ्यते तदध्यमिति, यन्नोपलभ्यते तत्तथ्यमिति, नमस्तेभ्यः; विदुषां नोत्तरं वाच्यम्" इति । (३) "विज्ञातृता तु विज्ञानस्यानाशङ्कनीया, अनाशङ्कितत्वात्, युक्तं चानाशङ्कितम्, कर्मप्रवणत्वात्" इति ।

(झ) श्रीमत्कुमारिलभट्टपादाश्च—"इत्याह नास्तिक्यनिराकरिष्णुरात्मास्तितां भाष्यकृदत्र युक्त्या । दृढत्वमेतद्विषयः प्रबोधः प्रयाति वेदान्तनिषेवणेन" इत्याहुः । न्यायरत्नाकरकारश्च "ननु

प्रतिपादितोऽप्यात्मनः शरीरादिविवेको न दृढरूपेण हृदयेऽवतिष्ठते, अहं स्थूलोऽहं गच्छामीति शरीर एव बलादहंमानो दृढो भवति अत आह–इत्याहेति । नित्यात्मसत्तामात्रेणैव वेदप्रामाण्य-सिद्धेस्तन्मात्रमिह प्रतिपादितम्, दार्ढ्यार्थिभिस्तु वेदान्तविहितेष्वेव श्रवणमनननिदिध्यासनादिषु यतितव्यमिति" इति सुस्पष्टतया सेश्वरवाद एव प्रतिपादयति ।

(१६) परमाणुवादस्य परिणामवादस्य च निराकरणादपि वेदान्तसम्मतमभिन्ननिमित्तोपादान-कारणमेव स्वीकृतं भवति । तदपि "न कदाचिदनीदृशं जगत्" इति राद्धान्तादिदमप्यागतमेव यत् प्रलयेऽपि तत्सत्ता तैः स्वीकृतेति । एवं चाविर्भावतिरोभाववादो वा तत्सदृशो वान्यस्तैरङ्गी-कृत इति ।

एतावता प्रपञ्चेन जैमिनिनये भाट्टसम्प्रदाये वा प्राभाकरसम्प्रदाये वा वेदान्ताभिमतो नेश्वरो निराकृत इत्यवगम्यते । एवमेव न वेदान्ता अपि । तद्विषये विस्तृतो विचारस्तु न कृत एव, अवि षयत्वात् । अनङ्गीकारस्तु वैशेषिकादिनिरासार्थैवेति ध्येयम् ।

(१७) शङ्कराचार्यादिभिरपि न क्वचन शाबरभाष्यं वा वार्तिकं वा बृहतीवाक्यं वोपन्यस्तम् । तेन यत्र यत्र अनीश्वरवादितया मीमांसकेष्वाक्षेपस्तत्रतत्र शङ्कराचार्यादयो प्रकृतमीमांसाशास्त्रम-दृष्ट्वैव वदन्तीत्येतदपि न; तेषामाक्षेपः सम्प्रति समुपलभ्यमाने भाट्टे प्राभाकरे वा व्याख्याने नास्ति, अपि तु भर्तृमित्रादिकृतव्याख्यानेष्वेवेति मन्तव्यम् । तदुक्तं न्यायरत्नाकरे—"मीमांसा हि भर्तृमि-त्रादिभिरलोकायतैव सती लोकायतीकृता, नित्यनिषिद्धयोरिष्टानिष्टं फलं नास्तीत्यादिबहुपसिद्धान्त-परिग्रहेणेति तामास्तिकपथे कर्तुं वार्तिकारम्भयत्नः" इत्यादि ।

(१८) मीमांसकैरपूर्वाख्यः पदार्थः स्वीकृतः तत्रापि ईश्वरप्रसादादेर्न निरासः । अपि तु कालान्तरे फलप्राप्त्यवलम्बनत्वेनैव तत्स्वीकारः । तदेतत्सर्वं "चोदना पुनरम्भः" इत्यत्र विस्तरे-णोक्तमेव । सूक्ष्मेक्षिकयाऽऽलोचनेनैव तदवगमो नान्यथा ।

(१९) वेदान्ताः किं वेदशेषा वेदा वा इत्यादि पूर्वपक्षेण वेदान्तानामत्र वेदत्वसमर्थनेन शास्त्र-योनित्वमेव समर्थितम् ।

(२०) "केचिदत्र जन्मादिसूत्रं लक्षणत्वादनुमानमिति वर्णयन्ति" इत्यादिना वैशेषिकाद्यभि-मतानुमानिकेश्वरकर्तृता निरस्ता । अत्रानुमानप्रयोगास्तु श्रीमत्पुरुषोत्तमचरणैर्गोस्वामिश्वरचरणैश्च प्रदर्शिता एव । तत्र दोषश्च प्रपञ्चितो विस्तरेणेति तत्सर्वं तत एवानुसन्धेयमिति ।

इति द्वितीयं जन्माद्यधिकरणम् ।



## २ समन्वयाधिकरम् १।१।२

### ( कारणतायां सन्देहावतारणम् )

तत्रैतत्स्यात्। तत्र किं समवायि निमित्तं कर्तृ वा? किमतो यद्येवम्? एवमेत-

---

पूर्वाधिकरणे कार्यलक्षणेन ब्रह्मणि सामान्यतो जगत्कारणत्वं प्रतिपादितम्। इदानीं विशेषरूपेण समवायिकारणत्वप्रतिपादकं समन्वयाधिकरणमवतारयन्ति—तत्रैतत्स्यादित्यादिना। तत्र शास्त्रे, "यतो वे"ति एतत् वक्ष्यमाणं स्यात्, विचार्यं स्यात्। वक्ष्यमाणमेवाऽऽहुः—तत्र किमिति। तत्र "यतो वे"ति श्रुतौ। कर्तृ चेति। कुलालवत्कर्तृकारणं वेत्यर्थः। तथा च श्रुतौ ब्रह्म जगतः समवायिकारणं निमित्तकारणं

---

१ समन्वयः समवायिकारणम्। अभिन्ननिमित्तोपादानत्वमिति यावत्। सम्यगन्वयः समन्वय इति व्युत्पत्त्या त्रैकालिका-
नुस्यूतत्वमिति वा तदर्थः। इदं चानुपदमेव स्फुटीभविष्यति। "वैशेषिकदर्शनम् ७-

२ समवायित्वं च समवायानुयोगित्वम्। समवायश्च "इहेदमिति यतः कार्यकारणयोः समवायः" (वैशेषिकदर्शनम् ७-२-२६) सदर्थश्च, कार्यकारणयोरवयवावयविनोर्यतः सम्बन्धात् "इहेदम्" इति प्रत्ययः समवायः (वै. वि. ७-२-२६) स च यथा, अवयवावयविनोर्गुणगुणिनोः क्रियाक्रियावतोर्जा-
तिव्यक्त्योर्विशेषनित्यद्रव्ययोश्च सम्बन्धः (त० सं०)। यथा घटकपालयोः सम्बन्धः समवायः। एवमन्यत्राप्यूह्यम्। तदु-
अयुतसिद्धानामाधार्याधारभूतानां यः सम्बन्धः स समवायः। स च यथा, अवयवावयविनोर्गुणगुणिनोः क्रियाक्रियावतोर्जा-
क्तम्—घटादीनां कपालादौ द्रव्येषु गुणकर्मणोः। तेषु जातेश्च सम्बन्धः समवायः प्रकीर्तितः इति। एवं च अयुतसिद्धाना-
माधार्याधारभूतानां यः सम्बन्धः 'इहप्रत्ययहेतुः' स समवायः। द्रव्यगुणकर्मसामान्यविशेषाणां कार्यकारणभूतानामकार्यका-
रणभूतानां वा अयुतसिद्धानामाधार्याधारभावेनावस्थितानाम् 'इहेदम्' इति बुद्धिर्यतो भवति, यतश्चासर्वगतानामधिगतान्य-
त्वानामविष्वग्भावेनावस्थितानां सम्बन्धः स समवायाख्यः। यथा इह कुण्डे दधि इति प्रत्ययः सम्बन्धे सति दृष्टः। तथा इह
तन्तुषु पटः, इह वीरणेषु कटः, इह द्रव्ये द्रव्यगुणकर्माणि, इह द्रव्यगुणकर्मसु सत्ता, इह द्रव्ये द्रव्यत्वम्, इह गुणे गुणत्वम्
इह कर्मणि कर्मत्वम्, इह नित्यद्रव्येष्वनन्ता विशेषा इति इहप्रत्ययदर्शनादस्त्येषां सम्बन्ध इति विज्ञायते। न चासौ संयोगः,
सम्बन्धिनामयुतसिद्धत्वात्। अन्यतरकर्मादिनिमित्तस्याभावात्, विभागान्तत्वादर्शनात्, अधिकरणाधिकर्तव्ययोरेव च भावा-
दिति, भाववल्लक्षणमेकत्वाद्भाववत्सर्वत्रैकः समवायः। स च द्रव्यादिभ्यः पदार्थान्तरम्। स च प्रमाणतः कारणानुपलब्धे-
र्नित्यः; तस्मात्स्वात्मवृत्तिः। अत एवातीन्द्रियः। सत्तादीनामिव प्रत्यक्षेषु वृत्त्यभावात्। स्वात्मगतसंवेदनाभावाच्च। तस्मा-
दिहबुद्ध्यनुमेयः समवायः (प्रश० भा०)। समवायसत्त्वे प्रमाणं त्वनुमानम्। तच्च, जात्यादिगोचरो विशिष्टव्यवहारः सम्ब-
न्धनियतो, भावमात्रविषयाबाधितविशिष्टव्यवहारत्वात्, सघटं भूतलमिति व्यवहारवत् (न्या० ली०)। घटे घटत्वं रूपं
च समवेतम्, तन्तुषु पटः समवेतः, इह कर्म समवेतमित्यनुगतसमवायाकारप्रतीत्या तत्सिद्धिः (न्या० मं०)। वस्तुतस्तु
स्वाश्रयसमवेतत्वसम्बन्धेनावयवनीलादेरवयविनीलादौ हेतुत्वात्कारणतावच्छेदकसम्बन्धघटकतया समवायसिद्धिः। अन्यथा
स्वाश्रयवृत्तित्वसम्बन्धेन हेतुत्वे नीलकपालसंयुक्तशुक्लकपालादावपि नीलोत्पत्त्यापत्तिः। समवायसम्बन्धेन पटत्वावच्छिन्नं प्रति
तादात्म्यसम्बन्धेन तन्तुत्वेन हेतुत्वात्कार्यतावच्छेदकसम्बन्धविधया समवायसिद्धिः। युतसिद्धयोः संयोग इवायुतसिद्धयोः
समवाय आवश्यकः। समवायत्वं च नित्यसम्बन्धत्वम्। सम्बन्धत्वं चात्र स्वरूपानवच्छिन्नसांसर्गिकविषयताश्रयत्वम्। तेन
गगनादीनां स्वरूपत्वेन सम्बन्धत्वेऽपि न क्षतिः। संयोगसमवायान्यतरत्वं वा सम्बन्धत्वम्। अथवा प्रतियोग्यनुयोगिभि-
न्नत्वे सति सम्बन्धत्वम्। तेन प्रतियोग्यनुयोगित्वात्मकस्वरूपसम्बन्धे नातिव्याप्तिः। इह गवि गोत्वमित्यादिप्रत्ययविषयसम्ब-
न्धत्वं वा समवायत्वम्। समवायस्तु समवायरहितः सम्बन्धः। सर्वत्र समवायस्त्वेक एव नित्यश्च इति न्यायवैशेषिकसि-
द्धान्तः। अत्रैकत्वं च स्वाश्रयान्योन्याभावसमानाधिकरणपदार्थविभाजकोपाधिमत्त्वम्। एकत्वसाधने प्रमाणभूतं सूत्रं च "तत्त्वं
भावेन" (वै० ७-२-२८) इति। नित्यत्वे चेत्थमनुमानम्—स चायं समवायो नित्यः, अकारणकत्वात्; भावानां हि सम-
वायिकारणादुत्पत्तिनियमः, तदनुरुद्धे च निमित्तासमवायिनी इति। तथा च समवायस्य समवायिकारणकल्पनेऽनवस्थादिदोष-
प्रसङ्ग इति समवायस्य नित्यत्वम्। अत्रेदमाकूतम्—नैयायिकानां मते समवायत्वं न जातिः। तद्बाधकस्यासम्बन्धस्य सत्त्वात्।
यद्यपि समवायत्वजातिबोधो व्यक्त्यभेद एव तथापि प्राभाकरादिमते, उत्पादविनाशशीला बहवः समवायाः। तन्मते अस-
म्बन्ध एव जातिबाधक इत्युपस्कारकारः। समवायो नाना अनित्यश्चेति प्राभाकरा नव्याश्चाहुः। प्रत्यक्षः समवाय इति नैया-
यिकाः प्राहुः। समवायस्य प्रत्यक्षत्वसाधकानुमानं च समवायो लौकिकप्रत्यक्षविषयो योग्यप्रतियोगिकत्वे सति विशेषणतया
योग्यवृत्तित्वात्, भूतलादिवृत्तिघटात्यन्ताभावादिवदित्यादि। एतन्मते च समवायप्रत्यक्षं प्रति इन्द्रियसम्बद्धविशेषणतासन्नि-

कयों हेतुरिति कार्यकारणभावो ज्ञेयः । इह कपाले घटसमवायः इति प्रत्यक्षं विशेषणतासन्निकर्षेणैव भवति । समवायोऽतीन्द्रियः अनुमेय एव इति वैशेषिकाः प्रोचुः । तन्मते तदतीन्द्रियत्वे प्रमाणमनुमानम् । तच्च समवायोऽतीन्द्रियः चेतनान्यत्वे सति अस-मवेतभावत्वान्मनोवत् आकाशादिवद्वा इति । समवायो न प्रत्यक्षः सम्बन्धप्रत्यक्षे यावदाश्रयप्रत्यक्षस्य हेतुत्वात् । कथम-न्यथा घटाकाशसंयोगो न प्रत्यक्षः । न च समवायस्य सर्वे आश्रयाः प्रत्यक्षाः, परमाण्वादेरयोग्यत्वादिति । समवायसद्भावे-चानुमानमित्थम्—गुणक्रियादिविशिष्टबुद्धिर्विशेष्यविशेषणसम्बन्धविषया विशिष्टबुद्धित्वाद्दण्डी पुरुष इति विशिष्टबुद्धिवत् । सर्वत्र स्वरूपस्यैव सम्बन्धत्वोपपत्तौ समवायो न पदार्थान्तरमिति भाट्टाः शाङ्कराः साङ्ख्याश्च मन्यन्ते । माध्वास्तु गुणादीनां गुण्यादि-भिर्द्रव्यादिभिरभेदेन समवायाभावात् । आत्मनस्तद्धर्माणां च साक्षिविषयत्वेन मनोविषयत्वाभावात् । वर्णात्मकशब्दस्याद्रव्य-त्वेनाकाशविशेषगुणत्वाभावात् इति । गुणकर्मसामान्यादिभिर्द्रव्यस्य भेदाभेदौ । तत्र यावद्द्रव्यभाविना गुणकर्मसामान्यादिना द्रव्यस्यात्यन्ताभेद एव । अयावद्द्रव्यभाविना तु भेद इति । एवं विचारिते समवाये—यस्मिन् समवायेन सम्बद्धं सत् कार्यमु-त्पद्यते तत् समवायिकारणम् । अथवा यद्धर्मावच्छिन्नं यद्धर्मावच्छिन्ने समवायेनोत्पद्यते तद्धर्मावच्छिन्नं प्रति तद्धर्मावच्छिन्नं समवायिकारणम् । समवायसम्बन्धेन कार्याधिकरणत्वं समवायिकारणत्वमिति वा । समवायसम्बन्धावच्छिन्नकार्यतानिरू-पिततादात्म्यसम्बन्धावच्छिन्नकारणत्वं वा । पण्डितपुरन्दराः श्रीमत्पुरुषोत्तमचरणास्त्वेवमाहुः—विलक्षणतादात्म्यसम्ब-न्धेन यदाश्रयं कार्यं भवति तत्समवायिकारणम् । समवायश्च तादात्म्यस्यैव नामान्तरम् ।

पुरोदीरितं वैशेषिकराद्धान्तसिद्धं लक्षणं त्वन्ये न क्षमन्ते । तत्र तावत्—

(१) **पार्थसारथिमिश्राः**—इयं गौरिति प्रत्ययात्, इह गोत्वमस्तीति प्रत्ययाभावाच्च न पूर्वोक्तलक्षणः समवायः, किन्तु, येन सम्बन्धेनाधेयमाधारे स्वानुरूपां बुद्धिमाधत्ते स्वाकारेण बोधयतीति यावत्, स सम्बन्धः समवाय इत्याहुः ।

तच्चिन्त्यम्; गुणगुणिनोः क्रियाक्रियावतोश्च सम्बन्धस्तस्यासमवायत्वापत्तेः; गुणक्रियाभ्यां स्वाकारेण गुणक्रियावतोरबोध-नात् । तथा चात्र विकल्पद्वयेऽप्यव्याप्त्यव्याप्तिदोषाद्व्यापकत्वैकत्वप्रतिज्ञाभङ्ग इत्यर्थः ।

अथायुतसिद्धयोर्यः सम्बन्धः स समवायः अयुतसिद्धौ च तौ ययोर्द्वयोरनश्यदेकमपराश्रितमेवावतिष्ठत इति, तदपि जघ-न्यम्, तथा सति प्रलये जातिस्थितिः काले वक्तुमशक्या स्यात्, कालसमवेतत्वस्याापादकत्वात् । न च तत्रापि जातिः स्वरू-पेण कालिकेन वा सम्बन्धेन तिष्ठतीति वाच्यम्; मानाभावादित्याहुः । ( एवं चास्मिन् विकल्पे नित्यत्वप्रतिज्ञाया असिद्धि-रिति ध्येयम् । )

(२) **श्रीहर्षमिश्रास्तु**—अपराश्रितत्वं नामापरसम्बन्धित्वम् । तत्र कोऽसौ सम्बन्धः? संयोगः समवायो वा? नाद्यः, समवायापलापप्रसङ्गात् । न द्वितीयः, अपराश्रितत्वस्य समवायघटितत्वेन समवायनिरूपण आत्माश्रयप्रसङ्गादित्याहुः । ( तथा चानिर्वाच्यत्वपादसिद्धिरिति भावः ) ।

(३) **वस्तुतस्तु**—कार्यमात्रस्य प्रलये नाशं वदद्भिर्वैशेषिकैस्तादृशगुणक्रियाप्रतियोगिकस्य तादृशद्रव्यत्वानुयोगिकस्य च समवायस्य प्रतियोग्यादिनाशात् प्रमातॄणां बाह्यकरणनाशाच्च प्रतीत्यभावेन कालिकादिसम्बन्धेन कालादौ सत्तामभ्युपपादयितु-मशक्नुवद्भिः स्वमुखेनैव प्रतिज्ञा भज्यत इति ज्ञेयम् ।

(४) **ब्रह्मसूत्रानुसारिणस्तु**—यथा अयुतसिद्धयोराधेयाधारयोर्विशेषणविशेष्यभावोपपत्तये समवायोऽङ्गीक्रियते, तथा समवायस्याप्याधेयत्वेन विशेषणत्वात्तदर्थं सम्बन्धान्तरस्य समवायान्तरस्य वा अपेक्षायां तदनवस्थापत्तिर्नित्यत्वहानिरनित्यता च स्यात्, अनपेक्षायां समवायस्यासम्बद्धत्वप्रसङ्गस्तथासत्यसम्बद्धः कथं सम्बन्धिनौ सम्बन्धयेत्, स्वत एव स्वस्थितिनियमने तेनैव न्यायेनाधेयान्तरस्यापि स्थितिसिद्धौ समवायस्यैवासिद्धिः; नच तस्य सम्बद्धत्वात्स्वस्थितिनियामकत्वं सम्बन्धिनां तु न तथेत्यतो न दोष इति वाच्यम्, संयोगस्यापि सम्बन्धत्वेनैतत्साम्यात्तस्याप्यसमवेतत्वापत्तेः । न च गुणत्वात्तत्राऽस्ति सम्बन्धान्तरापेक्षेति वाच्यम्, गुणपरिभाषायास्त्वत्तन्त्रमात्रशरणत्वेनेतरैरनादरणीयत्वादित्याहुः ।

(५) **अत्रैवान्ये तु**, अयुतसिद्धयोः सम्बन्धः समवाय इति वदता, अयुतसिद्धत्वमेव पूर्वं साधनीयम्; तत्तु कार्याभावे निरूपयितुमेवाशक्यम्, असत्कार्यवादे असतः कार्यस्य पश्चात्सत्ताङ्गीकारात्, तथा सत्यपृथक्सिद्धत्वरूपस्यायुतसिद्धत्वस्यैव पूर्वमसिद्ध्या तदुपपाद्यस्य समवायस्याप्यसिद्धिः । तस्य पूर्वमुपगमे असत्कार्यवादभङ्गप्रसङ्गः । अथोत्पत्तिरेव समवाय इति चेत्, तर्हि, उत्पत्तेरनित्यत्वात्समवायनित्यत्वहानिः, नित्यत्वे च कार्यनित्यत्वप्रसङ्गात्कारणव्यापारानर्थक्यम्, तस्मात्तादात्म्यलक्षण एव कार्यकारणयोः सम्बन्धो न भवताऽभ्युपगतः समवाय इत्यूचुः ।

(६) **यत्तु**, गुणक्रियादिविशिष्टबुद्धिः विशेषणविशेष्यसम्बन्धविषया विशिष्टबुद्धित्वात्, दण्डिपुरुषविशिष्टबुद्धिवदित्यनुमा-नेन संयोगादिबाधात् समवायं साधयन्ति, तदप्यनेनैव परास्तम्, सिद्धसाधनत्वादर्थान्तरत्वाच्च । न च लाघवबलात्त-त्सिद्धिः, पदार्थान्तरत्वेन प्रतिपाद्यमानस्य तस्यैव गुरुत्वात् प्रतिपत्तिसौकर्याभावाच्च । अतो न समवायस्तादात्म्यातिरिक्तः । तादात्म्यं च भेदसहिष्णुरभेद एव । भेदसहिष्णुता च "बहुस्यां प्रजायेय" तीच्छायां तद्व्यापारभूतशक्तिविभागेनेति नात्र पूर्वोक्तदोषावकाशः ।

(७) यद्वा, "यत्र येन यतो यस्य यस्मै यद्यथा यदा । स्यादिदं भगवान् साक्षात्प्रधानपुरुषेश्वरः" इति दशमस्कन्धीय-
वाक्ये यथापदोक्तप्रकारमध्ये तस्यापि निवेशयितुं शक्यत्वात्सत्कार्यवादे कार्यस्य प्रलयेऽपि सत्त्वात्सम्बन्धिद्वयस्य सत्त्वाच्च
मिलसम्बन्धरूपस्य समवायस्यातिरिक्तत्वाङ्गीकारेऽपि न दोषः । न च सूत्रविरोधः, तत्र वैशेषिकादिप्रतिपन्नस्यैव दूषणेनावि-
रोधात् श्रुतिशरणत्वात्कल्पनागौरवः । सत्कार्यवादाङ्गीकारेऽपि कारणेन कार्यस्य व्यवहारयोग्यतासम्पादनाद् तद्व्यापारानर्थक्यम-
तिरेकाभावाच्च न गौरवमिति । एवं चास्मिन्मते रूपादीन् प्रति न घटादिद्रव्यस्य कारणता प्रमाणाभावात् । किन्तु समानका-
लीनत्वमेव दृष्टानुरोधाद्बोध्यम् ।

(८) यत्तु, पूर्ववर्तित्वं कारणत्वं स्वीकृत्य रूपादीन्प्रति द्रव्यस्य कारणत्वाय प्रथमे क्षणे घटादेर्निर्गुणत्वं स्वीकुर्वन्ति, तदस-
ङ्गतम् । तथाहि—किं कपालादेर्गुणा नश्यन्त्युत तिष्ठन्ति? नाद्यः, कारणगुणानां नष्टत्वे कार्यगुणानारम्भापत्तेः द्व्यणुकपाकादि-
रूपनाशकसामग्र्यभावे तन्नाशस्याप्यशक्यवचनत्वात्, पीततन्तुभिः श्वेतपटापत्तेश्च, पीतस्यैव भवने नियामकाभावात् । न
द्वितीयः, सत्सु तेषु
चादृष्टमेव तथेति वाच्यम्, तेनैव निर्वाहे कारणरूपस्य कारणताभङ्गाप्तीरूपादपि तद्रूपोत्पत्त्यापत्तेश्च । न द्वितीयः, सत्सु तेषु
कार्यगतगुणानारम्भे हेत्वभावादिति दिक् । प्रथमक्षणे परमसूक्ष्मो घट उत्पद्यत इत्यप्यसङ्गतम् ।

(९) अत्र साहुत्याः, प्रथमक्षणे घटः परमाणुर्वा महान्वा उभयविलक्षणो वा? नाद्यः, निरवयवत्वापत्तेः । न द्वितीयः,
गुणगुणिनोरेककालोत्पत्तिप्रसङ्गात्, परमसूक्ष्मो घट इति प्रतिज्ञाविरोधाच्च, अनेककपालेषु समवेतो घटः परमसूक्ष्म इत्यप्य-
गुणगुणिनोरेककालोत्पत्तिप्रसङ्गात्, परमसूक्ष्मो घट इति प्रतिज्ञाविरोधाच्च, अनेककपालेषु समवेतो घटः परमसूक्ष्म इत्यसङ्गतम्
सङ्गमश्च । न तृतीयः, अप्रसिद्धेः । न च गुणगुणिनोर्जन्यजनकत्वानुरोधेनैवं कल्पनेति वाच्यम्, समानकालोत्पत्तियादिनं प्रति
जन्यजनकभावस्य वक्तुमशक्यत्वात् । न च समानसामग्रीकत्वेन कार्यकारणयोरभेदापत्तिरिति वाच्यम्, तन्तुरूपादेः पटाज-
नकतया रूपजनकत्वेन सामग्रीभेदात् । न चैतस्मिन्मते किं समवायिकारणमिति वाच्यम्, पट एव । न च कारणत्वाभावे
कथं समवायिकारणत्वमिति वाच्यम्, स्यादेवं यदि समवायिकारणत्वं कारणताविशेषः स्यात्, न चैवम्, किन्तु, कार्यसमवा-
यित्वमेवेत्याहुः । तथा चैतन्मते कारणैकविध्यमेव । समवायश्च स्वरूपसम्बन्धविशेष एव । कार्यं चावस्थाविशेष एवेति ।

(१०) सिद्धान्ते तु, पूर्वोक्तेच्छया लोकेऽपि कारणत्वं समवायिनोर्निर्बाधम्, आविर्भावशक्त्याधारत्वस्य कारणलक्षणस्य
तत्राप्यन्वयव्यतिरेकसिद्धत्वात्, पुत्रादौ जन्यत्वस्य शास्त्रसिद्धत्वाच्चेति । उपादानं तु समवायिन एवावस्थाविशेषः । परिच्छि-
न्नस्य कर्तृक्रियया व्याप्तस्यैव मृत्पिण्डसूत्रादिरूपस्य पृथिव्यंशस्यैव घटपटाद्युपादानत्वदर्शनात्; अन्यथा पृथ्वीत्वाविशेषात्पि-
ण्डादिरूपताभावेऽपि घटाद्युत्पद्येत । अत एव भगवानविकृत एव जगत एकांशेन समवायी स एव पुनः क्वचित्कालरूपं
क्वचित्प्रकृतिरूपं स्वांशमुपादानं करोतीति "प्रकृतिर्यस्योपादानमाधारः पुरुषः परः । सतोऽभिव्यञ्जकः कालो ब्रह्म तत्त्रितयं
त्वहम्" इति, "गुणव्यतिकराकारो निर्विशेषोऽप्रतिष्ठितः । पुरुषस्तदुपादानमात्मानं लीलयाऽसृजत् । विश्वं वै ब्रह्म तन्मात्रं
संस्थितं विष्णुमायया । ईश्वरेण परिच्छिन्नं कालेनाव्यक्तमूर्तिना" इत्यादिवाक्यादवसीयते । न च लोकेऽप्येकस्यैकमेव नत्वने-
कम्, अन्यथा कारणगुणानां कार्यगुणोत्पादकत्वनियमात्कार्यस्यानेकत्वापत्तेः । शरीरादिष्वपि भूतसमुदायस्यैकस्यैव हेतुत्वम्,
जन्यद्रव्यारम्भावच्छिन्नं प्रति तद्योग्यावयवस्थूलांशत्वेनैवानुगता कारणता, न तु स्पर्शवत्त्वेन, आकाशे व्यभिचारात्, आका-
शाद्वायूत्पत्तेः श्रौतत्वात् । न च निमित्तत्वम्, पुराणोपबृंहणविरोधात् । अत एव नारम्भवादोऽपि ।

उपादानं च द्विविधम् । परिणाम्युपादानं विवर्तोपादानं च । तत्राद्यं स्वसमानसत्ताककार्याकारेणाविर्भवति । परिणामश्च
उपादानसमसत्ताकोऽन्यथा भावः । स द्विविधः । अविकृतो विकृतश्च । तत्राद्यो यथा, सुवर्णस्य कटककुण्डलादिः । द्वितीयो
यथा, मृदो घटशरावोदञ्चनादिः । यथा च मनसो वृत्तिरूपं ज्ञानम्, उपादानविषमसत्ताकोऽन्यथाभावो विवर्तः । सत्वेकविध
एव । यथा रजतादिरूपेण शुक्तेः स्थानम् ।

३ समवायिकारणभिन्नं यत्कारणं तन्निमित्तकारणम् । यथा घटस्य कुलालचक्रचीवरदण्डादिकम्, तुरीवेमादिकं पटस्य,
विषयेन्द्रियव्यापारा ज्ञानस्य । एवं च कारणं द्विविधम्, समवायिनिमित्तभेदात् ।

४ "स्वतन्त्रः कर्ता" इति पाणिनिशासनात् समवायिनिमित्ताभिन्नत्वेन स्वतन्त्रतया कर्तृरूपेणैव कारणम् । स्वातन्त्र्यमपि
तन्मते क्रियानुकूलकृतिमत्त्वमेव । अन्ये तु—स्वातन्त्र्यं नाम समभिव्याहृतकारकान्तरानधीनत्वे सति कारकत्वम् । अत्रोक्तं
हरिणा "धातुनोक्तक्रिये नित्यं कारके कर्तृतेष्यते । प्राधान्यतः शक्तिलाभात्प्राग्भावापादनादपि । तदधीनप्रवृत्तित्वात्प्रवृत्तानां
निवर्तनात् । आरादप्युपकारत्वात्स्वातन्त्र्यं कर्तुरिष्यते" इति । नागेशास्तु—कर्तृप्रत्ययसमभिव्याहारे व्यापारतावच्छेदकसम्ब-
न्धेन धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारतानाश्रयतद्धात्वर्थानाश्रयत्वमित्याहुः । केचिच्छाब्दिकास्तु—"कर्तुः कारकान्तरप्र-
वर्तनं व्यापारः", "साधनान्तरनियोगव्यापारवान् कर्ता" एवमादिकमाहुः । न्याये व्याकरणे च त्रिविधः कर्ता—शुद्धः, प्रयो-
जकहेतुः, कर्मकर्ता चेति । शुद्धत्वं च, हेतुत्व-कर्मकर्तृत्व-एतदनधिकरणत्वम् । प्रेरणार्थकणिजप्रकृतिधातूपात्तव्यापाराश्रय-
त्वमिति यावत् । प्रयोजकहेतुत्वं च, णिजर्थप्रेरणाश्रयत्वम् । कर्मकर्तृत्वं च धातूपात्तव्यापाराश्रयत्वे सति णिजर्थव्यापारेणाप्य-
मानत्वेन विवक्षितत्वम् । केचित्तु—"क्रियामुख्यो भवेत्कर्ता हेतुकर्ता प्रयोजकः । अनुमन्ता ग्रहीता च कर्ता पञ्चविधः

**त्स्यात्। यद्येकमेव स्यात्तदा क्रियाज्ञानशक्त्योर्निरतिशयत्वं भज्येत। मृदादिसाधारण्यं च स्यात्; मतान्तरवत्। कथमेवं सन्देहः; यावता–"यतो वा इमानि" (तै.३-१) इत्यादिभ्यो निःसन्देहश्रवणात्। एवं हि सः, पञ्चमी श्रूयते यत इति, पञ्चम्यास्तसिरिति; आत्मन इत्यपि पञ्चमीनिमित्तत्वेन सन्देहः। पञ्चम्या निमित्तत्वकथनात्।**

---

कर्तृकारणं वा प्रतिपादितमिति विचार्य स्यादिति पूर्वेणान्वयः। **तदिति** प्रथमान्तपाठे तद्ब्रह्मसमवायिकारणं वा निमित्तकारणं वेति विचार्यं स्यादित्यर्थः। अस्मिन्पाठे, ब्रह्मेति, प्रतिपादितमिति, पदद्वयस्याध्याहारो नास्तीति लाघवम्। अत एव प्रकाशे श्रीपुरुषोत्तमैः[१] प्रथमान्तपाठ एवादृतः। शङ्कते–**किमतो यद्येवमिति**। यदि एवं संशयः स्यात्तर्हि, अतः अस्मात् संशयात्, किं भविष्यति न किमपीत्यर्थः। तथा च श्रुत्या ब्रह्मणि सामान्यतः जगत्कारणताज्ञाने जाते लक्षणं प्रमाणं च ज्ञातमेव, अतः परं संशयेन किं कर्तव्यं, विचारेण तन्निरासे च किं फलं भविष्यति, न किमपीति भावः। उत्तरयन्ति—**एवमेतत्स्यादिति**। एवं अनेन प्रकारेण वक्ष्यमाणविचारेणेत्यर्थः। एतत् दोषनिवृत्तिरूपं फलं स्यादित्यर्थः॥

विचारमेवोपपादयन्ति—**यद्येकमिति**। सर्वेषु समवायिनिमित्तादिषु कारणेषु मध्य एकं वक्तव्यं तत्र दण्डादिवन्निमित्तं वा, प्रयोज्यवत्कर्तृ वा, समवायि वेति त्रयाणां मध्ये एकं स्यादित्यर्थः। **तदा** निमित्तत्वकर्तृत्वयोः स्वीक्रियमाणे। **क्रियाज्ञानशक्त्योरिति**। ब्रह्मणि निमित्तत्वे स्वीक्रियमाणे क्रियाशक्तेः, प्रयोज्यकर्तृत्वस्वीकारे, ज्ञानशक्तेश्चेतरनैरपेक्ष्यरूपं निरतिशयत्वं भज्येतेत्यर्थः। तथा च यथा निमित्तकारणीभूतदण्डे स्वतन्त्रा क्रिया नास्ति, यथा वा प्रयोज्यकर्तरि कुलाले,*प्रयोजककुलालपितृनिष्ठं कर्तृत्वज्ञानमादायैव कर्तृत्वज्ञानं तथा इतरसापेक्षज्ञानं ब्रह्मण्यपि स्यादिति भावः।·ननु समवायिकारणत्वमेवास्तु इत्यत आहुः—**मृदादिवदिति**। **मतान्तरवदिति**। यथा साङ्ख्यमते मृद्विकारत्वं घटे, मृत्तिकायां विकारित्वं, तथा ब्रह्मण्यपि विकारित्वं स्यादित्यर्थः। एवं चैतद्दोषनिवारणार्थं विचारः कर्तव्य इति भावः। एवं रीत्या विचारे प्रसक्ते अधिकरणाङ्गसंशयमाहुः—**कथमित्यादिना**। **एवमिति**। समवायि निमित्तकारणं कर्तृ वेत्येवंरूपः सन्देहः कथमित्यर्थः। ननु कुतो न भवतीत्यत आह—**यावतेति**। यावत्पर्यन्तमित्यर्थः। वाक्यश्रवणानन्तरमपि सन्देहतादवस्थ्यं प्रतिपादयन्ति—**एवं हीति**। स सन्देहः भवतीत्यध्याहारः। कथं भवतीत्यत आह—**पञ्चमीति**। "यतो वे"ति वाक्ये पञ्चम्युक्ता। "तस्माद्वा एतस्मादि"ति वाक्ये साक्षात् ब्रह्मवाचकादात्मपदादपि पञ्चमीत्याहुः—**आत्मन इति**। निमित्तत्वे पञ्चम्या निमित्तत्वरूपार्थवाचकत्वेन। **सन्देह इति**। सन्देह एव नास्तीत्यर्थः। **कथनादिति**। घण्टाघो-

---

स्मृत." इत्याहुः। षड्विधो घातकर्तेति मनुः। अष्टविध कर्तेत्यन्ये। तथाहि—"अनुमन्ता विशसिता नियन्ता क्रयविक्रयी। संस्कर्ता चोपहर्ता च षडेते घातकाः स्मृता." इति, अत्र चतुर्थचरणे—"खादको घातकस्तथा" इति पाठादष्टविधः। मीमांसकास्तु—त्रिधेव ज्ञायते कर्ता विशेषेण क्रिया प्रति। योग्यत्वप्रतिपिद्धत्वविशेषेण पदान्वये." इत्याहुः। सात्त्विराजसतामसभेदेन त्रिविधः कर्तेति वेदान्तिनो वाचस्पतिमिश्रप्रभृतयः। एवं च समवायलक्षणस्य प्रतितन्त्रं भेददर्शनात्, उपादाने विकारित्वापत्तेश्च, निमित्तत्वे द्वैतापत्तेः क्रियाज्ञानशक्त्योर्निरतिशयत्वभङ्गप्रसङ्गाच्च, कर्तृत्वे कर्तृलक्षणाना बहुविधत्वात् कर्तृभेदना च व्याकरणे न्याये मीमांसायां च विभिन्नतया प्रतिपादनात् स्वीकारे–प्रमाणाभावाच्च कीदृशं कारणत्वं व्यासचरणैरभ्युपगम्यत इति विकल्पत्रयेण शङ्कोपस्थापनम्।

१ मम तु तदिति प्रथमान्तपाठोऽत्र प्रतिभाति—इति प्रकाशः। सामानाधिकरण्येनान्वयसौष्ठवादिति रश्मिः।

२ विभाषा गुणेऽस्त्रियाम् इत्यनाद्यरप्रभृत्वे, अगुणादपि हेतौ. पञ्चम्यङ्गीकृता। यथा धूमादग्निमान् इत्यादाविति प्रकाशे। वस्तुतस्तु जनिकर्तुरित्यनेनैव निर्वाहः। एतदेव सूत्रं पञ्चम्याः कारणत्वार्थं सूते।

उपादानत्वे कर्तृत्वे च सन्देहः । तद्वाचकाश्रवणात् । कल्पनायां प्रमाणाभावात् । समवायित्वे पुनः सुतरां सन्देहः । एवं प्राप्त आह—

**तत्तु समन्वयात् ॥ १।१।३ ॥**

( समवायिकारणत्वस्थापनम् )

तुशब्दः पूर्वपक्षव्यावृत्त्यर्थः । निमित्तत्वस्य श्रुतिसिद्धत्वान्मतान्तरनिराकरणत्वेनाग्रे वक्ष्यते । तद्ब्रह्मैव समवायिकारणम् । कुतः ? समन्वयात् सम्यगनुवृत्त-

---

र्यादित्यर्थः । एवं च पञ्चम्या निमित्तत्वे सन्देहो नास्ति परन्तु ब्रह्मणि निमित्तकारणत्वस्वीकारे क्रियाशक्तिनिरतिशयित्वभङ्गरूपदूषणस्य प्रागुक्तत्वात्कारणतासन्देहतादवस्थ्यादिति भावः । ननु मास्तु निमित्तत्वमन्यत्कारणत्वमस्त्वित्यत आहुः—**उपादानत्व इति** । **अश्रवणादिति** । विभक्तिपदयोर्मध्ये एकस्याप्यश्रवणादित्यर्थः । ननु कल्प्यत इत्यत आहुः—**प्रमाणेति** । **सुतरामिति** । साङ्ख्यमतरीत्या विकारित्वदूषणग्रस्तत्वात्कारणतासन्देह एव पर्यवसानमित्यर्थः । **एवं प्राप्त इति** । श्रुतौ तु कारणता उक्ता, परन्तु एतासां कारणतानां मध्ये एकापि कारणता वक्तुं न शक्यते इति ब्रह्म कारणं भवति न वेत्येवं संशये प्राप्ते इत्यर्थः । **आहेति** । सिद्धान्तमाहेत्यर्थः ।

सूत्रमाहुः—**तत्तु समन्वयादिति** । नन्वस्मिन्नधिकरणे पूर्वपक्षो न दृश्यते इत्यत आहुः—**तुशब्द इति** । **पूर्वपक्षव्यावृत्त्यर्थ इति** । पूर्वपक्षस्यावसर एव नास्तीति तन्निवृत्त्यर्थं तुशब्द इत्यर्थः । तेन कारणताविचारो विषयः, तत्संशयः, पूर्वपक्षस्तु न, अस्त्येवेति सिद्धान्तः । उपोद्घातः सङ्गतिरिति चतुरङ्गमिदमधिकरणं सूचितम् । ननु ब्रह्मैव निमित्तकारणमिति पूर्वपक्षः कुतो न स्वीक्रियते इत्यत आहुः—**निमित्तत्वस्येति**[1] । **श्रुतिसिद्धत्वादिति** । तथा च तन्निराकर्तुं शक्यत इति भावः । नन्वेवं चेत्तर्हि तस्य स्वीकारः किमर्थमित्यत आह—**मतान्तरेति** । तटस्थं निमित्तकारणता (वा) यैः स्वीक्रियते तन्मतनिराकरणत्वेनेत्यर्थः । **वक्ष्यते** । द्वितीयाध्याये इति शेषः । सूत्रार्थमाहुः—**तदिति** । ब्रह्मणः अधिकारलभ्यत्वात् सूत्रस्थतत्पदस्य कारणपरत्वमाहुः—**ब्रह्मैव** । **समवायिकारणमिति** । एवकारेण प्रकृतेर्व्यवच्छेदः । **सम्यगनुवृत्तत्वादिति** । जगति ब्रह्मणः सम्यक् अनारोपितानागन्तुकरूपेण पटे तन्तु-

---

१ "तु पादपूरणे भेदे समुच्चयेऽवधारणे" इति विश्वः । "शास्त्रदृष्ट्या तूपदेशो वामदेववत्" इत्यत्र तुशब्देन मतान्तरव्यावृत्तिर्यथा, तथात्रापि पूर्वपक्षव्यावृत्तिरित्यर्थः ।

२ अत्र तत्पदेन ब्रह्मपरामर्शभ्रमं वारयन्तोऽधिकारसूत्रलभ्यत्वात्, पर्वतो धूमादिति प्रयोगदर्शनात् वह्निमान् धूमादितिवत् समवायित्वस्य साध्यताभ्रममनुमानत्वाय वारयन्ति तदित्यादि । ब्रह्मैव तत्समवायिदर्शनात्, रूपादावंशतो बाधसम्भवात् । समवायित्वस्य साध्यताभ्रममनुमानत्वाय वारयन्ति तदित्यादि । ब्रह्मैव तत्समवायिकारणमिति योजना । समन्वयपदसमभिव्याहारात्सूत्रे सोऽप्युपयुज्यते न ब्रह्मेत्यनुवर्तते, तथा च भाष्येऽनुमानप्रतीतावपि औपनिषदत्वनिर्घटिकेति न सोप्युज्यते । एवं मदुक्तप्रकारेण योजने नानुमानप्रतीतिः । तथाहि—अत्र समवायिकारणमिति न पक्षः । तथासति समवायिनो द्रव्यमात्रस्य ब्रह्मत्वसिद्ध्या ब्रह्मणस्तदतिरिक्तस्यापि समवायित्वासिद्धेः पर्वतो धूमादिति प्रयोगापत्तेश्च । नाप्यनुभूत स्वप्ने तदंशस्य मायास्पस्य पक्षत्वम्, अथ कार्ये प्रसिद्धं शुल्यादौ च प्रसिद्ध ब्रह्मैव पक्षः "ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः" इति गीताप्रामाण्यानुरोध्यागामिभाष्यानुरोधेन ततो विशेषितत्वे तु समवायिकारणस्य पूर्वसूत्रवासनाया जगत समवायिनि वक्तव्ये जगत्समवायी पक्षः । ब्रह्मत्वं साध्यम् । एवकारः प्रकृत्यादि व्यवच्छिनत्ति । पक्षत्वे त्रिषु व्याख्यानेषु मध्ये भाष्यीयं मध्यमं व्याख्यानम् । अस्तिभातिप्रियात्मकेनानागन्तुकानारोपितरूपेण सर्वत्रानुवृत्तत्वं हेतुः । यत्रानागन्तुकानारोपितरूपेण समन्वितत्वं तत्र तदात्मकत्वमिति सामान्यव्याप्तिः । यथा मृदोऽनागन्तुकानारोपितमृत्त्वेन रूपेण समन्वितत्वान्मृदात्मकत्वं घटस्य । रूपादौ च घटादेर्घटत्वेन रूपेणानुवृत्त्यभावाच्च रूपादौ घटाद्यात्मकत्वम् । ननु सम्यगनुवृत्तत्वमनारोपितानागन्तुकरूपेण सर्वं लक्षीकृत्य वर्तमानत्वम् । तज्जगति ब्रह्मणः कथम् ? न हि जगति ब्रह्मणोऽनारोपितानागन्तुकेन ब्रह्मत्वेन रूपेणान्वयोऽवगम्यते, यथा पटे तन्तोर्घटे वा मृद इत्याकाङ्क्षापूरणाय अस्तीत्यादिर्मूले । तेषु तेषु

त्वात्, अस्तिभातिप्रियत्वेन सच्चिदानन्दरूपेणान्वयात्, नामरूपयोः कार्यरूपत्वात्—

( साङ्ख्यमतनिरासः )

प्रकृतेरपि स्वमते तदंशत्वात्, अज्ञानात्परिच्छेदाप्रियत्वे, ज्ञानेन बाधदर्श-

---

वदनुस्यूतत्वादित्यर्थः । ननु पटे तु तन्तोरभिव्याप्तिर्दृश्यते, ब्रह्मणस्तु प्रपञ्चे केन रूपेणाभिव्याप्तिरित्यत आहुः—अस्तीति । प्रपञ्चे यदस्तित्वादित्रयं भासते तत्सच्चिदानन्दरूपब्रह्मान्वयादेवेत्यर्थः । ननु नामरूपयोरप्यन्वयो दृश्यत इति मायाया अप्यन्वयोऽस्तीत्यत आहुः नामरूपयोरिति । एतयोः कर्मणोऽप्युपलक्षकत्वं बोध्यम् । "त्रयं वा इदं नाम रूपं कर्म च" इति श्रुतेः । कार्यरूपत्वात् जगदुत्पत्त्यनन्तरं प्रतीयमानत्वेन जन्यत्वात् । तथाच "अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि" इति श्रुत्या लोके च घटे सत्यनन्तरमेव रूपं नाम कर्म च दृश्यत इति भावः ।

ननु सत्त्वरजस्तमसामनुवृत्तिदर्शनेन प्रकृतेरेव समन्वयः कुतो न स्वीक्रियत इत्यत आहुः—प्रकृतेरपीति । तदंशत्वादिति । "वाङ्मनोगोचरातीतं द्विधा समभवद्बृहत् । तयोरेकतरो ह्यर्थः प्रकृतिः सोभ-

---

वस्तुषु तत्तद्रूपप्रतीतिविषयेणास्तित्वादिधर्मेणावगम्यमानात् सदादिरूपेणान्वयात् । यो हि यदन्वितः स स्वस्मिंस्तद्विषयां प्रतीतिमाधत्ते, यथा घटादिः पृथिवीत्यादिप्रतीतिम् । तथात्र सर्वमस्तीत्यादिप्रतीतिजनकत्वात्सदाद्यन्वितम् । एवं चोपरिनिर्दिष्टं सर्वमित्यादि सर्वमिति पक्षः, सदाद्यन्वितत्वं साध्यं, अस्तीत्यादिहेतुः । यन्नैवं तन्नैवं खपुष्पवदिति दृष्टान्तः । अस्तीत्यादिप्रतीतिजनकत्वं त्वेवं साधितम् "अन्वयव्यतिरेकाभ्यां यत्स्यात्सर्वत्र सर्वदा" इत्यस्य सुबोधिन्याम् । तथाच—घटः सन्, पटः सन्, भासते इति, प्रिय इति च, सर्वत्रैवैकस्य ब्रह्मणोऽन्वयः । अन्यथा एकशब्दानुवृत्तिः प्रतीत्यनुगतिश्च न स्यात् । विशेषेणातिरिच्यत इति व्यतिरेकः, घटादिभ्यः किमतिरिच्यते, घटस्तु यथा नातिरिच्यते तथा पटः पटात्, किन्तु सद् घटादप्यतिरिच्यते पटादपि, एवं सर्वत्र, यत्सर्वं सत् सर्वस्मादतिरिच्यते तद्ब्रह्म । नन्वेकमेव ब्रह्मत्वसाधकमस्तु किं द्वाभ्यामिति चेत्; अन्वयेन ब्रह्मत्वं न सिद्ध्यति, जगति जगतोऽप्यन्वयात् । यद्यपि घटादेर्व्यतिरिच्यते जगत्तथापि जगतो न व्यतिरिच्यते, खपुष्पादिकं तु जगतो व्यतिरिच्यते परं नान्वेति, सज्जगतो व्यतिरिच्यते भगवतोऽपि सत्त्वात्, कारणस्याक्षरस्यापि सत्त्वात्, अतो यस्यान्वयव्यतिरेकौ तदेव सर्वम् । तत्र यदि सर्वमस्तीति प्रतीतिजनकं घटोऽस्ति, भूतले घटाभावोऽस्ति इत्यादिप्रतीतेर्न तु भातिप्रियत्वप्रतीतिजनकं घटो ज्ञानं, घटो जानाति, घटः प्रीणातीत्याद्यप्रतीतेः । घटो भासत इत्यत्र न आश्रयत्वं तदर्थः, किन्तु विषयत्वमित्याशङ्क्यते, तदा तु अत्रैव युक्तिनिरूपणे भातिप्रियत्वयोरपि घटादिवृत्तित्वस्य मया व्युत्पाद्यत्वाद्घटादीनां तद्धर्मकत्वे सिद्धे तत्प्रतीतावप्यक्षतिः । जीवे आनन्दांशस्य जडे चिदानन्दयोरप्राकट्यस्य वक्ष्यमाणत्वात् । अतो न पद्यसरस्याः प्रकृतिपराभूतमवाक्यमुद्धारः । हेतुघटिका प्रतीतिश्च प्रत्यक्षानुमित्यन्यतरपरा । तेन सदन्वयः प्रतीतिसाक्षिकश्चिदानन्दयोस्त्वानुमानिक इति ज्ञेयम् । एवं च सच्चिदानन्दरूपेण ब्रह्मान्वयोऽवगन्तव्य एवेति प्रतिपाद्यते ।

१ ननु जगत्यस्त्यादिरामन्वयो न ब्रह्मणः समवायित्वगमकः, नामरूपयोरपि समन्वयात् । न च तयोर्नानात्वान्नान्वय इति वाच्यम्; तयोः प्रतिनियतरूपेणान्वयेऽप्यवच्छेदकावच्छेदेनान्वयस्य निराबाधानुभवात् । न च रूपस्य व्यभिचारः शङ्कनीयः, तस्य व्यवहार्यत्वपरत्वात् । अवकाशरूपेण व्यवहार्यत्वस्याकाशादावपि सत्त्वादिति चेत्, न, नामरूपयोः कार्यरूपत्वात् । नामरूपे कर्मणोऽप्युपलक्षके । "त्रयं वा इदं नाम रूपं कर्म" इति श्रुतेः, प्रपञ्चस्यैतत्त्रयात्मकत्वात् । तथा च, "अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि" इति श्रुतेर्नाम्नां रूपेषु नियमनं कृत एव जगतः कार्यत्वेन प्रतीतेस्ते एव कार्यस्य कार्यताव्यवच्छेदकरूपभूते । यदा हि पृथुबुध्नोदराकारोऽर्थो भवति तत्र तादृशं रूपं घट इति नाम च भवति । तदपि न स्वतः, किन्तु, व्याकरणश्रुतेस्तत्कारणोत्तरम् । यथा हि बालके जाते तदवयवानालोक्य व्यक्तौ निश्चितायां नाम नियमयति, एतन्नामायमिति, तद्वत् । अतः कर्माणि मूलकारणसत्कालीनं कार्यस्वरूप एव प्रविशतीत्यागन्तुकत्वाच्च तदन्वयः किन्त्वन्वयमात्रं तेषामतो न ब्रह्मणः समवायित्वबाधकमित्यर्थः ।

२ पुरोवादिनः प्रचारेऽपि, सत्त्वादिगुणान्वयस्य न ब्रह्मसमवायित्वगमकत्वम् । कार्यमात्रे प्रत्यक्षाणां सत्त्वरजस्तमसामनुवृत्तिदर्शनात् । तथाहुः साङ्ख्याः—"प्रीत्यप्रीतिविषादात्मकाः प्रकाशप्रवृत्तिनियमार्थाः । अन्योन्याभिभवाश्रयजननमिथुनवृत्तयश्च गुणाः" इति गुणानां स्वरूपं तृतीयोक्त्वा, "सत्त्वं लघु प्रकाशकमिष्टमुपष्टम्भकं चलं च रजः । गुरुवरणकमेव तमः

**नात्, । नानात्वं त्वैच्छिकमेव, जडजीवान्तर्यामिष्वेवैकैकांशप्राकट्यात् । कथमेवं-**
**मिति चेत्, न; सद्रूपे घटरूपक्रियास्विव तारतम्येनाविर्भाववत्, जडेऽपि भानत्वा-**
**दिप्रतीतेस्तारतम्येनाविर्भावोऽङ्गीकर्तव्यः, भगवदिच्छाया नियामकत्वात् ।**

---

यात्मिका । ज्ञानं त्वन्यतमो भावः पुरुषः सोऽभिधीयते" इत्येकादशस्कन्धीयभगवद्वचनैरंशत्वे सिद्धे कार्य-
त्वेनागन्तुकत्वादनुवृत्तत्वं नास्तीति भावः । ननु प्रपञ्चे कस्यचिद्दुःखं कस्यचित्सुखमिति देशतः, एकस्यैव
कदाचिद्दुःखं कदाचित् सुखमिति कालतः, परिच्छेदो दुःखं च दृश्यते, परिपूर्णस्य ब्रह्मणः समन्वये सति
तदुभयं न स्यादित्यत आहुः—**अज्ञानादिति** । परिच्छेदः अप्रियत्वं चाज्ञानेनानुभूयत इत्यर्थः । ननु
कथमिदं ज्ञायते इत्यत आह—**ज्ञानेनेति** । आत्मानन्दज्ञानेनेत्यर्थः । ननु प्राकृतिकं नानात्वमपि नादर-
णीयमित्यत आहुः—**नानात्वमिति** । "बहुस्यामि"ति श्रुतेरिति शेषः । ननु प्रपञ्चे कया रीत्याऽन्वय
इत्यत आहुः—**जडेति** । जडे सदंशः, जीवे चिदंशः, अन्तर्यामिणि आनन्दांशोऽनुभूयत इत्यर्थः । शङ्क-
ते—**कथमिति** । जडजीवान्तर्यामिरूपप्रपञ्चे सच्चिदानन्दरूपब्रह्मणः अन्वयसत्त्वे एकांशस्य प्राकट्यं
अन्यांशस्य तिरोहितत्वं कया रीत्या एवमङ्गीक्रियते इत्यर्थः । अत्र समाधानमाहुः—**नेति** । **सद्रूपे**,
अस्तीतिप्रत्ययविषये एकस्मिन्नर्थे **घटरूपक्रियासु** द्रव्यगुणकर्मसु । **तारतम्येनेति** । त्रिषु एकैकां-
शप्राकट्यरूपतारतम्येन सदंशस्येति शेषः । **जडेऽपीति** । भानत्वादीत्यादिपदेन प्रियत्वपरिग्रहः । यथा
घटः सन् रूपं सदित्यादि प्रतीत्या अस्तीति विषयीभूतेऽर्थे विद्यमानस्य सदंशस्य द्रव्यगुणकर्मसु आवि-
र्भावः स्वीक्रियते, तथा जडेऽपि ब्रह्मांशयोः सच्चिदानन्दयोरप्याविर्भावोऽङ्गीकार्य इति भावः । नन्वेवं
चेत्तर्हि घटः सन् इति सामानाधिकरण्यप्रतीतिवत् ज्ञानं घट इति प्रतीतिः कुतो न जायत इत्यत आह—
**भगवदिति** । जडे ज्ञानांशस्य क्रीडार्थं इच्छया तिरोहितत्वान्न तादृशप्रतीतिरिति भावः । उच्चनीचभावा-
दीनामाविर्भावोऽपि क्रीडार्थमिच्छयेत्येकादशस्कन्धे स्पष्टमिति सर्वमनवद्यम् ।

---

प्रतीपनचार्थतो वृत्तिः" इति । तथा च, महदादिकार्यं सुखदुःखमोहगुणकद्रव्यजन्यं कार्यत्वे सति सुखदुःखमोहगुणकद्रव्य-
स्त्वात् । यथैका रूपयौवनशीलवती स्त्री भर्तुः सुखदा, सपत्नीनां दुःखदा, पुरुषान्तरस्य मोहदेति तद्वदिति । न च सुखादी-
नामान्तरत्वेनानुभवात्स्त्र्यादीनां सुखादिगुणकत्वे मानाभावः शङ्कनीयः । स्त्रीचन्दनादिजन्यस्य सुखस्य तत्तदवयवेषु बहिरेवानु-
भवेन तज्जनकेषु स्त्र्यादिष्वपि तस्य बहिरेव सत्तानिश्चयात् । न च तस्यानुभवस्य भ्रान्तत्वं शक्यवचनम् । तथा सति देहे मे
सुखं शिरसि मे वेदनेत्याद्यनुभवान्तरस्यापि बाधप्रसङ्गात् । एवं तु स्त्रीसुखं चन्दनसुखमित्याद्यभिलापोऽपि युज्यते । आन्तर-
त्वेनानुभवस्तु मानसस्यैव । एवं सिद्धे तेषां बाह्यत्वे स्त्र्यादिसंसर्गेण बहिरेव तेऽभिव्यज्यन्ते घृतद्रवत्वादिवत् । तथा च प्रयोगः,
विमताः सुखादयो न साक्षादात्मधर्माः, बाह्यत्वे सत्यात्मनि प्रतीयमानत्वात्, गौरत्वादिवदिति । तथा, स्त्र्यादयः सुखादि-
गुणकाः, सुखादिजनकत्वात् । यद् यज्जनकं तत् तद्गुणकं, प्रकाशशैत्यादिजनकवह्निचन्दनादिवदिति च । एवं सिद्धे तेषां तद्गु-
णकत्वे तेषां द्रव्याणां तद्गुणात्मकत्वमप्यनुमेयम् । तथा च प्रयोगः, विमताः सुखाद्यात्मकाः सुखाद्यविनाभूतत्वात्, तन्मात्रा-
विनाभूतमहाभूतवत् । तथा, सुखादयो द्रव्यसूक्ष्मावस्थारूपाः, तदविनाभूतत्वे सति तज्जनकत्वात्, महाभूतविनाभूततज्जन-
कतन्मात्रवदिति । न च प्रथमक्षणे द्रव्यं यावद्गुणशून्यमेवोत्पद्यत इति वाच्यम्, प्रत्यक्षादिबाधितत्वात्, अपाकजस्य रूपादे-
रुत्पत्तिदशायामप्यनुभवात् । एवं सुखादावपि बोध्यम् । पुत्राद्युत्पत्तिकाल एव पुरुषभेदेन सुखदुःखाद्युत्पत्तिदर्शनात्तस्य बाला-
देस्तदानीमपि तज्जनकतया तद्गुणकत्वतदविनाभावयोर्निश्चयादिति । एवं मैत्रायणीये "तमो वा इदमेक एवाग्र आसीत् तत्परे
स्यात् तत्परेणेरितं विषमत्वं प्रयाति" इति । श्वेताश्वतरेऽपि "प्रधानक्षेत्रज्ञपतिर्गुणेशः" इति तमःशब्दवाच्यायाः प्रकृतेर्गु-
णानां च सृष्ट्यादौ सत्ताश्रावणात्, पुराणेषु मन्वादिषु च तथा स्मरणात् सिद्धे प्रकृतेः सत्त्वे सर्वस्य त्रिगुणत्वेन गुणमय्याः
प्रकृतेरेव समन्वयस्य सिद्धत्वान्न ब्रह्मणः समवायित्वसिद्धिरित्याहुः ।

## ( परमाणुवादनिरासः )

**न च साधारण्येन सर्वजगत्प्रति परमाण्वादीनामन्वयः सम्भवति । एकस्मिन्ननुस्यूते सम्भवत्यनेककल्पनाया अन्याय्यत्वात् । लोके कर्तृविशेषवदुपादानविशेषग्रहणेऽपि न ब्रह्मणि व्यभिचारः । अलीकप्रतीतेऽस्तित्वादिप्रतीतावपि सम्यगन्वयाभावान्न कार्यत्वव्यभिचारौ । तस्माद्ब्रह्मण एव समवायित्वम् । एतत्सर्वं श्रुति-**

---

अत्र समवायिकारणपरमाणुसमन्वयवादी नैय्यायिकः शङ्कते—**न चेति** । समाधानमाहुः—**एकस्मिन्निति** । ब्रह्मणीति शेषः । नन्वनेकेषु समवायित्वं न स्वीक्रियते चेत्, तन्त्वादीनां पटसमवायित्वं न स्यादित्यत आहुः—**लोकेति** । **कर्तृविशेषवदिति** । कुलालादिर्लोके शान्तकर्तृविशेषवदित्यर्थः । **उपादानेति** । तन्तुपरमाण्वादीनां प्रकृत्यन्तानां ग्रहणेऽपीत्यर्थः । **न ब्रह्मणि व्यभिचार इति** । ब्रह्मणः सर्वनियन्तृत्वेन समवायित्वेन च कारणत्वव्यभिचारो नास्तीत्यर्थः । ननु भ्रमे स्वाप्निकप्रतीतौ चास्तित्वप्रतीतिर्जायते इति ब्रह्मणोऽन्वयस्तत्रापि स्यादित्यत आहुः—**अलीकेति** । **प्रतीत इति** । रजतादाविति शेषः । **सम्यगिति** । अन्वये सम्यक्त्वं नाम अनारोपितानागन्तुकरूपेणान्वयत्वं जागरणोत्तरं विशेषदर्शनोत्तरस्वाप्निकराज्यस्य भ्रमीयरजतस्य च बाधदर्शनात्, स्वाप्निके भ्रमीयरजतादौ च सत्ताऽऽरोपितेति तत्र न ब्रह्मकार्यत्वमथ च तादृशकार्यतानिरूपिता कारणता ब्रह्मणि नास्तीति कार्यलक्षणस्य व्यभिचारोऽपि

---

१ मूर्तत्वे सति निरवयत्वं परमाणुत्वम् । परमाणुर्हि जन्यद्रव्यावयवः क्रियावान्, अतीन्द्रियः, निरवयवः, नित्यश्चेति न्यायवैशेषिकसिद्धान्तः । अत्र सूत्रम्—प्रलयोऽणुसद्भावात् (गौ. ४-२-१४) इति । परमाणूनामुत्पत्तिं नाशं च स्वीकुर्वन्ति क्षणभङ्गवादिनो बौद्धाः । तदुक्तं शान्तरक्षितेन—"जात्यादेर्निःस्वभावत्वमयुक्त प्राक् प्रकाशितम् । द्रव्यादयः पदार्था ये विद्यन्ते पारमार्थिकाः । इत्याक्षपादकाणादा प्राहुराममानकाः । द्रव्यादिप्रतिषेधोऽयं सङ्क्षेपेण तदुच्यते । क्षित्यादिभेदतो भिन्नं नवधा द्रव्यमिष्यते चतुःसङ्ख्यं पृथिव्यादि नित्यानित्यतया द्विधा । पृथिव्याद्यात्मकास्तावच्च इष्टाः परमाणवः । अनित्या ये तदाद्यैस्तु प्रारब्धास्ते विनाशिनः । तत्र नित्याणुरूपाणामसत्त्वमुपपादितम् । निःशेषवस्तुविषयक्षणभङ्गप्रसाधनात् । नित्यत्वे सकलाः स्थूला जायेरन् सकृदेव हि । संयोगादि न चापेक्ष्यं तेषामस्त्यविशेषतः । सद्धर्मोपगतं नोचेदणूत्पादकमिष्यते । विद्यमानोपलम्भार्थप्रमाणाविषयत्वतः । नासिद्धेर्दृश्यते येन कुविन्दाद्यणुकारणम् । परमाण्वात्मका एव येन सर्वे पटादयः" । इत्यादि—"द्रव्याणां प्रतिषेधेन सर्व एव तदाश्रिताः । गुणकर्मादयोऽपास्ता भवन्त्येव तथा मताः" इत्यन्तम् । व्याख्यातं च कमलशीलेन । न्यायवैशेषिकनये परमाणुसद्भावे प्रमाणं तु—जालसूर्यमरीचिस्थं सूक्ष्मतमं तद्रज उपलभ्यते, तत्, सावयवम्, चाक्षुषद्रव्यत्वात्, पटवत् इति; त्र्यणुकावयवोऽपि सावयवो महदारम्भकत्वात् तन्तुवत् इति; यो द्व्यणुकावयवः स एव परमाणुः स च नित्यः, कार्यत्वेऽनवस्थाप्रसङ्गात्, असमवेतभावकार्योत्पत्तिप्रसङ्गाच्च । तथाच मेरुसर्षपयोरपि तुल्यत्वप्रसङ्गः । "परमाणुश्च परं वा त्रुटेः (गौ. २-२-१५) इति सूत्रात् परमाणुर्ज्ञेयः । त्रुटेः परं यदतिसूक्ष्मं तत्परमाणुः । वाशब्दोऽवधारणे । अथवा त्रुटेरवयवस्तदवयवो वा परमाणुरिति विकल्पार्थो वाशब्दः । यद्वा त्रुटेः परं सूक्ष्मं परमाणुः । त्रुटावेव वा विश्राम इति विकल्पोऽभिमतः इति गौतमसूत्रवृत्तिकारो विश्वनाथः । इदं च नवीनं मतमिति दिनकरी । वात्स्यायनभाष्ये हि "अवयवविभागस्यानवस्थानाद्द्रव्याणामसङ्ख्येयत्वात्त्रुटित्वनिवृत्तिरिति । स चायमल्पतरप्रसङ्गो यस्मान्नाल्पतरमस्ति यः परमोऽल्पस्तत्र निवर्तते । यतश्च नाल्पीयोऽस्ति तं परमाणुं प्रचक्ष्महे" इति । "जालसूर्यमरीचिस्थं यत्सूक्ष्मं दृश्यते रजः । तस्य षष्ठतमो भागः परमाणुः स उच्यते" इति वाक्यवृत्तिः । "चरमः सविशेषाणामनेकोऽसंयुतः सदा । परमाणुः स विज्ञेयो नृणामैक्यभ्रमो यतः" इति भागवतम् ।

२ तथाच यथा लोके कुलालादीनां चतुर्मुखान्तानां कर्तृत्वेऽपि तत्तन्मते प्रकृतेरीश्वरस्य च सर्वनियामकत्वान्न कर्तृत्वं हीयते, एवं लोके तन्त्वादीनां परमाण्वन्तानां प्रकृत्यन्तानां चोपादानत्वेन ग्रहणेऽप्यस्मन्मते ब्रह्मणो मूलकारणत्वान्न समवायित्वहानिरित्यर्थः ।

रेयाह—"स आत्मानꣳ स्वयमकुरुत" (तै. २-७) इति। निमित्तत्वं तु स्पष्टमेव सर्ववादिसम्मतम्।

( रामानुजादिमतोपन्यासः )

केचिदत्र शास्त्रयोनित्वपूर्वपक्षनिराकरणाय—तत्तु समन्वयात् ( ब्र. सू. १-३ ) इति योजयन्ति। तत्पूर्वपक्षसिद्धान्तयोर्द्वयोरप्यसङ्गतत्वादुपेक्ष्यम्।

---

नास्तीत्यर्थः । उपसंहरन्ति—तस्मादिति । प्रपञ्चे प्रकटानां सच्चिदानन्दानामेवाविर्भावादित्यर्थः ।
अत्र प्रमाणमाहुः—एतदिति । आहेति । एकस्यैव कर्तृत्वं कर्मत्वमाहेत्यर्थः । स आत्मानमिति ।
अत्र श्रुतावात्मपदस्वारस्यादविकृतपरिणामवाद एव सम्मतः, आत्मनो विकाराभावादिति भावः । ननु
समवायिकारणत्वं ब्रह्मणः प्रतिपादितं परन्तु निमित्तकारणत्वं श्रुतिर्वदतीत्यत्र किं कर्तव्यमत आहुः—
निमित्तमिति । सम्मतमिति । केषाञ्चिन्मते केवलं निमित्तकारणं ब्रह्म । अस्माभिस्तु श्रुतिर्वदतीत्ये-
तदर्थं निमित्तवदुपादानकारणत्वं ब्रह्मणः स्वीक्रियत इति सर्वसम्मतमिति भावः । एतेन सर्वविधा कारणता
ब्रह्मण्यस्तीति क्रियाज्ञानशक्त्योर्निरतिशयित्वशङ्को नास्तीति सूचितम् । ननु समवायिकारणत्वं नाम सम-
वायसम्बन्धावच्छिन्नकारणत्वम्, एवं च समवायस्य अभेदसम्बन्धातिरिक्तत्वात्, सम्बन्धस्य च द्विनिष्ठत्वात्,
प्रपञ्चब्रह्मणोरभेदे इदं न सङ्गच्छते इति चेत्, न; अस्मन्मते समवायस्य समन्वयरूपत्वेन अभेदस्वरूपत्व-
मेव वक्तव्यम् । तस्य बहुस्यामितीच्छोत्तरं द्विनिष्ठत्वं सङ्गच्छते । यथा हिरण्यकुण्डलमित्यत्र हिरण्याभिन्नं
कुण्डलमित्यर्थेऽभेदस्य द्विनिष्ठत्वं तद्वदत्रापि मन्तव्यम् । अत एवोक्तमभियुक्तैः "कार्यरूपेण नानात्वमभेदः
कारणात्मना । हेमात्मना यथाभेदः कुण्डलाद्यात्मना भिदा" इति सर्वमनवद्यम् । अत्र सर्वेषां मताना-
मनुवादनं खण्डनं च प्रकाशेऽनुसन्धेयम् ।

अत्र सूत्रे रामानुजाचार्यादीनां मतमनूद्य खण्डयन्ति—केचिदित्यादिना ब्रह्मणः समवायित्वाय
समन्वयसूत्रं वक्तव्यमित्यन्तेन । पूर्वपक्षनिराकरणायेति । शास्त्रयोनित्वसूत्रे यः पूर्वः पक्षस्तन्निराक-
रणायेत्यर्थः । पूर्वपक्षस्तु, पूर्वोत्तरकाण्डरूपो वेदः सर्वोऽपि क्रियापर एव, तत्र विधिघटितं वाक्यं मुख्यं
क्रियापरम्, अन्यानि वाक्यानि कानिचित्तदङ्गबोधकानि, कानिचिदर्थवादवाक्यानि क्रियाप्राशस्त्यबोध-
कानि, एवं च सर्वोऽपि वेदः क्रियाप्रतिपादक एव न ब्रह्मप्रतिपादक इति कथं सूत्रे ब्रह्मणि जगत्कर्तृत्वं
शास्त्रप्रमाणत्वं प्रतिपादितमिति । "ननु आत्मा वा अरे द्रष्टव्यः" "आत्मेत्येवोपासीत"इत्यादिविधिवाक्यानां
ब्रह्मोपासनाङ्गब्रह्मज्ञानप्रतिपादकानामन्येषामपि वाक्यानामुत्तरकाण्डेऽपि सत्त्वात् । ब्रह्मप्रतिपादकत्वमपि
वेदस्य सम्भवतीति चेत्, न; तथापि विधिना उपासनानुकूलक्रिया विधीयते, अन्येषां च वाक्यानां
तदङ्गध्यानार्थं ब्रह्मज्ञानप्रतिपादनपरत्वेनैव निर्वाहे कारणतायां न प्रमाणत्वम्, "यतो वे"ति वाक्यं ध्यान-
विधौ प्राशस्त्यबोधकमिति । अत्र समाधानं समन्वयसूत्रम् । तत्र समन्वय इत्यस्य सम्यक् प्रतिपाद्यतया
अन्वयः समन्वयः । तथा च "सत्यं ज्ञानमनन्तं ब्रह्म"इत्यादिवाक्येषु निरतिशयानन्दरूपं ब्रह्मैव प्रतिपा-

---

१ भास्कराचार्यैः । अत्र हि पञ्चटीकोपेतत्रिसूत्रीभूमिकाया देवर्षिमहाभागैः कर्णे पृष्टे कटिं चालयतीति न्यायेन वाचस-
तिमिश्रमतं प्रकाशयननुरोधि स्वबुद्धिपरिकल्पितमेव खण्डनं कृतम् । भामतीकारणा व्याख्यानस्य, अविकृतपरिणामवा-
दानुकूलायाः कारिकायाश्चास्या विचारः श्रीमदनिरुद्धाचार्यचरणैर्नारायणाथर्वशीर्षभाष्ये वेदान्तविद्यालङ्काराख्ये, मया च तट्टी-
कायां किरणावल्यां महता विस्तरेण कृत एवेति—पुनरत्रापि तन्नोपयुज्यते, विस्तरभिया ।
२ रामानुजादीनां मतानि तत्समीक्षा चास्माभिरधिकरणान्ते क्रियत एवेति ततोऽवगन्तव्यम् ।

( सर्वस्मिन् वेदे धर्म एव जिज्ञास्य इति पूर्वपक्षस्तन्निरासश्च )

**तथाहि जैमिनिर्धर्मजिज्ञासामेव प्रतिज्ञाय तत्प्रतिपादकस्य पूर्वकाण्डस्य समन्वयमाह; अवान्तरवाक्यानां प्रकारशेषत्वात् । न च सर्वस्मिन्वेदे धर्म एव जिज्ञास्यः, तद्गुरुणैव व्यासेन ब्रह्मजिज्ञासायाः प्रतिज्ञातत्वात् । सन्देहमात्रवारकत्वाज्जिज्ञासयोः, नत्वलौकिकार्थसाधकत्वम् । तथा सति वेदानामन्याधीनत्वेनाप्रामाण्यं स्यात् । वेदजिज्ञासेत्येवोक्तं स्यात् ।**

---

द्यत इति शास्त्रप्रमाणकत्वं ब्रह्मणः सिद्धम् । एवं चैतादृशं निरतिशयानन्दरूपब्रह्मप्राप्त्युपायभूतब्रह्मज्ञानप्रतिपादनपरं "ब्रह्मविदाप्नोति परम्" इति वाक्यं ब्रह्मज्ञानार्थं "आत्मानमेव लोकमुपासीते"त्यादिनोपासना विधीयते इति सर्ववेदान्तवाक्यानां मोक्षोपायप्रतिपादकत्वं निरवद्यमिति ।

ननु कथं पूर्वपक्षसिद्धान्तयोरसङ्गतत्वमित्यतः प्रथमं पूर्वपक्षासंङ्गतिमाहुः—**तथा** हीत्यादिना । **तत्प्रतिपादकस्य,** धर्मप्रतिपादकस्य, **समन्वयम्,** धर्मे प्रतिपाद्यप्रतिपादकभावसम्बन्धम्; **अवान्तरवाक्यानाम**र्थवादमन्त्रादिरूपाणाम् । **प्रकारशेषत्वा**दिति । धर्मप्रकाराङ्गत्वादित्यर्थः । तथा च धर्मे प्रकारीभूतं यत्कर्मस्तवनं तत्प्रकाशकानामर्थवादवाक्यानामथ च धर्मे प्रकारीभूतं यद्द्रव्यं देवतादि तत्प्रकाशकानां मन्त्रादीनां च धर्माङ्गत्वमेवेति सर्वस्य पूर्वकाण्डस्य धर्म एव समन्वय इति भावः । शङ्कते—**न चे**ति । न हीत्यर्थः । उत्तरयन्ति—**तद्गुरुणे**ति । यदि उत्तरकाण्डं धर्मप्रतिपादकं स्यात्तदा व्यासः ब्रह्मविचारप्रतिज्ञां न कुर्यादित्यर्थः । **सन्देहे**ति । मन्दमध्यमयोरित्यादिः । **जिज्ञासयो**रिति । धर्मब्रह्मजिज्ञासयोरित्यर्थः । **अलौकिकार्थे**ति । धर्मब्रह्मप्रमितिसाधकत्वमित्यर्थः । **तथा सती**ति । धर्मे ब्रह्मणि च वेदस्य प्रामाण्ये मीमांसाधीने सतीत्यर्थः । ननु कर्मणामग्निहोत्रादिरूपाणां भिन्नत्वात् तद्रूपक्रियापरत्वं वेदस्य कुतो नोच्यत इत्यत आहुः—**वेदे**ति । जैमिनेरिदं यद्यभिप्रेतं स्यात्तदेदृशं प्रतिज्ञावाक्यं ब्रूयादित्यर्थः । तथा च पूर्वकाण्डं धर्मपरमिति भावः ।

---

१ यथा "अथातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासा" इतिसूत्रेण क्रत्वर्थजिज्ञासा चतुर्थाध्याये प्रतिज्ञाता, तथाऽवान्तरशेषविशेषविषयत्वं च ब्रह्मजिज्ञासाया प्रतिजानीयात् । अत्र चेत्थमवधेयम्—(१) व्यासेन ब्रह्मजिज्ञासायाः प्रतिज्ञातत्वात्, (२) अप्रामाण्यं स्यात्, (३) वेदजिज्ञासेत्येवोक्तं स्यात्, इति हेतुत्रयात् सर्वस्य वेदस्य क्रियार्थत्वं न जैमिन्यभिप्रेतम् । कर्तृभेदाद्भिन्ने एवोभे जिज्ञासे । ते च पूर्वोत्तरकाण्डाभ्यां प्रमिते धर्मे ब्रह्मणि च मन्दमध्यमयोर्बुद्धिदोषात्सन्देहमालोच्यैव कृते, नान्योन्यमतदूषणाय । जैमिनिना द्वितीयस्य द्वितीयपादे उक्तानामभ्यासादीनां व्यासपादैः "आनन्दमयोऽभ्यासात्" इति सूत्र उपन्यासात् । व्यासपादैः प्रथमस्य तृतीयपादे "शब्द इति चेन्न" इत्यादिसूत्रेऽभिप्रेतस्य चानपेक्षत्वस्य जैमिनिना "औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धस्तस्य ज्ञानमुपदेशो व्यतिरेकश्चार्थेऽनुपलब्धे तत्प्रमाणं बादरायणस्यानपेक्षत्वात्" इति सूत्र उपन्यासाच्च । नापि धर्मप्रमितिजननाय, यदि तथा स्यात्तदा मीमांसाधीने वेदस्य प्रमितिजनकत्वे उभावपि वेदस्य प्रामाण्येऽनपेक्षत्वं न ब्रूयाताम् । अत इदमपि सर्वस्य वेदस्याक्रियार्थगमकम् । अथ यदि कर्मार्थतैव वेदस्य जैमिन्यभिप्रेता स्यात्, तदा बादरायणमतं जानानेन तदनादराय वेदजिज्ञासेत्येवं प्रतिज्ञावाक्यं सूत्रितं स्यात् । किञ्च, आम्नायस्येति पूर्वपक्षसूत्रं तद्भूतसूत्रस्थं क्रियार्थपदं तु तिङन्तवाचकम्, न तु साध्यार्थपरम् । तेन तदर्थे जैमिनिसूत्रानुसरणमपार्थमेवेति । अयमर्थः, लिङादिप्रयोगे ह्याख्यातत्वलिङ्त्वाभ्यां भावनैवोच्यते । सा च भवितुर्भवनानुकूलो भावकव्यापारविशेषः । तत्र शाब्दी भावना, आर्थी भावना च । पुरुषप्रवृत्त्यनुकूलो व्यापारविशेषः शाब्दी भावना लिङ्वाच्या; अयं मा प्रवर्तयति, मत्प्रवृत्त्यनुकूलव्यापारवानयमिति लिङ्श्रवणे प्रत्ययात् । यथा गोशब्दश्रवणे गोत्वं प्रतीयत इति गोत्वं गोशब्दार्थः । स च व्यापारविशेषो वेदे पुरुषाभावाल्लिङादिशब्दनिष्ठ एव, अतः शाब्दी भावना, तस्याश्च साध्यसाधनेतिकर्तव्यतारूपांशत्रयापेक्षिण्या अंशत्रयोपेतार्थी भावना साध्यत्वेन सम्बध्यते, न तु सङ्ख्यादयोऽयोग्या भावितुम् । एवं च साध्यार्थं आर्थी भावना, तत्परत्वं चेति क्रियार्थं वेदस्य प्रकृतिप्रत्ययरूपतिङन्तवाचकत्वम्, न तु लिङादिमात्रप्रत्ययार्थपरत्वमिति पर्यवसन्नोऽर्थः ।

किञ्च—

साधनं च फलं चैव सर्वस्याह श्रुतिः स्फुटम् ।
न प्रवर्तयितुं शक्या तथा चेन्नरको न हि ॥ ९ ॥
प्रवर्तकस्तु सर्वत्र सर्वात्मा हरिरेव हि ।
यज्ञ एव हि पूर्वत्र बोध्यते स्वर्गसिद्धये ॥ १० ॥
सिद्ध एव हि सर्वत्र वेदार्थो वेदवादिनाम् ।
मन्त्राणां कर्मणां चैव दर्शनश्रवणाच्छ्रुतौ ।
कृतिश्च सिद्धतुल्यत्वं वेदः स्वार्थे च सम्मतः ॥ ११ ॥

---

नन्वाम्नायस्य क्रियार्थत्वादिति जैमिनिसूत्रे प्रवृत्तिरूपक्रियापरविधिवाक्यस्य वेदत्वमुक्तम् । मन्त्रार्थवादा-
नामपि विधिशेषत्वम् । उत्तरकाण्डेऽपि धर्मरूपोपासनाविधिरस्ति तच्छेषत्वं ब्रह्मप्रतिपादकानां वाक्यानाम्,
एवं च सर्वोऽपि वेदः प्रवर्तनारूपक्रियापर इत्यत आहुः—**किञ्चेति** । **सर्वस्य** अग्निहोत्रादिकर्मण एव ।
**नरकेति** । वेदे प्रवर्तकनिवर्तकवाक्यश्रवणानन्तरं शुभकर्मण्येव प्रवृत्त्या नरको न स्यादित्यर्थः । **सर्वत्र** ।
काण्डद्वये । **सर्वात्मेति** । "एष तेऽन्तर्यामी"ति श्रुत्या सर्वान्तर्यामी । "एष एव साधु कर्म कारयती"ति
श्रुत्या प्रवर्तकः हरिरित्यर्थः । **यज्ञ एवेति** । सिद्धावस्थापन्नानामर्थो यज्ञरूपो विष्णुरेव पूर्वकाण्डे बोध्यत
इत्यर्थः । **सिद्ध एवेति** । एवकारेण यजेतेति, वितण्डार्थभावनारूपक्रियाव्यवच्छेदः । **मन्त्राणामिति** ।
"स एतं कसर्णीरः काद्रवेयो मन्त्रमपश्यदि"ति श्रुतौ मन्त्राणाम्, "अपश्यम् पुरोडाशं कर्मभूतं सर्पन्त-
मि"ति श्रुतौ द्रव्याणां दर्शनश्रवणादित्यर्थः । **कृतिश्चेति** । भावनापरपर्याया विधिबोध्या कृतिरित्यर्थः ।

---

१ भाट्टास्त्वायत् लिङर्थो भावनेत्याहुः । अस्मन्मते तु विधिबोध्या कृतिरेवेत्याशयः । यथाच मीमांसासूत्रम्—"भावार्थाः
कर्मशब्दास्तेभ्यः क्रिया प्रतीयेतैव ह्यर्थो विधीयते" अत्र भाट्टाः—फलीभूतापूर्वभेदोऽप्यपूर्वसाधनभेदाधीन इति तत्साधन-
जिज्ञासायां स्वर्गादिसाधनस्यैवावान्तरव्यापाररूपापूर्वं प्रति साधनत्वात् स्वर्गादिफलं प्रति किं धात्वर्थस्य कारणत्वम्, उत उप-
पदार्थस्य सोमादेरपीति चिन्तायां प्राथमिकभावनान्वयस्य तावत् सिद्धान्तिनोऽपि सम्मतत्वात्, औत्सर्गिकः फलान्वयोऽपि
सर्वेषामेवेति प्राप्ते—सर्वथा करणत्वेऽनेकादृष्टकल्पनाप्रसङ्गादेकस्यैव फलनिरूपिता कारणता, अन्येषां तु, दृष्टविधयैव करणार्थ-
त्वम् । तदत्र धात्वर्थस्यैव फलकरणत्वे सोमादीनां तज्जनकत्वेनैव दृष्टार्थता । सोमादीनां करणत्वे च धात्वर्थस्याश्रयविधयैव
दृष्टार्थतेति नानेकादृष्टकल्पना ॥ एवं स्थिते विशेषजिज्ञासायां सोमादेरेव फलकरणत्वं तस्य सिद्धत्वेन योग्यतारूपलिङ्गात् ।
तृतीयायाः करणत्वे शक्तत्वेन कारकश्रुतेरेकपदोपात्तत्वरूपपदश्रुत्यपेक्षया बलीयस्त्वाच्च । फलान्वये पदश्रुतेरप्यभावाच्च । अत
एव यागादिर्धात्वर्थः सोमाद्यर्थ एव । न च तदर्थत्वेऽदृष्टकल्पना । अग्निहोत्रहोमेन दधिनिष्ठकरणतासम्पादनवत्, यागेनाह-
ष्टमन्तरेणैव सोमनिष्ठकरणतासम्पादनेन यागस्य सोमाङ्गत्वोपपत्तिरिति प्राप्ते—पदश्रुत्या यागस्यैव फलकरणत्वम् । यद्यपि च
फलान्वये न सा, तथापि प्राथमिकभावनान्वये यस्य यत्प्रमाण तद्गतबलवत्त्वस्य तस्यामवस्थितायामकिञ्चित्करत्वेऽपि पाष्ठिक-
फलान्वये तस्य निर्णायकत्वात् । अतश्च प्राथमिकभावनान्वये विद्यमाना पदश्रुतिः फलान्वये निर्णायिका । न च तस्याः कार-
कश्रुत्यपेक्षया दौर्बल्यम् । लाक्षणिकत्वेऽपि यागकारणत्वस्य सोमकरणत्वान्वयात्प्राक् भावनायामन्वितत्वेन तदन्वयस्य बाध-
न्यात् । अन्यथा तिङ्पदस्य परिपूर्णत्वाभावेन तदुपस्थापितभावनायां सोमस्याप्यन्वयानुपपत्तेः, परिपूर्णं पदं पदान्तरेणान्वेति
न्यायात् । न च प्रथमावगतस्यापि कल्पस्योत्तरकालिकेन बाध, उपजीव्यत्वादिति यागः फलसाधनम्, सोमो यागार्थं इति
सिद्धम् । प्रयोजनं, सोमापचारे न प्रतिनिध्युपादानं पूर्वपक्षे । सिद्धान्ते तु तत् ॥
नन्विदं धात्वर्थातिरिक्तभावनासत्त्वे भवेत् । न तु तस्यां प्रमाणमस्ति । धातूनामेव विक्लित्त्यादिफल [illegible] तत्प्रयोजकव्यापार-
मात्रे फूत्कारादौ यत्नादौ च शक्तत्वात् । अतो यत्नादिरूपभावनाया अपि धातुवाच्यत्वात् धात्वर्थ एव क्रियारूपे सकलकार-
कान्वय, [illegible] यागस्य पदश्रुत्या फलकरणत्वमिति चेत्, न, पचति, पाकं करोति, पाके यतते, पाकात्पृथग्विवीयमाणयत्नादेः
पचत्यर्थत्वानुपपत्तेः । न च पचन्तपाकशब्दस्य फल एव शक्तत्वात् पृथग्विवरणोपपत्तिः । व्यापारविगमेऽपि फलदशायां पाको
विद्यते इति प्रयोगापत्तेस्तस्य व्यापारवाचित्वावश्यम्भावात् । अतो भासमानो यत्नादिस्तिङ्वाच्य एव । अत एव धातुवाच्य-

मपि साक्षात्फलजनकफूत्कारादिव्यापारवृत्तिपाकत्वादिकमेव । तच्च जातिरखण्डोपाधिर्वेत्यन्यदेतत् । तज्जनकयत्नादिकं तु आख्यातवाच्यमेव । तत्र हि शक्ततावच्छेदकत्वं तु करोतिना विधीयमाणत्विस्वादिकं, लाघवात्तिस्वादिकमेव वा । न तु स्थानिलत्वम् । तदुपस्थापकादेशविशेषाणां पदज्ञाननिष्ठकारणतावच्छेदककोटौ प्रवेशे गुरुभूतकारणतावच्छेदकघटितानन्तकार्यकारणभावकल्पनापत्तेः । अप्रवेशे यथाकथञ्चिदुपस्थापितलकारादपि भावनोपस्थित्यापत्तेश्च । शक्यतावच्छेदकं तु फलोद्देश्यकधात्वर्थातिरिक्तव्यापारत्वम् । फलं च क्वचिद्धात्वर्थे-' क्वचिच्च स्वर्गादिरिति यथाविवक्षम् । एवं च रथो गच्छतीत्यादौ न लक्षणा; गमनानुकूलव्यापारत्वस्यैवाख्यातार्थत्वादिति पार्थसारथिमिश्राः ।

वस्तुतस्तु—यत्नत्वमेव शक्यतावच्छेदकम्, लाघवात् । तद्बाधे तु सर्वत्राश्रयत्वादौ लक्षणा । यत्नस्यैव चाख्यातोपात्तस्य नित्यं कर्मसाकाङ्क्षत्वम्, करोतिपर्यायत्वात् एककर्मकत्वम्, फलभावनानुकूलव्यापारत्वाच्चार्थभावनात्वं द्रष्टव्यम् ॥

अत्र पार्थसारथिमिश्रानुयायिनः, न करोतेर्यत्नार्थकत्वम्; तथासति सकर्मत्वानुपपत्तेः । न हि यत्नार्थकयततेः सकर्मकत्वम्; 'घटं यतते' इति प्रयोगापत्तेः । किन्तु करोतेर्भावयतिपर्यायत्वेन भावनानुकूलव्यापारवाचित्वमेव । ततश्च पाकं करोतीत्यस्य पाकं भावयतीत्येवार्थः । एवं च 'पचति' इत्यादावाख्यातस्य पाकभवनानुकूलव्यापार एव शक्तिः । न च अननुगमः; भवनानुकूलव्यापारेषु व्यापारत्वस्याखण्डोपाधित्वस्वीकारात् । एवं च 'जानाति' इत्यादावपि न लक्षणा । अत एव 'यजेत' इत्यादौ भावनायाः सामान्यरूपाया विशेषाकाङ्क्षा इतिकर्तव्याकाङ्क्षेति प्राचीनग्रन्थानामुपपत्तिः । व्यापारसामान्यमध्ये यत्नस्यापि भवनानुकूलव्यापारत्वेन भावनात्वमिष्टमेव । अत एव "डुकृञ् करणे" इतिधातुपाठेऽपि 'करणे' इत्येवोक्तम् । यत्नार्थकत्वे "कृती प्रयत्ने" इतिवत् "डुकृञ् प्रयत्ने" इत्येवावक्ष्यत् । न चेत्यमवोचत् । तस्मात् व्यापारसामान्यं भावनेत्युक्तम् । एतेन न तावत्कर्तृव्यापारो भावना । स हि पचावधिश्रयणादिः; यजौ मानसस्त्यागः, तद्धेतुर्वा प्रयत्नः, सङ्कल्पो वा; गमौ चलनम्; ते च धात्वर्था एवेति न धात्वर्थातिरेकिणीं भावनामुपलभामहे । प्रयत्नो भावनेति चेत्, "रथो गच्छति" इत्यादौ तदभावः स्यात् । स्पन्द इति चेत्, न; 'यजेत' इत्यादिष्वात्मकर्तृकेषु व्यभिचारापत्तेः । उभयसाधारणोदासीनत्वविच्छेदसामान्यं भावना । उदासीनत्वमुपक्षुर्वद्रूपत्वं, तद्विच्छेदः कुर्वद्रूपत्वं, तदेव भावनेति चेत्, न; शब्दादौ तदभावापत्तेः । प्रयत्नसङ्कल्पादिकमादाय हि लोके प्रयोगो दृश्यते । न हि शब्दस्य विभोरचेतनस्य प्रयत्नादिकं सम्भवति । न चोदासीनत्वविच्छेदः कुर्वद्रूपत्वमिति शब्दादावर्थाभिधानशक्तेरर्थप्रतीतिलक्षणभाव्योत्पादनानुकूलायाः सत्त्वेन तस्या एव भावनात्वौचित्यान्नानुपपत्तिरिति वाच्यम्; यस्मिन् समीकर्तृरुदासीनत्वविच्छेदव्यवहारो दृश्यते तादृश एव धर्मः उदासीनत्वविच्छेदशब्दार्थः । सधर्म एव कुर्वद्रूपत्वमिति वक्तव्यम् । ■ च धर्मः क्रियाविभागान्यतरहेतुप्रयत्नस्पन्दान्यतररूप एवेति शब्दादौ तदभावस्य स्पष्टत्वात् । न च तत्रेष्टापत्तिरिति वाच्यम्; 'शब्दोऽभिदधाति' इत्यादिप्रयोगानुपपत्तेः । "अभिधाभावनामाहुरन्यामेव लिङादयः । अर्थात्मभावना त्वन्या सर्वाख्यातेषु गम्यते" इत्याचार्यवचनविरोधाच्च । तस्यायमर्थः, अभिधानशब्दस्य कर्तरि करणे वा व्युत्पत्तौ अभिधायाः शब्दस्य भावनेत्यर्थः । अर्थः पुरुषार्थः । आत्मा भाव्यत्वेन निरूपको यस्याः सेत्यर्थः । अभिधाशब्दस्य शब्दपरत्वमाश्रित्य व्यापारव्यापारिणोरसति भेद अभिधात्मिका शब्दात्मिका भावना अभिधाभावना शब्दभावनेत्यर्थाङ्गीकारे तद्व्यावृत्तये अर्थात्मेति"। अर्थस्वरूपा भावना अर्थात्मभावनेति केचित् । ततश्च शब्दादौ भावनानङ्गीकारे "अभिधाभावनाम्" इति शब्दगतस्य व्यापारस्य भावनात्वोक्तिः, 'लिङादय आहुः' इत्याख्यातप्रयोगः । तत्राख्यातस्य भावनावाचकत्वाभावे अर्थभावनायाः सर्वाख्यातगम्यत्वोक्तिश्च विरुद्ध्येतैव । न च "सिद्धकर्तृक्रियावाचिन्याख्यातप्रत्यये सति । सामानाधिकरण्येन करोत्यर्थोऽपधार्यते" इत्युक्तत्वात् पचति यजतीत्यादिषु यत्र कर्तुः सिद्धत्वं तत्रैवाख्यातस्य भावनावाचित्वमित्यर्थावगमेन सर्वशब्दसङ्कोचस्यावश्यकतया शब्दादिव्यतिरिक्तविषयत्वेनापि सङ्कोचस्य न्याय्यत्वान्नानुपपत्तिरिति वाच्यम्; अस्त्यादावपि कर्त्रंशे भाव्येऽस्त्येव हि भावना । अन्यत्रारोपभावात्तु न तथा सा प्रतीयते" इत्यसिद्धकर्तृकस्थलीयाख्यातमात्रपरतया सङ्कोचानुपपत्त्या शब्दाद्यतिरिक्तविषयत्वेन सङ्कोचासम्भवात् । प्रत्युत शब्दादीनां सिद्धत्वेन शब्दोऽभिदधातीत्याख्यातस्य भावनावाचित्वावश्यम्भावाच्च । तस्मान्नोदासीनत्वविच्छेदो भावनेति धात्वर्थातिरिक्तभावनास्वरूपं दुर्निरूपमिति शङ्का परास्ता । व्यापारस्य विशेषरूपेण धात्वर्थत्वेऽपि सामान्यरूपेणाख्यातवाच्यत्वसम्भवेन धात्वर्थातिरिक्तव्यापारसामान्यात्मकभावनासिद्धिसम्भवात् । धात्वर्थातिरिक्तस्य धातुशक्यतावच्छेदकातिरिक्तधात्वर्थतावच्छेदकव्यापकशक्यतावच्छेदकवत्त्वरूपत्वात् । धात्वर्थतावच्छेदकावच्छिन्नविषयकप्रतीतिविषयावच्छेदकधर्मवत्त्वरूपत्वाद्वा । तदुक्तमाचार्यैः, "धात्वर्थव्यतिरेकेण यद्यप्येषा ■ लक्ष्यते । तथापि सर्वसामान्यरूपेणान्यावगम्यते" इति । विवृतं चैतन्मण्डनमिश्रैः । "कथ्यमानाद्रूपभेदात् द्विधा धात्वर्थसङ्गतिः । अन्योत्पादनकूलात्मा भावना किं प्रदुष्यति" इति । एतदुक्तं भवति । सत्यं, न धात्वर्थव्यतिरेकिणी भावना । धात्वर्थानामेव द्वे रूपे । पाको, यागः, प्रयत्नः, संकल्पः, चलनं, विक्लेदनं, अभिधानं, छेदनमिति प्रातिस्विकं धात्वभिधेयमक्रियात्मकं सिद्धस्वभावमेकम् । अपरं ■ सर्वधात्वर्थानुयायिकरोतिप्रत्ययवेद्यं, क्रियात्मकं, साध्यस्वभावं, अन्योत्पादनानुकूलात्मकं, आख्याताभिधेयमिति । अयमर्थः, भवतेर्ण्यन्तादुत्पन्नो भावनाशब्दः भवितुः प्रयोजकव्यापारवाची । तथा च धात्वर्थो धातुना यागत्वादिविशेषरूपेणाभिधीयते । आख्या-

तेनान्योत्पादनानुकूलव्यापारत्वेनाभिधीयते । एवं धात्वाख्याताभ्यां कथ्यमानत्सामान्यविशेषलक्षणरूपभेदात् धात्वर्थस्य द्वेधा वाक्यार्थान्वयः । तत्र धात्वर्थस्य सिद्धतया प्रतीतेर्न कारकान्वययोग्यता । अन्योत्पादनानुकूलव्यापारस्य सामान्यरूपस्य क्रियारूपत्वेन प्रतीतेः कारकान्वययोग्यता । भावयतिपर्यायकरोतिप्रत्ययवेद्यत्वाच्च भावनात्वम् । तथा च, अनुभवन्ति हि लोकाः, यजति यागं करोति, पचति पाकं करोति, गच्छति गमनं करोतीति करोतिप्रत्ययं सर्वसाधारणमन्योत्पादनानुकूलव्यापाररूपं च । पचति पाकं भावयतीत्यादि च । तस्मात्साध्यस्वरूपपूर्वापरीभूतानेकव्यापारसमुदायात्मकान्योत्पादनानुकूलभावनास्वरूपं धात्वर्थातिरिक्तं सिद्धमेवेति व्यापारसामान्यं भावनेत्येव युक्तम् । यत्तु कृतिरेव भावनेत्युक्तं तद्, अन्योत्पादनानुकूलव्यापारत्वेन भावनात्वस्येष्टत्वात् कृतित्वेन भावनात्वस्य भावयतिपर्यायकरोतिप्रत्ययवेद्यत्वानुपपत्त्याऽसंभवात्, भावनाशब्दार्थत्वासम्भवाच्च; जानातीत्यादौ लक्षणापत्तेश्चोपेक्ष्यम् । किञ्च, यत्र करणभाव्ययोर्मध्ये न कापि कृतिः यथा परमापूर्वेण स्वर्गो भवतीत्यादौ तत्र भावना नास्त्येव । विद्यमानापि क्वचित् तृतीयादिर्न कारकविभक्तिरिति यत्नभावनादिना वाच्यम् । व्यापारभावनावादे तु परमापूर्वचरमक्षणसम्बन्धः स्वर्गप्रथमक्षणसम्बन्धश्चेत्येतावेव व्यापारौ सम्भवतः इति व्यापारभावनावादस्यैव युक्तत्वात् । पचतीत्यत्र यत्नरूपगुणस्य धात्वर्थानुकूलत्वेन तस्यैव भावनात्वमिति चेत्, न; पतति, स्रवति, कम्पते, इत्यादौ गुरुत्वद्रवत्ववायुसंयोगादिगुणानां तत्तद्धात्वर्थानुकूलत्वेन तेषामपि भावनात्वापत्तेः । ततश्च यत्नत्वादीनामनेकेषां शक्यतावच्छेदकत्वकल्पनेन गौरवापत्तेः । व्यापारसामान्यस्य भावनात्वे तु अखण्डोपाधिरूपस्य व्यापारत्वस्य सर्वानुगतस्यैकस्यैव शक्यतावच्छेदकत्वेन लाघवात् । गुरुत्वादिफलं पतति, द्रवत्वादयः स्रवतीत्यादिरीत्या पृथक् गुरुत्वादिपदप्रयोगाच्च तेषामाख्यातार्थत्वमिति चेत्, तुल्यमत्रापि, महता प्रयत्नेन पाकं करोतीत्यादिप्रयोगात् । "अग्निहोत्रं जुहोति" इत्यत्र स्वर्गानुकूलत्वस्य संसर्गतया भानायोगेनानुकूलत्वमपि व्यापारे विशेषणीयमिति चेत्, समानमेतद्यत्नभावनावादेऽपि । अनुकूलत्वस्यानुपस्थितौ अंशत्रयाकाङ्क्षाया एवानुदयात्, ल्युडन्तभावनापदवैलक्षण्येनाख्यातोपात्तत्वादेव यत्नस्य साध्यत्वेनोपस्थितावाकाङ्क्षासम्भवान्नानुकूलत्वं शक्यतावच्छेदककोटौ निवेशनीयमिति चेत्, तुल्यमेतद् व्यापारभावनावादेऽपि । ननु "पाके यतते" इति विवरणात् यत्नत्वावच्छिन्नार्थकत्वमेव युक्तमिति चेत्, पचति पाकं करोति इत्येव विवरणदर्शनेन तादृशविवरणस्यैवाप्रामाणिकत्वात् । ननु तथापि कृञो लाघवेन यत्न एव शक्त्यङ्गीकारात् तेन विवरीयमाणाख्यातस्यापि यत्नार्थकत्वमेव युक्तमिति चेत्, न; अचेतनेषु करणरथादिधर्मेष्वपि करोतिनिष्पन्नकारकपदप्रयोगदर्शनेन यत्नार्थकत्वासम्भवात् । कृञो यत्नार्थकत्वे सकर्मकत्वानुपपत्तेश्च । तथाहि, फलव्यधिकरणव्यापारवाचित्वं हि सकर्मकत्वम् ; पचतीत्यादौ विक्लित्त्यादिरूपफलस्य फूत्कारादिव्यापारव्यधिकरणत्वम् । फलसमानाधिकरणव्यापारवाचित्वं च अकर्मकत्वम् । 'यतते' इत्यादौ यत्नादिव्यापारजन्यफलस्य च चैत्रनिष्ठत्वेन फलसमानाधिकरणत्वात् । ततश्च कृञो यत्नवाचित्वे यततिवत् अकर्मकत्वापत्तिः स्पष्टैव । अपिचाख्यातस्य यत्नार्थकत्वे समभिव्याहारमन्तरेणापि आख्यातेन निवृत्तियत्नबोधापत्तिः । किञ्च, "पश्य मृगो धावति" इत्यादौ धावनकृतेर्मृगनिष्ठाया दर्शनकर्मत्वान्वयानुपपत्तेर्न कृतिवाचिताख्यातस्य । व्यापारभावनापक्षे च मृगनिष्ठक्रियाया दर्शनकर्मत्वान्वयसम्भवान्नानुपपत्तिः । राणके कृत्यर्थकत्वोक्तिस्तु भवनानुकूलव्यापारत्वेन रूपेण कृत्यर्थकत्वाभिप्रायेणेति न तद्विरोधोऽपि । तस्मात् व्यापारसामान्यं भावनेति युक्तमेवेति । इयं च धात्वर्थातिरिक्तत्वेन सिद्धा, भावना, आख्यातोपात्ता, मुख्यविशेष्या । शब्दप्रतिबोध्यत्वाच्च भावनायाः सांसर्गिकी विषयतेति । तत्रापि प्रत्ययगम्यत्वाद्विशेष्यता रूपा । तत्रापि आख्यातगम्यत्वान्मुख्यविशेष्यतात्मिका, प्रकारतानात्मिका । अत एव ल्युडन्तपदोपात्ताया न विशेष्यत्वम् । क्त्वाप्रत्ययोपात्तायाः कतिपयकारकविशेष्यत्वेऽपि न मुख्यविशेष्यत्वमित्याशयः । ननु चैत्रः पचतीत्यादौ प्रथमान्तार्थमुख्यविशेष्यकशाब्दबोधस्यैवानुभवसिद्धतया कथं भावनाया मुख्यविशेष्यत्वमिति चेत्, न; लाघवेन तस्या एव मुख्यविशेष्यत्वात् । तथाहि प्रथमान्तार्थमुख्यविशेष्यकबोधाङ्गीकारे आख्यातार्थकृतिप्रकारकशाब्दबुद्धित्वावच्छिन्नं प्रति प्रथमान्तपदजन्योपस्थितेः, धात्वर्थप्रकारकशाब्दबुद्धिं प्रत्याख्यातजन्योपस्थितेः, तिङेकवचनार्थकत्वादिप्रकारकशाब्दबोधं प्रति प्रथमान्तपदजन्योपस्थितेः, लडाद्यर्थवर्तमानत्वादिप्रकारकशाब्दबोधं प्रति धातुजन्योपस्थितेः, आख्यातजन्योपस्थितेर्वा, गुर्वर्थकरणत्वादिप्रकारकशाब्दबोधबुद्धिं प्रति धातुजन्योपस्थितेः, 'न पचति' इत्यादावाख्यातार्थप्रकारकशाब्दबुद्धिं प्रति नञ्पदजन्योपस्थितेः, नञर्थप्रकारकशाब्दबोधं प्रति प्रथमान्तपदजन्योपस्थितेश्च कारणत्वं कल्पनीयमित्यनेककार्यकारणभावकल्पनापत्त्या अतिगौरवम् । भावनाया मुख्यविशेष्यत्वे च सर्वेषां पदार्थानां तस्यामेवान्वयस्वीकारेण पदार्थप्रकारकबोधं प्रत्याख्यातजन्योपस्थितेः कारणत्वमित्येककार्यकारणभावस्यैव कल्पने लाघवात् । "तद्भूतानां क्रियार्थेन समाम्नायः" "भावनाप्रधानमाख्यातम्" इति जैमिनिपाणिन्यनुभववत् गौतमकणादाद्यनुभवादर्शनाच्च । अधिकं भाट्टरहस्ये ज्ञेयमिति दिक् ।

एवंच, आख्यातोपात्तभावनामुख्यविशेष्यताव्यतिरेकेणेतरपदार्थान्वयापर्यवसानमेव । 'देवदत्तः काष्ठैः स्थाल्यामोदनं पाकेन करोति' इत्यत्र करोत्यन्वयमन्तरेणेतरपदार्थानां निराकाङ्क्षत्वाभावेन करोत्यर्थस्य प्राधान्यावगमात् । न च करोतेरपीतरपदार्थान्वयं विना पर्यवसानाभावस्तुल्य इति वाच्यम्; करोत्युपस्थितायामाख्यातेऽपि प्रत्ययोपस्थितायाः भावनायास्तिङ्-

न्तपदोपस्थितैरेवार्थैः पाककरणिका इष्टभाव्यिका एककर्तृका भावना इति बोधपर्यवसानात् । "प्रकृतिप्रत्ययौ प्रत्यार्थं सह ब्रूतः" इति स्मृत्या प्रकृत्यर्थस्य "भावप्रधानमाख्यातम्" इति स्मृत्या सङ्ख्यादिप्रत्ययार्थानां च भावनां प्रति विशेषणत्वबोधनेन भावनाया एव सर्वतः प्राधान्योक्तेः । "को धातुः, किं प्रातिपदिकम्, किं नामाख्यातम्" इति गोपथब्राह्मणे षट्त्रिंशत्प्रश्नोत्तरखण्डे धातोः पार्थक्येनाख्यातगणनयाख्यातपदस्य तिङ्मात्रपरत्वनिश्चयात् । न च "सर्वमाख्यातजं नाम" इति यास्कस्मृतौ धातुपरत्वमुक्तम्; तथा 'येषां तु' इति प्रकृताधिकरणसूत्रे तान्याख्यातानीति तिङ्परत्वमुक्तमिति तद्विरोध इति वाच्यम्; तस्य लक्षणयाऽप्युपपत्तेरित्याशयात् । एवं च, तस्यामेव चाख्यातोपात्तायां क्त्वाप्रत्ययाद्युपात्तायां वा योग्यतायनुसारेण निपातोपसर्गप्रातिपदिकातिरिक्तशब्दगम्यो यः सुबुपात्तलिङ्गसङ्ख्याव्यतिरिक्तोऽर्थस्तस्य सर्वस्यापि प्रकारतयान्वयः । निपातोपसर्गयोस्तु क्रियासमभिव्याहारादौ सति क्रिययान्वयः । अन्यसमभिव्याहारादावन्येनापि । प्रातिपदिकार्थोऽपि सुबर्थे करणत्वादौ । तद्धितसमासादिखण्डप्रातिपदिकावयवार्थानां तु यत्र कारकतासम्बन्धेन तद्धितसमासादिवृत्तिः, यथा आग्नेय इत्यादौ, तत्र, अग्नेर्देवतात्वात् भावनायामेवान्वयः, न तु तद्धितोपात्ते द्रव्ये । स तु पार्ष्ठिक एव । यत्र कारकातिरिक्तसम्बन्धेन सा, तत्र परस्परान्वयोऽपि । यथा अश्वाभिधानीमित्यादौ । एवं सुबुपात्तलिङ्गसङ्ख्ययोः समानाभिधानश्रुत्या सुबर्थे करणत्वादावेवान्वयः । तद्व्यतिरिक्तपदार्थमात्रस्य तु सुबर्थकरणत्वादेर्धात्वर्थस्य कर्तुस्तदेकत्वस्य कालादेर्लिङाद्यर्थस्य च विध्यादेः सर्वस्यैव लिङानन्वयिभावनावाचिपदोपस्थाप्यायां भावनायामेवान्वयः । अतएव भावनापदोपस्थापितायां तस्यां नान्वयः । आख्यातेन क्त्वादिना वोपस्थितायां तु भवत्येवान्वयः प्रकारतया । प्रकारताघटकाः सम्बन्धाश्च सर्वे यथायथं पार्ष्ठिकान्वयबोधवेलायामेव गम्यमानाः कौस्तुभ एव द्रष्टव्याः । तस्मात् सिद्धा आख्यातवाच्या आर्थी भावना । तस्यां च स्वर्गादि भाव्यम् । धात्वर्थश्च करणम् । सोमादिकं तु करणानुग्राहकत्वादितिकर्तव्यतेति सिद्धम् ॥

**श्रीमद्वल्लभाचार्यचरणानां** मते तु—"भावार्थाः कर्मशब्दास्तेभ्यः क्रिया प्रतीयेतैष ह्यर्थो विधीयते" इत्यनेन, सिद्धावस्थापन्नधात्वर्थाभिधायकानां नामपदानां क्रियाप्रत्यायकत्वम् । न च तत्र भावार्थपदेन भावनार्थो इत्येवोच्यत इति वाच्यम्; तथा सति कर्मशब्दवैयर्थ्यापत्तेः । भावार्थैः क्रिया प्रतीयेतैतावतैव चारितार्थ्यात् । तथा "सर्वेषां भावोऽर्थ इति चेत्" इत्यग्रिमसूत्रं च न वदेत् । क्रियाबोधकाख्यातपदानां भावनार्थत्वस्य सार्वजनीनत्वेन सर्वेषां भावोर्थ इति सन्देहस्यैवानुदयात् । तथा अग्रिमसूत्रद्वये क्रमेण नाम्नां पुरुषानपेक्षक्रियाप्रतिपादकत्वम्, आख्यातानां तु पुरुषापेक्षक्रियाप्रतिपादकत्वमिति विभागं च न कुर्यात् । साध्यैकस्वभावक्रियावादे पुरुषानपेक्षक्रियाया एवाभावात् । किंच यागादिधर्मरूपा क्रिया यदि सर्वदा साध्यावस्थैव स्यात्, न कदापि सिद्धावस्था, तदा तन्निष्पत्तेः कदाप्यभावाच्चोदनापि वेदस्य सिद्धार्थपरतैवाभिप्रेता । एवं च, "भावार्थाः क्रियाशब्दास्तेभ्यः क्रिया प्रतीयेतैष ह्यर्थो विधीयते" इति सूत्रं न सर्वेषु धर्मोऽपि तु केषुचिदेव पदेषु इत्यत्र हेतुनिर्णयाय प्रवृत्ते । अस्यार्थः, क्रियावाचिनां धातुत्वानुशासनात्सर्वधातुष्वनुगतरूपं यत्क्रियासामान्यं स भावः, सोऽर्थो विधेयो येषां ते भावार्थास्तादृशा ये शब्दास्ते कर्मवाचका इत्यर्थः । इदमेवानुगतं क्रियासामान्यमिति भाष्यम् । तथा च यजत्यादयो धातुत्वेन रूपेण क्रियासामान्यं यजतित्वादिना प्रतिनियतरूपेण क्रियासामान्यव्याप्यं यागसामान्यरूपं विशेषं प्रतिपादयन्तीत्यर्थः पर्यवसन्नः । ननु किं क्रियया रूपद्वयनिरूपणेन पूर्वोक्त एवार्थोऽस्तु सूत्रस्येति चेत्, न; पुरुषक्रियामात्रस्य धर्मत्वाभावात् वेदैकसमधिगम्यातीन्द्रियस्थिरयागस्यैव धर्मत्वात् । स्थिरत्वस्य च यजतिना यागसामान्यबोधन एव सम्भवात् सामान्यस्य च नित्यत्वात् । अतो रूपद्वयनिरूपणस्यावश्यकत्वात् । ननु क्रिया प्रत्यक्षा यजतीति प्रत्ययाभिलापयोः क्रियाविशेषं कुर्वाणं दृष्ट्वैव सम्भवादतीन्द्रियत्वं कथमिति चेत्, न; द्रव्यदेवतासम्बन्धो हि यागः । चतुर्थाध्याये "यजति चोदना द्रव्यदेवताक्रियं समुदाये कृतार्थत्वात्" इति सूत्रे द्रव्यदेवताक्रियासमुदायस्य तल्लक्षणत्वात् द्रव्यदेवते यागस्य रूपमिति आमिक्षाधिकरणे सिद्धत्वाच्च तयोश्च सम्बन्धः प्रीतिहेतुत्वेन स्वीकारः "देवान् भावयतानेन ते देवा भावयन्तु वः । परस्परं भावयन्तः श्रेयः परमवाप्स्यथ" इति वाक्यात् । स च देवताया अतीन्द्रियत्वात्परात्मधर्मत्वाच्चातीन्द्रिय इति । न च देवता यजतीति प्रयोगापत्तिः, तादृशस्वीकारस्य देवनिष्ठत्वादिति वाच्यम्; तादृशव्यापारस्य फलत्वेन कर्मनिष्ठत्वात् । तेन देवदत्तो यजतीति प्रयोगानापत्तिरपि दत्तोत्तरा । ऋत्विजो यजन्तीति त्विष्टमेव योधा युध्यन्तीतिवत् । प्रैषे होतर्यजेति प्रयोगात् । अतः फलरूपो यागोऽतीन्द्रियः "चातुर्होत्रं च सत्तम" इति क्रियायाः पुरुषावयवेषु गणनाच्च । ननु देवतोद्देशेन द्रव्यत्याग एव यागोऽस्तु अग्नय इदं न ममेति त्यागवाक्यपुरोभ्युदानस्यापि यजत्यर्थत्वाच्चेति चेत्, न; परस्वत्वापादनरूपदानस्याप्यतीन्द्रियत्वात् । लोकप्रयोगस्तु न तादृशः, शास्त्रत्वभावात् । न च "व्रीहीनवहन्ति" "अग्नीषोमीयं पशुमालभेत" इत्यादिक्रियाणां प्रत्यक्षत्वादेतद्दृष्टान्तेन यागोऽपि प्रत्यक्षो भवत्विति वाच्यम्; मन्त्रैरुच्चावघातो, देवपत्न्यश्च कर्त्र्यः, लौकिके "हविष्कृदेहि" उभौ हि वै देवानां शमितारौ" इत्यादिभिरुदाहरणादतीन्द्रियत्वात् । फले सम्पन्नेऽलौकिकक्रियायाः कर्तुश्च तिरोभावः । न च नार्हति स्वीकारो नित्यो भवितुं द्रव्यस्य व्रीह्यादेरनित्यत्वेन तज्जन्यहोमोत्तरभवितव्यादिति वाच्यम् । "अपश्यन् पुरोडाशं कूर्मं भूत्वा सर्पन्तम्" इत्यर्थवादेषु प्रत्यक्षालौकिकत्वकथनात् । किंच पुरुषसूक्तविवरणाध्याये "इति सम्भृतसम्भारः पुरुषावयवैरहम् । तमेव मखं

पुरुषं येनैवायजमीश्वरम्" इति वाक्याद्द्रव्यादीनामलौकिकत्वं निराबाधम् । "यज्ञेन यज्ञमयजन्त देवाः" इति
श्रुतेश्च । ते प्रोक्षणादिसंस्कारैरिदानीं लौकिकेषु द्रव्यादिषु सन्निधाप्यन्ते, मूर्तौ देववत् । लौकिकैरेव याग-
निष्पत्तौ तु संस्कारा व्यर्थतां गच्छेयुः । अतो ये क्षणिकत्वमदृष्टं वा कल्पयन्ति ते न यागपदार्थं विदुः ।
अतः परमेष पुरुषार्थो विधीयत इति सूत्रशेषार्थः । एष योऽतीन्द्रियत्वादिधर्मवान् सोऽर्थः । लौकिकस्तु संसारहेतुत्वादनर्थ
इत्यर्थः । स्थिरत्वेन विद्यमानत्वादेव विधीयते चोदनया पुरुषः प्रवर्त्यते, तत्र, प्रलये तु "स्वाभाविकी ज्ञानबलक्रिया च" इति
श्रुतेर्नित्यक्रियया ईश्वरत्वेन तन्निष्ठता, तेन धर्मनित्यत्वादिना नित्यत्वादिजातौ पदशक्तिरङ्गीकार्या । सा च धर्म इति तत्स्थि-
त्यर्थं धर्मिणः प्रावाहिकी सत्ताभ्युपगन्तव्या । अहोरात्रन्यायेन कल्पस्य कल्पपूर्वकत्वात्तद्रात्रिरूपे प्रलये सर्वनाशात् । ये पुन-
र्जीवन्ति ते स्वापाद्य क्रियाप्रवाहोपरमे तस्या जातेरनाधारत्वापत्त्या कालादौ तत्स्थितिर्निराधारत्वं वा कल्पनीयम् । शाब्दबो-
धसमये च नित्याया आक्षेपलभ्यत्वं कल्पनीयम्, कर्मवर्णनादिश्रुतीनां च स्वार्थे तात्पर्यराहित्यं कल्पनीयमिति वरं धर्मनित्य-
त्वमित्यलम् । उक्तेऽर्थे शङ्कते सर्वेषां भावोऽर्थ इति चेत्, यदि भावार्थेभ्य एव धर्मः प्रतीयत इत्युच्यते तदा सर्वे शब्दा
भावार्थाः क्रियावाचकाश्च सर्वे धातुजाः । कृत्प्रत्ययेन च भावोऽभिधीयत इतीत्यर्थः । न सर्वे शब्दा धर्मवाचका धर्मस्य पुरु-
षार्थत्वात् । भावार्थशब्दैर्नामभिस्तु धर्मः प्रत्याय्यते, परन्तूदासीनतया, नतु पुरुषार्थतया, अतो धर्मप्रमितिसम्पादने भावार्थ-
धर्मशब्दत्वमेव न प्रयोजकं किन्तु पुरुषस्यापेक्षापत्तिः सापेक्षानपेक्षविभागं वदन्परिहरति येषां तदुत्पत्तौ स्वे प्रयोगे रूपोपलब्धि-
स्तानि नामानि तस्मात्तेभ्यः पराकाङ्क्षा न भूतत्वात्स्वे प्रयोगे, स्व इति षष्ठ्यर्थसप्तम्यन्तं स्वीयत्वेनार्थवाचि । तथा च येषां
शब्दानामर्थस्योत्पत्तौ सत्यां प्रयोगकाले रूपोपलब्धिर्जायते तानि नामानि । निरुक्ते नामाख्यात इत्यादिशब्दविभागवचनात् ।
अतः स्वयं नमन्ति कारकतया क्रियाशेषा वाक्ये भवन्ति नामयन्ति स्वार्थमाख्यातं प्रति, स्वार्थमाख्यातार्थप्रयोजनाय शेष-
भूतं कुर्वन्तीति नामसंज्ञा तेषां शब्दानामर्थस्य परार्थत्वज्ञापिका । अतः परार्थत्वेन स्वातन्त्र्याभावाद्वाक्यार्थबोधावसरे नामभ्यो
धर्मः पुरुषार्थतया न प्रमीयत इत्ययमर्थो नामशब्दार्थकथनेन बोध्यते । तच्छ्रवणानन्तरं पुरुषाकाङ्क्षा न भवति । यथा पच-
तीत्युक्ते क इत्याकाङ्क्षा, न तथा घट इत्युक्ते, नापि पाक इत्युक्ते । अतःपरं 'भूतत्वात्स्वे प्रयोगे' इति सूत्रांशः स्वप्रयोगकाले
भूतत्वात् सिद्धत्वादित्यर्थः । अतस्तन्निष्पादनार्थं न पुरुषापेक्षेति भावः । तथाच नामभ्योऽनपेक्षत्वेन स्थिरत्वेन धर्मप्रमितावपि
पुरुषार्थत्वेन न प्रमीयत अतो भावार्थकर्मशब्दत्वं तत्स्वरूपप्रमित्युपयोग्येव न तु पुरुषार्थरूपत्वघटिततत्प्रमित्युपयोगीति सिद्धम् ।
येषां तूत्पत्तावर्थे स्वप्रयोगो न विद्यते तान्याख्यातानि, तस्मात्तेभ्यः क्रिया प्रतीयेताश्रितत्वात्प्रयोगस्य । यथा नामभ्यः पुरु-
षार्थत्वेनाप्रवृत्तिस्तथाख्यातेभ्योऽपीति शङ्कां वारयति तु शब्दः । उत्पत्ताविति सतिसप्तमी आनन्तर्यं ज्ञापिका । अर्थ इति
विषयसप्तमी । स्वप्रयोग इति शब्दप्रयोगः । तथा चायं सूत्रार्थः, येषां शब्दानामर्थोत्पत्त्यनन्तरमर्थे प्रयोगो न विद्यते, अर्थ-
प्रदर्शने प्रयोगो न विद्यते, यथाऽयं घट इति, उत्पत्तिसमये प्रयोगो नात्र निषिध्यते तेषामाख्यात इति संज्ञा, यैर्धर्म आख्या-
यत इति ज्ञापनार्थम् । तस्मादविद्यमानार्थत्वात्स्वनिष्पत्त्यर्थं पुरुषाकाङ्क्षया विद्यमानत्वात्तेभ्यः पदेभ्यो धर्मः कर्तव्यत्वेन प्रती-
येत । किञ्चाश्रितत्वात्प्रयोगस्येति प्रतीतौ हेत्वन्तरम् । प्रयोगो ह्यनुष्ठानं तत्पुरुषाश्रयं भवति । पुरुषप्रयत्नव्यतिरेकेण धर्मो न
निष्पद्यते । आख्यातार्थश्च भावना, उत्पादनात्मिका क्रिया, पुरुषधर्मः । अतः स्वनिष्पत्त्यर्थं पुनः पुनः प्रयोगार्थं च पुरुषोऽपे-
क्ष्यत इति पुरुषार्थो धर्मस्तेभ्यः प्रतीयत इत्यर्थः । नामभ्यस्त्वौदासीन्येनेत्युक्तम् । एवमाख्यातस्य धर्मप्रत्यायकत्वे सिद्धे,
आख्यातविशेषो लिङ् तदर्थं प्रवर्तकत्वं वदन् चोदनालक्षणोऽर्थो धर्मः इति पूर्वमुक्तं तत्र चोदनास्वरूपमाह "चोदना पुन-
रारम्भ" इति । नन्विदमधिकरणान्तरं पूर्वशेषत्वात् विषयान्तरादर्शनाच्च । चोदना तु प्रथमतः प्रवृत्तिजनकत्वादारम्भ
इत्यर्थः । पुनःशब्दो हि त्वर्थः । चोदना हि प्रवर्तकं वाक्यं तेन चाख्यातपदोक्ता भावना विधीयते, अयं मां प्रवर्तयतीति
प्रेरणया नियोज्ये प्रवृत्तिरूपारम्भजननात् । तथाच विधेयत्वेन चोदनाविषयोऽर्थो धर्म इति । अतस्तस्य वाक्यस्य धर्मत्वज्ञाप-
कत्वमतो भावार्थः कर्मशब्दैर्योगो दानं होम इत्यादिभिर्यथासिद्धत्वेन धर्मः प्रतिपाद्यते, यथाचाख्यातैर्विशेषणत्वे यागेन भाव-
येदिति यजेतेत्यस्यार्थात् । तथानेन वाक्येन विशेष्यत्वेन धर्मो न प्रतिपाद्यते, पुरुषविशेषणत्वेनैव धर्मप्रमितिः विशेषणं चौदा-
सीन्यच्युत्या आरम्भः पुरुषविशेषणं पुरुषधर्मस्तन्निष्ठ इति यावत् । आरम्भस्तद्योग्यो धर्म इति पुरुषविशेषणमारम्भ इति । स
च निष्पादनार्थं प्रवृत्तिरित्येतावान् लिङर्थे विशेषः । न च प्रवर्तकवाक्यस्य धर्मत्वज्ञापकत्वे धर्माज्ञापकत्वादव्याप्तिर्लक्षणे
शङ्क्या; आरभ्यत्वेन धर्मप्रमितेरपि भवनात् । नन्वाख्यातत्वाविशेषेऽपि लिङर्थे विशेष इत्यत्र को हेतुरिति चेत्, मैवम्;
यथाख्यातानां भावनालक्षणः क्रियारूपोऽर्थनिष्ठो व्यापारोऽभिधेयस्तथा लिङोऽभिधानलक्षणः, अहं कर्म भावयेत्, कर्मणा फलं
भावयेत् इति पूर्वापरीभावापन्नः शब्दनिष्ठो व्यापारोऽभिधेयः । तादृशेन शब्दनिष्ठव्यापारेण पुरुषः कर्मणि प्रवर्तेत इति तस्य
पुरुषे प्रेरणासम्बन्ध इति । न चात्र विप्रतिपत्तव्यम् । लोके घटमानय इत्यादिशब्दश्रवणानन्तरभाविन्यां प्रवृत्तौ अयं मां
प्रवर्तयतीति प्रतीतेस्तदनुरोधेन वेदेऽपि तथा कल्पनात् । न चैवं "एष ह्येव साधु कर्म कारयति" इति श्रुत्युक्तमीश्वरस्य
प्रवर्तकत्वं कथं घटत इति शङ्क्यम्; ईश्वरः प्रवर्तयतीति मतं शास्त्रानुसारीति लौकिकानां दृष्टे विश्वस्तानामत्र सम्मुखीकरणा-
र्थत्वात् । अतोऽस्मिन्नधिकरणे सिद्धावस्थापन्नधात्वर्थरूपक्रियात्मको धर्म उदासीनो नामपदेभ्यः प्रतीयते, साध्यावस्थापन्नधा-

१ ब्रह्मसूत्र०

"प्रजापतिरकामयत प्रजायेयेति स एतदग्निहोत्रं मिथुनमपश्यत्।" "प्रजापतिर्यज्ञानसृजताग्निहोत्रं चाग्निष्टोमं च पौर्णमासीं चोक्थ्यं चामावास्यां चातिरात्रं च तानुदमिमीत यावदग्निहोत्रमासीत्तावानग्निष्टोमः" ( तै. सं. १ ) इत्यादि। न

---

ननु सर्वस्य सिद्धार्थत्वे यज्ञे प्रवृत्तिरूपयत्नबोधकवाक्यानां लिङ्गादिघटितानां निरर्थकत्वमत आहुः—**सिद्धतुल्यत्वमिति**। सिद्धितुल्यत्वमित्यपपाठः। "यजेत स्वर्गकामः" इत्यादिवाक्यानां लिङ्बोध्यकृतेरपि यज्ञरूपसिद्धवदर्थसम्पादकत्वेन क्रीडेच्छा व्यापारत्वेन च सार्थकत्वमिति भावः। इदं च सर्वं कृतप्रयत्नापेक्षेति ( २–३–४२ ) सूत्रे वक्ष्यते। **वेदः स्वार्थे**। वाक्यरूपो वेदः शक्त्या लक्षणया वा तत्स्वार्थे **सम्मतः**, प्रमाणीभूतः। सन्मत इत्यपपाठः। **च**कारेणार्थवादवाक्यानां लक्षणया प्राशस्त्यार्थे प्रमाणीभूतत्वं वेदस्य बोध्यम्। तेन च पूर्वकाण्डे यज्ञे, उत्तरकाण्डे ब्रह्मणि तात्पर्यात्, सिद्ध एव हि सर्वत्र वेदार्थ इति सिद्धम्।

यस्यां श्रुतौ दर्शनश्रवणं तादृशश्रुतिमाहुः—**प्रजापतिरिति**। **अपश्यदिति**। सिद्धस्यैव दर्शनम्। द्वितीयश्रुतौ **उदमिमीतेति**। कर्मणः सिद्धत्व एवोन्मानसम्भव इति बोध्यम्। पूर्ववदुपाख्यानस्य मिथ्यात्वं

---

स्वर्थः क्रियात्मकः पुरुषापेक्षः पुरुषार्थरूप आख्यातेभ्यः। तत्रापि लिङंशेनारभ्यतया। अतः पुरुषार्थतया तदारभ्यतया च प्रतीतिजननादाख्यातपदानि भजन्ते प्रमितिजननेन मुख्यताम्। नामपदानि तु सिद्धतद्बोधकतया तदुपकारकाणीति सिद्धम्॥

१ अर्थवादानां विधेयस्तावकत्वेनार्थवादाधिकरणे प्रामाण्योक्तेरपि सिद्धार्थबोधकता, नतु प्रतारकता। यदि हि बालातुराद्युपच्छन्दनवदर्थवादानां स्तावकत्वमभिप्रेयात्, आमुष्यं तेषां न ब्रूयात्। तदुपच्छन्दनस्य प्रतारणारूपत्वात्। ननूपच्छन्दनस्य फलांश एव प्रतारणरूपत्वम्, न प्रवर्तनांश इति, न तत्रेवात्रापि दोष इति चेत्, न; स्वर्गादिरूपफलस्याप्रत्यक्षत्वेन विधिवाक्योक्तफलांशेऽपि तथात्वप्रसङ्गात्। अत उपाख्यानानां मिथ्यार्थकथनं ताथागतानां ( बौद्धानां ) वासनावलम्बनमेव। न च "परोक्षवादो वेदोऽयं बालानामनुशासनम्। कर्ममोक्षाय कर्माणि विधत्ते ह्यगदं यथा" इति, "फलश्रुतिरियं नृणां न श्रेयो रोचनं परम्। श्रेयोविवक्षया प्रोक्ता यथा भैषज्यरोचनम्" इति च पुराणवाक्यादुपच्छन्दनन्यायेन मिथ्यात्वमाद्रियत इति वाच्यम्; तत्रैवमर्थाभावात्। सर्वथा सन्मार्गविमुखानां नानाकामानां सहसा धर्मामिश्चर्यां विलोक्य तांस्ततो निवर्तयितुं स्वर्गादिरूपं कुसुमं तदिति तत्र मिथ्यात्वगन्धस्यापि वक्तुमशक्यत्वात्। "फलश्रुतिं कुसुमितां न वेदज्ञा वदन्ति हि" "पुष्पेषु फलबुद्धयः" इत्यादिवाक्यैस्तथा निश्चयात्। अतस्तत्र विश्रान्त्या मायावादेन वा ये भ्रान्तास्तेषामेव वेदार्थे तथामानम्, न वेदवादिनामित्यर्थवादा अपि स्वार्थप्रमितिं जनयन्त एव स्तावका इति निश्चेयम्। किञ्च, अग्निहोत्रमिथुनदर्शनोत्तरं पठ्यते "तदुदिते सूर्येऽजुहोत्" "यस्यैवं विदुष उदिते सूर्येऽग्निहोत्रं जुह्वति प्रैव जायते" इति। उन्मानानन्तरं च पठ्यते, "य एवं विद्वानग्निहोत्रं जुहोति यावदग्निष्टोमेनोपाप्नोति" इति। एताभ्यां च विद्वद्वाक्याभ्यामर्थवादश्रावितार्थविषयकज्ञानस्य फलाङ्गता बोध्यते। यदि स उपच्छन्दनाय मिथ्या श्रावितः स्यात् ततो विद्वद्वाक्यमपि मुधा स्यात्। एवं "गो अश्वा एव पशवोऽन्ये त्वपशवः" "आदित्यो यूपः" इत्यादावपि। त्रयः पशवोऽश्वहस्त्यादानाः पुरुषो हस्ती मर्कटः पशुपतिः पशूनां चतुष्पदामुत च द्विपदामित्यादिश्रुत्यन्तरेऽन्येषां पुरुषादीनामपि पशुत्वश्रावणात्तद्विरोधेनापशव इत्यत्र पशुपदगौण्या उचितत्वात्। एवमादित्यो यूप इत्यादिपूज्ञेयम्। सच्चिदानन्दरूपयूपस्य संस्कारेण चित्प्राधान्यात्। इदानीन्तनानां सर्ववेदादर्शितत्वात्। मिथ्यात्वकथनाच्च सर्वस्य वेदस्य प्रामाण्यमपि विलुप्येत। अतस्तदभावाय सत्यार्थकथनेनैवोपच्छन्दनमुपगन्तव्यम्। तेन श्रुतिपुराणयोरुभयोरपि सामञ्जस्यात्। ततः कर्मादिदर्शनश्रुतीनां स्वार्थे प्रामाण्यमकलङ्कमिति पूर्वकाण्डस्यापि सिद्धार्थपरत्वमेव। न च जुहुयात् यजेतेत्यादीनां साध्यकृतिबोधकपदानां व्याकोपः। सिद्धस्य कर्मणः प्रकारज्ञानपूर्वकं करणे फलसम्बन्धं बोधयता विद्वद्वाक्येनातिदेशविध्या कृतेः सिद्धतुल्यत्वेन साध्यकृतिव्यञ्जकस्य सिद्धस्यैव धर्मस्य तत्र विवक्षिततया बोलोपच्छन्दनायोक्ते स्वार्थे तात्पर्याभावनिश्चयात्। एकत्र दृष्टः शास्त्रार्थोऽपरत्रापि तथेति न्यायेन सिद्धवाक्यशून्यस्थलेऽपि तथावसानाय। अतः पूर्वकाण्डस्य साध्यार्थपरत्वमयुक्तमेव। उत्तरकाण्डस्य तु ज्ञानादिप्रतिपादकत्वेऽपि ज्ञानोपासनादीनां विषयभूतब्रह्मैव स्वरूपलाभेन ज्ञानादेर्ब्रह्मण एव प्राप्यतया फलत्वेन च तस्यैव शेषित्वम्। पूर्वकाण्डोक्तफलस्यापि "एतस्यैवानन्दस्यान्यानि" इति श्रुतेस्तदंशत्वात्। धर्मफलार्थत्वादिति न्यायात्। इदं फलत्वमप्युपाख्यानगम्यमिति।

ख्युपाख्यानानां मिथ्यार्थत्वं बुद्धजन्मनः पुरोक्तं युक्तं वा; तथा सति वेदानामप्रामाण्यमेव स्यात्। मिथ्योपाख्यानप्रतिपादकलोकवत्। तस्मात् पूर्वमीमांसानभिज्ञाः क्रियापरत्वं सर्वस्यापि वेदस्य वदन्तो मूर्खा एव। उत्तरवादिनोऽपि पूर्वाज्ञानमङ्गीकृत्य पूर्वानुपयोगित्वं वेदस्य ब्रह्मज्ञानस्य वदन्तो वेदानभिज्ञाः। "यदेव विद्यया करोति श्रद्धयोपनिषदा वा तदेव वीर्यवत्तरं भवति" (छां. १।१।१०) इत्युपनिषज्ज्ञानस्य श्रुतिसिद्धैव कारणता। न च बाधितत्वात्त्यज्यत इति वाच्यम्, ब्रह्मात्मज्ञानवत एव वसिष्ठादेर्यज्ञाधिकारात्। न चैवं किमनेनेति वाच्यम्, इत्थम्भूतत्वाद्यज्ञस्य। किञ्च, कर्मफलवद्ब्रह्मफलस्यापि लौकिकत्वात्–"य एवं वेद प्रतितिष्ठति। अन्नवानन्नादो भवति। महान् भवति। प्रजया पशुभिर्ब्रह्मवर्चसेन। महान्कीर्त्या" (तै. ३।६.) इति। अत्यन्ताविद्यावतो यज्ञानधिकारात्तन्निषेधार्थं ज्ञानमुपयुज्यते। न च देहाध्यासस्य कारणत्वम्। "ब्रह्मार्पणं ब्रह्महविः" (भ. गी. ४।२४) इत्यादि-

---

खण्डयन्ति–न हीति। बुद्धजन्मनः बौद्धावतारस्य। सम्मतमिति शेषः। पुरोक्तम्। पुराणेष्वासुरव्यामोहार्थं कृतमित्युक्तम्। वेति। न हीति पूर्वेणान्वयः। सिद्धार्थे उपसंहारमाहुः—तस्मादिति। अयं भावः। क्रिया द्विविधा, सिद्धा, साध्या च। तत्र नामवाच्या पुरुषानपेक्षासिद्धावस्थापन्ना क्रिया, यथा पाकपदवाच्या, तिङन्तवाच्या, पुरुषापेक्षक्रिया साध्यावस्थापन्ना, यथा पचतीति पदवाच्या, उक्तं च वैय्याकरणभूषणे–"साध्यत्वेन क्रिया यत्र धातुरूपनिबन्धना, सिद्धभावस्तु यस्तस्याः स घञादिनिबन्धनः"। लक्षणमपि तत्रैवोक्तं "क्रियान्तराकाङ्क्षोत्थापकतावच्छेदकत्वं सिद्धत्वम्, क्रियान्तराकाङ्क्षोत्थापकतानवच्छेदकत्वं साध्यत्वम्। एवं च प्रकृते सर्वस्य पूर्वकाण्डस्य सिद्ध एव यज्ञरूपोऽर्थः। सिद्धस्यैव दर्शनं श्रुतौ प्रतिपादित्वात् मन्त्राणां कर्मणां च तदङ्गत्वम्। अर्थवादवाक्यानामपि स्तावकत्वेन तदङ्गत्वम्। तथा च पूर्वकाण्डं यज्ञपरं, उत्तरकाण्डं च ब्रह्मपरमिति रीत्या पूर्वपक्षासङ्गतिर्बोध्या। पूर्वपक्ष्याशयस्तु सर्वस्य वेदस्य लिङर्थप्रेरणापरत्वं प्रेरकत्वं च, उभयत्रापि यजेत, आत्मेत्येवोपासीतेति लिङ्घटित वाक्यश्रवणात्, अर्थवादमन्त्रादिवाक्यानां विध्येकवाक्यतया प्रामाण्यम्। एवं च यज्ञे उपासनायां च प्रवत्तिरूप क्रियाया एव मुख्यतया प्रतिपादकत्वं सर्वस्य वेदस्य न तु ब्रह्मप्रतिपादकत्वमिति। प्रकृतमनुसरामः। एतादृशपूर्वपक्ष्याश्रयं स्वीकृत्यैव यैः सिद्धान्तितं तदसङ्गतिमाहुः—उत्तरेति। पूर्वानुपयोगित्वमिति। यज्ञानुपयोगित्वमित्यर्थः। ब्रह्मज्ञानस्य वदन्त इति। वेदान्तभागस्य धर्मप्रतिपादकमस्तु वा मा वा परन्तु ततः शुद्धबुद्धमुक्तस्वभावब्रह्मात्मावगतौ सत्यामविद्याजनितक्लेशनिवृत्तौ तस्य सार्थक्यमिति वदन्त इत्यर्थः। छान्दोग्यश्रुत्युपपादनेन वेदानभिज्ञत्वं साधयन्ति—यदेवेत्यादि प्रवृत्तिरित्यन्तम्। कारणता, सहकारिकारणता। उपनिषदर्थज्ञानेनाविद्यानिवृत्तौ यज्ञे प्रवृत्त्यभावात्सहकारिकारणताया बाध इत्याशयेनाशङ्कते—न चेति। उत्तरयन्ति—ब्रह्मेति। शङ्कते—न चेति। किमनेनेति। ब्रह्मज्ञानेनैव सर्वसिद्धौ यज्ञकरणरूपाग्रहेण किमित्यर्थः। उत्तरयन्ति—इत्थम्भूतत्वादिति। "यज्ञो वै विष्णुरि"ति श्रुत्या विष्णुरूपयज्ञस्य इत्थम्भूतत्वं नाम एतादृशब्रह्मज्ञानवता क्रियमाणे यज्ञे आविर्भूतत्वम्। तथैव पुराणेषु श्रूयत इति भावः। ननु श्रुतौ कर्मफलश्रवणात् लौकिकफलमुद्दिश्य कर्मणि प्रवृत्तिर्ब्रह्मज्ञस्यानुचितेत्यत आहु–किञ्चेति। ब्रह्मफलस्यापि। ब्रह्मज्ञानफलस्यापीत्यर्थः। अत्र श्रुतिसम्मतमाहुः—य एवं वेदेति। भृगुप्रपाठकस्येयं श्रुतिः। इदानीं देहाध्यासवतः पुरुषस्य यज्ञाधिकारत्वं खण्डयन्ति—अत्यन्तेति। न चेति। न हीत्यर्थः। ब्रह्मार्पणमिति। तथा च "य एवास्मि स सन्यजे"ति श्रुतिप्रामा-

स्मृतेः। तस्मादन्योन्योपयोगित्वे न कोऽपि दोषः। क्रियाज्ञानयोः स्वातन्त्र्येण पुरुषार्थसिद्ध्यर्थं भिन्नतया शास्त्रप्रवृत्तिः।

किञ्च, वेदान्तवाक्यानामस्मिन् शास्त्रे समन्वय एव प्रतिपाद्यते सन्देहनिराकरणद्वारा। तत्कथं सिद्धवद्धेतुत्वेन निर्देशः। अग्रिमवैय्यर्थ्यं च स्यात्। न च प्रतिज्ञागर्भितहेतुत्वम्। अनुपयोगात्। गौणमुख्यभावे परं विवादः। न च येन रूपेण समन्वयो मतान्तरस्थैर्विचारितस्तथाग्रे सूत्रेषु निर्णयोऽस्ति। शास्त्रारम्भस्तु प्रथमसूत्र एव समर्थितः। तस्मात्समवायिकारणत्वमेवानेन सूत्रेण सिद्धम्।

( समवायिकारणत्वे शङ्का तन्निरासश्च )

ननु कारणत्वमेवास्तु ब्रह्मणः किं समवायिकरणत्वेन? विकृतत्वं च स्यात्,

---

ण्यादपि अध्यासस्य कारणता नास्तीत्यपि मन्तव्यम्। शाङ्करमतेऽप्यन्योन्योपयोगित्वं स्वीकर्तव्यमित्युपसंहरन्ति—**तस्मादिति**। ननु परस्पराकाङ्क्षत्वेनैकवाक्यत्वादेकशास्त्रत्वमेव स्यादित्यत आह—**क्रियेति**। **स्वातन्त्र्येणेति**। धर्मार्थकामरूपे त्रिवर्गे साधनीये उभयोः स्वातन्त्र्येणेत्यर्थः। इतः परं सर्वेषां मते सूत्रानभिज्ञत्वमाहुः—**किञ्चेति**। **सिद्धवद्धेतुत्वेनेति**। शङ्कराचार्यैः उत्पत्त्यादित्रयकारणीभूतं ब्रह्मपक्षीकृत्य वेदान्तशास्त्रगम्यत्वं साध्यते, समन्वयादिति हेतुः। तत्र सर्वेषां वेदान्तवाक्यानां ब्रह्मणि तात्पर्यात्, समनुगत्वादिति हेतुवाक्यार्थः। तत्रैवं विचार्यते, सकलशास्त्रसमाप्त्यनन्तरं सन्देहनिराकरणद्वारा सर्वेषां वेदान्तवाक्यानां ब्रह्मणि समन्वयः सिद्धो भविष्यति, आदौ तु तस्यासिद्धत्वात् सिद्धवत्त्वेन हेतुनिर्देशः कथमिति। इदं च सर्वेषां मते एतादृशहेतुनिर्देशस्य सत्त्वाद्दूषणं बोध्यम्। **वैय्यर्थ्यमिति**। अग्रिमग्रन्थे वाक्यानां समन्वय एव साध्यते; सिद्धे सति वैय्यर्थ्यमिति भावः। ननु यथा प्रतिज्ञा बुद्धिस्थसाध्यग्रन्थविषयिणी, एवं हेतुरपि बुद्धिस्थः प्रतिज्ञा गर्भित एवेति सिद्धो हेतुर्न दुष्ट इत्याशयेन शङ्कते—**न चेति**। प्रतिज्ञागर्भितहेतुत्वं समन्वयं साधयिष्ये इति प्रतिज्ञाविषयीभूतहेतुत्वम्। उत्तरयन्ति—**अनुपयोगादिति**। भाट्टादिमतनिराकरणं तु हेतुप्रयोगं विना न भविष्यतीति तस्य बुद्धिस्थत्व उपयोगाभावादित्यर्थः। **गौणमुख्यभावेति**। अस्माभिरिव मीमांसकैर्वेदान्तानां ब्रह्मप्रतिपादकत्वं स्वीक्रियत एव; परन्तु पूर्वकाण्डे शेषत्वरूपगौणत्वेन, अस्माभिस्तु मुख्यत्वेनेत्येवं रूपस्य गौणमुख्यभावे विवादस्य सत्त्वात्तत्र हेतुप्रयोगस्योपयुक्तत्वम्, ब्रह्मप्रतिपादकत्वे तु विवादाभावात्समन्वयरूपहेतुप्रयोगोऽनुचित इति भावः। **विवाद इति**। न तु ब्रह्मप्रतिपादकत्वे इति शेषः॥

ननु सम्यक् मुख्यत्वेन ब्रह्मप्रतिपादनं समन्वयशब्दार्थः। एवं च हेतुप्रयोगस्यौचित्यमित्यतो दूषणान्तरमाहुः—**न चेति**। अस्तीत्यनेनान्वितम्। **येन रूपेण**, यावद्धर्मशून्यत्वेन रूपेण समन्वयः। सर्वेषां वेदान्तवाक्यानामिति शेषः। मतान्तरस्थैर्मायावादिभिस्तथा तेन रूपेण, निर्णयो नास्तीति पूर्वेणान्वयः। तथा चाग्रिमसूत्रेषु सर्वत्र कर्त्रादिरूपेणैव तत्तद्वाक्यानां ब्रह्मप्रतिपादकत्वं निःसन्दिग्धमिति नायं हेतुप्रयोग उचित इति भावः। ननु सर्वत्र श्रुत्या सिद्धार्थ एव प्रतिपाद्यते चेत्; तत्र सन्देह एव नोदेतीति शास्त्रारम्भो व्यर्थ इत्यत आहुः—**शास्त्रेति**। गौणतापत्तिरजिज्ञास्यत्वं चेत्यादिस्थले, उपसंहरन्ति—**तस्मादिति**।

ननु विकाराभावार्थं केवलकारणतास्वीकार एवास्त्वित्याशयेनाशङ्कते—**नन्विति**। नन्वात्मपद-

अनर्थरूपत्वेन कार्यस्यायुक्तता च, तस्मादनारम्भणीयमेवैतत्सूत्रमिति चेत्, मैवम्; सर्वोपनिपत्समाधानार्थं प्रवृत्तः सूत्रकारः। तद्यदि ब्रह्मणः समवायित्वं न ब्रूयात्, भूयानुपनिषद्भागो व्यर्थः स्यात्। इदं सर्वं "यदयमात्मा" ( बृ. २।४-६-४-६-७ ) "आत्मैवेदं सर्वम्" (छां. ७।२५।२)। "स सर्वं भवति, ब्रह्म तं परादात्" ( बृ. २।४।६ ) इत्यादि। "स आत्मानं स्वयमकुरुत" ( तै. २।७ )। "एकमेवाद्वितीयम्" ( छां. ६।२।१ )। "वाचारम्भणं विकारः" ( छां. ६।१।४ ) इत्यादि। एवमादीनि वाक्यानि स्वार्थे बाधितानि भवेयुः।

नन्वेवं निःसन्दिग्धत्वात्कथं सूत्रप्रवृत्तिः। उच्यते— अस्थूलादिवाक्यान्यपि सन्ति सर्वत्र प्रपञ्चतद्धर्मवैलक्षण्यप्रतिपादकानि। ततोऽन्योन्यविरोधेनैकस्य मुख्यार्थबाधो वक्तव्यः। तत्र स्वरूपापेक्षया कार्यस्य गौणत्वात् प्रपञ्चरूपप्रतिपादकानामेव कश्चित्कल्पयेत्; तन्मा भूदिति जन्मादिसूत्रवत्समन्वयसूत्रमपि सूत्रितवान्। तथा च अस्थूलादिगुणयुक्त एव, अविक्रियमाण एव, आत्मानं करोतीति वेदान्तार्थः सङ्गतो भवति। विरुद्धसर्वधर्माश्रयत्वं तु ब्रह्मणो भूषणाय।

---

स्वारस्यादेवाविकृतत्वमिति पूर्वमेवोक्तमित्यतो दूषणान्तरमाहुः—**अनर्थेति**। कार्यस्यानर्थरूपत्वेन विनाशित्वेन। **अयुक्ततेति**। ब्रह्मणः कार्ये समन्वयेऽयुक्तताविनाशित्वं स्यादित्यर्थः। समाधानमाहुः—**मैवमिति**। समाधानार्थं विरुद्धवाक्यानामेकवाक्यतासम्पादनार्थम्। **व्यर्थः स्यादिति**। स्वार्थेऽप्रामाण्यात् व्यर्थः स्यादित्यर्थः। ब्रह्मणः समवायित्वाभावे बहूनां वाक्यानामसङ्गतत्वमुक्तं तन्मध्ये कानिचिद्दर्शयन्ति—**इदमिति**। वाक्यसप्तकम्। प्रथमं मैत्रेयी ब्राह्मणे, तत्र सर्वस्मिन्नात्माभेदः प्रतिपादितः। स च समवायित्वमन्तरेण न घटते। द्वितीयं छान्दोग्ये, सनत्कुमारनारदसम्वादे। तृतीयं पुरुषविधब्राह्मणे। चतुर्थं मैत्रेयीब्राह्मणे। तत्र सर्वमिदमात्मभिन्नमिति यः वेद तं प्रति ब्रह्मपरादात्। सः अमृतत्वाभावरूपं पराभवं प्राप्नुयादित्यर्थः। पञ्चमं तैत्तिरीये, ब्रह्मविन्नपाठके। तत्र एकस्यैव कर्तृकर्मभावः समवायित्वमन्तरेण न सम्भवति। षष्ठं छान्दोग्ये। सप्तमं तु स्पष्टमेव समवायित्वं वदति। तस्मात् सामान्यकारणताज्ञाने जाते सामान्यधर्मप्रकारकं ज्ञानं विशेषधर्मप्रकारकजिज्ञासाजनकमिति न्यायात् विशेषधर्मजिज्ञासानिवर्तकत्वेनेदं सूत्रमावश्यकमिति भावः॥

पुनः शङ्कते—**नन्विति**। **प्रवृत्तिरिति**। तथा च सूत्रप्रवृत्त्यन्यथानुपपत्त्योक्तश्रुत्या निःसन्दिग्धं समवायित्वं न प्रतीयत इति, शङ्काकर्तुराशयः। समाधानमाहुः—**उच्यत इति**। **अस्थूलेति**। "अस्थूलमनणु" इत्यादीनीत्यर्थः। **अपिना** सविशेषप्रतिपादकवाक्यसङ्ग्रहः। ननु ततः किमित्यत आहुः—**तत इति**। **मुख्यार्थ इति**। शक्त्या प्रतिपाद्यत इत्यर्थः। **गौणत्वादिति**। इच्छोत्तरं जायमानत्वेन गौणत्वादित्यर्थः। **कल्पयेदिति**। मुख्यार्थबाधकत्वमित्यादिः। **जन्मादिसूत्रवदिति**। कर्तृत्वं यथा प्रतिपादितं तथा समवायित्वमपि ब्रह्मणि प्रतिपादितं स्वमत इति। सिद्धान्तमाहुः—**तथा चेति**। **सङ्गत इति**। निःसन्दिग्ध इत्यर्थः। तथा च विरुद्धवाक्यैः सन्देहे जाते सूत्रप्रवृत्तिरिति भावः। ननु विरुद्धधर्माश्रयत्वे कल्पना स्यादित्यत आहुः—**भूषणायेति**। "अपाणिपादो जवनो गृहीते"त्यादिश्रुतिप्रतिपाद्यत्वरूपभूषणसत्त्वे काल्पनिकत्वं नास्तीति भावः।

( वैषम्यनैर्घृण्योद्भावनम्, अध्यारोपापवादोपक्षेपः, निर्दोषपूर्णगुणविग्रहत्वसमर्थनञ्च )

किञ्च, अन्यपदार्थसृष्टौ वैषम्यनैर्घृण्ये स्याताम्। कर्माधीनत्वे त्वनीशता। ततः कर्तृत्वमपि भज्येत। ततः सर्वमाहात्म्यनाश एव स्यात्।

नन्वेवमेवास्तु, अपवादार्थत्वात्, रज्जुसर्पवदयुक्तार्थकथनेऽपि न दोषः। "सर्वं समाप्नोषि ततोऽसि सर्वः" ( भ. गी. ११–४० ) इति स्मृतेश्चेति, चेत्, मैवम्; तथा सति पाषण्डित्वं स्यात्। एतादृशशास्त्रार्थाङ्गीकर्तुरासुरेषु भगवता गणितत्वात्।

असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम्।
अपरस्परसम्भूतं किमन्यत्कामहैतुकम्॥ ( भ. गी. १६–८ ) इति।

---

ननु पूर्वसूत्रेण कर्तृत्वसिद्धौ ब्रह्मणि विरुद्धधर्माश्रयत्वं सिध्यत्येव, तावतैव स्वाभिमतसिद्धौ सत्यां पुनः ब्रह्मणि समवायित्वस्वीकारो व्यर्थ एव, तदङ्गीकारे च विकृतत्वं गले पतति। लोके घटादिविकारित्वस्य मृत्तिकादौ सत्त्वादिति समन्वयसूत्रं न कर्तव्यमित्यत आहुः—किञ्चेति। अन्येति। ब्रह्मणोऽन्यो यः पदार्थस्तदुपादानिका या सृष्टिर्यथा कुलाले मृदुपादानिकां घटादिसृष्टिं करोति तथा स्वीकृतायां सृष्टावित्यर्थः। वैषम्यं च नैर्घृण्यं च वैषम्यनैर्घृण्ये एकस्य सुखवत्त्वकरणमेकस्य दुःखवत्त्वकरणं वैषम्यम्, दुःखादिसम्पादनं निर्दयत्वं च ब्रह्मणि स्यातामित्यर्थः। अस्मन्मते तु "स आत्मानं स्वयमकुरुत," "एकाकी न रमते," "बहु स्यामि"त्यादि "निर्विकारी निरञ्जनः" इति श्रुत्या निर्विकारित्वमपि स्वीकर्तव्यम्। श्रुतिप्रामाण्यात् स्वसृष्टौ स्वयमेव जगद्रूपेण क्रीडतीति वैषम्यनैर्घृण्यसम्भावनापि नास्ति। समवायित्वं विना जगद्रूपत्वं च न सम्भवतीत्यतो समन्वयसूत्रं कर्तव्यमिति भावः। एतच्च द्वितीयाध्याये प्रथमे पादे वैषम्यनैर्घृण्ये ( २–१–३४ ) इति सूत्रे व्युत्पादयिष्यते। ननु कर्माधीनत्वे वैषम्यादिदोषो नास्तीत्यत आहुः—अनीशितेति।

पुनः शङ्कते—नन्विति। अपवादार्थत्वादिति। अपदार्थत्वादित्यपपाठः। कर्तृत्वं श्रुत्या यत्प्रतिपाद्यते तदपवादार्थमेव, वस्तुतः कर्तृत्वं ब्रह्मणि नास्तीति न विरुद्धधर्माश्रयत्वमिति भावः। नन्वविद्यमानार्थकथनरूपाप्रामाण्यापत्तिरत आह—रज्जुसर्पवदिति। अपथगामिनि वा बालके भयप्रदर्शनार्थं रज्जुं प्रदर्श्य सर्पोऽयमित्युच्यते। तदनन्तरं विनीते तस्मिन् रज्जुरेवायमित्युच्यते। तद्वद्वेदेऽपि माहात्म्यज्ञापनेन वैराग्याद्युत्पत्त्या तात्त्विकार्थकथनं न तु कर्तृत्वादौ तात्पर्यमिति न दोष इति भावः। नन्वात्मैवेदं सर्वमित्यादिश्रुतिस्तु समवायित्वं वदतीत्यत आह—सर्वमिति। व्यापकत्वं वदति न तु समवायित्वम्। अत एव गीतायां विश्वरूपज्ञानानन्तरमेवार्जुनेनोक्तं ततोऽसि सर्वमिति। समाधानमाहुः—मैवमिति। पाषण्डित्वम्। आसुरत्वे तु गीतावाक्यं प्रमाणमाहुः—असत्यमिति। ते आसुराः। अप्रतिष्ठं न विद्यते ब्रह्मणि प्रतिष्ठा यस्येत्यप्रतिष्ठम्। न विद्यते ईश्वरः नियन्ता यस्येत्यनीश्वरम्। अपरस्परं योषित्पुरुषसम्बन्धं विना सम्भूतम्। एतादृशमेव जगत्, काम एव प्राणिनां कारणम्, अन्यत्किम्? न किमपीत्यर्थः। इत्याहुरिति गीतावाक्यार्थः। अत्रेदमाकूतं अध्यारोपवादिमते शास्त्रप्रवृत्तिर्हि द्विविधा वक्तव्या, संसारभ्रमनिवारणार्थं, ईश्वरसत्तासाधनार्थं च, तत्र केवलब्रह्मस्वरूपप्रतिपादकवाक्यैरेव भ्रमनिवृत्तौ, अन्येषां वाक्यानां वैयर्थ्यं स्यात्। अथ च सर्वैरेव स्वमतरीत्या चेतनस्वरूपं ब्रह्मेत्यङ्गीक्रियत एव पुनः तत्साधनार्थं प्रवृत्तिर्व्यर्थैव। किञ्च, "सर्वं समाप्नोषी"त्यस्याप्यसङ्गतिः। सर्वस्यापवादार्थत्वेन आरोपितत्वादवस्तुत्वेनाव्याप्यत्वादपरिच्छेदकबोधकत्वाभावादिति मन्तव्यम्।

शास्त्रानर्थक्यं च । सर्वं समारोपीत्यप्यसङ्गतं स्यात्, वस्तुपरिच्छेदात्। न हि वेदो निःप्रपञ्चरूपकथनमुक्त्वा स्वोक्तं जगत्कर्तृत्वं निषेधति। तस्मादध्यारोपापवादपरत्वेन व्याख्यातृभिर्वेदान्तास्तिलांपः कृता इति मन्यामहे। सर्ववाक्यार्थबाधात्। यथा निर्दोषपूर्णगुणविग्रहता भवति, तथोपरिष्टाद्वक्ष्यामः।

( सिद्धान्तसमर्थनम् )

ननु पुरुषार्थार्थानि शास्त्राणि। इदं च शास्त्रं मोक्षरूपपुरुषार्थसाधकम्। मोक्षश्चाविद्यानिवृत्तिरूप इति युक्तम्। अविद्या चाज्ञानं ज्ञानेनैव नश्यति। ततो ज्ञानोपयोगित्वेन व्याख्यातव्ये वेदान्तेऽध्यारोपापवादव्यतिरेकेण व्याख्यानमयुक्तम्। अतो यथाकथञ्चिद्व्याख्यानेऽपि पुरुषार्थसिद्धेर्न कोऽपि दोष इति चेत्, न; पुरुषार्थस्य शास्त्रार्थस्य वा स्वरूपं शास्त्रैकसमधिगम्यं न स्वबुद्धिपरिकल्पितम्। अतः स्वबुद्ध्या शास्त्रार्थं परिकल्प्य तत्र वेदं योजयन्तो महासाहसिकाः सद्भिरुपेक्ष्याः। पुरुषार्थः पुनर्यथा वेदान्तेष्ववगतः; "ब्रह्म वेद ब्रह्मैव भवति" ( मुण्ड. ३-२-९ ), "ब्रह्मविदाप्नोति परम्," (तै. २-१) "न स पुनरावर्तते," (छां. ८-१५-१) "ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्," (भ. गी. १८-५५) "अनावृत्तिः शब्दादनावृत्तिः शब्दात्" ( ब्र. सू. ४-४-२२ ) इत्येवमादिभिः श्रुतिस्मृतिन्यायैर्ब्रह्मप्राप्तेरेव पुरुषार्थत्वम्। ब्रह्म च पुनर्न जीवस्यात्ममात्रम्। अज्ञानवद्वा।

> एकस्यैव ममांशस्य जीवस्यैव महामते।
> बन्धोऽस्याविद्ययानादिर्विद्यया च तथेतरः ॥ १२ ॥

---

ननु वेद एव तथा वदतीत्यत आहुः—न हीति। निषेधतीत्यनेनान्वितम्। अध्यारोपापवादवादिनं उपहसन्ति—कृता इति। असदृश्याः कृता इत्यर्थः। वेदान्तार्थस्पर्शोऽपि तेषां नास्तीति भावः। ननु प्रपञ्चसमवायित्वे कार्यदोषः ब्रह्मणि स्यादत आहुः—यथेति। वक्ष्यामः अन्तस्तद्धर्माधिकरणे (१-१-१९) इति शेषः।

स एव पुनः प्रत्यवतिष्ठते—नन्विति। पुरुषार्थानि। पुरुषार्थचातुर्विध्यमेवार्थः प्रयोजनं इदं तानि। इदं च। वेदान्तं च। अज्ञानमिति। भावरूपं न तु ज्ञानाभावः। इदं च योगशास्त्रे प्रसिद्धम्। यथाकथञ्चिदिति। तथा च यथा वेदान्तव्याख्यानेन ज्ञानं भविष्यति तथा व्याख्येयम्, ततो ज्ञाने जाते "ब्रह्मविद्ब्रह्मैव भवती"ति ब्रह्मरूपस्वरूपावस्थात्मकपुरुषार्थसिद्धौ सत्यामध्यारोपापवादेन व्याख्यानं युक्तमेवेति भावः। समाधानमाहुः—नेति। पुरुषार्थस्य। मोक्षस्य। महासाहसिका इति। तथा च भवद्रीत्या अविद्यानिवृत्तिरूपो मोक्षः अध्यारोपापवादेन व्याख्यानरूपः शास्त्रार्थोऽपि नास्तीति भावः। ननु भवन्मते कीदृशो मोक्ष इत्यत आहुः—पुरुषार्थ इति। अवगत इति। तथा मन्तव्य इति शेषः। येषु वाक्येष्ववगतस्तानि वाक्यान्याहुः—ब्रह्मवेदेति। इदं वाक्यपञ्चकम्। ब्रह्मभावः परप्राप्तिः संसारेऽनावृत्तिः परप्राप्तिस्वरूपम्। जन्यभावनश्वरत्वयोर्व्याप्तिस्वरूपम्। एतत्पञ्चकं बोधयति—पुरुषार्थत्वमिति। भवतीति शेषः। तथा च श्वेताश्वतरोपनिषदि मायानिवृत्तिरेव मोक्षः। तैत्तिरीये ब्रह्मज्ञानेन मायानिवृत्तौ परप्राप्तिरेव मोक्षः, न तु अविद्यानिवृत्तौ। एकादशस्कन्धे, विद्याविद्ययोर्मायाजन्यत्वस्योक्तत्वेन मायाविद्ययोर्भेदादिति भावः। ननु अविद्यावतो जीवस्य ब्रह्मस्वरूपस्य परमव्योमात्मकत्वसम्पादनरूपत्वेन ब्रह्मणोऽप्यविद्यावत्त्वं तस्य पुनः सर्वत्र सत्त्वात्कथं परप्राप्तिरुच्यत इत्यत आहुः—ब्रह्मेति,। प्रतिपादनादिति।

इति भगवता जीवस्यैवाविद्यावत्त्वप्रतिपादनात् । तस्मान्न्यायोपबृंहितसर्ववेदान्तप्रतिपादितसर्वधर्मवद्ब्रह्म । तस्य श्रवणमनननिदिध्यासनैरन्तरङ्गैः शमदमादिभिश्च बहिरङ्गैरतिशुद्धे चित्ते स्वयमेवाविर्भूतस्य स्वप्रकाशस्य सायुज्यं परमपुरुषार्थः । तस्मात्सर्वे वेदान्ताः स्वार्थ एव युक्तार्था इति न्यायैर्वक्तव्यत्वाद्ब्रह्मणः समवायित्वाय समन्वयसूत्रं वक्तव्यम् ॥१।१।३॥

॥ इति त्रिसूत्री ॥

---

जीवस्याविद्यावत्त्वांशत्वप्रतिपादनेनांशिब्रह्मप्राप्तिरुचितैवेति भावः । ब्रह्मणः सर्वधर्माश्रयत्वमुपसंहरन्ति—**तस्मादिति** । **न्यायोपबृंहितेति** । न्यायेनोत्तरमीमांसयोपबृंहितः वर्द्धितः यः वेदान्तः उपनिषद्भागः तेन प्रतिपादितमित्यर्थः । तस्य सर्वधर्मविशिष्टस्य ब्रह्मणः । **अतिशुद्धेति** । तथा च सर्वेषां साधनानां चित्तशुद्ध्यर्थत्वमेवेति भावः । **स्वयमाविर्भूतस्येति** । "नायमात्मा प्रवचनेने"ति श्रुत्या प्रसाद एवाविर्भावे हेतुरिति स्वयम्पदेन द्योत्यते, तथा च "सोश्नुते" इति श्रुत्युक्तं सायुज्यमेव मोक्ष इति भावः । उपसहरन्ति—**तस्मादिति** । **स्वार्थे एव** शक्यार्थे एव । **न्यायैरुत्तरमीमांसासूत्रैः** । सर्वत्र शक्त्यैवोपनिषद्वाक्यप्रतिपादनं व्यासाभिप्रेतमिति भावः । **समवायित्वाय** । समवायिकारणत्वबोधनायैव ॥ **इति तृतीयाधिकरणम्** ॥

---

१ अधिकरणेऽस्मिन् सर्वेषां मतानिः—

(१) तत्र तावच्छाङ्कराः—अस्य पूर्वेणाक्षेपिकी सङ्गतिः । फलं तु पूर्वपक्षे मुमुक्षोर्वेदान्तेषु प्रवृत्त्यनुपपत्तिः सिद्धान्ते प्रवृत्तिसिद्धिरिति द्रष्टव्यम् । अत्र सर्वे वेदान्ता विषयः । ते किं कर्मशेषकर्त्रादिपराः, उत नित्यसिद्धब्रह्मपरा इति सन्देहे, अहेयानुपादेयसिद्धब्रह्मपरत्वे निष्प्रयोजनत्वसापेक्षत्वप्रसङ्गात् कर्मशेषकर्त्रादिपरा एवेति पूर्वः पक्षः । सिद्धान्तस्तु—सौत्र-तु-शब्दः पूर्वपक्षव्यावृत्त्यर्थः । तत् ब्रह्म, वेदान्तेषु प्रतिपाद्यते । कुतः, समन्वयात् सम्यक्तात्पर्यवत्त्वेन वेदान्तानां ब्रह्मण्यन्वयात् सम्बन्धात्, अतो वेदान्ता नित्यसिद्धब्रह्मपराः, न कर्त्रादिपराः, भिन्नप्रकरणस्थत्वात् । न च प्रकरणाभेदादुपासनाविधिपरा इति साम्प्रतम्; तत्त्वमस्यादीनां विधिविधुराणां बहुलमुपलब्धेः । यत्तु निष्प्रयोजनत्वमुक्तम्, तदयुक्तम्; अनर्थनिवृत्तेः प्रयोजनस्य संभवात् । यच्च सापेक्षत्वम्, तच्च; रूपादिहीनस्य ब्रह्मणः प्रमाणान्तरागम्यत्वेन तत्प्रतिपादकवेदान्तानां सापेक्षत्वासम्भवात् । तस्मादुपक्रमादिलिङ्गैर्वेदान्ता ब्रह्मपरा एवेति सिद्धम् ।

यद्वा, इत्थं ब्रह्मणो वेदान्तवेद्यत्वेऽपि, तद्विधिद्वाराङ्गीकुर्वत एकदेशिनो मतं प्रसङ्गादाक्षिप्याह—तत्तु समन्वयात् । पूर्वेणास्य प्रसङ्गसङ्गतिः । अत्र पूर्वपक्षे उपासनया मुक्तिः, सिद्धान्ते ज्ञानादिति फलभेदः । तत्र वेदान्ताः प्रतिपत्तिविधिविषयतया ब्रह्म समर्पयन्ति, उत साक्षादिति सन्देहे; प्रवृत्त्यादिलिङ्गाभावेन सिद्धे शक्तिग्रहायोगात् प्रवृत्तिनिवृत्तिपरस्यैव शास्त्रत्वेन सिद्धपरत्वे तस्यायोगाच्च विधिविषयतयैवेति पूर्वः पक्षः । सिद्धान्तस्तु—तत् ब्रह्म साक्षात् वेदान्ताः समर्पयन्ति । कुतः, समन्वयात् तात्पर्यवत्त्वेन तेषां तत्रान्वयात् । यत्तु सिद्धे प्रवृत्त्यादिलिङ्गाभावेन न शक्तिग्रह इति, तन्न; प्रवृत्तिनिवृत्ती एव लिङ्गमिति न निर्बन्धः, 'पुत्रस्ते जातः' इत्यादिषु हर्षादिलिङ्गेनापि शक्तिग्रहसम्भवात् । यत्तु प्रवृत्त्यादिपरस्यैव शास्त्रत्वमिति, तदपि न; हितशासनात् वेदान्तानां शास्त्रत्वोपपत्तेरित्याहुः ।

(२) रामानुजाः—समन्वयः सम्यगन्वयः, पुरुषार्थतयाऽन्वय इत्यर्थः। परमपुरुषार्थभूतस्यानवधिकातिशयानन्दस्वरूपस्य ब्रह्मणोऽभिधेयतयान्वयाच्छास्त्रप्रमाणकत्वं सिध्यत्येवेत्यर्थ इति वदन्ति ।

(३) माध्वास्तु—अज्ञानां प्रतीयमानमपि नेतरेषां शास्त्रयोनित्वम् । कुतः अन्वय उत्पत्त्यादिलिङ्गम् । उक्तं च बृहत्संहितायाम् "उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् । अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये" इति । उपक्रमादितात्पर्यलिङ्गैः सम्यङ्निरूप्यमाणे, तदेव शास्त्रगम्यम् । "मां विधत्तेऽभिधत्ते मां विकल्प्योऽपोह्य इत्यहम् । इत्यस्याहृदयं साक्षान्नान्यो मद्वेद कश्चन" इति भागवते ॥ इत्याहुः ।

(४) निम्बार्काश्च—तज्जिज्ञास्यं विश्वकारणं शास्त्रप्रमाणकं ब्रह्मैव न कर्मादि, तत्रैव प्रतिपादकतया फलस्यापि वेदस्य समन्वयात् । मुख्यवृत्त्यान्वयः समन्वयस्तस्मात् । यद्वा, वेदेषु तस्यैव प्रतिपादकतया समन्वयादिति सङ्क्षेपः ।—जिज्ञास्यं ब्रह्म शास्त्रप्रमाणकमेव नान्यप्रमाणकम्, समस्तश्रुतीनां साक्षात्परम्परया वा तत्रैव समन्वयात् । तत्र लक्षणप्रमाणादिवाक्यानां स्वत एव तद्विषयकत्वेन, शाण्डिल्यपञ्चाग्निमधुविद्यादिवाक्यानां प्रतीकादिप्रकारकाणां च परम्परया समन्वयः । यद्वा, सर्वेषामपि वाक्यानां भिन्नवृत्तिनिमित्तकत्वेऽपि साक्षादेव ब्रह्मणि समन्वयः । तत्तद्वाच्यविषयाणां सर्वेषामपि ब्रह्मात्मकत्वाविशेषेण मुख्यवाच्यत्वात् ।—तस्मात् सर्वज्ञः सर्वाचिन्त्यशक्तिर्विश्वजन्मादिहेतुर्वेदैकप्रमाणगम्यः सर्वभिन्नाभिन्नो भगवान् वासुदेवो विश्वात्मैव जिज्ञासाविषयस्तत्रैव सर्वं शास्त्रं समन्वेतीत्यौपनिषदानां सिद्धान्तः ॥ इति प्राहुः ।

(५) भास्करीये—तुशब्दः पूर्वपक्षं व्यावर्तयति । ब्रह्मस्वरूपं शास्त्रमवबोधयति, न केवलं कार्यमेव । कुतः । समन्वयात् । समन्वितानि हि ब्रह्मस्वरूपप्रतिपादनपरत्वेन सृष्टिप्रकरणगतानि वाक्यानि "सदेव सौम्येदमग्र आसीत्" "आत्मा वा इदमेक एवाग्र आसीत्" "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः" इत्येवमादीनि । न च तेषां ब्रह्मपराणामर्थान्तरकल्पना युक्ता, श्रुतहान्यश्रुतकल्पनाप्रसङ्गात् ।

(६) भैक्षवास्तु—तत्पदं व्यवहितपरामर्शार्थं, तुशब्दः पूर्वपक्षप्रतिषेधार्थः, तद्ब्रह्मणो जगज्जन्मादिकारणत्वं तु समन्वयात्, अस्य जगतः कारणरूपे ब्रह्मणि समनुगतत्वादुपपद्यत इति शेषः । तथा चाधिष्ठानरूपोपादानकारणत्वं जन्मादिसूत्रादिसूत्रेणोक्तमित्याशय इत्यूचुः ।

(१) अथात्र भाष्ये, तत्तन्मते चेत्थं विमर्शः—अधिकरणेऽस्मिन् प्रायः सर्वेऽपि भाष्यकारा वेदप्रामाण्यसाधकतया वा शास्त्रयोनित्वसमर्थनतया वा व्याख्यानं चक्रुः; इह च समवायत्वेन । तत्र तावत् समवायपदार्थ एव व्यासाभिप्रायविरोधी, तस्य चाग्रे दूष्यमाणत्वात् ।

(२) समवायस्तावत्, न तादात्म्यातिरिक्तः । तादात्म्यं हि न क्वचनापि वेदैकदारणैर्दूष्यते । व्यासपादानामपि सम्मतत्वाच्च । "त्रयं वा इदं नाम रूपं कर्म" इत्यादिश्रुतिषु तथैव स्वारस्याच्चेति । समवायित्वे वेदान्तसिद्धान्तस्य सुतरामक्षुण्णत्वाच्च ।

(३) शास्त्रयोनित्वादिकं तु प्रागेव समर्थितम् ।

(४) वेदप्रामाण्ये च न विवादलेशोऽपि । वेदप्रामाण्यं, स्वीकृत्यैव शास्त्रमिदं प्रवृत्तम् । यैः पुनरिह शमदमादिसाधनसम्पन्नानां कृते शास्त्रमिदं प्रवृत्तमित्युच्येत, न तूत्तरकाण्डार्थविचारोऽध्ययनवाक्यादिना प्रवृत्त इति च; तेषां च तद्विचारापेक्षा । नास्माकम् । वयं हि कारणतां प्रसाध्य,

सात्र कीदृशीति विचारयिष्यामः। नत्र, अस्तिभातिप्रियत्वात्मकेनानागन्तुकानारोपितरूपेण सर्वत्रानुवृत्तत्वात्समवायिकारणमेव ब्रह्मेति निगर्वः। तद्धि सम्यगन्वयः समन्वय इति व्युत्पत्त्या त्रैकालिकानुस्यूतमेव। एतदेवोपादानकारणम्।

(५) तत्र तावत् साङ्ख्याः, प्रधानमेवोपादनं वदन्ति, तन्निरासस्तु प्रकृतेरपि तदंशत्वादित्यादिना मूल एव द्रष्टव्यः।

(६) परमाणुकारणतावादिनामपि "न च साधारण्येन सर्वजगत्प्रति परमाण्वादीनामन्वयः सम्भवतीत्यादिना निरासः।

(७) एतेनात्र साम्प्रतिकाः केचन "स्वतन्त्रतया–वेदापरतन्त्रतया–प्रवृत्ता अन्वेष्टारः, विद्युत्कणवादिनो वा अणुवादिनो वा प्रायः शताधिकसङ्ख्याकपदार्थवादिनश्च बालिशा एवेति ध्येयम्। तेषां च जलमन्थनप्रवृत्तिरेवेति नात्र ते विचारास्पदमारोहन्ति। भुवमहाशया वा तत्सदृशा अन्ये वा प्रवदन्तु नाम ह्येतदपि विलोकनीयं तदपि विचारणीयमित्यादि। गजा यत्र न गण्यन्ते इति न्यायेन साङ्ख्यन्यायवैशेषिकादयो यत्र वैयासराद्धान्ते निरस्तास्तत्र तेषां कुतो विचारः?

(८) यत्तु शान्तरक्षितेन समवायदूषणे—

तन्तुष्वेव पटोऽमीषु वीरणेषु कटः पुनः। इत्यादीहमतेर्भावात्समवायोऽवगम्यते॥ ८२३॥
तस्याभावे स चेत्किं हि मतेरस्या निबन्धनम्। न विशेषमतिर्दृष्टा निमित्तान्तरवर्जिता॥ ८२४॥
इह बुद्ध्यविशेषाच्च योगवच्च विभिद्यते। सर्वस्मिन् भाववत्स्वेष एक एव प्रतीयते॥ ८२५॥
कारणानुपलब्धेश्च नित्यो भाववदेव सः। न ह्यस्य कारणं किञ्चित्प्रमाणेनोपलभेमहि॥ ८२६॥
तदेतदिह विज्ञानं परेषामेव वर्तते। स्वसिद्धान्तानुरागेण न दृष्टं लौकिकं तु तत्॥ ८२७॥
नानात्वलक्षणे हि स्यादाधाराधेयभूतयोः। इदमत्रेति विज्ञानं कुण्डादौ श्रीफलादिवत्॥ ८२८॥
नैव तन्तुपटादीनां नानात्वेनोपलक्षणम्। विद्यते येन तेषु स्युरिदमत्रेति बुद्धयः॥ ८२९॥
स्वेच्छया रचिते वाऽस्मिन्कल्पितेष्विव वस्तुषु। न कारणनियोगोऽयं परं प्रत्युपपद्यते॥ ८३०॥
वृक्षे शाखाः शिलाश्चाग इत्येषा लौकिकी मतिः। अगाख्यपरिशिष्टाङ्गैरन्त्वयोपलम्भनात्॥८३१॥
तौ पुनस्तास्विति ज्ञानं लोकातिक्रान्तमुच्यते। घटे रूपं क्रियादीनि तादात्म्यं त्ववगच्छति॥८३२॥
रूपकुम्भादिशब्दा हि सर्वावस्थाभिधायकाः। तद्विशेषाभिधानाय यथा ते विनिवेशिताः॥८३३॥
तानाश्रित्यैषु विज्ञानं तेनाकारेण वर्तते। समवायाच्च भेदस्य सर्वेषामप्यनीक्षणात्॥ ८३४॥
यद्येकः समवायः स्यात्सर्वेष्वेव च वस्तुषु। कपालादिष्वपि ज्ञानं पटादीति प्रसज्यते॥ ८३५॥
गजादिष्वपि गोत्वादि समस्तीत्युपजायते। ततो गवादिरूपत्वममीषां शाबलेयवत्॥ ८३६॥
पटस्तन्तुषु योऽस्तीति समवायात्प्रतीयते। अस्ति चासौ कपालेषु तस्येति न तथेति किम्॥८३७॥
नाश्रितः स कपाले चेन्ननु तन्तुष्वपीष्यते। आश्रितः समवायेन स कपालेऽपि नास्ति किम्॥ ८३८
सन्तोर्यः समवायो हि पटस्येत्यभिधीयते। स घटस्य कपालेषु तद्धीरनवधिर्भवेत्॥ ८३९॥
एवं यश्च गजत्वादि समवायो गजादिषु। गोत्वादिजातिभेदानां स एव स्वाश्रयेष्वपि॥ ८४०॥
आधाराधेयनियमः स चैकत्वेऽपि विद्यते। द्रव्येष्विव हि तज्जातिकर्मस्वेव च कर्मता॥ ८४१॥
इहेति समवायोत्थविज्ञानान्वयदर्शनात्। सर्वत्र समवायोऽयमेक एवेति गम्यते॥ ८४२॥
द्रव्यत्वादिनिमित्तानां व्यतिरेकस्य दर्शनात्। धियां द्रव्यादिजातीनां नियमस्त्ववसीयते॥८४३॥

तद्यथा कुण्डदध्नोश्च संयोगैक्येऽपि दृश्यते । आधाराधेयनियमस्तथेह नियमो मतः ॥ ८४४ ॥
व्यङ्ग्यव्यञ्जकसामर्थ्यभेदाद्द्रव्यादिजातिषु । समवायैकभावेऽपि नैव चेत्स विरुध्यते ॥ ८४५ ॥
आधाराधेयनियमोऽन्वेकत्वेऽस्य दुर्घटः । द्रव्यत्वं द्रव्य एवेदं कथं तत्समवायतः ॥ ८४६ ॥
तस्यासौ समवायश्च गुणादिष्वपि विद्यते । गुणजात्यादिसम्बन्धादेक एव ह्ययं तयोः ॥ ८४७ ॥
अन्यथा गुणजात्यादिभिन्न एव भवेदयम् । योगिभेदात्प्रतिव्यक्ति यथा योगो विभिद्यते ॥ ८४८ ॥
द्रव्यत्वादिनिमित्तानां व्यतिरेकोऽनुयुज्यते । धियां निमित्तसद्भावादतस्तन्नियमोऽपि न ॥ ८४९ ॥
तदाश्रितत्वस्यानादि तस्मादेवाभिधीयते । समवायादतश्चैतन्न युक्तं तन्नियामकम् ॥ ८५० ॥
व्यङ्ग्यव्यञ्जकसामर्थ्यभेदोऽपि समवायतः । नान्यतस्तु स नित्यानामुत्पादानुपपत्तितः ॥ ८५१ ॥
नहि दीपादिसद्भावाज्जायन्ते यादृशा इमे । विज्ञानजनने योग्या घटाद्या जातयस्तथा ॥ ८५२ ॥
कुण्डदध्नोश्च संयोग एकः पूर्वं निराकृतः । न चासौ नियतस्तस्मायुज्यतेऽतिप्रसङ्गतः ॥ ८५३ ॥
नित्यत्वेनास्य सर्वेऽपि नित्याः प्राप्ता घटादयः । आधारेषु सदा तेषां समवायो न संस्थितेः ॥
स्वारम्भकविभागाद्वा यदि वा तद्विनाशतः । ते नश्यन्ति क्रियादीव योगादेरिति चेन्न तत् ॥
स्वाधारैः समवायो हि तेषामपि सदा मतः । तेषां विनाशभावे तु नियताऽस्यापि नाशिता ॥८५६॥
सम्बन्धिनो निवृत्तौ हि सम्बन्धोऽस्तीति दुर्घटम् । नहि संयुक्तनाशेऽपि संयोगो नोपतिष्ठते ॥८५७॥
यथा संयोगभावे तु संयुक्तानामवस्थितिः । समवायस्य सद्भावे तथा स्यात्समवायिनाम् ॥८५८॥
एकसम्बन्धिनाशेऽपि समवायोऽवतिष्ठते । अन्यसम्बन्धिसद्भावाद्योगो नो चेन्न भेदतः ॥ ८५९ ॥
यद्येवं ये विनश्यन्ति घटाद्याः समवायिनः । तेषां वृत्त्यात्मको योऽसौ समवायः प्रकल्पितः ॥८६०॥
स एव व्यवतिष्ठेत किं सम्बन्ध्यन्तरस्थितेः । अथान्य एव संयोग""बहुतादिवत् ॥ ८६१ ॥
नायस्तल्लक्षणस्यैव समवायस्य संस्थितौ । पूर्ववृत्ते स्थिता एव प्राप्नुवन्ति घटादयः ॥ ८६२ ॥
न तेषामनवस्थाने तेषां वृत्त्यात्मकः क्वचित् । समवायोऽवतिष्ठेत संज्ञामात्रेण वा तथा ॥ ८६३ ॥
अतः प्रागपि सद्भावान्न ते वृत्ताः स्युराश्रये । पश्चादिव तथा ज्ञेया वृत्तिस्तेषामवस्तुतः ॥ ८६४ ॥
अथान्य एव संयोगविभागबहुतादिवत् । सम्बन्ध्यन्तरसद्भावे समवायोऽवतिष्ठते ॥ ८६५ ॥
संयोगादिवदेवं हि नन्वस्य बहुता भवेत् । एवमाद्यस्य सद्भावे बहु स्यादसमञ्जसम् ॥ ८६६ ॥

इत्याद्युक्तं, व्याख्यातं च कमलशीलेन । तद्वैशेपिकाभिमतस्यैव न श्रुतिप्रतिपाद्यस्य । सौगतै-र्दूषितः समवायोऽपि दूषणाभास एव । समवायसिद्धिस्तु प्रागेवैतदधिकरणारम्भे टिप्पण्यां प्रदर्शितेन पथा वैशेपिकराद्धान्ते प्रशस्तपादभाष्ये, किरणावल्यां, अन्यत्र च कृता । एवमेव "अन्य-योगव्यवच्छेदिकायाम्" पञ्चमश्लोके तद्व्याख्याने च हेमचन्द्रेण "नापि समवायः, तस्यैकत्वात्, व्यापकत्वाच्च प्रत्यासत्तिविप्रकर्षाभावेन सर्वत्र तुल्यत्वात्; न नियतैः सम्बन्धिभिः सम्बन्धो युक्तः" इत्यादि प्रजल्पितम् । तदपि वैशेपिकराद्धान्ते बहुशः खण्डितमेव । अस्माभिस्तु तादा-त्म्यानतिरिक्त एव समवायोऽङ्गीकृत इति स्वमते दूषणाभावान्नात्र वेदविरुद्धवर्तिनां मतविचा-रोऽपि क्रियते । अविषयत्वात् ।

(९) एवं हि परमाणुकारणतावादं निरस्य ब्रह्मसूत्रव्याख्यातृषु मतभेदोऽपि न सोढव्यः, व्याख्या-नाभासरूपत्वात् । अत एव केचिदित्यादिना रामानुज–भास्कर–भिक्षुप्रभृतीनां मतानि निर-स्तानि भगवत्पादैरप्यक्षद्भिः ।

(१०) तथा चैवं प्रत्यवतिष्ठन्ते विशिष्टाद्वैतवादिनः—

(क) यद्यपि शास्त्रयोनित्वसूत्रे ब्रह्मणः शास्त्रमात्रप्रमाणकत्वं साधितं तथापि तन्नोपपद्यते। "चोदनालक्षणोऽर्थो धर्मः" "तस्य ज्ञानमुपदेशः" "तद्भूतानां क्रियार्थेन समाम्नायः" "आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्" इति जैमिनिना द्वादशलक्षण्यां तत्र तत्र प्रवृत्तिनिवृत्तिजनकक्रियापरताया एवानुक्रान्तत्वात् ब्रह्मरूपसिद्धार्थपरत्वे प्रयोजनशून्यत्वप्रसङ्गात्। न च प्रत्यक्षादीनां वस्तुयाथात्म्यावबोधपर्यवसानदर्शनाच्छास्त्रेऽपि सिद्धार्थब्रह्मयाथात्म्यावबोधपर्यवसानं प्रयोजनमस्त्विति शङ्क्यम्; लोके वेदे च प्रयोजनरहितवाक्यप्रयोगस्यादर्शनात्। प्रयोजनं च प्रवृत्तिनिवृत्तिसाध्येष्टानिष्टप्राप्तिपरिहारात्मकमेवोपलभ्यम्। तदनुद्दिश्य न केनापि किञ्चिद्वाक्यं प्रयुज्यते श्रूयते वा। अतो वेदेऽपि तथात्वं युक्तम्। न च पुत्रस्ते जातो नायं सर्पो रज्जुरेषेत्यादिवाक्येषु हर्षभयनिवृत्त्यादिरूपपुरुषार्थान्वयदर्शनात्सिद्धार्थपराणामपि वाक्यानां प्रयोजनवत्त्वं शङ्कनीयम्। तत्रापि वाक्यार्थज्ञानादेव तत्प्राप्तेर्वाक्यस्य प्रतारणया प्रयोगेऽपि तत्सम्भवाद्वाक्यस्यार्थपरताया निश्चेतुमशक्यत्वात्। किञ्च, पचति गच्छतीत्यादिप्रयोगस्य प्रमाणान्तरेणावगमोत्तरमेव दर्शनात्, सिद्धार्थवाक्यानां गृहीतग्राहित्वात्प्रामाण्यमपि न। साध्यार्थपराणां तु गामानयेत्यादीनां प्रयोजनवत्त्वमगृहीतग्राहित्वं चाविवादम्। अतो लोकवद्वेदेऽपि वाक्यानां प्रवृत्तिनिवृत्तिपरत्वेन ज्ञानपरत्वेन वा प्रयोजन एव पर्यवसानमिति परिनिष्पन्ने ब्रह्मणि तात्पर्याभावान्न वेदान्तानां ब्रह्मणि तात्पर्यमित्येकः पूर्वपक्षः।

(ख) अपरस्तु—वेदान्तवाक्यान्यपि कार्यपरतयैव ब्रह्मणि प्रमाणाभावमुपतिष्ठन्ते। अद्वितीयं ज्ञानैकरसं परिनिष्पन्नमपि ब्रह्म अनाद्यविद्यया सप्रपञ्चतया प्रतीयमानं निष्प्रपञ्चं कुर्यादिति ब्रह्मणः प्रपञ्चविलायनद्वारेण विधिविषयत्वात्। स च विधिः, "न दृष्टेर्द्रष्टारं पश्येर्न मतेर्मन्तारं मन्वीथाः" इत्येवमादिर्बोध्यः। तत्र द्रष्टृदृश्यभेदशून्यं ब्रह्म कुर्यादित्येवमर्थसिद्धेः। तथाहि—दृशिमात्रं ब्रह्म कुर्यादित्यर्थः। गुणविधिरयं ब्रह्मणः सिद्धत्वात्, "दध्ना जुहोति" इतिवत्। धात्वर्थस्य दृशेर्भावनायां कर्मत्वेनान्वयः, न तु कारणत्वेन। गुणकामाधिकरणे "दध्नेन्द्रियकामस्य जुहुयात्" इत्यत्राश्रयत्वेन धात्वर्थान्वयस्वीकारेण तस्यानियतत्वात्। यद्यप्यत्र कर्मत्वबोधकद्वितीयाभावस्तथापि भावनायां धात्वर्थ–प्रेक्षण–सम्बन्धस्य प्रतीतेः स साध्यत्वेन स्वीक्रियत इति कर्मत्वेनान्वयो निराबाधः। द्रष्टारमित्यस्य धात्वर्थेन सहाश्रयतासंसर्गेणान्वयः, द्रष्टुः प्रेक्षणाश्रयाभेदात्। दृष्टेरित्यत्र पञ्चम्या भेदोऽर्थः। नञस्त्वभावरूपोऽर्थः। दृष्टिपदं स्वविषये स्वाविनाभूते दृश्ये लाक्षणिकं सद् दृश्यमात्रोपलक्षणम्। तद्भेदस्य द्रष्टृदृश्यभेदरूपस्य प्रतियोगितासम्बन्धेन नञर्थेऽभावेऽन्वयः। तस्य च स्वीयसम्बन्धेन धात्वर्थेऽन्वयः। एवं न मतेर्मन्तारमित्यत्रापि द्रष्टव्यम्। एवं च दृष्टेरित्यंशस्य द्रष्टृदृश्यभेदशून्यमित्यर्थः। द्रष्टारमित्यस्य ब्रह्मेत्यर्थः। चक्षुराद्यपेक्षया ब्रह्मणो द्रष्टृत्वात्। पश्येत् द्रष्टृदृश्याधारं पश्येत्। द्रष्टृदृश्यभेदरूपाधेयशून्यं कुर्यादित्यर्थः। तथाच—स्वनिबन्धनाया उपाधिनिबन्धनायाश्च कर्तव्यतायाः प्रामाण्ये विशेषाभावात् सिद्धस्यापि ब्रह्मणोऽनिष्पन्नतारूपेण साध्यत्वाविरोधात्, वेदान्तानां ब्रह्मणि कार्यपरतयैव प्रामाण्यम्, न स्वातन्त्र्येणेति द्वितीयः पूर्वपक्षः।

(ग) एवं तृतीयोऽपि। यद्यपि वेदान्तवाक्यानां स्वातन्त्र्येण सिद्धरूपब्रह्मस्वरूपपरतया न प्रामाण्यम्, तथापि "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" "य आत्माऽपहत-

पाप्मा सोऽन्वेष्टव्यः स विजिज्ञासितव्यः" "आत्मेत्येवोपासीत" "आत्मानं लोकमुपासीत" इत्या-दिर्[1]ध्यानविषयो नियोगः[2] स्वविषयभूतध्यानस्य ध्येयैकनिरूपणीयतया[3] ध्येयमाक्षिपन्, "सत्यं ज्ञान-मनन्तं ब्रह्म" "सदेव सौम्येदमग्र आसीत्" "इदं सर्वं यदयमात्मा" "अयमात्मा[4] ब्रह्म सर्वानुभूः" इत्यादिस्वरूपतद्विशेषपरवाक्यनिर्दिष्टस्वरूपमेवात्मानमाक्षिपतीत्येषां वाक्यानां ध्यानविधिशेषतयैव[5] प्रामाण्यात्, तद्विधिविषयीभूतध्यानशरीरानुप्रविष्टब्रह्मस्वरूपेऽपि[6] तात्पर्यात्, ब्रह्मस्वरूपमपि सिद्ध्य-त्येवेति चेत्, न; प्रवृत्तिनिवृत्तिप्रयोजनविधुराणां[7] वेदान्तवाक्यानां ध्यानविधिशेषत्वेऽपि ध्येयवि-शेषस्वरूपसमर्पणमात्र[8]पर्यवसानात्, तत्र स्वातन्त्र्येऽपि बालातुराद्युपच्छन्दनवाक्यवज्ज्ञानमात्रेणैव पुरुषार्थतासिद्धेः परिनिष्पन्नवस्तुसत्यतागोचरत्वाभावाद्ब्रह्मणः शास्त्रप्रमाणकत्वं न सम्भवतीति तृतीयः पूर्वपक्षः।

(घ) सिद्धान्तस्तु—समन्वयः सम्यगन्वयः पुरुषार्थतयान्वयः। तथाच "यतो वा इमानि भूता-नि जायन्ते" "सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयम्" "तदैक्षत बहु स्यां प्रजायेय" इति, "तत्तेजोऽसृजत्" "ब्रह्म वा इदमेकमेवाग्र आसीत्" "आत्मा वा इदमेकमेवाग्र आसीत्" "तस्मा-द्वा एतस्मादात्मन आकाशः सम्भूतः" "एको ह वै नारायण आसीत्" "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादिषु परमपुरुषार्थभूतस्यानवधिकातिशयानन्दस्वरूपस्य ब्रह्मणोऽभिधेयतयाऽन्वयाच्छास्त्रप्रमा-णकत्वं ब्रह्मणः सिद्ध्यत्येवेत्यर्थः। अन्यथा—पूर्वपक्षरीतिकशास्त्रार्थत्वे—सर्वप्रमाणानां यत्स्ववि-षयावबोधपर्यवसायित्वं तच्छास्त्रानिवर्तमानं शास्त्रस्याबोधकत्वरूपमप्रामाण्यमादध्यात्। न च प्रवृत्तिनिवृत्त्यन्वयविरहिणः प्रयोजनशून्यत्वं पुरुषार्थान्वयप्रतीतेः। स्वरूपपरस्यापि पुत्रस्ते जातः, नायं सर्पो रज्जुरेवेत्यादेर्वाक्यस्य हर्षभयनिवृत्त्यादिरूपप्रयोजनदर्शनाच्च। अयमर्थः—अनादिकर्मरू-पाविद्यावृतपरावरतत्त्वयाथात्म्यस्वरूपज्ञानानां देवादिदूर्वान्तानां क्षेत्रज्ञानां व्यवस्थितधारकपोषक-भोग्यविशेषाणां मुक्तानां स्वस्य चाविशेषेणानुभवसम्भवे स्वरूपगुणविभावचेष्टितैर्निरवद्यानन्दजननं ब्रह्मास्तीति बोधयदेव वाक्यं प्रयोजनपर्यवसायि। प्रवृत्त्यादिनिष्ठं तु यावत्पुरुषार्थान्वयबोधं न प्रयोजनपर्यवसायि। एवं भूतं कथं लभ्यत इत्यपेक्षायां तत्प्राप्त्युपायतया, "ब्रह्मविदाप्नोति परम्" "आत्मानमेव लोकमुपासीत" इति वेदनादिशब्दैरुपासनं विधीयते। यथा वेश्मनि निधिरस्तीति वाक्येन निधिसद्भावं ज्ञात्वा पश्चात् तदुपादाने प्रयतते। यथा च कश्चिद्राजकुमारो बालक्रीडा-सक्तो नरेन्द्रभवनान्निष्क्रान्तो मार्गभ्रष्टो नष्ट इति राज्ञा विज्ञातः स्वयं चाज्ञातपितृकः केनचिद्द्वि-वर्धितोऽधिगतवेदशास्त्रः षोडशवर्षो गुणसम्पन्नस्तिष्ठन् केनचिदभियुक्तेन प्रयुक्तं "पिता ते सर्व-लोकाधिपः प्रशस्तगुणः पुरवरे त्वामेव नष्टं पुत्रं दिदृक्षुस्तिष्ठति" इति वाक्यं शृणोति चेत्तदानी-मेवाहं तावज्जीवितः पुत्रोऽस्मत्पिता च सर्वसम्पत्समृद्ध इति महाहर्षान्वितो भवति। राजा च स्वपुत्रं जीवन्तं सकलगुणसम्पन्नं श्रुत्वाऽवाप्तसर्वार्थो भवति। पश्चाच्चावुभौ सङ्गच्छेते च। यत्तु

१ निदिध्यासनं तन्मते ध्यानं तदेकवाक्यतया विजिज्ञासादीनां ध्यानत्वमतो ध्यानविषय इत्यर्थः। २ नियोगो विधिरि-त्यर्थः। ३ ध्येय आत्मैवैको मुख्यस्तेन निरूपणीयतया, ज्ञानविषयत्वेन घटादिज्ञानवत्। ४ अयमात्मा जीवात्मा। ५ पारार्थ्यं शेषलक्षणम्। विध्यर्थतव्यलिङादीनां प्रामाण्यं तव्यादिविशिष्टवाक्यानां तु विधिशेषतयैव प्रामाण्यमिति प्रामाण्यपदमुक्तमन्वय-पदं विहाय। ६ आत्मविषयकं निदिध्यासनमुक्तमित्यादिरूपे ध्यानशरीरे अपिशब्दो विधिशेषेण साकं ब्रह्मस्वरूपसमुच्चायकौ। ध्यानमनुपध्याप्निरूपकतयानुप्रविष्टेत्यर्थः। ७ अत्र द्विपदद्वन्द्वं कृत्वा प्रयोजनशब्देन कर्मधारयस्ततस्ताभ्यां विधुराणामिति तत्पुरुषः। ८ मात्रशब्देन ध्यानव्यवच्छेदः।

परिनिष्पन्नवस्तुगोचरवाक्यार्थज्ञानमात्रेणापि पुरुषार्थपर्यवसानात् बालातुराद्युपच्छन्दनवाक्यवज्ञार्थसद्भावे प्रामाण्यमित्युक्तम्, तदसत्; निश्चितेऽर्थाभावे पूर्वं ज्ञातस्याप्यर्थस्य पुरुषार्थानुपयोगात्। बालातुरादीनामप्यर्थसद्भावभ्रान्त्या पूर्वं हर्षाद्युत्पत्तावपि पश्चात् तदभावनिश्चये हर्षादिनिवृत्तिदर्शनात्। एवमौपनिषदेष्वपि वाक्येषु ब्रह्मसत्तायां तात्पर्याभावे निश्चिते पूर्वमुत्पन्नमपि ब्रह्मज्ञानं न पुरुषार्थपर्यवसायि स्यात्। तस्मात्, "यतो वा इमानि" इत्यादिवाक्यं स्वोक्तप्रकारकब्रह्मास्तित्वं बोधयदेव प्रमाणं भवतीति सिद्धमिति श्रीरामानुजाचार्याः।

(ङ) प्रपञ्चविलायनद्वारेण ब्रह्मणः शास्त्रप्रमाणकत्वं न स्यात इति पुरोदीरिते पूर्वपक्षे प्रत्युत्तरमेतद्भास्कराणाम्। तथाहि—ब्रह्मण आत्मत्वेन नित्यत्वेन चाभ्युपगतस्य कथं कार्यत्वम्। नित्यत्वकार्यत्वयोर्विरोधात्। न चोपाधेर्विद्यमानत्वात्तद्विलायनेनोपधाननिवृत्तेस्तद्द्वारा कार्यत्वमिति वाच्यम्; पुरुषमात्रेण महादीनां महाभूतानां विलायनस्य कर्तुमशक्यत्वेन विधेर्वैयर्थ्यात्। समाधौ सुषुप्तौ च सर्वतिरोधानेऽपि व्युत्थानदशायां सर्वस्य पुरोऽवस्थानात्। प्रपञ्चप्रविलायने उपायाभावाच्च। प्रपञ्चेनैव प्रपञ्चप्रविलायनेऽनवस्थाप्रसङ्गाच्च। प्रपञ्चस्य साधारणत्वेन तत्प्रविलायने सर्वमुक्तिप्रसङ्गादिदानीं जगदप्रतीतिप्रसङ्गाच्च। अथात्मीयबन्धकारणस्याविद्याकामकर्मलक्षणस्य नाशनमेव प्रपञ्चप्रविलायनमिति मन्यसे, तन्न, न विसम्वादः। किञ्च, नियोज्यसापेक्षत्वेन तदाकाङ्क्षायां यदि तादृशप्रपञ्चकर्ता नियोगकर्ता वा नियोज्यः स्यात्, तर्हीदानीं नियोज्याभावान्नियोगो न क्रियेत। किञ्चात्र प्रतीतिवेलायां प्रपञ्चविलयोऽभ्युपगम्यते। अग्निहोत्रादौ तु प्रतीतिकालोऽनुष्ठानकालश्च भिन्नस्तदप्यसङ्गतम्। अत्रैव तत्रापि प्रतीतिमात्रेणैव नियोगसिद्धावनुष्ठानलोपप्रसङ्गात्। किञ्च, व्यापारो वा, अभावो वा? नाद्यः, तस्य सत्त्वेन प्रपञ्चतादवस्थ्यात्। न द्वितीयः, तस्यावस्तुत्वेन प्रतिज्ञानाच्छशविषाणतुल्यत्वेन तद्विषयकनियोगानुपपत्तेः। अथात्मज्ञानविषयको नियोगः परिकल्प्यते, आत्मज्ञानं कुर्यादिति; तदप्यसङ्गतम्, ज्ञानस्य प्रमाणप्रमेयाधीनतया क्रियावत्पुरुषेच्छाधीनतया नियोगविषयत्वेऽस्य तत्राशक्यवचनत्वात्। न च द्रष्टव्यादिविधिविरोधः। तस्योपायपरत्वात्। श्रोतव्यादिपदैस्तस्यैव विवरणात्। न चाध्ययनविधिनार्थज्ञानं विधीयत इति शङ्क्यम्। तत्रार्थज्ञानरूपफलायाक्षरग्रहणरूपाध्ययनस्य विधानात् फलस्याविधेयत्वात्। किञ्च, नियोगविषयभूतमात्मज्ञानं यद्यनुत्पन्नं तदा यागवत् साध्यस्याभावाद्विषयत्वासिद्ध्या तद्विषयकनियोगस्यासिद्धिः। यदि च श्रवणाद्युत्पन्नं तदा श्रवणादिनैवात्मज्ञानसिद्धेः किमन्तर्गडुना नियोगेन। न च फलार्थं तदपेक्षा। "तमेव विदित्वा" इति श्रुतौ नियोगनिरपेक्षाज्ज्ञानादेव मुक्तेरुक्तत्वात्। किञ्च, ज्ञाननियोगयोः परस्परमसम्बन्धे वाक्यानर्थक्यात्सम्बन्धोऽवश्यं वक्तव्यः। स च गुणप्रधानभावेनैव दृष्ट इत्येकस्यावश्यं प्राधान्यं वक्तव्यम्। तद्यदि ज्ञानस्येत्युच्यते तदा नियोगस्य वाक्यार्थतया प्राधान्यं सर्वत्र यत्प्रतिज्ञातं तद्धीयेत यदि नियोगस्यैव तदुच्यते तदा ज्ञानस्य नियोगार्थत्वान्मुक्त्यर्थत्वं न स्यात्। तस्योभयार्थत्वे प्रमाणाभावात्। न तु नियोगो मुक्त्यर्थः। अश्रुतत्वात्। तमेव विदित्वेति ज्ञानस्यैव साक्षात्तदुद्देशेन श्रुतत्वादिति। एतदग्रे च, यो रामानुजमतोपन्यासे प्रथीयः पूर्वपक्ष उक्तो "यद्यपि शास्त्रयोनित्वादि"त्यादिना; यश्च तृतीय उक्तो "यद्यपि वेदान्तवाक्यानामि"त्यादिना, तदुभयमुपन्यस्य, ततः पूर्ववदेव सृष्टिवाक्यप्रभृतीनां सम्यगन्वयः समन्वय इति समन्वयपदार्थमुक्त्वा युक्तीरेवमाहुः। न च तेषां ब्रह्मपराणामर्थान्तरकल्पना युक्ता। श्रुतहान्यश्रुतकल्पनाप्रसङ्गात्। न च कार्य एव प्रामाण्यं प्रतिपत्तुं युक्तम्; स्वरूपावबोधेऽपि प्रामा-

ण्यस्याविशिष्टत्वात् । अपौरुषेयत्वस्यैव प्रामाण्ये तन्त्रत्वात् । न चाग्निहोत्रादिवाक्येषु कार्यावगतिः प्रामाण्ये तन्त्रमिति शङ्क्यम्, तस्य चैत्यवन्दनादिवाक्येऽपि तुल्यत्वात् । अथापौरुषेयत्वे सत्यनपेक्षत्वं तन्त्रमिति विभाव्यते; तदा तु वेदान्तेऽपि तस्य तुल्यत्वात्स्वरूपपरत्वेऽपि प्रामाण्यमक्षुण्णमेव । किञ्च, पदानां स्वार्थप्रत्यायनेऽनपेक्षत्वं लोकवेदसाधारणम् । वाक्यानां तु लोके परापेक्षमेव प्रामाण्यम् । अन्यथा सपुष्पं तिष्ठति पश्येत्यादीनामपि तत्स्यात् । वेदे तु तेषामप्यपौरुषेयत्वात् प्रमाणान्तरानधिगतमूलकारणगमकत्वे तदनपेक्षमेव, मीमांसकमते प्रमाणान्तरानधिगतगन्तृत्वस्यैव प्रामाण्ये तन्त्रत्वाङ्गीकारात् । श्रौतानां तथैवेष्टत्वाच्च । अतः प्रत्यक्षवत् सृष्टिवाक्यस्यापि प्रामाण्यं तुल्यमेवेत्यादिभिर्बहुधा नियोगपरत्वं वाक्यानां दूषयित्वा शरीरेन्द्रियमनसामात्माधिष्ठितानां चेष्टाविशेषः प्रयत्नः सर्वधात्वर्थसाधारणः । स एव च साध्यत्वाद्वाक्यार्थो लोकवेदयोः । नियोगस्तु न वाक्यार्थः । पूर्वमीमांसाभाष्ये पूर्वोत्तरतन्त्रसूत्रयोश्च तत्सूचकाक्षराभावात् । किन्तु, प्रवृत्तौ निमित्तमात्रं सः, रागादिवत् । भावना तु भवति वाक्यार्थः । ये प्राहुः किमपि भावयेदिति ते स्वर्गकामादिपदसम्बन्धात्स्वर्गं भावयेदिति ब्रूयुरिति भावार्थाधिकरणभाष्ये स्पष्टत्वात् । कृतप्रयत्नापेक्षस्त्विति व्याससूत्रेऽपि स्पष्टत्वाच्चेति वाक्यार्थविषये भावनामाद्रियन्तः । यत् पुनर्वेदान्तानां कर्तृप्रतिपादनपरत्वं वा जपार्थत्वं वेति नियोगवादिभिरुक्तं तत्तु सर्वजगत्कारणस्य ब्रह्मणो नियोज्यत्वाभावान्नियोज्यस्य जीवस्य सत्ताया अहमिति प्रत्यक्षेणैव सिद्धेरात्मवादे साधितत्वाच्च न वेदान्तस्य तत्परत्वं प्रकरणाद्यभावाच्च न कर्मशेषजपार्थत्वमित्येवं नियोगवादिनं दूषयित्वा, ततो भेदाभेदवादं स्थापयित्वा, ततो मायावादिमतं दूषयित्वा ज्ञानकर्मसमुच्चयः स्थापितः । एवमुक्तमतद्वये त्रिसूत्र्या जन्माद्यधिकरणसमाप्तिः ।

(च) शङ्कराचार्यमतेऽप्येत एव पूर्वपक्षाः । सिद्धान्तस्तु मायावादेन निर्विशेषब्रह्मजीवैक्यप्रतिपादनपरः । अधिकरणसमाप्तिस्तु श्रुतत्वाच्चेति दशमसूत्रे ।

(छ) शैवमतेऽप्येत एव पूर्वपक्षाः । सिद्धान्ते तु समन्वयो नामोपक्रमादिभिर्लिङ्गैस्तात्पर्यनिर्णय इत्युक्त्वा तैः शिवपरत्वं वेदान्तवाक्यानामित्युक्तम् ।

(ज) माध्वास्तु शास्त्रयोनित्यलक्षणस्य ब्रह्मशिवादिष्वतिव्याप्तिरित्यलक्षणमिदमिति पूर्वपक्षे, तच्छब्दस्य विष्णुवाचकत्वमङ्गीकृत्यान्वयादुपक्रमादिलिङ्गसमुदायाद्विष्णुरेव जगज्जन्मादिकारणत्वेन शास्त्रयोनिर्न तु हिरण्यगर्भादिरिति सिद्धान्तयन्ति । तदेतन्मतं "अनुकृतेस्तस्य च" इत्यधिकरणे सर्वेषां ब्रह्मण्यनुकरणत्वस्य व्यवस्थाप्यत्वादत्रैतच्चिन्तनस्यानुपयुक्तत्वाच्च ।

(११) उपरिनिर्दिष्टानां मतानामसङ्गतिप्रदर्शनात्पूर्वं सर्वस्यापि पूर्वोत्तरकाण्डरूपस्य वेदस्य क्रियापरत्वं निवार्य ब्रह्मज्ञानस्य च पूर्वानुपयोगित्वं च निरस्य पूर्वोत्तरयोरन्योन्योपयोगित्वे न कोऽपि दोष इति प्रतिपाद्य—

(१२) "किञ्च, वेदान्तवाक्यानामसिञ्छास्त्रे" इत्यादिना पुरोदीरितानां मतानां निरसनम् । तच—

(क) शङ्कराचार्यैः सर्वज्ञं सर्वशक्ति जगदुत्पत्तिस्थितिलयकारणं ब्रह्म वेदान्तशास्त्रादवगम्यत इति प्रतिज्ञाय, समन्वयादिति हेतुः, सर्वेषु वेदान्तेषु वाक्यानि तात्पर्येणैतस्यार्थस्य प्रतिपादकत्वेन

समनुगतानीत्येवं व्याख्यातः । तत्रोक्तधर्मवत्त्वसाध्यकं ब्रह्मपक्षकं वाक्यासमनुगतत्वहेतुकमनुमानमभिसंहितं प्रतीयते।

(ख) भास्कराचार्यैस्तु ब्रह्मस्वरूपं शास्त्रमवबोधयति, न केवलं कार्यमेव । कुतः ? समन्वयात् । समन्वितानि हि ब्रह्मस्वरूपप्रतिपादनपरत्वेन सृष्टिप्रकरणगतानि वाक्यानीत्येवं हेतुर्व्याख्यातः । तेन तन्मते शास्त्रपक्षकमनुमानम् ।

(ग) तथैव शैवमतेऽपि ।

(घ) माध्वेऽपि तथा ।

(ङ) रामानुजाचार्यास्तु समन्वयः सम्यगन्वयः पुरुषार्थतयान्वय इति हेतोरर्थमुक्त्वा परमपुरुषार्थभूतस्यानवधिकातिशयानन्दस्वरूपस्य ब्रह्मणोऽभिधेयतयान्वयाच्छास्त्रप्रमाणकत्वं सिद्ध्यत्येवेति व्याचख्युः ।

(च) तत्र शाङ्करे व्याख्याने यथावस्थिते हेतोः स्वरूपासिद्धत्वम् । समनुगतत्वस्य शास्त्रनिष्ठतया पक्षधर्मत्वाभावात् । अतः शाङ्करमतेऽपि शास्त्रपक्षकमेवानुमानं वक्तव्यम् ।

(छ) एवं च, वेदान्तशास्त्रं ब्रह्मस्वरूपस्य प्रतिपादकं तद्वाक्यानामेतदर्थप्रतिपादने समनुगतत्वात्, यदीयं वाक्यं यदर्थप्रतिपादने तात्पर्येण समनुगतं तच्छास्त्रं तस्यार्थस्य प्रतिपादकम्, क्रियार्थप्रतिपादकपूर्वकाण्डवदित्यनुमानस्वरूपम् । एतदेवोपरिनिर्दिष्टेषु मतेष्वपि, कर्मवादिवारणाय प्रयुक्तमिति फलति ।

(ज) तत्रेदं विवेचनीयम्—किमयं समन्वयादिति हेतुरविप्रतिपन्नः सिद्ध उत साध्यः । तत्राविप्रतिपन्न इति तु वक्तुं न शक्यम् । तथा सति पूर्वपक्षस्यैवानुत्थानप्रसङ्गात् । नापि सिद्धः । अस्मिञ्छास्त्रे सन्देहनिराकरणद्वारा तस्यैव प्रतिपाद्यत्वात् । सिद्धत्वेऽग्रिमस्य समन्वयसाधकग्रन्थस्य वैयर्थ्यप्रसङ्गाच्च । अतस्तस्य सिद्धवन्निर्देशो न युक्त इति । अथ बुद्धिस्थं यथा प्रतिज्ञायते, तथा बुद्धिस्थमत्र हेतूक्रियत इति समन्वयसाधनप्रतिज्ञागर्भितस्य हेतोः सिद्धवन्निर्देशोऽपि न दोष इति विभाव्यते तदाप्ययुक्तं प्रतिज्ञागर्भितहेतुत्वम्, अनुपयोगात् । तथा च भाट्टप्राभाकरयोस्तदनुसारिण एकदेशिनश्च निराकरणायायं हेतुरेवं व्याख्यायते । तत्र प्रतिज्ञाया बुद्धिस्थत्वेन वादिनिग्रहवेलायां साधनस्याभावेन हेतोः साध्यसमतया वादिनिग्राहकत्वादनुपयोगः। किञ्च, यैरेवं व्याख्यायते, तैरपि वेदान्तानां ब्रह्मप्रतिपादकता न स्वीक्रियते इति तु न, किन्तु गौणत्वेन । तथा सति गौणमुख्यभाव एव विवादो न तु ब्रह्मप्रतिपादकत्वे, इति विवक्षितासाधकत्वादप्यनुपयोगः । अथ सम्यक्त्वकुक्षौ मुख्यतां निवेश्य ब्रह्मणो मुख्यतया प्रतिपादनेऽनुगतत्वादित्येवं विभाव्यते, तदापि शाङ्कराणां शैवानां च मतमयुक्तम् । आनन्दमयाधिकरणखण्डनाच्छिवरूपप्रतिपादनाच्च । भास्कररामानुजाचार्यौ तु नानन्दमयखण्डकौ नापि शिवरूपप्रतिपादकौ । शाङ्करैर्हि जगत्कारणरूपे वाक्यानां समनुगतत्वं व्याख्यायाग्रे उच्यते—नच तेषां कर्तृस्वरूपप्रतिपादनपरतावसीयते, तत् केन कं पश्येदिति क्रियाकारकफलनिराकरणश्रुतेरिति । ततश्च तन्मते यावद्धर्मशून्ये रूपे समन्वयो विचारितो भवति । तेन रूपेण समन्वयविचारस्त्वाध्यायसमाप्त्याशास्त्रसमाप्तिवाचकेष्वपि सूत्रेषु न दृश्यते । सर्वत्र तत्तद्धर्मपुरःसरं कर्त्रादिरूपेणैव तेषां तेषां वाक्यानां ब्रह्मप्रतिपादकताया निर्णीतत्वात् । अतोऽपि व्याख्यातावस्य हेतोरनुपयोगः । एवं शैवमतस्याप्यसङ्गति-

र्योध्या । शिवरूपेणापि निर्णयस्य सूत्राक्षरेष्वनुपलम्भात् । शैवमतविचारस्तु पण्डितपुरन्दरैर्गोस्वामिश्रीमत्पुरुषोत्तमचरणैः ब्रह्मवादे, पण्डितकरभिन्दिपालाख्ये वादे च निपुणतया कृत एवेति नात्र तद्विस्तरः ।

(१३) एवं मतान्तराणि निरस्य समवायिकारणत्वेन विकृतत्वमाशङ्क्य स्वाभिमतोऽविकृतपरिणामवादश्चात्रोपस्थापितो भगवता भाष्यकारेण । अविकृतपरिणामवादस्तु "आत्मकृतेः परिणामात्" इत्यत्र सूत्रकारेणैव स्थापितः ।

(१४) वैषम्यनैर्घृण्यादिकमपि सूत्रकारेणैव खण्डितम् । एवमध्यारोपापवादादिकं च तत्र तत्र प्रकाशकारैरन्यैश्च खण्डितमेवेति विस्तरभिया नात्र प्रपञ्च्यते ।

(१५) सर्वे वेदान्ताः स्वार्थे एव युक्तार्था इति श्रीमदाचार्यचरणानां राद्धान्तः, भाष्यस्यास्य प्रत्यक्षरे द्रष्टव्य इति निष्कर्षः समन्वयाधिकरणस्यास्य ।

भवेदपि वैमत्यं विपश्चित्प्रवराणां तथापि "विद्वद्भिः सर्वथा श्राव्यं ते हि सन्मार्गरक्षकाः" इति भगवद्भाष्यकारस्य मुद्रालेखः । अत एव प्रायः प्रतिसूत्रं तत्तन्मतमनूद्यैव टिप्पण्यामधिकरणान्ते योजितायां समीक्षायां च विवेचनमपि तुलनात्मकविचारसरणिमधिकृत्यैव क्रियत इत्यवश्यमवधेयम् ।

त्रिसूत्र्यां सन्त्यन्येऽपि केचन विशेषतो विचारणीया विषयाः, परं विस्तरभिया वा, अन्यत्र तद्विचारस्योपयोगितया वा मदीयमतिमान्द्याद्वाऽऽलस्याद्वोपेक्षाबुद्धित्वाद्वा नात्र तदनुबन्धः ।

त्रिसूत्र्यां प्रथमेनाधिकरणेन शास्त्रारम्भः, द्वितीयेन लक्षणं प्रमाणं च, तृतीयेन च समन्वयो विचारितः । एवं च ब्रह्मैव जगतोऽभिन्ननिमित्तोपादानकारणमिति त्रिसूत्रीराद्धान्तः ।



## ४ ईक्षत्यधिकरणम् ।

( त्रिसूत्र्या अनुसन्धानम् )

एवं ब्रह्मजिज्ञासां प्रतिज्ञाय किंलक्षणकं ब्रह्मेत्याकाङ्क्षायां जन्मादिसूत्रद्वयेन वेदप्रमाणकंजगत्कर्तृ समवायि चेत्युक्तम् । एवं त्रिसूत्र्या जिज्ञासालक्षणविचारकर्तव्यता सिद्धा ।

( शास्त्रेऽस्मिन् चतुर्धा विचारः )

तत्र ब्रह्मणि चतुर्धा विचारः, स्वरूपसाधनफलप्रतिपादकानि वेदान्तवाक्यानि त्रिविधानि, मतान्तरनिराकारणं च । तत्र स्वरूपे विचारिते मतान्तरनिरासव्यतिरेकेण साधनफलयोरनुपयोगात्, अतः प्रथमं स्वरूपनिर्णयः । तदनु, मतान्तरनिरासः । तदनु साधनानि, फलं चेति ।

( प्रथमाध्यायार्थप्रतिपादनम् )

तत्र प्रथमेऽध्याये स्वरूपवाक्यानि विचार्यन्ते । तानि द्विविधानि । सन्दिग्धानि, निःसन्दिग्धानि च । तत्र निःसन्दिग्धानां निर्णयो न वक्तव्यः । सन्दिग्धानि पुनश्चतुर्विधानि । कार्यप्रतिपादकानि, अन्तर्यामिप्रतिपादकानि, उपास्यरूपप्रतिपादकानि, प्रकीर्णकानि चेति ।

---

एवं रीत्या लक्षणं प्रतिपाद्य ब्रह्मणः वागाद्यविषयत्वेऽपि विचारकर्तव्यतां प्रतिपादयितुं सप्तभिः सूत्रैः ईक्षत्यधिकरणमारचयन्ति–एवमित्यादिना । पूर्वोक्तमनुवदन्ति–ब्रह्मजिज्ञासेत्यादिना । सिद्धेति । त्रयाणां कारणावश्यकता सूचितेत्यर्थः ।

सूत्रत्रयोक्त एवार्थो अध्यायचतुष्टयेन प्रतिपाद्यत इति बोधयितुमाहुः—तत्र ब्रह्मणीति । ननु मतान्तरनिराकरणप्रतिपादकवेदान्तवाक्याभावात्किमर्थं तद्विचार इत्यत आहुः—व्यतिरेकेणेति । फलं चेति । क्रमेणाध्यायचतुर्णां निर्णय इत्यर्थः ।

प्रथमाध्ययस्य पादचतुष्टये क्रमेण विचार्याणि वाक्यान्याहुः—कार्येति । निःसन्दिग्धानामिति । "सत्यं ज्ञानमनन्तं ब्रह्म"त्यादिवाक्यानामित्यर्थः । अत एव विचारांशे कार्यलक्षणस्यैव मुख्यत्वमिति भावः ।

---

१ जिज्ञासासूत्रे ब्रह्मजिज्ञासा प्रतिज्ञाय, किंलक्षणं ब्रह्मेत्याकाङ्क्षाया जन्मादिसूत्रद्वयेन वेदप्रमाणको जगत्कर्ता समवायी चेत्युक्तम् । तत्र पूर्वसूत्रे जिज्ञासापदमहिम्ना ज्ञानेच्छास्मारणेन "अविज्ञातं विजानता विज्ञातमविजानताम्" इति ब्रह्मस्वरूपमर्यादाबोधनाद्ब्रह्मज्ञानोत्तरमपि तस्याः सर्वदैव कर्तव्यता बोधिता । द्वितीयसूत्रे स्वरूपलक्षणसूचनव्यतिरेकेणैव कार्यलक्षणकथनेन तस्य गौणत्ववारणात् तत्करणावश्यकता सूचिता । तृतीयसूत्रे समवायित्वनिर्णायकहेतुकथनेन विरुद्धधर्माधारत्वबोधनाद्विचारकरणावश्यकता च सूचितेति त्रिसूत्र्या सर्वोऽपि शास्त्रार्थः सङ्क्षेपेणोक्तः । स एवाग्रे विस्तरेण वक्ष्यते ।

२ चतुर्धा विचार शास्त्रार्थः । तत्र ब्रह्मस्वरूपस्य सर्वोपजीव्यत्वात्प्रथमेऽध्याये स्वरूपविचारः प्रमाणबलेन । ततः स्वरूपे विचारितेऽपि यदि प्रमाणयोरितरेतरविरोधः स्यात्, यदि च मतान्तरनिराकरण न क्रियते, तदोक्तं वक्ष्यमाणं च न दृढीभवेत्, अतो द्वितीये प्रमाणविरोधपरिहारो मतान्तरनिराकरण च । ततो दृढीभूते पूर्वोक्ते, तदनन्तरं तृतीये साधनानि । ततश्चतुर्थे फलमिति चतुर्णामध्यायानामर्थः ।

३ ब्रह्मस्वरूपप्रतिपादकानि । कारणब्रह्मस्वरूपप्रतिपादकानीति यावत् ।

## ( प्रथमपादार्थ निर्देशः )

तत्र प्रथमपादे कार्यवाक्यानां निर्णय उच्यते । सच्चिदानन्दरूपेणाकाशवायुते-जोवाचकवाक्यानि षड्विधान्यपि निर्णीयन्ते । अन्यत्रान्यवाचकान्यपि वेदान्तेषु भगवद्वाचकानीति । तत्र लक्षणविचार एव सद्रूपाणां वाचकता निर्णीता । चिद्रूपस्य ज्ञानप्रधानस्य निर्णयार्थमीक्षत्यधिकरणमारभ्यते सप्तभिः सूत्रैः ।

---

**प्रथमपादे** शब्दसन्देहनिवारके पादे । कार्यवाक्यानां वेदानाहुः—**सच्चिदानन्देति** । सद्रूपेण सत्प्रतिपादकानि, चिद्रूपेण चित्प्रतिपादकानि, आनन्दरूपेणानन्दप्रतिपादकानि त्रीणि; आकाशवायुप्राण-वाचकानि त्रीणि; एवं रीत्या षड्विधानि वाक्यानीत्यर्थः । नन्वाकाशादिपदानां भूताकाशवाचकत्वं प्रसिद्धमत आहुः—**अन्यत्रेति** । अन्यत्र लोके । **वेदान्तेषु** । छान्दोग्यादिषु । "अस्य लोकस्य का गति-रित्याकाश इति होवाच" त्यादिवाक्येषु । **तत्र** । उक्तविधेषु षट्सु मध्ये । **लक्षणविचारे** । पूर्वसूत्राभ्यां कृत्वेत्यादिः । **सद्रूपाणाम्** । "सदेव सौम्येदमग्र आसीदि" त्यादिकार्यवाचकानां वाक्यानां मध्ये सदिति पदानामित्यर्थः । **वाचकता**, ब्रह्मवाचकता । **निर्णीता** । एवं चित्पदानामीक्षत्यधिकरणे । आनन्दप-दानामानन्दमयाधिकरणे । आकाशवाचकपदानां, आकाशस्तल्लिङ्गाधिकरणे । वायुवाचकप्राणादिपदानामत एव प्राण इति प्राणाधिकरणे । तेजोवाचकानां ज्योतिःशब्दानां ज्योतिश्चरणाभिधानादित्यधिकरणे । एवं रीत्या षड्विधानां वाक्यानां प्रथमे पादे निर्णयं कृत्वा शब्दसन्देहो निवार्यते इति भावः । ईक्षत्यधिकर-

---

१ लोके शक्तिसङ्कोचेनान्यवाचकानि पदान्यपि साहजिक्या शक्त्या ब्रह्मैवाभिदधतीति श्रुतेस्तात्पर्यनिर्णयेन फलतीति ।

२ सूत्रसङ्ख्यातात्पर्योक्तिरियं पुत्रेष्टिन्यायेन । तत्र, प्रथमस्य तुरीये द्वादशाधिकरणम्–"पूर्ववन्तोऽविधानार्थास्तत्सामर्थ्यं समाम्नाये" इत्यादि । तत्रेत्थमधिकरणोपपादनम्—"वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते" इत्यनेन यागं विधाय, "यद-ष्टाकपालो भवति गायत्र्यैवैनं ब्रह्मवर्चसेन पुनाति । यन्नवकपालस्त्रिवृतैवास्मिन् तेजो दधाति । यद्दशकपालो विराजैवास्मिन्नन्नाद्यं दधाति । यदेकादशकपालस्त्रिष्टुभैवास्मिन्निन्द्रियं दधाति । यद्द्वादशकपालो जगत्यैवास्मिन्पशून्दधाति" इत्यष्टाकपालनवकपाल-दशकपालैकादशकपालद्वादशकपालाननूद्य "यस्मिन् जात एतामिष्टिं निर्वपति, पूत एव तेजस्व्यन्नाद इन्द्रियावी पशुमान् भवति" इति श्रुतम् । तत्र द्वादशत्वे अष्टत्वादेः प्राप्तत्वादष्टाकपालशब्दो वैश्वानरयागनामधेयमित्येकः पक्षः । स्वरूपेण प्राप्ता-वपि परिच्छेदकत्वेन प्राप्त्यभावाद्गुणविधय एते । अष्टत्वमष्टाकपालं द्रव्यं वा पूर्वयागे विधीयते । उपक्रमोपसंहारैक्येन चैक-वाक्यत्वप्रतीतेर्न द्वादशकपालस्योत्पत्तिशिष्टता । अथवा, अस्तु वाक्यनानात्वम् । तथापि "यद्द्वादशकपालो भवति" इत्यने-नैव तद्विधिः । वैश्वानरवाक्ये तत्पदमनुवाद एवेति द्वितीयः पक्षः । ब्रह्मवर्चसादिफलोद्देशेन प्रकृतयागाश्रिता गुणा एव अष्टा-कपालादयो विधीयन्त इति तृतीयः । सिद्धान्ते तु सम्भवत्येकवाक्यत्वे तद्भेदस्यान्याय्यत्वात् प्रकृतयागस्यैवेयं सर्वा स्तुतिः । तदङ्गभूतद्वादशकपालावयवो‌ऽष्टाकपालादिरप्येकैकफलसाधनं तत्र सर्वावयवोपेतद्वादशकपालस्य सर्वफलप्रयोजकत्वे कः सन्देह इति यागस्तुतिः । अष्टाकपालपदं चाग्नेयाष्टाकपाले शक्तं गौण्या वृत्त्याऽष्टत्वाश्रयकपालश्रपितत्वसादृश्येन द्वादशकपालावयवे गौणम् । तेन च अवयवद्वारा अवयवी द्वादशकपालो लक्ष्यते । तेन लक्षणया यागस्तुतिरिति खण्डदेवाः । अनेतत्सम्प्र-दायानुयायिनः । सद्योत्पन्नशिशोर्गायत्र्यादिजनितपूततासिद्ध्यर्थमष्टादिसङ्ख्याककपालसंस्कृतपुरोडाशा न न्यूनाधिकसङ्ख्याक-कपालसंस्कृतपुरोडाशाः । एवं त्रिवृदादिवाक्येष्वपि तत्तत्सङ्ख्याबोधने किं गमकमिति चेत्, मैवम्; गायत्रीपादस्याष्टाक्षरत्वेना-ष्टाकपालसंस्कृतपुरोडाशप्रचारे उत्पन्नशिशोर्गायत्र्यैव पावित्र्यं नन्दमितुमर्हति नान्यथापि । तथा च श्रुतिः "गायत्री चतु-र्विंशत्यक्षरा त्रिपदा" इति, एतदभिप्रायेणैवाचार्यैः पुरुषोत्तमसहस्रनामस्तोत्रे "गायत्री च तथा छन्दो देवता पुरुषोत्तमः" इति द्वात्रिंशदक्षरेषु गायत्रीत्युक्तं श्लोकस्य चतुष्पात्त्वात् । किञ्च, गायत्र्याश्चतुर्थोऽपि पादोऽस्ति बृहदारण्यके गायत्र्युपासने "अष्टावक्षराण्यष्टौ वा एकं गायत्र्यै पदम्" इत्यादिना पादत्रयमुक्त्वा "अथास्या एतदेव तुरीयं दर्शितं पदम्" इति श्रुतेः । एतदित्यस्य पादत्रयात्मकमित्यर्थः । तथा च गायत्र्यास्त्रिपादीत्वेनैकैकस्य पादस्याष्टाक्षराणि भवन्तीति गायत्रीजन्यपावित्र्या-पेक्षायामष्टाकपालसंस्कृतपुरोडाशप्रचारो युक्त इति । एवमन्यत्रापि । एतच्च स्फुटम् "त्वमेव पूर्वसर्गेऽभूः" इत्यस्य सुबोधिनी-टिप्पण्याम् । अन्यत्र यथा "आत्मना प्रथमा लीला मनसा तु ततः परा" इत्याद्युक्ते रासके । आत्मा, जीवः, यशः, मनः, चक्षुः,

सप्तद्वारत्वाज्ज्ञानस्य ।

( चतुर्थाधिकरणे सन्देहावतारणम् )

तत्रैवं सन्देहः । ब्रह्मणः स्वप्रकाशत्वेन सर्वप्रमाणाविषयत्वात् “यतो वाचो निवर्तन्ते” (तै. २-४ ) इति श्रुतेश्च विचारः कर्तुं न शक्यते । स्वप्रकाशत्वविरोधा-

---

णस्य प्रयोजनमाहुः—चिद्रूपस्येति । सप्तेति । पञ्च चक्षुरादीनि मनो जीवश्चेति सप्तेत्यर्थः । नैय्यायिकमते ज्ञानशब्दस्य गुणवाचकत्वेऽप्यत्र ब्रह्मवाचकत्वं बोध्यम् ।

संशयमाहुः—तत्रैवमिति । स्वप्रकाशत्वविरोधादिति । “तमेव भान्तमनुभातिसर्वमि”त्यादि-

---

लीलाः, क्रियाः, ज्ञानं पञ्चरात्रात्; ऐश्वर्यं वाक् भागवतरसनं “स्वादु स्वादु पदे पदे” इति भागवतात् धर्मो प्राणः, त्वक् वैराग्यम्, प्राणवैराग्ययोर्भगवत्त्वात्, इन्द्रियं घ्राणः श्रीः । अत्र चक्षुर्मनो वा वक्तव्यमिन्द्रियमुख्यत्वात्तथापीन्द्रियश्रीः शृङ्गारं विना न भवतीति पृथ्वी श्रीः । तन्मात्रा, गन्धस्तु ग्राहकघ्राणः, शरीरं, श्रोत्रं, वीर्यं नभस्त्वात्, रूपं समष्टिः । अष्टरूपाणि कृतकृत्यीकुर्वन्तीति । अत्राष्टाकपालत्वादयो गुणाः कर्मान्तर्विधायकाः, उत वैश्वानरस्तावका वेति संशये कर्मान्तरविधायका इति पूर्वपक्षे सते पञ्चाशदिति न्यायेन द्वादशकपालेष्वष्टादीनां सम्भवात्स्तावका एवेति पूर्वतन्त्रसिद्धान्तः । न च सङ्ख्यायाः पुरोडाशविशेषणतया श्रावणेन पुरोडाशेऽष्टाकपालत्वादिरूपतद्धर्मे वा पर्यवसानाभेदं सम्प्रच्छव इति वाच्यम् । “क्षप वै सोमेनेजानाद्देवताश्च यज्ञश्च क्रामन्त्याग्नेयं पञ्चकपालमुदवसनीयं निर्वपेत्, अग्निः सर्वा देवताः, पाङ्क्तो यज्ञो देवताश्चैव यज्ञं चावरुन्धे गायत्रो वामिर्गायत्रश्छन्दस्तं छन्दसा व्यवर्धयति यत्पञ्चकपालं करोति । अष्टाकपालः कार्योऽष्टाक्षरा गायत्री गायत्रो वा अग्निः गायत्रं छन्दः स्वेनैवैनं छन्दसा समर्धयति पङ्क्तौ याज्यानुवाक्ये भवतः पङ्क्तो यज्ञः तेनैव यज्ञानैती”त्युदवसानीयविधायकश्रुतेस्तथा निश्चयात् । तत्र हि अष्टाकपालपुरोडाशविधाने तस्मिन् पञ्चकपालत्वस्य सत्त्वेऽपि तदनादृत्य याज्यानुवाक्ययोः पञ्चसङ्ख्याकत्वविधानेन पञ्चसंख्याकयज्ञादनपगमविधानतस्तथा निश्चयो ज्ञेयः । अतः सङ्ख्यायाः सतात्पर्यकत्वमपेक्षितायां निस्तात्पर्यकत्वमिति दिक् ।

१ मनसोऽधिकरणत्वेन द्वारत्वमिव ब्रह्मणश्चिद्रूपांशो जीव इति द्वारत्वम् । चक्षुरादिद्वारा मनसा जीवस्य द्रष्टृत्वमिव जीवद्वारा ब्रह्मणो द्रष्टृत्वात् । ‘आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः” इति श्रुतेः । न च द्रव्यत्वम्; स्वप्ने चिद्रूपतानुभवात् ।

२ तत्र विचारस्य शास्त्रार्थत्वाज्जिज्ञासासूत्रे विषयविषयिभावः सङ्गतिः । शास्त्रस्याध्यायेषु, तेषां पादेषु, पादानां स्वावयवेषु च सामान्यविशेषभावः । अधिकरणानां परस्परं भिन्नाः सङ्गतयः । सङ्गतिर्नाम सावधानेन पुंसा प्रयुज्यमानं यद्वाक्यं तत्प्रयोजकत्वेन योऽर्थः स्मृतः, तस्योपेक्षानर्हत्वम् । उपेक्षानर्हत्वं च क्वचिद्धेतुतया क्वचिदुपोद्घातेनेत्येवमनियतैर्धर्मैः । वेदान्तदर्शने तदियत्तानियामकस्यानुक्तत्वादिति श्रीकृष्णचन्द्राः । नैयायिकास्तु सङ्गतिस्त्वनन्तराभिधानप्रयोजकाकाङ्क्षाजनकज्ञानविषयोऽर्थः । इदं वाक्यमेतद्वाक्यानन्तरं कस्मादुक्तमीदृशी या जिज्ञासा सा अनन्तराभिधानप्रयोजकाकाङ्क्षा । तज्जनकं तत्स्वरूपोपयोगि यज्ज्ञानं तत्र विषयत्वेन योऽर्थः प्रकाशते सोऽर्थः सङ्गतिशब्दवाच्यः । तद्भेदाश्च षट्—“सप्रसङ्ग उपोद्घातो हेतुताऽवसरस्तथा । निर्वाहकैककार्यत्वे षोढा सङ्गतिरिष्यते” इति । तत्र स्मृतस्योपेक्षानर्हत्वं प्रसङ्गः । प्रकृतार्थसाधकत्वमुपोद्घातः । उपजीव्यकोपजीवकभावो हेतुता । सा सापेक्षत्वादुभयसङ्ग्राहिका । प्रतिबन्धकीभूतजिज्ञासानिवृत्तावावश्यकवक्तव्यत्वमवसरः । निर्वाहप्रयोजकतानिर्वाहकत्वम् । एकजातीयकार्यजनकत्वमेककार्यत्वम् । इदं च सङ्गत्यभिधानमात्रोपयोगित्वात् स्वरूपकथनमात्रम् । लक्षणं तु प्रसङ्गाद्यन्यतमत्वमेव । तेन पूर्वस्येष्टसाधनत्वाधाराधेयभावादाव्याप्तावपि न दोष इति । अत्र गदाधर–भवानन्द–रामनाथभट्टादीनां वैमत्यमत्रैवाग्रे प्रदर्शयिष्यते । यथा प्रत्यक्षनिरूपकवाक्यनिरूपणानन्तरमनुमाननिरूपकवाक्योक्तिस्तत्रानुमाननिरूपकमिदं वाक्यं प्रत्यक्षनिरूपकवाक्यानन्तरं कस्मादुक्तमीदृश्याः, अनन्तराभिधानहेतुविषयकं यज्ज्ञानं तद्विषयिणी या इच्छा तद्रूपाया जिज्ञासायाः, स्वरूपं ज्ञानेच्छारूपं तत्रोपयोगिज्ञानपूरकत्वेन कार्यत्वमनुमानमिति तन्निरूपकवाक्ययुक्तमित्येवमुपयोगि यज्ज्ञानं कार्यत्वत्वेनोपस्थितं कार्यत्वं तद्विषयज्ञानं तत्र विषयत्वेन ज्ञाननिरूपितविषयतावच्छेदकविशेषात्मकेन कार्यत्वत्वेन प्रकाशमानस्य धर्मस्योपजीव्योपजीवकत्वस्य सङ्गतित्वमिति । एवं कारणत्वस्यापि, न तु कारणत्वस्यैव । अत्र प्रत्यक्षोपजीवकज्ञानमुपजीवकत्वत्वेनोपस्थितोपजीवकत्वसामान्यप्रकारेण ततः कार्यविशेषान्वेषणनिवृत्तिस्त्वनन्तरमनुमानपददर्शनात् । एवं हि स्वरूपोपयोगः स्यात् । अनुमाननिरूपकमिदं वाक्यं प्रत्यक्षनिरूपकवाक्यानन्तरं कस्मादुक्तमिति पूर्वोक्तजिज्ञासायां ततश्चानुमानं प्रत्यक्षस्य कार्यत्वात्तदनन्तरमुक्तमिति विशेषावधृतिरिति । इयं च जिज्ञासा व्याख्यातुरेव न निरूपयितुः । निरूपयितुरपि या अन्यकरणानन्तरं मया कस्मादुक्तमिति जिज्ञासासम्भवात् । न च निरूपितप्रत्यक्षानुमानयोः सम्भवतीयम्, उक्तमिति भूतपदघटितत्वादिह त्वनुमानस्य निरूपयिष्यमाणत्वादिति वाच्यम्; तत्कालीनप्रत्यक्षानुमानयोर्निरूपयितुरपि

वा ग्रन्थकरणानन्तरं मया कस्मादुक्तमिदं स्यादिति जिज्ञासासम्भवात् । वस्तुतस्तु "धातुसम्बन्धे प्रत्ययाः" इति
सूत्रेण भविष्यत्काले लुङ्स्यादित्यध्याहारः । मनोरमायां विशेषादुल्लेखात्, तथाप्युदाहरणानुरोधेन श्रूयमाणतिङन्तस्थले एव
सूत्रप्रवृत्तिस्तदा तु उक्तमित्यत्र वचनीयं स्यादिति वक्तव्यम् । सुधियः यद्विचारितं तत्पर्यायोक्तमिति । वस्तु-
तस्तु—अस्य वाक्यस्यैतद्वाक्यानन्तरं निरूपणे को हेतुः स्यादित्येव जिज्ञासा । एवं चानुमानस्येत्यस्य स्पष्टप्रतिपत्तिप्र-
योजनकतया तत्रोपयोगिज्ञानागोचरत्वम् । तथा ज्ञानविषयेत्यत्र हेतुभिन्नेति वक्तव्यत्वेन नेत्यर्थस्य हेतोर्गोचरत्वमिति
कार्यत्वस्य सङ्गतित्वमित्यपि न, कार्यत्वमनुमानस्येत्यत्र कार्यत्वमित्येतावतैव जिज्ञासापूर्तेरिति ध्येयम् । सामान्यहेतोर्नि-
शेषकार्यत्वरूपहेतुत्वादित्यपि ध्येयम् । तथा तज्जनकमित्यस्य कार्यज्ञानमिष्टसाधनमिति विवरणं **गदाधरभट्ट**कृतम् ।
कारणस्य कार्यमावश्यकमिति कार्यत्वरूपेण कार्यसामान्यज्ञानमिति विवरणं **भवानन्द—रामनाथ**कृतम् । तत्र गदा-
धरकृतव्याख्यानेऽभिधातुः पूर्वोक्तं ज्ञानं सम्भावितं न तु निश्चितं दीधितिकृतानुल्लेखात् । अस्मदुक्तज्ञानजिज्ञासयोरपि
सम्भवाच्च विषयताविशेषस्य विवक्षा चेति दूषणद्वयम् । इतरयोस्तु शिष्यस्य प्रतिभाविरहेण तद्विरहेण च शिष्यज्ञानयोर्वक्तुम-
शक्यतया ज्ञाने व्याख्यातुरभिधातुर्वा प्राप्ते सम्भाविते न, अपि तु, निश्चिते दीधितिकृतोल्लेखात् । अतस्तज्जनकं तत्रोप-
योगि व्याख्यातम् । तथा तत्रोपयोगिज्ञाननिरूपितविषयतावच्छेदकं कार्यत्वत्वोपस्थितकार्यत्वावच्छिन्नकार्यानुमाननिरूपकवा-
क्यवद्यद्यपि वक्तुं शक्यते, तथापि कार्यत्वं कण्ठरवेणोक्तं झटिति बुद्धावारोहति । एवं च उपयोगिज्ञाननिरूपितविषयताव-
च्छेदकं कार्यत्वत्वमिति ज्ञेयम् । **गदाधरभट्टास्तु** प्रत्यक्षानन्तरमस्य किमुपजीवकमित्यादिजिज्ञासां प्रति उपजीवकत्वादिज्ञानं
हेतुरित्यनुमानस्य प्रत्यक्षानन्तरमभिधाने प्रयोजिका किमस्योपजीवकमिति जिज्ञासा तज्जनकं कार्यज्ञानमिष्टसाधनमिति उपजीव-
कत्वविषयकज्ञानं तद्विषयत्वमुपजीवकत्व इति लक्षणसङ्गतिः । एवमुपजीव्येऽपि बोध्यम् । तथा च कारणत्वस्य कार्यत्वस्य च
सङ्गतित्वं न तु कार्यत्वस्यैव जनकज्ञानविषयेत्यनेन जनकीभूतेष्टसाधनताज्ञानीयज्ञाननिष्ठविशेष्यतायां विषयतासम्बन्धेन यदव-
च्छेदकत्वं तन्निरूपितावच्छेदकतात्मकविषयताविशेषस्य विवक्षितत्वात् । न च ज्ञाननिष्ठेष्टसाधनत्वेऽतिव्याप्तिर्भवति च, उपजीव-
कज्ञानमिष्टसाधनमित्यभेदेष्टसाधनताज्ञानैकदेशज्ञाने या विशेष्यता उपजीवकत्वप्रकारकज्ञाननिष्ठेष्टसाधनताविषयकं ज्ञानमिति
बोधात् । तादृश्यां विशेष्यतायां विषयितासम्बन्धेन यदवच्छेदकत्वं इष्टसाधनतावच्छेदकत्वं इष्टसाधनतानिष्ठविषयतानिरूपिता
तद्द्वारा विषयितासम्बन्धेन विशेष्यतायाः इष्टसाधने सत्वात्, तादृशेष्टसाधनतानिरूपितमवच्छेदकत्वमुपजीवकत्वे इष्टसाधन-
ताधिकरणे ज्ञाने विषयतासम्बन्धेनोपजीवकत्वस्य सत्वात्तदात्मकस्य विषयताविशेषस्योपजीवकत्व एव सत्वादतिव्याप्तिवार-
णम् । **भवानन्दास्तु** प्रत्यक्षस्य कारणत्वज्ञाने कारणस्य कार्यमावश्यकमिति क्रमेण कार्यस्वरूपेण कार्यसामान्यज्ञानं ततः सामा-
न्यधर्मप्रकारकज्ञानस्य विशेषधर्मप्रकारकजिज्ञासाजनकत्वात् किमस्य कार्यमित्याकारिका शिष्यजिज्ञासा, ततः शिष्यस्य किमस्य
कार्यमिति शब्दप्रयोगः, ततः शिष्यजिज्ञासाज्ञानं गुरोः, तत इष्टसाधनताज्ञानेनानन्तराभिधानमिति क्रमेण जिज्ञासायामनन्त-
राभिधानप्रयोजकत्वमिति वदन्ति । **रामनाथास्तु**, आनन्तर्याभिधानप्रयोजकशिष्यज्ञानगोचरत्वविच्छाजनकीभूतशिष्यज्ञान-
विषयत्वमेव सङ्गतिरित्याहुः । प्रत्यक्षनिरूपणानन्तरं कारणस्य कार्यमावश्यकमिति शिष्यस्य कार्यत्वसामान्यज्ञानं ततश्च किमस्य
कार्यमिति शिष्यजिज्ञासायां गुरुणानुमानाभिधानं क्रियत इति शिष्यज्ञानजिज्ञासे अनुमानाभिधानावसरे शिष्यजिज्ञासायाः
प्रतिभाविरहेण तद्विरहेण च वक्तुमशक्यतया जिज्ञासा चानन्तराभिधातुरेवेति **गदाधराः** । घटत्वादिप्रत्यक्षेण को घट इति
जिज्ञासोदयात् घटत्वादौ प्रत्यक्षसङ्गतित्ववारणाय प्रयोजकान्तम् । नन्वेवमपि न निस्तारः । प्रत्यक्षादौ निरूपिते स्वसामग्री-
वशात् को घट इति कस्यचिज्जिज्ञासया केनचिद् घटो निरूपितः, तादृशनिरूपणप्रयोजकतथाविधजिज्ञासामादाय, घटत्वादा-
वपि प्रत्यक्षादिसङ्गतित्वप्रसक्तेः प्रयोजकान्तमुपादायाप्यशक्यवारणत्वात् । अथ तत्र घटत्वादेः सङ्गतित्वमिष्टमेव प्रसङ्गमध्ये
तस्यान्तर्भावनीयत्वाच्च । अन्यथा तादृशनिरूपणं सङ्गत्यभावेनासम्बद्धप्रलापः स्यात् । आकाङ्क्षिताभिधाने [illegible] न स्यादिति ।
एवं च घटत्वादीनां लक्ष्यत्वेन प्रयोजकान्तमनर्थकमित्युच्यते, तदा तु यन्निरूपणानन्तरं कदाचिदपि कस्यचिद्धर्मस्यावान्तर-
धर्मप्रकारकज्ञानेच्छा न जायते, अपि तु, कालान्तरे जायते, तदा तस्य तत्सङ्गतित्ववारणाय प्रयोजकान्तोपादानात् । न च
तादृशधर्म एव दुर्लभः । तादृशधर्मसम्भावनयातिव्याप्तिसन्देहेनातिव्याप्तिवारकविशेषणदानौचित्यात् । यद्वा यन्निरूपणानन्तरं
यद्धर्मावच्छिन्नस्य यस्य पुंसो विशेषजिज्ञासा न जाता, अपित्वन्याभिधानान्तरमेव, तद्धर्मस्य तं प्रति तत्सङ्गतित्ववारणाय
प्रयोजकान्तमुपादेयम् । अस्तु तदनन्तराभिधानप्रयोजकज्ञानविषयत्वं सा प्रयोजकजिज्ञासाजनकेत्यधिकं नैवं पटादिकं
निरूप्य प्रतिपाद्यस्य जिज्ञासामन्तरेणैव यत्रासम्बद्धघटाद्यभिधानं कृतं केनचित् तत्रास्य घटज्ञानं भवत्वित्याकारकेच्छाजनकीभूतं
वक्तृघटादिज्ञानं तद्विषयघटत्वादावतिप्रसङ्गः । घटविषयकज्ञानस्यापि घटादिबुबोधयिषाद्वारा पटघटादिनिरूपणोत्तरं घटसम्ब-
न्धेन दण्डादिस्मरणे को दण्ड इत्यादिजिज्ञासया दण्डादिनिरूपणम्, तत्र, तादृशजिज्ञासाजनकज्ञानविषयस्य पटनिरूपितसङ्ग-
तित्वापत्तिरिति वाच्यम्; यदभिधानानन्तराभिधानप्रयोजकजिज्ञासायां तदभिधानप्रयोज्यत्वस्य निवेशनीयत्वादिति पदकृत्यं
**गादाधर्याम्** । निवेशप्रकारस्तु—यदभिधानानन्तराभिधानप्रयोजनकतदभिधानाप्रयोज्यजिज्ञासाजनकज्ञानविषयोऽर्थः सङ्ग-
तिरिति बोध्यः । पटाभिधानानन्तरं दण्डादिनिरूपणाभावाच्च पटनिरूपितसङ्गतित्वं दण्डादिनिरूपणे ऽस्य लाघवाय जिज्ञासा

निरूपिता ज्ञानमिष्टविषयतावच्छेदकत्वविशेषः सङ्गतिर्लाघवात् । भवति च जिज्ञासा तत्स्वरूपैकदेशभूतेच्छा तन्निरूपिता या तद्वितीयदलज्ञाननिष्ठा योग्यता तदवच्छेदकमनुमानं विषयविधया तत्ता चानुमाने तदवच्छेदकमनुमानत्वमपि परंत्ववच्छेदकत्व-विशेषः कार्यत्वमिति लक्षणसमन्वयः । जिज्ञासा चात्र किमनुमानं कार्यभूतमित्येव विचारः । तादृशजिज्ञासयैवानुमाननिरूप-णादिति स्थितं गादाधर्याम् । तत्र स्मृतस्य, पूर्वाभिहितवस्तुसम्बन्धेन स्मृतस्योपेक्षानर्हत्वम् । विरोधो ननर्थः । द्वेष्यज्ञानवि-षयता चोपेक्षार्हत्वम् । एवं च द्वेष्यज्ञानविषयताविरोधि यद्रूपं तत्, जिज्ञासाविषयतावच्छेदकरूपमिति यावत् । स्मृतस्येत्य-भिधानं जिज्ञासाया आनन्तर्याभिधानप्रयोजकत्वलाभायोपोद्घातादिपञ्चकभिन्नत्वे सतीति पूरणीयम् । तथाचोपोद्घातादिपञ्च-कभिन्नसङ्गतिः प्रसङ्ग इति पर्यवसितोऽर्थः । तेनाधेयत्वाधिकरणत्वघटत्वादीनामनैवान्तर्भावः । उपेक्षानर्हत्वं च विभाजकमा-त्रमतस्तादृशधर्माणां मुमुक्षानर्हत्वादिरूपाणां निरूपणप्रयोजकजिज्ञासाविषयतावच्छेदकत्वविरहेऽपि न क्षतिः । उदाहरणं तु आधारनिरूपणेन स्मृतस्याधेयस्योपेक्षानर्हत्वज्ञानेन किमाधेयमिति जिज्ञासयाधेयनिरूपणमिति । उपोद्घातत्वं च प्रकृतार्थसाध-कत्वम् । "चिन्तां प्रकृतसिद्ध्यर्थामुपोद्घातं विदुर्बुधाः" इत्युक्तेः । प्रकृतसिद्ध्यर्थां प्रकृतोपपादकत्वविषयिणीं किमस्योपपाद-कमिति चिन्तामुपोद्घातसङ्गतिस्वनिर्वाहिकां विदुरित्यर्थः । तादृशजिज्ञासामादायैवोपोद्घातत्वे लक्षणसमन्वयात् । अर्थसाधकत्वं च उपपादकत्वम्, तच्च, निर्वाहकत्वम्, तच्च, क्वचित् तद्घटकतया, क्वचिदतद्घटकतयेति । तत्राद्यं विशिष्टपरामर्शत्वस्यानुमि-तिजनकतावच्छेदकत्वं परामृश्यमानलिङ्गलिङ्गपरामर्शान्यतरव्यापारकज्ञानकारणकं ज्ञानमनुमितिरित्यनुमितिलक्षणघटकतयानु-मितिलक्षणोपपादकम् । परामर्शज्ञानेन विना परामर्शघटितलक्षणानिर्वाहादिति परामर्शव्यवस्थापने उपोद्घातः सङ्गतिः । द्वितीयं तु, सामान्यप्रत्यासत्तेरनुमितिपूर्वं नियमतो विशिष्टपरामर्शनिर्वाहकता विशिष्टपरामर्शत्वावच्छिन्ना या अनुमितिकारणता तन्निर्वाहकत्वादेव परामर्शघटितानुमितिलक्षणोपपादकत्वम्, न त्वनुमितिलक्षणघटकयेति द्विविधमुपपादकत्वम् । हेतुता हि उपजीव्योपजीवकभावः । ननु कार्यत्वं षोढात्वं व्याहनिष्यतीत्याकाङ्क्षायां हेतुतापदमजहत्स्वार्थवृत्त्या कार्यत्वकारणत्वोभयसा-धारणेन केनचिद्रूपेण तदुभयपरमिति नाधिक्यमिति हेतुता सापेक्षत्वादुभयसङ्ग्राहिका । प्रतिबन्धकर्तृभूतजिज्ञासानिवृत्तावव-श्यवक्तव्यत्वमवसरः । अत्र किमिदानीं वक्तव्यमिति जिज्ञासाजनकज्ञानविषयमादाय लक्षणसमन्वयः । यद्यपि तादृशजिज्ञासा-विषयताया जिज्ञासानिवृत्तिघटितं नावच्छेदकमिति तेन रूपेण सङ्गतित्वं नास्ति, अपि तु निवृत्त्युपलक्षिततत्कालवक्तव्यत्वरू-पेणैव, तथापि न क्षतिः । यादृशस्य सङ्गतित्वं तादृशस्यैव विभाजकत्वमित्यनियमात् । जिज्ञासानिवृत्तेर्विभाजकधर्मघटकत्वे बाधकाभावादिति । इयं च प्रत्यक्षोत्तरोपमाने सङ्गतिः । अत्र प्रतिबन्धकीभूतानुमानजिज्ञासा किमनुमानमिति तस्या अनुमाने उपमानापेक्षया प्राथमिकजिज्ञासाविषयत्वप्रयोजकबहुवादिसम्मतत्वकथनेन नानुमाननिरूपणाद्विषयसिद्ध्यानिवृत्तौ सत्यामनुमा-नमवश्यं वक्तव्यमिति जिज्ञासया किमिदानीं वक्तव्यमिति जिज्ञासाया चोपमाननिरूपणात् । निर्वाहप्रयोजकता निर्वाहकत्वम् । तदुदाहरणं तु व्याप्तिपक्षधर्मतयोर्ज्ञानस्यानुमितिजनकत्वेन तादृशव्याप्तिनिरूपणानन्तरं किमनुमितिनिर्वाहप्रयोजकमिति जिज्ञा-सया पक्षधर्मतानिरूपणमिति । पक्षधर्मताज्ञानं कारणमिति पक्षधर्मता निर्वाहप्रयोजिका । एकजातीयकार्यजनकत्वमेककार्य-त्वम् । उदाहरणं तु अनुमानस्येश्वरसिद्ध्यपवर्गयोः सङ्गतिः; अत्रैकजातीयं येन केनापि धर्मेणेश्वरसिद्ध्यपवर्गाख्यं कार्यं तज्जन-कत्वमनुमान इति । सामान्यत एकजातीयानेककार्यजनकत्वज्ञाने ईश्वरसिद्ध्यनन्तरं किमन्यकार्यजनकत्वमिति जिज्ञासयापव-र्गत्वकार्यनिरूपणात् सामान्यलक्षणसमन्वयः । भवानन्दैस्तु नैयायिकेनेश्वरसिद्ध्यनन्तरं शक्तिं निरस्य परमप्रयोजनं त्वनुमान-स्यापवर्ग इत्यनेनेश्वरसिद्ध्यपवर्गयोरनुमानजन्यत्वलक्षणैककार्यत्वसङ्गतिः सूचिता । एकस्य कारणकार्यतायास्तदर्थत्वादित्युक्तम् । इदं च सङ्गत्यभिधानमात्रोपजीवकत्वात्स्वरूपकथनमात्रम्, लक्षणं तु प्रसङ्गाद्यन्यतमत्वमेव तेन पूर्वस्येष्टसाधनत्वाधाराधेयभा-वादावव्याप्तावपि न दोषः ।

अत्रेदं चिन्तनीयम्—पूर्वोक्तं सङ्गतिसामान्यलक्षणमुपजीवकत्वे न सम्भवति किं प्रत्यक्षोपजीवकमिति जिज्ञासयानुमान-निरूपणाभावात्; अपि तु किमनुमानमिति जिज्ञासयैव निरूपणं तस्य । इयं च जिज्ञासा विरूपयितुरनुमाननिरूपणात्पूर्वं सम्भ-वात् । या तु प्रत्यक्षग्रन्थानन्तरं मया कस्मादुक्तमिदमिति पूर्वोक्ता जिज्ञासा सानुमाननिरूपणानन्तरं निरूपयितुर्विचारसाम-यिकी । न चात्र किं मानमिति वाच्यम्, अनुमानत्वरूपलक्ष्यतावच्छेदकत्वविशिष्टे लक्षणप्रतिपादकस्य तत्करणमनुमानमित्युत्तरस्य सङ्गतेरेव मानत्वात् । अन्यथा पूर्वोक्तजिज्ञासास्वीकारे तु यद्धर्मप्रकारकयद्विषयिणी जिज्ञासा तद्धर्मावच्छिन्नतदुद्देश्यकं लक्षणा-दिनिरूपणमिति नियमस्य "को घटः" "कम्बुग्रीवादिमान् घटः" इत्यादिषु दर्शनात् उपजीवकमनुमानमित्युत्तरस्य प्रसङ्गात् । ननु पूर्वोक्ता जिज्ञासा स्वीकृत्योपजीवकपदमध्याहृत्योत्तरस्योपजीवकमनुमानं तच्च तत्करणमित्यर्थात्सङ्गतिरिति चेत्, न; किं प्रत्य-क्षोपजीवकमिति जिज्ञासायाः प्रत्यक्षोपजीवकत्वविशिष्टेऽनुमितिकरणत्वरूपविशेषधर्मबोधकात्तत्करणमित्यादिवाक्यादेव निवृत्तेः । तथाचानन्तराभिधानप्रयोजकजिज्ञासाजनकज्ञानविषयत्वरूपसङ्गतित्वं प्रकृते नोपजीवकत्वे सम्भवति । किन्तु निरूप्यतावच्छे-दकेऽनुमानत्वे इत्यनन्तराभिधानप्रयोजकजिज्ञासाजनकनिरूप्यतावच्छेदकधर्मप्रकारकस्मरणप्रयोजकनिरूप्यनिष्ठसम्बन्धः सङ्ग-तिरित्येव लक्षणं युक्तम् । प्रत्यक्षानुमानपदार्थयोरुपजीव्योपजीवकभावसम्बन्धदर्शनादनुमानपदार्थत्वरूपप्रकृतलक्षणलक्ष्यतावच्छे-

दकप्रकारेणानुमानस्मरणादनुमानपदार्थः कृ इति विशेषजिज्ञासयानुमितिकरणमनुमानपदार्थ इति निरूपणादुपजीवकत्वं सङ्गतित्वनिर्वाहात् । एवं च पूर्वापरनिरूपणविषययोः सम्बन्ध एव सङ्गतिः । न तु निरूप्यतावच्छेदक इति । इदं यद्यपि साधीयः सङ्गतमित्यत्र सम्बद्धमिति व्यवहारात्, तथाप्यवश्यवक्तव्यत्वस्य सम्बन्धत्वविरहादवसरे व्याप्तताहशस्थले हेतुता-सम्बन्धाश्रयणात् । किञ्च, यत्र गां पश्यन् सास्नादिमतीयं गौरिति प्रयुङ्क्ते, तत्र सङ्गतेप्यनन्तराभिधानादव्याप्तिः । किञ्च, शरीरगौरवं शक्यतावच्छेदकगौरवं च । अपि च जिज्ञासाधिकरणसङ्गतौ लक्षणस्याप्रवेशः । आनन्तर्याभिधानघटितत्वात् अधिकरणस्य प्राथम्येनानन्तराभिहितत्वात् । अन्यच्च प्रतिपत्तिगौरवं चेति मत्वा सङ्गतमित्यत्रोपेक्षानर्हमिति व्यवहारारम्भं वा लक्षणान्तरम् । तथाच, **सावधानपुरुषप्रयुज्यमानवाक्यप्रयोजकत्वेन स्मृतस्योपेक्षानर्हत्वमेव सङ्गतिः । हेतुतादयः सर्वे उपेक्षानर्हत्वस्यैव प्रयोजका धर्मास्ते तद्बोधकतया सङ्गतित्वेनोच्यन्ते ।** तत्रैषसानियामकस्यास्मद्दर्शनेऽनुक्तत्वादन्येषामपि **सङ्ग्रहो न दुष्ट इति** परम् । अत्र प्रयुज्यत इति प्रयुज्यमानमुच्चार्यमाणमित्यर्थः । एतादृशवाक्यस्य प्रयोजकं परम्परया कारणं यद्धेतुतादिस्तदवच्छेदकत्वेनानुमानवाक्यत्वादिना स्मृतिविषयोऽनुमानवाक्यादिः । अवच्छेदकत्वं तृतीयार्थः । उपेक्षानर्हता च क्वचिद्धेतुतया क्वचिदुपोद्घातत्वेनेत्येवं ज्ञेया । तथाच सावधानाभिन्नपुरुषकर्तृकप्रयोगकर्मीभूतवाक्यनिरूपितप्रयोजकतावच्छेदकरूपेण कर्तृनिष्ठस्मृतिनिष्ठविषयितानिरूपिताविषयताशालियाक्यपदान्यतरनिष्ठोपेक्षानर्हत्वं सङ्गतिः ।

अत्रेदं हृदयम्—सावधानपुरुषप्रयुज्यमानं वाक्यमथातो ब्रह्मजिज्ञासेति तत्प्रयोजकं प्रकृतोपपादकत्वमस्य जातित्वविरहाद्धर्मत्वेन प्रकृतोपपादकरूपत्वात्तत्तावच्छेदकेन ब्रह्मभक्त्यादिविचारप्रतिज्ञावाक्यत्वेन स्मृतस्य ब्रह्मभक्त्यादिविचारप्रतिज्ञावाक्यस्योपेक्षानर्हत्वं सङ्गतिः । बुद्धिस्थमेव सर्वोऽपि प्रयुङ्क्ते इति रीत्यनुयायिनः । तादृशावच्छेदकस्य सङ्गतित्वविरहात् तत्रातिव्याप्तिवारणाय विशेष्यम् । अनुभवविषयीभूतघटादिसम्बन्धेन स्मृतस्य दण्डादेरुपेक्षानर्हत्वं द्वेष्यज्ञानविषयताविरोधिरूपात्मकमिति तत्रातिव्याप्तिः, तद्वारणाय विशेषणदलम् । दण्डः सङ्गत इत्यव्यवहाराद्वाक्यधर्म एव सङ्गतिः । प्रयुक्तवाक्यनाशोत्तरं कालान्तरे तदुपपादकत्वेन स्मृतस्योपेक्षानर्हत्वं सङ्गतिः स्यात्, तत्रातिव्याप्तिवारणाय प्रयुज्यमाने इति । यदि च तादृशस्थले सङ्गतित्वव्यवहारः प्रामाणिक एव तदा तु स्पष्टप्रतिपत्तिः प्रयोजनं, वाक्येत्यादि तृतीयान्तं तूपेक्षानर्हताप्रयोजकस्फूर्त्यै । प्रकृतोपपादकत्वावच्छेदकब्रह्मभक्त्यादिविचारप्रतिज्ञावाक्यत्वादिना वाक्यादिस्फुरणे सत्युपेक्षानर्हता वाक्यादेर्यतः । पुरुष इति तु वक्तव्यमेव योग्यत्वात् । तत्त्वं च जीवेशत्वम् । तेन स्वप्रयुज्यमानवाक्यप्रयोजकत्वेन स्मृतस्योपेक्षानर्हत्वे नाव्याप्तिः । केनचित् प्रतिद्वापै पुरुषेण प्रयुज्यमानं वाक्यमानन्तर्यावच्छेदकावच्छेदेन प्रतिपत्स्यमानावच्छेदकमित्याद्यनर्थकं तादृशवाक्यप्रयोजकत्वेनासम्बद्धोच्चारणे पदगतारणाय यदुपेक्षानर्हत्वं तत्रातिव्याप्तिवारणाय सावधानेति, स चानवधानपुरुष इति नासम्बद्धेऽतिव्याप्तिः । किञ्च, सावधानेत्यनुक्तौ भ्रान्तपुरुषोऽपि सङ्ग्राह्येवेति सावधानेत्यवश्यं वक्तव्यमेव । तर्हि, स्मृतस्येत्यवक्तव्यम्, वक्तव्यं तत् । सावधानपुरुषप्रयुज्यमानवाक्यप्रयोजकत्वेनाधारत्वेनोपेक्षानर्हत्वस्य कालेऽपि सत्त्वात्, स्मृतस्येत्युक्ते तु स्मरणविषयत्वविरहात् काले नातिव्याप्तिः । तादृशप्रयोजकत्वेन स्मृतत्वमेव सङ्गतिरिति तु न । स्मरणविषयतायां सङ्गतित्वव्यवहाराभावादतिव्याप्तिप्रसङ्गात् । **अथवा भगवान् व्यासः** सर्वमपि ब्रह्मभक्तिविचारं स्मृत्वेदं सूत्रं प्रणिनिनायेति सावधानपुरुषप्रयुज्यमानवाक्यं **"जन्माद्यस्य यतः"** इत्यारभ्य **"अनावृत्तिः शब्दात्"** इत्यन्तं तत्प्रयोजकत्वेन तदुपपादकत्वेन स्मृतस्य ब्रह्मभक्तिविचारवाक्यस्योपेक्षानर्हत्वं सङ्गतिः । पूर्वत्र तु स्मर्यमाणप्रयुज्यमानयोर्वाक्ययोः सङ्गतिरत्र तु प्रयुज्यमानयोरेव । एवं स्मर्यमाणयोरपि ज्ञेया । झटिति बुद्ध्यारोहणेन प्रतिपत्तिगौरवमपि नास्ति । शक्यतावच्छेदकलाघवं स्फुटम् । शरीरलाघवं च । स्मृत्योपेक्षानर्हत्वं सङ्गतिरित्यन्यस्य परिष्कारत्वात् । ईश्वरलिङ्गापितं पञ्चम्यन्तम् । अत्र गां पश्यन्नित्याद्युक्तस्थलेऽपि सावधानपुरुषप्रयुज्यमानं सास्नादिमती गौरियमिति वाक्यं तत्प्रयोजकत्वेन हेतुत्वेन स्मृतस्य वाक्यस्योपेक्षानर्हत्वं सङ्गतिरिति नाव्याप्तिः । अत्र गां पश्यन्नित्यनुभवस्थले गां पश्यामीत्येवं वाक्यं स्मृत्वा स्मर्यमाणोच्चार्यमाणयोर्वाक्ययोः सङ्गतिर्ज्ञेया । अत्र यद्यप्युच्चार्यमाणवाक्यं सङ्गतमिति प्रतीतेः सङ्गतिरत्रापेक्ष्यते तथापि स्मर्यमाणत्वोच्चार्यमाणत्वमात्राभिहितभेदावच्छिन्नत्वान्न दोषः । अथवा भारतकरणोत्तरं ब्रह्मसूत्रप्रणयनेन सावधानपुरुषप्रयुज्यमानं वाक्यं भारतरूपं वर्तमानत्वाविवक्षणात् । तत्प्रयोजकत्वेन भारतार्थवेदार्थनिर्वाहकत्वेन स्मृतस्य ब्रह्मभक्तिविचारस्योपेक्षानर्हत्वं सङ्गतिः । एवमन्येन सावधानपुरुषेण प्रयुक्तं यद्वाक्यं घटोऽयमिति तदुपपादकत्वेनेतरेण स्मृतस्य प्रयुक्तस्य च नीलोऽयं घटोऽतः प्रत्यक्ष इति वाक्यस्योपेक्षानर्हत्वं सङ्गतिः । प्रथमवाक्ये तु तद्घटकपदानां वाक्यत्वमाश्रित्य पदधर्मः सङ्गतिर्वाक्ये चकास्तीति । यद्यपि गदाधरभट्टैः, यद्यप्युपोद्घातादिषट्कमेदमनिवेश्य सर्वा सङ्गतिः प्रसङ्ग एवान्तर्भावयितुं शक्यते तथापि विभाजकस्य स्वतन्त्रेच्छकृततया न पर्यनुयोगावसर इति सामान्यलक्षणं प्रसङ्गलक्षणमित्युक्तं, तथापि तद्विशेषणरहितमिति ततोऽपि वैलक्षण्यं ज्ञेयम् । न च जिज्ञासानिरूपिता ज्ञाननिष्ठविषयतावच्छेदकतावच्छेदकत्वविशेषः सङ्गतिरस्तु किमनेनेति वाच्यम् । निरूप्यतावच्छेदकस्य सङ्गतित्वविरहात् । अवच्छेदकत्वविशेषपदेन यत्रावच्छेदकत्वे सङ्गतित्वव्यवहारस्तन्मात्रविवक्षणेऽपि जिज्ञासाविरहेण गोदर्शनानन्तरं सास्नादिमती गौरिति सङ्गतवाक्येऽव्याप्तिः । नापि प्रत्याद्यन्यतमत्वं निरुक्तलक्षणमनुसरतामुपेक्षानर्हतापदेनोपेक्षानर्हतावच्छेदकोपस्थितेरावश्यकत्वात् । अन्यथा निरुक्तसामान्यलक्षणे-

च्छ्रुतिविरोधाच्च । आहोस्विद्विरोधपरिहारेण शक्यत इति । किं तावत्प्राप्तम्? न शक्यत इति । कुतः ?

> ज्ञापनार्थं प्रमाणानि सन्निकर्षादिमार्गतः ।
> सर्वथाऽविषयेऽवाच्येऽव्यवहार्ये कुतः प्रमा ॥ १३ ॥

ऐहिकामुष्मिकव्यवहारयोग्ये पुरुषप्रवृत्तिः । प्रवृत्त्यर्थं हि प्रमाणानि । ब्रह्म पुनः सर्वव्यवहारातीतमिति । नन्वेतदपि वेदादेवावगम्यत इति चेत्, तर्हि बाधितार्थप्रतिपादकत्वान्न वेदान्ता विचारयितव्या इति प्राप्ते; उच्यते—

---

श्रुतिप्रतिपाद्य स्वप्रकाशत्वविरोधेन ब्रह्मणः प्रमाणगम्यत्वं न वक्तव्यमित्यर्थः । **श्रुतिविरोधादिति** । मनोवाग्विषये पदार्थे विचारः प्रवर्तते । ब्रह्मणो विचारे क्रियमाणे "यतो वाचो निवर्तन्ते" इति श्रुतिविरोधः स्यादित्यर्थः । **शक्यत इति** । विरोधपरिहारं कृत्वा विचारः कर्तुं शक्यत इति विधिकोटिरित्यर्थः । पूर्वपक्षमाहुः—**न शक्यत इति** । अत्र युक्तिमाहुः—**ज्ञापनार्थमिति** । अज्ञातस्य विषयस्य चक्षुःसन्निकर्षादिद्वारा ज्ञानविषयीकरणार्थमित्यर्थः । **अविषयः** सर्वप्रमाणाविषयः । **अव्यवहार्य इति** । मनःसहकारेण प्रवृत्त्यभाववति । शङ्कते—**नन्विति** । **एतदिति** । अविषयत्वमित्यर्थः । समाधानमाहुः—**तर्हीति** । ननु ब्रह्मणः असङ्गत्वादेव सर्वप्रमाणावेद्यत्वम्, अवाच्यत्वादेव वैदिकव्यवहारातीतत्वमस्तु नाम, परन्तु इदं सर्वं वेदवाक्यादेवागम्यत इति तस्यैतादृशत्वज्ञानार्थं वेदान्तविचारः कर्तव्य इत्यत आहुः—**बाधितार्थेति** । यः प्रमाणाविषयः स वेदान्तविषयो न भवतीति बाधितार्थ इत्यर्थः ।

---

नैकवाक्यतानापत्त्यासान्यासिरापद्येत । तथा सति निरूप्यतावच्छेदकस्य सङ्गतित्वविरहेणासम्भव एव दूषणम् । अवच्छेदकस्वविशेषग्रहणेऽपि पूर्वोक्तस्थलेऽव्याप्तिः । आनन्तर्यघटितनिरुक्तसामान्यलक्षणमनुसरतां तु प्रसङ्गादिलक्षणान्यानन्तर्याभिधानप्रयोजकजिज्ञासाजनकज्ञानविषयत्वघटितान्यावश्यकानि । अन्यथा यत्रानन्तर्याभिधानं जातं न भवति तत्रत्यस्यापि स्मृतनिष्ठोपेक्षानर्हत्वादेः प्रसङ्गादिसङ्गतित्वापत्तेः । सङ्गतिसामान्यलक्षणानाक्रान्ततया सङ्गतत्वेन प्रतीतेष्वपि सङ्गतत्वशून्यत्वाभ्युपगमात् । नन्वेवमपि सर्वत्र हेतुतादिषु सङ्गतित्वव्यवहाराय विशेषलक्षणान्यपि वक्तव्यानीत्याशङ्कायां तत्र लाक्षणिको व्यवहार इति तानि न वक्तव्यानीत्येतदर्थं हेतुतादय इत्यादि । एतेन तत्र तत्र तत्तद्व्यवहारे नियामकमप्युक्तम् । एवं हि प्रयोजकास्तथाहि सावधानपुरुषप्रयुज्यमानवाक्यमाधारनिरूपकं तत्प्रयोजकत्वेनाधेयत्वेन स्मृतस्याधेयनिरूपकवाक्यस्योपेक्षानर्हत्वं भवतीति आधेयत्वस्य प्रसङ्गान्तर्गतस्योपेक्षानर्हत्वप्रयोजकत्वम् । तथा सावधानपुरुषप्रयुज्यमानवाक्यमनुमितिनिरूपकं तत्प्रयोजकत्वेनानुमितिलक्षणोपपादकत्वेन स्मृतस्य परामर्शस्योपेक्षानर्हत्वं भवतीति उपोद्घातस्य प्रयोजकता । एवं सावधानपुरुषप्रयुज्यमानवाक्यं प्रत्यक्षनिरूपकं तत्प्रयोजकत्वेन कार्यत्वेन स्मृतस्यानुमानवाक्यस्योपेक्षानर्हत्वं भवतीति हेतुताकार्यतयोः प्रयोजकता । एवं सावधानपुरुषप्रयुज्यमानवाक्यं प्रत्यक्षनिरूपकं तत्प्रयोजकत्वेनावसरस्यनिरूपणीयतावच्छेदकेनावश्यवक्तव्यत्वेन स्मृतस्योपमानवाक्यस्योपेक्षानर्हत्वं भवतीति अवसरस्य प्रयोजकता । एवं तादृशवाक्यं व्याप्तिनिरूपकं तत्प्रयोजकत्वेन तत्कार्यनिर्वाहकत्वेन स्मृतस्य पक्षधर्मतानिरूपकवाक्यस्योपेक्षानर्हत्वं भवतीति निर्वाहकस्य प्रयोजकता । एवं तादृशवाक्यमीश्वरनिरूपकं तत्प्रयोजकत्वेन तत्सजातीयत्वेन स्मृतस्यापवर्गनिरूपकस्योपेक्षानर्हत्वं भवतीति एककार्यत्वस्य प्रयोजकता । अथवा तादृशवाक्यमपवर्गनिरूपकं तत्प्रयोजकत्वेनेश्वरसिद्धिसजातीयकार्यजनकत्वेन स्मृतस्यानुमानवाक्यस्योपेक्षानर्हत्वं भवतीति एकजातीयकार्यजनकत्वस्य प्रयोजकता । तस्मादव्याप्त्यतिव्याप्त्यसम्भवविरहाच्छोभनमिदं लक्षणमिति सुधीभिराकलनीयम् । सङ्गतिव्यवहारस्तु तत्र तत्र स्पष्टत्वाय हेतुतादिभिः प्रयोजकधर्मैरेव वक्तव्य इत्यपि ज्ञेयमित्यलं विस्तरेण ।

## ईक्षतेर्नाशब्दम् ॥ १।१।५ ॥

### ( सप्तभिर्वाक्यैर्विषयनिर्देशः )

न विद्यते शब्दो यत्रेत्यशब्दम् । सर्ववेदान्ताद्यप्रतिपाद्यं ब्रह्म न भवति । कुतः ? ईक्षतेः । "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" ( छां. ६-२-१ ) इत्युपक्रम्य-"तदैक्षत बहु स्यां प्रजायेय" ( छां. ६-२-३ ) इति । "तत्तेजोऽसृजत" ( छां. ६-२-३ ) । तथान्यत्र "आत्मा वा इदमेक एवाग्र आसीत् । नान्यत्किञ्चन मिषत्' स ऐक्षत लोकान्नु सृजै" ( ऐ. १-१-१- ) इति । "स इमान् लोकानसृजत' ( ऐ. १-१-२ ) इति । "स ईक्षाञ्चक्रे । स प्राणमसृजत" ( प्र. ६-३ ) इत्येवमादिषु सृष्टिवाक्येषु ब्रह्मण ईक्षा प्रतीयते ।

---

सिद्धान्तमाहुः—ईक्षतेर्नाशब्दम् । व्याख्यानमाहुः—नेति । शब्दप्रतिपाद्यत्वे ईक्षतिधातोर्हेतुत्वार्थं विषयवाक्यान्याहुः—सदेवेति । छान्दोग्ये, ऐतरेये, प्रश्नोपनिषदि च क्रमेण वाक्यत्रयम् । मिषत् । व्यापारं कुर्वत् । तथा चैतादृशवेदान्तवाक्याद्ब्रह्मकर्तृकेक्षाविषयकशाब्दबोधो जायते । ईक्षा चैवं जगत्करिष्यामीति निश्चयः ।

---

१ तथाच, न केवलं ईक्षतिर्ब्रह्मणो वेदान्तशब्दप्रतिपाद्यत्वे हेतुभूतः, किन्तु, वाक्यगतः । तेन च स्वार्थप्रत्यायने वाक्येषु ब्रह्मकर्तृका ईक्षा प्रतीयते । ईक्षा च पर्यालोचनम् । एवं करिष्यामीत्यध्यवसायः । सोऽत्रैतादृश इति कार्यबलादुन्नीयते । भत एतादृशेक्षाबोधकेनेक्षतिना यत्र यत्रैवं पूर्वमव्यवहार्यत्वेऽपि पश्चाद्व्यवहार्यत्वेन प्रतिपाद्यत्वाभावस्तत्र तत्रैवमीक्षणकर्तृत्वेन प्रतिपाद्यत्वाभाव इति व्याप्तिर्बोध्यत इतीक्षतेर्हेतुत्वमित्यर्थः । व्याप्तिस्वरूपं च तन्त्रान्तरसिद्धमेव । तथापि स्वमते चेत्थं मङ्गीकृतम् । तथाच यत्र यत्रैवमिति ब्रह्मरूपार्थः पक्षस्तत्र । एवमिति वेदान्तशब्दैः प्रतिपाद्यत्वाभाव इति प्रतिपाद्यत्वसम्बन्धेन ब्रह्मव्याप्यं हेतुर्बोध्यः । ब्रह्मपक्षः ज्ञानप्रधानः । "तत्तेज ऐक्षत" इति छान्दोग्यमन्त्रानुसन्धेयम् । प्रकृते पूर्वमव्यवहार्यत्वेऽपि पश्चात्प्रतिपाद्यत्वसम्बन्धेन व्यवहार्यत्वमशब्दत्वरूपं व्यापकं साध्यम् । एवमीक्षणकर्तृत्वेन रूपेण प्रतिपाद्यत्वसम्बन्धेन ब्रह्मव्याप्यं हेतुः । अतः साध्यत्वेऽपि व्याप्यत्वात् पूर्वं वचनं व्यतिरेकव्याप्तिन्वाद्वा । सा च "नियतधर्मसाहित्ये उभयोरेकतरस्य वा व्याप्तिः" इति साङ्ख्यप्रवचनसूत्रादव्यभिचारविशिष्टा हेतुनिष्ठा साध्याधिकरणवृत्तिता । सूत्रार्थस्तूभयोः समव्याप्तिकयोः कृतका नित्यत्वादिरूपयोः एकतरस्य विषयव्याप्तिकस्य धूमादेर्नियतधर्मसाहित्येऽव्यभिचरितधर्मरूपे सामानाधिकरण्ये व्याप्तिः, इति व्याप्तिशब्दः शिष्टैः प्रयुज्यते । अव्यभिचारस्तु यत्र यत्र हेतुस्तत्र तत्र साध्यं यत्र साध्याभावस्तत्र हेत्वभाव इति नियमः । सिसाधयिषायां सत्या साधकत्वेनोपादीयमानं हेतुत्वं, सिसाधयिषाविषयत्वं साध्यत्वं, घनगर्जितेन मेघानुमाने सिसाधयिषास्त्वेव, विनापि तं तथानुमानमानुभाविकमिति चेदस्तु तर्हि सिसाधयिषाविषयत्वयोग्यत्वात्साध्यत्वम् । एवं च वह्निमान् धूमादित्यादौ धूमनिष्ठं तादृशाव्यभिचारविशिष्टं वह्निसामानाधिकरण्यमस्तीति लक्षणसमन्वयः । धूमवान् वह्नेरित्यादावतिव्याप्तिवारणाय विशेषणदलम् । अयःपिण्डादौ वह्नेः साध्यव्यभिचारान्नातिव्याप्तिः । हेतुसाध्यपदे तु व्याप्यस्वरूपभूते यद्यपि, तथापि, सामानाधिकरण्यस्य ससम्बन्धित्वबोधनायोपात्ते विशेष्याकाङ्क्षानिवृत्त्या विशेषणस्वरूपपरिनिष्ठायै विशेष्यम् । अव्यभिचरितं हेतोः साध्यमित्यलक्षणम् । व्याप्तेर्हेतुधर्मत्वात् । कथञ्चिद्गुणभूतत्वेन व्यवह्रियमाण आधेयोऽर्थो हेतुः । नचैवमव्याप्तिः । पर्वतीयधूमे महानसीयवह्निसामानाधिकरण्याभावादिति वाच्यम् । हेतुसाध्ययोर्हेतुत्वावच्छिन्नसाध्यतावच्छिन्नत्वाभ्यां विशेषणीयत्वात् । न च धूमानयनेषु धूमसत्त्वाद्वह्न्यसत्त्वादन्वयव्यभिचारः । समवायसम्बन्धेन वह्न्यभाववति महानसादौ धूमसत्त्वाद्व्यतिरेकव्यभिचारश्च शङ्क्यः । हेतुतावच्छेदकसाध्यतावच्छेदकसम्बन्धावच्छिन्नत्वाभ्यामपि तयोर्विशेषणीयत्वात् । नाप्येतत्पर्वतीये धूमे पूर्वक्षणवृत्तित्वविशिष्टवह्निसामानाधिकरण्याभावादव्याप्तिरिति वाच्यम्; तत्र वैशिष्ट्यानवच्छिन्नत्वस्यापि विशेषणीयत्वात् । वस्तुतस्तु—सिसाधयिषोदयानन्तरं हेतुसाध्यभावेन ततः पूर्वं तदभावात्तस्य वह्नेरसाध्यत्वेन तदसामानाधिकरण्येऽप्यदोषात् । सिसाधयिषोत्तरक्षणात्मकक्षणात्पूर्वक्षणत्वमिवेक्षयाऽव्याप्त्युद्भावनं तु काकदन्तविचारमनुहरति । आम्राकृतमापण्डितं च पूर्वोक्तरीतिकव्याप्तिज्ञानमात्रेणानुमितिदर्शनस्य सार्वजनीनत्वात् । एतादृशदर्शनेनैव वह्निघटोभयावच्छिन्नप्रतियोगिताकवह्न्यभाववति केवलवह्निदेशे धूमदर्शनेन व्यतिरेकव्यभिचारप्रासात्प्रसिद्धानुमाने व्याप्तिशङ्कापि निरस्ता वेदितव्या । व्यासज्यवृत्तिधर्मावच्छिन्नाभावस्थले साध्यदर्शनेन सविशेषणे हीति न्यायादभावस्योभयत्व एव विश्रान्तेश्च । इत्थं वाच्यत्वादि-

( परब्रह्मणः प्रमाणबलेनाविषयत्वे सति स्वेच्छया विषयत्वम् )

**किमतो यद्येवम्? एवमेतत्स्यात्। सर्वव्यवहारप्रमाणातीतोऽपीक्षां चक्रे, लोकसृष्टिद्वारा व्यवहार्यो भविष्यामीति। अतो यथा यथा कृतवांस्तथा तथा स्वयमेवोक्तवान्। पूर्वरूपं फलरूपं च सृष्टस्वांशपुरुषार्थत्वाय। ततश्च प्रमाणबलेनाविषयः। स्वेच्छया विषयश्चेत्युक्तम्।**

---

सा च जगद्रूपसत्कार्येणानुमीयते इति नासद्विषयकत्वं शाब्दबोधस्येत्यर्थः। एतावता विरोधपरिहारो न जात इत्याशङ्कते—**किमिति**। यदि एवं ईक्षाप्रतीतिरस्ति अतः किम्? न किमपीत्यर्थः। तथा च विरोधस्य तादवस्थ्यमिति भावः। समाधानमाहुः—**एवमिति**। **सर्वेति**। भगवानित्यादिः। भविष्यामीति पूर्वमव्यवहार्यः सृष्ट्यनन्तरमिच्छाया व्यवहार्य एतदुभयमपि वेदेनैव प्रतिपाद्यते इति विरुद्धधर्माश्रयत्वे दोषाभावाद्वेदान्तवाक्यानामबाधितार्थप्रतिपादकत्वेन विचार्यत्वमिति भावः। **उक्तवानिति**। **तथा तथा** "तत्तेजोऽसृजत" "स प्रमाणमसृजते"त्यादिवाक्येषु उक्तवानित्यर्थः। वीप्सायां सर्वेषां वेदोक्तसृष्टिवाक्यानां सङ्ग्रहः। वेदवाक्येन कर्तृत्वादिसर्वमाहात्म्यविशिष्टब्रह्मविषयकशाब्दबोधात्मकं परोक्षं ज्ञानं जायते। तदनन्तरं मननादिद्वारा अपरोक्षं ब्रह्मज्ञानं जायते इति हृदयम्। **पूर्वेति**। अत्र पाठद्वयम्। एकस्तु पूर्वरूपं फलरूपं च सृष्टम्, स्वांशपुरुषार्थत्वाय इममेव पाठं धृत्वा प्रकाशे श्रीगोस्वामिपुरुषोत्तमैर्व्याख्यातम्। तथा हि—एवं करणकथनयोः प्रयोजनमाहुः—**पूर्वमित्यादि**। स्वांशाः जीवाः तदुपयोगिपुरुषार्थत्वं तेजःप्रभृतीनां भवत्वितीच्छायाः पूर्वं प्रथमतः प्रजादिशब्दवाच्यं शरीरं फलरूपम्। लोकादिकं च सृष्टम्। तथा चैतेषां पुरुषार्थत्वेन जीवाशास्त्वायैवं कृत्वा तत्कर्तृतया फलदातृतया च स्वस्य व्यवहार्यत्वं कृतवानिति तत्सम्पादनं प्रयोजनमित्यर्थः। तेन सिद्धमाहुः—**तत इत्यादीति** व्याख्यातम्। वस्तुतस्तु क्वचित्पुस्तके अपरोऽपि पाठः प्रतिभाति, तथा हि—पूर्वरूपं फलरूपं च सृष्टस्वांशपुरुषार्थत्वाय इत्येकमेव वाक्यम्, अस्यार्थस्तु, वेदोक्तकर्मादीनां प्रयोजनमाहुः—**पूर्वरूपेति**। पूर्वरूपं साधनम्, अपरं फलरूपम्। एवं च साधनरूपं यज्ञयागादिश्रवणमननादीनि, फलं च स्वर्गादिपुरुषार्थो मोक्षश्चोक्तवानिति पूर्वेणान्वयः। तथा च भगवान् प्रमाणातीतोऽपि इच्छया व्यवहारसिद्ध्यर्थं यथा यथा कृतवान् तथा उक्तवान्, "स ऐक्षत लोकानुत्सृजै" इति, "स प्राणमसृजत" इत्यादिवाक्येषु। ननु सर्वव्यवहारः सिद्ध एव, परन्तु यज्ञयागादिकं पूर्वरूपं फलरूपं च स्वर्गो मोक्षश्चोक्तस्तस्य किं प्रयोजनमित्याशङ्कायामाहुः—**सृष्टस्वांशेति**। सृष्टाः ये स्वांशाः जीवाः तेषां पुरुषार्थत्वाय वेदे उक्तवानिति

---

त्यादौ केवलान्वयि साध्यके हेतुनिष्ठा साध्यसमानाधिकरणगताऽव्यभिचारितेति ध्येयम्। एवं सत्तावान् जातेरित्यत्रापि ज्ञेयम्। एवं च साध्यवदन्यावृत्तित्वं साध्यात्यन्ताभाववदवृत्तित्वं च नातिदुष्टम्। ब्रह्मणि ज्ञेयत्वाद्यभावेन सर्वत्रापि केनचिद्रूपेण ज्ञेयत्वाद्यभावेन प्रमेयत्वे प्रमेयत्वस्य वाच्यत्वे वाच्यत्वस्यानवस्थाप्रसङ्गाभावयोः यथासम्भवं भियाऽभावेन च केवलान्वयिसाध्यकानुमानस्यैवाभावात्। मीमांसकानामपीदमिष्टम्। न चाव्याप्यवृत्तिसाध्यके कपिसंयोगी एतद्वृक्षत्वादित्यादौ साध्यात्यन्ताभाववद्वृत्तित्वस्याव्याप्तत्वम् शक्यम्, दृष्टे कपिसंयोगे सिद्धसाधनत्वेनादृष्टे चाहेतुत्वेन तस्य दुरनुमानत्वात्। न च दृष्टेऽपि कपिसंयोगे सिषाधयिषानुमितिसम्भवात्तादृशस्थले सिद्धसाधनस्य दोषत्वात् सदनुमानमेवेदम्, यथाहुः, प्रत्यक्षेण परिकल्पितमप्यर्थमनुमानेन बुभुत्सन्ते तर्करसिका इतीति शक्यम्, एतद्वृक्षत्वस्य व्यधिकरणवृत्तित्वेनान्यत्र सहचारग्रहस्य व्याप्त्यनुग्राहकस्याभावेन मूलावच्छेदेन व्यभिचारज्ञानाद्व्याप्तिप्रतिबन्धात्। न चैव संयोगे द्रव्यत्वादित्यादावपि सहचारग्रहाभावाद्व्याप्तिप्रतिबन्धो भवेदिति शक्यम्, पक्षैकदेशे सहचारग्रहसत्त्वेनादोषात् अस्तु व्यतिरेकव्याप्तिमह, परन्तु सिषाधयिषा तु न भवत्येव। इच्छाया ज्ञानानुरूपकार्यत्वात्। अत एव ज्ञाते इच्छानुदयात्। तथा चानुमितिप्रकारकमपि संयोगज्ञानात्पूर्वमभावात्कथमनुमितिः! न च कपिसंयोगज्ञानमात्रमिच्छोदये प्रयोजकं न तु विचारणावच्छिन्नं तस्य पूर्वं पश्चादनुमितेरुदय इति वाच्यम्। अयं घट

( केवलवेदविषयत्वसमर्थनम् )

**ननु सर्वप्रमाणविषयत्वे दूषिते केवलवेदविषयत्वं कथं सिद्धान्तीक्रियते? उच्यते—चक्षुरादीनां प्रामाण्यमन्यमुखनिरीक्षकत्वेन, न स्वतः, भ्रमानुत्पत्तिप्रसङ्गात्। सत्त्वसहितानामेव चक्षुरादीनां प्रामाण्यात्। अतो निरपेक्षा एव भगवन्निःश्वासरूपवेदा एव प्रमाणम्। सङ्केतग्रहस्तु वैदिक एव वेदविद्भिः कृतः।**

---

समुदितार्थ इति भावः। मम तु अयमेव पाठः समीचीन इति प्रतिभाति; कुतः, यद्यत्कृतं तत्सर्वं वेदे "दिवं च पृथिवीं चान्तरिक्षमथो स्वः" "द्यावाभूमी जनयन् देव एकः" इत्यादिषु वाक्येषु चतुर्दशभुवनात्मकं प्रपञ्चजातं स्वस्य व्यवहारसिद्ध्यर्थमुक्तम्। परन्तु, पूर्वकाण्डे यज्ञादिकमुक्तमुत्तरकाण्डे श्रवणादिकं ब्रह्मध्यानोपासनादिकम् "सर्वं खल्विदं ब्रह्मे"त्यादिवाक्येपूक्तं तस्य किं प्रयोजनमित्याकाङ्क्षा तदवस्थैव स्याद्यदि पूर्वरूपं साधनं फलरूपं स्वर्गमोक्षादिस्पष्टस्वांशपुरुषार्थत्वाय वेदे उक्तवानित्यर्थबोधकः पाठो न स्यात्तस्मादयमेव श्रीमदाचार्यप्रभुचरणानामाशय इति मन्तव्यम्। अत एव पूर्वमुक्तम् "साधनं च फलं चैव सर्वस्याह श्रुतिः स्फुटमि"ति। सर्वस्य जीवस्येत्यर्थः। अत एवाग्रे आनन्दमयाधिकरणे जीवस्य साधनफले निरूपयन्त्याः श्रुतेरित्युक्तं पूर्वरूपमित्यस्य फलस्य पूर्वरूपं साधनमित्येवार्थ इति दिक्। चकारेण यद्यत्कृतं तदुक्तमित्यस्यापि समुच्चयः।

एवं च सिद्धमाहुः—**तत** इति। शङ्कते—**नन्विति**। समाधानमाहुः—**उच्यत** इति। **अन्यमुखनिरीक्षकत्वेनेति**। शुद्धतत्त्वगुणविशिष्टत्वेन, चक्षुषि दोषसत्त्वे असदिति दोषाभावे सदिति च व्यवहारः। परस्य यादृशं मुखं तादृशमेव येन चक्षुषा गृह्यते तच्चक्षुरेवान्यमुखनिरीक्षकं सदित्युच्यते। अथवा कार्यसमये सहायमुखनिरीक्षणं येन क्रियते स एवान्यमुखनिरीक्षकः सहायापेक्षीत्यर्थः। तथा च सत्त्वाधीनमेव प्रामाण्यमिति भावः। ननु केवलं चक्षुरेव प्रमाणं न तु सत्त्वविशिष्टमित्युच्यत इत्यत आहुः—**भ्रमेति**। **सत्त्वसहितानामिति**। सत्त्वविशिष्टानामित्यर्थः। सतो भावः सत्त्वं समीचीनत्वविशिष्टानामिति यावत्। **प्रमाणमिति**। भागवतः शाब्दबोधविषयत्वे प्रमाणमित्यर्थः। ननु वेदस्य शब्दरूपत्वात् शब्दस्य च बोधकतायाः सङ्केतग्रहाधीनत्वात् तस्य बालवृद्धव्यवहाराधीनत्वात् स्वातन्त्र्यं ब्रह्मणोऽव्यवहार्यत्वेन वेदबोध्यत्वं च न घटत इत्यत आह—**सङ्केतेति**। **वैदिक एवेति**। "अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणी"ति श्रुत्या प्रथमतः वेदप्रतिपाद्य एव सङ्केतग्रहो वेदविद्भिर्ब्रह्मादिभिर्भगवत्प्रेरणया कृत इत्यर्थः। अत एवैकादशस्कन्धे "कालेन नष्टा प्रलये वाणीयं वेदसञ्ज्ञिता। मयादौ ब्रह्मणे प्रोक्ता धर्मो यस्यां मदात्मकः" इति।

---

इति ज्ञानादनुमित्सोदयप्रसङ्गात्। अतो यत्र पूर्वमनुमितिविषयत्वस्य यद्धेतुकस्य च ज्ञानं तत्र सिद्धौ सत्या सिषाधयिषा तथा नानुमानं नात्र तथेति। महानसादिवह्न्यनुमितौ तथा दर्शनादिति ध्येयम्। परन्तु सत्तावान् जातेरित्यत्र साध्यवदन्यस्मिन् सामान्यादौ जात्यभावादव्याप्त्याभावेऽपि हेतुतावच्छेदकसम्बन्धेन समवायेन वृत्तेरप्रसिद्धत्वादव्याप्तिरिति नातिदुष्टं लक्षणद्वयम्। एवं च कपिसंयोगी एतद्वृक्षत्वादित्यत्राव्याप्तिपरिहाराय यच्चिन्तामणौ प्रतियोगिव्यधिकरणस्वसमानाधिकरणात्यन्ताभावाप्रतियोगिना सामानाधिकरण्यं व्याप्तिरिति प्रतियोगिव्यधिकरणो य साध्यसमानाधिकरणात्यन्ताभाव इति प्रतियोगिव्यधिकरणत्वेनाभावो विशेषितस्तदपि सुधैव। तस्य दुरनुमानत्वात्। यदपि **मञ्जरीकारः**, हेतुसमानाधिकरणा यावन्तस्ते साध्यसमानाधिकरणास्तत्त्वं व्याप्तिरिति। तदपि न रुचिरम्। यावत्त्वस्यानेकपदार्थघटितत्वेनापेक्षाबुद्धिविशेषविषयत्वरूपयावत्त्वाङ्गीकारेऽपि अपेक्षाबुद्धेरयमयमयमेते सर्वे इत्याकारकत्वेन तत्पदार्थविषयकतयाऽनेकपदार्थघटितत्वानपायेन प्रतिपत्तिगौरवप्रसाद्। यावत्त्वस्य व्यापकत्वरूपेऽपि व्यापकत्वस्य तद्वन्निष्ठात्यन्ताभावाप्रतियोगित्वरूपतयाभावद्वयनिवेशेनोक्तदुष्टलक्षणत्वादित्यलं पल्लवितेन। विशेषस्तु मत्कृतप्रस्थानरत्नाकरटीकाया **किरणावल्यां** द्रष्टव्यः।

आकृतिमात्रार्थं लोकापेक्षा । अनधिगतार्थगन्तृ च प्रमाणम् । लोकानधिगत

---

ननु तथापीदानीमस्मदादीनां तादृशसङ्केतग्रहाभावादबोध्यत्वदोष इत्यत आहुः—आकृतीति । जातिशक्तिवादिनां पूर्वोत्तरमीमांसकानां मते घटपदस्य घटत्वे शक्तिं स्वीकृत्य अन्यथानुपपत्तिरूपप्रमाणान्तरेण व्यक्तिज्ञानं ज्ञायते, न तु व्यक्तौ शक्तिः । एवं रीत्या व्यक्तिज्ञाने जातेऽनन्तरं कीदृशी व्यक्तिरित्याशङ्क्य लोके परिदृश्यमाना या पृथुबुध्नादिरूपा आकृतिः सा ज्ञेयेति लोकापेक्षेत्यर्थः । तथा चात्मवादिनां घटपदात् लोके मृण्मयघटज्ञाने जाते वेदे हेमघटपदात् तादृशाकृत्या सुवर्णघटज्ञानं भविष्यतीत्येवं रीत्या वैदिकव्यवहार्यत्वं यज्ञवत् ब्रह्मणोऽपि सम्भवतीति भावः । किञ्चिदपि लोकापेक्षा न स्वीक्रियते, तर्हि यज्ञसिद्धिर्न स्यात् हंसमुखी स्रुचिः कर्तव्येति हंसमुखाद्याकृत्यपेक्षत्वात्पात्राणामिति हृदयम् । ननु जात्याकृतिव्यक्तयः पदार्थ इति सूत्रे पदार्थ इत्यस्य पदजन्यप्रतीतिविषय इत्यर्थकरणेनाकृतेरपि वैदिकपदार्थत्वसम्भव इत्यत आह—अनधिगतेति । प्रमाणान्तरेण नाधिगतः न ज्ञातः एतादृशो योऽर्थः, तत्र गन्तृप्रसरणलक्षणं प्रमाणमित्यर्थः । तथा च प्रमाणस्यायं स्वभावः, अनधिगतार्थगन्तृत्वम् । एवं च जातौ शक्तिः । जातिस्तु व्यक्तिं विना न तिष्ठतीति व्यक्तेराक्षेपलभ्यत्वमित्याकृतिसहिताया एव व्यक्तेर्ज्ञाने जाते अर्थापत्तेरपि लोके प्रमाणत्वात् तत्सिद्धाकृतौ शब्दप्रमाणप्रसरो न भविष्यतीति भावः । ननु तथापि वेदेऽनधिगतत्वं स्वीक्रियते चेत् यज्ञब्रह्मणोर्वेदरूपशब्दप्रमाणगन्तृत्वेऽनधिगतत्वं नास्ति, अगन्तृत्वे वेदप्रतिपाद्यत्वं न स्यादित्युभयतःपाशा रज्जुरित्यतस्तदर्थमाहुः—लोकेति । लोके अनधिगतो योऽर्थः । तथा चैतादृशार्थकरणाभावे

---

१ आकृतिर्वृत्तिविशेषः । वृत्तिश्च, अर्थस्मृत्यनुकूलः पदपदार्थसम्बन्धः । स च पदशक्तिसमयसङ्गतिसङ्केतवाचकत्वादिभिर्व्यवह्रियते । अत्र वैयाकरणा आलङ्कारिकाश्चाहुः—सैषा शक्तिः संयोगादिभिर्नानार्थकशब्देषु नियम्यत इति । तदुक्तं हरिणा—"संयोगो विप्रयोगश्च साहचर्यं विरोधिता । अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः ॥ सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः । शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः ॥" इति । तदर्थश्च, एते संयोगादयः शब्दार्थस्यानवच्छेदसन्देहे तदपाकरणद्वारेण विशेषस्मृतिहेतवो निर्णयहेतव इति । उपस्थितानामनेकेषामेकतरमात्रार्थतात्पर्यनिर्णयद्वारा तन्मात्रार्थविषयकान्वयबोधजनका इति भावः । नैयायिकास्तु प्रकरणादीनामिव संयोगादीनामपि तात्पर्यग्राहकत्वमेव । यथा सशङ्खचक्रो हरिः इत्यादौ शङ्खचक्रादिविशेषणमित्याहुः । अत्रेदं विज्ञेयम्—शक्तिग्रहः शाब्दबोधे जननीये पदजन्यपदार्थोपस्थितौ (स्मृतौ) उपयुज्यते । अयम्भावः—शक्तिर्हि एकसम्बन्धिविज्ञानमपरसम्बन्धिस्मारकम् इति रीत्या पदार्थस्मारिका । तथा चायमर्थः, येन रूपेणोपस्थितयोः पदपदार्थयोः सम्बन्धज्ञानम्, तद्रूपावच्छिन्नस्मरणम् । यथा हस्तिहस्तिपकयोः पाल्यपालकभावसम्बन्धज्ञानेन हस्तिज्ञानाद्धस्तिपकस्मरणम् । तथा च शक्तिग्रहः शाब्दबोधजनिकायां पदजन्यपदार्थोपस्थितौ सहकारी भवतीति । पदपदार्थयोः सम्बन्धश्च इदंपदममुमर्थं बोधयत्वित्याकारक ईश्वरसङ्केतः । तदर्थश्च एतत्पदजन्यत्वप्रकारतानिरूपितैतदर्थबोधविशेष्यताशालीच्छेति, एतत्पदजन्यबोधविषयोऽयमर्थ इत्याकारकेश्वरेच्छा शक्तिरिति वा । ईश्वरसङ्केत इत्यस्यायम्भावः । द्वादशेऽहनि पिता नाम कुर्यादिति श्रुतिः । तथा च द्वादशाहःकालीनपित्राद्युच्चारितनामत्वादिना नामवाच्यः शिशुः इत्याकारकेच्छयेश्वरेण तादृशश्रुतिप्रणयनादाधुनिकसङ्केतितचैत्रादिशब्देषु ईश्वरसङ्केतोऽस्त्येवेति । अस्माच्छब्दादयमर्थो बोद्धव्य इत्यनादिसङ्केतः । यथा घटार्थविशेष्यकघटादिपदजन्यबोधविषयत्वप्रकारक ईश्वरसङ्केतः । नव्यास्तु । इच्छामात्रं शक्तिरित्याहुः । तथा च ईश्वरसङ्केत एव न शक्तिः । किन्तु, अभियुक्तसङ्केतमात्रं शक्तिः । आधुनिके तु सङ्केतिते न शक्तिरिति सम्प्रदायः । नव्यमते तु, आधुनिके सङ्केतितेऽपि शक्तिः । मीमांसकास्तु, अभिधा नाम पदार्थान्तरं सङ्केतमात्रम्, शक्तिरित्याहुः । सङ्केतमदजन्यमदविषय इत्यर्थः । तन्मते, इयं चन्द्रसहचारिमदविषय इति ज्ञेयम् । पदपदार्थयोर्वाच्यवाचकभावनियामकं सम्बन्धान्तरं शक्तिरिति शाब्दिका वदन्ति । अविनाभाव एव शक्तिरिति प्राचः । न्यायमते, शक्तिस्त्रिविधा, योगः, रूढिः, योगरूढिरिति । तत्राद्या पाचकादिपदेषु । द्वितीया घटादिपदेषु । तृतीया पङ्कजादिपदेषु । अत्र यौगिकरूढिस्तुरीयापि शक्तिरिति केचिद्वदन्ति । भाष्या महायौगास्त्वामपि वृत्तिमङ्गीचक्रुः । प्राभाकरास्त्वेवं पदशक्तिं विभजन्ते—पदशक्तिर्द्विविधा, आनुभाविका, स्मारिका चेति । आनुभाविका शाब्दानुभवजनिकेत्यर्थः । स्मारिका पदार्थस्मृतिजनिकेत्यर्थः । तत्राद्या पर्यायेषु । पदार्थानामन्वितस्यैवानुभवात् । द्वितीया तु जातौ । पदाभावे प्युपस्थिते रेवानुभूयमानत्वादिति भावः । अत्र तन्मते तत्तदर्थेषु

दूषितत्वात् । नाप्युपलक्षणं रूपान्तरेणावगतमन्येनोपलक्ष्यते । न च व्यक्तेराकृतिं विना रूपान्तरमस्ति । का व्यक्तिरुपलक्ष्यते । किं काप्येका सर्वा वा । नाद्यः, अनध्यवसायप्रसङ्गात् । अनन्या अवाच्यत्वप्रसङ्गाच्च । न द्वितीयः । अनन्तकल्पनाप्रसङ्गात् । अनन्तासु चागृहीतास्वसम्बन्धावधारणासम्भवाच्च । एकेनोपलक्षणेनैक्याच्छक्तेरनन्तरत्वम् । नाप्यनवधारणं ताद्रूप्येनावधारणसम्भवादिति चेत्, न; उपलक्षणस्यैकत्वात् किमुपलक्षणस्यैकत्वं भवति ज्ञायते वा । उपलक्षणस्यैकत्वमेवोपलक्षणस्यैकत्वं वा । नाद्यः । भिन्नानामुपलक्ष्याणामेकत्वस्य कर्तुमशक्यत्वात् । नापि मध्यमः । असत एकत्वस्य ज्ञानासम्भवात् अत एवाकृतिविशिष्टा व्यक्तिर्वाच्येति विन्ध्यवासिमतं निरस्तम् । विशेषणैक्यादपि विशेष्यभेदादेव विशिष्टानन्तत्वात् । अतो व्यक्तिः संयोगाविशेषरूपाकृतिर्जातिश्चेति त्रितयम् शब्दार्थं इत्यक्षपादीयमतं निरस्तम् । व्यक्तेरनन्तत्वस्यापरीहारात् । अतो व्रीहीन्प्रोक्षतीति व्यक्त्यर्थः, श्येनचितं चिन्वीतेत्यत्राकृतिरर्थः, इति पाणिनेरुभयं सम्मतं निरस्तम् । राद्धान्तस्तु । यत एवान्य पक्षो न सम्भवति । अत एवाकृतिः शब्दवाच्या तस्यामेकस्या सम्बन्धस्य सम्भवात् । न च क्रियायोगाभावादवाच्यत्वम् । य एव हि क्रियायोगः स एवाकृतेः । नहि केवलाया व्यक्तेः कारकत्वावधारणं शक्यम् । तस्याप्यन्वयव्यतिरेकाभ्यगम्यत्वात् । गमनादियोगोप्याकृतिविशिष्टाया एव व्यक्तेः प्रत्यक्षादिभिरवगम्यते । नाकृतिं परित्यज्य व्यक्तिरायातीति कश्चित् प्रत्येति । शुद्धाया आकृतेः क्रियायोगित्वं नास्ति । न तु परोपसर्जनभावेनापीति । तद्यथा केवलस्य दध्यादेर्विधेयत्वं नास्ति । तद्विशिष्टायास्तत्क्रियाया विधेयत्वात् । दध्याद्यपि विधेयम् । तथात्रापि । अत एवाकृतेर्व्यक्तिं प्रति विशेषणत्वमेव व्यापारो न त्वन्यत् कश्चित् समवायातिरेकी । न चासाधनात्मकत्वादव्यापारत्वम् । साधनं हि प्रतिसाधनस्यान्तरायं व्यापारो भवति । न च जातिर्व्यक्तितः साधनान्तरम् । विशिष्टस्यैव साधनान्तरत्वात् । अयमेव च व्यापारोऽध्यवसायो नाम जातिसमवायेनैव विशिष्टव्यक्त्यध्यवसायात् । न [illegible] ज्ञानमेव जातेर्मन्त्रपदवद्व्यापार इति द्रष्टव्यम् । अचेतनकर्तृकास्वपि क्रियास्वाकृतेर्व्यापारात् । अत एव विकाराभावाज्जातेरकारकत्वमिति निरस्तम् । विशिष्टस्यैव विकारात् । विकारं विनापि च सहस्रमाषमात्रेणैव कारकत्वावधारणात् । जातिविशिष्टैव व्यक्तिः स्वामिनी स्वं चेति जातेरपि ताद्रूप्यम्, निष्क्रियायास्तु तस्याः साधारणमित्यदोषः । नन्वेवं कथं केवला जातिर्वाच्या तादृश्याः क्रियायोगाभावात् । सत्यम् । आकृतिविशिष्टैव व्यक्तिः शब्दात्प्रतीयते । नागृहीतविशेषणान्यायात् कल्पनालाघवाच्च । जात्यंश एव शक्तिः, न तु केवला जातिः प्रतीयते । क्रियायोगिनीत्वाभावात् । ननु शब्दशक्तिमन्तरेणापि व्यक्तिः प्रतीयमाना । का प्रतीयते ? न सर्वा सर्वोपादानप्रसङ्गात्, सर्वव्यक्त्यवगमाच्चैवं सर्वैः सर्वज्ञः स्यात् । न च प्रातिस्विकेन रूपेण तत् प्रतीतानां कार्यत्वमुक्तम् । ताः प्रत्यन्वयव्यतिरेकतः कारकत्वस्यासम्भवात् । न च काचिदेका प्रतीयते । तथा सति व्यक्त्यन्तरद्वारेणाकृतेः कार्यान्वयविरहप्रसङ्गात् । प्रतिपुरुषं च भिन्नभिन्नप्रतीतौ शास्त्रार्थस्याव्यवस्थितत्वप्रसङ्गात् । व्यक्तिमात्रं प्रतीयत इति चेत्, न; अयं हि मात्रशब्दः साकल्यार्थः, सामान्यार्थो वा प्रथमे उक्तमुत्तरम् । द्वितीये तु व्यक्तेरप्रतीतिप्रसङ्गः । एतेन व्यक्तिवादिनां व्यक्त्यभिधानं निरस्तम् । उच्यते । रूपमेव हि व्यक्तीनां भेदोऽभेदश्च । नहि व्यक्तिनां स्वरूपमेव हि भेदः । तथा सति गृह्यमाणस्मर्यमाणयोः शुक्तिरजतव्यक्त्योर्भेदाग्रहाप्रसङ्गात् । रूपमादाय न रूपतो भिन्नाः, किन्तु स्वरूपत एव । अत आह रूपं रूपतयेति । तस्माद्धर्मिणो धर्मभेद एव भेदो वर्णस्य तु स्वरूपमेव । तदिहापि व्यक्तीनां यदेकं रूपं सामान्यं तस्याभेदादभेद एव । खलु मुण्डादीनां तु रूपाणां भेदाद् भेदोऽपि । तदिह सामान्येन सामान्यरूपेण व्यक्तीनां शब्दादवभासात्मानन्तस्य प्रतिपाद्यत्वम् । नाप्यनन्तोपादानम् । एकव्यक्त्युपादाने तु सामान्यरूपसम्पत्तेः । न चैवं स्याद्वादावतारेऽपि दिगम्बरपक्षपात इति वाच्यम् । धर्मधर्मिभेदाभेदौ हि नाङ्गीक्रियेते । धर्मी तु केनचिद्रूपेण एकोऽनेकश्चेति को नाम नानुमन्यते । कथमेकेनात्मना व्यक्तिः प्रतीयत इति शास्त्रे व्यवहारः । कथं वा यत्र भेदमध्यवस्यत एवाभेदः प्रतीयत इति प्रश्नः । सा तु व्यक्तिमाक्षिपतीति परे । ननु सामान्यं हि व्यक्तिमन्तरेण प्रतीयते । तस्मात्समानसम्वित्संवेद्यैव व्यक्तिः । नैवम् । [illegible] हि समानत्वेनैकरूपेण जातिशब्दवाच्या प्रमाणाभावात् । किन्तु स्वरूपेण । न च समानत्वमेवास्याः स्वरूपं तद्भेदत्वात् । वयमन्यथा आलोचने प्रतीयते । समानत्वेनाप्रतीता कथं व्यक्तितो भेदेनाभिहिता भवेत् । अनुवृत्तत्वेन जातिर्व्यक्तितो भिद्यत इति चेत् । समानमिदमालोचनेऽपि । तत्र सा भिन्नत्वेन प्रतीयत एव । चरमे त्वनेनाध्यवसायेन पूर्वपिण्डानुसन्धाननिमित्तेन भिन्नरूपग्रहणमिति चेत्, इहापि तर्हि चरममेव पूर्वपिण्डानुसन्धानादेवानुवृत्तत्वरूपं समानत्वमवगमिष्यामः । संस्थानविशेषाभिव्यङ्ग्यत्वादाकृतेः, व्यक्तिं विना च संस्थानाप्रतीतेः । कथं विना व्यक्तिमाकृतिः प्रतीयत इति चेत्, न, अभिव्यक्तिर्हि प्रतीतिजननमुच्यते । यद्यपि व्यक्त्या आकृतिरभिव्यज्यते, ततः प्रथमं व्यक्तिः प्रत्येतव्या स्यात् । प्रत्यक्षज्ञानं चाकृतेः संस्थानेन्द्रियसन्निकर्षेण ज्ञाततत्पुरस्समपेक्ष्यते । न तु शब्दे विज्ञाते तथा । अन्यथा लोकापेक्षाप्रसङ्गात् । गवादिशब्दान्तरे द्वयोरेव जातिव्यक्त्योः प्रत्ययः सूक्ष्मत्वात् । कालभेदाग्रहाद् भ्रान्तिरिति प्रमाणाभावात् । समानवित्तिवेद्यत्वमिति चेत्; न; यथा व्युत्पत्तिशब्दादर्थज्ञानं तथादि व्युत्पत्तिपर्यालोचनया क्रमोऽवसीयते । तन्नो यौगपद्यमेवास्मिदम्, व्युत्पत्तिरेव न तादृशी भवति । अन्यथा कर्तुरपि धात्वर्थेन नाक्षेपः स्यात् । शब्दानन्तरं पश्चात्काला एव नियामा अवगमात् । ननु न व्यक्तेराक्षेपो युक्तः । स चाक्षेपोऽनुमानं वा स्यात्, अर्थापत्तिर्वा । नाद्यः । गृही-

तसम्बन्धानामेव व्यक्तिं विनाप्युपपत्तेः । सदकारणकत्वात् । जातिज्ञानं च व्यक्त्याक्षेपायालम् । न हि तत्र व्यक्तिः कारणं सत्तया नापि ज्ञाता व्यक्तिज्ञानात् पूर्वमेव जातत्वात् । उच्यते । द्वयमपि युक्तम् । अनुमानं तु तावत् व्यक्तिमात्रस्य सम्बन्धग्रहणात् केन रूपेणानुमानमिति चेत् । अथ केन रूपेण समानवित्तिवेद्यत्वं जातेरेवेति चेत् । तुल्यमत्रेऽपि । कथं जाते-र्जात्यैव रूपेणानुमानं भेदाश्रयत्वात् लिङ्गलिङ्गिभावस्येति चेत्, समानवित्तिवेद्यत्वस्य रूपाभेदेऽपि रूपिणो भिन्नत्वाद्यम-दोष इति चेत् । ममापि तुल्यम् । अर्थापत्तिरप्यत एव युक्ता । न हि कारणमेव विना कार्यस्यानुपपत्तिः । किन्तु येन व्याप्त-मिति बुद्धिना तस्यानुपपत्तिः । व्याप्यावजातिर्व्यक्त्येति कथमर्थापत्तिर्न युक्ता स्यादिति । अत्रोच्यते । न जातिः केवला प्रतिभानमर्हति । स्वरूपत एव परतन्त्रत्वात् । स्वतन्त्रं हि वस्तु केवलं प्रतिभासते । घटादिवत् । यत्परतन्त्रशक्ति तत्तस्मि-न्नेव प्रकाशमाने प्रकाशते । यथार्थप्रकाशन एव ज्ञानप्रकाशः, परतन्त्रा चेयं जातिः प्रत्यक्षादवगम्यते । अत एवोक्तम्, कः कश्चिदिह गवि गोत्वमिति प्रतीतिमभ्युपगच्छेत् । अन्यत्र निविष्टस्यत्र पारतन्त्र्यादिति । दण्डता परसमर्पकत्वात् स्वतन्त्रं प्रतीयते, तच्च द्रव्यमेव । अत एव शब्दाः पठन्ति कृदभिहितो भावो द्रव्यवत्प्रकाशते । अत एव गुणा अपि गोत्वशब्दरहिताः परतन्त्रा एव यदभिप्रायेणोच्यन्ते । संयुक्ताविमाविति हि प्रतीयते हि न पुनरयमनयोः संयोगः । नन्वेवं गोत्वाद्याख्या शब्देभ्यो जातिस्तथैव प्रकाशेत । तत् स्वभावात् शब्दस्वभाववैचित्र्यनिबन्धनोऽयं प्रतीतिभेद इति चेत्, सत्यमिदं नास्माकं कारणे प्रश्नो जातौ त्वेकस्वभावायां कीदृशः प्रतीतिभेद इति पृच्छामः । गोशब्दाद्व्यक्तिरपि प्रतीयते नाकृतिशब्दादिति शब्दस्वभाव इति चेत्, स्वीकृतं तर्हि व्यक्तेर्वाच्यत्वम् । उच्यते, गोत्वादिशब्दा हि द्रव्यगतं स्वातन्त्र्यमुपस्थाप्याऽऽकृत्या तदभेदाभदादाकृतौ स्वतन्त्रव्यवहारं प्रवर्तयन्ति । तेन गोत्वादिशब्देषु व्यक्तिः परतन्त्रा, आकृतिः स्वतन्त्रा इत्यवभासः । गवादिशब्देषु तु विपरी-तम् । नन्वेवं गोत्वादिशब्दानां विप्रलम्भकत्वमिति वाच्यम् । आहार्यत्वात् स्वातन्त्र्यस्य । तथथा शिलापुत्रकस्य शरीरं शोभ-नमिति ज्ञानं, उष्णं जलमिति वा न विसंवादयति, तथैतत्, यथा च दधि विधीयते इति दध्नः स्वातन्त्र्येण विधानप्र-त्ययेऽपि पारतन्त्र्यव्यवहार एव तात्पर्यकत्वान्न विसम्वादवाक्यत्वम् । तथेहापि । स्वातन्त्र्याक्षेपः किमर्थमिति चेत्, न; विधि-त्सप्रस्यार्थमेव । अन्यथा दधिहोमो विधीयत इत्यभिधाने दधिविशिष्टहोमविधिमेव कश्चिदवगच्छेत् । नन्वेवं क्रियाया अपि कर्तृकर्मनिरूपणीयत्वात् । यजेर्द्रव्यदेवतानिरूपणीयत्वात्, करणत्वादीनां च क्रियानिरूपणीयत्वात्, समानवि-त्तिवेद्यत्वप्रसङ्गः । भवत्वेवं, को दोषः । कथं तर्हि कर्मणोराक्षेप इति चेत्, विभक्तस्य कर्मोद्देशेनसापेक्षत्वादिति ब्रूमः । यथा ह्यविदेशागतः पदार्थो विविच्यपदार्थान्तरेण संयुज्यते तथैतत् । अत एव यत्र व्यक्तेर्विभक्ताया एवार्थान्तरस-म्बन्धो विवक्षितस्तत्र व्यक्तिर्लाक्षणिकैव भवति । यथा ग्रहं सम्मार्टीत्युद्देशे । नन्वेवं जातिव्यक्त्युभयविषया सम्वित् तस्यां च शब्दः कारणम् । ततो व्यक्तिरपि वाच्या स्यात् । न ह्यर्थभेदे पृथक् शब्दानां शक्तिज्ञानशक्तेरेवार्थशक्तित्वव्यपदे-शात् । सत्यम्, तत् ज्ञानं हि यांशं तत्रैकस्मिन्नंशे शक्तिरित्युच्यते । तथथा प्रत्यभिज्ञाने तत्तांश एव संस्कारस्य शक्तिर्नेद-मंशे । नन्वेवं व्यक्त्यंशस्याकारणत्वं स्यात् । जात्यंशकारणक इति मावोचत समानकालत्वात् । अवर्जनीय इति चेत्, कदाचित्कस्याकारणकत्वप्रसङ्गात् । अवर्जनीयापरिज्ञानात् । यथा शब्दस्य ज्ञानात्मत्वस्यात्मप्रकाशे शाब्दबोधस्य शक्तिर्नास्ति । अथ च तौ प्रकाशेते, तथा व्यक्तिरिति चेत्, न; तयोरपि शक्तिमन्तरेण प्रकाशाभावात् शाब्दज्ञानवि-षयत्वाभावात्तयोर्नाभिधेयत्वव्यपदेशः । सकलप्रमाणसाधारणेन रूपेण तत्र शब्दो व्याप्रियत इति तयोर्नाभिधेयत्वम् । इहापि सकलस्य जातिज्ञानकारणस्याऽयं स्वभावो यद्व्यक्तिज्ञानजनकत्वं प्रत्यक्षादिष्वपि तथा दर्शनात् । अतो नाभिधेय-त्वमिति चेत्, न, नहि प्रत्यक्षे जातिज्ञानकारणाद्व्यक्तिज्ञानजननं जात्यज्ञानेऽपि व्यक्त्यज्ञानात् । जातिज्ञानका-लेऽपि च तस्यैव कारणत्वेनाक्लृप्तत्वात् । जातिज्ञानहेतोश्च संयुक्तसमवायस्य संयोगाव्यभिचारित्वेन जातिज्ञानस्यापि व्यक्तिज्ञा-नाव्यभिचारित्वसिद्धेः । अनुमानेऽपि च जातिविशिष्टाया एव व्यक्तेर्व्याप्त्यङ्गीकारात् । व्यक्त्यवगमस्यासिद्धेः, न, सकलजातिज्ञा-पकसाधारणी शक्तिः क्लृप्तास्ति । सकलजातिवाचकसाधारण्येयं व्यक्तिरतो वाच्यत्वव्यपदेशः, गौणलाक्षणिकयोः सकल-शब्दसाधारणशक्तिविषयत्वे सत्यपि यथा नाभिधेयत्वम्, अन्यथा शक्यत्वात् । प्रतीत्यनुपपत्तेरिति चेत्, न; अस्य परि-भाषामात्रत्वात् । विन्ध्यवासिमतेन समं वस्तुतोऽविशेषात् । इदानीमेव शक्तिकल्पनेनागृहीतविशेषणान्यायवैधुर्यात् । पर्यायशब्दानां च साधारण्येनावाचकत्वप्रसङ्गात् अर्थशक्त्यैवोपस्थितयोर्गौणलाक्षणिकयोः शब्दान्तरजन्यान्विताभिधानप्रवेशो-पपत्तौ शब्दशक्तिकल्पनाविरहेण दृष्टान्तस्य साधनविकलत्वात्, अस्त्येव व्यक्तौ शक्तिः । सा तु न ज्ञाता, कारणं, जातिशक्तेरेव तु ज्ञानमुपयुक्तम् । जातिशक्तिज्ञानस्य हि यदि कारणं न स्वीक्रियते, ततोऽव्युत्पन्नस्यावगमः स्यात् । इह तु जातौ व्युत्पन्नस्य व्यक्तिज्ञानं न जायत इति व्यभिचाराभावात् । न व्यक्तिविषयाया अपि शक्तेर्ज्ञानकारणत्वमिति, सामान्यकल्पने प्रमाणमस्ति । तस्मात्, विज्ञातशक्तिशब्दजनितज्ञानविषयत्वलक्षणं वाच्यत्वं व्यक्तेर्नास्तीति उक्तमिति चेत्, न; अस्यापि भाषा-मात्रत्वात् । शक्तिस्वीकारेऽनवगतविशेषणान्यायविरहात् । शब्दस्य च शब्दज्ञानोचिता शक्तिर्ज्ञाता कारणमिति सामान्यकल्प-नयोपपत्तौ जातिविषया ज्ञाता व्यक्तिविषयाऽज्ञातेति विशेषकल्पनाया एव गुरुत्वात् । व्यक्तिवाचिनामपि व्यक्तिशक्तिज्ञान-स्यापि कारणत्वाङ्गीकारात् । जातेरेव सम्बन्धावधारणकाले व्यक्तेरपि दृष्टत्वात् । तज्जनितसंस्कारशब्दाभ्यां सम्भूयोभयज्ञानं

**इत्यर्थः। यज्ञब्रह्मणोरलौकिकत्वं सिद्धमेव। लौकिको व्यवहारः सन्निपातरूपत्वात्पुरुषार्थसाधक एव। तर्हि शब्दमात्रस्य कथं ग्रहणम्। वेदव्याख्यातृवाग्विषयत्वादिति ब्रूमः। एतेन "मनसैवानुद्रष्टव्यम्" इत्यपि समर्थितम्। तस्मात् सृष्ट्यादिप्रतिपादका अपि वेदान्ताः साक्षाद्ब्रह्मप्रतिपादका इति सिद्धम्॥ १।१।४॥**

---

वेदप्रतिपाद्यत्वमुभयोर्न स्यादिति भावः। ननु कथञ्चित् किञ्चिदंशे लोकापेक्षास्तीति लौकिकत्वमुभयोः स्वीकर्तव्यमित्यत आहुः—**यज्ञेति**। **सिद्धमिति**। उभयमतसिद्धमित्यर्थः। ननु सूत्रकृता नाशब्दमित्युक्तं नावेदमिति नोक्तम्। तेन कृत्वा किं ज्ञायते लौकिकवैदिकसाधारणशब्दव्यवहार्यत्वं ब्रह्मण इत्यत आहुः—**लौकिक इति**। **सन्निपातरूपत्वादिति**। अहन्ताममतायुक्ता बुद्धिः सन्निपातः, तदीयव्यवहारस्यापि सन्निपातत्वम्;. एवं च लौकिकव्यवहारस्य सन्निपातकार्यत्वेन मिथ्यात्वादित्यर्थः। अत एवैकादशस्कन्धे भगवतैवोक्तं "सन्निपातस्त्वहमिति ममेत्युद्धव या मतिः। व्यवहारः सन्निपातो मनोमात्रेन्द्रियासुभि"रिति। ननु तथापि शब्दग्रहणस्य किं प्रयोजनमिति शङ्कते—**तर्हीति**। समाधानमाहुः—**वेदेति**। वेदव्याख्यानस्य वेदत्वाभावेऽपि भगवन्निःश्वासरूपत्वेन ब्रह्मप्रतिपादकत्वात् शब्दग्रहणमित्यर्थः। अत एव मैत्रेयीब्राह्मणे सूत्राण्यनुव्याख्यानान्यस्यैवैतानि सर्वाणि निःश्वसितानीत्युक्तम्। अत एवोक्तं गीतायां "वेदान्तकृद्वेदविदेव चाहमि"ति। एवं रीत्या वैदिकशब्दजन्यशाब्दबोधविषयत्वे सिद्धे, ब्रह्मणः परोक्षज्ञाने जाते, तदनन्तरं मननेन मानसिकं ज्ञानं कस्यचित् साक्षात्कारोऽपि जायते, इति श्रुत्वा समर्थयन्ति—**एतेनेत्यादिना**। **मनसैवेति**। कामनारहितेनेति शेषः। अपिना "कश्चिद्धीरः प्रत्यगात्मानमैक्षदि"ति श्रुतिरपि सङ्गृहीता।

उपसंहरन्ति—**तस्मादिति**। **सिद्धमिति**। वेदान्तवाक्यैर्ब्रह्मविचारः कर्तव्य इति सिद्धमित्यर्थः॥४॥

---

जन्यते। अत समानवित्तिवेद्यत्वमपि स्यात्। व्युत्पत्तौ संस्कारस्यैव व्यापारत्वादिति चेत्, न, संस्कारोद्बोधे नियमकल्पनमिति चेत्, न, अनियतहेतोर्नियमकल्पनस्य प्रमाणविरुद्धत्वात्। कथं तर्हि धेनुशब्दान्नियमेन गोत्वस्मरणं तस्यामान्यत्वेऽपीति चेत्,न, तस्य व्युत्पत्त्युपलक्षणत्वेनावश्यस्मर्तव्यत्वात्। उच्यते, यद्वस्तु यत्परतन्त्रं तद्बोधिका सामग्री तदपि बोधयतीति सामान्यत एव क्लृप्तम्। कथमन्यथा धूमवत्त्वादिभिर्ज्ञानेऽनुमाने तस्मिन्कालेऽर्थोऽपि प्रकाशेत। अर्थस्यापि व्याप्तत्वादिति चेत्, न, अर्थेन सम धूमान्यस्य कार्यकारणत्वविरहात्। ज्ञानद्वारकः सम्बन्ध इति चेत्, तर्हि ज्ञानसमन्ययोरर्थानुमानं न स्यात्। अविशिष्टमेव ज्ञानमनुमीयत इति चेत्, न, अर्थस्याकारणत्वात्। विशिष्टस्य कारणत्वविरहात्। तर्कोपस्थितस्तदानीमर्थ इति चेत्, न, नियमस्याप्रामाणिकत्वप्रसङ्गात्। तस्मात् यत् परतन्त्रा ज्ञानेच्छाशक्त्यादयो येन प्रतीयन्ते तस्यायं स्वभावो यत्स्वतन्त्रमपि गृह्णातीति वाच्यम्। जातिश्चेयं व्यक्तिपरतन्त्रेति जातिग्राहिणादपि व्यक्तिग्रहण स्वभाव इति क्लृप्तमेव। प्रत्यक्षेण तु प्रमाणसमाहारो भवति प्रातिस्विकस्यापि व्यक्तिज्ञानकारणस्य विद्यमानत्वात्। इह [illegible] जातिग्राहिणैव शब्देन व्यक्ति प्रतिपाद्यते न त्विदानीं शक्ति कल्प्या। अत एव न शक्तिर्ज्ञाता व्याप्रियते। साधारणत्वात्। अतो न व्यक्तावुक्तता शक्त्यवधारणस्य व्युत्पत्तित्वात्। यादृशं च परतन्त्रे ज्ञानं तादृशं स्वतन्त्रेऽपीति जातिव्यक्तेरपि शाब्दत्वम्। अभिधेय एवार्थे शब्दानामौत्सर्गिकं तात्पर्यमिति विभक्त्यापि कारणत्वादिकमुच्यते, इति जातेरेव विनियोगिकमङ्गत्वं तत्तु व्यक्तेः साधनत्वमन्तरेण नोपपद्यत इत्यौपादानिकं व्यक्तेरङ्गत्वं भवति। एवं पशुादिसम्प्रदायम्न्योऽपि जातेरेव सम्प्रदानत्वादिकमपि केवलाया जातेर्न निर्वहतीति न व्यक्तिसमाश्रयणे निर्वाह्यते। एवमन्यत्रम्। अत एवाहृतो शब्दार्थे श्येनचितं चिन्वीता घटेते, अत्र हि कर्मण्यग्न्याख्यायामिति स्मरणात्। श्येनश्चीयत इति श्येनचित्तदार्थे.। न च चीयमानस्थानस्य श्येनत्वं युज्यत इति श्येनशब्दो गौणार्थः। न चैकस्याः वस्याधिक्यके. सादृश्यमादियते। यद्यपि जात्या सादृश्यमिह यमेव तत्र चितिव्यक्तेर्न भवति। मूर्तामूर्तयो सादृश्यविरहात्। तथापि जातिविशिष्टेन व्यक्तिमात्रेण सादृश्यसम्पादनादस्ति जातिसादृश्यमित्येव च जाते. श्वरत्वमित्युक्तं भवतीत्याहुर्मुरारिमिश्राः।

( सर्वभवनसमर्थत्वं प्रतिपाद्य सूत्रावतरणम् )

स्यादेतत्, कर्तृत्वमकर्तृत्वं च वेदे प्रतीयते ब्रह्मणः। "यतो वा इमानि भूतानि जायन्ते" (तै. ३-१), "स आत्मानं स्वयमकुरुत" (तै.२-७), "निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्" (श्वे. ६-१९), "असङ्गो ह्ययं पुरुषः" (बृ. ४-३-१५) इत्येवमादिवाक्येषु। तत्र द्वेधा निर्णयः सम्भवति। सर्वभवनसमर्थत्वाद्विरुद्धसर्वधर्माश्रयत्वेन। अन्यतरबाधाद्वा। अलौकिकापेक्षया लौकिकस्य जघन्यत्वात्कर्तृत्वादेर्लोकसिद्धत्वात्कर्तृत्वबाध एव युक्तः। ईक्षत्यादिकं तु प्रकृतिगुणसम्बन्धादपि ब्रह्मणो युज्यते। तस्मादलौकिकसर्वभवनसमर्थत्वादिकल्पनापेक्षया लौकिक एवान्यतरबाधो युक्तः। ततश्च सत्यस्वरूपादन्यदेवैतदिति स्वयमेवाशङ्क्य परिहरति सूत्रकारः—

( आत्मशब्दवाच्यतया प्राकृतगुणवत्त्वनिरासः )

गौणश्चेन्नात्मशब्दात् ॥ १।१।५ ॥

ईक्षत्यादिगुणयुक्तः परमात्मा गौणः प्रकृतिगुणसत्त्वसम्बन्धवान् इति चेत्, न तथा वक्तुं शक्यते। कुतः? आत्मशब्दात्। "आत्मा वा इदमेक एवाग्र आसीत्" (ऐ. १-१) इत्युपक्रम्य "स ऐक्षत" (ऐ. १।१) इत्युक्तम्। आत्मशब्दः पुनः सर्वेषु वेदान्तेषु निर्गुणपरब्रह्मवाचकत्वेनैव सिद्धः। तस्यैव जगत्कर्तृत्वं श्रुतिराह। ननु चोक्तमन्यतरबाधो युक्त इति। न युक्तः। स्वातन्त्र्याभावेन सगुणस्य कर्तृत्वायोगात् वेदाश्च प्रमाणभूताः। ततः सर्वभवनसामर्थ्यमेव श्रुतिबललभ्यमङ्गीकर्तव्यम्। किञ्च अस्तिभातिप्रियत्वादिधर्मवत् ब्रह्मगतकर्तृत्वं लोके प्रतीयते। कार्यत्वात्। तस्मादात्मशब्दप्रयोगाद् गुणातीतमेव कर्तृ ॥ १।१।५ ॥

---

गौणश्चेन्नात्मशब्दादित्यग्रिमं सूत्रमवतारयन्ति—स्यादेतदिति। चकारेणोपादानत्वमनुपादानत्वं बोध्यम्। कर्तृत्वबोधकं वाक्यमाहुः—यतो वेति। उपादानत्वबोधकं वाक्यमाहुः स आत्मेति। अकर्तृत्वबोधकं वाक्यमाहुः—निष्कलमिति। अनुपादानत्वबोधकं वाक्यमाहुः—असङ्गेति। ईक्षत्यादिकं त्विति। "स ऐक्षते"त्यादिश्रुतिप्रतिपाद्यमीक्षणकर्तृत्वं तु प्रकृतिगुणसम्बन्धविशिष्टं यच्छबलं ब्रह्म तन्निष्ठमिति भावः। एतदिति। शबलं ब्रह्मेत्यर्थः।

स ऐक्षतेति। तच्छब्दस्य पूर्वपरामर्शकत्वाच्छुद्धात्मन एव परामर्शो भविष्यतीति भावः। शङ्कते—नन्विति। उत्तरयन्ति—न युक्त इति। ननु कुत इत्यत आहुः—स्वातन्त्र्येति। सविशेषणे हि विधिनिषेधौ विशेषणमुपसङ्क्रामतः सति विशेष्ये बाधे इति न्यायेन शबलं ब्रह्म जगत्कर्तृ इत्यनेन वाक्येन तद्गुणसमूहरूपप्रकृतिविशिष्टे ब्रह्मणि कर्तृत्वं विधीयते तस्य च विशेष्ये शुद्धब्रह्मणि बाधात् प्रकृतौ उपसङ्क्रमणं भविष्यति। ततश्च स्वातन्त्र्यहानिरिति भावः। ननु प्रकृतेर्जडत्वाच्चैतन्याधीनत्वमतो दूषणान्तरमाहुः—वेदाश्चेति। "सदेव सौम्येदमग्र आसीदि"ति श्रुत्या एवकारेणेतरयोगं व्यवच्छिद्यते, तेन च शुद्धस्यैव कर्तृत्वमित्यर्थे लोकप्रतीतिरपि। साधकान्तरमाहुः—किञ्चेति। कार्यत्वादिति। कारणगुणाः कार्यगुणानारम्भन्त इति न्यायात् प्रपञ्चस्य कार्यरूपत्वात् लोके कुलालादौ कर्तृत्वं ब्रह्मगतमेव प्रतीयते इति भावः। उपसंहरन्ति—तस्मादिति। आत्मशब्देति। "आत्मा वा" इत्यादिश्रुताविति शेषः ॥ ५ ॥

( आत्मशब्दस्य गौणत्वोपक्षेपेण सूत्रावतारः )

नन्वात्मशब्दोऽपि लोकवद्गौणोऽस्तु । लोके हि केनचित्पृष्टो विष्णुमित्र आह यज्ञदत्तो ममात्मेति । अत्र गौणत्वमुपचार इत्येवं प्राप्तेऽभिधीयते—

( मोक्षरूपफलकथनादपि प्राकृतगुणवत्त्वनिरासः )

तन्निष्ठस्य मोक्षोपदेशात् ॥ १।१।६ ॥

एवं हि श्रूयते । "असद्वा इदमग्र आसीत् । ततो वै सदजायत । तदात्मानं स्वयमकुरुत" (तै. २-७) इत्युपक्रम्य "यदा ह्येवैष एतस्मिन्नदृश्येनात्म्येनिरुक्ते निलयनेऽभयं प्रतिष्ठां विन्दते । अथ सोऽभयं गतो भवति" (तै. २-७) इति । प्रापञ्चिकधर्मरहिते ब्रह्मण्येतस्मिन्पूर्वोक्तजगत्कर्तरि परिनिष्ठितो मुक्तो भवतीत्यर्थः । तत्र यदि जगत्कर्ता गौणः स्यात् तन्निष्ठस्य संसार एव स्यात् । न मोक्षः ॥१।१।६॥

किञ्च—

( हेयत्वस्याकथनादपि प्राकृतत्वस्य निरसनम् )

हेयत्वावचनाच्च ॥ १।१।७ ॥

इतोऽपि निर्गुण एव जगत्कर्ता । वेदान्तेषु सर्वत्र साधनोपदेशेषु पुत्रादिवज्जगत्कर्ता हेयत्वेन नोपदिश्यते । यदि सगुणः स्यात्प्राकृतगुणपरिहारार्थं मुमुक्षुभिर्जगत्कर्ता नोपास्यः स्यात्, पुत्रादिवत्, अत ईक्षत्यादयो न सगुणधर्माः । सूत्रत्रयस्येक्षतिहेतुसाधकत्वाच्चकारः । एवं सूत्रचतुष्टयेनेक्षतिहेतुना जगत्कर्तृत्वोपपत्त्या सृष्टिवाक्यानां ब्रह्मपरत्वमुपपादितम् ॥ १।१।७ ॥

( प्राकृतगुणवत्त्वे स्वतन्त्रतया हेतुत्रयावतरणम् )

अतः परं स्वतन्त्रहेतूनाह । स्वाप्ययात् (ब्र. सू. १-१-८), गतिसामान्यात्

---

तन्निष्ठस्य मोक्षोपदेशादिति तृतीयं सूत्रमवतारयन्ति—नन्विति । केनचित्पृष्ट इति । यज्ञदत्तः तव कः इति पृष्ट इत्यर्थः । तथा चात्मपदस्योपचाररूपगौणवाचकत्वमपि स्वीक्रियत इति न शुद्धात्मनो ग्रहणमिति भावः । अत्र समाधानसूत्रमाहुः—तन्निष्ठस्य मोक्षोपदेशादिति । उपदेशप्रतिपादिकां श्रुतिं पठन्ति असदित्यादि । यदा ह्येवैषेति । यदा यस्मिन्काले, ह्येव, निश्चयेनैव, एष मुमुक्षुः, एतस्मिन् ब्रह्मणि अदृश्यनामरूपविवर्जिते, अनात्म्ये शरीररहिते, अनिरुक्ते निर्वक्तुमशक्ये, निलयने आधारभूते, अभयं यथा भवति तथा, प्रतिष्ठां स्थितिम् विन्दते प्राप्नोति, अभयं, मुक्तिम् । सङ्क्षेपेण श्रुत्यर्थमाहुः—प्रापञ्चिकेति ॥ ६ ॥

आत्मपदस्य निर्गुणे ब्रह्मणि तात्पर्यमिति बोधयन्तश्चतुर्थं सूत्रमाहुः—हेयत्वावचनाच्चेति । बृहदारण्ये ब्रह्मज्ञानसाधनोपदेशावसरे पुत्रैषणादीनां हेयत्वमुक्तं, जगत्कर्तुस्तूपास्यत्वेन ग्रहणं तेन कृत्वा किं ज्ञायते निर्गुण एवेक्षणकर्तेति भावः । पुत्रादिवदिति । आदिशब्देन दारादीनां ग्रहणम् ॥ ७ ॥

सूत्रत्रयाणामवतरणमाहुः अतः परमिति । स्वतन्त्रेति । ब्रह्मणः व्यवहार्यत्वप्रतिपादकत्वमुपनि-

( ब्र. सू. १-१-९ ), श्रुतत्वाच्च ( ब्र. सू. १-१-१० ) इति सूत्रत्रयेण । ननु किमर्थं हेत्वन्तराणि । साधकत्वे एकेनापि तत्सिद्धेः, असाधकत्वे शतेनाप्यसिद्धेरिति चेत्, मैवम्; रूपभेदार्थं हेत्वन्तराणि नानाविधान्नभोजनतृप्तिवत् । तथथा । आत्मशब्दात् ( ब्र. सू. १-१-५ ), तन्निष्ठस्य मोक्षोपदेशात् ( ब्र. सू. १-१-६ ), हेयत्वावचनाच्च ( ब्र. सू. १-१-७ ) इति निर्गुणस्य स्वरूपपरतया कार्यपरतया च कार्यस्य पुनर्विधिनिषेधभेदाद् द्विरूपतेति । एवमुत्तरत्रापि प्रपञ्चयिष्यते ॥१।१।७॥

तत्र सृष्टिवाक्यानामीक्षतिहेतुना भगवत्परत्वमुक्तम् । इदानीं प्रलयवाक्यानामाह—

( जीवसुषुप्तेर्ब्रह्मसम्बन्धता भगवत्कर्तृता च )

स्वाप्ययात् ॥ १।१।८ ॥

ब्रह्मणो न सर्वव्यवहारातीतत्वम् । कुतः ? स्वाप्ययात् । स्वस्मिन्नप्ययात् । तत्र चित्प्रकरणत्वाज्जीवस्योच्यते । एवं हि श्रूयते "यत्रैतत्पुरुषः स्वपिति नाम सता सौम्य तदा सम्पन्नो भवति तस्मादेनं स्वपितीत्याचक्षते । स्वं ह्यपीतो भवति" (छां.६-८-१) इति । स्वपितीति न क्रियापदं किन्तु जीवस्य नाम । तदैव स्वपितीति नामत्वं यदा सता सम्पद्यते । सति स्वशब्दवाच्येऽपीतिं लयं प्राप्नोतीत्यर्थः । अहरहर्जीवो

---

पद्वाक्यानामित्यस्मिन्नर्थे स्वतन्त्रान् हेतूनित्यर्थः । सूत्रत्रयस्य वैयर्थ्यमाशङ्कते—नन्विति । समाधानमाहुः—मैवमिति । रूपभेदार्थमिति । तथातिशयतृप्त्यर्थं नानाविधान्नभोजनम्, एवं ब्रह्मणः प्यवहार्यत्वे सृष्ट्यादीनां द्वारत्वमुक्तम्, एवं लयादीनां द्वारत्वमुक्तम् । एवं लयादीनां स्वाप्ययादीनां द्वारत्वमित्यादिरूपभेदेन ब्रह्म व्यवहारातिशयमिति भावः । तदेवोपपादयन्ति—तथ्थेति । कार्यपरतयेति । हेतुत्रयमुक्तमिति शेषः । द्विरूपतेति । तथा च त्रिषु हेतुषु मध्ये प्रथमो हेतुः निर्गुणस्य ईक्षणकर्तृत्वस्वरूपपरत्वेनोक्तः । द्वितीयतृतीयौ निर्गुणस्य यत्कार्यं जीवः तत्परत्वेनोक्तौ, तयोर्मध्ये द्वितीयं सूत्रं मोक्षोपदेशविधिरूपं, तृतीयं वचनाभावप्रतिपादकनिषेधरूपमित्येवं द्विरूपतेत्यर्थः । उत्तरत्रापि । अग्रिमसूत्रत्रयेऽपि ॥ ७ ॥

स्वाप्ययादिति हेतुमवतारयन्ति—तत्रेति । सूत्रार्थमाहुः—स्वस्मिन्नप्ययादिति । स्वस्मिन् निर्गुणे, अप्ययात् लयादित्यर्थः । ननु कस्य लय इत्यत आहुः—जीवस्येति । उच्यत इति । उपनिषदीत्यादि । श्रूयत इति । छान्दोग्ये श्वेतकेतूपाख्याने श्रूयते इत्यर्थः श्रुत्यर्थमाहुः—स्वपितीति । नेति । स्वपिति शब्दस्य क्रियापदत्वं निराकुर्वन्ति—क्रियापदमिति । जीवपरत्वं स्वपितिशब्दस्याऽऽहुः—तदैवमिति । स्वपितिशब्दस्यार्थमाहुः—सतीति । सच्छब्दवाच्ये निर्गुणे स्वशब्दवाच्ये जीवाभेदं सूचयितुमाहुः—स्वशब्दवाच्ये इति । इत्यर्थ इति । स्वपितिशब्दस्य सति अपीति लयं प्राप्नोतीत्यर्थस्तु पृषोदरादिगणे पाठं स्वीकृत्य अकारनाशं दीर्घेकारस्यानुत्पत्तिं च स्वीकृत्य सिध्यति । अथवा, जीवे स्वपितिशब्दः पङ्कजादिपदवद्योगरूढः । नन्वेवं प्रकारेण हेतुकथने प्रकृते किं प्रयोजनमायातमित्यत आहुः—अहरहरिति । प्रत्यहमित्यर्थः । ततः तस्माद्ब्रह्मणः सकाशात्, बलाद्यधिष्ठानम् । बलरूपं यत् अधिष्ठानं सर्वेषां व्यवहाराणामाश्रयम् । बलं विना किमपि साधनं न जायते इति भावः ।

ब्रह्म सम्पद्य ततो बलाद्यधिष्ठानं प्राप्य पुनर्नव इव समायाति वासनाशेषात् । स्वशब्देन चाभेदः । अर्थतः सच्छन्दसामानाधिकारण्यान्निर्गुणत्वम् । ननु प्रलये वक्तव्ये कथं सुषुप्तिः । मोक्षातिरिक्तदशायां तथा कर्मसम्बन्धाभावादिति ब्रूमः ॥ १।१।८ ॥

मुक्तिवाक्यानामाह—

( आदिमध्यावसानेषूपादानत्वं शुद्धब्रह्मण एव )

गतिसामान्यात् ॥ १।१।९ ॥

गतौ सामान्यात् । गतिर्मोक्षः । समानस्य भावः सामान्यम् । मोक्षे सर्वस्यापि भगवता तुल्यत्वात् । एवं हि श्रूयते "यथा सर्वासामपाᳬसमुद्र एकायनम्" ( बृ. २-४-१३—४-५-१२ ) इत्युपक्रम्य "वागेकायनम्" ( बृ. २-४-११—४-५-१२ ) इति दृष्टान्तार्थं निरूप्य "स यथा सैन्धवखिल्य उदके प्रास्तः" ( बृ. २-४-१२—४-५-१३ ) इत्यादिना लयदृष्टान्तं निरूप्य "न प्रेत्य संज्ञास्ति" ( बृ. २-४-१२—४-५-१३ ) इति प्रतिपाद्य तन्निरूपणार्थं "यत्र हि द्वैतमिव भवति तदितर इत-

---

समायाति । जाग्रदवस्थायामिति शेषः । अयं भावः । यद्वा मनःसंयोगो निद्रा तस्यां सत्यां पुरीततिनाड्यां मनसः प्रवेशे सुषुप्तिः । एतस्यां दुःखाभावमात्रम् । तदानीमेव स्वपितिशब्दस्य क्रियापदत्वं तदनन्तरमन्तर्यामिनि जीवस्य लये गाढसुषुप्तिः । एतस्यां सुखम् । अत एव व्युत्थानानन्तरं 'सुखमहमस्वाप्सं न किञ्चिदवेदिषमि'त्यनुभवोऽपि । अत एव ग्रन्थान्तरे द्वैविध्यं सुषुप्तेः प्रतिपादितम् । तदानीमेव स्वपितीति जीवनाम, अत एव लौकिकव्यवहारेण इन्द्रियाणां शरीरस्य च शैथिल्ये सति गाढसुषुप्तौ सत्यां पुनः बलादिकं समायातीत्यनुभवोऽपि । एवं च निर्गुणे ब्रह्मणि प्रत्यहं लयो जीवस्येति कथनेन उपनिषद्वाक्यानां ब्रह्मव्यवहारप्रयोजकत्वं प्रकृते प्रयोजनं समायातमिति । अत एव छान्दोग्ये, "इमाः सर्वाः प्रजाः अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विदन्त्यनृतेन प्रत्यूढा" इति । स्वशब्देनेति । सूत्रस्थस्वशब्देन श्रुतिस्थसच्छब्दस्य चाभेद इत्यर्थः । ननु स्व ह्यपीतो भवतीश्रुतिस्थस्वशब्दस्य द्वितीयान्तत्वं श्रुतिस्थसच्छब्दस्य सता इति तृतीयान्तत्वमिति समानविभक्तिकत्वरूपसामानाधिकरण्याभावात्कथमभेद इत्यत आह—अर्थत इति । शब्दतः सामानाधिकरण्याभावेऽपीति शेषः । निर्गुणत्वमिति । सच्चिदानन्दरूपस्य निर्गुणस्य श्रुतिस्थसच्छब्दवाच्यत्वेन निर्गुणस्यैव व्यवहार्यत्वं श्रुत्याऽभिप्रेतमित्यपि प्रकृते प्रयोजनं समायातमिति भावः । ननु सूत्रे तु प्रलयोक्तिः, विषयवाक्ये तु सुषुप्तिकथनमिति वैषम्यमिति शङ्कते—नन्विति । समाधानमाहुः—मोक्षेति । मोक्षे तु कर्मसम्बन्ध एव नास्ति जाग्रत्स्वप्नदशयोर्यथा कर्मसम्बन्धः प्रलये सुषुप्तौ च तथा नास्ति, किन्तु, वासनामात्रमित्युभयोः साम्यात् सुषुप्तिकथनमिति भावः ॥ ८ ॥

षष्ठं सूत्रमवतारयन्ति—मुक्तीत्यादि । गतिसामान्यादिति । गतित्वादित्यर्थः । गतिः फलं भगवत्प्राप्तिः तत्त्वात् । भगवद्रूपत्वादिति यावत् । भगवतापि तुल्यत्वादित्यपिपदघटितः पाठो न सम्यगिति प्रतिभाति । श्रूयत इति । मैत्रेयीब्राह्मणे बृहदारण्यके श्रूयत इत्यर्थः । सैन्धवखिल्य इति । सैन्धवखण्ड इत्यर्थः । प्रास्तः प्रक्षिप्तः । प्रेत्य लयानन्तरम् । सञ्ज्ञा । जीवसञ्ज्ञा । नेति पूर्वेणान्वयः । प्रतिपाद्य जीवसञ्ज्ञाभावं प्रतिपाद्य । तन्निरूपणार्थं जीवसञ्ज्ञाभावः कथं ज्ञातव्य इति निरूपणार्थम् । तदेवाऽऽहुः—यत्र हीति । सर्वस्य, जडजीवरूपस्य सर्वस्य, प्रदर्शितमिति सद्रूपकार्यस्य सद्रूपे ब्रह्मणि

रम्" ( बृ. २-४-१३—४-५-१५ ) इत्यादिना सर्वस्य शुद्धब्रह्मत्वं दर्शितम् । आदि-मध्यावसानेषु शुद्धब्रह्मण एवोपादानात् सर्वेषां वेदान्तानां ब्रह्मसमन्वय उचित इति ॥ १।१।९ ॥

( चिद्रूपस्य ब्रह्मणः कारणता निरूपणेन वेदान्तानां ब्रह्मपरत्वम् )

किञ्च—

श्रुतत्वाच्च ॥ १।१।१० ॥

"पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते । पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते" ( बृ. ५-१-१ ) इति श्रुत्यैवासन्दिग्धं सर्वकार्यत्वं प्रतिपादितम् । "सर्वे वेदा यत्पदमामनन्ति" ( कठ. १-२-१५ ) इति च । चकारोऽधिकरणसम्पूर्णत्वद्योतनाय ।

एवं चिद्रूपस्य कारणतानिरूपणेन वेदान्तानां ब्रह्मपरत्वं निरूपितम् ॥४॥१।१।१०॥

---

लयः चिदंशस्य जीवस्य चिद्रूपे ब्रह्मणि लय इति शुद्धब्रह्मत्वं सर्वस्य श्रुतौ प्रदर्शितमित्यर्थः । ननु प्रकृते किमायातमित्यत आहुः—आदीति । श्रुताविति शेषः । मैत्रेयीब्राह्मणे आदौ अमृतत्वलि-ङ्गेन मध्ये आत्मदर्शनादिना, अवसाने सर्वस्यात्मभावकथनेन शुद्धब्रह्मण एवोपादानं वर्तत इति कृत्वा तस्यैव वेदान्तवाक्यजनकशाब्दबोधविषयत्वरूपव्यवहार्यत्वं समायातमिति भावः । अत एवाऽऽहुः—ब्रह्मसमन्वय इति । सर्वेषामुपनिषदां ब्रह्मणि तात्पर्यात्, तत्रैव समन्वय इत्यर्थः । समन्वयो नाम तद्वाक्यजन्यशाब्दबोध विषयत्वम् ॥ ९ ॥

सप्तमं सूत्रमाहुः—श्रुतत्वाच्चेति । विषयवाक्यमाहुः—पूर्णमद इति । बृहदारण्यके खिलकाण्डारम्भे वर्तते । अदः परोक्षं ब्रह्म पूर्णं व्यापकं निरुपाधिकम् । इदं परिदृश्यमानं नामरूपात्मकं व्यवहारविषयं पूर्वोक्तं ब्रह्मैव । अव्यवहार्यं पूर्णं व्यवहार्यमपि पूर्णमिति भावः । कार्ये पूर्णत्वमाह—पूर्णादिति । उद-च्यते इत्यत्र अञ्चुगतिपूजनयोः । तथा च पूर्णात् कार्यरूपं पूर्णं उद्गच्छति । इदानीं प्रलयदशायामाह—पूर्णस्य पूर्णम्, एकरसत्वं आदाय पूर्णं निरुपाधिकं अव्यवहार्यम्, अवशिष्यते तिष्ठति । सर्वका-र्यत्वमिति । निर्गुणस्य पूर्णस्यैव ब्रह्मणः पूर्णमव्यवहार्यत्वं इच्छया सृष्ट्यनन्तरं व्यवहार्यत्वं च साक्षात्प्र-तिपादितमित्यर्थः । सर्वेति । व्यवहार्यत्वं नाम उपनिषत्प्रतिपाद्यत्वम् । प्रतिपाद्यत्वं च शाब्दबोधविषयत्वम् । ओङ्कारस्य तन्निरूपितप्रतिपादकत्वं काठके द्वितीयवल्ल्यामुक्तम् । "सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति । यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं सङ्ग्रहेण प्रवक्ष्ये" इत्युक्त्वा पश्चात् प्रणवोक्तिः । पदं प्राप्तव्यस्थानम् । बीजरूपेण प्रणवेन सङ्क्षेपेण यदुक्तं तदेव वृक्षरूपेण वेदेन प्रतिपाद्यते इति भावः । एवं च सर्वस्य वेदस्य भगवद्वाचकत्वात् अवाच्यत्वसंशयो न कर्तव्यः । वेदार्थविचारश्च कर्तव्यः । मन-नादिद्वारा साक्षात्कारश्च कर्तव्य इति सूचितम् । अवाच्यस्यापि इच्छया वाच्यत्वं नानुपपन्नमिति दिक् ॥ १० ॥ इति चतुर्थाधिकरणम् ।

---

१ अत्रेत्थं व्याख्यानान्तराणि—

(१) तत्र तावच्छाङ्कराः—पूर्वेणास्याक्षेपसङ्गतिः । फलं तु पूर्वपक्षे प्रधानैक्यसम्पदुपास्तिः, सिद्धान्ते ब्रह्मैक्यधीरिति बोद्धव्यम् । छान्दोग्ये श्रूयते—'सदेव' इत्युपक्रम्य 'तदैक्षत...' इति ।

तत्र सच्छब्दितं जगदुपादानं किं प्रधानम्, उत ब्रह्मेति संशये, प्रधानमिति पूर्वः पक्षः । सिद्धान्तस्तु—न प्रधानं जगदुपादानम् । कस्मात्, अशब्दम्, हेतुगर्भविशेषणमेतत्, अशब्दत्वात् अवेदप्रमाणकत्वात्; कस्मादवेदप्रमाणकत्वात्, ईक्षतेः, धातुवाचकेक्षतिशब्दः तदर्थलक्षकः, ईक्षितृत्वश्रवणात्; न ह्यचेतनस्य प्रधानस्येक्षितृत्वं सम्भवति, तस्य चेतनधर्मत्वात् । न च कूटस्थब्रह्मणो ज्ञानक्रियाशक्त्यभावः, मायामहिम्ना सर्वस्याप्युपपत्तेः । अतः सत् ईक्षितृ चेतनं ब्रह्मैव जगदुपादानमित्यर्थः ॥

अप्तेजसोरिव प्रधाने ईक्षितृशब्दो गौण इति चेत्, न; कस्मात्, आत्मशब्दात्, 'सदेव....' 'तदैक्षत' इति प्रकृतं सदीक्षितृ 'सेयं देवता' इति देवताशब्देन परामृश्य 'अनेन जीवेनात्मना' इत्यात्मशब्दश्रवणादित्यर्थः ॥

न प्रधानमात्मशब्दवाच्यम्, 'स आत्मा....' इति प्रकृतं तदणिमानमादाय 'तत्त्वमसि' इति श्वेतकेतोश्चेतनस्य तन्निष्ठतां तत्स्वरूपतामुपदिश्य 'अथ सम्पत्स्ये' इति प्रारब्धक्षयानन्तरं मोक्षोपदेशात् । अतश्चेतनस्याचेतननिष्ठत्वानुपपत्तेः श्रद्धया तद्ध्यायतो मोक्षासम्भवादनर्थप्राप्तेश्च आत्मशब्दश्चेतनपर इति सिद्धम् ॥

वचनात्मैव प्रधानं स्वच्छब्दवाच्यम् 'स आत्मा तत्त्वमसि' इतीहोपदिष्टं स्यात्, स तदुपदेशश्रवणादनात्मज्ञतया तन्निष्ठो मा भूदिति मुख्यमात्मानमुपदिदिक्षु शास्त्रं तस्य हेयत्वं ब्रूयात्, न तथा ब्रूते; अतो हेयत्वस्यावचनात् अनभिधानात्, चकारात् एकविज्ञानेन सर्वविज्ञानोपक्रमविरोधाच्चेत्यर्थः ॥

स्वस्मिन् प्रकृतसच्छब्दिते चिदात्मनि, अप्ययात् 'सता सोम्य तदा सम्पन्नो भवति' इति लयश्रवणात्, अपिपूर्वस्य एतेर्लयार्थकत्वात् । अतो यस्मिन् सर्वेषां जीवानां सुषुप्तौ उपाधिकृतविशेषाभावादप्ययः, तच्चेतनं सच्छब्दवाच्यं ब्रह्मैव जगत्कारणम्, न प्रधानमित्यर्थः ॥

गतेः सर्वेषु 'आत्मन आकाशः सम्भूतः' इत्यादिवेदान्तेषु चेतनकारणत्वावगतेः समानत्वात्, नाचेतनं प्रधानं कारणमित्यर्थः ॥

श्रूयते हि श्वेताश्वतरोपनिषदि सर्वज्ञमीश्वरं प्रकृत्य 'स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः' इति । तस्मात् सर्वज्ञं ब्रह्म जगतः कारणम्, नाचेतनं प्रधानमन्यद्वेति सिद्धम् ॥

(२) रामानुजाः—यस्मिञ्छब्द एव प्रमाणं न भवति तदशब्दमानुमानिकं प्रधानमित्यर्थः । न तज्जगत्कारणवादिवाक्यप्रतिपाद्यम् । कुतः ? ईक्षतेः । सच्छब्दवाच्यसम्बन्धिव्यापारविशेषाभिधायिन ईक्षतेर्धातोः श्रवणात् । "तदैक्षत बहु स्यां प्रजायेय" इतीक्षणक्रियायोगश्चेतने प्रधाने न सम्भवति अत ईदृशेक्षणक्षमश्चेतनविशेष एव सर्वज्ञः सर्वशक्तिः पुरुषोत्तमः सच्छब्दाभिधेयः । तथा च सर्वेष्वपि सृष्टिप्रकरणेष्वीक्षापूर्विकैव सृष्टिः प्रतीयते ।

यदुक्तं गौणेक्षणसाहचर्यात्सतोपीक्षणव्यपदेशः सर्वनियतपूर्वावस्थाभिप्रायो गौण इति, तन्न; "ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा" इति सच्छब्दप्रतिपादितस्यात्मशब्देन व्यपदेशात् । × × × अतः "साहचर्यादपि तदैक्षत" इत्यत्र गौणत्वाशङ्का दूरोत्सारितेति सूत्राभिप्रायः ।

मुमुक्षोः श्वेतकेतोस्तत्त्वमसि इति सदात्मकत्वानुसन्धानमुपदिश्य तन्निष्ठस्य "तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये" इति शरीरपातमात्रान्तरायो ब्रह्मसम्पत्तिलक्षणो मोक्ष इत्युपदिशति। × × × प्रधानकारणवादिनोऽपि हि प्रधाननिष्ठस्य मोक्षं नाभ्युपगच्छन्ति।

इतश्च न प्रधानम्। यदि प्रधानमेव कारणं सच्छब्दाभिहितं भवेत्तदा मुमुक्षोः श्वेतकेतोस्तदात्मकत्वं मोक्षविरोधित्वाद्धेयत्वेनैवोपदेश्यं स्यात्। न च तत्क्रियते। प्रत्युतोपादेयत्वेनैव "तत्त्वमसि" "तस्य तावदेव चिरम्" इत्युपदिश्यते।

इतश्च न प्रधानम्। प्रतिज्ञाविरोधश्च भवति। वाक्योपक्रमे ह्येकविज्ञानेन सर्वविज्ञानं प्रतिज्ञातम्। तच्च कार्यकारणयोरनन्यत्वेन कारणभूतसद्विज्ञानात्तत्कार्यभूतचेतनप्रपञ्चस्य ज्ञाततयैवोपपादनीयम्। तत्तु प्रधानकारणत्वे चेतनवर्गस्य प्रधानकार्यत्वाभावात्प्रधानविज्ञानेन चेतनवर्गविज्ञानासिद्धेर्विरुध्यते।

इतश्च न प्रधानम्। तदेव सच्छब्दवाच्यं प्रकृत्याह। स्वमान्तं मे सोम्य विजानीहीति। यत्रैतत्पुरुषः स्वपिति नाम सता सोम्य तदा सम्पन्नो भवति। स्वमपीति भवति। तस्मादेनं स्वपितीत्याचक्षते। स्वं ह्यपीतो भवति। इति सुषुप्तं जीवं सता सम्पन्नं स्वमपीतः स्वस्मिन्प्रलीन इति व्यपदिशति। प्रलयश्च स्वकारणे लयः। नचाचेतनं प्रधानं चेतनस्य जीवस्य कारणं भवति। स्वमपीतो भवत्यात्मानमेव जीवोऽपीतो भवतीत्यर्थः। इत्यादि।

इतश्च न प्रधानम्। आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किञ्चन मिषत् × × × इत्यादिसृष्टिवाक्यानां या गतिः प्रवृत्तिस्तत्सामान्यात्तत्समानार्थत्वादस्य। तेषु सर्वेषु सर्वेश्वरः कारणमवगम्यते। तस्मादत्रापि सर्वेश्वर एव कारणमिति निश्चीयते।

इतश्च न प्रधानम्। श्रुतमेव ह्यस्यामुपनिषद्यस्य सच्छब्दवाच्यस्यात्मत्वेन नामरूपयोर्व्याकर्तृत्वं सर्वज्ञत्वं सर्वशक्तित्वं × × "अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि" × × × इत्यादीनि। तस्माज्जगत्कारणवादिवाक्यानि न प्रधानप्रतिपादनयोग्यानि। अतः सर्वज्ञः सर्वशक्तिः सर्वेश्वरो × × × निखिलजगदेककारणं जिज्ञास्यं ब्रह्मेति स्थितम् × × × तस्माद्विचित्रचेतनात्मकजगद्रूपेण "बहुस्यामितीक्षणक्षमः पुरुषोत्तम एव जिज्ञास्यः।

(२) माध्वाः—ननु "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह", "अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत्" "अवचनेनैव प्रोवाच", यद्वाचानभ्युदितं येन वागभ्युद्यते", "यच्छ्रोत्रेण न शृणोति येन श्रोत्रमिदं श्रुतम्" इत्यादिभिस्तच्छब्दगोचरम्, नेत्याह। "स एतस्माज्जीवघनात्परात्परं पुरि शयं पुरुषमीक्षते" "आत्मन्येवात्मानं पश्येत्", "विज्ञाय प्रज्ञां कुर्वीत" इत्यादिवचनैरीक्षणीयत्वाद्वाच्यमेव। "औपनिषदस्याशावचनेनेक्षणम्" "सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति" "वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहम्" इत्यादि श्रुतिस्मृतिभ्यश्च। अवाच्यत्वादिकं त्वप्रसिद्धत्वात् "न तदीदृगिति ज्ञेयं न च तर्क्यते। पश्यन्तोऽपि न पश्यन्ति मेरो रूपं विपश्चितः" इतिवत्। अप्रसिद्धेरवाच्यं तद्वाच्यं सर्वागमोक्तितः। अतर्क्यां तर्क्यमज्ञेयं ज्ञेयमेव परं स्मृतम्" इति गारुडे। न चाशब्दत्वमिति प्रसिद्धम्॥

न च गौण आत्मा ईक्षयो वाच्यश्च, न निर्गुण इति युक्तः, गौणात्मशब्दात्। "यो गुणैः सर्वतो हीनो यश्च दोषविवर्जितः। हेयोपादेयरहितः स आत्मेत्यभिधीयते। एतदन्यस्वभावो यः स

नात्मेति सतां मतम् । अनात्मन्यात्मशब्दस्तु सोपचारः प्रयुज्यते" इति वामने । द्वे वा व ब्रह्मणो रूपे आत्मा चैवानात्मा च । तत्र य आत्मा स नित्यः शुद्धः केवलो निर्गुणश्चाथ ह । योऽनीदृशः स नात्मे"ति तलवकारब्राह्मणम् । न च मुख्ये सत्यमुख्यं युज्यते ॥

नहि गौणात्मनिष्ठस्य मोक्षः, यस्यानुवित्तः प्रतिवुद्ध आत्मा तस्मिन् सन्देहे गहने प्रविष्टः स विश्वकृत्स हि सर्वस्य कर्ता तस्य लोकः स उ लोक एवेत्यात्मनिष्ठस्य मोक्ष उपदिश्यते–"अयमात्मा ब्रह्म", "ब्रह्मेति परमात्मेति भगवानिति शब्द्यते" । "दत्तं दुर्वाससं सोममात्मेशब्रह्मसम्भवान् । चेतनस्तु द्विधा प्रोक्तो जीव आत्मेति च प्रभो । जीवा ब्रह्मादयः प्रोक्ता ह्यात्मैकस्तु जनार्दनः । इतरेष्वात्मशब्दस्तु सोपचारः प्रयुज्यते । तस्यात्मनो निर्गुणस्य ज्ञानान्मोक्ष उदाहृतः । सगुणास्त्वपरे प्रोक्तास्तज्ज्ञानान्नैव मुच्यते । परो हि पुरुषो विष्णुस्तस्मान्मोक्षस्ततः स्मृतः" इति पाद्मे ॥

"तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथामृतस्यैष सेतुः" इत्यन्येषां हेयत्ववचनान्न गौण आत्मा ॥

"पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते । पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते", "स आत्मना आत्मानमुद्धृत्यात्मन्येव विलापयत्ययात्मैव भवति", "स देवो बहुधा भूत्वा निर्गुणः पुरुषोत्तमः । एकीभूय पुनः शेते निर्दोषो हरिरादिकृत्" इति स्वैपस्वसिद्धपर्ययवचनात् । न हि गौण आत्मनिर्दोषस्य लयः । न च कासुचिच्छाखास्वन्यथोच्यते ॥

"सर्वे वेदा युक्तयः सप्रमाणा ब्राह्मं ज्ञानं परमं लोकमेव । प्रकाशयन्ते न विरोधः कुतश्चिद्वेदेषु सर्वेषु तथेतिहासे" इति पैङ्गीश्रुतेर्गतेर्नान्यस्य साम्यमेव ॥

"एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा । कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेताः केवलो निर्गुणश्च" इति, न ह्यशब्दः श्रूयते । न चाप्रसिद्धं कल्प्यम् । सर्वशब्दा वाच्यस्य लक्षणायुक्तेः ॥

(४) निम्बार्काः—साङ्ख्याभिमतमचेतनं प्रधानं तु अशब्दम्, श्रुतिप्रमाणवर्जितम्, अतो नैव जगत्कारणम् । जगत्कर्तुश्चेतनधर्मस्येक्षणस्य श्रवणात् ॥

गौणापीक्षतिरयुक्ता । कुतः ? आत्मशब्दात् ॥

सदीक्षित्रात्मादिपदार्थभूतकारणनिष्ठस्य विदुषस्तद्भावापत्तिलक्षणमोक्षोपदेशाच्च प्रधानं सदात्मशब्दवाच्यम् ॥

सर्वज्ञेन हितैषिणा सदादिशब्दैरुपदिष्टस्याचेतनस्य मोक्षे हेयस्य हेयत्वमवश्यं वक्तव्यमुपदेशे प्रयोजनं च वक्तव्यं तदुभयवचनाभावान्न सदादिपदवाच्यं प्रधानम् ॥

किञ्चैकविज्ञानात्सर्वविज्ञानप्रतिज्ञाविरोधादपि नाचेतनकारणवादः साधुः ॥

सच्छब्दार्थे जगत्कारणं प्रकृत्य "स्वप्नान्तमेव सौम्य विजानीहीति, यत्रैतत्पुरुषः स्वपिति नाम सता सौम्य ! तदा सम्पन्नो भवति" इत्यादिनोक्तस्य चेतनकारणावगतेरसम्भवात् ब्रह्मैव जगत्कारणं युक्तम् ॥

सर्वेषु वेदान्तेषु, चेतनकारणावगतेस्तुल्यत्वात्, अचेतनकारणवादो न हि युक्तः ॥

तस्मात्सदादिशब्दाभिधेयस्य सर्वज्ञस्य सर्वनियन्तुः सर्वेश्वरस्य चेतनत्वेन कारणत्वस्य श्रुतत्वाच्च प्रधानमदः । किन्तु सर्ववेदैकवेद्यः सर्वज्ञः सर्वशक्तिर्जगदभिन्ननिमित्तोपादानकारणभूतः सच्छब्दवाच्यो ब्रह्मादिशब्दाभिधेयः श्रीकृष्ण एवेति सिद्धम् ॥

; (५) भैक्षवाः—विवादास्पदं प्रधानादिभ्योऽतिरिक्तं ब्रह्म न अशब्दं नाशास्त्रयोनि। न जगत्कारण-
श्रुत्यप्रतिपाद्यमिति यावत्। कुतः, ईक्षतेः, इतरावृत्तिश्रुत्युक्तकारणविशेषेक्षणवत्त्वादित्यर्थः। जगत्कार-
णस्येक्षणे श्रुतयश्च "तदैक्षत बहु स्यां प्रजायेये"त्याद्याः। स्मृतयश्च "सर्गकाले तु सम्प्राप्ते ज्ञात्वा
तं कालरूपकम्। अन्तर्लीनविकारं च तत्स्रष्टुमुपचक्रमे। तस्मादव्यक्तमुत्पन्नं ततश्चापि महानभूत्॥"
इत्याद्याः। न हीदमीक्षणं प्रधानादीनामचेतनानां सम्भवति, ईक्षणध्यानचिन्तनादिशब्देषु चैत-
न्यस्य विशेषत्वात्, ईक्षणादिशब्दस्योपाधिवृत्तिमात्रवाचकत्वेऽपि प्रकृतिस्वातन्त्र्यवादिभिस्तत्पूर्विका-
प्रधानप्रवृत्तिरनभ्युपगमात्, नापि जीवानां चैतन्यफलोपधानाभावात्। न चेयमीक्षणपूर्विका
सृष्टिर्महत्तत्त्वसृष्टेः पश्चादिति वक्तुं शक्यते, ईक्षणात्पूर्वमपि द्वैतापत्त्या "सदेव सोम्येदमग्र आसी-
देकमेवाद्वितीयम्" इतीक्षणाव्यवहितपूर्वश्रुत्यनुपपत्तेः; ततश्चापि महानभूदिति स्मृतिविरोधाच्च।
नापि पूर्वसर्गीयमीक्षणं वक्तुं शक्यते; सर्गकाले तु सम्प्राप्ते ज्ञात्वेति सर्गसमकालीनज्ञानावगमा-
दिति। ये त्विदं सूत्रं प्रधानादीनां जगत्कारणताप्रतिषेधकमितीच्छन्ति, तेषां मते, एवं सूत्रं
व्याख्येयम्, अशब्दम्, प्रधानादि न जगत्कारणं मूलकारणविशेषणाभावादिति। अशब्दमिति
स्वरूपाख्यानं न तु अशब्दत्वेनैव पक्षतामूलकारणश्रुत्यप्रतिपाद्यत्वरूपस्याशब्दत्वस्य प्रागसिद्धेः;
मूलकारणत्वं च परेच्छाधीनकारणत्वमिति यावत्। हेतौ चात्रापि ईक्षणशब्दः स्वरूपाख्यानमिति।

ईक्षणशब्दो गौण इति चेत्, न, आत्मशब्दात्, "सदेव सौम्यमग्र आसीत्तदैक्षत" इत्या-
दिना प्रकृते सदीक्षितरि जगत्कारणे "तत्सत्यं स आत्मा" इति चेतनवाच्यात्मशब्दस्य प्रयोगा-
दित्यर्थः। यच्चोक्तं गौणप्रायपाठ इति तदपि न "तत्तेज
ऐक्षत" इत्यादावपि तेजआद्यभिमानिदेवतानामेवेक्षितत्वस्य अभिमानिव्यपदेशस्त्विति सूत्रेणैव
ख्याच्यात्मशब्दस्य प्रयोगात्प्रधानादेश्चाचेतनत्वादित्यर्थः
वक्ष्यमाणत्वात्। मुख्यार्थसम्भवे गौणत्वस्यान्याय्यत्वाच्चेति।

नन्वात्मशब्दस्यापि नानार्थतया प्रकृते भवत्पूर्वी जलात्मिकेत्यादिपदविभागाधारवाचित्व-
मेवास्तु, तत्राह—"आचार्यवान् पुरुषो वेद तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये" इति
वाक्यशेषे, सदात्मनिष्ठस्य मोक्षकथनाच्चेतनवाच्योऽयमात्मशब्दः "तरति शोकमात्मवित्" इत्यादि-
श्रुत्यन्तरे चेतनरूपात्मज्ञानादेव संसारनिवृत्त्यवगमादित्यर्थः। यच्चोक्तमात्मशब्दो नानार्थ इति,
तदपि न; निरुपपदात्मशब्दस्याचेतने प्रयोगादर्शनाल्लाघवाच्च। "क्षेत्रज्ञ आत्मा पुरुषः" इति
कोपादिभ्यश्च चेतनमात्रशक्तत्वात्, अनेकार्थत्वस्यान्याय्यत्वात्, अविभागलक्षणगुणेनान्यत्रात्म-
शब्दस्य गौणत्वसम्भवात्, अस्ति च श्रुत्यन्तरेऽपि जगत्कारणे निरुपपद आत्मशब्दः "आत्मा वा
इदमग्र आसीदेकमेवाद्वितीयम्" इति, तस्मात्तदेकवाक्यतयापि "स आत्मा तत्त्वमसि" इति
वाक्ये चेतनवाच्येवात्मशब्दो, न पुनः "ऐतदात्म्यमिदं सर्वम्" इत्यस्य समानार्थकः, तथा सति
पौनरुक्त्यापत्तेः। अस्मन्मते च "ऐतदात्म्यमिदं सर्वम्" इत्यनेन भवदुक्तात्मताया एव जगत्कारणे
लब्धत्वान्न पौनरुक्त्यम्। स आत्मेत्यस्याचेतनार्थत्वादिति।

ननु प्रधानोपासनस्यापि क्रममुक्तिः श्रूयत इति युक्तस्तन्निष्ठस्य मोक्षोपदेश इत्याशङ्कायां
माह—साक्षान्मोक्षहेतुत्वं परित्यज्य परम्परया मोक्षहेतुत्वे तदा तात्पर्यं कल्पेत यदि सच्छब्दवा-
च्याया देवताया हेयत्वं मुमुक्षोः क्वापि श्रुत्योच्येत, न त्वेवम्, अतो हेयत्वावचनात्साक्षान्मोक्षहेतु-
ज्ञानविषयश्चिदात्मा मुख्येक्षितैवात्र ग्राह्य इत्यर्थः।

स्वाप्ययश्रवणादपि गौणो वेक्षणशब्दः जीवेष्वित्यर्थात्, एतदेव हि सत्कारणमीक्षितं प्रकृत्य श्रूयते "यत्रैतत्पुरुषः स्वपिति नाम सता सौम्य तदा सम्पन्नो भवति स्वमपीतो भवति तस्मादेनं स्वपितीत्याचक्षते" इति। तत्र पुरुषशब्दोक्तस्य जीवस्य लयाधारभूतमेव स्वशब्दोक्तं वस्तु सदाख्यं जगत्कारणमवगम्यते, तच्च न जीवो भवितुमर्हति, लयस्य भेदतन्त्रत्वेन स्वस्मिन्स्वलयासम्भवात्, अतः सदीक्षणश्रुतिर्जीवेऽपि न गौणीत्यर्थः।

मुख्य एवात्र स्वाप्ययो भवति कुतो गतिसामान्यात्। "अथास्य प्रयतो वाङ्मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायाम्" इत्युत्तरवाक्ये सह पठितैर्मनआदिभिर्जीवानां गतेरप्ययस्य समानत्वौचित्यादित्यर्थः।

अत्रैव प्रकरणे वाक्यशेषे "यथा मधु मधुकृतो निस्तिष्ठन्ति नानात्ययानां वृक्षाणां रसान्समवहारमेकतां रसं गमयन्ति" इत्यादिदृष्टान्तैर्जीवानां मुख्यस्य स्वाप्ययस्य श्रुतत्वाच्चेत्यर्थः। तथा श्रुत्यन्तरे मुख्यस्यैव स्वाप्ययस्य श्रुतत्वादपि मुख्य एवात्रापि स्वाप्ययो ग्राह्यः। श्रुत्यन्तरं च तद्यथा "प्रियया स्त्रिया सम्परिष्वक्तो न बाह्यं किञ्चन वेद न चान्तरमेवमेवायं पुरुषः प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्" इति; अत्र हि स्वाभिन्ने प्राज्ञे जीवस्याप्ययःशब्दादेव श्रूयत इति।

(६) भास्करमते:—न प्रधानं जगत्कारणमशब्दं हि तत्। न विद्यते शब्दः श्रुतिर्यस्य तदशब्दं कस्मादीक्षतेरीक्षणश्रवणात्। "तदैक्षत बहु स्यां प्रजायेये"ति। ईक्षतेरिति धात्वर्थनिर्देशो लक्षणया न धातुनिर्देशो यथेतिकर्तव्यताविधेर्यजतेः पूर्ववत्त्वम्। ईक्षणं पर्यालोचनमध्यवसायः प्रत्यक्षं तदचेतनस्य नोपपद्यते॥

गौणमीक्षणमित्युक्तं कस्मादात्मशब्दात् सेयं देवतेत्यत्र हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति तथा स आत्मा तत्त्वमसि श्वेतकेतो इत्यात्मशब्दश्चेतनवचनो लोके प्रसिद्धस्तेन जीवं व्यपदिशति देवता जीवश्च प्राणानां धारयिता प्रत्यक्षादिप्रमाणसिद्धस्तत्रात्मशब्दप्रयोगो युज्यते। यद्यचेतनं प्रधानं जगत्कारणं गुणवृत्त्या कल्प्येत तदैव देवताशब्देन परामृश्येत ततश्चाचेतनं चेतनस्यात्मेति विरुद्धमापद्येत ततो मुख्यमेवेक्षितृत्वम्। कूले तु युक्तं गौणत्वं प्रमाणान्तराधीनत्वाल्लौकिकस्य प्रयोगस्य। अतेजसोऽपि प्रकृतदेवतानुप्रवेशात् तदीयमेवेक्षितृत्वं कार्यगतं चोपदिश्यत इत्यदोषः।

नायमात्मशब्दो गौणोऽत्र सम्भवति। प्रकृतेर्जगत्कारणनिष्ठस्य श्वेतकेतोस्तत्त्वमसीत्युपदिश्य मोक्ष उपदिश्यते। × × × यदि चाचेतनं प्रधानं तत्त्वमसीति ग्राह्येत्, ततो मिथ्यावादि शास्त्रं न प्रमाणं स्यात्।

इतश्च नात्मशब्दो गौणः। यद्यनात्मैवाचेतनं प्रधानं जगत्कारणं तत्त्वमसीति श्वेतकेतोरुपदिष्टं स्यात्। स च पित्रोपदिष्टं प्रमाणीकुर्वन्नन्धगोलाङ्गूलन्यायेन न कदाचिन्मुच्येत, तस्य ततो हेयत्वं वक्तव्यं न चापोद्यत्। सन्मात्रकरणनिष्ठैव षष्ठप्रपाठकपरिसमाप्तिः। अतः सच्छब्दवाच्यं चेतनं ब्रह्मेति निश्चीयते। प्रतिज्ञाविरोधाच्च "उत तमादेशमप्राक्ष्यः येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्" इति। प्रधाने विज्ञाते हि तत्कार्यं महदादि विज्ञातं स्यात् न भोक्तृभोग्यवर्गाः। ब्रह्मणि पुनः कारणे विज्ञाते भोक्तृभोग्यवर्गौ विज्ञातौ स्यातां तदनन्यत्वात्।

इतश्च न प्रधानं न सच्छब्दवाच्यम्। "यत्रैतत्पुरुषः स्वपिति नाम सता सौम्य तदा सम्पन्नो भवति स्वमपीतो भवति तस्मादेनं स्वपितीत्याचक्षते" इति। स्वपिति नाम निर्वचनेन स्वमपीतो भवतीति स्वस्मिन् प्रकृते सच्छब्दवाच्ये जीवस्याप्ययं दर्शयति। यदि प्रकृतं चेतनं स्यात् ततस्तस्मिन् चेतनस्य स्वाप्यय उपपद्यते। अप्ययः प्रलयः सच्छब्दवाच्येनैकीभावः। तस्मान्नाचेतनं सच्छब्दवाच्यमिति।

गतिः स्वगतिः, अथवा गतिः प्रवृत्तिस्तस्यास्तुल्यत्वात्। सर्ववेदान्तेषु जगत्कारणावगतिस्तुल्या न तार्किकसमय इव भिन्नप्रस्थानावगतिः। "यथाग्नेर्ज्वलतः सर्वा दिशो विस्फुलिङ्गा विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोका" इति। "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः" इति। "यः सर्वज्ञः सर्वविद् यस्य ज्ञानमयं तपः" इति महदेतत् प्रामाण्यकारणं यत् सर्ववेदान्तानां सम्वादित्वम्।

इतश्च। साक्षाच्चेश्वरः सर्वज्ञो जगत्कारणं श्वेताश्वतराणां मन्त्रोपनिषदि श्रूयते। "न तस्य कश्चित् पतिरस्ति लोके न चेशिता नैव च तस्य लिङ्गम्। सकारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः" इति। तस्मात् सर्वज्ञं ब्रह्म जगतः कारणमिति सिद्धम्।

(१) अत्र चेत्थं श्रीप्रकाशकाराणां विचारपरम्परा—

अत्रैकदेशिन इमानि सूत्राणि साङ्ख्यनिरासकतया व्याकुर्वते। तथाहि—साङ्ख्यपरिकल्पितं प्रधानं जगत्कारणत्वेन नाश्रयितुं शक्यम्। अशब्दं हि तत्। कथमशब्दम्। ईक्षतेः। "सदेव सोम्येदमग्र आसीत्" इत्युपक्रम्य "तदैक्षत बहु स्यां प्रजायेय" इति, "तत्तेजोऽसृजत" इति जगत्कारणस्येक्षणकर्तृत्वश्रवणात्, तथाऽन्यत्रापि, "आत्मा वा इदमेक एवाग्र आसीत्", इत्युपक्रम्य "स ईक्षत लोकान्नुसृजै" इति। क्वचिच्च षोडशकलं प्रस्तुत्य, "स ईक्षाञ्चक्रे" "स प्राणमसृजत" इति। ईक्षतेरिति धात्वर्थनिर्देशो लक्षणया। विषयिणा विषयनिर्देशात्। विषयी धातुः, विषयो धात्वर्थः प्रतिपाद्यतासम्बन्धेनेति यावत्। यथा यजतेरर्थपरत्वम्। "इतिकर्तव्यताविधेर्यजतेः पूर्ववत्त्वम्" इति जैमिनिसूत्रे यजतिपदेन लक्षणया धात्वर्थस्य यागस्य कथनात्। तेन "यः सर्वज्ञः सर्ववित् यस्य ज्ञानमयं तपः, तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते" इत्यादीनां सर्वेश्वरकारणपराणामपि वाक्यानां सङ्ग्रहः। न च सत्त्वधर्मेण ज्ञानेन प्रधानस्यापि सर्वज्ञतया ईक्षितृत्वस्य च शक्यवचनत्वात्तेन प्रधानकारणमिति वाच्यम्। तस्य प्रधानावस्थायां गुणसाम्यात् सत्त्वधर्मस्य ज्ञानस्य तदानीमशक्यवचनत्वात्। तदा तदादरे रजस्तमोधर्मस्याप्यवर्जनीयत्वेन ज्ञानप्रतिबन्धस्यापि सम्भवेन किञ्चिज्ज्ञत्वस्याप्यापत्तेश्च। किञ्चासाक्षिकाऽसत्त्ववृत्तिर्न कापि जानाति, तेषां चेतनाभिधीयत इत्यचेतनस्य प्रधानस्य सार्वज्ञ्यमनुपपन्नम्। न च योगवदिति वाच्यम्। तेषां चेतनत्वेनादृष्टान्तत्वात्। यदि च तप्तायःपिण्डस्य दग्धृत्ववत् साक्ष्यधिष्ठितस्य प्रधानस्येक्षितृत्वं कल्प्यते, तदा तु यन्निमित्तं प्रधानस्येक्षितृत्वं तस्यैव सर्वज्ञत्वाज्जगत्कारणत्वं वक्तव्यम्। हेतुहेतुमतोर्हेतुत्वे तद्धेतोरेव हेतुता इति न्यायादित्यर्थः। न च ब्रह्मणो नित्यज्ञानत्वेन विवक्षितत्वादीक्षणात्मकज्ञानक्रियां प्रति स्वातन्त्र्यासम्भवात्कथं सर्वज्ञत्वमिति वाच्यम्, प्रततौष्ण्यप्रकाशेऽपि सूर्ये सविता दहति प्रकाशत इति प्रयोगदर्शनादिहापि तद्वत् सत्यसति च ज्ञानकर्मभूते विषये नित्यज्ञानतया तादृशप्रयोगापत्तेः। न च प्राक्सृष्टेः पदार्थान्तराभावादीक्षणात्मकस्येश्वरज्ञानस्य निर्विषयत्वं शङ्क्यम्। तत्त्वान्यत्वाभ्यामनिर्वाच्ययोर्नामरूपयोर्व्याचिकीर्षितत्वेन तयोरेव विषयत्वात्।

न च तयोरनागतत्वेनाविषयत्वं शङ्क्यम् । अतीतानागतविषयज्ञानस्य योगिषु दर्शनात् तस्यैव ईश्वरे तादृशाशङ्काया एवासङ्गतत्वात् । न च प्राक् सृष्टेर्ब्रह्मणोऽशरीरित्वादीक्षितृत्वमनुपपन्नमिति शङ्क्यम् । सवितृप्रकाशवद्ब्रह्मणो नित्यज्ञानस्वरूपत्वेन ज्ञानसाधनानपेक्षत्वात् । "न तस्य कार्यं करणं च विद्यते" इति, "अपाणिपादो जवनो ग्रहीता" इति मन्त्राभ्यामपि तथा निश्चयात् । न च चैतन्यैक्यवादिनो जीवेश्वरभेदाभावात्संसारिणो जीवस्यापि तथा ज्ञानापत्तिरिति शङ्क्यम् । घटगिरिगुहाद्युपाधिभेदेन व्योम्न इव ब्रह्मचैतन्यस्याप्युपाधिभेदेन भेदस्याप्यङ्गीकारेणोक्तदूषणाभावादित्यादि ।

तर्कयतीर्थेन माध्वेनैवं दूष्यते—साङ्ख्यप्रतिपन्नं प्रधानं न श्रौतं जगत्कारणं, तदैक्षतेतीक्षतिश्रवणादशब्दं तदिति यद्व्याख्यातं तदयुक्तम् । तथाहि—अत्राशब्दमित्यनेनोक्तमश्रौतत्वं न साङ्ख्यस्य प्रतिवादिनः सिद्धम् । तेन वैदिकत्वाभ्युपगतेः । नापि स्वन्यायेन तदुक्तिः । अजामेकामित्यादौ प्रधानस्य श्रुतत्वात् । न च तत्रान्यत्कल्प्यम् । नाममात्रे विवादादर्थान्तरस्य चाभावात् । किञ्च, ब्रह्मणोऽपि श्रौतत्वं न युक्तम् । अवाच्यत्वात् । अवाच्ये वृत्त्यन्तरायोगात् । नापि तस्येक्षितृत्वम् । तस्येक्षतिस्वरूपत्वात् । न च मायावच्छिन्नस्य जगत्कारणस्येक्षितृत्वं सम्भवतीति वाच्यम् । जिज्ञास्यस्यैव जगत्कारणताया उक्तत्वात् । नहि जिज्ञास्यं मायावच्छिन्नम् । तज्जिज्ञासाया अप्रयोजकत्वात् । किञ्च, माययेक्षितृत्वं भवत्युपचर्यते वा । आद्ये दृश्यत्वाद्यपि किं न स्यात् । द्वितीये प्रधानेऽपि तत्सम्भवादिति ।

मम त्वन्यदपि स्फुरति । सूत्रव्याख्याने यदुक्तम्, ईक्षतेरिति धात्वर्थनिर्देशो लक्षणया विषयिणा विषयलक्षणाद् यथा यजतेरित्यादि तदपि फल्गिति । सूत्राणां वेदान्तवाक्यकुसुमग्रथनार्थत्वस्य पूर्वं स्वयमेव कथनादत्रापि पूर्वं विषयवाक्योपन्यासाद्वाक्यविशेषगतत्वेन स्वार्थप्रत्यायकस्यैव धातोर्निर्देशस्य सूत्रकाराशयगोचरतया लक्षणाया अत्राविवक्षितत्वात् । किञ्च पञ्चशिखवृत्तौ ब्रह्मपदस्य प्रधानवाचकताङ्गीकारात्, तेन चेत् तत् स्मरेत् तदा प्रसङ्गे जात आनुमानिकादिसूत्राण्यपि वदेत् । जन्मादिसूत्रविषयश्रुत्या तु न वक्तुं शक्यम् । तत्र तत्प्रसङ्गाभावात् । श्रुत्यन्तराणां त्वानुमानिकपाद एव विचारादिति । सूत्रान्तरव्याख्यानं तु नातिविरुद्धमित्युपरम्यते ।

हेयत्वावचनसूत्रे चकारं प्रतिज्ञाविरोधाभ्युच्चयार्थमाहुः श्रुतत्वाच्चेति । चकारप्रयोजनं न किमप्याहुः ।

(२) भास्कराचार्या अप्येतदधिकरणं प्रधानकारणतानिरासार्थमेवेति व्याचक्रुः ।

(३) रामानुजाचार्यास्तु, मुख्यतया प्रधानकारणवादनिरासं व्याख्याय निर्विशेषचिन्मात्रब्रह्मवादोऽप्येताभिर्युक्तिभिः सूत्रकारेण निरस्यते । पारमार्थिकमुख्येक्षणादिगुणयोगिजिज्ञास्यं ब्रह्मेति स्थापनात् । निर्विशेषवादे हि साक्षित्वमप्यपारमार्थिकम् । वेदान्तवेद्यं ब्रह्म च जिज्ञास्यतया प्रतिज्ञाय तच्चेक्षतेर्नाशब्दमित्यादिसूत्रैश्चेतनमिति प्रतिपाद्यते । चेतनत्वं नाम चैतन्यगुणयोगः । अत ईक्षणगुणविरहिणः प्रधानतौल्यमेव । किञ्च, निर्विशेषप्रकाशमात्रब्रह्मवादे तस्य प्रकाशत्वमपि दुरुपपादम् । प्रकाशोऽपि नाम स्वस्य परस्य च व्यवहारयोग्यतामापादयन् वस्तुविशेषः । निर्विशेषवस्तुनस्तदुभयरूपत्वाभावाद्घटादिवदचित्त्वमेवेति । अथ तदुभयरूपत्वाभावेऽपि तत्क्षमत्वमस्तीति

चेत्, न, तत्समत्वं हि तत्सामर्थ्यवत्त्वम्, ततस्त्वे निर्विशेषत्वहानेः। अथ श्रुतिप्रमाण्यादयमेको विशेषोऽभ्युपगम्यते, हन्त, तर्हि सर्वशक्तित्वादयोऽन्येऽपि तथेति निर्विशेषवाद एव त्यक्तः स्यादित्याहुः।

(४) शैवस्तु रामानुजमतस्यैव चौरो मध्यमतस्य च क्वचित्, तद्विरुद्धां शैवश्रुतिमुदाहरन् भिन्नं प्रस्थानमभिमन्यते। तन्मते ईक्षत्यधिकरणं जन्माद्यधिकरणोक्तलक्षणस्य प्रधानेऽतिव्याप्तिवारणाय। आनन्दमयाधिकरणं च जीवेऽतिव्याप्तिवारणायेति।

(५) माध्वाचार्यास्तु, "यतो वाचः" "अशब्दमस्पर्शमरूपमव्ययम्" "अवचनेनैव प्रोवाच" "यद्वाचानभ्युदितम्" इत्यादिषु श्रुतिषु वाच्यत्वनिषेधाद्ब्रह्मणः शास्त्रयोनित्वसूत्रोक्तं शास्त्रप्रमाण-कत्वं न युज्यत इति पूर्वपक्षनिवृत्त्यर्थमीक्षत्यधिकरणम्। तत्र विषयवाक्यं तु "स एतस्माज्जीवघ-नात् परात्परं पुरिशयं पुरुषमीक्षते", "आत्मन्येवात्मानं पश्येत्" "विज्ञाय प्रज्ञां कुर्वीत" इत्यादि। एतेष्वीक्षणीयत्वश्रावणाद्वाच्यमेव ब्रह्म। न चेक्षणस्य दर्शनात्मकत्वात्कथं तेन वाच्यत्वसिद्धिरिति वाच्यम्। "तं त्वौपनिषदं पुरुषं पृच्छामि" इतिवाक्यान्तरे उपनिषदेकगम्यत्वश्रावणेन प्रत्यक्षा-द्यवेद्यत्वे सिद्धे वचनेनैवेक्षणस्य विवक्षितत्वात्। न चावचनेनोवाचेत्यादिश्रुतिविरोधः। तत्र साक-ल्येनावचनस्य विवक्षितत्वात्। "अप्रसिद्धेरवाच्यं तद्वाच्यं सर्वागमोक्तितः। अतर्क्यं तर्क्यमज्ञेयं ज्ञेयमेवं परं स्मृतम्" इति गारुडेन तथा निश्चयादिति व्याख्यायाग्रे प्रधानस्याश्रौतत्वं न साध्य-मतसिद्धमतस्तस्याशब्दत्वव्यवस्थापनमसङ्गतमिति सूचयन्ति। ततो गौणश्चेत्यादिसूत्रेषु जीवात्म-नीक्षणीयत्ववाच्यत्वादिश्रौतगुणयोगं नानाश्रुतिस्मृत्युपन्यासेन निराकुर्वन्ति। समाप्तौ च पुनरपि सिंहावलोकनन्यायेन ब्रह्मणोऽवाच्यत्वमेव युक्त्यन्तरैर्दूषयन्ति।

(६) तत्रेदमवधेयम्—द्विविधं कपिलसूत्रप्रसिद्धं साङ्ख्यम्। समासरूपमष्टाविंशतिसूत्रम्। तदु-परि पञ्चशिखपदैर्वृत्तिः। प्रवचनसूत्रात्मकं च षडध्याययुक्तम्। तत्राद्ये तु शास्त्रप्रतिपाद्यानामर्था-नामुद्देशमात्रं नान्यत्। द्वितीये तु "सत्त्वरजस्तमःसाम्यावस्था प्रकृतिः प्रकृतेर्महान् महतोऽहङ्का-रोऽहङ्कारात्पञ्चतन्मात्राण्युभयमिन्द्रियं स्थूलभूतानि पुरुष इति पञ्चविंशतिर्गणः" इत्येकस्मिन् सूत्रे सर्वानुद्दिश्य ततोऽग्रे "स्थूलात्पञ्च तन्मात्रस्य", "बाह्याभ्यन्तराभ्यां तैरहङ्कारस्य", "तेनान्तःकर-णस्य" "ततः प्रकृतेः" "सङ्घातपरार्थत्वात्पुरुषस्य" इति पञ्चसूत्र्या स्थूलभूतानि प्रत्यक्षसिद्धान्या-दाय तेभ्यः कार्येभ्य उपरितनानामानुमानिकत्वमेव कपिलाचार्यैरादृतम्। ततोऽग्रे यद्यपि "प्रधा-नाज्जगज्जायते" इति श्रुतिं सूत्राकारेण पठन्ति त्रिविधं प्रमाणं चाङ्गीकुर्वन्ति, तदभ्युक्तोपष्टम्भा-यैव, न तु शब्दस्य प्राधान्याय। अत एव व्यासचरणैरप्यानुमानिकसूत्रे तथैव तन्मतं सूचयित्वा दूष्यते। तेन साङ्ख्यमते प्रकृतेर्मुख्यतया शब्दगम्यत्वाभावेनाशब्दत्वमेव सिध्यति। शब्दगम्यत्व-स्यानुमानिकपदे निराकरणेन तस्याभिमानिकत्व एव पर्यवसानादिति। अत एतद्व्यतिरिक्तं सर्वं सम्यगेव। अत एव भाष्यान्तरेऽपि प्रकृतेस्तथात्वस्यैवादरणमिति दिक्।

(७) विज्ञानेन्द्रभिक्षुस्तु, ननु यदि प्रलये प्रधानादिसमन्वयो ब्रह्मण्युपगतस्तर्हि तस्यैव श्रुत्युक्तं जगत्कारणत्वमस्तु। भवदभिमतब्रह्मकल्पने तस्य जगदधिष्ठानकारणत्वकल्पने च गौरवात्। साङ्ख्यसूत्रेष्वीश्वरस्य निराकृतत्वात्। ब्रह्मशब्दस्य व्यापकत्वात् प्रधानजीवयोरुपपद्यत एव। अधिष्ठानकारणत्वं च जीवानामेवास्तु। समस्तकार्याणामदृष्टद्वारा जीवकार्यत्वस्य अदृष्टवद्-

त्मसंयोगजन्यतया जीवाधेयत्वस्य च सर्वास्तिकसम्मतत्वात् । सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेद" इति, "सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि", "येन भूतान्यशेषेण द्रक्ष्यस्यात्मन्यथो मयि" इति जीवप्रकरणस्थश्रुतिस्मृतिभ्यामपि तथावसायाच्च । अतः शास्त्रस्य नित्येश्वरपरत्वे शास्त्रयोनित्वादिति हेतुराश्रयासिद्धः। कार्येश्वरपरत्वे च पृथक् शास्त्रारम्भवैफल्यम् । साङ्ख्यादिभिरेव तथाविधब्रह्मनिरूपणादिति शङ्कायामिदं सूत्रं प्रवर्तते । ईक्षतेर्नाशब्दमिति । विवादास्पदप्रधानादिभ्योऽतिरिक्तं ब्रह्म न अशास्त्रयोनि, न जगत्कारणश्रुत्यप्रतिपाद्यमिति यावत् । कुतः, ईक्षतेः। इत्यादिप्रकारेण प्रधानकारणतां निरस्याग्रे शिवादीनां जगत्कारणत्वं च निरस्य श्रीकृष्ण एव परात्परं तत्वं तदेव च जगज्जन्मादिकारणमिति सप्रपञ्चं प्रतिपादितं प्रकाशे, तच्च विशेषजिज्ञासुभिस्तत एवानुसन्धेयम् ।

इतीक्षत्यधिकरणम् ॥



# ५ आनन्दमयाधिकरणम् ।

## ( अधिकरणावतरणम् )

### अतः परमानन्दरूपस्य कारणत्वोपपादनेन तद्वाक्यानां ब्रह्मपरत्वमुपपाद्यत

ननु ईक्षत्यधिकरणे ब्रह्मणः शब्दप्रतिपाद्यत्वेन सर्वेषां वेदान्तवाक्यानां ब्रह्मपरत्वं सिद्धमेवेति व्यर्थमग्रिमाणामधिकरणानामारम्भ इति चेत्, न; सर्वासूपनिषत्सु ब्रह्मप्रतिपादकत्वांशे सन्दिग्धानि बहूनि वाक्यानि सन्ति । तत्रत्यसंशयनिवारणार्थमधिकरणानामावश्यकत्वम् । तत्रादौ आनन्दमय इत्यत्र मयट्प्रत्यये शङ्कां निवारयितुमानन्दमयाधिकरणमवतारयन्ति—अतः परमिति । तद्वाक्यानां आनन्दप्रतिपादकवाक्यानाम् । एवं च चिदंशकारणत्वं प्रतिपादितम् । अवसरप्राप्तानन्दस्य कारणत्वे प्रतिपादने अवसरसङ्गतिर्बोध्या । उपपाद्यत्वे इति । अष्टभिः सूत्रैः प्रपाठकद्वयेन चोपपाद्यते इत्यर्थः । नतु सूत्राणि तु प्रसिद्धानि प्रपाठकद्वयं तत्रत्यमित्याकाङ्क्षायामाहुः तत्रेति । तत्र यजुर्वेदे । घटकत्वं सप्तम्यर्थः । तथा च यजुर्वेदघटकीभूततैत्तिरीयशाखास्थब्रह्मभृगुप्रपाठकद्वयेन आनन्दस्य जगत्कारणत्वं आनन्दमयादिवाक्यानां ब्रह्मप्रतिपादकत्वं चोपपद्यते इति भावः । तेन च "ब्रह्मविदाप्नोति परम्," "भृगुर्वै वारुणिरि"त्यध्यायद्वयमष्टसूत्रविषयमिति सूचितम् ।इतः परमस्मिन् समन्वयाध्याये सम्पूर्णं विषयवाक्यमुच्यते । यद्यपि सर्वेषु भाष्येषु विषयवाक्यस्य प्रतीकधारणमात्रमेवास्ति । तथापि सम्पूर्णविषयवाक्ये विचारस्य क्रियमाणत्वात्, तदेवं वक्तुमुचितमिति । नन्वेवं सति पूर्वपूर्वाचार्यैः प्रतीकधारणमात्रं किमर्थं कृतमिति चेत्, तस्मिन् समये सर्वेषामेवोपनिषत्पाठसामर्थ्यं स्थितम् । इदानीं तु आलस्योपहतत्वात् कदाचित् केषाञ्चित् व्युत्पन्नता, तादृशसामर्थ्याभावेन उपनिषत्पुस्तकगवेषणया तत्सहायेन वाक्यविचारे क्रियमाणे क्लेशः सम्पद्येतेति तन्निवृत्त्यर्थमयमारम्भ इति । यद्यपि भाष्ये प्रपाठकद्वयं विषयवाक्यत्वेनोक्तं तथापि एकेनैवं चारितार्थ्यात् ब्रह्मप्रपाठक एवात्र विषयवाक्यत्वेनोच्यते ।

अथ विषयवाक्यम्—

ॐ ब्रह्मविदाप्नोति परम् ॥ तदेषाऽभ्युक्ता ॥ सत्यं ज्ञानमनन्तं ब्रह्म ॥ यो वेद निहितं गुहायां परमे व्योमन् ॥ सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चितेति ॥ तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः ॥ आकाशाद्वायुः ॥ वायोरग्निः ॥ अग्नेरापः ॥ अद्भ्यः पृथिवी ॥ पृथिव्या ओषधयः ॥ ओषधीभ्योऽन्नम् ॥ अन्नात्पुरुषः ॥ स वा एष पुरुषोऽन्नरसमयः ॥ तस्येदमेव शिरः ॥ अयं दक्षिणः पक्षः ॥ अयमुत्तरः पक्षः ॥ अयमात्मा ॥ इदं पुच्छं प्रतिष्ठा ॥ तदप्येष श्लोको भवति ॥ इति प्रथमोऽनुवाकः ॥ १ ॥

अन्नाद्वै प्रजाः प्रजायन्ते ॥ याः काश्च पृथिवीꣳश्रिताः ॥ अथो अन्नेनैव जीवन्ति ॥ अथैनदपि यन्त्यन्ततः ॥ अन्नꣳ हि भूतानां ज्येष्ठम् ॥ तस्मात्सर्वौषधमुच्यते ॥ सर्वं वै तेऽन्नमाप्नुवन्ति ॥ येऽन्नं ब्रह्मोपासते ॥ अन्नꣳ हि भूतानां ज्येष्ठम् ॥ तस्मात्सर्वौषधमुच्यते ॥ अन्नाद्भूतानि जायन्ते ॥ जातान्यन्नेन वर्धन्ते ॥ अद्यतेऽत्ति च भूतानि तस्मादन्नं तदुच्यत इति ॥ तस्माद्वा एतस्मादन्नरसमयात् ॥ अन्योऽन्तर आत्मा प्राणमयः ॥ तेनैष पूर्णः ॥ स वा एष पुरुषविध एव ॥ तस्य पुरुषविधताम् ॥ अन्वयं पुरुषविधः ॥ तस्य प्राण एव शिरः ॥ व्यानो दक्षिणः पक्षः ॥ अपान उत्तरः पक्षः ॥ आकाश आत्मा ॥ पृथिवी पुच्छं प्रतिष्ठा ॥ तदप्येष श्लोको भवति ॥ इति द्वितीयोऽनुवाकः ॥ २ ॥

प्राणं देवा अनु प्राणन्ति ॥ मनुष्याः पशवश्च ये ॥ प्राणो हि भूतानामायुः ॥ तस्मात्सर्वायुषमुच्यते ॥ सर्वमेव त आयुर्यन्ति ॥ प्राणं ब्रह्मोपासते ॥ प्राणो हि भूतानामायुः ॥ तस्मात्सर्वायुषमुच्यत इति ॥ तस्यैष एव शारीर आत्मा ॥ यः पूर्वस्य ॥ तस्माद्वा एतस्मात्प्राणमयात् ॥ अन्योऽन्तर आत्मा मनोमयः ॥ तेनैष पूर्णः ॥ स वा एष पुरुषविध एव ॥ तस्य पुरुषविधताम् ॥ अन्वयं पुरुषविधः ॥ तस्य यजुरेव शिरः ॥ ऋग् दक्षिणः पक्षः ॥ सामोत्तरः पक्षः ॥ आदेश आत्मा ॥ अथर्वाङ्गिरसः पुच्छं प्रतिष्ठा ॥ तदप्येष श्लोको भवति ॥ इति तृतीयोऽनुवाकः ॥ ३ ॥

यतो वाचो निवर्तन्ते ॥ अप्राप्य मनसा सह ॥ आनन्दं ब्रह्मणो विद्वान् ॥ न बिभेति कदाचनेति ॥ तस्यैष एव शारीर आत्मा ॥ यः पूर्वस्य ॥ तस्माद्वा एतस्मान्मनोमयात् ॥ अन्योऽन्तर आत्मा विज्ञानमयः ॥ तेनैष पूर्णः ॥ स वा एष पुरुषविध एव ॥ तस्य पुरुषविधताम् ॥ अन्वयं पुरुषविधः ॥ तस्य श्रद्धैव शिरः ॥ ऋतं दक्षिणः पक्षः ॥ सत्यमुत्तरः पक्षः ॥ योग आत्मा ॥ महः पुच्छं प्रतिष्ठा ॥ तदप्येष श्लोको भवति ॥ इति चतुर्थोऽनुवाकः ॥ ४ ॥

विज्ञानं यज्ञं तनुते ॥ कर्माणि तनुतेऽपि च ॥ विज्ञानं देवाः सर्वे ॥ ब्रह्म ज्येष्ठमुपासते ॥ विज्ञानं ब्रह्म चेद्वेद ॥ तस्माच्चेन्न प्रमाद्यति ॥ शरीरे पाप्मनो हित्वा ॥ सर्वान्कामान्समश्नुत इति ॥ तस्यैष एव शारीर आत्मा ॥ यः पूर्वस्य ॥ तस्माद्वा एतस्माद्विज्ञानमयात् ॥ अन्योऽन्तर आत्मानन्दमयः ॥ तेनैष पूर्णः ॥ स वा एष पुरुषविध एव ॥ तस्य पुरुषविधताम् ॥ अन्वयं पुरुषविधः ॥ तस्य प्रियमेव शिरः ॥ मोदो दक्षिणः पक्षः ॥ प्रमोद उत्तरः पक्षः ॥ आनन्द आत्मा ॥ ब्रह्म पुच्छं प्रतिष्ठा ॥ तदप्येष श्लोको भवति ॥ इति पञ्चमोऽनुवाकः ॥ ५ ॥

असन्नेव स भवति ॥ असद्ब्रह्मेति वेद चेत् ॥ अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुरिति ॥ तस्यैष एव शारीर आत्मा ॥ यः पूर्वस्य ॥ अथातोऽनुप्रश्नाः ॥ उताविद्वानमुं लोकं प्रेत्य ॥ कश्चन गच्छति ३ ॥ आहो विद्वानमुं लोकं प्रेत्य ॥ कश्चित्समश्नुता ३ उ ॥ सोऽकामयत ॥ बहु स्यां प्रजायेयेति ॥ स तपोऽतप्यत ॥ स तपस्तप्त्वा ॥ इदꣳ सर्वमसृजत ॥ यदिदं किञ्च ॥ तत्सृष्ट्वा ॥ तदेवानुप्राविशत् ॥ तदनुप्रविश्य ॥ सच्च त्यच्चाभवत् ॥ निरुक्तं चानिरुक्तं च ॥ निलयनं चानिलयनं च ॥ विज्ञानं चाविज्ञानं च ॥ सत्यं चानृतं च ॥ सत्यमभवत् ॥ यदिदं किञ्च ॥ तत्सत्यमित्याचक्षते ॥ तदप्येष श्लोको भवति ॥ इति षष्ठोऽनुवाकः ॥ ६ ॥

असद्वा इदमग्र आसीत् ॥ ततो वै सदजायत ॥ तदात्मानꣳस्वयमकुरुत ॥ तस्मात्सुकृतमुच्यत इति ॥ यद्वैतत्सुकृतम् ॥ रसो वै सः ॥ रसꣳह्येवायं लब्ध्वानन्दी भवति ॥ को ह्येवान्यात्कः प्राण्यात् ॥ यदेष आकाश आनन्दो न स्यात् ॥ एष ह्येवानन्दयाति ॥ यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते ॥ अथ सोऽभयं गतो भवति ॥ यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते ॥ अथ तस्य भयं भवति ॥ तत्त्वेव भयं विदुषोऽमन्वानस्य ॥ तदप्येष श्लोको भवति ॥ इति सप्तमोऽनुवाकः ॥ ७ ॥

भीषाऽस्माद्वातः पवते ॥ भीषोदेति सूर्यः ॥ भीषाऽस्मादग्निश्चेन्द्रश्च ॥ मृत्युर्धावति पञ्चम इति ॥ सैषाऽऽनन्दस्य मीमाꣳसा भवति ॥ युवा स्यात्साधु युवाध्यायकः ॥ आशिष्ठो द्रढिष्ठो बलिष्ठः ॥ तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्यात् ॥ स एको मानुष आनन्दः ॥ ते ये शतं मानुषा आनन्दाः ॥ स एको मनुष्यगन्धर्वाणामानन्दः ॥ श्रोत्रियस्य चाकामहतस्य ॥ ते ये

**आनन्दमयाद्यष्टभिः सूत्रैः । तत्र तैत्तिरीयशाखायां ब्रह्मभृगुप्रपाठकद्वयेन । तत्रा-नन्दमय इति मयट्प्रत्ययान्तस्याब्रह्मत्वेनाजगत्कर्तृत्वे ब्रह्मप्रपाठकस्याब्रह्मपरत्वं स्यात् इति तन्निराकरणार्थमानन्दमयाधिकरणम् । पडिन्द्रियस्वरूपद्वयानन्दभेदेना-नन्दस्याष्टविधत्वादष्टसूत्राणि ।**

---

शतं मनुष्यगन्धर्वाणामानन्दाः ॥ स एको देवगन्धर्वाणामानन्दः ॥ श्रोत्रियस्य चाकामहतस्य ॥ ते ये शतं देवगन्धर्वाणामानन्दाः ॥ स एकः पितॄणां चिरलोकलोकानामानन्दः ॥ श्रोत्रियस्य चाकामहतस्य ॥ ते ये शतं पितॄणां चिरलोकलोकानामानन्दाः ॥ स एक आजानजानां देवा-नामानन्दः ॥ श्रोत्रियस्य चाकामहतस्य ॥ ते ये शतमाजानजानां देवानामानन्दाः ॥ स एकः कर्म-देवानां देवानामानन्दः ॥ ये कर्मणा देवानपियन्ति ॥ श्रोत्रियस्य चाकामहतस्य ॥ ते ये शतं कर्मदेवानां देवानामानन्दाः ॥ स एको देवानामानन्दः ॥ श्रोत्रियस्य चाकामहतस्य ॥ ते ये शतं देवानामानन्दाः ॥ स एक इन्द्रस्यानन्दः ॥ श्रोत्रियस्य चाकामहतस्य ॥ ते ये शतमिन्द्र-स्यानन्दाः ॥ स एको बृहस्पतेरानन्दः ॥ श्रोत्रियस्य चाकामहतस्य ॥ ते ये शतं बृहस्पतेरा-नन्दाः ॥ स एकः प्रजापतेरानन्दः ॥ श्रोत्रियस्य चाकामहतस्य ॥ ते ये शतं प्रजापतेरानन्दाः ॥ स एको ब्रह्मण आनन्दः ॥ श्रोत्रियस्य चाकामहतस्य ॥ स यश्चायं पुरुषे ॥ यश्चासावादित्ये ॥ स एकः ॥ स य एवंवित् ॥ अस्माल्लोकात्प्रेत्य ॥ एतमन्नमयमात्मानमुपसङ्क्रामति ॥ एतं प्राणमयमात्मानमुपसङ्क्रामति ॥ एतं मनोमयमात्मानमुपसङ्क्रामति ॥ एतं विज्ञानमयमात्मानमु-पसङ्क्रामति ॥ एतमानन्दमयमात्मानमुपसङ्क्रामति ॥ तदप्येष श्लोको भवति ॥ इत्यष्टमोऽनु-वाकः ॥ ८ ॥

यतो वाचो निवर्तन्ते ॥ अप्राप्य मनसा सह ॥ आनन्दं ब्रह्मणो विद्वान् ॥ न बिभेति कुत-श्चनेति ॥ एतꣳ ह वाव न तपति किमहꣳ साधु नाकरवम् ॥ किमहं पापमकरवमिति ॥ स य एवं विद्वानेते आत्मानꣳ स्पृणुते ॥ उभे ह्येवैष एते आत्मानꣳ स्पृणुते य एवं वेद ॥ इत्युप-निषत् ॥ इति नवमोऽनुवाकः ॥ ९ ॥

(ब्रह्मविदिदमयमिदमेकविꣳशतिरन्नाद्वन्नरसमयात्प्राणो व्यानोऽपान आकाशः पृथिवी पुच्छꣳ पड्विꣳशतिः प्राणं यजुर्ऋक् सामादेशोऽथर्वाङ्गिरसः पुच्छं द्वाविꣳशतिर्यतः श्रद्धर्तꣳसत्य-योगो महोऽष्टादश विज्ञानं प्रियं मोदः प्रमोद आनन्दो ब्रह्मपुच्छं द्वाविꣳशतिरसन्नेवाथाष्टाविꣳ-शतिरसत्षोडश भीषाऽस्मान्मानुषो मनुष्यगन्धर्वाणां देवगन्धर्वाणां पितॄणां चिरलोकलोका-नामाजानजानां कर्मदेवानां ये कर्मणा देवानामिन्द्रस्य बृहस्पतेः प्रजापतेर्ब्रह्मणः । स यश्च सङ्क्रामत्येकपञ्चाशद्यतः कुतश्च नैवमेकादश नव ॥ ब्रह्मविद एवं वेदेत्युपनिषत् ॥)

अथ भाष्यम्—अधिकरणारम्भप्रयोजनमाहुः—**तत्रेति** । **अब्रह्मत्वेनेति** । मयट्प्रत्ययस्य विकारार्थकत्वेन तदन्तस्य ब्रह्मप्रतिपादकत्वाभावत्वेनेत्यर्थः । नन्वानन्दमयस्य ब्रह्मप्रतिपादकत्वाभावे का क्षतिरित्यत आहुः—**अजगत्कर्तृत्व इति** । आनन्दमयप्रतिपाद्यस्य जगत्कर्तृत्वाभावत्वं स्यादित्यर्थः । नन्वस्त्विदं तथापि का क्षतिरित्यत आहुः—**ब्रह्मप्रपाठकस्येति** । ब्रह्मप्रपाठके आनन्दमयपदवाच्य-स्यैव जगत्कर्तृत्वप्रतिपादनात्तस्य ब्रह्मप्रतिपादकत्वाभावे प्रपाठकस्य ब्रह्मपरत्वं न स्यादिति महती क्षतिरि-त्यतोऽधिकरणारम्भ इत्यर्थः । सूत्रसङ्ख्यास्वारस्यमाहुः—**पडिति** । **स्वरूपद्वयेति** । जीवब्रह्मभेदेनेत्यर्थः ।

(प्रपाठकासङ्गत्युद्भावनम्)

**ननु कथं सन्देहः? कथं वास्याब्रह्मत्वे प्रपाठकासङ्गातिरिति? उच्यते—ब्रह्मविदः परप्राप्तिं प्रतिज्ञाय ज्ञेयांशे कारणत्वायानन्दांशमप्रवेश्य जडत्वपरिहाराय सर्वज्ञानन्दरूपं फलमुपपाद्य तन्निरूपणार्थं सर्वोऽपि प्रपाठक आरब्धः। तत्र साधनशेषब्रह्मणो वाक्यादेव निःसन्दिग्धप्रतीतेः फलस्य ब्रह्मत्वं प्रतिपादनीयम्।**

(संशयः)

**तत्राब्रह्मान्नमयादितुल्यवचनात् सुखवाचकशब्दानामेव वचनाच्च सन्देहः। आनन्दांशस्यैव कारणत्वेन ब्रह्मत्वप्रतिपादनार्थत्वात्। तदभावे प्रपाठकवैयर्थ्यं च।**

---

अत्रानन्दमयस्य ब्रह्मत्वाभावेऽपि प्रपाठकस्य ब्रह्मपरत्वमस्तीति मतानुयायी शङ्कते—**नन्विति**। समाधानमाहुः—**उच्यत** इति। सन्देहं प्रपाठकासङ्गतिं चोपपादयितुं प्रथमं ब्रह्मप्रपाठकस्य सङ्क्षेपेण भावार्थमाहुः—**ब्रह्मविद** इत्यारभ्य **आरब्ध** इत्यन्तेन। ब्रह्मविदाप्नोति परमित्यस्य, ब्रह्मवित् ब्रह्मज्ञानवान्, परं पूर्णपुरुषोत्तमम्, आप्नोति प्राप्नोतीत्यर्थः। अत्र ब्रह्मविदः परप्राप्तिं—**प्रतिज्ञाय**, प्रतिज्ञां कृत्वा; अनन्तरं ब्रह्म तत् कीदृशमित्याकाङ्क्षायां स्वरूपलक्षणप्रतिपादकं वाक्यं पठितम्, "सत्यं ज्ञानमनन्तं ब्रह्मे"ति, तत्र विचारमाहुः—**ज्ञेयांशेति**। **कारणत्वाय आनन्दांशस्येत्यादिः**। तथा चानन्दांशस्य कारणत्वाय आनन्दांशं ज्ञेयांशे अप्रवेश्येत्यन्वयः। परप्राप्तिसाधनीभूतज्ञानमक्षरब्रह्मज्ञानं तद्विषयीभूतं यद्ब्रह्म तज्ज्ञेयमित्युच्यते। तादृशज्ञेयस्यांशे सत्यं ज्ञानमिति स्वरूपलक्षण आनन्दांशस्य जगत्कारणत्वबोधनार्थमानन्दांशप्रवेशमकृत्वेत्यर्थः। फलस्वरूपस्यानन्दस्यैव जगत्कारणत्वं तस्माद्वेत्यादिवाक्येन प्रतिपाद्यते, न तु ज्ञेय ब्रह्मण इति बोधयितुं स्वरूपलक्षण आनन्दांशस्य प्रवेशो न कृत इति भावः। ननु प्रकृत्यादीनां जगत्कारणत्वेन साङ्ख्यादौ प्रसिद्धिदर्शनात्तस्यैवानन्दरूपत्वं स्यादित्यत आहुः—**जडत्वेति**। प्रकृतिपरिहारार्थमित्यर्थः। **सर्वज्ञानन्देति**। "सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिते"ति; अत्र फलवाक्ये विपश्चिद्ब्रह्मशब्दाभ्यां सर्वज्ञानन्दरसं फलं उपपाद्यत इत्यर्थः। **तन्निरूपणार्थं**, तादृशफलनिरूपणार्थम्। **तत्र** "सोऽश्नुते" इत्यस्यां ऋचि। **साधनशेषेति**। परप्राप्तिसाधनं ज्ञानमिति वाक्यस्य स्वरूपघटितलक्षणत्वादिति भावः। **प्रतिपादनीयमिति**। फलवाक्ये ब्रह्मणेति तृतीयान्तम्, प्रतिज्ञावाक्ये परमिति द्वितीयान्तमिति विवरणासम्भवात् परपदार्थनिश्चयो न जायते इति तत् व्याख्यानरूपेण प्रपाठकेन जगत्कारणत्वेन परपदार्थे ब्रह्मत्वमुपपादनीयमित्यर्थः। एतावता प्रबन्धेन प्रपाठकार्थः कथितः। इतः परं संशयमाहुः—**तत्राब्रह्मेति**। तत्र प्रपाठके। **अब्रह्मेति**। ब्रह्मभिन्नयदन्नमयादीत्यर्थः। **शब्दानामिति**। आनन्दमयशब्दानामित्यर्थः। संशयदृढीकरणार्थमब्रह्मपरत्वे प्रपाठकासङ्गतिमुपपादयन्ति—**आनन्दांशस्येत्यादि**। **प्रतिपादनार्थत्वादिति**। "तस्माद्वा एतस्मादि"त्यादिवाक्यैः प्रपाठकेनानन्दांशे ब्रह्मत्वस्य प्रतिपादितत्वादित्यर्थः। **तदभावे**। आनन्दांशस्य ब्रह्मत्वाभावे। ननु यथा "आत्मा वा इदमेक एवाग्र आसीदि"त्यादिवाक्ये चिदंशब्दस्य कारणता प्रतिपादिता, तथा "तस्माद्वा एतस्मादात्मन" इत्यादिवाक्यैरात्मपदस्वारस्याच्चिदंशस्यैव कारणताप्रतिपादनं क्रियते नत्वानन्दांशस्येत्यपि वक्तुं शक्यत इत्यत आहुः—**फलस्येति**। पूर्ववाक्ये यत्फलं प्रतिपादितं तदेव तस्माद्वेत्यस्मिन्वाक्ये आत्मपदेन प्रतिपाद्यते। न च कथमिदमवगम्यत इति वाच्यम्; आत्मपदस्य तदेतरपदसमभिव्याहृतत्वात्।

फलस्य नैकट्यप्रतिपादनायात्मपदप्रयोगेण फलरूपेण जगत्कारणतामुक्त्वा तस्यैव मध्ये सर्वान्तरत्वमुपपादितम्। "तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर आत्मानन्दमयः" (तै. २-५) इति। अन्ते च "एतमानन्दमयमात्मानमुपसङ्क्रामति" (तै. २-८) इति। आदिमध्यरूपे अनूद्य फलत्वेनोपपादितम्। तन्निरूपकस्यापि तत्तुल्यफलत्वं वक्तुमन्नमयादीनामपि ब्रह्मत्वेनोपासनमुक्तम्। तत्र पूर्वपक्षेऽन्नमयादेरिवानन्दमयस्यापि न ब्रह्मत्वम्। अन्नमयादितुल्यवचनात्तथैव फलसिद्धेरिति। एवं प्राप्तेऽभिधीयते—

आनन्दमयोऽभ्यासात् ॥१।१।११॥

(पूर्वपक्षः)

आनन्दमयः परमात्मा। नान्नमयादिवत्पदार्थान्तरम्। कुतः? अभ्यासात्। अभ्यस्यते पुनः पुनः कीर्त्यत इत्यभ्यासस्तस्मात्। अभ्यासस्य भेदकत्वं पूर्वतन्त्र-

---

ननु तथापि, आनन्दपदप्रयोगं परित्यज्यात्मपदप्रयोगः किमर्थं कृत इत्यत आहुः—नैकट्येति। लोके कृतिसाध्यताज्ञानस्य प्रवर्तकत्वात् दूरस्थले कस्यापि प्रवृत्तिर्न स्यादित्येतदर्थं स्वस्वरूपबोधकमात्म-पदप्रयोग इति भावः। फलरूपेणेति। आनन्दरूपेणेत्यर्थः। तस्यैवाकारणीभूतानन्दस्यैव, मध्ये सर्वान्तरत्वमिति। अन्नमयान्तरत्वं प्राणमयस्य यथोपपादितमेवं रीत्या आत्मपदवाच्यानन्दस्य सर्व-पञ्चकोशान्तरत्वमुपपादितमित्यर्थः। ननु केन वाक्येन सर्वान्तरत्वमुपपादितमित्यत आहुः—तस्माद्वेति। न हि केवलं मध्ये, किन्त्वन्तेऽपीत्याहुः—अन्ते चेति। प्रपाठकान्ते चेत्यर्थः। आदिमध्यरूप इति। कारणत्वसर्वोत्तररूप इत्यर्थः। अनूद्येति। प्रपाठकादौ "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः" इति वाक्यं तत्रत्यात्मपदवाच्यानन्दस्य कारणत्वमादिरूपम्। अथ च प्रपाठकमध्ये "तस्माद्वा एतस्माद्वि-ज्ञानमयात् अन्योऽन्तर आत्मानन्दमयः" इति पठितम्। तत्रत्यात्मपदवाच्यानन्दस्य सर्वान्तरत्वमुपपादितं तन्मध्यरूपम्, एतदुभयं "एतमानन्दमयमात्मानमुपसङ्क्रामती"ति प्रपाठकान्तस्थं वाक्यं तत्रत्यैतमिति पदे-नानूद्य तस्यैवात्मपदवाच्यानन्दस्यैवोपसङ्क्रामतीत्यनेन फलत्वमुपपादितमित्यर्थः। तथा च यः कारणीभूतः अन्नमयादिसर्वान्तरे भगवान् स एवानन्दमयः फलात्मेति भावः। ननु आनन्दमयादितुल्यत्वेन वचनं किमर्थमित्यत आहुः—तन्निरूपकस्यापीति। आनन्दमयोपासनाप्रयोजकस्यापीत्यर्थः। तत्तुल्यफ-लत्वम्। आनन्दमयोपासनाजन्यफलतुल्यफलत्वम्।

अथान्नमयादेर्ब्रह्मत्वेन उपासनया फलप्राप्तिरेव केवलं भवति, न त्वन्नमयादेर्ब्रह्मत्वं यथा, तथानन्दमय-स्यापीत्याशयेन पूर्वपक्षमाहुः—तत्रेति।

एवं पूर्वपक्षे प्राप्ते सूत्रमभिधीयते—आनन्दमयोऽभ्यासात्।

अभ्यासस्य भेदकत्वप्रसिद्धिमाहुः—अभ्यासस्येति। यथा पूर्वतन्त्रे जैमिनीयसूत्रे द्वितीयाध्याये

---

१ द्वितीयस्य द्वितीये प्रथमसूत्रम्। "एकस्यैवं पुन श्रुतिरविशेषादनर्थकं हि स्यात्" इति। तत्र समिधो यजति, तनूनपातं यजति, इडो यजति, बर्हिर्यजति, स्वाहाकारं यजतीति पञ्चकृत्वो यजत्यावृत्तौ मीमांसितं, किमत्र तनूनपादादिषु चतुर्षु पूर्वयागानुवाद उत यागान्तरविधानमिति। तत्र पूर्वपक्षिणा धात्वर्थप्रत्यभिज्ञानादिडादिगुणविधानार्थं समिद्यागानुवादेऽभि-कृते सिद्धान्तितम्। भेदाभेदसाधारण्या यजिश्रुत्या यागमात्रप्रत्यभिज्ञानेन श्रुतेर्यागान्तरपक्षे द्रुत्यत्वाद्गुणविधानपक्षेऽपि चतुर्थ्यादितयोरभावेन देवतायास्तृतीयाया अभावेन द्रव्यस्य च वक्तुमशक्यत्वाद्द्वितीयया चाग्निहोत्रं जुहोतीत्यादिवत् तेषां

**सिद्धम्। यथा पूर्वतन्त्रे शब्दान्तराभ्याससङ्ख्यागुणक्रियानामधेयानां षण्णां कर्मभेदकत्वमेवमेवानन्दमयस्याप्यभ्यासात् पूर्ववैलक्षण्यम्। अतोऽतुल्यत्वाद् ब्रह्मत्वम्, एवमभ्यासः श्रूयते "को ह्येवान्यात्कः प्राण्यात्, यदेष आकाश आनन्दो न स्यात्, एष ह्येवानन्दयाति" (तै. २-७) इत्यर्थतोऽभ्यासः स्तुत्या। मयडर्थप्रकृतिस्तु तुल्या। पुनर्वचनेनाभ्यासेन प्रवाहाद्भेदे साधिते ब्रह्मत्वम्। न द्व्यापत्तिः। उत्तरस्य साधकत्वात्। तस्मादानन्दमयं ब्रह्मैव।**

---

द्वितीये प्रथमसूत्रम् शब्दान्तरेति, शब्दान्तरादीनां कर्मभेदकत्वं यथा, तथा तत्रैवानुसन्धेयमिति विस्तरभयाद्विरम्यते। **अभ्यासादिति**। आनन्दमय इत्यस्य योऽर्थः आनन्द इति तस्यार्थिकस्याभ्यासादित्यर्थः। **पूर्ववैलक्षण्यम्**। पूर्वस्मात् अन्नमयादित्यर्थः। वैलक्षण्यं भेदकत्वम्। **अतः** कारणात् **अतुल्यत्वात्**। अन्नमयादितुल्यवचनत्वाभावात्। **श्रूयते**। अस्मिन्नेव प्रपाठके श्रूयते। अभ्यासबोधकं वाक्यमाहुः—**को ह्येति**। यत् यदि आकाशः पूर्ण आनन्दः साक्षी प्रेरको **न स्यात्**, तदा को वा **अन्यात्**, चलेत्, को वा विशिष्य **प्राण्यात्** जीवेत्, तस्मात्, एष एवानन्दयतीत्यर्थः। यातीति छान्दसः प्रयोगः। इति स्तुतिवाक्यार्थः। **अर्थतोऽभ्यास** इति। आनन्दमय इत्यस्यानन्दार्थस्तस्याभ्यास इत्यर्थः। शब्दाभ्यासस्यान्नमयादिष्वपि सत्त्वादार्थिक इत्युक्तम्। ननु पूर्ववाक्ये आनन्दमय इति पदं तस्य च प्रचुरानन्द इत्यर्थः। तथा चानन्दे प्राचुर्यं मयट्प्रत्ययेन बोध्यते। स्तुतिवाक्यद्वये तु केवलं आनन्दपदेनानन्दो बोध्यते इत्यर्थभेदात् कथमर्थतोऽभ्यास इत्यत आहुः—**स्तुत्या**। मयटोऽर्थत्वमिति बोध्यते इति शेषः। स्तुतिवाक्यबोधितस्तवनेन आनन्दे प्रचुरत्वरूपं मयडर्थत्वं तद्बोध्यते इत्यर्थः। तथा च स्तवनं तु परब्रह्मण एव स च प्रचुरानन्दरूप एवेति तात्पर्यवशादेवायमर्थो लभ्यत इति भावः। ननु तथापि स्तुतिवाक्ये प्राचुर्यबोधकप्रत्ययाभावात् किञ्चिदंशे शब्दतः समानत्वं नास्तीत्यत आहुः—**प्रकृतिस्त्विति**। आनन्दरूपा प्रकृतिरित्यर्थः। तथा च यथा घट इत्यादिस्थले केषाञ्चिन्मते एकत्वविशिष्टो घट इति शाब्दबोधः, तत्र घट इति प्रकृतित एव जायते। प्रत्ययस्य एकत्वांशे तात्पर्यग्राहकत्वं न तु वाचकत्वं केषाञ्चिन्मते तु प्रत्ययस्यैव एकत्वादौ शक्तिः, एवं च वाच्यवृत्त्या प्रत्ययार्थस्य विवादग्रस्तत्वात्प्रत्ययांशे साम्याभावेऽपि प्रकृत्यंशे शब्दतः साम्यमपेक्षितं तच्चास्तीति भावः। सिद्धमाहुः—**पुनर्वचनेनेति**। तृतीयार्थो बोधितत्वं तथा चानन्दस्य स्तुतिवाक्ये यत्पुनर्वचनं तेन बोधितो य आर्थिकोऽभ्यासस्तेनेत्यर्थः। **प्रवाहादिति**। अन्नमयादिचतुष्कादित्यर्थः। नन्वानन्दमयप्रकरणे तस्य प्रियमेव शिर इति वाक्यं पठितम्, षष्ठी च सम्बन्धे स च भेदं विना न सम्भवतीति ब्रह्मभेदः स्यादित्यत आहुः—**न द्व्येति**। न ब्रह्मद्व्यापत्तिरित्यर्थः। ननु कुतोऽवगम्यते इत्यत आहुः—**उत्तरस्येति**। एतदभ्यासवाक्यादुत्तरस्य "यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते, अथ तु भयं भवती"ति वाक्यद्वयस्येत्यर्थः। **साधकत्वात्**, भेदाभावसाधकत्वात्। तथा च षष्ठी तु राहोः शिर इति वदभेदार्थिकेति भावः। उपसंहरन्ति—**तस्मादिति**।

---

कर्मनामत्वनिश्चयात् पदान्तरसमभिव्याहृतेन यजतिना यागान्तरमेव बोध्यत इति। तथाच यत्र यत्र वाक्ये पदान्तरसमभिव्याहृतस्य यस्य पदस्याभ्यासस्तत्र तत्र तस्य पदस्य पूर्वस्मादर्थान्तरगमकत्वमिति व्याप्तौ पूर्वस्मादर्थान्तरत्वेन परमात्मसाधनान्नासिद्धो हेतुरित्यर्थः। नन्वभ्यासस्य भेदकत्वमात्र सिद्धम्। तस्य फलमितरभेद सोऽत्र शब्दान्तरादेव सिद्धो वाक्यान्तरसिद्धमसन्निहितमभ्यास स्वलाभाय नापेक्षते। तथासति कथ तेन परमात्मावगतिरित्यत आहु यथेत्यादि। तथाच शब्दान्तरेण सिद्धेऽपि भेदे वैलक्षण्यमभ्यास साधयति। सिद्धाच्च वैलक्षण्यादन्नमयादिभ्य आनन्दमयस्यातुल्यत्व सिध्यति तेन ब्रह्मात्मावगतिरित्यर्थ।

( सूत्राशयविवरणम् )

अथवा "स नैव रेमे तस्मादेकाकी न रमते। स द्वितीयमैच्छत्। स हैतावानास" ( बृ. १।४।३ ) इत्यादिश्रुतिभिः। "एप उ एव" ( कौ. ३।८ ) इति श्रुतेश्च तानि तानि साधनानि कारयित्वा तानि तानि फलानि ददद्भगवान् स्वक्रीडार्थमेव जगद्रूपेणाविर्भूय क्रीडतीति वैदिकैर्निर्णीयते। एतदेव काण्डद्वयेऽपि प्रतिपाद्यते। अन्यथा जीवस्य साधनफले निरूपयन्त्याः श्रुतेर्जीवपरत्वमेव स्यान्न ब्रह्मपरत्वम्। कर्मब्रह्मणोरपि जीवशेषत्वं नापेयात्। एवं सति, पूर्वकाण्डेऽवान्तरफलान्युक्त्वा "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति" ( बृ. ४-३-३२ ). इति श्रुतेर्निरवध्यानन्दात्मकमेव परमं फलमिति तद्विवक्षमाणा पूर्वं सामान्यत आह ससाधनं तैत्तिरीये "ब्रह्मविदाप्नोति परम्" ( तै. २-१ ) इति। अक्षरब्रह्मवित्परं ब्रह्माप्नोतीत्यर्थः। अत्र परशब्दस्य पूर्वपरत्वे तदित्येव वदेत्। पूर्वं ब्रह्मोक्त्वाऽग्रे यत्परमित्याह तेन सान्निध्यात्तत एव परं पुरुषोत्तमरूपमेवात्राभिप्रेतमिति ज्ञायते।

---

अखण्डब्रह्मवादमाश्रित्य प्रकरणान्तररूपं वर्णकान्तरमाहुः—**अथवेति**। अत्र पूर्ववर्णके अन्नमयादीनां ब्रह्मकार्यत्वं आनन्दमयस्य तु फलत्वार्थमार्थिकाभ्यासेन भेद उक्तः। ब्रह्मज्ञानं साधनं साधने फलवैलक्षण्यार्थं ज्ञानविषयीभूतब्रह्मणः स्वरूपलक्षण आनन्दांशनिवेशोऽपि न कृतः। अस्मिन्वर्णके तु कार्यं कारणं साधनं फलं च सर्वं ब्रह्मैवेत्यभेदः प्रतिपादितः। साधनशेषब्रह्मस्वरूपलक्षण आनन्दांशनिवेशोऽपि क्रियते। भेदस्तु "तस्यैष एव शारीर आत्मे"ति वाक्याभ्यासेनाधिदैविकभेदमाश्रित्य प्रतिपाद्यते इति पूर्ववर्णकाद्वैलक्षण्यं बोध्यम्। अखण्डब्रह्मवादे प्रमाणमाहुः—**स नैवेति**। **एष उ एवेति**। "एष उ एव साधु कर्म कारयती"त्यादिश्रुतेश्चेत्यर्थः। **वैदिकैरिति**। पूर्वर्षिभिरित्यर्थः। **एतदेवेति**। क्रीडेच्छया सृष्टीच्छा तया च जगद्रूपेणाविर्भवनमेवेत्यर्थः। **काण्डद्वयेऽपि**। पूर्वोत्तरकाण्डेऽपि। विपक्षे बाधकं तर्कमाहुः—**अन्यथेति**। भगवतः जगद्रूपत्वाभावे, न ब्रह्मपरत्वमिति, तथा च "सर्वे वेदा यत्पदमामनन्ती"ति श्रुतिविरोध इति भावः। श्रुत्यर्थस्य जीवपरत्वापत्तिमाहुः—**कर्मेति**। जीवशेषत्वं, जीवाङ्गत्वं, नापेयात् न गच्छेत्, तथा च जीवस्य स्वर्गार्थं मोक्षार्थं च कर्मब्रह्मोपासनाकथनेन जीवाङ्गापत्तितदुभयोरिति भावः। एवमखण्डब्रह्मवादे आधिदैविकवादेन भेदं साधयितुं विषयवाक्यमवतारयन्ति—**एवं सतीति**। अवान्तरफलानि स्वर्गादीनि। **एतस्यैवेति**। कथितस्य परमानन्दस्येत्यर्थः। **भूतानि**, ब्रह्मादीनि, **मात्रां** लेशम्, इति। **तद्विवक्षमाणेति**। इत्यनेन प्रकारेण, तत् आनन्दरूपं फलं, विवक्षमाणा श्रुतिः पूर्वं प्रथमं तैत्तिरीये साधनसहितं फलं, आहेत्यर्थः। अनुपदमेव विशेषत उच्यतेऽतः पूर्वं **सामान्यत** इत्युक्तम्। सामान्यतः, सङ्क्षेपेण। अत्र, ब्रह्मविदिति वाक्ये। **पूर्वपरत्वे** इति। ज्ञानविषयीभूतब्रह्मपरत्वेत्यर्थः। **तदित्येवेति**। ब्रह्मविदाप्नोति तदित्येव वदेदित्यर्थः। **तेनेति**। ज्ञायतेत्यनेनान्वयः। **सान्निध्यादिति**। एकवाक्यान्तर्गतत्वादित्यर्थः। **तत एव परमिति**। ततः अक्षरब्रह्मणः, परं उत्कृष्टमित्यर्थः।

(वर्णकान्तरम्)

किञ्च । प्रतिवादिना तदाप्तिर्ज्ञानात्मिकैव वाच्या । तथा सति ब्रह्मप्राप्तौ ब्रह्म प्राप्नोतीत्यर्थः स्यात्स चासङ्गतः, साधनसाध्यभावव्याहृतिश्च ।

(साध्यसाधनभावव्याहृतिः)

अतः परं तद्विशेषविवक्षमाणानुभवैकगम्यं तत्स्वरूपं नान्यमानगम्यमिति ज्ञापयितुमन्यमुखेनाह, "तदेषाऽभ्युक्ता" (तै. २-१) इति । अन्यथा सर्वार्थतत्त्वप्रतिपादिका श्रुतिरेवं कथं वदेत् । तदित्यव्ययम् । तथा च तत्पूर्वोक्तं ब्रह्मविदः परप्राप्तिलक्षणमर्थं विशदतया प्रतिपाद्यत्वेनाभिमुखीकृत्योपगृह्य ऋगेषा विदितपरब्रह्मकैरुक्ता । पूर्ववाक्योक्तार्थस्य वैशद्यमनया क्रियत इत्यर्थः सम्पद्यते । तामेवाह "सत्यं ज्ञानमनन्तं ब्रह्म । यो वेद निहितं गुहायां परमे व्योमन् । सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता" (तै. २-१) । सोपपत्तिकमानन्दात्मकत्वमग्रे निरूपणीयमित्यधुना तदनिरूप्य सचिदंशौ देशकालापरिच्छिन्नत्वं चोक्तवती ।

---

नतु अक्षरापेक्षया परमन्यं न भवति, किन्तु, मोक्षरूपत्वात्तदेव परमित्यत आहुः—किञ्चेति । ब्रह्मविदाप्नोतीति ब्रह्मज्ञानवान् भवतीत्यर्थः । असङ्गत इति । यथा दण्डवान् दण्डवानित्यादिनिराकाङ्क्षवाक्याच्छाब्दबोधो न जायते, तथा ब्रह्मवित् ब्रह्मज्ञानवानित्यस्मादपि शाब्दबोधस्यासङ्गतत्वमित्यर्थः । नतु विरूपपदोपस्थितयोरेव शाब्दबोधः । तच्च प्रकृतेऽप्यस्ति, ब्रह्मवित्पराप्तिपदयोर्विरूपत्वात् शाब्दबोधस्य समानाकारत्वे क्षतिविरहादित्यत आहुः—साधनेति । व्याहृतिरिति । अभेदे किं साधनं किं साध्यमिति वक्तुं न शक्यते इति क्षतिरित्यर्थः ।

अतः परमिति । ब्रह्मवित् परं पुरुषोत्तमं प्राप्नोतीति सामान्यतः यदुक्तं तदनन्तरमित्यर्थः । विशेषतः विशेषरूपेण स्वरूपलक्षणकथनादिना । तद्विवक्षमाणेति । श्रुतिरिति शेषः । तं विशेषार्थं वक्तुं इच्छावती श्रुतिरित्यर्थः । अत्रेत्थं साधनिका, वक्तुं इच्छति विवक्षते इति विवक्षमाणा ब्रुञ् धातोः सन् तस्य ब्रुवो वचीति वच्यादेशः द्वित्वम्, अभ्यासलोपः, चोः कुरिति कुत्वम्, सकारस्य षत्वं सन्नन्तात्कर्तरि शानच्, आने मुगिति मुगागमः, अदन्तत्वाट्टाप्, ब्रुञ् इत्युभयपदाद्धातोः सन् । पूर्ववत् सन् इत्यात्मनेपदम् । विवक्षमाणेति । अन्यमुखेन, ब्रह्मज्ञमुखेन, आहुः—उक्तवती । वचनमाहुः—तदेषेति । अन्यथेति । अनुभवैकगम्यत्वास्वीकारे । तदेषेत्यस्यार्थमाहुः—तदिति । तदर्थमित्यर्थः । अव्ययादाप् सुप इत्यनेन चतुर्थ्या लुक् । तथा च ब्रह्मविदाप्नोति परमित्यस्यार्थपरिज्ञानार्थमिति यावत् । प्रकारान्तरेण तदित्यस्यार्थमाहुः—तथा चेति । तत् । तमित्यर्थः । अव्ययत्वेन अमो लुक् । अर्थ इत्यस्य विशेषणत्वार्थमेवाव्ययत्वम् । उपगृह्य निश्चयं कृत्वा । सम्पद्यते इति । तात्पर्यार्थो भवतीत्यर्थः । यथार्थः क्रियते । तामाहुः—सत्यमिति । गुहायामित्यस्यार्थस्त्वनुपदमेव वक्ष्यते । सत्यं ज्ञानमिति ऋगर्थमाहुः—सोपपत्तिकमिति । अग्रे फलनिरूपणावसरे उक्तवतीति । सत्यं ज्ञानमिति ऋक् सत्यज्ञानपदाभ्यां सचिदंशौ, अनन्तपदेनापरिच्छिन्नत्वं च ज्ञेयस्य ब्रह्मणः उक्तवतीत्यर्थः । एतेन पूर्ववर्णकरीत्या ज्ञेयांशे कारणत्वायानन्दांशनिवेशो न कृत इति बोध्यम् ।

( श्रुतिव्याख्यानम् )

अथवा, अक्षरब्रह्मण्यानन्दात्मके सत्यपि तस्य परिच्छिन्नत्वान्न परमफलत्वम्। अत आनन्देऽपरिच्छिन्नत्वमेव परमफलतावच्छेदकमिति तद्धर्मपुरःसरं परमानन्द एवानन्तशब्देनोच्यतेऽत्र । "सत्यं विज्ञानमानन्दं ब्रह्म" (स. सा. ३) "सच्चिदानन्दविग्रहम्" (मुण्ड. १।४) इत्यादिश्रुतिषु त्रयाणामप्येकप्रक्रमपठितत्वात् । द्वितयोक्तौ तन्नियतसहचरितत्वेनानुक्तोऽप्यानन्दः प्राप्स्यत एवेत्याशयेनैवानन्दः स्फुटतया नोक्तः । अथ वेदनपदार्थमाह यो वेदेत्यादिना । अत्रेदमाकूतम् "नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुधा श्रुतेन । यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्" ( मुण्ड. ३।२।३ ) इति श्रुत्या वरणेतरसाधनाप्राप्यत्वमुच्यते ।

( वर्णकान्तरेणार्थान्तरप्रदर्शनम् )

एवं सति श्रुतिद्वयविरोधपरिहारायाक्षरब्रह्मज्ञानेनाविद्यानिवृत्त्या प्राकृतधर्मराहित्येन शुद्धत्वसम्पादनेन पुरुषोत्तमप्राप्तौ स्वरूपयोग्यता सम्पाद्यते । तादृशे जीवे स्वीयत्वेन वरणे भक्तिभावात् सहकारियोग्यतासम्पत्त्या पुरुषोत्तमप्राप्तिर्भवतीति निर्णीयते । तदैव गुहायां परमव्योमाविर्भावः । परो मीयते दृश्यतेऽनेनेति तथा ।

---

ननु पूर्ववर्णकरीत्या स्वरूपलक्षणे ज्ञेयांशे आनन्दांशप्रवेशाभावे प्रकरणान्तरापर्यायं वर्णकान्तरमिदं न स्यादित्यतोऽनन्तशब्दस्यानन्दरूपार्थान्तर आहुः—**अथवेति** । तस्याक्षरब्रह्मणः । **परिच्छिन्नत्वादिति** । "य एते शतं प्रजापतेरानन्दाः, स एको ब्रह्मण आनन्दः" इति श्रुत्या अक्षरब्रह्मणः गणितानन्दत्वादित्यर्थः । **अपरिच्छिन्नत्वमेव**, अगणितत्वमेव । **तद्धर्मेति** । अपरिच्छिन्नत्वधर्मेत्यर्थः । ननु अनन्तपदेनापरिच्छिन्नत्वेन रूपेण परमानन्दो बोध्यत इत्यत्र गमकं नास्तीत्यतः पक्षान्तरमाहुः—**सत्यं विज्ञानमिति** । **अनुक्तोऽपीति** । सत्यमिति । स्वरूपलक्षणेति शेषः । आनन्दः परमानन्दः । एतावता ग्रन्थेन पूर्ववर्णके वेद्यत्वमक्षरब्रह्मणः उक्तं, अस्मिन्वर्णके वेद्यत्वं परमानन्दस्येति वैलक्षण्यं बोध्यम् । अथ साधनाङ्गभूतवेद्यनिरूपणोत्तरम् । ननु अक्षरपरमानन्दोभयरूपस्य वेदस्य प्रकरणद्वयेन निरूपणे किं तात्पर्यमित्यत आहुः—**अत्रेति** । इदं, यो वेदेति व्याख्यानांशे वक्ष्यमाणम् । आकूतं तात्पर्यम् । तात्पर्यमेवाऽऽहुः—**नायमात्मेत्यादिना** ।

**श्रुतिद्वयेति** । ब्रह्मविदाप्नोतीत्यस्मिन् वाक्ये ब्रह्मज्ञानप्राप्यत्वं नायमात्मेत्यादिवाक्ये वरणेनैव प्राप्यत्वमिति श्रुतिद्वयविरोध इत्यर्थः । **परिहाराय** तादृशविरोधपरिहाराय । निर्णीयते इत्यनेनान्वयः । **प्राकृतेति** । सत्त्वरजस्तमसां राहित्येनेत्यर्थः । **तादृशेति** । ज्ञानेन परप्राप्तौ स्वरूपयोग्यतासम्पन्न इत्यर्थः । तथा च वरणे सति भक्तिभावो जायते, तदनन्तरं तत्सहकारित्वं योग्यतायाः सम्पत्तिः, तदनन्तरं पुरुषोत्तमरूपपरप्राप्तिरिति निर्णयः क्रियत इति भावः । ननु भवतु श्रुतिद्वयविरोधपरिहारायैवं निर्णयः, तथाप्यत्र किञ्चिद्बीजमपेक्षितमित्यत आहुः—**तदैवेति** । भगवताङ्गीकारे कृते भक्तिभावकाल एवेत्यर्थः । व्योम्नि परमत्वं विवरीतुं परमपदार्थमाहुः—**परो मीयतेति** । परो मीयते अनेन व्योमेति परमम् । तस्मिन् परमे व्योम्नि चिदाकाशे । परमत्वं च लीलाविशिष्टत्वं भगवत्सम्बन्धित्वम् । तथा च भक्तहृदये परमव्योमाविर्भावेन भगवत्साक्षात्कार एवाक्षरब्रह्मज्ञानम् । अत एव गुहायां निहितं यः

ज्ञानमार्गीयजीवज्ञेयप्रकारकाद्वैशिष्ट्येनापि तथा। परमव्योम्नोऽत्यलौकिकत्वज्ञापनायालौकिकः प्रयोगः कृतः। "भक्त्याऽहमेकया ग्राह्यः" "नाहं वेदैः" (भ. गी. ११।५२) इत्युपक्रम्य–"भक्त्या त्वनन्यया शक्यः" (भ. गी. ११।५४) इत्यादिस्मृतिरप्येवमेव सङ्गच्छते। अन्यथा ज्ञानमार्गिणामपि ब्रह्मविदां परप्राप्तिरेव स्यान्न त्वेवम्।

(अक्षरप्राप्त्याऽविद्यानिवृत्तौ पुरुषोत्तमप्राप्तिः)

मुक्तानामपि सिद्धानां नारायणपरायणः।
सुदुर्लभः प्रशान्तात्मा कोटिष्वपि महामुने॥
तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः।
न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिह॥ (भा.६।१४।५–६)

इत्यादिवाक्यैरेतदेवाह। गुहायां हृदयाकाशे यदाविर्भूतं परमं व्योमाक्षरात्मकं व्यापिवैकुण्ठं तस्य पुरुषोत्तमगृहरूपत्वात् तत्र निहितं स्थापितमिव वर्तमानं यो वेद स भक्तो ब्रह्मणा नित्याविष्कृतरूपेण विपश्चिता, विविधं पश्यच्चित्त्वं हि विपश्चित्त्वं पृषोदरादित्वात्पश्यच्छब्दावयवस्य यच्छब्दस्य लोपं कृत्वा व्युत्पादितो

---

वेदेत्युक्तं श्रुतौ, तदनन्तरं सोऽश्नुते इति वाक्योक्तपुरुषोत्तमप्राप्तिरेव फलमिति भावः। ननु ज्ञानमार्गिणां कथमेतादृशाक्षरब्रह्मज्ञानमित्यत आहुः—**ज्ञानमार्गीयेति**। ज्ञानमार्गीयो यो जीवः तस्य यज्ज्ञेयं ज्ञानविषयीभूतं ब्रह्म सत्यज्ञानानन्तरूपं तत्प्रकारको यः भगवत्साक्षात्कारः तस्माद्धेतोरित्यर्थः। **तद्वैशिष्ट्येनापि**। भगवत्सम्बन्धित्वेनापीत्यर्थः। अपिना हेतोः समुच्चयः। तथा व्योम्नि परमत्वम्। तथा च ज्ञानिनः अक्षरज्ञानानन्तरं वरणे भक्तिभावे परमव्योमाविर्भावे साक्षात्कारः। तदनन्तरं परप्राप्तिरूपं फलम्। भक्तस्य त्वङ्गीकारानन्तरमेव परमव्योमाविर्भावकाले लीलाविशिष्टसत्यज्ञानानन्दरूपमक्षरब्रह्मज्ञानं तदनन्तरं परप्राप्तिरिति भावः। अत एव प्रथमवर्णके ज्ञानिनः ज्ञेयकोटौ आनन्दघटितं सत्यं ज्ञानमनन्तं ब्रह्मेत्युक्तम्। द्वितीयवर्णके भक्तस्य ज्ञेयकोटौ सत्यं ज्ञानमनन्तं ब्रह्मेत्यत्र परमानन्देति व्याख्यातम्। इदमेव द्विधा व्याख्याने बीजं बोध्यम्। उभयपक्षेऽप्यङ्गीकारानन्तरमेवानन्दरूपपरमव्योमाविर्भाव इति हृदयम्। व्योमेति पदं चिदाकाशबोधकं न तु लौकिकभूताकाशबोधकमित्याहुः—**परमव्योम्नोऽत्यलौकिकत्वेति**। परमव्योम्नोऽत्यलौकिकत्वज्ञापनायेत्यर्थः। अयमेव पाठः समीचीनः। **कृत इति**। व्योम्नीति वक्तव्ये व्योमिन् इति सप्तम्यन्तो वैदिकः प्रयोगः कृत इत्यर्थः। ननु श्रुतौ वरणपदं वर्तत इत्येतदर्थं भक्तिपक्षाश्रयं कृत्वा विरोधपरिहारापेक्षया वरणपदस्यैव लक्षणवृत्त्या ज्ञापनार्थकत्वं वक्तव्यमिति वरमित्यत आहुः—**भक्त्येति**। परप्राप्तिस्तु भक्त्यैव जायते इति श्रुतिप्राप्तार्थबोधिकायां स्मृतावपि एकया अनन्ययेत्युक्तम्। **अन्यथेति**। एतादृशश्रुतितात्पर्यानङ्गीकारे। ननु ज्ञानिनां परप्राप्तौ इष्टापत्तिरित्यत आहुः—**नत्वेवमिति**। मुक्तानामित्यादिवाक्यैर्नत्वेवमित्यर्थः। **एतदेवेति**। पूर्वोक्तार्थमेवमित्यादि श्रुतावाहेत्यर्थः। **नित्याविष्कृतेति**। निरन्तरं प्रकटीभूतेन। विपश्चितेत्यस्यावयवार्थमाहुः—**विपश्चितेति**। **पृषोदरादित्वादिति**। पृषोदरादीनि यथोपदिष्टमिति सूत्रम्। पृषोदरसदृशानि शिष्टैर्यथोच्चारितानि तथैव साधूनि बोध्यानीति सूत्रार्थः। पृषदुदरमिति वक्तव्ये पृषोदरमित्यभियुक्तप्रयोगो यथा साधुः तथा पश्यच्चित्त्वमिति वक्तव्ये विपश्चितेत्युक्ते। तत्र विपश्चितेत्यस्य पश्यदित्यस्यावयवीभूत-

विपश्चिच्छब्दः, तेन विविधभोगचतुरेण सह सर्वान्कामानश्नुत इत्यर्थः । एतेन परप्राप्तिपदार्थ उक्तो भवति । शुद्धपुष्टिमार्गीयत्वादत्र भक्तस्य स्वातन्त्र्यं भोग उच्यते । सहभावोक्त्या ब्रह्मणो गौणत्वम् । अत एव भक्ताधीनत्वं भगवतः स्मृतिष्वप्युच्यते "अहं भक्तपराधीनः" (भा. ९।४।६३) "वशे कुर्वन्ति मां भक्त्या" ( भा. ९।४।६६ ) इत्यादिवाक्यैः ।

( अश्नुत इत्यत्र विचारः )

यद्यप्यशभोजन इति धातोरश्नातीत्येव रूपं भवत्यशूव्याप्ताविति धातोर्भवत्यश्नुत इति रूपं विकरणभेदात्पदभेदाच; तथाप्यत्राशभोजन इति धातोरेव प्रयोग इति ज्ञायते । तथाहि-अत्राशनक्रियायां ब्रह्मणा सहभाव उच्यते । तथाच व्याप्त्यर्थकत्वे ब्रह्मणा सहभूतान्कामान् व्याप्नोतीत्यर्थो भवति ।

( अश्नुत इत्यस्य द्वितीयार्थप्रदर्शनम् )

अथवा ब्रह्मणा सहभूतः स जीवः कामान् व्याप्नोतीति । एतौ त्वनुपपन्नौ । नहि कामवज्जीवकर्तृकव्यापनक्रियाकर्मत्वं ब्रह्मणि सम्भवति, अतिमहत्त्वात् । व्यापनं चात्र स्वाधीनीकरणमेव वाच्यम् । नहि कामानां तथात्वम्, स्वतःपुरुषार्थरूपं भोगशेषत्वात्तेषाम् । पूर्वोक्तपरप्राप्तिव्याकृतिरूपत्वाचास्य तथार्थोऽनुपपन्नः । तेनाशभोजन इति धातोरेवायं प्रयोगोऽर्थस्यालौकिकत्वज्ञापनायालौकिकः प्रयोगः कृतः । "प्रत्ययो बहुलम्" ( पा. सू. ३।१।८५ ) इति सूत्रेण छन्दसि तद्विधानात् । श्नाप्रत्ययपरस्मैपदयोर्व्यत्ययेन श्नुप्रत्ययात्मनेपदे जात इति, भोगार्थक

---

यच्छब्दस्य लोपं कृत्वा विपश्चित् । एतेनेति । सोऽश्नुतेति वाक्येनेत्यर्थः । अस्येति । अङ्गीकृतस्येत्यर्थः । **सहभावेति** । ब्रह्मणेत्यनेनेति शेषः । अस्मिन्नर्थे स्मृतिप्रमाणमाहुः—**अत एवे**त्यादि ।

अश्नुते इत्यत्र शङ्कते—**यद्यपी**ति । **अशूव्याप्ता**विति । धातुपाठे अत्र द्वावनुदात्तौ इत्युपक्रम्य अशूव्याप्ताविति धातुः पठितः । तत्राशू इत्यत्रोकारस्यानुदात्तत्वात्तस्य च इत्त्वादनुदात्तङित आत्मनेपदमित्यादिना अनुदात्तेत्त्वादात्मने पदं अश्नुत इति रूपं सिद्ध्यति । क्वचित्पुस्तके अशूङ् व्याप्तावित्यपपाठः । दूषयन्ति—**तथापी**ति । प्रयोगप्रसिद्धिं व्युत्पादयन्ति—**तथाही**त्यादिना । व्याप्त्यर्थकत्वेऽर्थद्वयं तत्राद्यमर्थमाहुः—**ब्रह्मणा सहे**ति । द्वितीयमाहुः—**अथवे**ति ।

आद्यं दूषयन्ति—**न ही**ति । सम्भवतीत्यनेनान्वितम् । **कामव**दिति । कामाधिकरणे इत्यर्थः । द्वितीयं दूषयन्ति—**व्यापनमि**ति । तथात्वं स्वाधिनीकरणं फलं न हीत्यर्थः । कुतः **भोगशेषत्वात्** भोगाङ्गत्वात् । **पूर्वोक्ते**ति । ब्रह्मविदाप्नोति परमिति पूर्ववाक्योक्त्या या परप्राप्तिः तस्याः या व्याकृतिर्व्याख्यानं तद्रूपत्वादित्यर्थः । **अस्य** अश्नुते इत्यस्य, **तथार्थः** कामस्वाधीनीकरणरूपोऽर्थः । **अनुपपन्न**मिति । तथा च विवरणेन कामप्राप्तिरेवोक्तास्यात्र तु ब्रह्मप्राप्तिरित्यतोऽयमर्थोऽनुपपन्न इत्यर्थः । तथा च सिद्धार्थमाहुः—**तेने**ति । **अयं प्रयोग** इति । अश्नुते इति प्रयोग इत्यर्थः । **अर्थस्य** परेण सह भोगरूपार्थस्य । व्याक्रियाप्रणीतत्वरूपं साधुत्वमप्यस्तीत्याहुः—**व्यत्ययेने**त्यादिना ज्ञेयमित्यन्तेनेति । प्रथमाद्विवचनम् । तथा च श्नुप्रत्ययः आत्मनेपदं च जातमित्यर्थः । अस्मिन्नर्थे श्रुत्यन्तरं प्रमाणमाहुः—

एवायं धातुः। एवमेव "न तदश्नोति कश्चन न तदश्नाति कश्चन" (बृ. ३।८।८) इत्यत्र प्रत्ययमात्रव्यत्ययेन प्रयोगोऽशधातोरेवेति ज्ञेयम्। अन्यथा सर्वव्यापकस्य ब्रह्मणस्तन्निषेधोऽनुपपन्नः स्यात्।

(भक्तस्य सकामत्वनिरसनम्)

ननु सकामोऽत्रोपासकस्तदुपास्यं च सगुणं ब्रह्म द्वयोरपि कामोपभोगश्रवणात्। "यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति" (बृ. २-४-१४—४-५-१५) इत्युपक्रम्य-"यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत्" (बृ. २-४-१४—४-५-१५) इत्यादिनान्यदर्शननिषेधात् ब्रह्मविदः कामोपभोगासम्भवश्चेति चेत्, मैवम्; "तदेषाभ्युक्ता (तै. २-१) इति वाक्येन पूर्ववाक्योक्तार्थनिरूपिकेयमृगित्युक्तत्वेन प्राकृतगुणसम्बन्धस्य तत्र वक्तुमशक्यत्वात्। तथा सति ब्रह्मवित्प्राप्यत्वपरत्वयोरसम्भवापत्तेः। न च वेद्यस्यागुणत्वमुत्तरस्य सगुणत्वमिति वाच्यम्। परत्वानुपपत्तेः। साधनशेषभूतस्यागुणत्वं तत्फलस्य सगुणत्वमित्यसङ्गततरं च। "यद्धि पश्यन्ति मुनयो गुणापाये समाहिताः" (१०-२८-१५) इति श्रीभागवतवाक्येन गुणातीतपुंसां वैकुण्ठदर्शनाधिकार उच्यते यत्र तत्र किमु वाच्यं तत्परदर्शने।

(कामभोगे द्वैतापत्तिनिरासः)

यच्चोक्तं ब्रह्मविदो द्वैतदर्शनानुपपत्त्या कामभोगासम्भव इति, तत्राप्युच्यते-यत्र त्वस्य "सर्वमात्मैवाभूत्" (बृ. २-४-१४—२-५-१५) इति श्रुतिरखण्डब्रह्माद्वैतभाने ब्रह्मविदः प्रापञ्चिकभेदादर्शनं वदति, न तु प्रपञ्चातीतार्थदर्शनं बोधयति निषेधति वा। पुरुषोत्तमस्वरूपं तु यावत्स्वधर्मविशिष्टं प्रपञ्चातीतमेवेति तद्दर्शनादौ किमायातम्? "पुरुष एवेदं सर्वं यद्भूतं यच्च भाव्यम्" (शु. य. ३१-२) इत्यनेन ब्रह्मात्मकत्वं प्रपञ्चस्योक्त्वैतदपि तस्य विभूतिरूपं पुरुषस्त्वितो महानित्याह। "एतावानस्य महिमा। अतो ज्यायांश्च पूरुषः" (शु. य. सं. ३१-३) इति श्रुतिः। अतो न किञ्चिदनुपपन्नम्। एवं सति ब्रह्मविदः परप्राप्तेः पूर्वदशा तत्केनेत्यादिनोच्यते। उत्तरदशा तु सोऽश्नुते इत्यनेनोच्यत इति सर्वं सुस्थम्॥

---

एवमेवेति। व्यत्ययेनैवेत्यर्थः। निर्विशेषं ब्रह्म न कमपि भुङ्क्ते कोऽपि ब्रह्म न भुङ्क्ते इति श्रुत्यर्थः। प्रत्ययमात्रेति। श्नाविकरणस्थाने श्नुविकरणेनेत्यर्थः।

कामोपभोगस्यैव फलरूपत्वे शङ्कते—नन्विति। यत्र संसारदशायाम्। अस्य महाज्ञानिनः। समाधानमाहुः—मैवमिति। अलौकिकेऽर्थे गुणसम्बन्धाभावात्साधकब्रह्मणोरुभयोरपि निर्गुणत्वम्। अत एव तदेषाभ्युक्तेत्यनेन विदितब्रह्मैकरूपकेत्युक्तम्। तथा सति, ब्रह्मज्ञानानन्तरं गुणसम्बन्धे स्वीक्रियमाणे।

द्वितीयमनूद्य दूषयन्ति—यच्चेति। तत्रापीति। यावत् स्वधर्मविशिष्टम् अलौकिकलीलाविशिष्टम्। किमायातमिति। न किमपि दूषणं समायातमिति काकूक्तिरित्यर्थः। अत्रार्थे पुरुषसूक्तं प्रमाणमाहुः—पुरुषएवेदमिति।

(प्रमाणान्तरेण तत्समर्थनम्)

छन्दोग्येऽपि यत्र नान्यत्पश्यति (छां. ७-२४-१) इत्यादिना भूमस्वरूपमुक्त्वा-आत्मैवेदं सर्वम् (छां. ७-२५-२) इत्यन्तेन तद्विभावमुक्त्वोच्यते। "स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नात्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दः स स्वराड् भवति सर्वेषु लोकेषु कामचारो भवति" (छां. ७-२५-२) इति। एतच्च लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि (ब्र. सू. ३-३-४३) इत्यधिकरणे प्रपञ्चयिष्यते।

(फलाप्तौ स्वरूपयोग्यता)

अथवा, तदेषाऽभ्युक्तेति वाक्येन पूर्ववाक्योक्तब्रह्मनिरूपिकेयमृगित्युच्यते। तत्र साधनफले निरूपिते इत्यृच्यपि ते एव निरूप्येते। तथाहि—आनन्दस्य फलात्मकत्वेन साधनशेषभूते ब्रह्मणि तमनुक्त्वा यो वेदेत्यन्तयर्चा ब्रह्मविदित्येतावतो वाक्यस्य विवरणं क्रियते। एतेन फलाप्तौ स्वरूपयोग्यतासम्पत्तिरुक्ता। तत उक्तरीत्या भगवद्वरणेन भक्तिलाभे गुहायामाविर्भूतं यत्परमं व्योम तस्मिन्निहितः पुरुषोत्तम एवेति। तं निहितमिति तृतीयार्थे द्वितीया। तथा च तत्र निहितेन ब्रह्मणेत्यग्रे पूर्ववत्॥

(अन्तरङ्गाकाशादीनामन्नमयादीनां च स्वरूपम्)

अथ परमफलत्वान्निरवध्यानन्दात्मकत्वमन्तरङ्गेभ्योऽप्यन्तरङ्गत्वं स्वस्मिन् ज्ञापयितुं सर्वस्य सर्वरूपत्वेन सर्वाधिदैविकरूपत्वमपि ज्ञापयितुमाधिभौतिकादिरूपे-

---

प्रमाणान्तरमाहुः—छान्दोग्येऽपीति। तद्विभावम्। ब्रह्मविभावं सर्वात्मभावमिति यावत्। क्वचित् तद्विभावमिति पाठः। तस्य विभावं तद्विभावम्। तस्य सर्वात्मभावस्य विभावम् उद्दीपकविभावम्, अखण्डब्रह्मानरूपमित्यर्थः। उक्तं च भरतसूत्रे "विभावानुभावसञ्चारिभावाद्रस निष्पत्तिरि"ति, एतत्स्वाख्याख्यां सुबोधिन्यां विस्तरेणोक्तमित्यत्रोपरम्यते। अत्रापि वक्ष्यन्तीत्याहुः—एतच्चेति। छान्दोग्यार्थम्। अधिकरणे लिङ्गभूयस्त्वाधिकरणे।

अथ छान्दोग्यार्थैकवाक्यतार्थं प्रथमवर्णकानुसारेण पक्षान्तरमाहुः—अथवेति। ब्रह्मणि तमनुक्त्वेति। ब्रह्मविदाप्नोति परमित्यत्र ब्रह्मविदित्ययं साधनभागः तस्यैव यो वेदेत्यन्तं विवरणं फलस्य साधने प्रवेशो मा भूदित्येतदर्थमानन्दांशनिवेशो न कृत इति केवलमक्षरज्ञानं कारणमित्यर्थः। भक्तेर्द्वारत्वमाहुः—तत इति। उक्तरीत्या ब्रह्मणा सहेति पूर्ववत्। एतावता प्रबन्धेन ऋगर्थो निरूपितः। तावतैव फलसिद्धौ तस्माद्वेत्यादिवाक्यानां प्रयोजनाभाव इत्याशङ्कानिवारणार्थम्।

आकाशादीनां प्राकृतत्वशङ्कानिवारणाय विभूतिरूपत्वं वक्तुं आधिदैविकवादं स्वीकृत्याग्रिमग्रन्थतात्पर्यमाहुः—अथ परमेति। आनन्दात्मकत्वमिति। तत्स्वस्मिन्ज्ञापयितुमित्यनेनान्वितम्। "आनन्दमय आत्मा मे शुद्ध्यन्तां ज्योतिरहमि"त्यनया श्रुत्या जीवानन्दमयस्याप्याधिदैविकानन्दमयत्वं ज्ञापयितुमित्यर्थः। अन्तरङ्गत्वमिति। अन्नापेक्षया प्राणा अन्तरङ्गाः। एवं रीत्या सर्वस्येति प्राणस्य प्राणरूपत्वेनेत्यर्थः। "प्राणस्य प्राणमुतचक्षुषश्चक्षुरि"त्यादि श्रुत्येति शेषः। भगवानिति पदस्य सर्वतुमुन् प्रत्ययान्तेन साकमाविर्भूत इत्यनेनान्वयः। अत एव अविर्भावादेव भवत आकाशस्यैवेति, उत्पत्तिमदाकाशस्येत्यर्थः।

णाविर्भवितुं भगवानाकाशादिरूपेणाविर्भूतोऽत एव भवन आकाशस्यैव कर्तृत्व-मुच्यते। अग्रेऽन्नमयादीनि चत्वारि रूपाणि पूर्वं निरूपितान्युत्तरोत्तरमन्तरङ्गभूतानि। अन्नरसमयशरीरभूतात्प्राणमयस्तस्मान्मनोमयस्तस्माद्विज्ञानमयः।

(मतान्तरेणैतेषां विकारार्थत्वम्)

कश्चित्त्वेतानि रूपाणि विकारात्मकत्वात्प्राकृतान्येवैभ्योऽप्यन्तरङ्गो विमुक्ताविद्यो जीव एवानन्दमय उच्यत इत्याह।

(तत्खण्डनम्)

स प्रतिवक्तव्यः। अग्रिमप्रपाठके भृगुणा–"अधीहि भगवो ब्रह्म" (तै. ३–१) इति पृष्टो वरुणस्तदोत्तमाधिकाराभावात् स्वयं ब्रह्मस्वरूपमनुक्त्वा तपसाधिकारातिशयक्रमेण स्वयमेव ज्ञास्यतीति तदेव साधनं सर्वत्रोपदिष्टवान् "तपसा ब्रह्म विजिज्ञासस्व" (तै. ३–२) इति। ब्रह्मातिरिक्तेन साधनेन न तज्ज्ञातुं शक्यमिति ज्ञापनाय तपो ब्रह्मेति सर्वत्रोक्तवान्, तथा च तपसा साधनेन ब्रह्मत्वेन ज्ञातानि रूपाणि प्राकृतानीति विचारकेण न वक्तुं शक्यमिति, तर्हि पुनर्ब्रह्मविषयकप्रश्नसाधनोपदेशतत्कारणपूर्वातिरिक्तब्रह्मज्ञानानां परम्परा नोपपद्यत इति चेत्, मैवम्; भगवतो हि विभूतिरूपाण्यनन्तानि। तत्र येन रूपेण यत्कार्यं करोति तेन रूपेण समर्थोऽपि तदतिरिक्तं न करोति। तथैव तल्लीला यतः। तथा चान्नमयादिरूपैः क्षुद्राण्येव फलानि ददाति। हीनाधिकारिणां तावतैवाकाङ्क्षानि-

---

भगवदाविर्भावमहिम्ना कार्यस्यापि कारणत्वमिति भावः। अन्तरङ्गेभ्योऽप्यन्तरङ्गत्वमाहुः–अग्र इत्यादि। अन्योन्तर आत्मेति सर्वत्रोच्यते आनन्दमयानन्तरं नोच्यतेऽतः ज्ञायते परमानन्दः स एवेति। अत्र मायावादी शङ्कते—कश्चिदिति। एतन्मतमनूद्यति **विमुक्ताविद्य** इति। ब्रह्मज्ञानेनेति शेषः। **आनन्दमयेति**। मयटो विकारार्थकत्वादिति शेषः।

खण्डयन्ति—**सप्रतिवक्तव्य** इति। सः प्रत्युत्तरदानार्हः करणीयः। प्रत्युत्तरमेवाग्रे वदन्तः मयडर्थसन्देहे श्रुत्यन्तरान्निर्णयमाहुः—**अग्रिमेति**। ब्रह्मप्रपाठकान्तमित्यर्थः। **तदा** प्रश्नानन्तरम्। **अधिकारातिशयेति**। सतीति शेषः। सर्वत्र पञ्चस्वपीत्यर्थः। उपदेशस्वरूपमाहुः—**तपसा ब्रह्मेति**। **तत्** ब्रह्म। ननु मयटो विकारर्थकत्वेन प्राकृतानि स्युरित्यत आहुः—**तथा चेति**। **न वक्तुं शक्यमिति**। तथा सति ब्रह्मत्वेन ज्ञानं न स्यादिति भावः ननु ब्रह्मत्वेन एकवारं ज्ञानं जातं चेत्पुनः ब्रह्मविषयकप्रश्नो नोपपद्यत इत्याशयेन शङ्कते—**तर्हीति**। **पूर्वातिरिक्तेति**। अन्नातिरिक्तप्राणेत्यर्थः। समाधानमाहुः—**मैवमिति**। **न करोतीति**। वह्निकार्यं जलेन न करोतीत्यर्थः। **तथैव तल्लीला यत** इति। यतः कारणात्, भगवल्लीला, तथैवेत्यर्थः। तथा च यथा लौकिकः कश्चित्पुरुषः एवं रीत्याहं करिष्यामीति निश्चयं कृत्वा तदनन्तरं किञ्चित् कार्यं करोति तथा भगवतापि विचारं कृत्वा उच्चनीचभावसृष्टिरूपलीला कृतेति भावः। ननु भगवता कथं विचारितमित्यत आहुः—**तथा चेति**। **अन्नमयादिरूपैरिति**। आदिना प्राणमयादिपरिग्रहः। तथा च ब्रह्मत्वे नान्नोपासकस्यान्नप्राप्तिरूपं क्षुद्रं फलं अन्नमयादिरूपेणाहं ददामीति निश्चयस्य सृष्टेः पूर्वं कृतत्वादिति भावः। ननु कथं भगवतः क्षुद्रफलदत्वमत आहुः—**हीनाधिकारिणामिति**। तथा च सृष्टौ एकरूपकरणेन लीलासम्पत्तिर्न भवतीति कृत्वा उच्चनीचभावोऽपे-

शृत्तिर्भवति । एवं सति यादृशेनाधिकारेणान्नमयस्वरूपज्ञानं भवति तादृशे तस्मिन्सम्पन्ने तज्ज्ञानमपि तथा । एवमेवोत्तरत्रापि ।

( आनन्दमयस्याधिदैविकरूपता )

तथा चाकाशादिरूपमाधिभौतिकस्वरूपमुक्त्वाऽऽध्यात्मिकं तत्पुरुषरूपं वदन्ती पक्षिरूपमाह । यतस्तेनैव रूपेणाधिभौतिके रूप आध्यात्मिकस्य पुरुषस्य प्रवेशः । तदुक्तं वाजसनेयिशाखायाम् "पुरश्चक्रे द्विपदः पुरश्चक्रे चतुष्पदः । पुरः स पक्षी भूत्वा पुरः पुरुष आविशत्" ( बृ. २।५।१८ ) इति । वस्तुतस्तु पुरुष एव परन्तु पुरः सम्बन्धी सन् पक्षी भूत्वा पुरः शरीराण्याविशदित्यर्थः । प्राकृतीषु विविधासु पूर्ष्वप्राकृतस्यैकविधस्य प्रवेशोऽनुचितो यद्यपि, तथापि स्वप्रवेशं विना न किञ्चिद्भावीति गतिप्रतिबन्धकमुल्लङ्घ्यालौकिकया गत्या प्रविशामीति ज्ञापनाय पक्षिभवनम् । स हि तादृशः । अत एव द्विपदश्चतुष्पद इत्युक्तम् । आधिदैविक एक एवेति यः पूर्वस्येति सर्वत्रोक्तम् ।

---

क्षितः । स चाधिकारिसाधनाधीन इति तथैव फलदत्वेन लीलासम्पत्तिरिति भावः । एतदेवाऽऽहुः—एवं सतीति । तारतम्येन फलदत्वे सतीत्यर्थः । यादृशाधिकारेण उपासनारूपाधिकारेण तथा, उक्तफलदमित्यर्थः । युक्तफलदमिति भावः । प्राणमयादिष्वपीत्यर्थः ।

एतावता विभूतीनां ज्ञानं, फलं चोक्त्वा इतः परमानन्दमयस्याधिदैविकत्वं वक्तुं भूमिकामाहुः—तथा चेति । उक्त्वेति । महाप्रपाठके तस्माद्वेत्यारभ्यान्नात्पुरुषः इत्यन्तेनोक्त्वेत्यर्थः । तेषामन्नमयादीनां पुरुषरूपम् । वदतीति । श्रुतिरिति शेषः । "स वा एष पुरुषोऽन्नरसमयः" इति वाक्येन वदतीति श्रुतिरित्यर्थः । पक्षिरूपमिति । "तस्येदमेव शिरः" इत्यादिवाक्यपञ्चकेन पक्षिरूपमाहेत्यर्थः । नन्वाध्यात्मिकपुरुषस्य प्रत्यक्षविषयत्वं नास्ति तस्येदमेवशिर इत्यत्र इदं शब्देन तु प्रत्यक्षविषयीभूतपक्षी बोध्यते, तेन कृत्वा किं ज्ञायते भौतिकशरीरस्यैव पक्षिरूपत्वं श्रुत्यारोप्यतेऽत आहुः—यत इति । तेनैव । रूपेणेति । पक्षिरूपेणैवेत्यर्थः । तथा च प्रवेशार्थं पक्षिरूपं तावताऽऽध्यात्मिकपुरुषापेक्षया भिन्नं न भवतीति भावः । अस्मिन्नर्थे सम्मतिमाहुः—तदुक्तमिति । पुरश्चक्रेति । द्विपदादिभौतिकशरीरं चक्र इत्यर्थः । वस्तुतस्तु पुरुष एवेति, न तु पक्षीत्यर्थः । ननु भौतिकशरीरस्य प्राकृतत्वात् विकाररहितस्य प्रवेशोनुचित इत्याशयेन शङ्कते—प्राकृतीष्विति । विविधासु पूर्षु द्विपदादिशरीरेषु । अय । प्राकृतस्य विकारशून्यस्य । एकविधस्येति । अन्नमयशरीरेऽन्नमयः प्राणमयशरीरे प्राणमयः इत्येकाकारस्येत्यर्थः । समाधानमाहुः—तथापीति । गतिप्रतिबन्धकमिति । भौतिकशरीरसमानाकारं द्विपदत्वं चतुष्पदत्वं यत् सर्वत्र गतौ प्रतिबन्धकं तमुल्लङ्घ्येत्यर्थः । अलौकिकेति । यत्र द्विपदां चतुष्पदामपि गमनं नास्ति, तत्रापि पक्षिणां गमनमस्तीति सूचयितुमलौकिकत्वं गतौ ज्ञेयमित्यर्थः । अत एवाऽऽहुः—स हीति । सः पक्षी, तादृशः द्वारं विनापि सर्वत्र इष्टदेशे प्रवेष्टुं समर्थः । अत एवेति । अलौकिकगत्या प्रवेष्टुमसमर्थत्वादेवाद्विपदत्वादिकं पुरां विशेषणात् प्रतिबन्धकत्वं ज्ञायते इति भावः । नन्वाधिदैविकविचारः कुतो न कृत इत्यत आहुः—आधिदैविक इति । आनन्दमय इत्यर्थः । नन्वेक एव सर्वत्रेति कुतो ज्ञायत इत्यत आहुः—य इति । तथा चानन्दमयेऽयमेव विशेष इति श्रुत्या ज्ञायते इति भावः ।

(आनन्दमयस्यापि विभूतिरूपत्वमिति पूर्वपक्षः)

नन्वानन्दमयेऽप्येवमुक्तेर्नायमपि परमकाष्ठापन्नरूपः, किन्तु, पूर्वोक्तेभ्योऽतिशयितधर्मवान् विभूतिरूप एव। न च शिर आदीनामानन्दरूपत्वेनैवोक्तेरयं परमात्मैवेति वाच्यम्। अन्नमये यथावयवानां तद्रूपत्वं तथानन्दमयेऽपि तेषां तद्रूपत्वात्। अन्यथा तस्यैष एव शारीर आत्मेति न वदेत्। शरीरं हि पूर्वोक्तं तत्सम्बन्धी हि शारीरस्तद्भिन्नः प्रतीयते। तथा च परब्रह्मत्वं स्वान्यात्मवत्त्वं च सर्वश्रुतिविरुद्धम्।

(तत्खण्डनम्)

नन्वेतदतिरिक्तं चेद्ब्रह्म स्यात्तदानन्दमयादन्योन्तर आत्मा ब्रह्मेत्यपि वदेत्। न त्वेवमतोऽयं पर एवेति चेत्, न; आध्यात्मिकरूपाणामेवात्र निरूपणात्। तेषां च पञ्चरूपत्वात्तावतामेव निरूपणम्। अतोऽस्मादन्य एव पर इति प्राप्ते प्रतिवदति-आनन्दमयोऽभ्यासात्। आनन्दमयशब्दवाच्यः पर एव। कुतः? अभ्यासात्। "तस्यैष एव शारीर आत्मा यः पूर्वस्य" (तै. २।५) इत्यन्नमयादिषु सर्वत्रैवात्मत्वेनानन्दमयस्यैव कथनात्।

(तत्र प्रमाणोपन्यासः)

ननु न किञ्चिन्मानमत्र पश्यामः। किञ्चानन्दमयस्यैव सर्वत्रात्मत्वेन कथन आनन्दमयेऽपि तस्यैष एवेत्यादि न वदेदयमेव पूर्वस्यात्मेति वदेदतो नानन्दमयः पर इति चेत्, उच्यते-न हीश्वरादन्यः सर्वेषामेक आत्मा भवितुमर्हति। तस्यानन्दरूपत्वं तु-"एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति" (बृ. ४।३।३२) इति। "रसो वै सः। रसं ह्येवायं लब्ध्वानन्दी भवति। को ह्येवान्यात्कः प्राण्यात्।

---

अथैवं विषयवाक्यार्थकथनानन्तरं अस्मिन्नधिकरणे पूर्वपक्षमाहुः—**नन्विति**। **एवमुक्तेरिति**। यः पूर्वस्येत्युक्तेरित्यर्थः। **आनन्दमयेऽपि**। विभूतिरूपे आनन्दमयोऽपि। **अन्यथा**। विभूतिरूपत्वास्वीकारे। **तद्भिन्नः**। विभूतिरूपापेक्षया भिन्नः। **श्रुतिविरुद्धमिति**। आनन्दमयकोशे ब्रह्मत्वं स्वीक्रियते चेत् तदन्ये(?)आत्मत्वं न स्वीकर्तव्यं तच्च श्रुतौ स्वीकृतमिति विरुद्धमित्यर्थः।

सिद्धान्ताशयमनूद्य खण्डयन्ति **नन्वित्यादिना अन्य एव पर** इत्यन्तेन। तथा च पञ्चसु गणनया परब्रह्मत्वं न स्वीकर्तव्यमिति भावः। सूत्रकारः समाधत्ते—**आनन्दमयोऽभ्यासात्**। **तस्य** प्राणमयस्य। **एष एव** आनन्दमय एव। **पूर्वस्य**। अन्नमयस्य। एतत्तत्त्वं गुणोपसंहारपादे विवेचयिष्यते।

शङ्कते—**नन्विति**। **अत्रेति**। तस्यैष एवेति वाक्ये आत्मपदेनानन्दमय एव धर्तव्य इत्यत्र बाधकमप्याहुः-**किञ्चेति**। समाधानमाहुः-**उच्यत इति**। पूर्वपक्षिणा न किञ्चिन्मानमित्युक्तं तद्दूषयन्ति **न हीत्यादि मन्तव्यमित्यन्तेन**। अयमाशयः, श्रुतौ प्राणमय एवोक्तं यः पूर्वस्येति, तत्र अन्नमये यः आत्मा वर्तते स एष सर्वत्र मन्तव्य इति समायातम्। ननु अन्नमये अन्तरात्मा ईश्वर एवेति कथं बोद्धव्यमिति चेत्, न; एतत्पूर्ववाक्यैस्तावत् परशब्दविवरणं कृत्वा 'तस्माद्वा एतस्मादि'त्यादिवाक्येन परस्यैव सृष्टिकर्तृत्वमुक्तम्, अनन्तरं चान्नमयनिरूपणानन्तरं प्राणमयनिरूपणावसरे यः पूर्वस्येत्युक्तम्,

यदेष आकाश आनन्दो न स्यात्। एष ह्येवानन्दयाति" (तै. २।७) इत्यादिश्रुतिभिर्निर्णीयते। एवं सति तदेकवाक्यतायै प्रकृतोऽप्यानन्दमयशब्दस्तद्वाच्य एवेति मन्तव्यम्। अन्यथाऽऽनन्दमयादन्योन्तर आत्मेत्येव वदेत्।

( भार्गवीविद्यायाः प्रमाणत्वेनोपन्यासः )

ननूक्तमाध्यात्मिकानामेवात्र निरूपणादित्यादीति चेत्, न; उक्तरीत्याधिदैविकस्यान्ते निरूपणात्। अत एव भार्गव्यां विद्यायामपि भृगोरन्नमयादिज्ञानानन्तरमपि पुनर्ब्रह्मजिज्ञासोक्ता। न त्वानन्दमयज्ञाने। नहि भृगोराध्यात्मिकज्ञानार्थं प्रवृत्तिः किन्तु ब्रह्मज्ञानार्थमेव। "अधीहि भगवो ब्रह्म" (तै. ३।१) इति प्रश्नवचनात्।

( साधकान्तरम् )

किञ्च, "ब्रह्मविदाप्नोति परम्" (तै. २।१) इत्युपक्रमादन्ते ज्ञेयानन्दगणनामुक्त्वा—"स यश्चायं पुरुषे यश्चासावादित्ये स एकः" (तै. २।८) इति वाक्यैर्ब्रह्मविदि पुरुष आदित्ये च तदेवाक्षरं ब्रह्म प्रतिष्ठितमिति तदानन्दोऽपि तथैवेति तयोरानन्दयोरैक्यम्। एवंरूपं ब्रह्मेति यो वेद तस्य क्रमेणान्नमयादिप्राप्तिमुक्त्वा अन्ते वदन्ति—"एतमानन्दमयमात्मानमुपसङ्क्रामति" (तै. २।८) इति। एवं सत्युपक्रमे फलप्राप्तेः फलत्वेनोक्तेरुपसंहारेऽपि तथैव भवितव्यत्वादानन्दमयप्राप्तेरेवान्ते फलत्वेनोक्तेस्तदुत्तरमन्यस्यानुक्तेरानन्दमय एव परः।

( पुरुषोत्तमानुभवः सङ्क्रमणशब्दार्थः )

ननूपसङ्क्रमणं ह्यतिक्रमणमतो न तथेति चेत्, । हन्तैवमतिक्रान्तशब्दार्थो

---

तेन कृत्वा किं ज्ञायते जगत्कर्ता पर ईश्वर एव पूर्वोपक्रान्तः अन्नमयस्यान्तरात्मेति बोद्धव्यमिति। ननु भवत्वन्तरात्मा एकः सर्वेषां स चाऽऽनन्दमय इत्यत्र किं प्रमाणमत आहुः—तस्येति। तद्वाच्येवेति। परब्रह्मवाचकत्वास्वीकारे।

अत्र शङ्कते—नन्विति। समाधानमाहुः—उक्तरीत्येति। तथा च सर्वान्तरत्वमाधिदैविकस्यैवेति भावः। अत्रोपष्टम्भकमाहुः—अत एवेति। भार्गव्यामिति। अग्रिमाध्याये 'भृगुर्वै वारुणिरि'त्यत्र।

ननु आनन्दो ब्रह्मेति व्यजनादित्यत्र भृगोरानन्दमयवाक्यश्रवणानन्तरमानन्दरूपब्रह्मज्ञानं जातमिति कृत्वा पुनर्जिज्ञासा न कृता। अत्र तु मयट्प्रत्ययान्तं वाक्यं तद्बोध्यम्। आनन्दमयं तु ब्रह्म न भवति, तस्य विभूतिरूपत्वादतः ब्रह्मप्रपाठके साधकान्तरमाहुः—किञ्चेत्यादि पर इत्यन्तेन। ज्ञेयानन्देति। "ते ये शतं प्रजापतेरानन्दाः, स एको ब्रह्मण आनन्द" इति वाक्येन गणनामुक्त्वेत्यर्थः। यो वेदेति। "स एकः, स य एवं वित्" इति वाक्याद्वेदेत्यर्थः। उपसङ्क्रामतीति। "अस्माल्लोकात्प्रेत्य, एतमन्नमि"त्यारभ्य एतमानन्दमयेत्यादिना वाक्योक्तमुपसङ्क्रमणं विहितमित्यर्थः। उपक्रमे। "ब्रह्मणा विपश्चिते"ति वाक्येनेति शेषः। तदुत्तरमिति। आनन्दमयवाक्योत्तरमित्यर्थः।

शङ्कते—नन्विति। आनन्दमयस्यातिक्रमणेन तस्य फलरूपत्वं नास्तीति पूर्वपक्ष्याशयः। समाधानमाहुः—हन्तैवमिति। हन्त इति खेदे, वास्तविको यः शब्दस्यार्थः सः त्वदीयबुद्ध्या अतिक्रान्तस्त्यक्तः। एतादृशी अतिक्रान्तशब्दार्था त्वन्मतिर्भातीत्यर्थः। तथा च शब्दार्थपरिज्ञानमेव तव नास्तीति खेद इति

त्वन्मतिर्भाति। यतः सङ्क्रमणशब्दः प्राप्त्यर्थः सर्वत्र श्रूयते। अत एव रवेर्मकरादिराशिप्राप्तौ तत्तत्सङ्क्रमणमित्युच्यते। न चेयं न परममुक्तिः। अस्माल्लोकात्प्रेत्येति पूर्वमुक्तेः। अत एव पुरुषोत्तमानन्दानुभवे सत्यनुभवैकगम्योऽयमानन्दो न मनोवाग्विषय इति ज्ञात्वा लोकवेदकालादिभ्योऽपि न बिभेतीति यतो वाच इति श्लोकेनोक्तवती। अन्यथा मनसोऽप्यगम्यत्वमुक्त्वा विद्वानिति कथं वदेत्।

( भगवद्वरणेनालौकिकदेहप्राप्तिः )

एवं सति "सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिता" (तै. २-१) इत्यस्यामृचि यत्फलमुक्तं तदेवान्ते विवृतमिति ज्ञायते। अन्यथा "अस्माल्लोकात्प्रेत्य" (तै. २।८) इत्युक्तत्वाद् देहाभावेन भयानुपस्थित्या तन्निषेधासम्भवः। कामभोगासम्भवश्च। अत एव सामानाधिकरण्यमनुक्त्वा आनन्दं ब्रह्मणं इत्युक्तम्। एतेन लौकिकं पूर्वदेहं त्यक्त्वा साक्षाद्भगवद्भजनोपयोगिनं भगवद्विभूत्यात्मकं सङ्घातं प्राप्नोत्यादौ। तथाहि-देहेन्द्रियप्राणान्तःकरणजीवात्मको हि सङ्घातः। तत्र स्थूलं शरीरमाद्यविभूतिरूपम्। द्वितीयं स्पष्टम्। तृतीयं सर्वेन्द्रियसम्बन्धित्वेनेन्द्रियरूपत्वेन चान्तःकरणात्मकत्वेन चेन्द्रियान्तःकरणरूपम्। तुरीयं जीवतत्त्वात्मकम्। यत्र गुहायां भगवद्वरणेन परव्योमाविर्भावस्ततः पूर्णानन्दात्मकं पुरुषो-

---

भावः। कथमिदं ज्ञायते त्वयेत्यत आहुः—यत इति। "कार्मुकं तु परित्यज्य झषं सङ्क्रमते रविरि"त्यादिषु श्रूयत इत्यर्थः। ननु यदि सङ्क्रमणशब्दः प्राप्त्यर्थकस्तदा भेद आगतः तथा च जीवन्मुक्तिरित्याशयेन शङ्कते—न चेति। उत्तरयन्ति—अस्मादिति। अत्रोपष्टम्भकमाहुः—अत एवेति। उक्तवतीति। श्रुतिरिति शेषः। 'स यश्चायं पुरुषे' इत्यारभ्य न बिभेति कुतश्चनेत्यन्तेषु उक्तवतीत्यर्थः। अन्यथा अनुभवैकगम्यत्वास्वीकारे।

सिद्धमाहुः—एवं सतीति। आनन्दमयरूपपुरुषोत्तमप्राप्तेरेव परममुक्तित्वे सति। विवृतं "यतो वाच"इत्यादि श्रुत्याविवृतम्। अत्रायमाशयः—ज्ञानमार्गे "ब्रह्मविद्ब्रह्मैव भवती"ति श्रुत्या ब्रह्मज्ञानानन्तरं ब्रह्माभेदः। सैव परममुक्तिः। भक्तिमार्गे तु न। भक्त्या वरणे ब्रह्माभेदो नाम स्वरूपयोग्यता सम्पत्तिः ब्रह्मतादात्म्यं तेन कृत्वा फलानुभव एव परममुक्तिरिति। अन्यथा। ज्ञानमार्गे या मुक्तिस्तस्याः, फलोपभोगसाधकालौकिकशरीरे योग्यतासम्पादकत्वाभावे। साधकान्तरमप्याहुः—अत एवेति। सामानाधिकरण्यम्। अभेदम्। विवरणे सिद्धमाहुः—एतेनेत्यादि अवगम्यत इत्यन्तेन। एतेन "सोऽश्नुते" इत्युपक्रमोपसंहारयोरेकार्थत्वेन, आदौ भक्तिदार्ढ्यदशायां फलानुभवात्पूर्वम्। सङ्घातप्राप्तिमेवोपपादयन्ति—तथा हीत्यादिना। अन्तःकरणेन चतुर्णां मनोबुद्धिचित्ताहङ्काराणां सङ्ग्रहः। आद्यविभूतिरूपमिति। अन्नमयमित्यर्थः। स्पष्टं प्राणमयम्। तृतीयम्। मनोमयम्। तस्य सर्वेन्द्रियसम्बद्धत्वादिहेतूनां सत्त्वादिन्द्रियान्तःकरणरूपत्वम्। तुरीयं विज्ञानमयम्। जीवतत्त्वात्मकमिति। जीवस्य यत् तत्त्वं ब्रह्मणा सह कामोपभोगे योग्यत्वं तत्स्वरूपत्वम्। अत्र गमकमाहुः—यत्रेति। यत्र, विज्ञानमयविभूतौ। जीवे इति शेषः। तथा च जीवः तद्वान् भवतीत्यग्रत-

त्तमस्वरूपं फलरूपं प्राप्य उक्तगेर्थरीत्या तेन सह सर्वकामाशनमेव मनोवाग्विषयानन्दवेदनं तद्वान् भवतीति वाक्यैकवाक्यतयाऽवगम्यते ।

( वाक्यैकवाक्यताप्रसाधनम् )

अथेदं विचार्यते । "पुरश्चक्रे द्विपद" इति श्रुतौ वस्तुतस्तु पुरुष एव, परन्तु पुरः सम्बन्धी सन् पक्षी भूत्वा पुर आविशदिति निरूपितम् । प्रकृते चान्नमयादयस्तथैवोक्ताः ।

( तत्र शङ्का )

एवं सत्येकस्यां पुरि बहूनां तेषां प्रवेशो न चकुमुचितः । प्रयोजनाभावादित एकैकस्यां पुरि तथा वाच्यः । तत्र कीदृश्यां तस्यां कस्य प्रवेश इति विचार्यमाणे प्राकृतत्वब्रह्मत्वयोरविशेषाद्विनिगमकाभावात्सर्वेषां सर्वत्र प्रवेशोऽप्रवेशो वा भवेदिति चेत् ।

( तत्र समाधिः )

अत्रेदं प्रतिभाति । अस्माल्लोकात्प्रेत्येति वाक्य इदंशब्दप्रयोगात्प्राकृतगुणमयं प्रपञ्चमतिक्रम्य गुणातीतं प्रपञ्चं साक्षाल्लीलोपयोगिनं प्राप्नोतीत्यवगम्यते। तत्प्राप्त्यैव भगवद्भावे सम्पन्ने पूर्वं भगवद्विरहभावेनातितीव्रत्वेन सर्वोपमर्दिना

---

नेनान्वयः । **सर्वकामाशनमिति** । अस्याभेदेनानन्दपदेनान्वयः । तथाचाशनं भोगः स च साक्षात्कारः वेदनरूप इति भावः । **वाक्यैकवाक्यतयेति** । उपक्रमे विपश्चिद्ब्रह्मणा सहाशनम् । उपसंहारे आनन्दमयोपसङ्क्रमणं एतद्द्वयबोधकवाक्यैकवाक्यतयेत्यर्थः ।

सिंहावलोकनन्यायेन पूर्वोक्तवाजसनेयिशाखोक्तश्रुतिं प्रकृतश्रुत्यैकवाक्यत्वेन व्याख्यातुमाहुः—**अथेति**। इदं प्रतिज्ञावाक्यम् उक्त्वा इत्यन्तेन । प्रकृते, ब्रह्मविल्पाठके "तस्येदमेव शिरः अयं दक्षिणः पक्षः" इत्यादिवाक्येषु । तथैव, पक्षिरूपेणैव । अत्र शङ्कते—**एवं सतीति** । इति चेदित्यन्तम् । **एवं सति**, अन्नमयादिषु, तादृशानामेव विभूतिरूपाणां प्रवेशे सति । **एकस्यामिति** । पञ्चानां मध्ये एकस्याम् । **इत** इति । इतः परमित्यर्थः । तथा एकैकस्य प्रवेशः । **सर्वत्रेति** । यद्यपि अन्नमयेऽन्नमयस्येत्यादि यथासङ्ख्येन पञ्चानां पञ्चसु प्रवेशः प्राप्नोति तत्तत्पक्षिरूपस्य विनिगमकस्य सत्त्वात्, तथापि, प्रवेशप्रयोजकतावच्छेदकीभूतं ब्रह्मत्वं पञ्चस्वप्यविशिष्टमिति तेन रूपेण प्रवेशः सर्वेषां पञ्चानामेकस्मिन्नन्नमये, तथा प्राणमये पञ्चानां, एवं रीत्या सर्वत्र सर्वेषां प्रवेश इति भावः । नन्वेकस्मिन्नन्नमये तदाकारपक्षिण एव प्रवेशः स्वीक्रियते अन्येषां त्वप्रवेश इत्यत आहुः—**अप्रवेशो वेति** । तथा च पक्षिरूपस्य अन्नमयस्य ब्रह्मत्वेनैव प्रवेशः, तच्च ब्रह्मत्वं सर्वेषामिति केवलान्नमयप्रवेशे बीजाभावात्सर्वेषामप्रवेश इत्यर्थः ।

समाधानमाहुः—**अत्रेदमिति** । इदंशब्द इति । प्रत्यक्षविषयेर्थे एवेदंशब्दस्य प्रयोगादित्यर्थः । **प्राकृतगुणमयं प्रपञ्चमिति** । शरीरमित्यर्थः । **गुणातीतमिति** । गुणातीतप्रपञ्चो वर्तते तत्प्राप्तिश्च भक्तानामक्षरब्रह्मज्ञानिनां चेति फलप्रकरणे स्फुटीभविष्यति । **तत्प्राप्त्यैवेति** । गुणातीतशरीरप्राप्त्यैवेत्यर्थः । **भगवद्भावेति** । तत इति शेषः । भगवति भावः रत्याख्यः स्थायिभावः तस्मिन्सम्पन्ने सति, अत्युत्कटे जाते सतीत्यर्थः । **पूर्वं भगवद्विरहभावेनेति** । गुणातीतप्रपञ्चप्राप्तिपूर्वं यः भगवद्विरहभावः

शरीरेन्द्रियप्राणान्तःकरणानि नष्टान्येव स्युर्यदि तत्तद्रूपं ब्रह्म तेषु तेषु न प्रविष्टं स्यात्। जीवस्य च ब्रह्मण्येव लयेन लीलारसानुभवेन नाशः एव स्यात्सः। तथाच तत्तद्रूपं ब्रह्म तेषु तेषु स्थितमिति न तेषां नाशः। जीवे त्वानन्दमयः पुरुषोत्तमः प्रविशतीति रसात्मकत्वादानन्दात्मकमेव विरहभावरसाब्धिमनुभूय पश्चात्प्रादुर्भूतप्रभुस्वरूपं प्राप्य न बिभेति कुतश्चनेति वाक्येन लोकात्तदभावमुक्त्वा–"एतं ह वाव न तपति किमहं साधु नाकरवं किमहं पापमकरवम्" ( तै. २।९ ) इति वाक्यैर्वेदाद्भयाभाव उच्यते।

( मुक्तानामलौकिकं शरीरम् )

शरीरप्राणमनोन्तःकरणजीवात्मनां शरीरत्वं वाजसनेयिशाखायामन्तर्यामिब्राह्मणे पठ्यते। यस्य सर्वाणि भूतानि शरीरं, यस्य प्राणः शरीरं, यस्य वाक् शरीरं, यस्य चक्षुः शरीरं, यस्य श्रोत्रं शरीरं, यस्य मनः शरीरं, यस्य त्वक् शरीरम् ( बृ. ३।७ ) इत्यादेरन्ते—यस्यात्मा शरीरम् ( बृ. ३।७ ) इति।

---

विप्रलम्भशृङ्गारस्थायिभावः। स च गुणातीतप्रपञ्चभास्यनन्तरमित्यर्थः। तद्भास्यनन्तरमत्युत्कटतीव्रत्वेन सर्वोपमर्दी जातः तेन नष्टान्येव स्युरित्यर्थः। तत्तद्रूपमिति। अन्नमये पक्षिरूपमन्नमयं ब्रह्मेत्यर्थः। एवमग्रेऽपि, जीवस्य विद्यमानत्वात्स एव सर्वं करिष्यतीत्यत आहुः—जीवस्येति। यथा ज्ञानिनो ब्रह्मणि लयः, एवं भक्तस्यापि ब्रह्मणि लय इत्यर्थः। लीलेति। वरणाभावेति शेषः। नाश एव स्यात्स इति। सः लीलारसानुभवरूपो नाशः जीवस्य नाश एव स्यादित्यर्थः। यद्यपि जीवस्य नित्यत्वान्नाशो न भवति, तथापि "सविशेषणे हि विधिनिषेधौ विशेषणमुपसङ्क्रामतः सति विशेष्ये बाधे" इति न्यायेनास्य नाश इत्युक्तम्। यथा स्वर्गो (र्गत् ?)ध्वस्त इत्यत्र स्वर्गविशिष्टे पुरुषे जीवे नाशप्रतियोगित्वं बाधितमिति तत्र विशेषणे स्वर्गे ध्वंसप्रतियोगित्वतात्पर्येणाभियुक्तानां प्रयोगः तथात्रापि लीलारसानुभवनाशतात्पर्येण जीवस्य नाश इत्युक्तम्। न च लीलारसानुभवस्य भावित्वात् पूर्वं तस्य नाशो न सम्भवतीति वाच्यम्। लीलारसानुभवयोग्यता नाशाभिप्रायेणेयमुक्तिः। अथवा लीलारसाननुभवो नाम तादृशानुभवाभावः स च संसर्गाभावत्रितयमध्ये किं रूपो वा भवतु परन्तु जीवस्य सः नाशतुल्य इत्यौपचारिकोऽयं जीवस्य नाश इति प्रयोग इति सर्वमनवद्यम्। नन्वानन्दमयस्य विभूतीनां तत्तच्छरीरे नाशाभावार्थं प्रवेशोऽस्तु नाम परन्तु, जीवस्य तु नित्यत्वात्तत्र प्रवेशोऽनुचित इत्यत आहुः—जीवे त्विति। तुकारेण विभूतेः प्रवेशो व्यावर्त्यते। इतीति। इति हेतोरित्यर्थः। रसाब्धिमिति। संयोगो विप्रलम्भश्चेति शृङ्गारस्य द्विविधत्वादिति भावः। प्रादुर्भूतम्। गुहायामिति शेषः। क्वचित्पुस्तके प्रादुर्भूतप्रभुस्वरूपमित्यपपाठः। कुतः गुहायामित्यत्र साकाङ्क्षस्य असमर्थस्य प्रादुर्भूतमित्यस्य समासाघटकत्वात्। इतः परं मुक्तावस्थायां निर्भयत्वं प्रतिपाद्यते। तत्रादौ लोकाद्भयाभावमाहुः—न बिभेतीति। वेदात्। तमाहुः—एतमिति। हवावेत्यव्ययम्। मया पुण्यं न कृतं पापं च कृतमिति स्मरणेन सन्तापस्तस्य न जायते इति भावः।

ननु मुक्तानां शरीरसम्बन्धांश एव संशयः कदाचित् ब्रह्मशरीरत्वं वक्तव्यम्, अत्र तु मानाभाव इत्यतः प्रमाणमाहुः—शरीरेति। शरीरत्वमिति। ब्रह्मशरीरत्वमित्यर्थः श्रुतिमाहुः—यस्येति। ब्रह्मण इत्यर्थः। इत्यादेरिति। वाक्यस्येति शेषः। ननु तादृशशरीराणां भौतिकत्वं वक्तव्यं वा न वेत्याशङ्क्या-

अत्र पूर्वोक्तनिर्गुणदेवानां भगवच्चरणरेणुजत्वेन भूतिरूपत्वाद् ब्रह्मशरीरत्वम्। तत्रान्नमयतत्प्रवेशेन तत्स्थितिः, प्राणेष्वपि तथा। ज्ञानेन्द्रियेषु विज्ञानमयप्रवेशात्तथा। मनसि मनोमयप्रवेशात्तथात्वम्। जीवे त्वानन्दमयः प्रविशतीति तथात्वम्। अतो युक्तं पक्षित्वकथनम्॥

( स्पर्शमणिन्यायेनाश्रयाणां तत्तदात्मकता ).

आनन्दमयस्य स्वरूपं विशेषतो वक्तुमशक्यमिति यः पूर्वस्येति सर्वत्रोक्तम्। शरीरप्रवेशप्रयोजनकपक्षिरूपित्वं पञ्चस्वपि साधारणमिति तेषु तथा वदन्त्यानन्दमयेऽपि तथैवोक्तवती श्रुतिरिति ज्ञेयम्। एवं सति स्पर्शमणिसम्बन्धेन रजतादेर्हेमत्वमिवोक्तप्रकारकप्रवेशादाश्रयाणामपि तत्तदात्मकत्वमित्युच्यते।

( स्वाभिमतपरोक्षवादेन श्रुतितात्पर्यविवरणम् )

वस्तुतस्तु परोक्षवादोऽयमिति ज्ञायते। तथाहि "ब्रह्मविदाप्नोति परमि"ति वा-

---

माहुः—**अत्रेति**। अत्र मुक्तशरीरविषये। **भगवदिति**। इदं च "या वै लसच्छ्रीतुलसीविमिश्रपादाब्जरेण्वभ्यधिकाम्बुनेत्री"ति प्रथमस्कन्धसुबोधिन्यां प्रसिद्धम्। **भूतरूपत्वादिति**। यथा प्राकृतशरीरस्य पार्थिवरेणुत्वेन भूतरूपत्वं तथा भगवच्चरणरेणुजत्वेन तस्याप्यलौकिकभूतरूपत्वादित्यर्थः। अत एवाऽऽहुः—**ब्रह्मशरीरत्वमिति**। **तत्र** शरीरे, **अन्नमयतत्प्रवेशेनेति**। अन्नमयं यत् तत् ब्रह्म तस्य प्रवेशेनेत्यर्थः। **ज्ञानेन्द्रियेष्विति**। यद्यपि मनोमयत्वोक्त्यनन्तरं विज्ञानमयत्वोक्तिस्तस्य पुनः मनोमयात्पूर्वं ज्ञानेन्द्रियेषु कथं स्थितिरुक्ता तथापि जीवस्य वरणलभ्यं सर्वसामर्थ्यमिति क्रमप्राप्तः जीवे विज्ञानप्रवेशो व्यर्थ इति मनसः पूर्वं ज्ञानेन्द्रियाणां सत्त्वात् तत्र पूर्वं विज्ञानमयप्रवेश उक्त इति भावः। ननु तर्हि जीवे कस्य प्रवेश इत्यत आहुः—**जीवे इति**। **तथात्वमिति**। लीलानुभवयोग्यत्वम्। **अत इति**। प्रवेशकरणाद्धेतोरित्यर्थः। **युक्तमिति**। आनन्दमयस्य पक्षित्वकथनं युक्तमित्यर्थः।

नन्वानन्दमयस्य पक्षित्वकथनेन तस्य स्वरूपकीर्तनं जातमित्यत आहुः—**आनन्दमयस्येति**। नन्वेवं चेत्तर्हि तस्य पक्षित्वं किमर्थं श्रुत्या उक्तमित्यत आहुः—**शरीरेति**। ननु यः पूर्वस्येत्यनेनानन्दमयस्य सर्वत्र प्रवेशोऽस्तीति ज्ञायते तावता तत्तच्छरीराणां ब्रह्मशरीरत्वं कथमित्याशङ्कायां दृष्टान्तमाहुः—**एवं सतीति**। **आश्रयाणामिति**। अन्नमयादीनामित्यर्थः। **तत्तदात्मकत्वमिति**। अन्नमयादिब्रह्मशरीरत्वमित्यर्थः। एवं प्राणमयादिष्वपि बोध्यम्। यथा यादृशाकारं रजतपात्रं तत्र स्पर्शमणिसम्बन्धे तादृशाकारमेव सुवर्णपात्रं भवति तथान्नमयादिशरीरमपि ब्रह्मशरीरं भवत्यानन्दमयप्रवेशेनेति भावः।

एतावता प्रबन्धेनान्नमयादिश्रुत्यर्थः सामान्येन वर्णितः। इतः परं श्रीमत्प्रभुचरणाः स्वाभिमतं परोक्षवादं स्वीकृत्य श्रुतितात्पर्यं वर्णयन्ति—**वस्तुतस्त्विति**। **परोक्षवादोऽयमिति**। यत्रान्यथास्थितोऽर्थः सङ्गोपयितुमन्यथा कृत्वोच्यते स परोक्षवादः। अत्र प्रमाणं "परोक्षप्रिया इव हि देवाः, आत्मन्नात्मन्नित्यामन्त्रयते" इति श्रुतिः। "परोक्षवादो वेदोऽयं परोक्षं च मम प्रियमि"त्येकादशस्कन्धीयं वाक्यमपि। तमेवाऽऽहुः—**तथाहीत्यादिना प्रतिष्ठारूपत्वं चेत्यन्तेन**।

---

१ भूतिशब्दो विभूतिपरः। रश्मिसंशोधकैर्भूतरूपत्वादिति पाठः स्वीकृतः। तत्र तेषां प्रमाद एव। सम्प्रदायावबोधाभावोऽपि सुस्पष्ट एव। मक्षिकास्थानेमक्षिकास्थापनमेव तदित्यपि। यदि तेषां मायाबोधोऽपि स्यात्, तर्हि प्रकारस्थं "एवं सर्वेषां प्रवेशं समर्थयित्वा लीलौपयिकप्रवेशार्थमप्राकृतविभूतिरूपाणां स्वरूपमाहुः अत्रेत्यादि" इति वाक्यं दृष्ट्वा भूतरूपत्वादित्यत्र विभूतिरूपत्वात्, भूतिरूपत्वादिति वा पाठः स्वीकृतो भवेदेव।

ख्येन ब्रह्मविदः परप्राप्तिं सामान्यत उक्त्वा तत्तात्पर्यं सत्यं ज्ञानमित्यृचोक्तम्। तत्र सर्वत्रात्मभाववान् भक्तो भगवता सह तत्तत्स्वरूपात्मकान् कामान् भुङ्क्त इत्युक्तव्याख्यानेन तदर्थोऽवधार्यते, उक्तभक्तस्य सदैव विरहभावे तु विशेषतः प्रियस्वरूपातिरिक्तास्फूर्त्याऽन्नप्राणादिरूपः स एवेति ज्ञापनाय तत्तद्रूपत्वमुच्यते। तेन परमप्रेमवत्त्वं सिध्यति।

( भक्तज्ञानस्य विज्ञानमयभगवद्रूपत्वम् )

ततो भगवदाविर्भावे सत्यपि पूर्वभावस्यातितीव्रत्वेन ज्ञानादिसर्वतिरोधानेनाग्रिमरसानुभवो न भविष्यतीति स्वयमेव तदनुभवात्मको भवतीति ज्ञापनाय विज्ञानरूपत्वमुच्यते।

( रसानुभवे प्रियस्य प्रधानाङ्गता )

तदाऽनुभवविषयः प्रकट आनन्दमय इति तत्स्वरूपमुच्यते। तत्र निरुपधिप्रीतिरेव मुख्या नान्यदिति ज्ञापनाय प्रियस्य प्रधानाङ्गत्वमुच्यते।

---

**अवधार्यत** इति। ऋगर्थः ज्ञायते इत्यर्थः। अयं भावः—वरणेतरसाधनाऽप्राप्यत्वं "यमेवैष वृणुते" इत्यादिश्रुतिसिद्धम्। तथा च श्रवणादिसाधनेन कृत्वाऽक्षरब्रह्मज्ञानानन्तरं परप्राप्तिर्यस्योच्यते तत्र प्रथमतः ब्रह्मज्ञानानन्तरं वरणं ततो भक्तिभावेन विरहे सति सर्वात्मभावो जायते गुहायामाविर्भाव इति। यस्य तु पूर्वमेव वरणेन भक्तिभावः तदनन्तरं विरहेण सर्वात्मभावे जाते गुहायामक्षरब्रह्मज्ञानमाविर्भवतीत्युच्यते। एवं च विरहे सति सर्वात्मभावः सम्पद्यत इति। **उक्तभक्तस्य**। सर्वात्मभाववतो भक्तस्य। **सदैवेति**। तथा च यावत्पर्यन्तमानन्दमयप्राकट्यं नास्ति तावत्पर्यन्तमतितीव्रत्वं विरहस्येति भावः। तीव्रत्वमेवाऽऽहुः—**प्रियस्वरूपेति**। **प्राणादिरूप** इति। आदिशब्देन मनसः परिग्रहः। **तत्तद्रूपत्वमिति**। विरहिभक्तस्यान्नादिषु भगवद्रूपत्वस्फूर्त्या अन्नमयादिरूपत्वं भगवतः श्रुत्या उच्यते न स्वाधिदैविकस्य प्रवेश इत्यर्थः। नन्वेतादृश्श्रुतितात्पर्यकथनेन किं सिद्ध्यतीत्यत आहुः—**तेनेति**। तथा च लोके यस्य यत्र परमं प्रेम तस्य पुनः तदेव भासते। अत्र तु भगवद्रूपत्वं सर्वस्य वास्तविकमेव परन्तु विशेषरूपेणेतरेषां स्फूर्तिः भक्तानां तु तद्रूपभानमेव, अत एव स्तम्भे प्रह्लाददृष्ट्यैव नृसिंहाविर्भावः तदनन्तरं भक्तस्य परमरूपसिद्धौ सत्यां साक्षात्कार इति भावः। नन्वेवं सति भक्तज्ञानस्य विज्ञानमयभगवद्रूपत्वं किमर्थमुक्तमित्यत आहुः—**तत** इति। ततः प्रेमसिद्ध्यनन्तरम्। **आविर्भावेति**। तथा च परमप्रेमोत्तरक्षण एवाविर्भाव इति भावः। **पूर्वभावस्य** विरहभावस्य। **तिरोधानेनेति**। न तु नाश इत्यर्थः। **तदनुभवात्मकेति**। भक्तस्येति शेषः। अग्रिमरसानुभवात्मक इत्यर्थः। **विज्ञानरूपत्वमिति**। न तु विज्ञानमयप्रवेशः श्रुत्या उच्यत इत्यर्थः।

**तदा**। तस्मिन् काले एव। **प्रकट इति**। सर्वदा साक्षात्कारविषय इत्यर्थः। **तत्स्वरूपमिति**। ब्रह्मस्वरूपमित्यर्थः। एतेन परमते आनन्दमयस्य विभूतिरूपत्वमुच्यते, न तु ब्रह्मरूपत्वमित्यस्वरसो ज्ञेयः। ननु विभूतिरूपस्य पक्षित्वेन प्रवेशकर्तृत्वं न स्वीक्रियते चेत् "पुरश्चक्रे द्विपद" इत्यादिश्रुतौ प्रकृतश्रुतावपि विभूतीनां पक्षिरूपत्वं किमर्थमुक्तमित्याशङ्कायां श्रुत्या कल्पनयोपदिश्यत इत्याहुः—**तत्रेति**। **तत्र**। आनन्दमयप्राकट्ये। **प्रियस्य**। प्रियस्वरूपस्य। **प्रधानाङ्गत्वम्**। शिरस्त्वम्। **उच्यते**। कल्पनयेति शेषः। एव मग्रेऽपि, पक्षिरूपार्थविषये सर्वत्र कल्पना बोध्या।

( मोद-प्रमोद-पदार्थनिरूपणम् )

तदा प्रियेक्षणादिभिरानन्दात्मक एव विविधरसभावसन्दोह उत्पद्यते यः, स दक्षिणः पक्ष उच्यते। ततः स्पर्शादिभिः पूर्वविलक्षणः प्रकृष्टानन्दसन्दोहो यः, स उत्तरः पक्ष उच्यते। नानाविधपक्षसमूहात्मकत्वात्तयोः पक्षयोर्युक्तं तथात्वम्।

( स्थायिभावनिरूपणपूर्वकं रसभावः )

स्थायिभावस्यैकरूपत्वादात्मत्वमुच्यते यतस्तत एव विभावादिभिर्विविधभावोत्पत्तिः।

( ब्रह्मवित्त्वदशायामनुभूतस्य गणितानन्दस्य पुरुषोत्तमाधिष्ठानरूपताप्रतिपादनं-पुच्छपदार्थनिरूपणम् )

परप्राप्तिसाधनीभूतब्रह्मज्ञानदशायां तदानन्दोऽपि यः पूर्वमनुभूतः स गणितानन्द इत्येतदानन्दानुभवानन्तरं तुच्छत्वेन भातीष्टगतावसाधनत्वेन

---

तदा, आनन्दप्राकट्यसमये। मोदपदार्थमाहुः—विविधेति। रसभाव इति। रसानुकूलो विकारो भाव इत्यर्थः। स च मनोविकारः शारीरोऽपि केषाञ्चिन्मते उच्यते। कल्पनया उपदिश्यते। तत इति। तदनन्तरम्। प्रमोदपदार्थमाहुः—प्रकृष्टेति। स्पर्शजन्यत्वात्प्रकृष्टत्वं बोध्यम्। नानाविधेति। अनुभावव्यभिचारीभावानां नानात्वादित्यर्थः।

स्थायिभावस्येति। आनन्दस्येत्यर्थः। एकरूपत्वादिति। सर्वदा विद्यमानत्वादित्यर्थः। ननु "व्यक्तः स तैर्विभावाद्यैः स्थायी भावो रसः स्मृतः" इति रसस्य स्वरूपकथनम्। लक्षणं तु रत्याद्यवच्छिन्नसच्चिदानन्दत्वम्। तस्य तु सर्वदा विद्यमानत्वं यथाऽन्धकारे स्थितस्य घटादिपदार्थस्याभिव्यञ्जक आलोकादिः, तथात्रापि सर्वदा विद्यमानस्य स्थायिभावस्य रतिरूपावच्छिन्नानन्दस्य सिद्धस्य रसरूपस्य विभावानां व्यञ्जकत्वम्। तदुक्तं, "विभावानुभावसञ्चारिभावा इत्यनिष्पत्तिरि"ति भरतसूत्रमिति काव्यप्रकाशे। तथा च यावत्पर्यन्तं स्थायी अभिव्यक्तो न भवति तावत्पर्यन्तं संस्थायी, अभिव्यक्तश्चेत्, स एव रसभावमापद्यते। इत्थं च प्रकृते आनन्दस्यैकरूपत्वात् सर्वदा स्थायित्वमेव स्यान्न रसभावत्वमित्यत आहुः—यत इति। तत इति। आनन्दरूपस्य स्थायिभावत इत्यर्थः। आत्मन इति वार्थः। विभावादिभिरिति। आदिनाऽनुभावसञ्चारिभावानां ग्रहणम्। विविधभावोत्पत्तिरिति। विविधभावानां रसानामभिव्यक्तिः रसस्यानन्दरूपस्यानुकूलभावस्याप्यानन्दरूपत्वाद्रसस्य भावत्वोक्तिः। यद्वा, यत इति। यतः आत्मरूपस्थायिभावस्य सर्वदा एकरूपत्वतः। तत एव। आनन्दरूपात्मनः सकाशादेव। विभावादिभिः। विभावानुभावादिभिः। विविधभावोत्पत्तिरिति। विविधभावस्य विविधभावसमूहस्य उत्पत्तिः अभिव्यक्तिरित्यर्थः। तथा च विविधाः ये स्थायिभावाः रतिर्हासश्चेत्यष्टविधाः तेषां विभावादिभिरभिव्यक्तिरेव रसः स एव भक्तस्य प्रकट्यनन्द इति भावः।

इतः परं ब्रह्मपुच्छमिति वाक्यस्य तात्पर्यमाहुः—परप्राप्तीति। पूर्वमिति। परप्राप्तेः पूर्वमित्यर्थः। स गणितानन्द इति। अस्य भातीत्यनेनान्वयः। स एको ब्रह्मण आनन्द इति वाक्योक्तगणितानन्द इत्यर्थः। इष्टगतावसाधनत्वेनेति। यथा पक्षिणः पक्षयोरिष्टगतिसाधनत्वं न तु पुच्छस्य यथा स तथा सर्वेषु कामचारो भवतीति छान्दोग्यश्रुत्या पुरुषोत्तमप्राप्तेरेवेष्टगतिसाधनत्वं नत्वक्षरब्रह्मण इति भावः।

स्वरूपतोऽपि तस्माद्धीनत्वं चेति पृष्ठभागादपि दूरस्थितपुच्छरूपत्वं ब्रह्मण उच्यते। पुरुषोत्तमाधिष्ठानत्वात्प्रतिष्ठारूपत्वं च।

( "असन्नेव स भवती"ति श्रुत्यर्थनिरूपणम्–असम्भावनाविपरीतभावनानिरसनम् )

एवं सत्यक्षरादप्युत्तमत्वेऽप्यप्रधानीभूय भक्तकामपूरणकर्तृत्वेऽसम्भावना विपरीतभावना च सम्भवति। तदभावायासन्नेव स भवतीत्याद्युक्तम्।

( "अस्ति ब्रह्मे"ति वाक्यार्थः )

स्वानुभवाभावेऽपि गुरूपदेशेनापि तदस्तित्वमात्रमपि यो जानाति तं ब्रह्मविदः सन्तं सत्त्वधर्मविशिष्टं वर्तमानं च विदुरित्यग्रेऽवददस्ति ब्रह्मेति चेदित्यादिना। ब्रह्मासत्त्वज्ञानेऽसन् भवतीत्युक्त्वा सन्तमेनं विदुरिति तत्त्वेनान्यज्ञानं यदुक्तं तेनोक्तपुरुषोत्तमानन्दानुभववन्तं ज्ञानक्रियाविशिष्टं जीवं वर्तमानं विदुः। अननुभवे केवलं गुरूपदेशादिना तादृग्ब्रह्मास्तित्वज्ञाने स्वरूपतः सन्तं तं विदुर्न तु ज्ञानादिमन्तम्। तदसत्त्वज्ञाने त्वलीकतुल्यमिति श्रुतितात्पर्यमिति ज्ञायते।

( निष्कर्षः )

एवं विचारचातुर्यवद्भिः सद्भिर्व्रजाधिपे।
आनन्दमयतानन्दसन्दोहायावधार्यते ॥ १४ ॥ १।१।११ ॥

---

स्वरूपत इति। पुरुषोत्तमानन्दादयं गणितानन्द इति स्वरूपत इत्यर्थः। पृष्ठभागादिति। मोदप्रमोदयोः पक्षरूपयोः पृष्ठे स्थितिः अक्षरस्य तु ततोऽपि दूरस्थितत्वमित्यर्थः एतावता प्रबन्धेन ब्रह्मविदाप्नोतीत्यारभ्य ब्रह्मपुच्छं प्रतिष्ठेत्येतदन्तं ऋगर्थो वर्णितः।

इतः परं असन्नेव स भवतीति श्रुतितात्पर्यमाहुः—एवं सतीत्यादिना ज्ञायत इत्यन्तेन। असम्भावनेति। भक्तः ब्रह्मणा सह क्रीडतीत्युक्तं, अत्र स्वतन्त्रस्य जगत्कर्तुः क्रीडायामस्वातन्त्र्यं न सम्भवतीत्यन्य एव कश्चित्स्यादित्यसम्भावनेत्यर्थः। विपरीतभावनेति। ब्रह्मपदोपादानेन ब्रह्मैव क्रीडति परन्तु सहभावोक्त्या स्वयं साक्षादानन्दमयविग्रहेण न क्रीडति किन्तु रूपान्तरेण, भक्तस्य तु आनन्दाभास इति विपरीतभावनेत्यर्थः। उक्तमिति। भावनाद्वयनिवारकमसन्नेव स भवतीत्यादिवाक्यद्वयमुक्तमित्यर्थः। अस्ति ब्रह्मेति वाक्यार्थमाहुः—स्वानुभवेति। अवददिति। श्रुतिरिति शेषः। असम्भावनादिनिवारकं यद्वाक्यद्वयं तस्य अग्रे अस्ति ब्रह्मेति चेदित्यादिना स्वानुभवाभावेऽपीत्यारभ्य वर्तमानं च विदुरिति श्रुतिः अवददिति योजना। श्रुतिर्यदवदत्, अन्ये विदुरिति, तस्यास्तात्पर्यमाहुः—तेनोक्तपुरुषोत्तमेति। वर्तमानमिति। वर्तमानकालेऽपि तेषां सत्त्वमस्तीति ज्ञापनार्थमन्यज्ञानं श्रुत्या उच्यते। सन्तमिति। न तु वर्तमानमित्यर्थः। तेन परानुभववत एव कालत्रयाबाध्यत्वमिति भावः। अस्मिन् पक्षे परोक्षवादरूपे वर्णके भक्तानां विरहप्राबल्येन सर्वात्मभावः। तदनन्तरमानन्दमयप्राप्तिरित्यानन्दमयस्यैव ब्रह्मत्वमिति वास्तविकेऽर्थे आनन्दमयस्य पक्षिरूपेण कथनं परोक्षतयेति वेदस्य परोक्षवादत्वमिति सर्वमनवद्यम्। इतः परं वेदान्तार्थविचारे क्रियमाणे अयमेव विचारः कर्तव्यः इत्युपदिशन्ति—विचारेति। विचारे यच्चातुर्यं परोक्षवादेन ज्ञानं तदाश्रयैः। अवधार्यते इति। सद्भिरवधार्यते इति कृत्वा सर्वैरवधार्यतामित्युपदेशः।

( मयटो विकारार्थकत्वबाधः )

नन्वानन्दमयस्य न ब्रह्मता वक्तुं शक्या । मयटो लोके विकाराधिकारविहितत्वादित्याशङ्क्य स्वयमेव परिहरति—

विकारशब्दान्नेति चेन्न प्राचुर्यात् ॥१।१।१३॥

अनेनैव पूर्वसूत्रार्थः सिद्धो भविष्यति । विकारवाची शब्दो मयट्प्रत्ययो यस्मिंस्तद्विकारशब्दं तस्मात् तच्छब्दवाच्यं ब्रह्म न भवति ब्रह्मणोऽविकारित्वादिति चेत्, नात्र विकारे मयट्, किन्तु प्राचुर्यात्, प्राचुर्यमतति प्राप्नोतीति प्राचुर्यात् । तथा च पाणिनिः । "तत्प्रकृतवचने मयट्" ( पा. सू. ५।४।२१ ) । प्राचुर्येण प्रस्तुतं वचनं तत्प्रकृतवचनं तस्मिन्मयट्प्रत्ययो भवतीत्यर्थः ।

प्राचुर्येण पूर्वापेक्षयाप्याधिक्येन—"को ह्येवान्यात् कः प्राण्यात्" ( तै. २।७ ) इति वाक्ये प्रकर्षेण स्तुतम् । अतो मयट् पूर्वापेक्षया प्राचुर्यमयते ।

एकदेशनिर्देशेन तदर्थलक्षणया प्राचुर्यः । प्राचुर्येण प्रस्तुतार्थवाचकत्वादित्यर्थ इति वा ।

---

एतावता प्रबन्धेन प्रथमसूत्रार्थो वर्णितः । इतः परं सूत्रान्तरमवतारयन्ति—**नन्विति** । **विकाराधिकारेति** । "मयड्वैतयोर्भाषायामि"ति सूत्रेणेति शेषः ।

सूत्रमाहुः—**विकारशब्दान्नेति चेन्न प्राचुर्यात्** । आनन्दमयं ब्रह्म न भवति । कुतः ? विकारशब्दात्, इति चेत्, न; कुतः ? प्राचुर्यात् इत्यन्वयः । पूर्वसूत्रार्थः । आनन्दमयस्य ब्रह्मत्वमिति सूत्रार्थः । सूत्रार्थमाहुः—**विकारवाचीति** । **विकारशब्दमिति** । आनन्दमयपदमिति शेषः । समाधानसूत्रार्थमाहुः—**किन्तु प्राचुर्यादिति** । प्राचुर्यादित्यस्य प्रथमान्तत्वं स्वीकृत्यार्थमाहुः—**प्राचुर्यमततीति** । आनन्दमयशब्द इति शेषः । तथा चात्र मयट्प्रत्ययः प्राचुर्यरूपमर्थं प्राप्नोतीति । प्राचुर्यार्थे मयट्प्रत्यय इत्यत्र प्रमाणमाहुः—**तथा चेति** । प्राचुर्ये मयड्विधायकं सूत्रमाहुः—**तत्प्रकृतवचनेति** । सूत्रार्थमाहुः—**प्राचुर्येणेति** । अत्र कैश्चित्तदिति प्रथमान्तं स्वीकृत्य सूत्रार्थो वर्णितः । कैश्चित् तच्छब्दस्य प्रयोजनाभावं स्वीकृत्य, सूत्रार्थो वर्णितः । एतत्सर्वं मनसि निधाय, तद्ग्रहणसार्थक्यानुसारेण तत्प्रकृतवचने इत्यस्यार्थमाहुः—**तत्प्रकृतेति** । तेन प्रकृतं तत्प्रकृतं उच्यत इति वचनं प्राचुर्येण प्रस्तुतस्य वचनं तत्प्रकृतवचनं तस्मिन्नित्यर्थः ।

ननु कुत्र प्राचुर्येण प्रस्तुतमित्यत आहुः—**को ह्येवेति** । तथा च "यदेष आकाश आनन्दो न स्यादि"त्यग्रिमवाक्यस्थानन्दपदबोध्यानन्दस्यैव पूर्ववाक्येन स्तवनमते मयट्प्रत्यय पूर्वभावापेक्षया मयट्प्रत्ययेनाधिक्यं बोध्यत इति भावः । **पूर्वापेक्षयेति** । मयट्प्रत्ययात् पूर्वं केवलानन्दशब्दादानन्द एव बोध्यते तदनन्तरं यदेषेति वाक्ये स्तवनेन आधिक्यबोधनार्थं मयट्प्रत्यये कृते तदनन्तरं प्राचुर्यं अयते बोध्यते इति भावः ।

नन्वानन्दमय इत्यत्र प्राचुर्यविशिष्टानन्दो बोध्यते प्राचुर्यादिति प्रथमान्तपक्षे मयट्प्रत्ययेन प्राचुर्यरूपधर्मो बोध्यते इति वैषम्यमित्यत आहुः—**एकदेशेति** । **तदर्थलक्षणयेति** । प्राचुर्यविशिष्टार्थे लक्षणयेत्यर्थः । प्राचुर्य इति प्राचुर्यविशिष्ट इत्यर्थः । वस्तुतस्तु प्राचुर्यादिति, पञ्चम्यन्तपक्षस्यैवादृतत्वेनाऽऽहुः—**प्राचुर्येणेति** । इत्यर्थ इति । प्राचुर्यादित्यस्यार्थ इत्यर्थः ।

छन्दसि द्व्यज्व्यतिरिक्तस्थले मयटो विकारे विधानाभावाद् व्याकरणमप्यर्थनिर्णायकं विज्ञानमयानन्दमयशब्दौ पश्यन्नपि पाणिनिः "मयड्वैतयोर्भाषायाम्" ( पा. सू. ४।३।१४३ ) "द्व्यचश्छन्दसि" ( ४।३।१५० ) इति कथमवोचत्।

अत्र केचित्सर्वविप्लववादिनो विकारार्थत्वं वदन्ति । श्रुतिसूत्रादीनामर्थाज्ञानात्। तद्वेदाद्यर्थविद्भिर्भगवतो नवमावतारकार्यं ज्ञात्वोपेक्ष्यम् । योर्थस्तमवोचाम ॥ १।१।१२ ॥

( मयटो विकारार्थकत्वबाधे हेतुविचारः )

शब्दबलविचारेण मयटो विकारार्थत्वं निवारितम्। अर्थबलविचारेणापि निराकरोति—

तद्धेतुव्यपदेशाच्च ॥१।१।१३॥

हेतुत्वेन व्यपदेशो हेतुव्यपदेशः । तस्य हेतुव्यपदेशस्तद्धेतुव्यपदेशस्तस्मात्। एष ह्येवानन्दयाति। आनन्दयतीत्यर्थः। सर्वस्यापि विकारभूतस्यानन्दस्यायमेवानन्दमयः कारणं यथा विकृतस्य जगतः कारणं ब्रह्माविकृतं सच्चिद्रूपमेवमेवानन्दमयोऽपि कारणत्वादविकृतोऽन्यथा तद्वाक्यं व्यर्थमेव स्यात् । तस्मान्नानन्दमयो विकारार्थः । चकारः समुच्चयं वदन् सूत्रद्वयेनैकोऽर्थो मध्ये प्रतिपादित इत्याह ॥ १।१।१३ ॥

---

ननु "नित्यं वृद्धशरादिभ्य" इति सूत्रे "मयड्वैतयोर्भाषायामि"ति सूत्रात् भाषायामित्यनुवर्तते । तथा चानन्दशब्दस्य वृद्धत्वात् वेदे विकल्पेन विकारे मयट्प्राप्नोतीत्यत आहुः—छन्दसीति । **अर्थनिर्णायकमिति** । छन्दसि बह्वच्स्थले विकारे मयट् नैव जायत इत्यर्थनिर्णायकमित्यर्थः । अस्मिन्नर्थे उपष्टम्भकमाहुः—**विज्ञानमयेति** । छन्दसि अचोऽपि विकारे यदि मयट् स्यात्तदा द्व्यचश्छन्दसीति द्व्यचः सकाशादेव मयड्विधायकशास्त्रं न प्रणयेदिति भावः ।

अत्र शाङ्करमतमाहुः—**अत्र केचिदिति** । **सर्वविप्लववादिनः** सर्वं मायिकमिति वादिनः । **नवमावतारकार्यम्** । वेददूषणरूप बुद्धावतारकार्यम्। **अवोचामेति** । व्याकरणानुसारेण सिद्धो यः प्राचुर्यार्थकमयट्प्रत्ययेन आनन्दमयस्य ब्रह्मत्वरूपार्थस्तमवोचामेत्यर्थः ।

सूत्रान्तरमवतारयन्ति—**शब्दबलेति** । व्याकरणबलत्व च श्रुतिस्मृतिसिद्धम् । तथा हि, "तामिन्द्रो मध्यतोपक्रम्य व्याकरोत्तस्मादिय व्याकृता वा गुह्यते"ति, षष्ठाष्टके तैत्तिरीये श्रुतिः । मुखं व्याकरणमिति स्मृतिः ।

**तद्धेतुव्यपदेशाच्च** । सूत्रार्थमाहुः—**हेतुत्वेनेति** । व्यपदेशवाक्यमाहुः—**तद्वाक्यमिति** । "एष ह्येवानन्दयाती"ति वाक्यमित्यर्थः ।

( अभिधया विकारार्थकत्वबाधः )

ननु किमिति निर्बन्धेन सूत्रत्रयेणैवं वर्ण्यते । अन्नमयादिवदुपासनापरत्वेनापि श्रुत्युपपत्तेः । पक्षपुच्छादित्वेन मोदप्रमोदादीनामुक्तत्वाच्च । तस्माद्ब्रह्मत्वेन साधितमपि आवश्यकोपपत्त्यभावान्न ब्रह्मपरत्वमिति प्राप्तेऽभिधीयते—

मान्त्रवर्णिकमेव च गम्यते ॥ १।१।१४ ॥

"सत्यं ज्ञानमनन्तं ब्रह्म । यो वेद निहितं गुहायां परमे व्योमन् । सोऽश्नुते सर्वान्कामान्सह । ब्रह्मणा विपश्चिता" ( तै. २।१ ) इति मन्त्रः । मन्त्रेणाभिधया वृत्त्या प्रतिपाद्यं मान्त्रवर्णिकं तदुपपादनग्रन्थे तदेव मुख्यतया ज्ञायते । तत्र यदुद्दिष्टं तदेव मुख्यतया ज्ञातव्यम् । उपपादनीयं च सन्दिग्धम् । तत्र ब्रह्मणा विपश्चितेति सन्दिग्धं सर्वज्ञं तस्य हि फलत्वं वाक्ये नोपपाद्यते । फलं तु सर्वैः स्तुत आनन्दः । अभ्यासात्स्तुतत्वमित्यवोचाम । शिरःपाण्यादिकं तु स्तुत्यर्थमेव । पुरुषविधत्वाय ।

---

अग्रिमं सूत्रमवतारयन्ति—नन्विति । अन्नमयादिवदिति । एतेन प्रकरणबलं सूचितम् । लिङ्गबलमाहुः—पक्षेति । साधितमपीति । आनन्दमयपदमिति शेषः । ब्रह्मपरत्वमिति । अर्हतीति शेषः ।

सूत्रमाहुः—मान्त्रवर्णिकमेव च गम्यते । मन्त्रमाहुः—सत्यमिति । मान्त्रवर्णिकपदस्यार्थमाहुः—मन्त्रेणेति । अभिधयेत्यनेन लक्षणाव्यवच्छेदः । तदुपपादनग्रन्थे मन्त्रव्याख्यानरूपे सम्पूर्णे ब्रह्मवित्प्रपाठके । तदेवेति । मान्त्रवर्णिकमानन्दमयमेवेत्यर्थः । ननु सन्दिग्धस्यैव व्याख्यानं लोके प्रतीयते, ब्रह्मणस्तु फलत्वांशे सन्देहाभावात्किमर्थं व्याख्यानमित्यत आहुः—उपपादनीयमिति । ब्रह्मणः फलत्वेनोपपादनं सन्दिग्धमित्यर्थः । सन्देहं स्फुटीकुर्वन्ति तत्रेत्यादिना । सर्वज्ञं ब्रह्मेति । इदं 'उपपाद्यत इत्यनेनान्वितम् । तथा च 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिते"ति मन्त्रे द्वितीयान्तानां कामानां फलत्वं ज्ञायते । ब्रह्मणस्तु सहभूतत्वेन गौणत्वमतस्तस्य फलत्वांशे सन्देह इत्यर्थः । नन्वस्तु मन्त्रे सन्देहः ब्रह्मविदिति वाक्ये तु सन्देहाभावात्किमर्थं प्रपाठकरूपं व्याख्यानमित्यत आहुः—तस्य हीति । ब्रह्मण इत्यर्थः । वाक्ये । ब्रह्मविदाप्नोति परमिति वाक्ये । नोपपाद्यत इति । ब्रह्मणः फलत्वेनोपपादनं न क्रियते, किन्तु साधनशेषत्वेन तत्र तु परस्यैव फलत्वेन प्रतिपादनादित्यर्थः । यद्वा उपपादनीये सन्देहमुपपादयन्ति—तत्रेत्यादि उपपाद्यते इत्यन्तेन । तत्र, मन्त्रे ब्रह्मणां विपश्चितेति पदद्वयं तत्र ब्रह्मणेति शब्देन सन्देहविषयीभूतं विपश्चिच्छब्देन च सर्वज्ञं ब्रह्म उपपाद्यते । तस्यैव हि इत्यत्र हिकारः । एवार्थे वाक्येनेति तृतीयान्तम् । तथा च वाक्येन ब्रह्मविदिति वाक्येन तस्यैव सर्वज्ञ ब्रह्मण एव परशब्दप्रतिपाद्यं फलत्वं उपपाद्य इत्यस्य आवृत्त्यान्वयो बोध्यः । एवं च पूर्ववाक्ये परशब्दप्रतिपाद्यफलस्य ब्रह्मणा सह इत्यनेन गुणभूतत्वोक्त्या सन्देहः फलस्य मुख्यत्वादिति भावः । तथा च स्फुटतया ब्रह्मणः फलत्वानुक्तौ प्रपाठकरूपे व्याख्याने ब्रह्मणः प्रचुरानन्दत्वेन फलत्वोक्तिरिति भावः । प्रपाठकार्थमेवाऽऽहुः—फलन्त्वित्यादिना मान्त्रवर्णिकमेव प्रतीयते इत्यन्तेन । सर्वैरिति । सर्वान्तरत्वाभ्यासादिसर्वैः प्रकारैरित्यर्थः । ननु शिरादिकल्पनया उपासनार्थत्वं स्यादित्यत आहुः—शिर इति । तथा च शिरःपाण्यादिकल्पना उपासनार्था नास्तीति भावः । ननु शिरःपाण्यादिना कथं स्तुतिर्ज्ञायत इत्यत आहुः—पुरुषविधत्वायेति । पुरुषाकारत्वायेत्यर्थः । यदि स्वयं पुरुषाकारश्चेत् उपरितनः अन्नमयान्तः

लोके ह्यन्तर्भूतं बहिर्वेष्टितं च तदाकारं भवति।

जीवोऽत्र मुख्यः। कर्तृत्वेन व्यपदेशात्। स च वस्तुतो हंसरूपः। पुरुषाधिकारकं हि शास्त्रम्। तेन पुरुषशरीरे तदाकारः सर्वं फलं प्राप्नोति। अतः पुरुषं हंसरूपेणानुवर्णयति। पञ्चस्वपि शारीर आत्मा जीव एक एव। तत्रान्नमये निःस-

---

र्वोऽपि पुरुषाकारो भवतीति। इदं च "तस्य पुरुषविधताम्, अन्वयं पुरुषविध" इति श्रुत्या ज्ञायते इति भावः। आनन्दमयस्य पुरुषाकारत्वे सर्वेषां पुरुषाकारत्वं भवतीत्यत्र लौकिकीं युक्तिमाहुः—लोके हीति। मूषानिषिक्तप्रतिमादौ अन्तर्भूतं सीवितवस्त्रप्रतिमादौ च बहिर्वेष्टितं तदाकारं भवतीति लोके हि प्रसिद्धमित्यर्थः। वेदे तु "तस्माद्वा एतस्मादन्नरसमयादि"त्यादिना प्राणमयस्य पुरुषविधतामुक्त्वा तेन पूर्णत्वमन्नमयस्योक्तं लोकवद्बोध्यम्।

नन्वेतावता आनन्दस्य स्तवनं कथं सिद्धमित्यत आहुः—जीव इति। अत्र शास्त्रप्रवृत्तौ। ननु कथं तस्य मुख्यता ज्ञायते इत्यत आहुः—कर्तृत्वेनेति। सोऽश्नुत इति श्रुत्या भोगकर्तृत्वस्योक्तत्वात्। स च जीवश्च। वस्तुत इति। द्वा सुपर्णाविति श्रुत्या उभयोरपि हंसरूपत्वाज्जीवस्यापि वास्तविकं हंसरूपत्वमित्यर्थः। नन्वस्तु तावता शास्त्रप्रवृत्तौ जीवस्य मुख्यता कथमित्यत आहुः—पुरुषाधिकारकमिति। शास्त्रप्रवृत्तिर्हि जीवस्य ब्रह्मज्ञानार्थं तच्च ज्ञानं जीवस्य पुरुषाकारत्वे सति भवति। शास्त्रस्य च फलं उपदेशः, तस्य च पुरुषाधिकारकत्वात्। अतः जीवस्य हंसरूपत्वेऽपि पुरुषाकारत्वं, ततः ज्ञानसम्पत्तिरित्यर्थः। तथा च तस्य ब्रह्मणा सह सर्वकामोपभोगकर्तृत्वं सम्पद्यते इति मुख्यत्वमित्यर्थः। नन्वस्तु तावता आनन्दमयस्य हंसाकारत्वं किमर्थमत आहुः—तेनेति। तेन कारणेनेत्यर्थः। तदाकारः हंसाकार इत्यर्थः। तथा जीवः पुरुषशरीरे हंसाकारः सर्वफलभाक् भवतीत्यर्थः। अत इति। अतः कारणादेवेत्यर्थः। पुरुषं, परमात्मानम्। हंसरूपेण हंसाकारत्वेनेत्यर्थः। अनुवर्णयति। श्रुतिरिति शेषः। तथा च पुरुषः परमात्मा हंसरूपे जीवे हंसाकारः सन् प्रविष्टः समतां विना फलानुभवाभावात्। एवं च पुरुषवेष्टनेन जीवस्यापि पुरुषाकारत्वं तेन सर्वफलभोक्तृत्वं सिद्ध्यति। हंसाकारः परमात्मा फलमनुभावयतीति भावः। तथा च राज्ञः अल्पस्य जनस्य सुखार्थं कश्चन व्यापारः कृतश्चेत् तस्य यथा स्तुतिरेवं जीवस्य फलभोगार्थमेवं कृतश्चेत् भगवतः स्तवनं सिद्ध्यतीति भावः। नन्वेतावता जीवार्थमानन्दमयस्य भगवतः पुरुषविधत्वमस्तु नाम परन्तु अन्नमयादीनां किमर्थमित्यत आहुः—पञ्चस्वपीत्यादिना। पञ्चसु फलरूपासु। अन्नमयादिविभूतिष्वित्यर्थः।

एक एवेति। फलभोक्ता जीवः एक एवेत्यर्थः। तथा च हंसरूपजीवस्य शास्त्राधिकारार्थं पुरुषविधत्वं तच्चानन्दमयस्य पुरुषविधत्वं विना न सम्भवति, तस्यापि तथात्वम्। एवं च पञ्चात्मा फलरूपः आनन्दमयः, शरीर इत्यादिपुरप्रवेशवर्णनं तु फलरूपस्य भगवतः पञ्चसु प्रवेशं विना तेषां फलत्वं न सम्भवतीत्यतः पञ्चाप्युक्तफलरूपा व्यापका एव बोध्याः। अत एव तैत्तिरीयोपनिषदि अन्नात्प्राणा भवन्तीत्युपक्रम्य स वा एष पुरुषः पञ्चधा पञ्चात्मा येन सर्वमिदं प्रोतं पृथिवी चान्तरिक्षं चेत्यादिना विभूतिरूपपञ्चविधत्वज्ञानेन, क्रममुक्तिरप्युक्ता, एवं च ब्रह्मज्ञानिजीवः तत्पञ्चकोशादुत्क्रम्य क्रमेणान्नमयादिषु विभूतिषु फलरूपासु भोगार्थं प्रविश्यान्ते आनन्दरूपो भवतीत्ययमर्थो वर्णितः प्रपाठके। अत एव श्रीभागवतेऽप्यानन्दमानन्दमयोऽवसानेत्यनेनायमेवार्थो वर्णितः। इत्थं च मात्रवर्णिकः आनन्द एवेति सिद्धम्। भक्तस्य तु "बहिश्चेत्प्रकटः स्वात्मा वह्निवत्प्रविशेद्यदी"त्युक्तत्वादस्मिन् देहे एव सर्वेषां विभूतीनां भोगः, प्राकट्याभावे तु शरीरत्यागानन्तरमलौकिकदेहप्राप्त्या क्रमेण सर्वोपभोगानन्तरमानन्दमयो भवतीति ज्ञायते। अधिकं

न्दिग्धत्वात्तस्यैष एवात्मेति नोच्यते ।

द्वितीयादिषु प्रथमोक्तमेवातिदिश्यते । तत्राद्य मये हस्तेन प्रदर्शयन्निव निःसन्दिग्धं व्याख्यातम् । तदन्तरो हि प्राण आन्तरव्यवहारकारणम् । बलभोजनविसर्गादिषूपयोगात् । तस्य सञ्चार आकाशेपरिनिष्ठितः पृथिव्याम् ।

एवं लौकिकव्यवहारार्थं बाह्याभ्यन्तरभेदेन द्वयम् । तदनु वैदिकव्यवहारः । स च मनोमयः पुरुषः । आदेशः कर्मचोदना । ब्राह्मणानि सङ्गोपाणि । अथर्वाङ्गिरसे ब्रह्मकर्मत्वात्प्रतिष्ठा । तदनु नानाविधयागादिसाधनवतः फलं विज्ञानमयः ।

तत्र श्रद्धा आपः । तृतीयाध्याये त्वयमर्थो विस्तरेण वक्ष्यते । यथोक्तकर्तृत्वात्क्रमसुक्तिः ।

---

तु प्रकाशादनुसन्धेयमिति विस्तरभयाद्विरम्यते । इदानीं प्रकृतं विचार्यते । ननु सर्वत्रात्मा एक एव चेदन्नमये कुतो नोच्यते इत्यत आहुः—तत्रेति । तथा चान्नमयकोशे स्वयं प्रत्यक्ष इति विभूतावपि स एवेति तत्र नोक्तमिति भावः । अत एव शारीर आत्मा जीवः अन्नमये यः प्रत्यक्षसिद्धः स एव भोक्ता सर्वत्रास्तीति यः पूर्वस्येति सर्वत्रोक्तमिति शारीर आत्मेति विचारितम् ।

इतः परं पञ्चावयवत्वं विचार्यते । द्वितीयादिष्वित्यादिना । प्रथमोक्तमिति । अन्नमयोक्तं पञ्चावयवत्वमित्यर्थः । अतिदिश्यत इति । पञ्चावयवास्तु सर्वत्र भिन्ना एव पञ्चावयवत्वं तु सर्वत्रास्तीत्यतिदेश इत्यर्थः । यथा देवताभेदेऽपि दर्शपूर्णमासप्रकरणपठितानां पञ्चप्रयाजादीनां प्रकृतिवद्विकृतिः कर्तव्येत्यतिदेशशास्त्रेण सौर्येष्ट्यादौ अतिदेशस्तथात्रापीति बोध्यम् । अयमेवार्थो विस्तरेण प्रदर्श्यते । तत्रेति । फलरूपासु पञ्चसु । हस्तेनेति । अन्नमये कोशे श्रुतिः हस्तेन प्रदर्शयन्निव दर्शयन्निव वदत्यतो फलरूपेऽन्नमयेऽपि एते एवावयवा बोध्याः । प्राणमये विशेषमाहुः—तदनन्तर इति । तस्य शिरस्त्वं बले उपयुज्येत । "अन्नेन प्राणाः प्राणैर्बलमि"ति श्रुतेः । व्यानोदानाभ्यां दक्षिणोत्तरपक्षाभ्यां भोजनविसर्गौ जायेते । प्राणमयः कोशस्य हृदये विभूतेस्तु आकाशे सञ्चारः, तस्य आत्मत्वात्, पृथिवी पुच्छरूपेति तत्रापरिनिष्ठितः ।

द्वयमिति । अन्नमयेन बाह्यः प्राणमयेनान्तरो यो लौकिको व्यवहारस्तत्सिद्ध्यर्थं विभूतिद्वयमित्यर्थः । कर्मेति । चोदनाविधिवाक्यम् । वैदिकेति । शिरः पक्षद्वयं मिलित्वा वेदत्रयी, आदेशः आत्मनोर्धमाहुः—ब्राह्मणवाक्यानि, अङ्गबोधकवाक्यसहिता, एतेषामात्मत्वमित्यर्थः । अथर्वाङ्गिरसेति । यज्ञे ब्रह्मा ऋत्विक् आथर्वणिको भवति । तस्य मर्माथर्वणवेदसिद्धं तेन च शान्त्यादिकर्मणा यज्ञसंरक्षणं कर्तव्यमिति प्रतिष्ठा रूपत्वं पुच्छत्वं च बोध्यम् । एवं च वेदचतुष्टयात्मकोऽयं मनोमयः विभूतिरूपोऽयं पुरुषः अनेकवृत्तिकान्मनोमयकोशाद्भिन्न एवेति भावः । अयं च स एव जीवो विवरप्रसृतिरित्यादिना एकादशस्कन्धे स्पष्ट एवोक्तः । इतः परं नानावितानसाध्यं पारलौकिकफलानुभवजनकं चतुर्थमाहुः—तदन्विति । विज्ञानमय इति । अत्र प्राचुर्ये मयट् ।

तत्र । पञ्चावयवेषु मध्ये । श्रद्धेति । 'श्रद्धा वा आपः, श्रद्धामेवारभ्य प्रणीय प्रचरति । इदं तृतीयाष्टके ब्राह्मणे प्रणीताप्रणयनप्रकरणे पठितम् । तथा च सर्वयज्ञादौ प्रणीता प्रणयनस्य विधीयमानत्वेन श्रद्धायां मुख्यत्वात् शिरस्त्वम् । अथवा छान्दोग्ये पञ्चाग्निविद्यायां प्रथमाहुतौ देवाः श्रद्धां जुह्वतीत्युक्तेस्तेनापि तस्याः मुख्यत्वं, वक्ष्यत इति रंहत्यधिकरणे । यथोक्तकर्तृत्वादिति । अन्नमयादिना यथोक्तेन विधिना उपासनाकर्तृत्वात् ।

ऋतसत्यौ प्रमीयमाणानुष्ठीयमानौ धर्मौ। योगश्च मुख्यत्वादात्मा। अधोभागो महर्लोकः, तादृशस्य ततोर्वाक्संसृत्यभावात्। ततोऽपि ब्रह्मविद आनन्दमयः फलम्। तस्य स्वरूपस्यैकत्वाद् धर्मभेदेन शिरःपाण्यादि निरूप्यते। तस्य मुख्यतया प्रीतिविषयत्वं धर्मस्तच्छिरः। मोदप्रमोदावपरिनिष्ठितपरिनिष्ठितावानन्दातिशयौ। आनन्दस्तु स्वरूपं साधनरूपत्वाद् ब्रह्म पुच्छमिति। श्लोकौ तु सच्चिदंशबोधकौ केवलानन्दत्वपरिहाराय। अपरौ तु श्लोकौ माहात्म्यज्ञापनाय वाग्गोचरागोचरभेदेन। अवान्तरानन्दास्तु सर्वे तस्मान्न्यूनतया तदुत्कर्षत्वबोधनाय।

तस्मात्सर्वत्र प्रपाठके मान्त्रवर्णिकमेव प्रतीयते। अतो मुख्योपपत्तेर्विद्यमानत्वेनानन्दमयः परमात्मैव। चकारो मध्ये प्रयुक्तो विधिमुखविचारेणाधिकरणसम्पूर्णत्वबोधकः ॥ १।१।१४ ॥

निषेधमुखेन च चतुःसूत्र्येदमेवाधिकरणं पुनर्विचार्यते सुदृढत्वाय ॥ इदमत्राकूतम्। जीव एवानन्दमयो भवतु। फलस्य पुरुषार्थत्वात्। स ब्रह्मविदानन्दमयो भवतीति स्वर्गादिसुखवदलौकिकमेव रूपमानन्दमयं जीवस्य फलभूतमिति प्राप्तेऽभिधीयते॥

---

ऋतसत्यौ ज्ञायमानौ क्रियमाणौ धर्मौ, तद्वति पक्षरूपौ धर्मौ, अधोभागः पुच्छम्, तादृशस्य। तादृशवितानाद्यन्नमयाद्युपासनावतः महर्लोकं प्राप्तस्येत्यर्थः। ततोऽर्वागिति। महर्लोकादर्वाक् या संसृतिः संसारस्तस्य न जायते इत्यर्थः। अन्तिममाहुः—ततोऽपीति।

, साधनरूपत्वादिति, विषयतया साधनत्वादित्यर्थः। अक्षरब्रह्मज्ञानस्य कारणत्वादिति भावः। एतावतानन्दरूपो भगवान् अन्नमयादिति विभूतिरूपपञ्चात्मा हंसरूपः सन् जीवेऽनुप्रविष्टः पुरुषविध एव लौकिकशरीरे आनन्दमयादारभ्यान्नमयान्तकोशान् मूषानिषिक्तप्रतिमान्यायेन प्रतिशरीरं सम्पादयति। तत्र ते ये विभूतिरूपाः लोके हीत्यादिना वर्णयतीत्यनेन सङ्क्षेपेणोक्तास्त एव पञ्चस्त्वित्यादिना विस्तरेणोक्ताः। तत्र ब्रह्मज्ञानी भक्तो वा जीवः परमाप्यनन्तरं सर्वान् कामान् भुङ्क्त इत्यत्र यो भोग उक्तः स विभूतीनामेव, परं वस्तु विपश्चिदानन्दमय एवेति सिद्धम्। तत्र पञ्चविभूतिनिरूपणानन्तरं श्लोकचतुष्टयमुक्तम्। तत्र प्रथम श्लोकद्वयस्य प्रयोजनमाहुः—श्लोकौत्वित्यादिना। अपरश्लोकद्वयस्य तात्पर्यमाहुः—अपराविति। वाग्गोचरेति। भीषास्माद्वातः पवते इत्यनेन वाग्गोचरं यतो वाचो निवर्तन्त इत्यनेन वागगोचरं यन्माहात्म्यं तद्बोधनायेत्यर्थः। नन्वग्रे आनन्दनिरूपणं किमर्थमित्यत आहुः—अवान्तरेति। गणितानन्दा इत्यर्थः। तदुत्कर्षत्वमिति। अगणितानन्दत्वमित्यर्थः।

उपसंहरन्ति—तस्मादिति। मान्त्रवर्णिकमेवेति। आनन्दमयमेवेत्यर्थः।

श्रीभागवतेऽप्युक्तं वेदस्तुतौ पुरुषविधोऽन्वयोऽत्र चरम इति; चरमः आनन्दमयः, अग्रिमसूत्रमवतारयन्ति—निषेधेति। जीव एवेति। आनन्दमयेऽपि तस्यैव एव शारीर आत्मेति श्रवणादिति भावः। मान्त्रवर्णिकविरोधं परिहरन्ति—स ब्रह्मविदिति। विपश्चिता ब्रह्मणा सह आनन्दमयो भवतीत्यर्थः। इति प्राप्ते। पूर्वपक्षे प्राप्ते।

( जीवस्यानन्दमयत्वनिरासः )

नेतरोऽनुपपत्तेः ॥१।१।१५॥

इतरो जीवो न । आनन्दमयो न भवति । कुतः ? अनुपपत्तेः । जीवस्य फलरूपत्वमात्रेणानन्दमयत्वं नोपपद्यते । तथा सति तस्य स्वातन्त्र्येण जगत्कर्तृत्वेऽत्यलौकिकमाहात्म्यवत्त्वेन निरूपणं नोपपद्येत । अतो न जीव आनन्दमयः ॥१।१।१५॥

( जीवस्यानन्दमयाद्भेदव्यपदेशः )

भेदव्यपदेशाच्च ॥ १।१।१६ ॥

इतोऽपि न जीव आनन्दमयः । यतो भेदेन व्यपदिश्यते । "रसꣳ ह्येवायं लब्ध्वानन्दी भवति" ( तै. २।७ ) इति । आनन्दोऽस्यास्तीत्यानन्दी । "एष ह्येवानन्दयाति" ( तै. २।७ ) आनन्दयतीत्यर्थः । चकारात् सूत्रद्वयेन जीवो नानन्दमय इति निरूपितम् ॥ १।१।१६ ॥

( जडस्यानन्दमयत्वनिरासः )

तर्हि जडो भवत्वानन्दमयः । न । आन्तरत्वान्न कार्यरूपो भवति । किन्तु कारणरूपः स स्वमतेनास्त्येव । मतान्तरे प्रकृतिर्भवेत् । तन्निवारयति—

कामाच्च नानुमानापेक्षा ॥१।१।१७॥

जडा प्रकृतिर्नास्तीति कारणत्वेन निराकृतैव अथैतद्वाक्यान्यथानुपपत्त्या सत्त्वपरिणामरूपा कल्प्येत । सा कल्पना नोपपद्यते । कुतः ? कामात् । आनन्दमयनिरूपणानन्तरं—"सोऽकामयत" (तै.२।६) इति श्रूयते । सकामश्चेतन धर्मः । अतश्चेतन एवानन्दमय इति । चकारात् न "तपोऽतप्यत" (तै. २।६) इत्यादि । अतोऽनुमानपर्यन्तमर्थमबोधयद्वाक्यं न तिष्ठतीत्यर्थः ॥१।१।१७॥

---

सूत्रमभिधीयते, **नेतरोऽनुपपत्तेः** । अनुपपत्तिमाहुः—**तथा सतीति** । **तस्य**, आनन्दमयस्य । **स्वातन्त्र्येण** इतरनैरपेक्ष्येण । **जगत्कर्तृत्वे इति** । विषयत्वं सप्तम्यर्थः । तस्य निरूपणेऽन्वयः, **निरूपणमिति** । तस्माद्वा एतस्मादिति वाक्येन, भीषास्माद्वातः पवत इत्यादिवाक्येन चेति । **नोपपद्येतेति** । जगत्कर्तृत्वादिकं जीवे नास्तीति तद्बोधकवाक्यस्य जीवे उपपत्तिर्नास्तीत्यर्थः ।

दूषणान्तरमाहुः—**भेदव्यपदेशाच्च** । कुण्डलीत्यत्र कुण्डलदेवदत्तयोर्यथा भेदो बुध्यते एवमानन्दीत्यत्रापि श्रुत्यानन्दजीवयोर्भेदो व्यपदिश्यते इत्यर्थः । एवमानन्दयतीत्यत्रानन्दजनको भवतीत्यत्रापि भेदो बोध्यः ।

अग्रिमसूत्रद्वयमवतारयन्ति—**तर्हीति** । जडो द्विविधः कार्यरूपः कारणरूपश्च, कार्यरूपः सुखात्मकः । स तु न सम्भवति, आनन्दस्यान्तरत्वात् कारणस्तु वेदे नास्तीति कृत्वा स्वमते नास्त्येव साङ्ख्यमतोक्तः प्रकृतिरूपो वक्तव्यः । तन्निराकरोति—**कामाच्च नानुमानापेक्षा** । निराकृतैव, वेदे तस्याः नामापि न श्रूयत इत्यतोऽस्मिन् शास्त्रेति शेषः । **अथैतदिति** । तस्य प्रियमेव शिर इति वाक्येत्यर्थः । **सत्त्वपरिणामेति** । कार्यसुखरूपेत्यर्थः ।

**न तिष्ठतीति** । अनुमानपर्यन्तं स्वार्थां न बोधक्षमं वाक्यं मूकं न तिष्ठतीत्यर्थः । तथा च आनन्दमयपदवाच्यं पक्षीकृत्य जडप्रकृतिरूपसत्त्वपरिणामाभेदः साध्यते, प्रियाद्यवयववत्त्वं हेतुः, लौकिकसुखं

( योगशासनादपि न जडस्यानन्दमयत्वम् )

**अस्मिन्नस्य च तद्योगं शास्ति ॥१।१।१८॥**

इतश्च न जड आनन्दमयः। अस्मिन्नानन्दमयेऽस्य जीवस्य च "आनन्दमयमात्मानमुपसङ्क्रामति" (तै. २।८) इति तेन रूपेण योगं शास्ति फलत्वेन कथयतीति। न हि जीवस्य जडापत्तिर्युक्ता। "ब्रह्मैव सन् ब्रह्माप्येति" (बृ. ३।४।६) इतिवदस्याप्यर्थः। तस्मान्नायं जीवो नापि जडः। पारिशेष्याद्ब्रह्मैवेति सिद्धम्।

( अधिकरणत्वोपपत्तिः )

ये पुनरधिकरणभङ्गं कुर्वन्ति तेषामज्ञानमेव। यतस्तैरप्यानन्दमयः कः पदार्थ इति वक्तव्यम्। न तावज्जीवः। तस्य ब्रह्मज्ञानफलत्वेन ब्रह्मणा विपश्चितेत्यानन्दमयस्योक्तत्वात्। अथ जडः स्वर्गवत्। तदा किमाश्रित इति वक्तव्यम्। जडाश्रितत्वे कर्मफलमेव स्यात्। ज्ञानस्याप्यवान्तरफलमिति चेत्, न; तर्हि किमानन्दात्तस्यातिरिक्तं फलं भविष्यति। जडचिद्रूपतायाः पूर्वमेव विद्यमानत्वात्। "अस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति" (बृ. ४।३।३२) इति श्रुतिविरोधश्च पुच्छत्वेन ब्रह्मवचनात्प्रद्वेप इति चेत्, तर्हि "स एको ब्रह्मण आनन्दः" (तै. २।८) इत्यत्रापि षष्ठ्या भेदनिर्देशाद्ब्रह्मणः परमपुरुषार्थत्वं नाङ्गीकुर्यात्। उपक्रमादिसर्व-

---

दृष्टान्तः। अत्र यावत्पर्यन्तव्याप्तिज्ञानं परामर्शः ततः पूर्वमेव वाक्यश्रवणानन्तरं आनन्दे चैतन्यविषयकशाब्दबोधे जाते जडाभेदानुमितिर्न भविष्यतीति भावः।

**अस्मिन्नस्य च तद्योगं शास्ति। अस्याप्यर्थ इति।** आनन्दमयमात्मानमुपसङ्क्रामतीत्यस्यापि आनन्दमयो भूत्वा आनन्दमयं प्रविशतीत्यर्थः।

इदानीमधिकरणान्ते शङ्करमतं दूषयन्ति—**ये पुनरिति। अधिकरणभङ्गमिति।** आनन्दमयपदस्य ब्रह्मपरत्वास्वीकारेणेति शेषः। **तस्येति।** तस्य जीवस्य यत् ब्रह्मज्ञानं तस्य फलत्वेनेत्यर्थः। शङ्कते—**अथेति।** जडः आनन्दमयः जडरूप इत्यर्थः। दृष्टान्तमाहुः—**स्वर्गवदिति।** यथा स्वर्गसुखं जडरूपं तथानन्दोऽपि जडरूप इत्यर्थः। समाधानमाहुः—**तदेति। कर्मफलमेवेति।** जडस्य घटस्य जडकपालाश्रितत्वं यथा जडरूपानन्दाश्रयं कर्मफलं स्वर्गादिरूपमेव भविष्यति। तस्य च कर्मचितो लोकः क्षीयते इति श्रुत्याऽनित्यत्वं स्यादित्यर्थः। आनन्दमयं कर्मफलं न भवति किन्तु ज्ञानफलमेवेत्याशयेन शङ्कते—**ज्ञानस्यापीति। फलमिति।** आनन्दमय इति शेषः। निराकुर्वन्ति—**नेति। तस्य। ज्ञानस्य। फलमिति।** मुख्यमिति शेषः। ननु ज्ञानस्य मुख्यं फलं जडरूपं चिद्रूपं वास्तु को दोष इत्यत आहुः—**जडेति। पूर्वमेवेति।** ज्ञानादिति शेषः। तथा च ज्ञानपूर्वभाविनाः फलत्वं न सम्भवतीति भावः। आनन्दमयस्यावान्तरफलत्वे दूषणान्तरमाहुः—**अस्यैवेति।** अधिकरणभङ्गे अन्यदेव बीजमिति वादी वदति; **पुच्छत्वेनेति।** अस्मिन् वेदान्तशास्त्रे, च जिज्ञास्यं ब्रह्मैव मुख्यं तच्चानन्दमयस्य पुच्छत्वे उपन्यस्तमिति प्रद्वेप इत्यर्थः। निराकुर्वन्ति—**तर्हीति।** यथा पुच्छत्ववचनं प्रद्वेपजनकं तथा भेदवचनमपीति भावः। **ब्रह्मण इति।** आनन्दभिन्नस्येति शेषः। सच्चिदानन्दरूपब्रह्मण एव परमफलत्वदिति भावः। ननु आनन्दातिरिक्तब्रह्मण एव पुरुषार्थत्वमस्त्वित्यत आहुः—**उपक्रमेति।** ब्रह्मविदाप्नोति परमित्यत्र उपक्रमे परशब्देनानन्दमय एवोक्तः। उपसंहारे च एतमानन्दमयमात्मानमुपसङ्क्रामतीत्यनेनानन्दमय एवोक्त इत्यतस्तस्य पुरुषार्थत्वे

विरोधश्च पूर्वमेव प्रतिपादितः । यदप्यधिकरणमन्यथा रचितं ब्रह्मपुच्छमिति तत्र न पुच्छस्य ब्रह्मत्वं प्रतिपाद्यते । येनान्यथा समाधानं भवेत् । किन्तु, ब्रह्मणः पुच्छत्वमिति पूर्वन्यायेनेदं पुच्छं प्रतिष्ठेतिवत् । तत्र श्रुतिबाधो ब्रह्मणाप्यशक्यः । मौर्ख्यं चैतत् । आनन्दमयस्यैव ब्रह्मत्वे न कोऽपि दोषः स्यात् । आनन्दमयस्याब्रह्मत्वं परिकल्प्य तत्पुच्छत्वेन ब्रह्म वेदबोधितमिति ज्ञात्वा तत्समाधानार्थं यतमानो महामूढ इति विषयफलयोः किं मुख्यमित्यप्यनुसन्धेयम् । पुच्छत्वोक्तिस्तु

---

उपक्रमविरोधः स्यादिति भावः । परैः स्वमतरीत्या अधिकरणरचना या कृत्वा सा दूषयितुमुपन्यस्यति, यदपीति । अधिकरणरचनामेवोपपादयन्ति—ब्रह्मपुच्छमिति । ब्रह्मपुच्छं प्रतिष्ठेति विषयवाक्ये ब्रह्मपदवाच्यमक्षरमेव पुच्छं निषेधशेषं सर्वाधारत्वात्प्रधानं प्रतिष्ठारूपं प्रतिपाद्यते । अथवा तदेवानन्दमयस्य पुच्छं अवयवं प्रतिपाद्यते इति सन्देहे अवयवमेव प्रतिपाद्यते इति पूर्वपक्षे सिद्धान्तस्तु आनन्दमयोभ्यासादिति, आनन्दमयः आत्मा अक्षरः ब्रह्म कुतः अभ्यासात्, असन्नेव सम्भवतीति वाक्ये केवलाक्षरस्यैवाभ्यस्यमानत्वात् । एवं रीत्याक्षरब्रह्मण एव प्रधानत्वमिति ।

दूषणमाहुः—तत्रेति । तत्र, ब्रह्मपुच्छं प्रतिष्ठेति वाक्ये । न पुच्छस्येति । पूर्वपदं उद्देश्यबोधकं अपरं विधेय बोधकमितिरीतिः । पर्वतो वह्निमानितिवत्, एवं च प्रकृते ब्रह्मपदं पूर्वं भवतीति कृत्वा तद्बोध्यं ब्रह्मैवोद्देश्यं पुच्छं विधेयं न तु पुच्छं उद्दिश्य ब्रह्मत्वमभेदेन विधीयते येन विधेयस्याप्रधानत्वात् प्रधानीभूतस्य ज्ञेयब्रह्मणोऽप्यप्राधान्यं स्यादिति शङ्का स्यात् तदैव यदि ब्रह्मणः प्राधान्यं न स्वीक्रियते चेत्, असन्नेव स भवतीत्यादिना केवलब्रह्मण एवाभ्यासात्तस्यैव प्राधान्यं वेदबोधितमित्येतादृशमन्यथा समाधानं भवेदित्यर्थः । अन्यथा समाधानमिति । शङ्कां विनैव समाधानमित्यर्थः । तथा च न च शङ्का न चोत्तरमिति भावः । वास्तविकोद्देश्य विधेयभावमेवाऽऽहुः—किन्त्विति । पुच्छत्वमिति । इदं ब्रह्मपुच्छं प्रतिष्ठेति वाक्यं पूर्वन्यायेन समिधो यजतीति न्यायेन पुच्छं प्रतिष्ठेति वदन् बोधयन् ब्रह्मणः पुच्छत्वं प्रतिपादयतीत्यन्वयः । क्वचित्पुस्तके पुच्छ प्रतिष्ठेतिवत् इति पाठो दृश्यते तत्र प्रदीपकारैः । वत् इत्यस्य इवार्थं कृत्वा पूर्वन्यायेनेत्यत्रान्वयः कृतः । [illegible] तु समीचीनतया न प्रतिभाति । कुत्रापि शास्त्रे अमुकाधिकरणन्यायेनेत्यस्यानुक्तत्वात् । किञ्च, पूर्वन्यायेनेत्युक्त्यैव सादृश्यलाभात् अमुकन्यायेनात्र बोद्धव्यमितिवत्, किञ्च, वदन्निति पाठे श्रुतिरेव पुच्छं वदति तत्र श्रुतिबाधो ब्रह्मणाप्यशक्य इति स्वारस्यं मतिभाति । पूर्ववाक्ये प्रतिपाद्यते इति वर्तते तस्यैवं मतिपादयतीति विपरिणामेनान्वयः प्रतिपाद्यत इति पूर्वेणान्वयः । पूर्वन्यायेनेति । यथा समिधो यजतेत्यादिपञ्चप्रयाजविधायकवाक्येषु यजतीत्यभ्यासेन यागभेद एव प्रतिपाद्यते, न तु यजतिपदमभिव्याहृतसमिधादिपदार्थानां बाधः । तथात्राप्यसन्नेव स भवतीत्यादिवाक्येषु ब्रह्मपदाभ्यासेन तत्समभिव्याहृतपुच्छप्रतिष्ठापदार्थभेद एव प्रतिपाद्यते न तु तयोर्बाधः । तथा चानन्दमयावयवत्वमक्षरब्रह्मणः श्रुतिप्रतिपाद्यमिति, तादृशश्रुतिबाधो ब्रह्मणापि कर्तुं न शक्यते इत्यर्थः । अन्यदपि दूषणं वदन्ति—मौर्ख्यमिति । स्यादिति । पूर्वमेव दूषणनिरासस्य कृतत्वादिति भावः । आनन्दमयस्याब्रह्मत्वे दूषणमुद्भावयन्ति—आनन्दमयस्येति । तत्समाधानामिति । अमुख्यरूपदूषणस्य असन्नेवेत्यभ्याससूचितमुख्यत्वसमाधानार्थमित्यर्थः । ज्ञानविषयस्याक्षरब्रह्मणः मुख्यत्वं पूर्वमुक्तमेव परन्तु फलनिरूपितं मुख्यत्वं तस्य नास्तीत्याहुः—विषयेति । ननु साधनविषयत्वेनावश्यकस्य पुच्छत्वोक्तिसम-

**पूर्वभावित्वाय। अत एव ज्ञानविषयत्वं प्रतिष्ठा च। आनन्दमयो ब्रह्मण्येव प्रतिष्ठित इति। अत्रावयवावयविभावो भाक्त इति तु युक्तं प्राणमयादीनामपि तथात्वात्। अन्तःस्थितस्य बाह्यानुरोधेन तथात्वमिति सर्वं सुस्थम्॥ १८॥ ५॥**

---

ज्ञसेत्यत आहुः—पुच्छेति । **पूर्वभावित्वाय** । परप्राप्तेः पूर्वं ज्ञातत्वबोधनाय **प्रतिष्ठा** चेति। ब्रह्मण इति शेषः । अत्र प्रमाणमाहुः—**आनन्दमये**ति । नन्वेवं चेद्वैतापत्तिरित्यत आहुः—**अत्रे**ति । अत्र आनन्दमये, अवयविनो भावः अवयवित्वम्। क्वचिदवयवावयविभाव इत्यपपाठः । तस्य आनन्दब्रह्मोभयनिष्ठत्वादत्रेत्यस्य आनन्दमयार्थकत्वं न स्यात्। एकस्यावयवित्वे पुच्छनिष्ठावयवत्वस्यार्थसिद्धत्वाच्च भाक्तः गौणः। औपचारिक इति यावत्। ननु भाक्तत्वे हंसाकारता तस्य किमर्थमुक्तेत्यत आहुः—**प्राणे**ति। प्राणमयादीनां जीवानाम् । **तथात्वात्** । हंसाकारत्वात् । एतेन बाह्यस्य हंसाकारत्वं सिद्धम् । **अन्तःस्थितस्ये**ति । आनन्दमयस्येति शेषः । **बाह्यानुरोधेन** । जीवानुरोधेन। **तथात्वं** हंसाकारत्वम्। **सर्वं सुस्थ**मिति। सर्वमानन्दमयाधिकरणं सुष्ठु तिष्ठतीति सुस्थमचलायमानमित्यर्थः ॥ **इति पञ्चममानन्दमयाधिकरणम्** ॥

---

१ अथाऽऽनन्दमयाधिकरणसमीक्षा—

(१) तत्र तावत् श्रीशङ्कराचार्याणां मते—ईक्षत्यधिकरणे 'तत्तेज ऐक्षत' इत्यमुख्येक्षणप्रायपाठो यथा जगत्कारणत्वे न निश्चायकः, न तथा आनन्दमय इत्यत्र मयटो विकारार्थत्वे प्रायपाठोऽनिश्चायक इति पूर्वेणास्य प्रत्युदाहरणसङ्गतिः । पूर्वपक्षे जीवस्यानन्दमयत्वेनोपास्तिः फलम्, सिद्धान्ते तु निर्विशेषब्रह्मैक्यप्रमितिरिति परमसिद्धान्तानुसारिणः; एकदेशिमते तु उभयत्रोपास्तिरिति विवेकः। तैत्तिरीयके श्रूयते—'अन्नमयः' इत्याद्युपक्रम्य 'अन्योऽन्तर आत्माऽऽनन्दमयः' इति। तत्र किम् आनन्दमयशब्देन 'सत्यं ज्ञानम्·····' इति प्रकृतं परं ब्रह्मैवोच्यते, किं वा अन्नमयादिवत् ब्रह्मणोऽर्थान्तरं जीव इति विशये, अर्थान्तरमिति पूर्वः पक्षः । सिद्धान्तस्तु—आनन्दमयः परमात्मैव । कुतः ? अभ्यासात् । आनन्दशब्दस्य ब्रह्मण्येव बहुकृत्वोऽभ्यासादित्यर्थः ॥

नन्वानन्दमयशब्दस्य विकारार्थत्वादित्याशङ्क्याह—न ब्रह्म आनन्दमयशब्दितम् । कुतः, विकारशब्दात् विकारार्थकमयट्प्रत्ययात्, ब्रह्मणश्चानन्दविकारत्वानुपपत्तेः इति चेत्, कस्मात्, प्राचुर्यात् प्रकृते मयट आनन्दप्राचुर्यवाचकत्वादित्यर्थः ॥

मयटः प्राचुर्यार्थकत्वे हेत्वन्तरमाह—तमानन्दं प्रति 'एष ह्येवानन्दयाति' इति ब्रह्मणो हेतुत्वव्यपदेशात् आनन्दमयः पर एवेत्यर्थः ॥

इतश्चानन्दमयः पर एवेत्याह—'ब्रह्मविदाप्नोति परम्' इत्युपक्रम्य 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यस्मिन्मन्त्रे यत् सत्याद्यात्मकं सर्वान्तरं ज्ञेयत्वेनोक्तम्, तत् मान्त्रवर्णिकं ब्रह्मैव 'आनन्दमयः' इति ब्राह्मणे गीयते, मन्त्रब्राह्मणयोरैकार्थ्यादित्यर्थः ॥

ईश्वरादितरो जीवो नानन्दमयः। कुतः, अनुपपत्तेः 'सोऽकामयत बहु स्यां प्रजायेयेति' इत्याध्रूयमाणस्य सृष्टेः प्राक् कामयितृत्वस्रष्टृत्वात्मकत्वादेरनुपपत्तेरित्यर्थः ॥

'रसो वै सः रसं ह्येवायं लब्ध्वानन्दी भवति' इति लब्धृलब्धव्यत्वेन जीवानन्दमययोर्भेदेन व्यपदिश्यमानत्वादित्यर्थः ॥

ननु तर्ह्यानन्दमयशब्देन प्रधानमुच्यताम्, तत्राह—अनुमीयत इत्यनुमानम् अनुमानैकगम्यं प्रधानम्, तस्य नापेक्षा आनन्दमयत्वेनात्र न स्वीकारः। कुतः, कामात्, तदधिकारे 'सोऽकामयत' इति कामयितृत्वश्रवणादित्यर्थः। अत्र प्रधाननिराकरणं प्रासङ्गिकमिति बोध्यम्॥

अस्मिन् आनन्दमये प्रकृत आत्मनि प्रबुद्धस्य अस्य जीवस्य तद्योगः तद्भावापत्तिः मुक्तिः, तम्, 'यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्ते' इत्यादिशास्त्रं शास्ति, तस्मान्नानन्दमयो जीवः, किन्तु परमात्मैवेत्यर्थः॥

इदं त्वेकदेशिमतम्। भगवत्पादीयमते त्वेवं सूत्रयोजना—आनन्दमयोऽभ्यासात्। ईक्षत्य-धिकरणे मुख्येक्षणात् ब्रह्मनिर्णये गौणप्रायपाठस्यानिश्चायकत्वं यथा, न तथेहाधारत्वावयवत्वयोः पुच्छशब्दलक्षकत्वसाम्यादवयवप्रायपाठस्यानिश्चायकत्वमस्तीति तेनास्य प्रत्युदाहरणसङ्गतिः। फलं त्वधस्तादभिहितम्। 'ब्रह्म पुच्छं प्रतिष्ठा' इत्यत्र किमानन्दमयावयवत्वेन ब्रह्मोच्यते, उत स्वप्रधा-नत्वेनेति पूर्वः पक्षः। सिद्धान्तस्तु—सोऽत्रानन्दमयशब्देन आनन्दमयवाक्यस्थब्रह्मपुच्छमित्यत्रत्य-ब्रह्मशब्द उपलक्ष्यते, स स्वप्रधानब्रह्मपरः। कुतः, अभ्यासात्, तस्यैव 'असन्नेव स भवति' इति श्लोके अभ्यस्यमानत्वादित्यर्थः॥

यत्तु पुच्छशब्दस्यावयवपरत्वमिति तत्राह—विकारशब्दान्नेति चेन्न प्राचुर्यात्। विकारशब्दात् अवयवपरपुच्छशब्दात् तत्समानाधिकरणब्रह्मशब्दो न स्वप्रधानब्रह्मपर इति चेत्, न, प्राचुर्यात् पुच्छमित्युच्यते, नावयवविवक्षया। अतः प्रतिष्ठासमभिव्याहारात् पुच्छशब्दस्याधारपरतया स्वप्रधानत्वेन ब्रह्मोच्यत इत्यर्थः॥

इतश्च पुच्छशब्दस्याधारपरत्वमित्याह—तद्धेतुव्यपदेशाच्च। तस्य ब्रह्मणः स्वविकारजातं प्रति हेतुत्वेन 'इदꣳसर्वमसृजत' इति वाक्ये व्यपदेशादित्यर्थः॥

इतश्च पुच्छवाक्ये ब्रह्म स्वप्रधानमित्याह—मान्त्रवर्णिकमेव च गीयते। यत् 'सत्यं ज्ञानमन-न्तम्' इत्यादिमन्त्रवर्णप्रतिपाद्यं ब्रह्म, तदेव 'पुच्छम्' इति ब्राह्मणवाक्ये स्वप्राधान्येन गीयते मन्त्र-ब्राह्मणयोरैकार्थ्यादित्यर्थः॥

ननु पुच्छवाक्ये आनन्दमयः स्वप्रधानत्वेन प्रतिपाद्यः किं न स्यादित्यत आह—नेतरोऽनुप-पत्तेः। इतर आनन्दमयोऽत्र न प्रतिपाद्यः प्रियादिमत्त्वेनाप्रिमवाक्योक्तसृष्ट्याद्यनुपपत्तेरित्यर्थः॥

इतश्चानन्दमयोऽत्र न प्रतिपाद्य इत्याह भेदव्यपदेशाच्च। 'रसꣳह्येवायं लब्ध्वानन्दी भवति' इत्यानन्दमयब्रह्मणोर्लब्धृलब्धव्यत्वेन रूपेण भेदव्यपदेशादित्यर्थः॥

ननु 'आनन्दो ब्रह्म' इत्यत्रत्यानन्दस्य ब्रह्मत्वादानन्दमयस्यापि ब्रह्मत्वमनुमीयत इत्यत आह—कामाच्च नानुमानापेक्षा। काम्यत इति कामः आनन्दः तस्य ब्रह्मत्वदर्शनात् न अनुमानेन आनन्दमयस्यापि ब्रह्मत्वमपेक्षितव्यम्, विकारार्थमयड्विधानादित्यर्थः॥,

इतोऽपि नानन्दमयोऽत्र प्रतिपाद्य इत्याह—अस्मिन्नस्य च तद्योगं शास्ति। अस्मिन् पुच्छवा-क्योक्ते ब्रह्मणि, प्रबुद्धस्य अस्य आनन्दमयस्य 'यदा ह्येव—' इति शास्त्रं तद्योगं तद्भावापत्तिं शास्ति, अतोऽस्यानन्दमयस्याप्रतिपाद्यत्वात् पुच्छब्रह्मैव स्वप्रधानं निर्विशेषं ज्ञेयमिति सिद्धम्॥

(२) श्रीरामानुजीये—आनन्दमयः परमात्मा। कुतः। अभ्यासात्। "सैषानन्दस्य मीमांसा भवति" इत्यारभ्य "यतो वाचो निवर्तन्ते" इत्येवमन्तेन वाक्येन शतगुणितोत्तरक्रमेण निरतिशय-

दशाशिरस्कोऽभ्यस्यमान आनन्दोऽनन्तदुःखमिश्रपरिमितसुखलवभागिनि जीवात्मन्यसम्भवन्निखिलहेयप्रत्यनीकं कल्याणैकतानं सकलेतरविलक्षणं परमात्मानमेव स्वाश्रयमावेदयति । यथाह–"तस्माद्वा एतस्माद्विज्ञानमयात् अन्योऽन्तर आत्माऽऽनन्दमयः" इति । विज्ञानमयो हि जीवः । न तु बुद्धिमात्रम् । मयट्प्रत्ययेन व्यतिरेकप्रतीतेः । प्राणमये त्वगत्या स्वार्थिक आश्रियते । इह तु तद्वतो जीवस्य सम्भवान्तानर्थकत्वं न्याय्यम् । बद्धो मुक्तश्च प्रत्यगात्मा ज्ञातैवेत्यभ्यधीष्महि । प्राणमयादौ तु मयडर्थासम्भवोऽनन्तरमेव वक्ष्यते । × × × अतो विज्ञानमयाज्जीवादन्य एव परमात्माऽऽनन्दमयः ॥

नायमानन्दमयो जीवादन्यः । विकारशब्दस्य मयट्प्रत्ययस्य श्रवणात् । मयड्वैतयोरिति प्रकृत्य नित्यं वृद्धशरादिभ्य इति विकारार्थे मयट् स्मर्यते । वृद्धश्चायमानन्दशब्दः । प्राचुर्येऽपि मयडस्ति । तत्प्रकृतवचने मयट् इति स्मृतेः । यथान्नमयो यज्ञ इति । स एवायं भविष्यति । नैवम् । अन्नमय इत्युपक्रमे विकारार्थत्वं दृष्टम् । अत औचित्यादस्यापि विकारार्थत्वमेव युक्तम् । किञ्च, प्राचुर्यार्थत्वेऽपि जीवादन्यत्वं न सिद्ध्यति । तथाहि । आनन्दप्रचुर इत्युक्ते दुःखमिश्रत्वमवर्जनीयम् । आनन्दस्य हि प्राचुर्यं दुःखस्याल्पत्वमवगमयति । दुःखमिश्रत्वमेव हि जीवत्वम् । अत औचित्यप्राप्तविकारार्थत्वमेव युक्तम् × × ×–नैतद्युक्तम् । कुतः ? प्राचुर्यात् । परस्मिन्ब्रह्मण्यानन्दप्राचुर्यात् । प्राचुर्यार्थे च मयटः सम्भवात् । एतदुक्तं भवति । शतगुणितोत्तरक्रमेणाभ्यमानस्यानन्दस्य जीवाश्रयत्वासम्भवाद्ब्रह्माश्रयोऽयमानन्द इति निश्चिते सति तस्मिन्ब्रह्मणि विकारासम्भवात्प्राचुर्येऽपि मयड्विधिसद्भावाच्चानन्दमयः परं ब्रह्मेत्यौचित्यात्प्रयोगप्रौढ्या च मयटो विकारार्थत्वमर्थविरोधान्न सम्भवति । किञ्च, औचित्यं प्राणमय एव परित्यक्तम् । तत्र विकारार्थत्वासम्भवात् । अतस्तत्र पञ्चवृत्तेर्वायोः प्राणवृत्तिमत्तामात्रेण प्राणमयत्वम् । × × × यदुक्तमानन्दप्राचुर्यमल्पदुःखसद्भावमवगमयतीति । तदसत् । तत्प्रचुरत्वं हि तत्प्रभूतत्वमेव । तच्चेतरस्य सत्तां नावगमयति । अपि तु तस्याल्पत्वं निवर्तयति । × × × यच्चोक्तं जीवस्यानन्दविकारत्वं सम्भवतीति । तदपि नोपपद्यते । जीवस्य ज्ञानानन्दैकरसस्य केनचिदाकारेण मृद इव घटाद्याकारेण परिणामः सकलश्रुतिस्मृतिन्यायविरुद्धः । संसारदशायां तु कर्मणा ज्ञानानन्दौ सङ्कुचितावित्युपपादयिष्यते । अतो विज्ञानमयाज्जीवादन्य एव परमात्मा ॥

॥ इतश्च जीवादन्य आनन्दमयः । "को ह्येवान्यात्कः प्राण्यात् यदेष आकाश आनन्दो न स्यात् । एष ह्येवानन्दयाति" इत्येष एव जीवानानन्दयतीति जीवानामानन्दहेतुरयं व्यपदिश्यते । अतश्चानन्दयितव्याज्जीवादानन्दयिताऽयमन्य आनन्दमयः परमात्मेति विज्ञायते । आनन्दमय एवात्रानन्दशब्देनोच्यत इति चानन्तरमेव वक्ष्यते ॥

इतश्च जीवादन्य आनन्दमयः । "सत्यं ज्ञानमनन्तं ब्रह्म" इति मन्त्रवर्णोदितं ब्रह्मैवानन्दमय इति गीयते । तच्च जीवस्वरूपादन्यतरं ब्रह्म । तथाहि–"ब्रह्मविदाप्नोति परम्" इति जीवस्य प्राप्यतया ब्रह्म निर्दिष्टम् । "तदेषाऽभ्युक्ता" इति तद्ब्रह्माभिमुखीकृत्य प्रतिपाद्यतया परिगृह्य ऋगेषाऽभ्येतृभिरुक्ता । ब्राह्मणोक्तस्यार्थस्य वैशद्यमनेन मन्त्रवर्णेन क्रियत इत्यर्थः । जीवोपासकस्य प्राप्यं ब्रह्म तस्माद्विलक्षणमेव । अनन्तरं च "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः" इत्यारभ्योत्तरोत्तरैर्ब्राह्मणैर्मन्त्रैश्च तदेव विशदीक्रियते । अतो जीवादन्य आनन्दमयः ॥

परमात्मन इतरो जीवशब्दाभिलप्यो मुक्तावस्थोऽपि न भवति मान्त्रवर्णिकः । कुतः । अनुपपत्तेः ।

तथाविधस्यात्मनो निरुपाधिकं विपश्चित्त्वं नोपपद्यते । इदमेव हि निरुपाधिकं विपश्चित्त्वं "सोऽका-मयत बहु स्यां प्रजायेये"ति सत्यसङ्कल्पत्वप्रदर्शनेन व्यपदिश्यते । XXX ।

इतश्चोभयावस्थात्प्रत्यगात्मनोऽन्य आनन्दमयः । "तस्माद्वा एतस्मादात्मन आकाशः" इत्यारभ्य मान्त्रवर्णिकं ब्रह्म व्यन्नमयप्राणमयमनोमय इव जीवादपि तस्य भेदं व्यपदिशति । "तस्माद्वा एतस्माद्विज्ञानमयात् अन्योऽन्तर आत्माऽऽनन्दमयः" इति । अतो जीवाद्भेदव्यपदेशाच्चायं मान्त्रवर्णिक आनन्दमयोऽन्य एवेति ज्ञायते ॥

इतश्च जीवादन्यः । जीवस्याविद्यापरवशस्य जगत्कारणत्वे ह्यवर्जनीयानुमानिकप्रधानादिशब्दा-भिधेयाचिद्वस्तुसंसर्गापेक्षा । तथैव हि चतुर्मुखादीनां कारणत्वम् । इह च "सोऽकामयत बहु स्यां प्रजायेय" इत्यचित्संसर्गरहितस्य स्वकामादेव विचित्रचिदचिद्वस्तुनः सृष्टिः "इदं सर्वमसृजत यदिदं किञ्च" इत्याम्नायते । अतोऽस्यानन्दमयस्य जगत्सृजतो नानुमानिकाचिद्वस्तुसंसर्गापेक्षा प्रती-यते । ततश्च जीवादन्य आनन्दमयः ॥

इतश्च जीवादन्यः । अस्मिन्नानन्दमयेऽस्य जीवस्य तद्योगं शास्त्यानन्दयोगं शास्ति शास्त्रं "रसो वै सः । रसं ह्येवायं लब्ध्वानन्दी भवति" इति रसशब्दाभिधेयानन्दमयलाभादयं जीवशब्दाभिलप-नीय आनन्दी भवतीत्युच्यमाने यल्लाभाद् आनन्दी भवति स स एवेत्युन्मत्तः को ब्रवीतीत्यर्थः । × × × अतः प्रधानशब्दाभिलप्यादर्थान्तरभूतस्य ब्रह्मणो जीवशब्दाभिलपनीयादपि वस्तुनो-ऽर्थान्तरत्वं सिद्धम् ॥

(३) माध्वे—'तमेव समन्वयं प्रकटयत्यानन्दमयोऽभ्यासादित्यादिना समस्तेनाध्यायेन प्रायेणा-भिप्रायेणान्यत्र प्रसिद्धानां शब्दानां परमात्मनि समन्वयः प्रदर्श्यतेऽस्मिन् पादे, नान्यथा तददृष्टेः । ब्रह्मजिज्ञासा कर्त्तव्येत्युक्तं तत्र 'ब्रह्म पुच्छं प्रतिष्ठे'त्यानन्दमयावयवरूपं प्रतीयते न ह्यवयविनं विनाऽवयवमात्रस्य ज्ञेयतेत्यत आह—आनन्देति । आनन्दमयो ब्रह्मादिप्रकृतिर्विष्णुर्वा, ब्रह्मशब्दाद्धि-रण्यगर्भस्य प्राप्तिः, शतानन्दनाम्ना च अप्रोक्तत्वाच्च रुद्रस्य । एवमन्येषामपि । 'मम योनिर्महद् ब्रह्मेति ब्रह्मशब्दाद्बहुभावाच्च प्रकृतेः ब्रह्म बृहज्जातिजीवकमलासनशब्दराशिष्विति ब्रह्मशब्दादेव सर्वजीवानां अन्नमयत्वादेश्च तथापि न ते आनन्दमयशब्देनोच्यन्ते, किन्तु विष्णुरेव 'तदेव ब्रह्म परमं कवीनाम्' एतमेव ब्रह्मेत्याचक्षते—'ब्रह्मशब्दः परे विष्णौ नान्यत्र क्वचिदिष्यते । असम्पूर्णः परे यस्मादुपचारेण वा भवेत् । ब्रह्मेति परमात्मेति भगवानिति शब्द्यते । वासुदेवात्मकं ब्रह्म मूलमन्त्रेण वा यतिः ।'—इत्यादिषु तस्मिन्नेव प्रसिद्धब्रह्मशब्दाभ्यासात् ॥

विकारात्मकत्वात्तदभिमानित्वाच्च युज्यते प्रकृत्यादीनां मयट् शब्दः न तु परमात्मनः—इति माभूत् प्रचुरानन्दत्वात्स्यानन्दमयः न तु तद्विकारत्वात् अन्नादीनाञ्च प्राचुर्य्यमेव मयतेऽस्ति चेति व्याख्यानात् तत्प्राचुर्य्यञ्च युज्यते, उपजीव्यत्वमेवायत्वं स वा एष इत्यस्य प्रारम्भात् येऽन्नं ब्रह्मोपासत इत्यादिब्रह्मशब्दाद् बहुरूपत्वाच्च न विकारत्वविरोधश्च न च पृथक् कल्पना युक्ता स्वरूपञ्च युज्यते, प्रचुरप्रकाशो रविरितिवत् ॥

'को ह्येवान्यात् कः प्राण्यादेष आकाश आनन्दो न स्यात्' इति ॥

ब्रह्मविदाप्नोति परमिति सूचयित्वा 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति मन्त्रवर्णे लक्षितमेव ब्रह्मशब्दानु-सन्धानाद्गीयते ।' न चावयवत्वविरोधः स शिरः स दक्षिणः पक्षः स उत्तरः पक्षः स आत्मा स पुच्छमिति तस्यैवावयवत्वोक्तेश्चतुर्वेदशिखायाम् । 'शिरो नारायणः पक्षो दक्षिणः सव्य एव च ।

प्रद्युम्नश्चानिरुद्धश्च सन्दोहो वासुदेवकः । नारायणोऽथ सन्दोहो वासुदेवः शिरोऽपि वा । पुच्छं सङ्कर्षणः प्रोक्त एक एव तु पञ्चधा । अङ्गाङ्गित्वेन भगवान् क्रीडते पुरुषोत्तमः । ऐश्वर्य्यान्न विरोधश्च चिन्त्यस्तस्मिन् जनार्दने । अतर्क्ये हि कुतस्तर्कस्त्वप्रमेये कुतः प्रमे'ति ब्रह्मसंहितायाम् । 'रसो वै सः रसं ह्येवायं लब्ध्वानन्दी भवति' इति रसशब्देन विशेषणात्तत् सारभूतं चिन्मात्रमेवोच्यते । इदमिति च दृश्यमानसन्निहितत्वात् । 'अनन्योऽप्यन्यशब्देन तथैको बहुरूपवान् । प्रोच्यते भगवान् विष्णुरैश्वर्य्यात् पुरुषोत्तमः' इति ब्रह्माण्डे ॥

न चोक्तप्राप्त्या विरिञ्च्यादिरुच्यते । न ह्यन्यज्ञानान्मोक्ष उपपद्यते । 'तमेव विद्वानमृत इव भवति नान्यः पन्था विद्यते अयनाय' इति ह्युक्तम् ॥

'ते ये शतं प्रजापतेरानन्दाः स एको ब्रह्मण आनन्दः' 'अदृश्येऽनात्म्येऽनिलयनेऽभयं प्रतिष्ठां विन्दते अथ सोऽभयं गतो भवति स यश्चायं पुरुषः', इत्यादिभेदेन व्यपदेशात् । न च 'तत् त्वमसि'—अहं ब्रह्मासीत्यादिश्रुतिविरोधः, 'नामानि सर्वाणि यमाविशन्ती'ति तच्छब्दवाच्योक्तेः । 'इदं हि विश्वं भगवानिवेतरो यतो जगत्स्थाननिरोधसम्भवाः । 'भसर्वः सर्व' इत्यपि 'विद्यात्मनि भिदा बोधो भेदहष्टाभिमानेन निःसङ्गेनापि कर्म्मणा । जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वात्मैव सन्नानात्मेव प्रत्यङ् पराङिवैक ईयते बहुधेयते स पुरुषः स ईश्वरः स ब्रह्म सर्वान्तर्यामिको विष्णुः सर्वनाम्नाभिधीयते । 'एषोऽहं त्वमसौ चेति न तु सर्वस्वरूपतः । नैतदिच्छन्ति पुरुषमेकं कुरुकुलोद्वह' इत्यादेश्च । उक्ता च प्राप्तिः ब्रह्मैव, सन्नित्यपि जीव एव, ब्रह्मशब्द उपपद्यते च विरोधे, प्रमादात्मकत्वाद्बन्धनस्य विमुक्तत्वं च युज्यते 'मुक्तिर्हित्वान्यथारूपं स्वरूपेण व्यवस्थितिः' इति भागवते ॥

न तत्तदनुमानविरोधः यथाकामं ह्यनुमातुं शक्यते अतो न तत्त्वे पृथगनुमानमपेक्षते । उक्तञ्च स्कान्दे—'यथा कामानुगा यस्मात्तस्मात् सानपगा श्रुतेः । पूर्वापराविरोधाय चेष्यते नान्यथा क्वचित्' इति 'नैषा तर्केण मतिरापनेयेति' च ॥

अस्य जीवस्य युक्तिसमुच्चये चशब्दः । 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता । अनिलयनेऽभयं प्रतिष्ठां विन्दते एतमानन्दमयमात्मानमुपसङ्क्रामति' इत्यादि ॥

(४) निम्बार्काचार्याः—आनन्दमयः परमात्मैव न तु जीवः, कुतः, परमात्मविषयकानन्दपदाभ्यासात् ॥

विकारार्थे मयट्श्रवणात्आनन्दमयः परमात्मेति चेत्, न; कस्मात्, प्राचुर्यार्थकस्यापि मयटः स्मरणात् ॥

जीवानन्दहेतुत्वादपि परमात्मैवानन्दमयः ॥

"सत्यं ज्ञानमनन्तं ब्रह्मे"ति मन्त्रोक्तं मान्त्रवर्णिकं तदेवानन्दशब्देन गीयते ॥

आनन्दमयपदार्थमुद्दिश्यश्रूयमाणानां तदसाधारणधर्माणां तदितरस्मिन्ननुपपत्तेरितरो जीवो नानन्दमयपदार्थः ॥

"रसं ह्येवायं लब्ध्वानन्दी भवति" इति वाक्येन लब्धृलब्धव्ययोर्भेदव्यपदेशाज्जीवो नानन्दमयः ॥

प्रत्यगात्मनः कारणत्वस्वीकारेऽनुमानस्य प्रधानस्य कारणादिरूपस्यापेक्षा भवेत्कुलालादेर्घटादिजनने मृदाद्यपेक्षावत्, अप्राकृतस्यानन्दमयस्य सर्वशक्तेः पुरुषोत्तमस्य तु न, कुतः, कामात्सङ्कल्पादेव "सोऽकामयत बहु स्याम्" इत्यादिश्रुतेः । अतस्तद्भिन्न आनन्दमयः ॥

१ नैषा तर्केण मतिरापनेयेति वास्तविकः पाठः । आपनेया, आपनीयेत्युभावपि आमादिको पाठाविति श्रीगिरिधरादयः प्राहुः ।

तद्योगमानन्दयोगं शास्ति श्रुतिः "रसो वै सः रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति" इति, जीवस्य यल्लाभादानन्दयोगः स तस्मादन्य इति सिद्धम् ॥

(५) भैक्षवे—तैत्तिरीयके "ब्रह्मविदाप्नोति परम्", "तदेषाऽभ्युक्ता" "सत्यं ज्ञानमनन्तं ब्रह्म" "यो वेद निहितं गुहायां परमे व्योमन् सोऽश्नुते सर्वान्कामान् सह ब्रह्मणा विपश्चिते"त्यनेनादौ सत्यत्वादिगुहाप्रविष्टत्वात्तद्गुणैर्ब्रह्मोपास्यत्वेन विधायास्यानन्तत्वगुहाप्रवेशौ प्रतिपादयितुं ब्रह्मणः सकाशादाकाशादिक्रमेणान्नमयविराट्पुरुषपर्यन्तां सृष्टिमुक्त्वा पश्चादन्नमयमारभ्यान्तरतः क्रमेण सर्वान्तर आनन्दमय आम्नायते "तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर आत्माऽऽनन्दमयः" इति । तत्र सन्दिह्यते, किमयमानन्दमयः प्रकृतं ब्रह्मैव, किं वा हिरण्यगर्भोऽथवा प्रधानादिरिति । तत्र प्रतिभाति हिरण्यगर्भ एवायमानन्दमयः, अन्नमयादिविकारात्मप्राये पाठाद्विकारार्थकमयट्शब्दश्च हिरण्यगर्भे युक्तः सुखात्मकसत्त्वकार्यत्वात् । ननु ब्रह्मणि पुच्छत्वेनैव ब्रह्मणो निर्देशात्प्रकरणापेक्षया शब्दस्य बलवत्त्वाच्च । अथवा प्रधानमेवास्तु तथा, प्राचुर्यार्थकमयटः सुखदुःखमोहात्मकैः प्रधाने सम्भवात्, न तु ब्रह्मणि, आत्मनो निर्गुणचिन्मात्ररूपत्वात् । तथाचानन्दादयः प्रधानस्येति वक्ष्यतीति । तत्रायं सिद्धान्तः । आनन्दमय आत्मा ब्रह्मैव । कुतः, अभ्यासात् । ब्रह्मण्यानन्दमयतायाः पुनर्वचनात् । "ते ये शतं प्रजापतेरानन्दाः स एको ब्रह्मण आनन्दः", "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह । आनन्दं ब्राह्मणो विद्वान्न बिभेति कुतश्चनेति" वाक्यशेषे "विज्ञानमानन्दं ब्रह्म एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती"त्यादिश्रुत्यन्तरेषु चेत्यर्थः । ननु प्रचुरानन्दत्वस्यैवायमभ्यासो नानन्दमयस्येति चेन्न, अरण्यमयो ग्राम इत्यादाविवात्र मयटः प्राचुर्यार्थताया एवोत्तरसूत्रेण वक्ष्यमाणत्वात् । नन्वेवं सहपाठादन्नमयादिरपि ब्रह्म स्यात्, आनन्दमयत्ववदन्नमयत्वादेरप्यौपाधिकत्वसम्भवादिति चेत्, न; अन्नादिष्वेव ब्रह्मदृष्टेः कथनात् न पुनर्ब्रह्मण्यन्नादिप्राचुर्यस्येति वैषम्यात् । अथैवमानन्दमयस्य ब्रह्मत्वे कथं तदवयवे ब्रह्मशब्दप्रयोगो "ब्रह्मपुच्छं प्रतिष्ठे"ति । नैवम् । सोपाधिनिरुपाधिभेदेनावयवविभागकल्पनात् । ननु भवन्मते अधिष्ठानरूपस्य ब्रह्मणोऽनानन्दत्वात्कथमानन्दमयावयवत्वमिति चेत्, यथा अप्राणस्याप्याकाशस्य प्राणाधारत्वेन काल्पनिकं प्राणमयपुच्छरूपप्रतिष्ठात्वं तथेति गृहाण । यथा चानन्दस्य नात्मरूपत्वं न वात्मधर्मत्वं तथोक्तं पञ्चसूत्र्यां, वक्ष्यते च "आनन्दादयः प्रधानस्य" "प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे" इति सूत्रयोरिति ग्रन्थबाहुल्यभिया नेह प्रस्तूयते तस्माद्ब्रह्मणः सत्यसङ्कल्पत्वादिवत्पूर्णानन्दत्वमप्यौपाधिकमप्युपासनार्थमेवात्र मीमांसितम्, न पुनश्चैतन्यवदात्मधर्माभिप्रायेणेति मन्तव्यम् । एतेनानन्दमयवाक्यस्य ब्रह्मपरत्वावधारणेन तद्वाक्यशेषीभूता अपरेऽपि गुणाः "एष ह्येवानन्दयाति" "भीषास्माद्वातः पवते भीषोदेति सूर्यः" इत्यादिभिरुक्ताः, ब्रह्मणि प्रतिपादिता भवन्तीत्याशयः ।

आधुनिकास्तु, श्रुतावानन्दमयः करणोपाधिर्जीवो वा भवतु, न तु ब्रह्म, ब्रह्मणः पुच्छत्वेनैव निर्देशात्, आनन्दमयस्य विकारप्राये पाठाच्च । सूत्राणि त्वेवं योजनीयानि, आनन्दमयवाक्ये ब्रह्मपुच्छं प्रतिष्ठेत्यत्र मुख्यमेव ब्रह्म ग्राह्यम्, न तु गौणं हिरण्यगर्भादि । कुतः, अभ्यासात्, असन्नेव स भवत्यसद्ब्रह्मेति वेदविदिति निगमनश्लोके ब्रह्मणः केवलस्य पुनरुच्यमानत्वात्, निरुपपदब्रह्मशब्दस्य परब्रह्मवाचकत्वात्, आगामिसूत्रेषु च विकारादिशब्दानवयवादिलक्षणया व्याख्याय

यथा कथञ्चिदर्थः कर्तव्य इत्याहुः। तच्चिन्त्यम्। सूत्रे यथाश्रुतार्थत्यागानौचित्यात्। लिङ्गपुराणादि-विरोधाच्च। यथा लैङ्गे शिववाक्यम्—

"अन्नमयोऽसौ भूतात्मा सोऽन्नप्रचुरको यतः। प्राणमयश्च प्राणात्मा सत्यसङ्कल्पात्मा मनोमयः। विज्ञानात्मा जीव एव विज्ञानमय उच्यते। य आनन्दमयो ह्यात्मा देयात्मा परमेश्वरः। सोऽहमेव जगत्सर्वमहं सर्वत्र संस्थितः॥" इति।

ननु विकारवाची मयडन्ताऽऽनन्दमयशब्द औपाधिकनित्यानन्दं परं ब्रह्म न वक्तुमर्हति ब्रह्मणोऽकार्यत्वात्, किन्तु, तत्कार्यभूतं हिरण्यगर्भादिकमेवेत्याशङ्क्यापाकरोति—विकारशब्दान्नेति चेन्न प्राचुर्यात्। अन्नरसमयसाहचर्येणानन्दविकारवाचकान्मयट्शब्दान्नानन्दमयः परब्रह्मेति चेन्न, प्राचुर्यात्, "स एको ब्रह्मण आनन्दः" इत्यादिवाक्यशेषे प्राचुर्यश्रवणात्र विकारार्थतेति शेषः। यच्चोक्तं सहपठितस्यान्नरसमयस्य विकारत्वम्, अन्नात्पुरुष इति श्रवणादिति, तन्न, अन्नात्पुरुष इति वचने तद्धेन्नविकारत्वमेवायाति, न त्वन्नरसविकारत्वम्, अन्नरसमय एव च पुरुष आद्यपर्यायप्रो-क्तोऽन्नमय इति, अतो नास्ति विकारप्रायपाठः। प्रत्युत प्राणमयमनोमयादिप्राचुर्यप्रायपाठादन्नर-समयस्यापि तत्प्राचुर्यार्थकतैव निर्णीयते। प्राणमयान्तर्गताकाशस्यापि प्राणप्राचुर्यस्यैवानुभवसिद्ध-त्वात्प्राणविकारत्वानुपपत्तेश्च आनन्दमयस्य च प्राचुर्यार्थकत्वं श्रुतेरेवावगम्यते। मनुष्यमारभ्यो-त्तरोत्तरसिस्थाने शतगुणानन्दमुक्त्वा ब्रह्मानन्दस्य निरतिशयत्वप्रतिपादनादिति।

इतश्च न विकारार्थे मयट्। आनन्दहेतुत्वं ह्यानन्दमयस्य व्यपदिशतीति वाक्यशेषः। "एष ह्येवानन्दयाती"ति। आनन्दयतीत्यर्थः। स च व्यपदेश एवकारघटितो न विकारत्वे सत्युपपद्यते।

न केवलमभ्यासादेवानन्दमयो ब्रह्म, अपि त्वितोऽपीत्याह—मान्त्रवर्णिकमेव च गीयते। चो हेतौ। "सत्यं ज्ञानमनन्तं ब्रह्मे"त्यादौ मन्त्रात्मके वर्णे यत्प्रकृतं ब्रह्म तन्मान्त्रवर्णिकं तदेव च गुहाप्रविष्टत्वेन प्रतिपादयन्त्या ब्राह्मणश्रुत्या आनन्दमयरूपेण गीयते, स्तूयते, न त्वितरः, मन्त्र-ब्राह्मणयोर्भिन्नार्थत्वे वाक्यभेदप्रसङ्गात्, एकस्य प्रकरणेऽन्यस्याप्रकृतस्य स्तव्यत्वानौचित्याच्चेत्यर्थः।

इतरो हिरण्यगर्भादिरूपो जीव आनन्दमयो न भवति, कुतः, अनुपपत्तेः, "सोऽकामयत बहुस्यां प्रजायेयेति, स तपोऽतप्यत, स तपस्तप्त्वा, इदं सर्वमसृजत यदिदं किञ्च, तत्सृष्ट्वा तदे-वानुप्राविशत्, तदनुप्रविश्य, सच्च त्यच्चाभवत्" इत्यादीनां "तदात्मानं स्वयमकुरुते"त्यन्तानां ब्रह्म-लिङ्गानां जीवेऽनुपपत्तेरित्यर्थः।

इतश्च न जीव आनन्दमयः। कुतः। भेदव्यपदेशात्। "एतस्माद्विज्ञानमयादन्योऽन्तर आत्मा आनन्दमयः" इत्यनेनेत्यर्थः। अयम्भावः—अन्नमयप्राणमयमनोमयविज्ञानमयाश्चत्वारः पुरुषाः स्थूलशरीरप्राणमनोबुद्ध्युपाधिका जीवभेदा एव, तत्र स्थूलशरीरिणो मनुष्यादयः, तेषां स्थूलश-रीरं विना भोगाद्यभावात्, प्राणादिशरीरिणश्च त्रिविधा देवा उत्तरोत्तरं श्रेष्ठाः सूक्ष्मशरीरैरेव पूर्वनिरपेक्षैस्तेषां भोक्तृत्वात्, श्रुतौ च विज्ञानमयादूर्ध्वं क्वापि जीवावस्था नास्ति, बुद्धिं विना जीवव्यपदेशाभावात्, तथा च श्रुतिः "कतम आत्मेति योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः-पुरुषः" इति या चान्या जीवावस्था विलयरूपा, सा श्रुतिषु, नदीसमुद्रवदविभागत ईश्वराङ्ग-त्वेनोच्यते, "परेऽव्यये सर्व एकीभवन्ति" इत्येव श्रवणात्। एवं च सति विज्ञानमयाद्व्यवच्छि-न्नजीवाद्भेदेनोच्यमान आनन्दमयो न जीवो भवितुमर्हति, विज्ञानमयावस्थाया उपरि जीवानां

ब्रह्मण्येकीभावस्यैव श्रुतिषु कथनात्, तस्माद्विज्ञानमयावस्थजीवस्यान्तस्थोऽन्तर्याम्येवानन्दमय इति गम्यते, तद्भेदेन तदन्तरत्ववचनादिति, एवमेव समानार्थके, श्रुत्यन्तरेऽपि भेदव्यपदेशोऽस्ति "य आत्मनि तिष्ठन्नात्मनोऽन्तर एष त आत्मा अन्तर्याम्यमृतः" इति । केचित्तु, "रसो वै सः रसं ह्येवायं लब्ध्वाऽऽनन्दी भवती"ति वाक्यशेषे रसशब्दवाच्यादानन्दमयाल्लब्धव्याल्लब्धुर्जीवस्य भेदेऽव्यपदेशादिति सूत्रार्थमाहुः, तन्न; अत्र वाक्ये भेदवाचकशब्दाभावात् । आर्थिको भेद इति चेन्न; "आत्मलाभात्परो नान्य आत्मा भेदादिवर्जितः" इत्यादिस्मृतावभेदेऽपि लब्धृलब्धव्यव्यवहारदर्शनादिति । ननु सूत्रकारेण जीवब्रह्मणोर्भेदः कथमुच्यते ? "तत्त्वमसि" स एव जीवः सुखदुःखमोक्षेत्याद्यभेदप्रतिपादकवाक्यशतव्याकोपादिति चेत्, न, भेदप्रतिपादकसूत्रजातबलेनैवास्माभिस्तत्त्वमस्यादीनां ब्रह्मात्मतामात्रे तात्पर्यस्य विस्तरेण पञ्चसूत्र्यां व्यवस्थापितत्वात्, अखण्डतात्पर्यस्य च प्रयोजनादिभिः पराकृतत्वात्स एव जीव इत्यादिवाक्यानां च जडसाधारण्येनाविभागलक्षणाभेदपरत्वस्य तत्रैव व्याख्यातत्वात्, अखण्डतात्त्विकाभेदस्य मोक्षहेतुविवेकाख्यभेदबोधकेनैत्यस्थूलादिश्रुतिशतविरोधेन "विष्णोः स्वरूपात्परतो हि तेऽन्ये रूपे प्रधानं पुरुषश्च विप्रे"त्यादिश्रुतिशतविरोधेन चापास्तत्वात् । अत एव भेदनिन्दावाक्यानामपि विभागलक्षणभेदपरत्वस्योक्तत्वात्, ग्रन्थवावृद्ध्यभिया तु नात्र विपुलीक्रियते पुनश्च यथास्थानमेतद्विस्तारयिष्यामः ।

यत्तु अण्डत्वादीनामौपाधिकभेदपरत्वेन भेदसूत्राणां व्याख्यातं तत्तदा कथञ्चित् सम्भाव्येत यदि "उभयव्यपदेशात्त्वहिकुण्डलवत्" "प्रकाशाश्रयवद्वा तेजस्त्वात्" इत्यादिसूत्रैरभेदवाक्यानां भेदाभेदपरत्वमाचार्यो नाचक्षीतेति । ननु मा भवतु जीव आनन्दमयः प्रधानादिकं तु स्यादित्याशङ्कयाह—कामाच्च नानुमानापेक्षेति । श्रुतिषु सङ्क्षेपेणोक्तम् । विशेषतो विस्तरतश्चानुमीयते स्मर्यत इत्यनुमानं प्राधानिकं तदप्यानन्दमयवाक्येनापेक्षणीयम्, कुतः, कामात्सोऽकामयतेति कामनाश्रवणादित्यर्थः । ननु "कामः सङ्कल्पो विचिकित्से"त्यादिश्रुत्या कामस्य प्राकृतत्वप्रतिपादनात्, कामश्रुतिः प्रकृतेरानन्दमयत्वसाधिकैवेति चेत्, न, तात्पर्यापरिज्ञानात्, न हि प्रकृतिस्वातन्त्र्यवादी सकलां सृष्टिं सङ्कल्पपूर्विकां वदति बौद्धसृष्टेरेव साङ्कल्पिकत्वाभ्युपगमात्, न त्वबुद्धिपूर्वकस्य महदादिरूपप्राकृतसर्गस्य; अत्र तु महत्तत्त्वस्य विज्ञानाख्यस्यापि सृष्टिं सङ्कल्पपूर्विकां श्रुतिर्वदति "सोऽकामयते"त्यादिना "विज्ञानं चाविज्ञानं चे"त्यन्तेन, अतः कामपूर्वकविज्ञानादिस्रष्टृत्वेन केवलं प्रधानं नानन्दमयः प्रधाने नित्यसङ्कल्पाङ्गीकारे तु सिद्ध एव नित्यः सर्वज्ञः ईश्वरः सङ्कल्पज्ञाननियत्वात्, तथा च प्रधानाख्योपाधिमानमुख्यश्चेतनविशेष एवानन्दमय उचितः न तु तदुपसर्जनीभूतं प्रधानम् । किञ्च, सर्वजनीनमनुभवानुसारेण ब्रह्मध्यानायोपदिशति श्रुतिः, लोके च स्फटिकलौहित्यवदौपाधिकोऽपि कामादिर्ज्ञानसामानाधिकरण्येनैव व्यवह्रियते । विद्यया अहं जानामीतिवदहमितिवदहमिच्छाम्यहं सुखीत्यादिव्यवहारस्यात्मनेव सर्वैरभ्युपगमात्, न तु प्रधानादौ । विचारादेव तु प्रधानादावित्युच्यते, तस्मादानन्दकामादेः प्राकृतत्वेऽपि सोऽकामयतेति लोकानुसारिवाक्यस्य केवले प्रधानेऽचेतनत्वादसम्भव इति साधूक्तम् । यथा योधेषु वर्तमानौ जयपराजयौ राजन्युपचर्येते तत्फलभोक्तृतया स्वामित्वात्, तथोपाधिस्थाः सर्वे व्यापारास्तदध्यक्षचेतनेषूपचर्यन्ते स्वामित्वात्, न तु विद्वद्भिरप्यन्यत्र व्यपदिश्यन्ते, अनादिवाग्व्यवहारानुसारात्, अतः कामस्योपाधिधर्मत्वेऽपि सोऽकामयतेति श्रुतिरचेतनेऽनुपपन्नैवेति ।

इतश्च जीवो वा प्रधानादिर्वा नानन्दमय इत्याह—अस्मिन्नस्य च तद्योगं शास्ति । किञ्च, अस्मिन् प्रकरणे अस्य इतरशब्दोक्तजीवस्य तद्योगं तत्रानन्दमये योगमविभागं वेद्यतया श्रुतिः शास्ति उपदिशति "यदा ह्येवैष एतस्मिन्नदृश्ये अनात्म्ये अनिरुक्ते अनिलयने अभयं प्रतिष्ठां विन्दते, अथ सोऽभयं गतो भवति, यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते, अथ तस्य भयं भवति, तत्त्वेव भयं विदुषोऽमन्वानस्ये"ति, अस्यायमर्थः, यदा एव जीव एतस्मिन्नानन्दमये ब्रह्मणि अदृश्ये चक्षुराद्यगोचरेऽनात्म्ये आत्मान्तरशून्ये परमात्मनो जीववदात्मान्तराभावात्, अनिरुक्ते, विशिष्यशब्दागोचरेऽनिलयने जीववल्लयशून्ये सदा प्रबुद्धे भयं यथा स्यात्तथा प्रतिष्ठामविभागं समुद्रे नद्या इव विन्दते लभते, लाभश्चात्रानुभवरूप उत्तरवाक्यात्; अथ तदनुभवानन्तरमेव स विद्वान्संसारभयादुत्तीर्णो भवति, यदा तु एतस्मिन्नुत् अरं अल्पमपि अन्तरं विभागं कुरुते अहं ततः पृथक् स्वतन्त्र इति मन्यते, अथ तस्य संसारभयं भवति, यतस्तदेव ब्रह्मामन्वानस्याचिन्तकस्य भयं भयहेतुर्विदुषो विद्वदृष्ट्येति, न च जीवे स्वस्य विभागः सम्भवति, तस्य भेदतन्त्रत्वात् । नापि प्रधानेऽन्यत्र वाऽचेतने अविभागवेदनाज्जीवस्याभयमात्यन्तिकं सम्भवति; अतो न तयोरानन्दमयत्वमिति ॥

(६) भास्कराचार्याः—तैत्तिरीयकेऽन्नमयं प्राणमयं मनोमयं विज्ञानमयं चानुक्रम्याम्नायते । तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर आत्मानन्दमय इति । तत्र संशयः । किमानन्दमयशब्देन प्रकृते ब्रह्मोच्यते किं वा ततोऽर्थान्तरमिति । किं पुनरत्र युक्तम् । आनन्दमयः प्राप्तैश्वर्यो हिरण्यगर्भादिर्व्यपदिश्यते न मुख्यः परमात्मा, कस्मात् ? प्रियाद्यवयवयोगाच्छारीरत्वश्रवणात्, तस्य प्रियमेव शिर इति । यथान्नमयादीनामवयवयोगादमुख्यमात्मत्वमेवं तत्रापि स्याद्विकारापन्न एव कश्चिदात्मा निर्दिश्यते । आनन्दमय इति च विकारे मयट्प्रत्ययश्रवणात् । तस्यैष एव शारीर आत्मा यः पूर्वस्येति शारीरयोगः श्रूयते । तस्य पूर्वस्य विज्ञानमयस्यैष एव शरीरे भवः शारीर आत्मा यः स आनन्दमय इत्यर्थः । तस्मात् संसार्येवात्माऽऽनन्दमय इति प्राप्ते ब्रूमः । ब्रह्मैवानन्दमयो न विकारापन्नः, कुतः ? अभ्यासात्, आनन्दशब्दस्य यदेष आकाश आनन्दो न स्यात् सैषानन्दस्य मीमांसा आनन्दो ब्रह्मेति व्यजानादानन्दं ब्रह्मणो विद्वानेतमानन्दमयमात्मानमुपसङ्क्रामतीति । यत् पुनरुक्तमन्नमयादिवदमुख्य आत्मेति । नायं दोषः । सर्वान्तरश्रुतेः आनन्दमयः परमात्मेति निश्चीयते । अन्नमयादीनामापेक्षिकमन्तरत्वं शाखाचन्द्रन्यायेन प्रतिपत्तिसौकर्यार्थमुपन्यस्यते सत्यं ज्ञानमनन्तं ब्रह्मेति प्रकृतस्य ब्रह्मणः प्रतिपादयिषितत्वात् । उपक्रमोपसंहारयोरेकार्थत्वमेकवाक्यत्वात् । यथा जातेष्टौ वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते तस्य यदष्टाकपालो भवतीत्यष्टत्वादीनामुपन्यासो द्वादशकपालप्रशंसार्थं एवमन्नाद्यन्यार्थोऽन्नमयाद्युपन्यासो न मुख्यार्थप्रतिपत्त्यर्थो नोपासनार्थो वा वाक्यभेदप्रसङ्गात् । न चात्रोपास्येति विधिः श्रूयते फलं त्वन्यतः सिद्धमनूद्यते मनोमये तूभयं नास्ति । छान्दोग्ये हि सप्तमे नामोपास्वेति प्रतिवाक्यं विधिश्रुतेः । फलश्रुत्या चावान्तरपुरुषार्थो विवक्षितोऽवगम्यते । तस्मादानन्दमयप्रतिपादनं कृत्स्नं प्रकरणं न स्वनिष्ठमिति यदुक्तमवयवयोग इति तद् प्रायापत्यापि पुरुषविधित्वकल्पनार्थो नावयवशरीरप्रतिपत्त्यर्थं इत्यदोषः ॥

विकारार्थवाचिनो मयट्प्रत्ययस्य दर्शनादन्नमयादिवदमुख्य आत्माऽऽनन्दमय इति चेत्, न, प्राचुर्यार्थेऽपि मयटो विधानात् । प्रभूतवचने मयडिति हि प्रभूतायां विधीयते । यथान्नमयो यज्ञ इति ॥

तस्य प्रकृतस्य ब्रह्मण आनन्दहेतुत्वं व्यपदिशति श्रुतिः । एष ह्येवानन्दयातीति । आनन्दयतीत्यर्थो यो ह्यन्येभ्यो धनं प्रयच्छति स प्रचुरधन इति प्रसिद्धमेवं यो जीवानानन्दयति स प्रचुरानन्द इति गम्यते ॥

यन्मन्त्रेणोक्तं तन्मान्त्रवर्णिकम् । सत्यं ज्ञानमनन्तं ब्रह्मेति तदेवात्रानन्दमयशब्देन गीयते ॥

इतरो जीवः संसारी नानन्दमयः, कस्मात्, अनुपपत्तेः, आनन्दमयं प्रकृत्य सोऽकामयत बहु स्यां प्रजायेयेति स्रष्टृत्वं श्रूयमाणं जीवे नोपपद्यते । सच्च त्यच्चाभवदिति च सर्वात्मकत्वम् ॥

इतश्च नानन्दमयः संसारी प्रकृतमानन्दमयशब्देनोक्त्वा तथेतरं लब्धारं दर्शयति "रसो वै सः, रसं ह्येवायं लब्ध्वानन्दी भवती"ति, न हि लब्धैव लब्धव्यो भवतीति । अत्र केचित् स्वमतिकल्पितदर्शनपरित्राणाय सूत्रार्थं विनाशयन्तो व्याचक्षते । न हीश्वरादन्यः संसारी विद्यते स एव संसारी । तत्र नेतरोऽनुपपत्तेर्भेदव्यपदेशाच्चेति कथं सूत्रद्वयमिति चेत् । नैष दोषः । उपाधिकृतभेदमानाङ्गीकरणादिदमुच्यते । यथा घटाकाशः पटाकाश इत्याकाशस्य भेदव्यपदेशः कल्पनामात्रेणेति । तदेतदयुक्तम् । यथाश्रुतसूत्रार्थसम्भवे भक्त्या व्याख्यानस्यापन्याय्यत्वात् । यथा चेश्वरादन्यस्यासंसारित्वं जीवपरयोश्च भेदाभेदौ तथोत्तरत्रांशो नानाव्यपदेशादित्येवमादौ विस्पष्टं वक्ष्यामः ॥

ननु च सत्त्वगुणस्यानन्दहेतोः प्रधाने विद्यमानत्वात् तदेव प्रधानमानन्दमयं स्यादित्युच्यते । अनुमीयत इत्यनुमानं प्रधानं तदपेक्षा चास्मिन्नानन्दमये वाक्ये नास्ति, कुतः, कामाच्च । सोऽकामयत बहु स्यामिति । कामश्चेच्छा चेतनधर्मो नाचेतनस्य गतिसामान्यसमर्थनायैवं प्रसङ्गादुक्तम् ॥

इतश्चानन्दमयः परो न संसारी न प्रधानं, अस्मिन्नानन्दमये प्रकृते अस्य जीवस्य प्रतिबुद्धस्य तद्योगं तेन योगं मुक्तिं शास्ति शास्त्रम्, "यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते अथ सोऽभयं गतो भवती"ति तदेतस्मिन् मुक्तिशासनं परमात्मपरिग्रहेऽवकल्पते नान्यथेति स्थितम् । अत्र केचिदिमं सिद्धान्तं दूषयित्वा पुच्छवद्ब्रह्मप्रतिपादनाय यतन्ते । नानन्दमयस्य ब्रह्मत्वं विकारार्थमयट्प्रवाहपतितत्वात् । अयमपि विकारार्थ एव युक्तः प्रियशिरस्त्वाद्यवयवयोगाच्च ब्रह्मपुच्छं प्रतिष्ठेति च एकस्यावयवावयवित्वासामञ्जस्यात् ब्रह्मपुच्छमित्यत्र च ब्रह्मशब्दप्रयोगात् । "असन्नेव स भवति असद्ब्रह्मेति वेद चेदि"ति चानुकर्षात् । किं चानन्दमये ब्रह्मण्यभ्युपगम्यमाने सविशेषं ब्रह्माभ्युपगतं स्यात् निर्विशेषं त्विह वाक्यशेषे श्रूयते । यतो वाचो निवर्तन्त इति । किं चानन्दप्रचुर इत्युक्ते दुःखाल्पत्वमपि गम्यते । प्राचुर्यस्य प्रतियोग्यल्पतापेक्षित्वात् । प्रातिपदिकमात्राभ्यासाच्च नानन्दमयाभ्यासः शक्यते वर्णयितुं, ततो ब्रह्मपुच्छं प्रतिष्ठेति, ब्रह्म प्रतिपत्तव्यम् । आनन्दमयस्तु संसारी कश्चिदिति । सूत्राणि त्वेवं योजयितव्यानि । आनन्दमय इत्येतस्मिन् वाक्ये ब्रह्मपुच्छं प्रतिष्ठेति प्रकृतं ब्रह्म प्रतिपत्तव्यं कस्माद्धेर्विकारस्यानन्दप्रातिपदिकस्याभ्यासात् । विकारशब्दान्नेति चेद्विकारशब्दोऽवयवशब्दः पुच्छशब्द इत्यर्थः । तत्रोत्तरम् । न । प्रायापत्तिः, सर्वत्र पुच्छशब्दप्रयोगानुवृत्त्यात्रापि पुच्छशब्दः प्रयुक्तो न च तत्परत्वेन पुच्छं परायणं सर्वस्यानन्दजातस्येति पुच्छशब्दः प्रयुज्यते न पुच्छत्वविवक्षया । पराण्यपि सूत्राणि यथासम्भवं योजनीयानीति । अत्र वदामः । स्वमत्युत्प्रेक्षितहेत्वाभासविजृम्भितेयं गमनिका न श्रुत्यनुगता सूत्रानुगता वा । कथमिह तावदन्यस्यार्थान्तरमस्यासङ्कीर्तनात् प्रकरणपर्यवसान-

मानन्दमये लक्ष्यते । आन्तरश्रुतिश्च तस्मात् सर्वं चोधयति । यद्यप्यन्नमये विकारार्थो मयट्प्रत्ययः, प्राणमयादिषु तु न विकारार्थः सम्भवति । पञ्चवृत्तेः प्राणस्यैकत्वाच्च प्रकृतिविकारभावः सम्भवति । तत्रायमर्थो निश्चितः । स्वार्थे मयट्प्रत्ययो वृत्तिबाहुल्यविवक्षया वा । ततः परेषु विकारविवक्षा नास्तीत्यानन्दमये द्विधा मयट्प्रत्ययो घटते । यदि चानन्द एवानन्दमयः प्रभूतानन्दो वा, भवति चैकस्यापि शब्दस्य सामर्थ्याद्भिन्नार्थता विवक्षया, यथा पौर्णमास्यां पौर्णमास्या यजेतेति सप्तम्यन्तः कालवाची तृतीयान्तः कालयुक्तकर्मवचनो, बहुधाऽपि विवक्षा लोकवेदयोः शब्दप्रयोगेषु । यदप्युक्तं प्रियशिरस्त्वाद्यवयवसङ्कीर्तनादिति तदविरुद्धमन्यार्थत्वात् । लोकेऽपि सर्वभूतानां यत् प्रीतिसामान्यं मोदादयश्च प्रीतिविशेषास्तत् सर्वस्यैवानन्दस्यांश इति प्रदर्शनार्थत्वात् । तथा च श्रुत्यन्तरम् । एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति । एवमर्थे च मयटः प्रयोगोऽक्षयानन्दः परमेश्वर इति शतगुणोत्तरक्रमेण प्रतिपादनात् । अत एवैतत् परिहृतं बाहुल्यस्यान्यत्राल्पस्यापेक्षत्वादिति । न हि स्वात्मन्येव प्राचुर्यमल्पमपेक्षते । यथा प्रचुरप्रकाशः सवितेतीन्दुवह्निप्रभृतीनपेक्ष्य प्रयुज्यते । मोदादीनां च जीवगतानामुच्चावचभेदात् तन्निवृत्त्यर्थं कारणगतमानन्दगुणं मयट्प्रत्ययेन विनैव उपसंहरत्यानन्द आत्मेति ब्रह्मपुच्छं प्रतिष्ठेति च प्रस्तुतस्यानन्दजातस्याश्रयभूतं निर्दिशति । न हि गुणो गुणिनमन्तरेणात्मानं लभते शीतोष्णादिवत् । एतदुक्तं भवति । पूर्ववत् पुरुषविकल्पनया निरतिशयानन्दगुणं ब्रह्मेत्यन्यथा सुखरहितं ब्रह्म वैशेषिकादिमतवत् प्राप्नोति । श्रुत्यन्तरं च । विज्ञानमानन्दं ब्रह्मेति । सति चैवमनन्तरश्लोके असन्नेव स भवतीति गुणिमात्रनिर्देशेऽपि गुणप्रतिपत्तिः सगुणस्य ब्रह्मणः प्रस्तुतत्वं स्यात् । यथा वा एषा सर्वदेवत्या यदजा वायव्यमालभेतेति वत्सगुणायामजायां प्रकृतायां केवलेन गुणवचनेन सगुणा गृह्यते, छागायै वपायै मेदसोऽनुब्रूहीत्येतस्मिन् मन्त्रे । यदप्युक्तं निर्विशिष्टं ब्रह्मात्र विवक्षितमिति । तदप्ययुक्तम् । आनन्दगुणस्य ब्रह्मणो विवक्षितत्वात् । अत एवोत्तरत्र केवलेन गुणवचनेन गुणी निर्दिश्यते । सैषानन्दस्य मीमांसा आनन्दाद्ध्येव खल्विमानि भूतानि जायन्त इति । यतो वाचो निवर्तन्त इति च रागादिदोषदूषितयोर्वाङ्मनसोरगोचरं ब्रह्मेत्यर्थः । शुद्धयोस्तु पुनर्गोचर एव । तथा च श्रुत्यन्तरम् । दृश्यते त्वग्र्यया बुद्ध्या ज्ञानप्रसादेन विशुद्धसत्त्व इति च । तस्मान्निरवद्यमानन्दमयेनैवोपसंहारः क्रियते । पुरस्तादानन्दप्राचुर्यं प्रतिपाद्य एतमानन्दमयमात्मानमुपसङ्क्रामतीति, स च तस्य ब्रह्मत्वेऽपकल्पते । भार्गव्यां च वारुण्यां विद्यायां विदुषो मुक्तिफलमुपसंहर्तुमानन्दमयान्ता श्रुतिः प्रवृत्ता एतमानन्दमयमात्मानमुपसङ्क्रम्य इमाँल्लोकान् कामात्मा कामरूप्यनुसञ्चरन्निति । उपसङ्क्रमणं च विद्यासामर्थ्यादर्चिरादिमार्गेण संसारमण्डलमतीत्य हिरण्यगर्भपर्यन्तं सम्प्राप्तिपरमात्मनैकता । तत्र यद्यानन्दमयस्य ब्रह्मत्वं न स्यान्निर्विषयत्वादुपसङ्क्रमश्रुतिरुपरुध्येत, द्वितीयाविभक्तिश्चानुपपद्येत । अन्यस्य चाश्रुतस्य कल्पनायां स्वमनीषिकैव स्यात् । श्रुतहान्यश्रुतकल्पनाप्रसङ्गात् । ततश्चोपसङ्क्रमणफलश्रुतिर्बाध्येत सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता, सहेति सर्वैः कामैः सहाश्नुते ब्रह्म प्राप्नोतीत्यर्थः । विभक्तिव्यत्ययोऽत्र द्रष्टव्योऽन्यथा हि ब्रह्मणोऽप्राधान्यं स्यात्, सहयुक्ते चाप्रधान इति स्मरणात् । यथा सह शाखया प्रस्तरं प्रहरतीति प्रस्तरेण सह शाखां प्रहरयतीत्यर्थः । तस्मात् सम्प्रदायपरम्परया च तद्व्याख्यानं शोभनमिति स्थितम् ॥

अतः परमवसरेणानन्दरूपस्य कारणतां प्रतिपादयितुमग्रिमाधिकरणारम्भः । तेनानन्दबोधकवाक्यानां ब्रह्मपरत्वमुपपादनीयम्, न तु पूर्ववत् सर्वेषामिति । तैत्तिरीये यद् ब्रह्मभृगुप्रपाठकद्वयं, तदत्र विचार्यते । तत्र षडिन्द्रियात्मभेदेनाष्टभिर्जायमानं यत् सुखं तद्वाचकोऽन्यत्रानन्दशब्दः, सोऽत्र ब्रह्मवाचक इत्यतोऽत्राष्ट सूत्राणि ।

ननु ब्रह्मवित्प्रपाठके सत्यज्ञानानन्तलक्षणकं ब्रह्म प्रस्तुत्य, 'तस्माद्वा एतस्मा'दित्यादिना कार्यं निरूप्यते । अग्रिमे च 'यतो वा इमानी'त्यादिना ब्रह्म लक्षयित्वा, 'आनन्दाद्ध्येवे'त्यादिना तन्निरूप्यते । अत उभयत्रापि ब्रह्मकार्यत्वे आनन्दकार्यत्वे च सन्देहासम्भवाद् व्यर्थोऽयमधिकरणारम्भ इति चेत् । न । पूर्वस्मिन्नाकाशादीनां ब्रह्मकार्यत्वावगमेऽपि मध्ये आनन्दमय इति सन्दिग्धशब्दप्रयोगेण आनन्दे कारणत्वसन्देहात्, द्वितीये चानन्दे कारणत्वसन्देहाभावे चेतनत्वस्याश्रावितत्वेन तस्मिञ्जडत्वसन्देहादुभयत्र यथायथमानन्दे कारणत्वचेतनत्वयोर्बोधनायाधिकरणारम्भस्यावश्यकत्वादिति ।

ननु आद्ये आनन्दकारणतैव प्रतिपिपादयिषितेत्यत्र किं गमकमिति चेत्, उच्यते । अत्रारम्भे 'ब्रह्मविदाप्नोति पर'मिति वाक्येन ब्रह्मविदः परप्राप्तिं फलत्वेन प्रतिज्ञाय तद्व्याख्यानभूताया ऋच्यानन्दांशे कारणत्वस्याभिप्रेततया ज्ञेयस्य ब्रह्मणो लक्षणे आनन्दांशमप्रवेश्य लोके प्रकृत्यादेः कारणस्य जडत्वदर्शनात् तद्विलक्षणत्वमानन्दांशे बोधयितुं विपश्चिद्ब्रह्मपदाभ्यां सर्वज्ञानन्दरूपं फलमृगुत्तरार्धे सर्वकामादानकथनेनोपपाद्य तदव्यवहितोत्तरं 'तस्माद्वा एतस्मा'दित्यादिना आकाशादिसृष्टिवक्तैत्येतदेव गमकमिति जानीहि । नच तत्रात्मपदाद्रूपेणैव कारणताभिसंहितेति शक्यम् । तस्य नैकट्यबोधनार्थत्वात् । अन्यथाग्रे आत्मनः सर्वान्तरत्वं न वदेत् । ज्ञानरूपत्वे विवक्षिते तस्मिन् सर्वान्तरे आनन्दमयत्वं न वदेत् । अन्ते च 'आनन्दमयमात्मानमुपसङ्क्रामती'ति पर्यवसितफलतां च न निगमयेत् । ऋगुत्तरार्धोक्तफलरूपस्यैवोपक्रमे तदेतत्पदाभ्यां कारणतया परामृष्टत्वात् । अतः प्रकारान्तरेण सन्देहाभावेऽपि मयट्प्रयोगमात्रेणैव सन्देहः । तत्र पूर्वपक्षे अन्नमयादिप्रायपाठबलेनानन्दमयोऽपि न ब्रह्म । फलसिद्धिस्तूपासनायाः प्रकृतत्वादन्नमयादिभ्य इवानन्दमयादपि भविष्यतीति फलं तस्य न ब्रह्मतानिर्णायकमिति । एवं प्राप्तेऽभिधीयते—

आनन्दमयः परमात्मैव, नान्नमयादिवत् पदार्थान्तरम् । कुतः ? अभ्यासात् । अभ्यस्यते पुनः पुनः कीर्त्यते इत्यभ्यासस्तस्मात् । पूर्वतन्त्रे शब्दान्तराभ्याससङ्ख्यागुणप्रक्रियानामधेयानां षण्णां कर्मभेदकत्वेन सिद्धत्वादत्र भेदकत्वेन तस्य ग्रहणम्, पूर्वोत्तरतन्त्रयोरैकशास्त्र्यात् । तत्र हि समिधो यजति, तनूनपातं यजति, इडो यजति, बर्हिर्यजति, स्वाहाकारं यजतीति पञ्चकृत्वो यजत्यावृत्तौ मीमांसितम् । किमत्र तनूनपादादिषु चतुर्षु पूर्वयागानुवादः, उत यागान्तरविधानमिति । तत्र पूर्वपक्षिणा धात्वर्थप्रत्यभिज्ञानाद् इडादिगुणविधानार्थं समिद्यागानुवादे अङ्गीकृते, सिद्धान्तितम् । भेदाभेदसाधारण्या यजिश्रुत्या यागमात्रप्रत्यभिज्ञानेन श्रुतेर्यागान्तरपक्षेऽपि तुल्यत्वाद् गुणविधानपक्षेऽपि चतुर्थीतद्धितयोरभावेन देवताया वक्तुमशक्यत्वात्, तृतीयाया अभावेन द्रव्यस्य च वक्तुमशक्यत्वाद्, द्वितीयया चाग्निहोत्रं जुहोतीत्यादिवत् तेषां कर्मनामत्वनिश्चयात्, पदान्तरसमभिव्याहृतेन यजतिना यागान्तरमेव बोध्यम् इति । ननु हेतुना साध्यं व्याप्तिबलेन साध्यते । प्रकृते चाभ्यासत्वेन कर्मभेदत्वेन व्याप्तेः परमात्मत्वेन व्याप्त्यभावादसिद्धोऽयं हेतुरिति चेत् । न । यत्र

यत्र वाक्ये पदान्तरसमभिव्याहृतस्य यस्य पदस्याभ्यासः, तत्र तत्र तस्य पदस्यार्थान्तरगमकत्व- मिति व्याप्तेः सत्त्वेनासिद्धेरभावात्। नचाभ्यासस्येतरभेदमात्रं फलम्, तत्तु शब्दान्तरादेव सिद्ध- मिति किमनेनेति वाच्यम्। वैलक्षण्यसाधकत्वेनोपयोगात्। नन्वभ्यासस्यान्नमयादिश्लोकेष्वपि दर्शनादत्रैव कथं वैलक्षण्यसाधकत्वमिति चेद्, इत्थम्; अत्र ह्येवमभ्यासः श्रूयते, 'को ह्येवा- न्यात्, कः प्राण्याद्, यदेष आकाश आनन्दो न स्यात्, एष ह्येवानन्दयाती'ति। अत्रायमर्थः। पूर्वानुवाकेष्वन्नमयादीनां प्रशंसामुक्त्वापि, को ह्येवान्यादिति वाक्ये किंशब्दद्वयेन यत् पूर्वोक्तं सर्वं परामृश्यते, तेन तदननादिकं प्रति व्यतिरेकमुखेनानन्दस्यैव हेतुता बोध्यते। तेनान्नादीना- मपि यत् स्वकार्ये सामर्थ्यं तदप्यन्तःस्थितानन्दाधीनमिति सूच्यते। अतोऽनेनैवं स्तुत्वा सर्वोप- जीव्यत्वेनानन्दरूपो योऽर्थः स एव सर्वत्राभ्यस्यत इत्यतोऽस्य वैलक्षण्यसाधकत्वमिति जानीहि। नचास्याभ्यासस्य वैलक्षण्यसाधकत्वेऽपि लैङ्गिकत्वान्मयट्श्रुत्यपेक्षया निर्बलत्वात् प्रायपाठेन विका- रार्थग्रहणस्यैवौचित्यादिति वाच्यम्। मयटोऽर्थान्तरेऽपि साधारण्यात्, प्राणमये प्राणादीनां वृत्ती- नामेव कथनेन प्रायपाठस्यैवाभावादिति। नचानन्दमयस्य ब्रह्मत्वसाधने तस्य प्रियमेव शिर' इति सम्बन्धषष्ठ्या भेदनिरूपणात् 'नेह नानास्ती'ति श्रुतिविरोधो, द्वैतापत्तिश्चेति वाच्यम्। 'यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते, अथ तस्य भयं भवती'त्यग्रिमवाक्ये दोषश्रावणेन तस्येत्यत्र 'राहोः शिर' इतिवदभेदषष्ठीबोधनाददोषात्। उपचयापचयशङ्किताब्रह्मत्वपरिहारस्तु गुणोपसंहारपादे सूत्र- कृतैव कार्य इति चोद्यानवकाशः। अतः किमः पुनर्वचनेन बोधितो य आनन्दस्यार्थिकोऽभ्यास- स्तेन मयडादिप्रवाहादानन्दमयस्य भेदे साधिते तस्य ब्रह्मत्वं निष्प्रत्यूहमित्याचार्याणामाशयः। अस्मिन् वर्णकेऽन्नमयादीनां ब्रह्मकार्यत्वेन पदार्थान्तरत्वमङ्गीकृत्यानन्दे फलत्वस्य वक्तव्यत्वाज्ज्ञेये ब्रह्मण्यानन्दांशनिवेशमनुपगम्य पुनर्वचनसूचितार्थिकाभ्यासादानन्दमयस्य तेभ्यो भेदः साधितः।

प्रभुचरणास्तु, अन्नमयादीनामपि साधारणकार्याद्भिन्नत्वेन ब्रह्मविभूतित्वमानन्दस्य साधनशेष- भूतज्ञेयकोटिनिवेशेऽपि रूपभेदेन फलत्वकारणत्वयोरनपायं चाभिप्रेत्याधिदैविकवादं चाभिसा- नन्दमयस्य तेभ्यो भेदं वर्णकान्तरेण साधयन्ति। तथाहि। 'स वै नैव रेमे, तस्मादेकाकी न रमते स द्वितीयमैच्छत्, स हैतावानास'इत्यादिश्रुत्या क्रीडेच्छैव सृष्टौ हेतुः। तेन बहु स्यामित्यादावपि प्रकारभेदेन सैवोच्यते। तेन सर्वं भगवानेवेति समन्वयेक्षत्यधिकरणाभ्यां व्युत्पादितम्। तथा 'एष उ एवे'त्यादिश्रुत्या नानाकर्मफलदोऽपि स एवेति सिद्ध्यति। तेन भगवाञ्जगद्रूपेणाविर्भूय स्वांशै- र्जीवैस्तानि तानि साधनानि कारयित्वा तानि तानि फलानि ददत् क्रीडतीति सिद्ध्यति। तत्र फलं सुखमेव। तद्'प्येतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती'ति श्रुत्या ब्रह्मानन्दस्यांशभूतमेव। तेन निरवध्यानन्द एव परमं फलमिति बोधनाय 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति स्वरूपलक्षणेऽनन्त- पदेन श्रुतिः सूचितवती। नचानन्तमिति सत्यज्ञानयोर्विशेषणमिति शङ्क्यम्। 'सत्यं विज्ञानमा- नन्दं ब्रह्म', 'सच्चिदानन्दविग्रह'मित्यादिश्रुत्यन्तरे त्रितयसाहचर्योक्तेरत्रापि तद्बलादेव तत्प्रातेरा- वश्यकत्वेन विशेषणतया तत्राप्यानन्त्यस्य विशेषणतया अनुक्तसिद्धत्वात्। 'यो वै भूमा तत्सुखं, नाल्पे सुखमस्ती'ति श्रुत्यापि तथा निश्चयात्। किञ्च, इयमृग् 'ब्रह्मविदाप्नोति परमि'ति ब्राह्मण- विवरणभूता 'यो वेदे'त्यन्तेन ब्रह्मवित्पदं साधनशेषतया व्याकृत्य, अग्रे 'आप्नोति पर'मिति फलांशं विवृणोति। तच्च 'यमेवैष वृणुते तेन लभ्य' इति श्रुत्या वरणेतरसाधनाप्राप्यत्वेन बोधि- तमिति तद्विरोधपरिहारेण उभयसामञ्जस्यार्थमेवं निर्णयम्। अत्राक्षरज्ञानेनाविद्यानिवृत्त्या

प्राकृतधर्मराहित्येन शुद्धत्वसम्पादनेन पुरुषोत्तमप्राप्तौ स्वरूपयोग्यता सम्पाद्यते । तत्र तादृशे जीवे स्वीयतया वरणेन भक्तिरूपः सहकारी सम्पाद्यते । ततः सहकारिणो योग्यतायाश्च सम्पत्त्या पुरुषोत्तमप्राप्तिर्भवतीति । नच मध्ये भक्तिनिवेशोऽश्रुतत्वादसङ्गत इति शङ्क्यम् । 'भक्त्याऽहमेकया ग्राह्यो,' 'भक्त्या त्वनन्यया शक्य' इत्यादिस्मृतिभिस्तथा निर्णीतत्वात् । तेन भक्त्यभावे केवलेन ब्रह्मज्ञानेन ब्रह्मभाव एव फलम् । 'ब्रह्म वेद ब्रह्मैव भवतीति'ति श्रुतेः । स चात्र स्वरूपयोग्यताकोटौ निविशत इत्युक्तम् । नचाक्षरपरयोरैक्यमिति शङ्क्यम् । 'अक्षरात् परतः पर' इति श्रुतेः, 'अक्षरादपि चोत्तम' इत्यादिजातीयगीतावाक्यानां च विरोधात् । नचाक्षरपदेनाव्याकृताख्या प्रकृतिरेवोच्यत इति शङ्क्यम् । 'द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव चे'ति पुरुषत्वोक्तिविरोधात् । 'क्षरं प्रधानममृताक्षरं हरः', 'क्षरात्मानावीशते देव एक' इत्यात्मत्वश्रुतिविरोधाच्च । तेन परस्मात् प्रकृतेश्च भिन्नमेवाक्षरम् । अत एव ऋग्व्याख्येये ब्राह्मणेऽपि ब्रह्मेति पर इति च शब्दान्तरेण निर्देशः । अन्यथा 'ब्रह्मविदाप्नोति त'दित्येव ब्रूयात् । एतेन पुरुषोत्तमस्य लक्षणमप्युक्तमायम् । निरवधिसत्यज्ञानरूपत्वे सत्यक्षरादुत्कृष्टत्वस्यैव लक्षणत्वेन सिद्धेः । तच्चोत्कृष्टत्वमानन्दमीमांसायां 'स एको ब्रह्मण आनन्द' इति कथनोत्तरं 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' इति श्लोके गणनापरिच्छेदराहित्येनावाङ्मनसगोचरानन्दरूपतया सिद्धं भविष्यति । प्राप्तिस्तु व्रजरत्नानामिव भगवद्भोग्यतया भगवता सह सर्वकामभोगरूपा । 'अश भोजन' इत्यस्य 'बहुलं छन्दसी'ति विकरणद्वयोर्व्यत्ययेनाश्नुत इति प्रयोगात् । प्रस्थानान्तरेऽपि भोजनार्थस्यैवाङ्गीकारात् । तदिदं सर्वं गुणोपसंहारपादे लिङ्गभूयस्त्वाधिकरणे प्रपञ्चयिष्यते । एवञ्च फलत्वं परस्यै , प्राप्तिस्त्वेवंप्रकारकतदनुभवरूपेति पर्यवस्यति । तत्र परस्मिन्निरवध्यानन्दात्मकत्वेन फलत्वं व्युत्पादयितुमन्तरङ्गेभ्योऽप्यन्तरङ्गत्वं 'चक्षुषश्चक्षु'रित्यादिश्रुतिसिद्धं सर्वस्य सर्वरूपत्वेन सर्वाधिदैविकरूपत्वं च ज्ञापयितुमाधिभौतिकादिरूपेण भगवानाविर्भूत इत्याशयेन 'तस्माद्वा एतस्मा'दित्यादिना आकाशादीनां भूतानामोषध्यादीनां भौतिकानां च सम्भवनक्रियायां कर्तृत्वमाह । न तु 'तत् तेजोऽसृजते'तिवत् सर्वजनक्रियाकर्मत्वम् । एतेनाकाशादीनामत्र विभूतिरूपत्वं ज्ञाप्यते । ततोऽन्नमयप्राणमयमनोमयविज्ञानमयानन्दमयाख्या उत्तरोत्तरमन्तरङ्गभूता आत्मस्वरूपा उक्ताः । नचैते विकाररूपा वक्तुं शक्याः । अग्रिमप्रपाठके 'तपसा ब्रह्म विजिज्ञासस्वे'ति वरुणोपदिष्टतपोरूपेण ब्रह्मज्ञापकेन साधनेनान्नादीनां ब्रह्मत्वेन ज्ञातत्वात् । नच तर्हि पुनर्ब्रह्मविषयकप्रश्नाद्यनुपपत्तिः । तेषां परिच्छिन्नकार्यकर्तृत्वेनापरितोषादधिकाधिकारसम्पादनार्थत्वादुपपत्तेः । एव'मन्नात् पुरुष' इत्यन्तेनाधिभौतिकं रूपमुक्त्वा तत्राध्यात्मिकं पुरुषरूपं वदन्ती 'तस्येदमेव शिर' इत्यादिना पक्षिरूपमाह । वाजसनेयिशाखायां 'पुरश्चक्रे चतुष्पदः, पुरः स पक्षी भूत्वा पुरः पुरुष आविश'दिति पक्षिरूपेणैवाध्यात्मिकस्याधिभौतिकेषु प्रवेशश्रावणात् । वस्तुतस्तु, पुरुष एव; परन्तु पुरः सम्बन्धी सन् पक्षी भूत्वा पुरः शरीराण्याविशदिति तदर्थात् । नच तस्येदमेव शिर इतीदमा प्रत्यक्षविषयस्यैव शिर आदेः परामर्शात् प्रत्यक्षविषयस्यैव पक्षित्वं कल्पनयोपदिश्यत इति वाच्यम् । पक्षिरूपस्यातिरिक्तत्वाङ्गीकारे पक्षादिपदेषु लक्षणाराहित्यादिदम्पदमात्रे लक्षणायाः सत्त्वेऽपि श्रुत्यन्तरस्वारस्येन तस्या अदुष्टत्वात् । नचोक्तश्रुतावेकस्यैव प्रवेशोक्तेः सर्वेषु पक्षिरूपत्वोपगमो न युक्त इति वाच्यम् । अन्नमयादिषु पञ्चस्वपि पक्षादीनां पक्षिलिङ्गानां तौल्येन तथोप-

गमे बाधकाभावात् । नचैवं पक्षिरूपत्वेन प्रवेशप्राप्तावपि प्राणमयादिष्वन्तर आत्मेति श्रावणात् तेषां चतुर्णां तत्तदन्तः प्रवेशोऽस्तु, अन्नमये तु तदश्रावणात् तस्य प्रवेशो न शक्यवचनः । वस्तुतस्तु, प्रवेशश्रुतौ पूर्षु द्विपत्त्वादिश्रावणेन तासां स्थूलत्वबोधनात् तास्वेव प्रवेशो भासते । प्राणमयादिषु तु तल्लिङ्गाभावेन विवक्षितपूष्ट्वाभावात् तेष्वप्यशक्यवचनः । किञ्च, श्रुतौ प्रवेशमात्रमुक्तम्; न तु प्रयोजनं तस्य । अतः प्रयोजने विचार्यमाणे आध्यात्मिकस्याभिमानितया प्रसिद्धेस्तथा भूत्वा पूरक्षैव प्रयोजनत्वेनायाति । सा चैकेनापि भवतीति सर्वेषां प्रवेशो वैयर्थ्यादप्यशक्यवचनः । नाप्येकस्यैवास्त्वित्यपि वक्तुं युक्तम् । अविशेषाद् विनिगमकाभावाच्च कस्येति निर्णेतुमशक्यत्वात् । अत एव तस्याः प्रवेशश्रुतेरुक्तविषयत्वाभावेन प्रकृतोपक्रमस्य वक्तुमशक्यत्वात् परिहृश्यमाने पक्षित्वस्य कल्पनोपदेशपक्ष एवात्र युक्तः, न त्वेतदतिरिक्तविभूतिपक्ष इति वाच्यम् । अतिरिक्तविभूतिपक्षानङ्गीकारे 'अस्माल्लोकात् प्रेत्य एतमन्नमयमात्मानमुपसङ्क्रामती'त्याद्यग्रिमवाक्यश्रावितस्यैतल्लोकत्यागस्य तदुत्तरभाविन्या अन्नमयादिप्राप्त्येश्च बाधापत्तेः । कल्पनोपदेशपक्षेऽन्नमयादीनामेतल्लोकान्तःपातित्वात् । न च 'सङ्क्रमः प्रतिसङ्क्रम' इति पौराणप्रयोगेणोपसङ्क्रामतीत्यस्य त्यजतीत्येवार्थ इति वाच्यम् । 'कार्मुकं तु परित्यज्य झषं सङ्क्रमते रवि'रित्यादिषु प्राप्तावपि प्रयोगदर्शनेन परित्यागानन्तरप्रयुक्ते तस्मिन् प्राप्त्यर्थकत्वस्यैव निश्चयात् । पूर्ववाक्येऽपि प्रतिपूर्वकस्य सङ्क्रमस्य प्रलयवाचितया प्राप्त्यर्थ एव पर्यवसानेनोपपूर्वकेऽपि तथात्वस्यैव युक्तत्वाच्च । अतो विभूतिपक्ष एव ज्यायान् । तथा सति प्राकृतगुणमयं प्रपञ्चमतिक्रम्य गुणातीतं भगवल्लीलोपयोगिनं प्रपञ्चं प्राप्नोतीति लोकत्यागपूर्वकोपसङ्क्रमवाक्यार्थः सिद्ध्यति । तेन पूर्ववाक्येषु यदन्नमयादीनां पक्षित्वमुक्तम्, तदपि लीलापूर्वदशायां साधनसम्पत्तिसिद्ध्ये लौकिकान्नमयादिकोशानां रक्षार्थं तेषु तेषु तेन तेन रूपेण प्रवेशबोधनाय । अन्यथा लौकिकैः कोशैर्विक्षेप एव क्रियेतेति सेवादीनि साधनानि न सम्पद्येरन् । सेवासम्पत्तावुत्कटे विरहभावे तेषां स्थितिरपि न स्यात् । अतः पञ्चानां स्थित्यर्थं तत्तत्सजातीयानां तेषु तेषु प्रवेश आवश्यकः । 'प्राणस्य प्राणमुत चक्षुषश्चक्षु'रित्यत्र साजात्यस्यैव सिद्धत्वात् । एवञ्चान्नमये द्विपत्त्वेन तत्तदन्तरेष्वपि मूर्धानिविक्रमतिमान्यायेन प्रतिष्ठापदेन पादयोरुक्ततया च तेषामपि तादृशपूष्ट्वसिद्ध्या तेषु प्रवेशयोग्यतापि निष्प्रत्यूहा ।

तेनायं सन्देहः । उक्तप्रकारादानन्दमयोऽपि विभूतिः, उत सर्वान्तरत्वात् परमात्मेति । तत्रोक्तयुक्तेः प्रबलत्वात् प्रायपाठेन विभूतिरेव युक्तः । सर्वान्तरत्वात् परमात्मेति । तत्रोक्तयुक्तेः प्रबलत्वात् प्रायपाठेन विभूतिरेव युक्तः । सर्वान्तरत्वं तु विभूतिमुख्यत्वगमकमिति पूर्वपक्षे प्राप्ते—अभिधीयते आनन्दमयोऽभ्यासात् । आनन्दमयः परमात्मैव । कुतः ? अभ्यासात् । 'तस्यैष एव शारीर आत्मा यः पूर्वस्ये'त्यन्नमयादिषु सर्वेष्वानन्दमयस्यैवात्मत्वेन कथनात् । ननु कथमेतदवगम्यते ? इत्थम् । अत्र ह्यन्नमयाभिमानिनः पूर्वमनुक्तत्वेऽपि 'यः पूर्वस्ये'त्यनेन योऽन्नमयस्य शारीरः शरीरस्थोऽन्त्यात्मा तस्यैव सर्वात्मत्वमभ्यस्तम् । तेन तत्रात्मत्वेन जगत्कर्तैव 'तस्माद्वा एतस्मादात्मन'इत्यनेनोक्तः परामृश्यत इति ज्ञायते । स च सन्निहितत्वादुपक्रान्तत्वाच्च परं ब्रह्मैव विपश्चिद्ब्रह्मपदाभ्यां यदुक्तम्, तेनात्मपदघटितवाक्याभ्यासस्तस्यैव सर्वान्तरात्मत्वं बोधयति । तस्यानन्दरूपतां तु 'रसो वै स'इत्यारभ्य 'आनन्दयाती'त्यन्ता श्रुतिर्गमयति । 'एतस्यैवानन्दस्ये'ति मात्रोपजीवनश्रुतिश्च प्राचुर्यम् । तच्च किमपेक्षयेत्याकाङ्क्षायां सच्चिदंशापेक्षयेति प्रकृतत्वात् सिद्ध्यति । अतस्त्रिविधादभ्यासादानन्दमयः परमात्मा । अभ्यासादित्येकवचनं तु जात्यपेक्षया ।

ननु यद्येवं तदा आनन्दमये 'तस्यैष एव शारीर आत्मे'ति भेदं न वदेदिति चेत्, न; तस्येति षष्ठ्या 'राहोः शिरः'इतिवदभेदबोधकत्वेन यः पूर्वस्यामयस्य शारीर आत्मा उपक्रमे जगत्कर्तृत्वेनोक्तस्तदभिन्न इति निगमनाय तथोक्तेर्दोषाभावात्। अन्यथा 'तस्माद्वा एतस्मादानन्दमयादन्योऽन्तरात्मा ब्रह्मे'त्यपि वदेत्। नन्वेवं विभूतिप्रायपाठविरोधो दोष इति चेत्। न। सर्वान्तरात्मत्वादिरूपयुक्त्यपेक्षया तस्य निर्बलत्वेनाकिञ्चित्करत्वादिति। अयं प्रकारोऽपि गुणोपसंहारे आत्मगृहीत्यधिकरणे कार्याख्यानाधिकरणे च व्यक्तीभविष्यति। तस्मादानन्दमयः परमात्मैवेति सिद्धम्।

ननु 'मयड्वैतयोर्भाषाया'मित्यनेन लोके मयटो विकाराधिकारे विहितत्वात् 'द्व्यचश्छन्दसी'ति नियमस्य 'मृण्मयं गृहं राजन्हं गम'मित्यादिमन्त्रेषु व्यभिचाराद्विकारार्थे द्व्यचो भवत्येव, अन्यस्मात्तु विकारे भवति, न भवति चेति व्यवस्थितविकल्पाश्रयणेन त्र्यचोऽपि आनन्दशब्दात्तस्य विकारार्थे सुवचत्वादित्याशङ्क्य परिहरति।

विकारवाची मयड् यस्मिंस्तादृशं पदं विकारशब्दम्, तस्माद्विकारशब्दादानन्दमयपदान्न, विकारशून्यम् अविकारि ब्रह्म ग्रहीतुं न शक्यमिति चेत्। न। इयमाशङ्का न कार्या। कुतः? प्राचुर्यात्। पाणिनिनापि 'तत्प्रकृतवचने मयट्' इति सूत्रं प्रणयता प्राचुर्येऽपि विहितत्वादित्यर्थः। ननु कथमत्र प्राचुर्यविनिगमनेति चेत्। उच्यते। 'द्व्यचश्छन्दसी'ति नियमस्य विकारत्वप्रकारकबोधविवक्षायां बह्वचः परस्य मयट्प्रत्ययस्य असाधुत्वज्ञापनार्थत्वेनावश्यकतयात्र विकल्पाश्रयणे बीजाभावाद् बाधिते आनन्दशब्दान्मयट्प्रत्यये प्राचुर्यार्थस्य सुखेन विनिगन्तुं शक्यत्वात्। नच प्रायपाठविरोधः। तस्य प्राणमयस्थल एव निवृत्तत्वात्। तत्र प्राणादीनां त्रयाणां वृत्तित्वेनाकाशपृथिव्योश्च भूतान्तरत्वेन तदवयवकल्पनाग्रन्थादेव मयटः स्वार्थिकस्यैव भास्कराचार्योक्तरीत्या निश्चयात्। नच घटाकाशस्य घटविकारत्ववत् प्राणाद्युपाध्यवच्छिन्नस्य प्राणविकारत्वं वाचस्पत्युक्तरीत्या सिद्ध्यतीति वाच्यम्। अवच्छिन्ने विकारप्रत्ययस्याभावात्। शास्त्रेष्वपि तथा प्रयोगादर्शनाच्चेति दिक्। विशेषस्तु भाष्यविभागादवगन्तव्यः। अतः सम्यगुक्तं प्राचुर्यादिति।

शब्दबलविचारेण मयटो विकारार्थत्वे निराकृतेऽपि शब्दशेषित्वेनार्थस्य शब्दापेक्षया बलिष्ठत्वात् तद्विरोधे पूर्वसूत्रसाधितं वृथा स्यादिति तदभावायार्थबलेनापि विकारार्थतां निराकरोति।

हेतुत्वेन व्यपदेशो हेतुव्यपदेशस्तस्य हेतुव्यपदेशस्तद्धेतुव्यपदेशस्तस्मात्। आनन्दमयं प्रकृत्य 'एष ह्येवानन्दयाती'ति श्रावणात्। अत्र यकारस्य ह्रस्वाकारस्य दीर्घादेशः। तथाचात्रैतः पूर्वं 'रसो वै सः, रसं ह्येवायं लब्ध्वाऽऽनन्दीभवति' इति रसत्वेनानन्दमयस्य सिद्धत्वात् तल्लाभेनानन्दवत्ताश्रावणेनैव रसरूपस्यानन्दमयस्यानन्दकारणताया अर्थतः सिद्धावपि यत् पुनस्तत्कथनं तत्तस्य कारणत्वेनाविकृतत्वबोधनायैव। अन्यथैतस्य वैयर्थ्यापत्तेः। तथाच यथा विकारभूतस्य जगतः कारणभूतं सच्चिद्रूपं ब्रह्माविकृतम्, तथा सर्वस्यापि विकारभूतस्यानन्दस्य कारणभूत आनन्दमयोऽप्यविकृत इत्यर्थविचारेणापि नात्र विकारार्थे मयडित्यर्थः। अत्र चकारः समुच्चयं वदन् हेतुद्वयेन मध्ये विकारार्थनिरासः प्रतिपादित इति बोधयति।

नन्वानन्दमयस्य ब्रह्मत्वेन निरूपणे किमित्याग्रहः क्रियते? अन्नमयादिवदुपासनापरत्वे निरू-

पणे श्रुत्युपपत्तेः । नचाश्रोपासतेरश्रवणात्तथा न वक्तुं शक्यत इति वाच्यम् । 'विद्युद्ब्रह्मे'त्यादिषु विद्युदाद्युपासनासु तदभावेऽपि प्रकरणबलेन तदङ्गीकारात् । प्रकृते तु पक्षपुच्छादित्वेन मोदप्रमोदादीनामुक्ततया वाग्धेनूपासनवत् काल्पनिकत्वरूपलिङ्गस्यापि सत्त्वात् सुखेनाङ्गीकर्तुं शक्यत्वात् । अत आवश्यकोपपत्त्यभावादानन्दमयस्य ब्रह्मता न वक्तुं शक्येति शङ्कानिराकरणाय तामाह मन्त्रेत्यादि ।

स्वामीष्टं यं कञ्चनार्थमभिसन्धाय तदर्थशब्दसम्बन्धानां नानात्वात्तेषु यं कञ्चन आदाय लक्षणया यत्किञ्चिदुच्यते तन्न मान्त्रवर्णिकम्, किन्तु मन्त्रेणाभिधया पदशक्त्या यत्प्रतिपाद्यते, तन्मान्त्रवर्णिकम् । सम्पूर्णे प्रपाठके तदेव गीयते, उपपाद्य निर्धार्यते । कथमिति चेद् । इत्थम् । अत्र हि 'ब्रह्मविदाप्नोति पर'मित्येतद्विवरणत्वेन 'सत्यं ज्ञानमनन्तं ब्रह्म यो वेद, निहितं गुहायां परमे व्योमन्, सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिते'ति मन्त्र उक्तः । तत्र यो वेदेत्यन्तेन ब्रह्मविन्पदं विवृतम् । सम्पूर्णेन पूर्वार्धेन वा । उत्तरार्धे त्वाप्नोति परमिति । तत्राप्नोतिरश्नुत इत्यनेन, परमिति तु सर्वान् कामान् इत्यादिना । केवलानां कामानां ज्ञेयब्रह्मणः सकाशात् परत्वस्य वक्तुमशक्यत्वेन ब्रह्मसहितानामेव तथात्वात् । तथास्य ज्ञेयाद्भिन्नत्वं तु शब्दान्तरादेव सिद्धमिति । ततः परत्वं द्वितीयोक्तं फलत्वं च विभक्तिभेदेन सन्दिग्धत्वादुपपादनीयम् । तत्र कार्यलक्षणे स्वरूपलक्षणे च विशेषाभावे सन्देहस्यानुदयात्तत्रापि कश्चिद्विशेषोऽभिप्रेत इति ज्ञायते । तत्र कार्यलक्षणे तु सृष्टीच्छावशगत्वाभाव एव विशेष इति बोधनाय सृष्टौ कर्तृत्वमनुक्त्वा हेतुत्वमात्रमुच्यते । व्यापाराविष्टत्वं त्वाकाशादीनां पुरुषान्तानाम् । सम्भूत इति क्रियाया एव सर्वत्रान्वयात् । अतः परं स्वरूपलक्षणे वक्तव्यः । तत्र निरवधिसच्चिदानन्दरूपत्वस्योभयत्र तौल्येऽपि फलत्वस्यानन्द एव पर्यवसानं 'भूमैव सुख'मित्यत्र सिद्धमित्यत्रापि 'को ह्येवान्या'दित्यादिनाभ्यासात् स्तूयते । तथान्नमयादिभ्य आन्तरत्वकथनेन 'गो अश्वा एव पशवोऽन्ये त्वपशव' इतिवदन्येषामनान्तरत्वसाधनात् स्तूयते । तथा गौणोपासनाफलानां विवक्षितानन्दापेक्षया न्यूनत्वबोधनादपि स्तूयते, इत्येवं सर्वैः प्रकारैः स्तुत्वा फलत्वमुपपाद्य, ज्ञेयानन्दापेक्षया विशेषं बोधयितुमानन्दमीमांसायां ब्रह्मानन्दे 'स एको ब्रह्मण आनन्द' इति गणनापरिच्छेदकथनेन तस्य वाग्गोचरत्वं बोधयित्वा, ततः परस्यानन्दस्य ब्रह्मानन्दाधिक्यबोधनाय 'यतो वाच' इति श्लोकेन वाङ्मनसोरगोचरत्वं तस्याह । एवं लक्षणद्वयेऽपि विशेषबोधनेन तस्य परत्वं परमफलत्वं चोपपादितम् । तथा कार्यनिरूपणे योऽन्तिमः पुरुष उक्तस्तस्य शिरःपाण्यादिकं यदिदमा परामृष्टं तदानन्दमयस्य पुरुषत्वेन अन्येषां पुरुषविधत्वायानन्दस्य स्तुत्यर्थमेव । तथाहि । लोके ह्यन्तर्भूतं वहिर्वेष्टितं च तदाकारं भवति । तत्रान्तर्भूतस्य तदाकारता मूषानिषिक्तप्रतिमादौ दृष्टा । बहिर्वेष्टितस्य तदाकारता तूपदेहे सीवितवसनादौ च । प्रकृते योऽन्नात् पुरुष उक्तः सोऽन्नरसमयः । देहस्य रेतोजन्यत्वात् । रेतसश्चान्नरसत्वात् । तत्र मूषानिषिक्तप्रतिमान्यायाङ्गीकारेऽपि तदन्तर्वर्तिन आकारस्य मधूच्छिष्टनिर्मितप्रतिमोपरि सम्वेष्टनेन शुष्काया मृदो मूषात्वसिद्धया आन्तरमधूच्छिष्टाकाराधीनत्वाद्वेष्टितन्यायस्यैव सिद्धेर्यथाकथञ्चित्साधयित्वा तेनान्तराकाराङ्गीकारेऽपि 'तेनैष पूर्णः, स वा एष पुरुषविध एव, तस्य पुरुषविधताम्, अन्वयं पुरुषविधः, तस्य प्राण एव शिर' इत्याकारकवाक्येषु 'तेनैष' इत्यत्र तच्छब्देन प्रकृतपरामर्शः । मध्ये 'स वा एषः,' तस्य पुरुषविधता'मित्यत्र पूर्वस्यैव । ततस्तस्य प्राण एव शिर इत्यादौ पुनः प्रकृतस्यैव परामर्श इति प्रक्रान्तत्यागदोषाद्य । अतस्तदुभयरहितो बहिर्वेष्टित-

पक्ष एव साधीयान् । तथा सति सर्वत्र पुरुषाकारसमर्पणे सर्वान्तरस्यानन्दमयस्यैव कारणत्वादिदमा शिरःपाण्यादिपरामर्शोऽपि तत्स्तुत्यर्थ एव । एवं पक्षित्वेन कल्पनमपि तस्य स्तुतावेव पर्यवस्यति । तथाहि—उक्तमन्त्रे 'सोऽश्नुत' इत्यनेन जीवः फलाशने कर्तृत्वेन व्यपदिष्टत्वाच्चत्र मुख्यः । स च ' द्वा सुपर्णा' इति श्रुत्या, 'एवं स मानसो हंसो हंसेनैव प्रबोधित' इति स्मृत्या च वस्तुतो हंसाकारः । शास्त्रं तु पुरुषाधिकारेण प्रवृत्तमिति जीवं प्रति तदप्रवृत्तौ तस्य ब्रह्मविरहाधशावेन वेदनादिफलस्याप्यभावाच्छास्त्रवैयर्थ्यं स्यादिति फलार्थं शास्त्रसार्थक्यार्थं च जीवस्य पुरुषरूपमावश्यकम् । किञ्च । समतां विना फलानुभवदौर्घट्याद् 'न तत्सम' इति श्रुत्या ब्रह्मसमतायाः निषेधात् फलानुभावनार्थं समतायै ब्रह्मणोऽपि पुरुषरूपमावश्यकम् । अतः पुरुषरूप एव भगवान् । 'य आत्मनि तिष्ठ'न्नित्यादिश्रुतेर्यदा हंसरूपेण जीवान्तराविश्य तं पुरुषरूपेणान्तरितवाँस्तदा तद्वेष्टनेन पुरुषरूपो जीवः सर्वं लौकिकालौकिकफलमनुभवति । परमात्मा च हंसेऽन्तर्भूतो हंसाकारश्च सन् फलमनुभावयतीति श्रुतिरपि तं हंसरूपेण पुर्यावेशोत्तरं वर्णयति । तथाच स्वयमतिमहानपि जीवस्य फलभोजनार्थमेवं करोतीति भक्तवात्सल्यबोधकत्वात् स्तुतौ पर्यवस्यति । नच यद्येवं स्यात् तदा आनन्दमय एव तथा वक्तव्यं स्यान्नान्नमयादिष्वपि, प्रयोजनाभावादिति वाच्यम् । अत्र प्राणमयादीनां चतुर्णां व्याख्याने 'तस्यैष एव शारीर आत्मे'ति कथनादेकस्यैव भोक्तुरन्नमयादीनां आप्यानां पञ्चानां फलानां स्वशरीरतया भोग्यत्वस्य च विवक्षितत्वेन तद्बोधनस्यैव प्रयोजनतया पञ्चस्वपि तथा कथनस्य युक्तत्वात् । नचैवं सति पञ्चानां कोशत्वमेव सिद्धमिति शङ्क्यम् । 'अस्माल्लोकात् प्रेत्ये'ति कथनस्य विरोधात् । न चोक्तवाक्ये स्थूलशरीरत्याग एव विवक्षित इति शरीरान्तरमादाय तेषां कोशत्वं न विरोधावहमिति वाच्यम् । तथा सति सूक्ष्मकारणशरीरयोस्त्यागाभावेन प्राणमयाद्युपसङ्क्रमणश्रुतिविरोधापत्तेः । नचैवं भेदेऽपि शरीरत्वेनैव भोग्यत्वे कोशेभ्यः सकाशात् को विशेष इति शङ्क्यम् । 'एतमन्नमयमात्मानमुपसङ्क्रामती'त्यादिवाक्योक्तस्यात्मत्वरूपस्यैव विशेषस्य तेषु सत्त्वात् । लौकिकानां कार्यत्वेनानात्मत्वात् । यौगिकार्थग्रहणेऽप्यततेि व्याप्नोतीत्यात्मपदयोगेन व्यापकत्वस्यापि विशेषत्वात् । कार्याणां प्रत्यात्मं भिन्नत्वेन परिच्छिन्नत्वात् । नच भोक्त्रैक्यस्यैषां शरीरत्वेन भोग्यत्वस्य च विवक्षितत्व इदं वाक्यमन्नमयेऽपि वक्तव्यम्, तत् कुतो नोच्यत इति शङ्क्यम् । अन्नमयकोशे एकात्मभोग्यत्वस्य शरीरत्वस्य चाध्यक्षसिद्धत्वेन तत्तुल्ये विभूतिरूपेऽन्नमयेऽपि तथात्वस्यासन्दिग्धत्वात् । न चैवं सत्यन्येष्वपि तत्तत्कोशतौल्येन तथात्वस्य शक्यज्ञानत्वात् तत्रापि नोच्येतेति शङ्क्यम् । अन्नमयसमानावयवकत्वस्य सर्वत्रातिदेष्टव्यत्वेन तद्दार्ढ्यार्थं तत्र तत्कथनस्यावश्यकत्वात् । एवञ्चान्नमयकोशे पञ्चावयवकत्वस्याध्यक्षसिद्धत्वादन्नमयविभूतावपि तथात्वमसन्दिग्धमिति बोधयितुमिदम्पदप्रयोगाद्धस्तेनैव प्रदर्शयति । कोशात् तस्य भिन्नत्वज्ञापनायान्नमयब्रह्मोपासनायां सर्वान्नप्राप्त्या बाह्यं लौकिकं भोगरूपं फलं च बोधयति । अन्नमयादान्तरः प्राणः, सोऽत्र प्राणादित्रितयवृत्तिकः, पञ्चवृत्तिकान्नियतहृदयादिदेशवर्तिनः कोशरूपाद्भिन्न इति ज्ञापनाय तत्सञ्चाराधारमाकाशं तदात्मत्वेन पृथिवीं च प्रतिष्ठाविरूपत्वेन वदति । तदुपासनया सर्वायुर्भोगरूपं फलं च वदति । इदं च रूपद्वयं लौकिकस्य मनोमात्रेन्द्रियप्राणव्यापारात्मकस्य बाह्याभ्यन्तरभेदेन द्विविधस्य यथायथं सिद्ध्यर्थम् । ततो लौकिकव्यवहारेण वयःप्रभृतिभिः सामर्थ्ये जाते वैदिककार्यार्थं प्रवर्तत इति वैदिको व्यवहारस्तदनन्तरभावी । तस्य च लौकिकाद्भेदोऽग्रे देवताविग्रहाधिकरणे व्यवस्थाप्यः । तस्य व्यवहारस्य

सिद्ध्यर्थं मनोमयः पुरुषो वेदात्मकः । वेदस्य मनोमयत्वं 'स एष जीवो विवरप्रसूति'रित्येकादशस्कन्धे भगवतोक्तम् । तस्य कोशाङ्गेदः स्फुट एव । तदुपासनया ब्रह्मानन्दज्ञानात् सर्वदा भयाभावरूपेण फलेन च । एतदवयवेषु ऋगादयः स्फुटाः । आदेशोऽर्थवादसहितानि कर्मविधायकानि वाक्यानि । अथर्वाङ्गिरसे प्रतिष्ठात्वं तु चातुर्होत्रविधाने ब्रह्मणः कृताकृतावेक्षकत्वेन तत्कर्मणोऽप्यर्थसिद्धस्य कर्मस्थैर्यसम्पादकत्वात् । शान्त्यादिरूपशेषकर्मबोधकत्वात् पुच्छत्वं च बोधितम् । तदनु वैदिकव्यवहारेण नानाविधयागादिसाधनकर्तुः फलं विज्ञानमयः । तस्यावयवेषु पञ्चाग्निविद्यायां चतुर्थ्यामाहुत्यां हुतायामापः पुरुषवचसो भूत्वा समुत्थाय वदन्तीति प्रश्नाद्, निरूपणभागे च प्रथमाहुतौ 'देवाः श्रद्धां जुह्वती'ति श्रावणाच्च श्रद्धारूपा आपो मुख्या इति ता एव शिरः । अयमर्थस्तृतीयेऽध्याये रंहत्यधिकरणे विस्तरेण वक्ष्यत इति नास्य काल्पनिकत्वम् । ऋतसत्यशब्दवाच्यौ तु प्रमीयमाणानुष्ठीयमानावस्थाकौ धर्मौ । योगस्तु चित्तनिरोधरूपत्वेन मुख्यत्वादात्मा । महर्लोकस्याधोभागत्वं तु पञ्चाग्निविद्यासाधितदेहस्य ततोऽर्वाक्संसृत्यभावात् । एतस्यापि कोशाङ्गेदः स्फुट एव । एतस्य ज्ञाने तस्मात् प्रमादाभावे च सति पापनाशपूर्वकसर्वकामाप्तिरूपफलेन च । एतेषामुपासनादिकथनं तु यथोक्तरीत्यैतत्कर्तुः क्रमेण मुक्तिरिति ज्ञापनार्थम् । अत एव तुरीयस्य फलकथने मध्ये प्रमादाभावो निवेशितः । प्रमादे सत्यग्रे ब्रह्मज्ञानं न भवतीति । एतादृशस्य ज्ञानप्राप्त्या ब्रह्मविद आनन्दमयः फलम् । तत्स्वरूपं सङ्घातरूपत्वाभावादेकमिति धर्मभेदेनैव शिरःपाण्यादिकं निरूप्यते । यथा 'प्राणन्नेव प्राणो भवति, वदन् वागि'त्यत्र कार्यभेदेन व्यपदेशभेदः, तथात्र धर्मभेदेनावयवभेद इति ज्ञापनाय । तत्र मुख्यात्मत्वेन निरुपाधिप्रीतिविषयत्वं यो धर्मस्तदेव शिरः । अपरिनिष्ठितपरिनिष्ठितावानन्दातिशयौ धर्मौ मोदप्रमोदौ । तौ दक्षिणोत्तरौ पक्षौ । आनन्दस्तु स्वरूपम् । ज्ञेयतया साधनशेषत्वात् साधनभूतं यदक्षरं ब्रह्म तत् पुच्छम् । धामादिरूपत्वात्तदेव प्रतिष्ठा, 'स्वे महिम्नि प्रतिष्ठित' इति श्रुत्यन्तरात् । एतेन च मन्त्रे द्वितीयान्तेन कामपदेनोक्ता एत एव धर्माः, आनन्दमयस्तु विपश्चिद् ब्रह्म । धर्मधर्मिणोः प्रकाशाश्रयवद्भेदेऽप्यभेदादेतादृशमेव मन्त्रव्याख्येयवाक्ययोरुक्तं परमिति बोधितम् ।

तावतापि तस्य विविधज्ञानवत्त्वं लक्षणोक्तं सच्चिद्वैशिष्ट्यं च सम्यङ् नावगम्यत इति तदर्थमग्रिमो ग्रन्थः । तत्र सदंशवैशिष्ट्यज्ञापनाय 'असन्नेव स भवती'ति श्लोकः 'तदप्येष श्लोको भवती'त्यत्र तदित्यनेन पूर्वश्लोकेष्वन्नमयादिवदत्रानन्दमयस्यैव लक्ष्यीकरणात् । 'तस्यैष एव शारीर आत्मे'ति भोक्तारं परामृशतीति प्रागेवोक्तम् । द्वितीयवर्णके त्वस्यापि वाक्यस्य ब्रह्मपरत्वम् । तथा सति 'सर्वं वै तेऽन्नमाप्नुवन्ती'त्यादिवाक्येषु साधकत्वेन भोक्तृत्वेन जीवस्यैवोक्तत्वादर्थादेव सर्वत्र तदैक्यलाभः मध्ये भोग्यत्वेनानन्दमयविभूतिलाभश्च 'तडितोऽधिवरुणः सम्बन्धा'दिति न्यायेन बोध्यः । सोऽप्यत्र साधनभूतस्य ब्रह्मणः प्रतिष्ठात्वकथनेन बोधितः । 'यदक्षरे परमे प्रजा' इति श्रुत्यन्तरे तत्रत्यानां ब्रह्मात्मकत्वश्रावणात् । अतो न किमप्यनुपपन्नम् । साधकांशे त्वयं श्लोकः सन्दिग्धार्थः । किमयमज्ञस्य सत्तानिषेधकः ? उत परप्राप्तिनिषेधकः ? किं वा किञ्चिज्ज्ञस्य प्राप्तिनिषेधकः ? उत सर्वज्ञस्य प्राप्तिबोधक इत्यभिप्रायेण 'अथातोऽनुप्रश्ना' इति प्रश्ने बहुवचनम् । 'कश्चन गच्छती'त्यत्र चोऽप्यर्थे । एवं साधकस्वरूपस्य तस्य फलप्राप्तेश्च सन्देहेन प्रश्ने, साधकस्य सर्वज्ञत्वं तदैव, यदा विपश्चित्त्वं सच्चिदानन्दात्मकत्वं च ब्रह्मणः सम्यग्वेत्ति, नो चेत् किञ्चिज्ज्ञत्वमेवेति वक्तुं 'सोऽकामयते'त्यादिना सृष्ट्यादिकमाह । ततः सृष्टिस्वरूपं निष्कृष्य 'असद्वे'ति द्वितीये श्लोके सदस-

न्तरमाह। तद्व्याख्याने ब्रह्मणः समवायित्वं चाह। ताभ्यां ब्रह्मणः सर्वज्ञत्वं चिदंशवैशिष्ट्यं च बोधितम्। ततो 'यदा ह्येवैष' इत्यादिना पूर्वोक्तरीत्या सर्वज्ञस्य परप्राप्तिरूपं नित्यं फलम्, किञ्चिज्ज्ञस्य तदभावम्। ज्ञानानन्तरमपि मननाभावे किञ्चिज्ज्ञत्वमेव, न सर्वज्ञतेति बोधितम्। ततो 'भीषास्मा'दिति श्लोके वागगोचरं ब्रह्ममाहात्म्यमुक्तम्। आनन्दमीमांसायां च ब्रह्मानन्दस्य सर्वापेक्षयोत्कर्षो बोधितः। इदं सर्वं ज्ञेयेऽप्यस्तीति ततोऽप्युत्कर्षस्य बोधनाय 'यतो वाच' इति श्लोकेनावाङ्मनसगोचरानन्दात्मकत्वं ब्रह्मण उक्तम्। तेन ज्ञेयस्य गणितानन्दत्वम्, परस्य त्ववाङ्मनसगोचरानन्दत्वमित्यक्षरादुत्तमत्वमिति बोधितम्। ततो विदुषः परप्राप्तिपूर्वरूपज्ञापनेन प्रश्नोत्तरं पूरयितु'मेतं ह वाव न तपती'त्याद्युक्तम्। तस्मात् सर्वस्मिन् प्रपाठके मान्त्रवर्णिकमेव प्रतीयते। अतो मुख्योपपत्तेर्विद्यमानत्वेनानन्दमयः परमात्मैवेति सिद्धम्। चकारस्य सूत्रमध्ये प्रयोगो विधिमुखविचारेणाधिकरणपूर्तिद्योतकः। अयमर्थः श्रीभागवते वेदस्तुतौ 'पुरुषविधोऽन्वयोऽत्र चरमोऽन्नमयादिषु यः' इत्यनेनोपबृंहितः 'अन्नमयादिषु चरम आनन्दमयो भगवानि'ति।

निषेधमुखेन चतुःसूत्र्येदमधिकरणं पुनर्विचार्यते, सुदृढत्वाय। नच सन्देहानां विचारितत्वाच्छैथिल्याभावे दार्ढ्यस्यार्थादेव सिद्धत्वात् किमर्थं पुनर्विचारः कृत इति शङ्क्यम्। आनन्दमये साधितस्य फलत्वस्यैव सन्देहजनकत्वात्। पूर्वतन्त्रे 'फलं पुरुषार्थत्वादि'ति सूत्रेण फलस्य पुरुषशेषत्वबोधनात्। आनन्दमयेऽपि 'तस्यैष एव शारीर आत्मे'त्यनेन भोक्तृकथनवाक्येनानन्दमये भोग्यतायाः एव दृढीकरणात्। नच मन्त्रवर्णविरोधः। स ब्रह्मवित् सर्वान् कामनश्नुते, विपश्चिता ब्रह्मणा सहानन्दमयो भवतीत्यर्थोक्तौ तदभावात्। अतः प्रपाठक एतदनुगुणतया नेतव्यः, पूर्वोक्तरीत्या वेति सन्देहे, आद्य एव पक्षो युक्तः। पूर्वतन्त्रानुगुण्यरूपयुक्तेराधिक्यादिति प्राप्ते आह—

नेतरः। इतरो जीव उक्तरीत्या फलत्वमात्रेणानन्दमयो न वक्तुं शक्यः। कुतः? अनुपपत्तेः। अत्र जगत्करणादिभिः कार्यैर्महामाहात्म्यमानन्दमये ब्रह्मणि प्रतिपाद्यते। जीवस्यानन्दमयत्वे सति तस्यापि स्वातन्त्र्येण जगत्कर्तृत्वं वक्तव्यम्। तथा सत्यलौकिकमाहात्म्यस्यान्यगामित्वेन ब्रह्मात्यलौकिकमाहात्म्यबोधकश्रुत्यनुपपत्तेः। एवं स्वातन्त्र्येण साम्ये 'न तत्सम' इत्यस्या अप्यनुपपत्तिः। अतो जीवो नानन्दमय इत्यर्थः।

इतोऽपि न जीव आनन्दमयः। 'रसंह्येवायं लब्ध्वानन्दी भवती'ति श्रुतौ रसरूपस्यानन्दस्य लब्धव्यत्वेन, आनन्दिनो जीवस्य लब्धृत्वेन भेदो व्यपदिश्यते। यदि जीव आनन्दमयः स्यात्, तदा लब्धव्यत्वाद्भेदेन न व्यपदिश्येत। अतो भेदव्यपदेशादपि तथेत्यर्थः। न 'चात्मलाभान्न परं विद्यत' इति श्रुत्यन्तरे स्वरूपैक्येऽपि लब्धृलब्धव्यव्यपदेशदर्शनेनास्य व्यपदेशस्य न भेदगमकत्वमिति शङ्क्यम्। 'एष ह्येवानन्दयाती'त्यग्रिमवाक्ये आनन्दनीयानन्दकत्वेन भेदनिर्देशाज्जीवब्रह्मभेदे सिद्धे आनन्दीत्यस्यापि निर्देशस्य भेदोपोद्बलकत्वे बाधकाभावात्। आत्मलाभश्रुतावपि न जीवस्वरूपलाभस्तात्पर्यविषयः, किन्तु परमात्मलाभ एव। तत्र सनत्कुमारेण नारदं प्रति भूम्न एवात्मतया व्याख्यातत्वादिति। एवं सूत्रद्वयेन जीवस्यानन्दमयत्वं निराकृतमिति बोधनाय चकारः।

तर्हि जड एवानन्दमयो भवतु। तादृशमाहात्म्यस्यान्यैर्जडेऽप्यङ्गीकारादिति चेत्। स किं कार्यरूपः, कारणरूपो वा? नाद्यः। आन्तरत्वेन श्रावणात्। कार्यस्य कारणाद् बहिर्भाव एव कारणाद्भिन्नत्वावगमेनान्तरे तथात्वस्य वक्तुमशक्यत्वात्। अतः कारणरूपो वक्तव्यः। स स्वमते तु नास्त्येव। ईक्षत्यधिकरणे निराकृतत्वात्। साङ्ख्यादिमते तु प्रकृतिर्भवति। सात्र प्रकरणभे-

द्रोपगमेनाङ्गीकार्या । अथवा, 'तस्य प्रियमेवे'ति कल्पनावाक्यान्यथानुपपत्त्या सत्त्वपरिणामरूपाङ्गीकार्या । उभयथापि सानुमानापेक्षा, न तु शब्दगोचरेत्यतो नोपपद्यते । कुतः ? कामात् । चकारेण तपसः । उभयोरपि चेतनधर्मत्वात् । आनन्दमयवाक्यनिरूपणानन्तरं श्रूयते 'सोऽकामयते'ति 'स तपोऽतप्यते'त्यादि । तथाचानन्दमयवाक्यश्रवणानन्तरम्, आनन्दमयपदोक्तः प्रकृतिः, सुखधर्मकत्वात् । साङ्ख्यसिद्धमूलकारणवत् । अथवा, सत्त्वपरिणामः । आनन्दविकारत्वात् । लौकिकसुखवदिति यावदनुमीयते, ततः पूर्वमेव कामादिश्रवणात् तत् प्रतिन्यहत इति ।

इतश्च न जड आनन्दमयः । अस्मिन्नानन्दमये अस्य जीवस्य तद्योगं तेनानन्दमयेन रूपेण योगं शास्ति । 'एतमानन्दमयमात्मानमुपसङ्क्रामती'ति वाक्ये फलत्वेन वदतीति । न हि जीवस्य जडापत्तिर्मुक्तित्वेन वक्तुं युक्ता । संसारापादकत्वात् । तथाच, यथा 'ब्रह्मैव सन् ब्रह्माप्येती'ति वाक्ये ब्रह्मभावापत्तौ ब्रह्मणि लय उच्यते, तथात्रानन्दमयत्व आनन्दमयावाप्तिरिति फलबलादपि वाक्यतात्पर्यं ब्रह्मण्येव सिध्यतीति जीवाज्जडाच्च निवृत्ते वाक्ये पारिशेष्याद् ब्रह्मैवेति सिद्धम् ।

एवं हि सम्पूर्णस्याप्यधिकरणस्य तात्पर्यं लभते । तदेतत्सर्वं विद्वद्भिरेवाकलनीयम् । वयं तु "विद्वद्भिः सर्वथा श्राव्यं ते हि सन्मार्गरक्षकाः" इति श्रीमदाचार्यचरणाज्ञां पुरस्कृत्यैव प्रवृत्ताः । किन्तु तत्रान्येषां मनःक्षोभो मा भूदिति टिप्पणीमुद्रापणेऽनाग्रहिणः ।



## ६ अन्तस्तद्धर्माधिकरणम् ।

( हिरण्मयत्वादिकमादित्यमण्डलस्थजीव एवोपपद्यत इति पूर्वपक्षः )

अथ "य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात्सर्व एव सुवर्णस्तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी तस्योदिति नाम स एष सर्वेभ्यः पाप्मभ्य उदितः । उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद ( छां. १।६।७ ) इत्यधिदैवतम्" ( छां. १।६।८) "अध्यात्मम्" (छां.१।७।१) "अथ य एषोऽन्तरक्षिणि पुरुषो दृश्यते" ( छां. १।७।५ ) इत्यादि ।

---

आनन्दमयाधिकरणे ब्रह्मत्वेन प्रतिपाद्यस्यानन्दमयस्य यश्चासावादित्ये इति श्रुत्याऽऽदित्येऽपि विद्यमानत्वमुच्यते श्रुत्यन्तरे, तस्यैव शरीरमुच्यते इति सन्देहनिराकरणार्थमन्तस्तद्धर्मोपदेशाधिकरणमारचयन्ति—अन्तस्तद्धर्मोपदेशात् ।

अत्र छान्दोग्यप्रथमप्रपाठकस्थं विषयवाक्यमाहुः—अथेति । अथ विषयवाक्यम्—

इयमेवर्गग्निः साम तदेतदेतस्यामृच्यध्यूढ९ साम तस्मादृच्यध्यूढ९ साम गीयत इयमेव साऽग्निरमस्तत्साम ॥ १ ॥ अन्तरिक्षमेवर्ग्वायुः साम तदेतदेतस्यामृच्यध्यूढ९ साम तस्मादृच्यध्यूढ९साम गीयतेऽन्तरिक्षमेव सा वायुरमस्तत्साम ॥ २ ॥ द्यौरेवर्गादित्यः साम तदेतदेतस्यामृच्यध्यूढ९ साम तस्मादृच्यध्यूढ९ साम गीयते द्यौरेव सादित्योऽमस्तत्साम ॥ ३ ॥ नक्षत्राण्येवर्क् चन्द्रमाः साम तदेतदेतस्यामृच्यध्यूढ९ साम तस्मादृच्यध्यूढ९ साम गीयते नक्षत्राण्येव सा चन्द्रमा अमस्तत्साम ॥ ४ ॥ अथ यदेतदादित्यस्य शुक्लं भाः सैवर्गथ यन्नीलं परः कृष्णं तत्साम तदेतदेतस्यामृच्यध्यूढ९ साम तस्मादृच्यध्यूढ९ साम गीयते ॥ ५ ॥ अथ यदेवैतदादित्यस्य शुक्लं भाः सैव साऽथ यन्नीलं परः कृष्णं तदमस्तत्सामाऽथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात्सर्व एव सुवर्णः ॥ ६ ॥ तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी तस्योदिति नाम स एष सर्वेभ्यः पाप्मभ्य उदित उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद ॥ ७ ॥ तस्यर्क् च साम च गेष्णौ तस्मादुद्गीथस्तस्मात्त्वेवोद्गातैतस्य हि गाता स एष ये चामुष्मात्पराञ्चो लोकास्तेषां चेष्टे देवकामानां चेत्यधिदैवतम् ॥ ८ ॥ इति षष्ठः खण्डः ॥ ६ ॥

अथाध्यात्मं वागेवर्क् प्राणः साम तदेतदेतस्यामृच्यध्यूढ९ साम तस्मादृच्यध्यूढ९ साम गीयते वागेव सा प्राणोऽमस्तत्साम ॥ १ ॥ चक्षुरेवर्गात्मा साम तदेतदेतस्यामृच्यध्यूढ९ साम तस्मादृच्यध्यूढ९ साम गीयते चक्षुरेव सात्माऽमस्तत्साम ॥ २ ॥ श्रोत्रमेवर्ङ् मनः साम तदेतदेतस्यामृच्यध्यूढ९ साम तस्मादृच्यध्यूढ९ साम गीयते श्रोत्रमेव सा मनोऽमस्तत्साम ॥ ३ ॥ अथ यदेतदक्ष्णः शुक्लं भाः सैवर्गथ यन्नीलं परः कृष्णं तत्साम तदेतदेतस्यामृच्यध्यूढ९साम तस्मादृच्यध्यूढ९साम गीयते ॥ अथ यदेवैतदक्ष्णः शुक्लं भाः सैव साऽथ यन्नीलं परः कृष्णं तदमस्तत्साम ॥ ४ ॥ अथ य एषोऽन्तरक्षिणि पुरुषो दृश्यते सैवर्क्तत्साम तदुक्थं तद्यजुस्तद्ब्रह्म तस्यैतस्य तदेव रूपं यदमुष्य रूपं यावमुष्य गेष्णौ तौ गेष्णौ यन्नाम तन्नाम ॥ ५ ॥ स एष ये चैतस्मादर्वाञ्चो लोकास्तेषां चेष्टे मनुष्यकामानां चेति तद्य इमे वीणायां गायन्त्येतं ते गायन्ति तस्मात्ते धनसनयः ॥ ६ ॥ अथ य एतदेवं विद्वान्साम गायत्युभौ स गायति सोऽमुनैव स एष ये चामु-

तत्र संशयः । किमधिष्ठातृदेवताशरीरमाहोस्वित्परब्रह्मेति ब्रह्मणो वा शरीरमिति । तदर्थमिदं विचार्यते । हिरण्मयशब्दः सुवर्णविकारवाची । आहोस्वित् प्रकाशसाम्येनानन्दवाचीति ।

"ब्रह्मविदाप्नोति परम्" (तै. २।१) इत्युपक्रम्य आनन्दमयस्य फलत्वमुक्त्वा द्वितीयोपाख्याने–"स यश्चायं पुरुषे यश्चासावादित्ये स एकः स य एवंविद्" (तै. ३।१०) इति साधनस्य–"आनन्दमयमात्मानमुपसङ्क्रम्य" (तै. ३।१०) इति फलं श्रुतम् । तत्र सवितरि विद्यमानस्याब्रह्मत्वे फलं नोपपद्यत इति विचारारम्भः ।

तत्र हिरण्मयशब्दो विकारवाची केशनखादयश्चोच्यन्ते शरीरधर्माः । "मृता वा एषा त्वगमेध्या यत्केशश्मश्रु" (कठ श्रु. ३) इति शरीरमन्तरा नोपपद्यते । परिच्छेदश्चाधिदैविकादिवचनं च बाधकम् । अतः सर्वथा तच्छरीरमिति तु मन्तव्यं चाक्षुषत्वाच्च । इन्द्रियवत्त्वं च श्रूयते । "यथा कप्यासं पुण्डरीकमेवमक्षिणी तस्य"

---

ष्मात्पराञ्चो लोकास्तांश्चाप्नोति देवकामांश्च ॥ ७ ॥ अथानेनैव ये चैतस्मादर्वाञ्चो लोकास्तांश्चाप्नोति मनुष्यकामांश्च तस्मादु हैवंविदुद्गाता ब्रूयात् ॥ ८ ॥ कं ते काममागायानीत्येष ह्येव कामगानस्येष्टे य एवं विद्वान्साम गायति साम गायति ॥ ९ ॥ इति सप्तमः खण्डः ॥१०॥

अथ भाष्यं संशयमाहुः—**किमित्यादि शरीरमित्यन्तेन** । त्रिकोटिकं संशयं प्रतिपादयते । **तदर्थमिदमिति** । संशयोत्पत्तिबीजमित्यर्थः । विचारमेवाऽऽहुः—**हिरण्मय** इति । त्रिकोटिकसंशये प्रथमं देवताशरीरकोटौ बीजमाहुः—**सुवर्णेति** । आदित्यमण्डलान्तर्गतसुवर्णविकारभूतशरीरवाचीत्यर्थः । द्वितीयतृतीयकोटौ बीजमाहुः—**आहोस्विदिति** । **प्रकाशसाम्येनेति** । प्रकाशेन जगत्प्रकाशकत्वरूपप्रकाशेन साम्यं सादृश्यं तेन । यथा चन्द्रपदस्य आह्लादकत्वेन साम्यतामादाय मुखवाचकत्वं एवं प्रकाशेन साम्यतामादाय अधिष्ठातृदेवता शरीरवाचकहिरण्मयशब्दः आनन्दरूपब्रह्मवाचीत्यर्थः ।

यथा सूर्यमण्डलान्तःस्थपुरुषशरीरनिष्ठजगद्भासकः प्रकाशः तथा "यस्य भासा सर्वमिदं विभाती"ति श्रुतिप्रतिपाद्य ब्रह्मप्रकाशोऽपीति रूपकालङ्कारेण हिरण्मयपदप्रतिपाद्यमानन्दमयं ब्रह्म भवतीति द्वितीयकोटौ हिरण्मयपदं बीजं बोध्यम् । अथ च आनन्दमात्रकरपादमुखोदरादिरूपं ब्रह्मशरीरमपि तादृशप्रकाशसाम्येन हिरण्मयपदप्रतिपाद्यं भवतीति तृतीयकोट्यवपि तदेव बीजं बोध्यमिति भावः । सङ्गतिमाहुः—**ब्रह्मविदित्यादिना विचारारम्भ इत्यन्तेन** । **द्वितीयोपाख्यानेति** । "भृगुर्वै वारुणिरित्युपाख्यान" इत्यर्थः । **फलं नोपपद्यत इति** । ब्रह्मज्ञानस्यैव फलजनकत्वादिति भावः ।

पूर्वपक्षमाहुः—**तत्रेति** । **विकारेति** । मयट्त्वाद्विकारवाचीत्यर्थः । **मृता वा एषेति** । इयं श्रुतिः तैत्तिरीये पष्ठाष्टके प्रथमप्रपाठके प्रथमानुवाके यजमानस्य वपनविधौ पठ्यते । **परिच्छेद इति** । अन्तरादित्य इत्यत्रान्तःशब्देनोक्त इत्यर्थः । अस्य च बाधकमित्यत्र लिङ्गविपरिणामेनान्वयः । बाधक इत्यर्थः ।

**आधिदैविकेति** । य एवं वेदेत्यधिदैवतमिति श्रुतौ वचनमित्यर्थः । तथा "चाध्यात्मिकस्तु यः प्रोक्तः सोऽसावेवाधिदैविकः" इति स्मृतिप्रामाण्यादुभयोरभेदेनाध्यात्मिकस्य जीवत्वादाधिदैविकस्यापि जीवत्वेन ब्रह्मत्वं नास्तीति भावः । आधिदैविकादिवचनमित्यत्रादिपदेन "स यश्चायं पुरुषे"ति श्रुतिप्रतिपाद्यस्य य एषोऽन्तरक्षिणीत्युक्ताध्यात्मिकसाक्षिपुरुषधर्मस्यापि सङ्ग्रहः । **बाधकमिति** । ब्रह्मत्वबाधकमित्यर्थः । **तच्छरीरमिति** । अधिष्ठातृदेवताशरीरमित्यर्थः । **चाक्षुषत्वाच्चेति** । **मन्तव्यमिति** । पूर्वेणान्वयः । इन्द्रियवत्त्वं साधयति—**इन्द्रियेति** । **यथा कप्यासमिति** । आसते उपविशते अने-

( छां. १।६।७ ) इति। कपेरास आसनम्। आरक्तं तस्यासनं भवतीति। असभ्यतुल्यता च। अतो देहेन्द्रिययोर्विद्यमानत्वाज्जीवः कश्चिदधिकारी सूर्यमण्डलस्थ इति गम्यते। फलं तत्सायुज्यद्वारेति।

( ब्रह्मण एव तच्छरीरमिति )

अथोच्येत—एष सर्वेभ्यः पाप्मभ्य उदितः ( छां. १।६।७ ) इत्यपहतपाप्मत्वादिधर्मश्रवणात् पूर्वदोषस्यापि विद्यमानत्वाद्ब्रह्मण एव केनचिन्निमित्तेन शरीरपरिग्रह इति। तस्य च शरीरस्य कर्मजन्यत्वाभावादपहतपाप्मत्वादि सङ्गच्छते सुवर्णशरीरत्वमप्यलौकिकत्वाद् ब्रह्मण एव सङ्गच्छते। शरीरवदिन्द्रियस्यापि परिग्रहः। वर्णमात्रपरिग्रहान्नासभ्यता। स्थावरापेक्षया जङ्गमस्योत्कृष्टत्वात्स्थावरावयवोपमानवज्जङ्गमावयवोपमानं स्थावरस्यापीति सर्वं ब्रह्मभावाय श्रुत्युक्तत्वाच्च। तस्माद् ब्रह्मण एवेदं शरीरमित्येवं प्राप्त उच्यते—

( आन्तरधर्मोपदेशात्परमात्मैव सः )

अन्तस्तद्धर्मोपदेशात् ॥ १।१।१९ ॥

अन्तर्दृश्यमानः परमात्मैव। कुतः। तद्धर्मोपदेशात्। तस्य ब्रह्मणो धर्मा उदित्यादिधर्मा उपदिश्यन्ते। "स एष सर्वेभ्यः पाप्मभ्य उदितः" (छां. १।६।७) इति।

( श्रुतिसूत्रयोराशयः )

अयमाशयः। ब्रह्म कारणं जगत्कार्यमिति स्थितम्। तत्र कार्यधर्मा यथा कारणे

---

नेत्यासम्। उपवेशनार्थकासधातोः करणे घञ्कृते आसमिति, कपेरासमिव कप्यासमिति लुप्तोपमा। एवं च यथा मर्कटस्याधोभागः आरक्तः एवम्। असभ्येति। नीचतुल्यतेत्यर्थः। तथा च यदि ब्रह्म स्यात्तर्हि नीचतुल्यता न स्यादिति भावः। कमलं आरक्तं तद्वदक्षिणी यस्येत्यर्थः। कपेरधोभागस्य वर्णमाहुः—आरक्तमिति। यत् गम्यते ज्ञायते इत्यर्थः। ननु सूर्यमण्डलस्थः जीवः स्यात्तदा तदुपासनया फलं न स्यादित्यत आहुः—फलमिति। भगवदाज्ञैवैतादृशी मदीयाधिकारिद्वारा सायुज्यमुपासकानां भवत्विति। अत्रार्थे प्रमाणं तैत्तिरीये अम्भस्येति प्रपाठके आदित्यो वा एष एतन्मण्डलमित्यनुवाक एव।

पूर्वपक्षी अधिष्ठातृदेवताशरीरकोटिं साधयित्वा ब्रह्मशरीरकोटिं साधयति—अथेति। अथ सिद्धान्ती एष सर्वेभ्य इति वाक्येन मण्डलस्थः ब्रह्मैवेत्युच्यते तदपि नेत्याह—अपहतपाप्मत्वादिति। पूर्वदोषस्येति। शरीरेन्द्रियकोशादिमत्त्वादिदोषस्येत्यर्थः। केनचिदिति। भक्तानुग्रहार्थं हि ब्रह्मणो रूपकल्पनेति वचनात् भक्तानुग्रहेणेत्यर्थः। उत्कृष्टत्वादिति। परम्परयात्र जङ्गमोपमानत्वमिति भावः। ननु स्थावरोपमानता जङ्गमस्योचिता न तु विपरीतमित्यत आह—सर्वं ब्रह्मेति। "सर्वं खल्विदं ब्रह्मे"ति श्रुत्युक्तत्वाच्चेत्यर्थः।

समाधानमाहुः—अन्तस्तद्धर्मोपदेशात्।

सूत्रार्थमाहुः—अन्तरिति।

ननु साधकं तु अपहतपाप्मत्वादिरूपमेकं केशश्मश्र्वादिरूपबाधकान्यनेकानीति कथमिदं वक्तव्यम्? कुतः? सत्येकस्मिन् बाधके साधकसहस्रस्याप्यकिञ्चित्करत्वादिति न्यायादित्यत आहुः—अयमाशय

न गच्छन्ति तथा कारणासाधारणधर्मा अपि कार्ये। तत्रापहतपाप्मत्वादयः कारणधर्मास्ते यत्र भवन्ति तद्ब्रह्मैवावगन्तव्यम्। बलिष्ठत्वात्कारणधर्मस्य। नामतुल्यतामात्रमुभयेषामपि धर्माणां ते श्रुत्यैकसमधिगम्याः। ब्रह्मणि लोके प्रमाणान्तरमपि प्रवर्तते। अतः सर्वरसादयो ब्रह्मनिष्ठा एव धर्माः। स्थूलत्वादयस्तु ये ब्रह्मणि निषिध्यन्तेऽस्थूलादिवाक्येषु ते कार्यधर्माः। अणोरणीयानित्यादिषु कारणधर्मा एव। अत एकोऽप्यसाधारणो धर्मो विद्यमानः शिष्टान् सन्दिग्धानपि ब्रह्मधर्मानेव गमयति। इममेव श्रुत्यभिप्रायमङ्गीकृत्य सर्वत्र ब्रह्मवाक्यनिर्णयमाह सूत्रकारः। तथा च श्रुतिव्यतिरिक्तस्थले तथैवावगन्तव्यम्। अनन्तमित्यनन्तमूर्तिता च ब्रह्मणः प्रतिज्ञाता। अन्यथा गुहायां निहितमिति विरुध्येत। तस्मात्साकारं तादृशमेव ब्रह्म।

(ब्रह्मणो लीलाविग्रहम्)

ब्रह्मणः शरीरमिति तु सर्वथा सम्भवम्। सर्वकर्तुर्ब्रह्मणः का वानुपपत्तिः स्यात्। येन तस्यापि शरीरं कल्पयेत्। किन्तु लीलया व्यामोहनार्थमन्यथा भासयेन्नटवत्।

---

इति। **कारणासाधारणधर्मा** इति। केषाञ्चित्कारणधर्माणां कार्ये सङ्क्रमणं दृश्यते इत्यत उक्तमसाधारणेति। तथा च तन्तुत्वादीनां पटे सङ्क्रमणं नास्तीति भावः। कार्य इति। न गच्छन्तीति पूर्वेणान्वयः। तथा च कार्यकारणयोर्भेदसिद्ध्यर्थं परस्परासाधारणधर्मसङ्क्रमणं न स्वीकर्तव्यमिति भावः। नन्वेवं सति प्रकृते किमायातमित्यत आहुः—**तत्रेति**। **अपहतेति**। तस्योदिति नामेति प्रकृतविषयवाक्योक्तापहतपाप्मत्वादयः कारणधर्मा इत्यर्थः। नन्वस्तु कारणधर्माणां बलिष्ठत्वं, परन्त्वपहतपाप्मत्वं कदाचित् जीवेऽपि स्यादित्यत आहुः—**नामतुल्यतेति**। जीवेऽपहतपाप्मत्वं पापनाशानन्तरं ब्रह्मणि तु त्रैकालिकमपहतपाप्मत्वमिति। एवं च केवलमपहतपाप्मत्वरूपं यन्नामतुल्यत्वमात्रमित्यर्थः। **उभयेषामिति**। कार्यकारणानामित्यर्थः। **ते** इति। अपहतपाप्मत्वहिरण्यश्मश्रुत्वादिधर्मा इत्यर्थः। तथा च, श्रुतिप्रतिपाद्यत्वात्तेषां ब्रह्मधर्मत्वमेवेत्यर्थः। **प्रमाणान्तरमिति**। अनुमानादिप्रमाणान्तरमित्यर्थः। **अत इति**। श्रुतिप्रतिपाद्यत्वादित्यर्थः। **अस्थूलादिवाक्येष्विति**। "स होवाचैतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घमि"त्यादिबृहदारण्यश्रुतिवाक्येष्वित्यर्थः। नन्वनण्विति वाक्ये अणुत्वनिषेधः कार्यधर्मस्यैवेत्यत आहुः—**अणोरणीयानिति**। एतादृशवाक्येषु श्रूयमाणमणुत्वं कारणधर्मो भिन्न एवेत्यर्थः। तथा च निषेधवाक्यानुरोधान्निषिध्यमानानां धर्माणां लौकिकत्वमेव, यत्र निषेधो नास्ति तत्रालौकिका ब्रह्मधर्मा एवेति भावः। **इममेवेति**। इमं भावमेवेत्यर्थः। **सर्वत्रेति**। सर्वेष्वधिकरणेष्वित्यर्थः। ननु श्रुतौ सन्देहे सति सूत्रवाक्यान्निर्णयो भवतु नाम, परन्तु लोके कथं ज्ञातव्यमित्यत आहुः—**तथा चेति**। **तथैवेति**। लोके प्रत्यक्षादिना क्वचिदनुमानेन वा यत्र यादृशमवगम्यते, तत्र तादृशमेवावगन्तव्यम्, सर्वं खल्विदं ब्रह्मेति वाक्यादित्यर्थः। नन्वेवं चेत् ब्रह्मणो नानात्वापत्तिः एकमेवाद्वितीयमिति श्रुतिविरोधश्चेत्यत आहुः—**अनन्तमिति**। सत्यं ज्ञानमनन्तं ब्रह्मेति वाक्येन एकस्यैवानन्तत्वोक्तेन श्रुतिविरोध इत्यर्थः। अत्रार्थेऽर्थापत्तिप्रमाणमाहुः—**अन्यथेति**। अनन्तमूर्तित्वाभावे एकस्यैव सर्वत्र व्यापकस्य गुहायामपि स्थितत्वात् निहितमित्यनुपपन्नं स्यादित्यर्थः। **साकारमिति**। एकमनन्तं साकारं वेदगम्यमित्यर्थः।

एतावताधिष्ठातृदेवतापक्षो निराकृतः, ब्रह्मण एव शरीरमिति पक्षं निराकुर्वन्ति **ब्रह्मणः शरीरमिति**। ननु कथमसङ्गतमित्यत आहुः—**सर्वकर्तुरिति**। **नटवदिति**। लीलया शरीरवद्भासयेन्नटव-

तस्माद्वेदातिरिक्तेऽप्युपपत्तिपूर्वकं यत्र ब्रह्मधर्मस्तद्ब्रह्मेति मन्तव्यम् । ब्रह्म तु वेदैकसमधिगम्यं यादृशं वेदे प्रतिपाद्यते तादृशमेवेत्यसकृदवोचाम। प्रकृतेऽपि हिरण्मय इत्यत्र यकारलोपश्छान्दसः। अतो न ब्रच्। "

( हिरण्यशब्दस्यानन्दवाचित्वम् )

हिरण्यशब्द आनन्दवाची। लोकेऽपि तस्यानन्दसाधकत्वात्। अतः केशादयोऽपि सर्वे आनन्दमया एव तादृशमेव ब्रह्मस्वरूपमिति मन्तव्यम्। अत एव।

ध्येयः सदा सवितृमण्डलमध्यवर्ती नारायणः सरसिजासनसन्निविष्टः।
केयूरवान्मकरकुण्डलवान् किरीटी हारी हिरण्मयवपुर्धृतशङ्खचक्रः ॥ १ ॥
( आ. हृदय. ५९ ) इत्यत्रापि वपुः स्वरूपम्।

( ब्रह्मणैव शरीरं धृतमिति शङ्कानिरासः )

"माया ह्येषा मया सृष्टा" ( म. भा. १२।३३९।४५ ) इत्यादि भगवद्वाक्यं भगवन्मायया भगवन्तमन्यथा पश्यतीत्याह। ननु भगवानेव मायिक इति। शरीरे सति जीवत्वमेवेति निश्चयः। अतो ब्रह्मधर्मोपदेशात्सूर्यमण्डलस्थः परमात्मैव ॥१।१।१९॥

( भेदनिर्देश आदित्यात् )

भेदव्यपदेशाच्चान्यः ॥ १।१। २० ॥

इतोऽपि सूर्यमण्डलस्थः परमात्मा। भेदव्यपदेशात्। "य आदित्ये तिष्ठन्नादित्या-

---

दित्यर्थः। अत्र प्रमाणं श्रीमद्भागवतीयप्रथमस्कन्धीयवाक्यम्, "यथा मत्स्यादिरूपाणि धत्ते जह्याद्यथा नटः" इति। ननु हिरण्मय इत्यत्र मयटो विकारार्थकत्वात्कथं तस्य ब्रह्मवाचकत्वमत आहुः—प्रकृतेऽपीति। तथा चायं अच् तेन न विकारार्थे प्रत्यय इति भावः।

ननु ब्रह्मण आनन्दरूपत्वं श्रुतिसिद्धं न तु हिरण्यरूपत्वमित्यत आहुः—**हिरण्यशब्द** इति। अस्मिन्नर्थे प्रमाणमाहुः—**ध्येय** इति। वपुः स्वरूपमिति। ब्रह्मस्वरूपमिति मन्तव्यमिति पूर्वेणान्वयः।

ननु हिरण्यश्मश्रुरित्यादिना वपुः स्वरूपं दृश्यते इत्युक्तं ध्येयः सदेत्यस्मिन्पद्येऽपि वपुःपदमेवोक्तं तेन च कृत्वा किं ज्ञायते ब्रह्मणैव शरीरं धृतमित्यत आहुः—**माया ह्येषे**ति। भारते, "माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद। सर्वभूतगुणैर्युक्तं न मां पश्यन्ति सूरयः," इति भारतीयभगवद्वाक्ये, सर्वभूतगुणैर्युक्तं यन्मां पश्यसि, एषा माया मया सृष्टेत्यन्वयः। तथा च मायया एतादृशं मां पश्यन्ति न तु मया शरीरं धृतमिति भावः। इदमेवाऽऽहुः—**नन्विति**। ननु किमर्थमयमाग्रहः शरीरसत्त्वे बाधकं किमत आहुः—**शरीर** इति। तथा च शरीराभिमानित्वं जीवत्वमिति लक्षणाज्जीवत्वमिति भावः।

आदित्यमण्डलान्तःस्थं ब्रह्मैवेत्यत्र साधकान्तरसूत्रमाहुः—**भेदव्यपदेशाच्चान्यः**। **भेदेनेति**। जडं सूर्यमण्डलं, जीवः तदभिमानी आदित्यः तयोर्भेदेनेत्यर्थः। व्यपदेशवाक्यमेवाऽऽहुः—**य आदित्येति**।

दन्तरो यमादित्यो न वेद यस्यादित्यः शरीरं य आदित्यमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः" (बृ. ३।७।९) इति श्रुत्यन्तरे आधिदैविकं सूर्यमण्डलाभिमानिभ्यां भेदेन निर्दिष्टम्। यद्यपि तत्राकारो न श्रूयते तथापि हिरण्मयवाक्येनैकवाक्यत्वात् सर्वत्र साकारमेव ब्रह्मेति मन्तव्यम्।

(अन्तर्यामिब्राह्मणेन समन्वयः)

अन्तर्यामिब्राह्मणे चत्वारोऽर्था उच्यन्ते। सर्वत्र तिष्ठन् तद्धर्मैर्न सम्बध्यते। सर्वमुक्तिपरिहाराय स्वधर्मैस्तत्र बध्यते। स्वलीलासिद्ध्यर्थं तच्छरीरमिति। तस्य नियमनं तदर्थमिति। चकाराद्धर्मा उच्यन्ते। तस्मात्सर्वविलक्षणत्वादन्य एव नाभिमानी। उपचारव्यावृत्त्यर्थमन्यपदेनोपसंहारः।

(ज्ञान उपासनायां वा न कश्चन विशेषोऽभिप्रेतः)

ब्रह्मत्वे सिद्धे ज्ञानं वोपासना वेति नास्मत्सिद्धान्ते कश्चन विशेषः। कारणे कार्यधर्मारोपस्त्वयुक्त एव। कार्ये पुनः कारणधर्माधिकरणत्वेनोपासना अभेदात् फलायेति सर्वत्र व्यवस्थितिः ॥ १।१।२० ॥ ६ ॥

---

अस्मिन्वाक्ये परमात्मप्रतिपादनप्रकारमाहुः—**अन्तर्यामीति तदर्थमितीत्यन्तेन**। अर्थचतुष्टयमेवाऽऽहुः—**सर्वत्रेति**। आदित्ये तिष्ठन्नित्यनेनादित्याद्भेदे साधिते परमात्मा आदित्यधर्मैर्न सम्बध्यते इत्येकोऽर्थः। आदित्यमण्डलान्तःस्थजीवोऽपि तद्भिन्नो भवतीत्येतदर्थमुक्तं यमादित्यो न वेदेति तेन परमात्मलाभः। अत्र मण्डलाभिमानी जीवः तं जानीयात्तदा मुक्तः स्यादित्यर्थापत्तिप्रमाणेनापि तदज्ञत्वं बोध्यम्। अत एवाऽऽहुः—**सर्वमुक्तिपरिहारायेति**। **स्वधर्मैरिति**। सर्वज्ञापहतपाप्मत्वादिधर्मैरित्यर्थः। तत्, मण्डलाभिमानवद्वस्तु, न बध्यते, न व्याप्नोति तेन मण्डलाज्जीवाच्च भेदसिद्धिः। अयं द्वितीयोऽर्थः। तृतीयार्थमाहुः—**स्वलीलेति**। जगद्धानेन स्वस्वधर्मप्रवृत्तिरूपलीलासिद्ध्यर्थम्। चतुर्थमाहुः—**तस्येति**। तस्य, मण्डलाभिमानिनः। **तत्सिद्ध्यर्थमिति**। लीलासिद्ध्यर्थमित्यर्थः। तथा च नियमनं विना लीलासिद्धिर्न जायते इति लोकास्थितिरपीति भावः। अत्र प्रमाणं "भीषाऽस्माद्वातः पवते, भीषोदेति सूर्यः" इति श्रुतिः, इति चत्वारोऽर्था उक्ताः। **चकारात्**, सूत्रस्थचकारात्। **उच्यन्ते इति**। एवं च चकारस्योक्तसमुच्चायकत्वात् पूर्वसूत्रोक्तधर्माः समुच्चीयन्त इत्यर्थः। ननु जीव एव एते धर्मा आरोप्यन्ते तथा च जीवपरमेवेदमधिकरणं स्यादित्यत आहुः—**उपचारेति**। उपचारो आरोपः। तथा च नेतरोऽनुपपत्तेरितिवदत्राप्यन्यपदेनोपसंहारः। ननूपासनार्थमारोप एव कुतो न स्वीक्रियत इत्यत आहुः—**ब्रह्मत्वेति**। तथा च सूर्यमण्डलान्तःस्थं वास्तविकं ब्रह्मैव तस्य ब्रह्मत्वेन ज्ञाने जाते यत्कार्यं जायते तदेव कार्यं कारणधर्मारोपेण जायते, ज्ञानोपासनयोरस्मन्मते समफलत्वादिति भावः। **इति, षष्ठाधिकरणम्।**

---

१ अत्रेत्थं व्याख्यानान्तराणि—

(१) तत्र शाङ्कराः—इत्थं पूर्वसिद्धनिर्विशेषब्रह्मसमन्वयापवादकमिदमाह—पूर्वत्र ब्रह्मपदम्, आनन्दमयपदम्, आनन्दाभ्यासश्चेति मुख्यत्रितयात्मकषड्प्रमाणवशात् निर्विशेषब्रह्मनिर्णयो यथा, तथा रूपवत्त्वादिषड्प्रमाणवशात् संसारी हिरण्मयः पुरुषोऽस्त्विति पूर्वसिद्धान्तयुक्त्या पूर्वपक्षी-

रथानात् तेनास्य दृष्टान्तसङ्गतिः। फलं तु पूर्वोत्तरपक्षयोरपरपरब्रह्मोपास्तिरेवेति द्रष्टव्यम्। छान्दोग्ये श्रूयते–"अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषः...." इत्यादि। तत्र किमयं पुरुषो विद्याकर्मातिशयवशात्प्राप्तोत्कर्षः कश्चित्संसारी, उत नित्यसिद्धः परमेश्वर इति सन्देहे, संसारीति पूर्वः पक्षः। सिद्धान्तस्तु—'य एषोऽन्तरादित्ये...' 'य एषोऽन्तरक्षिणि...' इति च श्रूयमाणः परमेश्वर एव, न संसारी। कुतः, तद्धर्मोपदेशात्, तस्य परमेश्वरस्य ये सर्वपाप्मराहित्यादिधर्माः तेषामस्मिन्नाप्ये उपदेशात्। हिरण्यश्मश्रुकेशादिकं तु मायिकं परमेश्वरस्य लोकानुग्रहार्थमुपपद्यत इत्यविरोधः। तस्मादक्ष्यादित्ययोरन्तः परमेश्वर एवेत्यर्थः॥

किञ्च—आदित्याक्ष्णोरन्तः श्रूयमाणः पुरुषः आदित्यशरीराभिमानिनो जीवादन्यः। कुतः, भेदव्यपदेशात्, आदित्यशरीराभिमानिनो जीवादन्यस्य परमात्मनोऽन्तर्यामितया 'य आदित्ये तिष्ठन्....' इत्याद्यन्तर्यामिब्राह्मणे, तयोर्भेदव्यपदेशात्। अत्राप्यन्तरशब्दश्रुत्या तत्प्रत्यभिज्ञानात्पर-मेश्वर एवाक्ष्यादित्ययोरुपास्य इति सिद्धम्।

(२) श्रीरामानुजीये—अन्तस्तद्धर्मोपदेशात्। अन्तरादित्येऽन्तरक्षिणि च यः पुरुषः प्रतीयते स जीवादन्यः परमात्मैव। कुतः? तद्धर्मोपदेशात्। जीवेष्वसम्भवँस्तदतिरिक्तस्यैव परमात्मनो धर्मोऽ-यमपहतपाप्मत्वादिः "स एष सर्वेभ्यः पाप्मभ्य उदितः" इत्यादिनोपदिश्यते। अपहतपाप्मत्वं ह्यपहतकर्मत्वं कर्मवश्यतागन्धरहितत्वमित्यर्थः। कर्माधीनसुखदुःखभागित्वेन कर्मवश्या हि जीवाः। अतोऽपहतपाप्मत्वं जीवादन्यस्य परमात्मन एव धर्मः। तत्पूर्वकं स्वरूपोपाधिकं लोककामेशत्वं सत्यसङ्कल्पत्वादिकं सर्वभूतान्तरात्मत्वं तस्यैव धर्मः। यथाह—एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्प" इति। तथैव "एष सर्वभूतान्तरात्माऽप-हतपाप्मा दिव्यो देव एको नारायणः" इति। "सोऽकामयत, बहु स्यां प्रजायेय" इत्यादि सत्य-सङ्कल्पत्वपूर्वकसमस्तचिदचिद्वस्तुसृष्टियोगो निरुपाधिकभयाभयहेतुत्वं वाङ्मनसपरिमितिकृतपरि-च्छेदरहितानवधिकातिशयानन्दयोग इत्यादयोऽकर्मवश्याः स्वाभाविका धर्मा जीवस्य न सम्भ-वन्ति॥ यत्तु शरीरसम्बन्धाच्च जीवातिरिक्त इत्युक्तं तदयुक्तम्। न हि सशरीरत्वं कर्मवश्यतां साधयति। सत्यसङ्कल्पस्येच्छयापि शरीरसम्बन्धसम्भवात्। अथोच्येत शरीरं नाम त्रिगुणात्मक-प्रकृतिपरिणामरूपभूतसङ्घातः। तत्सम्बन्धश्चापहतपाप्मनः सत्यसङ्कल्पस्य पुरुषस्येच्छया न सम्भ-वति, अपुरुषार्थत्वात्। कर्मवश्यस्य तु स्वस्वरूपानभिज्ञस्य कर्मानुगुणफलोपभोगायानिच्छतोऽपि तत्सम्बन्धोऽवर्जनीय इति। स्यादेतदेवं यदि त्रिगुणमयः प्राकृतोऽस्य देहः स्यात्। स तु स्वाभि-मतः स्वानुरूपोऽप्राकृत एवेति सर्वमुपपन्नम्॥

आदित्यादिजीवेभ्यो भेदो व्यपदिश्यतेऽस्य परमात्मनः। "य आदित्ये तिष्ठन्नादित्यादन्तरो यमादित्यो न वेद यस्यादित्यः शरीरं य आदित्यमन्तरो यमयति"। "य आत्मनि तिष्ठन्नात्मनो-ऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति"। "यस्याक्षरं शरीरं यमक्षरं न वेद। यो मृत्युमन्तरे सञ्चरन् यस्य मृत्युः शरीरं यं मृत्युर्न वेद। एष सर्वभूतान्तरात्माऽपहत-पाप्मा दिव्यो देव एको नारायणः" इति चास्यापहतपाप्मनः परमात्मनः सर्वाञ्जीवाञ्छरीरत्वेन व्यपदिश्य तेषामन्तरात्मत्वेनैनं व्यपदिशति। अतः सर्वेभ्य एवादित्यादिजीवेभ्योऽन्य एव परमा-त्मेति सिद्धम्॥

(३) माध्वे—अदृश्येऽनात्मा इत्युक्तं तथाऽऽदृश्यत्वमन्तःप्रविष्टं कर्त्तारमेतमन्तश्चन्द्रमसि मनसा चरन्तं सहैव सन्तं न विजानन्ति देवा इत्यन्तःस्थस्य कस्यचिदुच्यते। स चेन्द्रो राजा मा युअन्ता-स्यादिभिरन्यः प्रतीयते, तस्मात् स एवानन्दमय इति न मन्तव्यम्। अन्तः श्रूयमाणो विष्णुरेव, 'अन्तःसमुद्रे मनसा चरन्तं' ब्रह्मान्वविन्दद्दश होतारमर्णे समुद्रेऽन्तः कवयो विचक्षते। मरीचीनां पदमिच्छन्ति वेधसः। यस्याण्डकोशं शुष्ममाहुः' इत्यादितद्धर्मोपदेशात्। स हि क्षीरसमुद्रशायी, तस्य च वीर्य्यमण्डकोशः 'सोऽभिध्याय शरीरात् स्वात् सिसृक्षुर्विविधाः प्रजाः। अप एव ससर्जादौ तासु वीर्य्यमवासृजत्। तदण्डमभवद्धैमं सहस्रांशुसमप्रभम्। यस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः। आपो नारा इति प्रोक्ता आपो वै नरसूनवः। अयनं तस्य ताः पूर्वं तेन नारायणः स्मृतः।' इति व्यास-स्मृतेः। अहं तत्तेजो दर्शन् नारायणं पुरुषं जातमग्रतः। पुरुषाद् प्रकृतिर्जगदण्डम्' इति चतुर्वेदशिखायाम्।

इन्द्रस्यात्मा निहितः पञ्च होता वायोरात्मानं कवयो निचक्युः। अन्तरादित्येन मनसा चरन्तं 'देवानां हृदयं ब्रह्मान्वविन्दत्' इत्यादिभेदव्यपदेशात्।

(४) नैम्बार्के—आदित्याऽक्ष्णोरन्तःस्थो मुमुक्षुध्येयो हि परमात्मैव, न तु जीवविशेषः, कुतः, तस्यैवापहतपाप्मत्वसर्वात्मत्वादीनां धर्माणामुपदेशात्।

आदित्यादिजीववर्गादन्योऽस्ति परमात्मा। कुतः? ''आदित्ये तिष्ठन्'' इत्यादिना भेदव्यपदेशात्।

(५) भैक्षवे—काण्वपाठाध्याये श्रूयते ''स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु य एषोऽन्तर्हृदय आकाशस्तस्मिन्सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः स न साधुना कर्मणा भूयान्नो एवासाधुना कनीयान्'' इत्यादि। तत्र संशयः, किमयं सिद्धजीवो हिरण्यगर्भादिरथ वा परमेश्वर इति, विज्ञानमयशब्दस्य योगरूढिभ्यामात्मसामान्यवाचित्वात्। तत्र प्राप्तं, जीव एव, जाग्रत्स्वप्नसुषुप्त्यवस्थाभिर्जीवस्य पूर्वं प्रक्रान्तत्वात्, ''किं ज्योतिरेवायं पुरुषः इत्यादिस्वज्योतिः'' इत्यादिप्रश्नप्रतिवचनपरम्पराभिः तथा मध्येऽपि ''स वा अयमात्मा ब्रह्म विज्ञानमयो मनोमयश्चक्षुर्मयः'' इत्यादिना, यथाकारी यथाचारी तथा भवति साधुकारी साधुर्भवति पापकारी पापी भवती''त्यन्ते जीव एवाभ्यस्यते जीवे चात्र ब्रह्मशब्दो हिरण्यगर्भभावेन योज्यः। ''प्राजापत्यं ब्राह्मं वा रूपं तनुते'' इत्यव्यवधानतः प्रागुक्तत्वात्, शयनमपि च जीवे सुखेनोपपद्यत इत्येवं प्राप्ते आह—अन्तरत्र ब्रह्मैव भवितुमर्हति। कुतः? तद्धर्मोपदेशात्, सर्ववशित्वशुभाशुभकर्मफलाभागित्वसर्वाधिपतित्वादीनां परमेश्वरधर्माणामत्रोपदेशात्, जीवानां सिद्धानामप्यसिद्धदशायां प्रतिहतेच्छतायां पूर्वमुक्तान् प्रत्याधिपत्याद्यभावात्सत्कर्मणैव भूमपदप्राप्तेश्चेति॥

भेदव्यपदेशादपि जीवादन्योऽत्रान्तःस्थ इत्यर्थः। भेदव्यपदेशश्च यथा वाक्यशेषे येषां नोऽयमात्मा, आत्मन्येवात्मानं पश्यतीति आधाराधेयभावस्य भेदतन्त्रत्वात्॥

(६) भास्करीये—अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात् सर्व एव सुवर्णस्तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी तस्योदिति नाम स एष सर्वेभ्य पाप्मभ्य उदित उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेदेत्यधिदैवतमथाध्यात्मं य एषोऽन्तरक्षिणि पुरुषो दृश्यत इति छान्दोग्ये श्रूयते। तत्र संशयः। किमादित्ये चक्षुषि चोपास्यत्वेन कश्चित् संसारी निर्दिश्यते किंवा ईश्वर इति। किं तावद्युक्तं प्राप्तोत्कर्षः कश्चित् संसारीति कुतो रूपश्रवणादरूपा च परा देवता अशब्दमस्पर्शमरूपमव्ययमिति श्रुतेराधारश्रवणाच्च सर्वगता च परा देवता। ऐश्वर्यमर्या-

दावचनाच्च । ये चामुष्मात् पराञ्चो लोका ये चैतस्मादर्वाञ्च इति । तस्मादादित्यादिक्षेत्रज्ञ इति प्राप्ते ब्रूमः । अन्तर्मण्डलाभ्यन्तरे चाक्षिणि च उपदिश्यमानः पर एवात्मा भवितुमर्हति तद्धर्मोपदेशात् सर्वपाप्मोदयो नाम तस्य धर्मः । तन्निर्वचनार्थमेवैनमुद्रामानं करोति । तस्योदिति नामेत्यक्षिपुरुषस्यापि तदेव नामातिदिश्यते यन्नाम तन्नामेति । न च संसारी कश्चित् सर्वपापविनिर्मुक्तोऽस्ति अन्यथा संसारित्वानुपपत्तेर्न चैषा श्रुतिरन्यथा परिणेतुं शक्या हेत्वभावात् । ननु रूपादिश्रवणं हेतुर्न परमेश्वरस्यापि सर्वशक्तित्वादुपासकानुग्रहाय रूपोपादानसम्भवात् । किं मायामयं रूपं नेति ब्रूमः पारमार्थिकमेवैतत् । यथाभूतार्थज्ञापकं हि शास्त्रं यत्र कारणमात्रस्वरूपं विवक्षते तत्र तत्परास्ताः श्रुतयोऽस्थूलमनण्वह्रस्वमदीर्घमरूपमव्ययमित्येवमाद्याः स्थानव्यपदेशश्चोपासनार्थ एव मर्यादावचनं चाधिदैवाध्यात्मविभागापेक्षया सर्वेशितृत्वमेवानेन प्रकारेणोक्तं भवति। न हि निरङ्कुशमैश्वर्यमीश्वरादन्यत्रावकल्पते । सैव ऋक् तत् साम तदुक्थं तद्यजुस्तद्ब्रह्मेति सर्वान्मत्वमन्यत्र नावकल्पते । ( तद्यदि वीणायां गायन्त्येतम्, ते गायन्ति लौकिकस्यापि गानस्यैतद्विषयत्वं दर्शयति तदन्यत्र नावकल्पते ।)

इतश्चादित्यादिक्षेत्रज्ञादन्यः । कथं भेदव्यपदेशात् । य आदित्ये तिष्ठन्निति ।

(७) शुद्धाद्वैतसिद्धान्ते त्वयमभिप्रायः—पूर्वाधिकरणविषयवाक्ये 'ब्रह्मविदाप्नोति पर' मित्युपक्रम्य, आनन्दमयस्य फलत्वमुक्त्वा, अग्रे, 'स यश्चायं पुरुषे यश्चासावादित्ये स एकः, स य एवंविद्'दिति साधनोक्तिपूर्वकं क्रमेण तत्फलमुच्यते । तचदादित्यान्तः पुरुषान्तश्च वर्तमानस्य स्वरूपं ब्रह्मत्वेन न विचार्यते, तदा 'तत्त्वेव भयं विदुषोऽमन्वानस्ये'त्यविचारकस्य भयश्रावणात् फलं न भवतीति तत् सर्वथा विचारणीयम्, अतो हेतुतागर्भेण प्रसङ्गेन इदमधिकरणमारभ्यते । तत्स्वरूपं च छान्दोग्ये प्रथमप्रपाठके श्रूयते । 'अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेशः आप्रणखात् सर्वः सुवर्णः तस्य तथा कप्यासं पुण्डरीकमेवमक्षिणी, तस्योदिति नाम, स एष सर्वेभ्यः पाप्मभ्य उदितः, उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद, तस्यर्क्च साम च गेष्णौ, स एष ये चामुष्मात् पराञ्चो लोकास्तेषां चेष्टे देवकामानां चेत्यधिदैवतम् । अथ य एषोऽन्तरक्षिणि पुरुषो दृश्यते, सैवर्क्तत्साम तदुक्थं तद्यजुस्तद् ब्रह्म तस्यैतस्य तदेव रूपं यदमुष्य रूपं यावमुष्य गेष्णौ तौ गेष्णौ यन्नाम तन्नाम यः स एष, ये चैतस्मादर्वाञ्चो लोकास्तेषां चेष्टे मनुष्यकामानां चेति, तद्य इमे वीणायां गायन्त्येतं ते गायन्तीत्यादि ।

तत्र संशयः । किमधिष्ठातृदेवताशरीरमत्रोच्यते ? उत ब्रह्मेति ? ब्रह्मणो वा शरीरमिति ? संशयबीजं तु हिरण्मयशब्दः । विकारप्रत्ययस्य भ्रमोत्पादकत्वात् । तत्र हिरण्मयशब्दो विकारवाची । केशनखादयश्च शरीरधर्माः । 'मृता वा एषा त्वगमेध्या यत्केशश्मश्रु' इत्यशुद्धसम्बन्धः शरीरमन्तरेण नोपपद्यते । अधिष्ठानकृतः परिच्छेद आधिदैविकादिवचनं च व्यापकत्वविरोधाद् ब्रह्मत्वस्य बाधकम् । दृश्यत इत्यनेनोक्तं चाक्षुषत्वमपि तथा । 'यत्तदद्रेश्यमग्राह्य'मिति श्रुतिविरुद्धत्वात् । इन्द्रियवत्त्वं च तथा । 'न तस्य कार्यं करणं च विद्यते' इति श्रुतिविरोधात् । कप्यासमिति कपेरासनमारकं भवतीत्यसभ्यतुल्यता च तथा । अतो देहेन्द्रिययोर्विद्यमानत्वात् कोऽपि जीवोऽधिकारी सूर्यमण्डलान्तःस्थोऽत्रोच्यते, नच तत्कथनस्य प्रयोजनाभावः शङ्क्यः । 'ब्रह्मणा सह मुच्यन्त' इतिवदधिकारी सायुज्ये तदधिकारसमाप्त्यनन्तरं तेन सहास्य मुक्तिं बोधयितुं तत्कथ-

नात् । अथापहतपाप्मत्वं जीवस्य न सम्भवतीति पूर्वोक्तं नाङ्गीक्रियते, तदापि परिच्छिन्नत्वादीनां दोषाणां विद्यमानत्वात्तस्य ब्रह्मशरीरत्वमस्तु । तस्य कर्मजन्यत्वाभावादैच्छिकलीलाशरीरत्वादपहतपाप्मत्वं सुवर्णमयत्वं चोपपन्नतरम् । शरीरवदिच्छया लीलार्थमिन्द्रियपरिग्रहोऽपि युज्यते । वर्णमात्रसाम्याद्यासभ्यतुल्यता । असु क्षेपण इत्यस्मादधिकरणे घञि कृते अस्यते प्रासोऽस्मिन्नित्यास आस्यं कपेर्मुखमिति तत्तुल्यता वेति न दोषः । किञ्च, अस्य कप्यासमिति पुण्डरीकस्य विशेषणम्, नाक्ष्णोः, अतोऽपि तथा । एवमपि कथनं सर्वस्य ब्रह्मभावाय श्रुतिर्वदतीति ब्रह्मण एवेदं शरीरमिति प्राप्ते—

अभिधीयते । अन्तर्दृश्यमानः परमात्मैव । कुतः ? तद्धर्मोपदेशात् । तस्य ब्रह्मणो धर्मा उदित्यादयोऽत्रोपदिश्यन्ते, 'स एष सर्वेभ्यः पाप्मभ्य उदित' इति, तस्मात् । नन्वपहतपाप्मत्वं स्वाध्याये आलम्बे च श्रूयते, देवानां च, 'न ह वै देवानां पापं गच्छती'ति, तत्कथं तस्य ब्रह्मासाधारणत्वमिति चेत्, न। तस्यैतन्नाममात्रसाम्येऽपि स्वरूपतो भिन्नत्वात् । स्वाध्यायो देवपवित्रमिति, 'य एवंविदि पापं कामयते' इति, तत्र तत्र लिङ्गेन स्वाध्यायादौ तस्य पापनाशरूपतया । अत्र तु 'अनन्वितं ते भगवन् विचेष्टितं यदात्मना चरसि हि कर्म नाज्यसे' इति श्रीभागवतवाक्ये कर्ममात्राञ्जनराहित्यरूपतयोक्तत्वेन तथावसायात् । नच पुण्यकर्माञ्जने को दोष इति शङ्क्यम् । 'कर्मणां जात्यशुद्धाना'मिति भगवद्वाक्येन कर्ममात्रस्याशुद्धत्वनिश्चयात् । मुमुक्षूणां पुण्यफलानादरणेनापि तथा निश्चयाच्च । नन्वेवं नामसाम्येऽपि कथं स्वरूपभेद इति चेत्, उच्यते; ब्रह्म कारणम्, जगत्कार्यमिति पूर्वाधिकरणे निर्णीतम् । तत्र कार्यासाधारणधर्मा यथा न कारणे गच्छन्ति, तथा कारणासाधारणधर्मा अपि कार्ये । इदं हि लोके दृष्टम् । न हि घटपटादेः प्रावरकत्वजलहारकत्वादिस्तन्तुमृत्पिण्डयोर्दृश्यते, न वा पटघटजनकत्वं कारणगतं पटे घटे चेति । एवमंशिधर्मा अप्यंशे । न हि 'सोऽकामयते'त्यादिनोक्तः कामादिर्जीवधर्म इति, अतोऽसाधारण्यादेव स्वरूपभेद इति नामसाम्यमात्रं न तद्बाधकम् । नचैवं नामसाम्ये सिद्धेऽत्र जीवधर्मग्रहणमेवास्तु, ब्रह्मधर्मग्रहणे किं बीजमिति शङ्क्यम् । कारणधर्माणां बलिष्ठत्वात् । उक्तरूपोपासनया जीवेऽपि तथाभवनश्रावणेन तथावसायादिति । अन्यथा तन्न वदेत् । अतस्तस्याः कथनेऽप्येतज्ज्ञापनमेव प्रयोजनम् । अतः सर्वरसादयोऽपि ब्रह्मस्वरूपनिष्ठा एव धर्माः । ये पुनरस्थूलादिवाक्ये निषिध्यन्ते, ते तु लौकिकाः कार्यधर्मा एव । तेन 'अणोरणीया'नित्यादौ कारणधर्मा एव । तेनेदं सिद्धम् । यदेकोऽप्यसाधारणो धर्मो विद्यमानः शिष्टान् सन्दिग्धान् धर्मान् ब्रह्मधर्मत्वेनैव गमयति । अन्यथा तस्यान्यगामित्वे असाधारण्यं भज्येत । इममेव श्रुत्यभिप्रायमङ्गीकृत्य सर्वेष्वधिकरणसूत्रेषु ब्रह्मवाक्यनिर्णयमाह सूत्रकारः । अन्यथा आदित्यान्तरस्यन्त इत्येवं ब्रह्माधिकरणं विशिंष्यात् । तेनेदं सिद्धम् । यत्र निश्चिते कार्यत्वे तस्य कारणाभेदेन स्तुतिः क्रियते, यथेन्द्रप्रतर्दनसम्वाद इन्द्रेण स्वस्य । तत्र नेयं रीतिः । तद्व्यतिरिक्तस्थले त्वेवमेवावगन्तव्यमिति । न चैवं परिच्छिन्नेषु नानास्थानेषु नानापरिमाणेन स्थितौ ब्रह्मणोऽनेकत्वापत्त्या 'एकमेवाद्वितीय'मित्यादिश्रुतिविरोधः शङ्क्यः । 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति लक्षणवाक्ये अनन्तपदेन ब्रह्मणोऽनन्तमूर्तिताया अपि प्रतिज्ञातत्वात् । 'यदेकमव्यक्तमनन्तरूपं विश्वं पुराणं तमसः परस्ता'दिति श्रुत्यन्तरेऽप्युक्तत्वात् । अनन्तमूर्तित्वाभावे ब्रह्मणो व्यापकतया सर्वस्य तदन्तःस्थत्वेन 'निहितं गुहाया'मिति हृदयाकाशनिधानोक्तिविरोधापाताच्च । तस्माद् ब्रह्मणो व्यापकत्वेनैकत्वेऽप्यनन्तमूर्तित्वेन साकारत्वाद्देदैकवेद्यत्वाच्च यादृशं

यद्वाक्ये यत्र स्थाने उच्यते, तादृशं तत्र तद् ब्रह्मेति मन्तव्यमिति सिद्धम्। ननु किमित्येवं ब्रह्म-
स्वरूपस्य निर्बन्धेन साकारत्वं निरूप्यते । साधकानुग्रहार्थं निर्दुष्टलीलाविग्रहाङ्गीकारपक्ष-
स्याप्यदुष्टत्वादिति चेत्, उच्यते, तच्छरीरं केन कृतम्? ईश्वरेणान्येन वा, नित्यं वा?
तत्र द्वितीयस्यासङ्गतत्वादाद्यमेवादर्तव्यम्। तथा सति तादृशस्यातिसमर्थस्य का वा अनुपप-
त्तिर्येन स्वस्यापि शरीरं कल्पयेत्, किन्तु लीलया व्यामोहनार्थं नटवदन्यथा प्रदर्शयेत्। 'यथा
मत्स्यादिरूपाणि धत्ते जह्याद्यथा नटः' इति श्रीभागवते नटदृष्टान्तस्योक्तत्वात्। अतः शुद्धसत्त्वा-
त्मकं वा, प्राकृतं वा, मायिकं वा, यन्मूलरूपे कल्पनीयं तदसङ्गतमेव । अथ नित्यम्, तद्यदि
सच्चिदानन्दात्मकम्, तदा तु ब्रह्मैव । अचिदात्मकं तु तादृशाकारं प्रलयबोधकसौपालवाक्येभ्यो
विरुध्यत इति, तदप्यसङ्गतम्, तस्मात् पुराणादिष्वपि यत्रोपपत्तिपूर्वकं ब्रह्मधर्मा उच्यन्ते, तत्र
ब्रह्मैवेति मन्तव्यम्। ब्रह्मणो वेदैकसमधिगतत्वात् । मीमांसायाश्च तदर्थनिर्णयार्थत्वात्तव्या-
यानामन्यत्राप्यतिदेष्टुं शक्यत्वादिति । नच हिरण्मय इत्यत्र विकारप्रत्यय इति भ्रमितव्यम्।
हिरण्यशब्दस्य प्रकृतिभूतस्य द्व्यच्त्वात्। यकारलोपस्य छान्दसत्वात्। हिरण्यशब्दश्चात्रानन्दवाची।
यद्यपि लोके तथा न प्रसिद्धः, तथापि लोके हिरण्यस्यानन्दसाधकत्वात् सिद्धे तद्गुणकत्वे, यद्
यद्गुणकं, तत् तदात्मकमिति व्याप्तेः समन्वयाधिकरणे साधितत्वात्, कार्यभूतस्यापि तथात्वे
कारणभूतस्यानन्दत्वे सन्देहाभावात्, तद्बोधके शब्देऽपि तद्वाचकत्वस्यासन्दिग्धत्वादिति ।
अतः केशादयोऽपि सर्वे आनन्दमया एवेति सूर्यमण्डलान्तःपरमात्मैव । एवमक्षिस्थितेऽपि
परमात्मत्वं बोध्यम् । तस्य 'तदेव रूपं यदमुष्य रूप'मित्यादिना सर्वत्राप्येतद्धर्मातिदेशात्,
सैवर्क्तयजुरित्यादिना तद्ये इमे वीणायां गायन्तीत्यादिना सर्वात्म्योपदेशाच्चेति।

'य आदित्ये तिष्ठन्नादित्यादन्तरो, यमादित्यो न वेद, यस्यादित्यः शरीरं, य आदित्यमन्तरो
यमयत्येष त आत्मान्तर्याम्यमृत' इति श्रुत्यन्तरे सूर्यमण्डलात्तदभिमानिनः सकाशाच्च भेदेन कथ-
नात्। नच पूर्वसूत्रोक्तहेतुनैव सिद्धे ब्रह्मत्वे हेत्वन्तरोपन्यासस्य वैयर्थ्यं शङ्कनीयम्। तथा सत्ये-
तेनैव निर्वाहे अन्तःपदमत्र निधायैकमेव सूत्रं प्रणयेत्। नन्वत्र भेदव्यपदेशमात्रेण कथं परमा-
त्मलाभ इति चेत् , इत्थम् , अन्तर्यामिब्राह्मणे हि जडाज्जीवाच्च भिन्नत्वेनान्तर्यामी प्रतिपाद्यते।
तत्र 'य आदित्ये तिष्ठन्नादित्यादन्तर' इति जडस्य मण्डलस्य स्थानत्वेन कथनात्ततो भेदः । आन्त-
रत्वं मण्डलाद्भेदश्चाभिमानिनोऽप्यस्तीति ततोऽपि भेदं वक्तुं 'यमादित्यो न वेदे'त्युक्तम्। तेन
मण्डलधर्मैरभिमानिधर्मैश्च न सम्बध्यते। अभिमानी चेत्तं जानीयान्मुक्तः स्यात्, अतः सर्वमु-
क्तिपरिहाराय स्वधर्मैर्ज्ञानादिभिस्तं न योजयति। एवमुभयसाद्भेदे सिद्धेऽपि तत्र स्थितेः किं
प्रयोजनमित्याकाङ्क्षायां 'यस्यादित्यः शरीरं यः आदित्यमन्तरो यमयती'ति द्वयमाह । तथाच
जगद्भासनं, दिग्विभागो, धर्मप्रवृत्तिश्चेत्यादिलीलासिद्ध्यर्थं तच्छरीरम्, तस्य नियमनं च तादृश-
लीलासिद्ध्यर्थम्। यतो 'भीषास्मा'दित्यादिश्रुत्या सर्वोऽपि भगवतो बिभेति। भीतिश्च नियमना-
दिति। किञ्चात्र पुनरप्यन्तरपदम्, अन्तरयतीत्यन्तर इति । सर्वोऽन्तःस्थापकत्वबोधनार्थम्।
एवमत्र चत्वारोऽर्था उच्यन्ते । तथाचात्र भेदव्यपदेशः। सर्वविलक्षणत्वव्यपदेश इति। ततः
सुखेन परमात्मलाभ इति। नन्वेवं सत्यत्र हेतुसाध्ययोर्भिन्नयोः कथनादधिकरणान्तरमेवं कुतो

नाङ्गीक्रियते। चकारेण पूर्वसूत्रोक्तहेतुसमुच्चयादिति ब्रूमः। नच साध्यान्तरनिर्देशासङ्गतिः शङ्क्या। तस्य 'नेतरोऽनुपपत्ते'रितिवदुपचारव्यावृत्त्यर्थत्वात्, अतो नाधिकरणभेद इति। नन्वत्र पूर्वसूत्रविषयवाक्ये 'य एवं वेदे'त्युपासनालिङ्गात् तस्या 'वाचं धेनुमुपासीते'तिवत् कल्पिताकारेणापि सिद्धेः किमर्थं ब्रह्मस्वरूपाकाराग्रह इति चेत्, उच्यते, उक्तहेतुभ्यामाचार्येण साधिते ब्रह्मत्वे उपासनाज्ञानयोरुभयोरप्येकविषयत्वेन तुल्यफलत्वबोधनायेति बुद्ध्यस्व। नन्वतस्मिंस्तद्धर्मानारोप्य तत्त्वेन चिन्तनमुपासना, तस्य तत्त्वेन निश्चयो ज्ञानमिति स्वरूपभेदात् कथं तुल्यफलतेति चेत्। इत्थम्। वेदे हि सर्वत्र 'अन्नं ब्रह्मोपासत' इत्यादौ कार्ये कारणधर्मारोपेण फलश्रावणात्। लोकेऽपि निकृष्टोत्कृष्टधर्मारोपेण फलदर्शनाद्विपरीते वैपरीत्यदर्शनाच्च कारणे कार्यधर्मारोपस्त्वयुक्त एव। कार्ये कारणधर्मारोपस्तु कार्यस्य कारणात्मकत्वेन तद्धर्माधिकरणतया भवति युक्त इति तथोपासना तु यथोक्तफलसाधिका, तस्यारोपस्यादुष्टत्वादिति॥



## ७ तल्लिङ्गाधिकरणम् ।

( ब्रह्मप्रकरणस्थश्रुताकाशादिपदं न भूताकाशपरम् )

आकाशस्तल्लिङ्गात् ॥ १।१।२१ ॥

"अस्य लोकस्य का गतिरित्याकाश इति होवाच, सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते । आकाशं प्रत्यस्तं यन्ति । आकाशो ह्येवैभ्यो ज्यायानाकाशः परायणम्" । ( छां. १।९।१ ) इति । तत्र संशयः । भूताकाशो ब्रह्म वेति ।

( प्रकरणादेव तथार्थं इति पूर्वपक्षे, प्रकरणस्य सन्दिग्धतोपपादनम् )

ननु कथमत्र सन्देहः? आकाशव्योमशब्दा ब्रह्मण्येव प्रयुज्यन्ते ब्रह्मप्रकरणे । कार्यनिरूपणे तु महाभूतवचनः । यथा—"आकाश आनन्दो न स्यात् परमे व्योमन् प्रतिष्ठिता"—इत्यादि । "आत्मन आकाशः सम्भूतः" ( तै. २।१ ) इति कार्यनिरूपणम् । अतः प्रकरणादेव सन्दिग्धनिर्णये किमिति सूत्रारम्भः जन्मादिलक्षणसूत्रेण चायमर्थो निर्णीतः । अन्यथा ब्रह्मशब्देऽपि सन्देहः स्यात्, महाभूतवेदादिवाचकत्वात् । तस्मात्प्रकरणादेव परिज्ञानं भविष्यतीति चेत्, उच्यते, असन्दिग्धे प्रकरणे तथैव निर्णयः । इह पुनः प्रकरणमपि सन्दिग्धमतो विचारः ।

---

पूर्वाधिकरणद्वयेन विकारे प्राचुर्ये वा मयडिति प्रत्ययसन्देहो निवारितः । इदानीं प्रकृतिसन्देहं वारयितुं आकाशाधिकरणमेकेन सूत्रेण रचयाञ्चक्रुः । आकाशस्तल्लिङ्गात् । अत्र छान्दोग्यप्रथमप्रपाठकस्थं विषयवाक्यमाहुः—अस्येति । अथ विषयवाक्यम् ।

अस्य लोकस्य का गतिरित्याकाश इति होवाच सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्त आकाशं प्रत्यस्तं यन्त्याकाशो ह्येवैभ्यो ज्यायानाकाशः परायणᳫं स एष परोवरीयानुद्गीथः स एषोऽनन्तः परोवरीयो हास्य भवति परोवरीयसो ह लोकान् जयति य एतदेवं विद्वान् परोवरीयाᳫंसमुद्गीथमुपास्ते । तᳫं हैतमतिधन्वा शौनक उदरशाण्डिल्यायोक्त्वोवाच यावत्त एनं प्रजायामुद्गीथं वेदिष्यन्ते परोवरीयो हैभ्यस्तावदस्मिँल्लोके जीवनं भविष्यति तथामुष्मिँल्लोके लोक इति स य एतमेवं विद्वानुपास्ते परोवरीय एव हास्यास्मिँल्लोके जीवनं भवति तथामुष्मिँल्लोके लोक इति लोके लोक इति ॥

अथ भाष्यम् । अधिकरणप्रयोजनमाहुः—नन्वित्यादिना विचार इत्यन्तेन प्रकरणात् । सन्देह एव नोत्पद्यते इत्याहुः—आकाशेति ।

ब्रह्मप्रकरणमाहुः—यथेति । कार्यप्रकरणमाहुः—आत्मन इति । सन्दिग्धनिर्णयेति । सन्दिग्धस्य सन्देहविषयीभूतस्य शब्दार्थस्य निर्णये सतीत्यर्थः । ननु ब्रह्मणं उत्पत्त्यादित्रयहेतुत्वसिद्ध्यर्थमिदं प्रणीतमित्यत आहुः—जन्मादीति । अन्यथेति । प्रकरणस्य सन्देहावारकत्वे । महाभूतेति । आकाशस्यापि बृहत्वात्तद्वाचकत्वादित्यर्थः । सन्दिग्धमिति । ब्रह्मभूताकाशोभयवाचकमाकाशपदमेकस्मिन्नेव प्रकरणे पठितमितीदं ब्रह्मविषयकं भूताकाशविषयकं वा प्रकरणमिति प्रकरणं सन्दिग्धमित्यर्थः ।

(प्रकरणादपि भूताकाश इति पूर्वपक्षः)

**अवान्तरविद्यायां पर्यवसितप्रकरणवदस्यापि प्रकरणस्य भूताकाश एव पर्यवसानमिति लोकभाष्यन्यायेनाकाशो भौतिक एवेति पूर्वपक्षस्तत्राह—**

(तत्र समाधिः)

**आकाशस्तल्लिङ्गात्। आकाशः परमात्मैव। कुतः। तल्लिङ्गात्। श्रुतिलिङ्गादयो**

---

पूर्वपक्षमाहुः—**अवान्तरेति**। यथा सम्वर्गविद्यायां जानश्रुत्युपाख्यानं पर्यवसितं तथात्राप्याकाशशब्दस्य भूताकाशे एव पर्यवसानमित्यर्थः। **लोकेति**। येन पदेन लोके भाष्यते कथ्यते योऽर्थ इत्यर्थः। तथा च लोकेऽवगतसामर्थ्यः शब्दो वेदेऽपि बोधक इति न्यायेनेति यावत्, भूताकाशे ब्रह्मत्वेनोपासनया फलं भविष्यतीति पूर्वपक्षस्याशयः।

समाधानमाहुः—**आकाशस्तल्लिङ्गात्**। **श्रुतिलिङ्गादय इति**। "श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानानां समवाये पारदौर्बल्यमर्थविप्रकर्षादि"ति जैमिनिसूत्रोक्ता इत्यर्थः। नियामकत्वेन, अर्थनिश्चयजनकत्वेन, एकवाक्यता चेति। अत्र पूर्वमीमांसासूत्रं, इदं च पूर्वमीमांसायां तृतीयाध्याये विस्तरेणोक्तं

---

१ मीमांसका हि अङ्गत्वनिर्णये श्रुत्यादिप्रमाणषट्कं स्वीकुर्वन्ति। तत्र, अङ्गत्वं नाम शेषत्वम्। यदेव हि अङ्गत्वलक्षणं तदेव शेषपदशक्यतावच्छेदकं नान्यत्। अङ्गत्वं च पारार्थ्यम्। तच्च, यदुद्देशप्रवृत्तकृतिकारकत्वेन विहितं यत्तत्त्वं तदङ्गत्वम्। स्वर्गोद्देशप्रवृत्तपुरुषकृतौ यागानुकूलाया कारकत्वेन विध्यन्वयाच्च यागे लक्षणसमन्वयः। प्रधानोद्देशप्रवृत्तपुरुषकृतौ प्रयाजाद्यनुकूलायां प्रयाजादेः कारकत्वेन विध्यन्वयाच्च प्रयाजादावपि सः। द्रव्यगुणकालकर्तृदेशादौ च यागाद्युद्देश्ययागानुकूलकृतौ करणत्वकर्तृत्वाधिकरणत्वादिकारकत्वेन विधेयत्वाद्यागाङ्गत्वाविघातः। षष्ठीस्थले च सम्बन्धसामान्याभिधानेऽपि कारकत्व एव पर्यवसानान्नाव्याप्तिः। निमित्तस्य च क्रियान्वयिनोऽपि कारकत्वाभावान्नाङ्गत्वापत्तिः। निमित्तस्यानुष्ठापकत्वाख्योद्देश्यत्वेऽपि ईप्सितत्वाख्योद्देश्यत्वाभावाच्च न यागस्य निमित्ताङ्गत्वम्। लक्षणे तादृश्या एवोद्देश्यताया विवक्षितत्वात्। उद्देश्यतापदेनैव च कर्मकारकत्वलाभात्, कारकपदं तदतिरिक्तपरम्, कृष्यादेरपि यागकृतिकारकत्वादङ्गत्वप्रसक्तौ विधेयत्वान्तरम्। यथा चास्य न क्वाप्यव्याप्त्यतिव्याप्ती तथा कौस्तुभे विस्तरः। एवं च यत्रेदं न लक्षणम्, यथा यागादेर्भावनादि प्रति, तत्र भाक्तोऽङ्गत्वव्यवहारः शास्त्रे। यद्यपि च नेदृशमङ्गत्वं श्रुत्यादिप्रमाणकं कारकत्वमात्राभिधायित्वात् तृतीयादेः। तथापि यत्पदार्थः स्वर्गादिपदात्, तदुद्देश्यकत्वं ससर्गादिना, कृतिराख्यातात्, कारकत्वं तृतीयादेः, विध्यन्वयित्वं विधिपदसमभिव्याहारात्। विधिर्हि विशिष्टभावानां विदधद्यावद्विशेषणान्यपि विधत्ते इति सर्वेषामुद्देश्यत्वेन विधेयत्वेन वा विध्यन्वयः। अत एवाङ्गत्वघटकीभूतपदार्थान्तराणां प्रमाणान्तरेण प्रसिद्धावपि तद्घटककारकत्वस्य श्रुत्यादिगम्यत्वात्तेषामङ्गत्वप्रामाण्यव्यवहारः॥

यद्यपि पारार्थ्यमङ्गत्वं तथापि न यागादेर्लक्ष्यता। समानपदश्रुत्या यागादेरेव भावनाभाव्यत्वेन तस्य स्वर्गोद्देशेन विहितत्वाभावात्। विधेः स्वरूपयोग्यत्वेऽपि भ्रमप्रमासाधारण्येनेष्टसाधनत्वज्ञानस्यैव कारणतयेष्टसाधनत्वसिद्धौ प्रमाणाभावाच्च। स्वर्गकामपदस्य तु स्त्रीकामः प्रायश्चित्तं कुर्यादितिवत् कर्तृपरत्वादिनाप्युपपत्तेर्न भाव्यपरत्वावश्यकता। अतो न यागादेर्लक्ष्यत्वम्।

वस्तुतस्तु—उपकारकत्वमेव शेषत्वम्; तदर्थेऽप्यपकारके शेषत्वव्यवहाराभावात्। तच्च श्रुतिलिङ्गवाक्यरूपप्रमाणत्रयमेव। अत एव मीमांसादेर्द्रव्यस्यारुण्यादेर्गुणस्यावघातादेः संस्कारस्य चोपकारकत्वदर्शनाच्छेषत्वम्। प्रोक्षणादिसंस्कारस्य तु लिङ्गेनाङ्गत्वाद्यसम्भवेऽपि श्रुतिवाक्याभ्यामङ्गत्वप्रतीतेस्तद्बलेनैव उपकारकल्पनया शेषत्वोपपत्तिरिति तेषामेव लक्ष्यत्वमिति प्राप्ते—नोपकारकत्वं शेषत्वम्, गोदोहनदध्यानयनादेरपि प्रणयनवाजिनयागाङ्गत्वापत्तेः; अपि तु पारार्थ्यमेव। अपकारकस्थले तु तदपकारस्यैवेष्टत्वेनोद्देश्यता न तु तस्येति न तदर्थेऽप्यपकारके शेषत्वव्यवहारः। तदपि श्रुत्यादिषट्प्रमाणगम्यमिति, अतश्च श्यपयागोऽपि फलं प्रसक्तम्।

तथाहि—यद्यपि विधेः स्वरूपयोग्यतयैव प्रवृत्त्यनुकूलत्वं लिङोऽवगम्यते; तथापि कदाचित् प्रवृत्त्यभावे विधिवैयर्थ्यापत्तेरवश्यं फलाधिततया भवितव्यम्। तदा चेष्टसाधनताज्ञानं विना तदसम्भवात्तस्य च बाधकाभावे भ्रमत्वायोगादिष्टसाधनत्वं तावद्यागस्य विधिबलादवगम्यते, इष्टविशेषसाधनत्वं च स्वर्गकामादिपदसमभिव्याहारादिति यागस्य स्वर्गाङ्गत्वसिद्धिः। एवं

फलस्यापि भोक्तृपुरुषाङ्गत्वम् । भोक्ता चोत्सर्गतो विधिवशात्कामनावशादात्मनेपदवशाच्च कर्तैव, प्रमाणरावे त्वन्यः । अङ्गा-
ङ्गत्वव्यवहारो भाक्त इति [illegible] ध्येयम् । पुरुषः पुनः कर्तृत्वादिना यागाद्युद्देश्यत्वप्रतिकारकत्वाद्वाक्यादेव तदङ्गमित्यविवादम् ॥

तदेवमङ्गत्वे निरूपितेऽङ्गत्वे श्रुत्यादीनि षट् प्रमाणानि । तत्र श्रुतिर्नामाङ्गत्वघटकीभूतोद्देश्यताप्रतिकारकत्वयोरन्यतरस्य
प्राधान्येन वाचकः शब्दः । लिङ्गं नामाङ्गत्वघटकीभूतपरोद्देश्यताप्रतिकारकत्ववाचकपदकल्पनानुकूला लुप्तपदार्थनिष्ठा योग्यता।
यथा स्रुवेणावद्यतीत्यत्र स्रुवनिष्ठा द्रवपदकल्पनाऽनुकूला स्वगतिकारकत्ववाचिपदकल्पनाऽनुकूला च योग्यता लिङ्गम् । सा च पदरूप-
श्रुतिकल्पकत्वात्तद्द्वारा तदर्थविनियोगे प्रमाणम् । वाक्यं नामाङ्गत्वघटकीभूतपरोद्देश्यताप्रतिकारकत्वान्यतरपदार्थकल्पनाऽनुकूल-
श्रुतपदसन्निधिः । अस्ति चेदं धेनुर्दक्षिणा, उच्चैरृचा क्रियते, प्रयाजशेषेणेत्यादौ । अत्र कल्पनाशब्देन कर्मत्वकरणत्वादिविषयकं
संसर्गविधया लक्षणादिसाधारण्येन शक्तिजन्यपदार्थोपस्थितिभिन्नबोधमात्रं विवक्षितम्, तेन धेनुर्दक्षिणेत्यादौ संसर्गविधया
भासमानकारणताके नाव्याप्तिः । वस्तुतस्तु, सुबन्तपदयोः परस्परान्वयस्याव्युत्पन्नत्वादवश्यकल्प्यभावनान्वयानुरोधेन धेनु-
रिति प्रथमया करणत्वलक्षणाद्दक्षिणापदेन च तत्कार्यवृत्तिकर्मत्वलक्षणात्कल्पनापदेन लक्षणाजन्योपस्थितिरेवाभिप्रेता । उच्चै-
रित्यादौ लुप्तविभक्त्यर्थस्य धारणत्वस्य प्रातिपदिकेनैव लक्षणान्नाव्याप्तिः । अयवोर्वैरित्यादौ करणत्वस्य संसर्गविधयैव भा-
नोपपत्तेः कल्पनापदेनोभयं विवक्षितम् । प्रयाजशेषेणेत्यादौ तृतीयया कर्मत्वस्य धातुना करणत्वस्य लक्षणाकल्पना स्फुटैव ।
श्रुतपदसन्निधेश्च योग्यताज्ञानं विना कर्मत्वादिकल्पकत्वानुपपत्तेर्योग्यतारूपलिङ्गानुमापकत्वम् । श्रुतस्यैव पदस्य कर्मत्वादि-
लक्षणकत्वाङ्गीकारेण तद्वाचकपदरूपश्रुतिकल्पकत्वाभावेऽपि च श्रुतपदस्य तत्तात्पर्यकत्वरूपधर्मवैशिष्ट्यरूपेण कल्पनाच्छ्रुति-
कल्पकत्वोपपत्तिः । अतश्च वाक्यं लिङ्गं श्रुतिं च कल्पयित्वाङ्गत्वे प्रमाणम् । एवं वाक्ये निरूपिते प्रकरणमिदानीं निरूप्यते ।
ननु किमिदं प्रकरणं नाम ? न तावत्सन्निधिमात्रम्; गोदोहनादेरपि दर्शाङ्गत्वापत्तेः । अथ साकाङ्क्षत्वमात्रम्; विकृतेरपि
प्राकृताङ्गविषये तदापत्तेः । नापि साकाङ्क्षत्वे सति सन्निधिपठितत्वम्; उपहोमादावपि तदापत्तेः । अथोभयाकाङ्क्षत्वविशिष्टं
तत्; सिद्धरूपाणां मन्त्रादीनामपि तदापत्तेः । प्रयाजादीनामनाकाङ्क्षितत्वेन तदनापत्तेश्च । अथ दर्शपूर्णमासयोः प्रकारान्तरेण
प्रयोजनाकाङ्क्षत्वेऽपि इतिकर्तव्यतात्वेन तदाकाङ्क्षोपपत्तेर्युक्तं प्रकरणमिति चेत्, किमिदमितिकर्तव्यतात्वं नाम ? न ताव-
त्फले अपूर्वे वा सहकारित्वम्; प्राधान्यापत्तेः, प्रयाजादिवदाग्नेयस्यापि विकृतावतिदेशापत्तेश्च । नापि करणजनकत्वम्,
प्रयाजादिषु बाधादिति चेत्, न; सन्निहितस्य फलवतोऽनवगताङ्गताकपदार्थविषये इतिकर्तव्यतात्वेनापेक्षणस्यैव प्रकरणपदार्थ-
त्वात् । अत्रासन्निहितज्योतिष्टोमाद्यङ्गत्वस्य प्रयाजादौ वारणायाद्यं विशेषणम् । अनूयाजाद्यङ्गत्ववारणाय फलवत इति द्वितो-
यम् । प्रोक्षणादेः श्रुत्यादिप्रयविनियुक्तस्य प्रकरणविषयत्ववारणाय तृतीयम् । सिद्धरूपस्य लिङ्गविनियुक्तस्य मन्त्रादेः प्रक-
रणाविषयत्वसिद्ध्यर्थमितिकर्तव्यतात्वेनेति चतुर्थम् ।

इतिकर्तव्यतात्वं च करणानुग्राहकत्वम् । सर्वत्र हि अशक्तस्य कारणत्वायोगाच्छक्तिः कारणनिष्ठा समस्तीति निर्विवा-
दम् । सा च कारणतावच्छेदिका कारणरूपा वेत्यन्यदेतत् । तस्याश्च जन्यवृत्तित्वे जन्यतैवेत्युत्सर्गः । सामग्र्यलाभे परम-
नादितेत्यपवादः । तत्र तत्सामग्र्यपेक्षैवेतिकर्तव्यतापेक्षा । तया च सन्निहितप्रयाजादेरङ्गत्वबोधः, प्रयाजादेस्तत्सामग्रीत्वात् ।
सिद्धरूपस्य च द्रव्यादेर्व्यापारावेशं विना तत्सामग्रीत्वासम्भवात्तया अग्रहणम् ।

अत्र च प्रयाजगतेतिकर्तव्यताकाङ्क्षायाः प्रयाजादिगतप्रयोजनाकाङ्क्षासहकृतायास्तत्तद्वाक्यस्य स्वस्वावान्तरवाक्यार्थं समाप्त-
स्यापि महावाक्यैकदेशरूपपारिभाषिकपदसन्निध्याख्यवाक्यकल्पनया, निरुक्तपदानां च स्वार्थोपस्थितिद्वारा सन्निधिश्रुतपदा-
न्तरकल्पनानुकूलयोग्यतारूपलिङ्गकल्पनया च, समिधो यजति, इत्थं, दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्यश्रुतेतिकर्तव्यता-
त्ववाचिपदरूपश्रुतिकल्पनया चेतिकर्तव्यतात्वरूपप्रतिकारकत्वे प्रामाण्यम् । सम्भवति हि प्रयाजादीनामपि उक्तशक्तिजन-
कत्वेन भावनायामन्वयः । तस्मात्सिद्धं प्रकरणं नाम चतुर्थं प्रमाणम् ।

यत्त्वत्र पार्थसारथिना, अननुगृहीतस्यापि कर्मादेः संयोगविभागारम्भकत्वदर्शनान्नेदं प्रकरणम्; अपि तु व्यापारसामान्य-
स्याख्यातार्थतामङ्गीकृत्य तद्विशेषापेक्षयैवेतिकर्तव्यतापेक्षा, तयैव च प्रयाजादीनां तत्त्वेनान्वय इति तदेव च प्रकरणमित्यु-
क्तम् । तन्न; तथात्वे निरुक्तप्रकरणस्य तद्घटिताङ्गत्वबोधकत्वानुपपत्तेः, प्रयाजादेर्भावनात्वे तस्यैव फलसम्बन्धापत्तेश्च ।
असम्भवे तु, यज्ञस्यैव भावनात्वात्तस्य च यागजनकत्वेनैव कृतार्थत्वान्न तदापत्तिरिति वैषम्यम् । किञ्चैवं, प्रधानस्य स्वतो
निराकाङ्क्षस्यान्यतराकाङ्क्षयैव प्रकृतौ प्रयाजाद्यङ्गकत्वापत्तिः; विकृतौ च भावनाया विशेषापेक्षायां अङ्गोपकारैरपि सन्निहितैरु-
पहोमैरेव निराकाङ्क्षत्वोपपत्तेर्नातिदेशकल्पनापत्तिरित्यादिकौस्तुभे विस्तरः ।

इतिकर्तव्यतात्वेनायोग्यसम्बन्धयोर्वाक्यार्थयोः सन्निधिः । इतिकर्तव्यतात्वेनायोग्यत्वं
स्थानं चाङ्गत्वे पञ्चमं प्रमाणम् । तच्चेतिकर्तव्यतात्वेनायोग्यसम्बन्धयोर्वाक्यार्थयोः
द्वेधा—क्वचिदाकाङ्क्षाविरहात्, यथा विकृतेरुपहोमादिविषये, अङ्गोपकारप्राकृताङ्गैरेव निराकाङ्क्षत्वात् । क्वचिद्व्यापारात्मक-
त्वात्, यथा जपादिमन्त्रादौ । अत्र चैकवाक्योपात्तव्रीहियागादिसन्निधेरपि तथात्वापत्तेर्वाक्यार्थयोरित्युक्तम् । प्रयाजादीनां
स्थानविषयत्वापत्तिनिरासार्थमाद्यं विशेषणम् । तत्सादेश्यापरपर्यायं द्विविधम् । पाठसादेश्यमनुष्ठानसादेश्यं च । आद्यं च

द्विविधम् । यथाक्रमं पाठः, सन्निधौ पाठश्च । अयमपीदमुभयाकाङ्क्षयाऽन्यतराकाङ्क्षया चेति द्विविधम् । अत्रोभयाकाङ्क्षाघटकप्रधानाकाङ्क्षा चेतिकर्तव्यताकाङ्क्षाभिन्ना द्रष्टव्या । तत्र पाठक्रमात्ताम्ययाज्यानुवाक्यामन्त्राणां काम्येष्ट्यङ्गत्वम् । सन्निधेस्तु साान्नाय्यपात्रशुन्धनविधिसन्निधौ समाम्नातस्य शुन्धध्वमितिमन्त्रस्य तदङ्गत्वम् । अनुष्ठानसादेश्यात्तु पशुधर्माणां दैक्षपश्वङ्गत्वम् । यद्यपि चैषां लिङ्गादिप्रमाणान्तरेणैव विनियोगात्क्रमादीनां च क्वचिदपूर्वसाधनत्वलक्षणतात्पर्यग्राहकत्वमात्रत्वात्साङ्गत्वे प्रामाण्यम्; तथापि षड्विधस्यापि क्रमस्यासङ्कीर्णोदाहरणानि कौस्तुभोक्तरीत्योहनीयानि । अत्र षड्विधेऽपि क्रमे आरादुपकारकस्थले तावदितिकर्तव्यताकाङ्क्षायाः कल्पनीयत्वात्प्रकरणकल्पकत्वम् । मन्त्रादिरूपसन्निपत्योपकारकस्थलेऽपि मन्त्रादेः स्वरूपेण यागादिजनकत्वेऽपि तत्तन्नियमादृष्टोपहितस्य तज्जनकत्वात्करणनिष्ठयोग्यताजनकत्वरूपेतिकर्तव्यतात्वात्मकप्रकरणकल्पनावश्यिकैव । अत एव तदपेक्षया तस्य दौर्बल्यम् । षड्विधे तु क्रमे उभयाकाङ्क्षालक्षणादन्यतराकाङ्क्षालक्षणस्य । तत्रापि पाठक्रमादनुष्ठानसादेश्यस्य । विधिसन्निधानस्य पुरःस्फूर्तिकत्वात् । तयोस्तु मध्ये सन्निधानस्य प्राबल्यम् । एकमन्यस्यत्यादिसादि कौस्तुभे द्रष्टव्यम् ।

ऋग्वेदादिविहितपदार्थेषु हौत्राध्वर्यवादिसमाख्या वेदे याज्ञिकैश्च प्रयुज्यते । साऽप्यङ्गत्वे प्रमाणम् । तथाहि—सर्वत्र समुदायवशाधिकं द्विविधं पदं प्रकृतविधौ वाक्यार्थान्वय्यर्थकं तद्भिन्नं चेति । तत्रायं "निर्मन्थ्येनेष्टकाः पचति" प्रोक्षिताभ्यामुलूखलमुसलाभ्यामवहन्ती"त्यादौ निर्मन्थ्यादिपदम् । तत्र वाक्येनैव मन्थनादीनां पाकाद्यङ्गत्वान्न समाख्यानिको विनियोगः । द्वितीयं तु आध्वर्यवमधीते प्रैतु होतुश्चमस इत्यादौ । तत्र विशेष्यस्य काण्डस्यैव प्रकृतविधावन्वये जाते विशेषणस्याध्वर्युकर्तृकत्वादेः सिद्धवन्निर्देशान्यथाऽनुपपत्त्या विनियोगः कल्प्यत इति तत्र समाख्यया विनियोगः । अत्र समाख्ययाऽवयवार्थयोः सम्बन्धे संसर्गमर्यादया बुद्धे न तन्निर्देशान्यथाऽनुपपत्त्या स्वतन्त्रविधिकल्पना, गौरवापत्तेः, किन्त्वन्वाधानादिवाक्यस्याध्वर्युं वृणीत इति वाक्यस्य चैकवाक्यतासम्पादकपदमात्रम्, यमध्वर्युं वृणीते सोऽग्नीनन्वादधातीति । तत्र द्वयोर्विध्योः कथञ्चिदस्येकमुद्दिश्यतत्त्वेवम्यिधस्थानकल्पनापूर्वकमध्वर्योरितिकर्तव्यतात्वबोधकाकाङ्क्षारूपप्रकरणकल्पनया तद्विध्योर्महावाक्यैकदेशत्वाख्यपदसन्निधिरूपं वाक्यं कल्प्यते । तेन चाध्वर्युमात्रनिष्ठयोग्यतारूपलिङ्गकल्पनया एकवाक्यतासम्पादकपदरूपश्रुतिकल्पनाद्युक्तमस्याः षष्ठप्रमाणत्वम् ।

तदेवं षट्सु प्रमाणेषु निरूपितेषु अधुना विरोधे बलाबलं विचार्यते । विरोधश्चैकस्य शेषस्य शेषिद्वये प्रमाणद्वयसत्त्वे यथैन्द्रीमन्त्रस्य श्रुत्या गार्हपत्याङ्गत्वे लिङ्गाच्चेन्द्राङ्गत्वे । अथवा एकस्मिन् शेषिणि शेषद्वयविनियोजकप्रमाणद्वये । यथा गार्हपत्ये श्रुत्यैन्द्रीमन्त्रो लिङ्गादाग्नेयः । अयं च शेषद्वयविनियोगो द्वारैक्ये सत्येव बलाबलप्रयोजको न तु तद्भेदेऽपि; वाक्यप्रकरणाभ्यां वैमृधप्रयाजादीनामेकशेष्यर्थत्वेऽपि तदभावात् । यत्र तु एकस्य शेषस्य एकस्मिन्नेव शेषिणि प्रमाणद्वयं, तत्र वैषम्ये प्रबलस्यैव प्रयोजनार्थं विनियोजकत्वम्, साम्ये त्वेकस्य विनियोजकत्वमितरस्य पुनः श्रुतित्वेन प्रयोजनान्तरकल्पनम् । नियामकाभावे द्वयोरभ्युदयशिरस्कत्वकल्पनं कर्मान्तरबोधकत्वं वा । एवं यत्रारुणया क्रीणातीत्यादौ आरुण्यस्यापूर्वसाधनीभूतक्रयार्थत्वे प्रमाणत्रयम्, तत्रापि श्रुतेरेव विनियोजकत्वं न त्वन्यस्य; वाक्यस्योद्देश्यमात्रसमर्पकत्वेन श्रुतिसहकारित्वेऽपि कृतिकारकत्वबोधरूपविनियोजकत्वाभावात् । प्रकरणं त्वपूर्वसाधनत्वलक्षणातात्पर्यग्राहकमात्रम् । न तु तदपि विनियोजकम् । गौरवात् । अत एव विनियोजकप्रमाणबलाबलवत्तात्पर्यग्राहकप्रमाणबलाबलमपि निरूप्यमेव । तदिह श्रुत्योर्विरोधे ऐन्द्रीमन्त्रस्य तृतीयया गार्हपत्याङ्गत्वमेव न तु तद्धितश्रुत्या इन्द्राद्यङ्गत्वम्; तस्य सुप्तद्धितत्वेन प्राधान्येन कृतिकारकत्ववाचित्वाभावात् । अतश्च तस्य मुख्यश्रुतित्वाभावाद्दुर्बलत्वम् । एवं चैतस्य मन्त्रस्य लिङ्गादिन्द्राङ्गत्वमिति श्रुतिलिङ्गविरोधेऽप्येतदेवोदाहरणीयम् । अत्र हि सर्वत्रोत्तरोत्तरस्य पूर्वपूर्वकल्पकत्वेन प्रामाण्यस्य तत्तन्निरूपणावसरे स्थापितत्वादुत्तरोत्तरस्य श्रुतिकल्पनं यावदवगतस्यैव पूर्वपूर्वेण शेषशेषिणोर्निराकाङ्क्षत्वापादनेन बाधः । न चाङ्गानां प्रकृत्यर्थत्वेन निराकाङ्क्षाणामपि विकृत्याकाङ्क्षयैवातिदेशकल्पनवदिन्द्राद्याकाङ्क्षयैव लिङ्गस्य श्रुतिकल्पकत्वोपपत्तिः, तस्य ध्यानाद्युपायान्तरेणापि स्मृतिसिद्धेर्नियमेन विकृतिवदनाकाङ्क्षत्वात् । अतः श्रुत्या गार्हपत्याङ्गत्वमेव । न च श्रुतेः करणत्वमात्राभिधायित्वेन गार्हपत्यनिरूपितत्वस्य वाक्याधीनत्वान्नायं श्रुतिलिङ्गविरोध इति वाच्यम्; तथात्वेऽपि ब्राह्मणवाक्यत्वेन मन्त्रलिङ्गापेक्षया "यदन्यदेवत्यः पशुरि"तिवत्प्रबलत्वोपपत्तेः । वस्तुतस्तु, यथा न केवलया श्रुत्या विरोधो नैवं वाक्येनापि; गार्हपत्यसमीपे इत्येवमुपपत्तेः । अतश्चोभयविरोधत्वेऽपि "प्रधानेन व्यपदेशा भवन्ती"तिन्यायेन श्रुतिलिङ्गविरोधोदाहरणत्वम् । लिङ्गयोर्विरोधे मुख्यसामर्थ्येन गौणस्य बाधः । लिङ्गवाक्ययोस्तु "स्योनं ते" इति सदनकरणप्रकाशकस्य पूर्वार्धस्य "तस्मिन्सीदे"त्युत्तरार्धेन सादनप्रकाशकेन तस्मिन् कस्मिन्निति विभागे साकाङ्क्षैकवाक्यत्वात्सकलस्य मन्त्रस्य सदनसादनयोरन्यतरत्रोभयत्र वा प्रतिष्ठापन एव चाऽस्य तस्मिन्निति पदसन्निधिरूपेण वाक्येन विनियोगे प्राप्सिते ततः पूर्वप्रवृत्तेन लिङ्गेन तत्तदाख्यातस्य मुख्यविशेष्यत्वेन स्वार्थैकबोधस्य परोपसर्जनकत्वकल्पने प्रमाणाभावात्तच्छन्दस्य च सा वैश्वदेवीतिवत् वाक्यान्तरोपस्थितार्थपरामर्शकत्वेनापि चरितार्थत्वात्प्रत्येकमेवं विनियोग इति । वाक्ययोर्विरोधे उपांशुत्वस्य "इरावा एषा यज्ञ-

नियामकत्वेन पूर्ववत्प्रवदिहापि गृह्यन्ते। लिङ्गं श्रुतिसामर्थ्यमेकवाक्यता च सर्वासां ब्रह्मश्रुतीनां तत्र ब्रह्मैव जगत्कारणमिति निःसन्दिग्धेषु सिद्धम्। सर्वशब्दवाच्यत्वं

---

विस्तरभयाद्विरम्यते। निःसन्दिग्धेषु "यतो वा इमानी"ति वाक्येषु सन्दिग्धेष्वाहुः—सर्वेति। अत्र सर्व-शब्देत्यनेन विषयवाक्यं गृह्यते। तथा च "सर्वाणि ह वा इमानी"त्यादिवाक्यबोध्यत्वं ब्रह्मण्येवेत्यर्थः। अथवा "सर्वे वेदा यत्पदमामनन्ती"ति श्रुत्या सर्वशब्देत्यनेन सर्वोपनिषद्वाक्यं गृह्यते, तस्य तत्रैव तात्पर्य-मिति तद्वाच्यत्वं ब्रह्मण्येवेत्यर्थः। तत्र विषयवाक्ये वेदवाक्यार्थमाहुः—सर्वगतित्वादिरिति। सर्वेषां भूतानां गतिराश्रय इत्यर्थः। तद्वाक्यार्थान्यथानुपपत्त्येति सर्वेषां ब्रह्मण एवोत्पत्तिस्तत्रैव लयः एवं च सर्वा-

---

स्ये"ति व्यवेतयशपदैकवाक्यत्वायत्तभागधर्मत्वम्, तासामपि किंचित्प्राचीनमग्नीषोमीयात्तेनोपांशु चरन्तीत्यनेन गुणविहितपदिक-धितपदैकवाक्यतयाऽवगतपदार्थधर्मत्वेन बाध्यते। वाक्यप्रकरणयोर्विरोधे च वैमृधस्य वाक्यावगतेन पौर्णमास्यङ्गत्वेन प्रकरणा-वगतदर्शाङ्गत्वबाधः। यत्तु, अग्नीषोमादिपदैकवाक्यतापन्नानां इदं हविरित्यादिपदानामभावसाङ्गदेवताप्रकाशनार्थत्वं प्राक-रणिकं वाक्येन बाध्यत इत्युदाहरणमुक्तम्, तच्छ्रुतिलिङ्गविनियुक्तस्य सिद्धरूपत्वेन प्रकरणाविषयस्य च सूक्तवाकस्य शुल्य-प्रकरणविनियोज्यत्वप्रसक्त्यभावेऽपि अधिकाराख्यगौणप्रकरणस्यापूर्वसाधनत्वलक्षणातात्पर्यग्राहकस्य प्रसक्त्या तद्बाधाभिप्रा-येण द्रष्टव्यम्। प्रकरणयोर्विरोधे महाप्रकरणमन्तान्तरप्रकरणेन। प्रकरणक्रमयोर्विरोधे "अक्षैर्दीव्यति"त्यादिविहितविदेव-भादीनां सन्निधानादभिषेचनीयाख्यसोमयागाङ्गत्वप्रसक्तौ प्रकरणाद्राजसूयाङ्गत्वम्। न चाभिषेचनीयस्यापि फलवत्त्वेन प्रक-रणाशङ्का, तस्य विकृतित्वेन क्लृप्तोपकारप्राकृताङ्गनिराकाङ्क्षस्य तदभावात्। न च विकृतावपि यत्प्राकृताङ्गानुवादेन वैकृतमङ्गं वाचनिकं विधीयते यथा शूपत्वादि, तस्यापि विकृतिगताङ्गाकाङ्क्षायामनिवृत्तायामेव विधेयत्वात्तत्सन्दष्टस्य तत्पूर्वभाविदेव-इति प्रधानोत्तरभाविनोऽपूर्वाङ्गस्य वा प्रकरणेनैव ग्रहणोपपत्तेः विदेवनादीनां चाभिषेचनीयोत्तरशुक्रविधाभिषेकपूर्वभावि-त्वेन पाठात्प्रकरणग्रहणोपपत्तिरिति वाच्यम्; प्राकृताङ्गानुवादेन विहितस्याप्यपूर्वाङ्गस्योपहोमवद्विकृत्याकाङ्क्षायां निवृत्तायामेव विधानात्। यस्य हि प्राकृतकार्यापन्नतया वैकृताङ्गस्य विधानं यथौदुम्बरत्वशरादेस्तस्यैव निवृत्ताकाङ्क्षायां विधानम्, तत्स-न्दष्टस्यैव च तत्पूर्वभाविनो वा प्रधानोत्तराङ्गस्य विकृतिप्रकरणेन ग्रहणम्। अभिषेकस्य तु प्राकृतकार्यत्वापन्नत्वाभावान्नाप-तत्पूर्वपठितानां विदेवनादीनामभिषेचनीयप्रकरणग्राह्यत्वोपपत्तिः। वस्तुतस्तु, अभिषेकस्यापि स्वतन्त्रोत्पन्नस्य प्रकरणाद्राज-सूयाङ्गत्वावगतेः "माहेन्द्रस्तोत्रं प्रत्यभिषिच्यते" इत्यत्र प्रतिशब्दयोगेन कालार्थः संयोग इति वक्ष्यते। अतो विदेवनाद्य-भिषेकान्तानां सर्वेषामेव सन्निधानादिनाऽभिषेचनीयाङ्गत्वप्रसक्तौ प्रकरणेन तद्बाधः। न च राजसूयस्यापि प्रत्येकं विकृति-त्वात्प्रकरणाभावः, पवित्रादारभ्य क्षत्रस्य धृतिं यावद्राजसूयत्वधर्मपुरस्कारेण वाचनिकाङ्गाम्नानात्तत्सन्दष्टविदेवनादीनां प्रकरणग्राह्यत्वोपपत्तेः। एवं प्रकरणस्य क्रमान्तरैरपि उदाहरणान्यूह्यानि। एवं क्रमयोर्विरोधे सन्निधानेन बाध्याबाध्यस्य काम्ये-ष्टिकाण्डे याज्यानुवाक्याक्रमे अनियमेन प्रसक्ते यथाक्रमपाठादाद्यस्याद्याङ्गत्वम्। क्रमसमाख्ययोर्विरोधे पौरोडाशिकसमाख्याते काण्डे साम-न्नाय्यसन्दष्टमन्त्रस्य शुन्धध्वमिति मन्त्रादेः सन्निधानात्साम्नाय्याङ्गत्वम्। न च महाधिकारेण सन्निधिबाधः; तस्यापि वाचनिकाङ्गसन्दष्ट-त्वेन बलवत्त्वात्। न चैवं तस्य प्रकरणत्वापत्तिः; मन्त्रस्य सिद्धरूपत्वेन लिङ्गविनियोज्यत्वेन च प्रकरणाविषयत्वात्। सन्नि-धानस्यापि समाख्यावदपूर्वसाधनत्वलक्षणातात्पर्यग्राहकत्व एव बलाबलं न तु विनियोगे। तत्र तूदाहरणान्तरं मृग्यम्। एवं समाख्ययोर्विरोधे आध्वर्यवमिति सामान्यसमाख्याया याजमानमिति विशेषसमाख्यया बाधः। एवं पन्तरितमन्तरितादि-प्रमाणस्य पूर्वैः सह विरोधे शेषान्तरत्वे च उदाहरणानि कौस्तुभे द्रष्टव्यानि। स चायं श्रुतिलिङ्गादिबाधोऽप्राप्तबाधः। तत्त्वं चाङ्गताबोधकलिङ्गादिघटकप्रमाणप्रतिबन्धकत्वम्। पूर्वपूर्वप्रमाणेन हि अङ्गत्वेऽवधारिते, निराकाङ्क्षत्वादुत्तरोत्तर-तः पूर्वपूर्वप्रमाणकल्पनैव नोदेतीति सोऽयमप्राप्तबाधः। एवं गृहमेधीये आज्यभागौ यजतीत्यादावपि। अन्यत्र सामान्य-विशेषनित्यनैमित्तिकभावादौ प्राप्तबाधः। क्लृप्तस्य बोधकस्य विशेषविषयताप्रतिबन्धकत्वम्। सामान्यशास्त्रादेर्हि विशेष-शास्त्रादिना पदहोमादिविषयतामात्रं प्रतिबध्यते, न तु सामान्यशास्त्रमपि, तस्य क्लृप्तत्वेनाकल्पनीयत्वात्, होमान्तरेष्वपि आहवनीयाभावापत्त्या मिथ्यात्वस्यापि कल्पयितुमशक्यत्वाच्च। अत एव येन सामान्यशास्त्रमेव पूर्वमालोचितं तस्य विशेष-दर्शनजनितभ्रम एव विशेषविषयको विशेषशास्त्रेण बाध्यते। एवं यत्रापि "न तौ पशौ करोती"त्यादौ शास्त्रप्राप्तस्य निषेधस्तत्रापि प्रापकशास्त्रस्य यद्यपि निषेधस्य प्राप्तिसापेक्षत्वेनोपजीव्यत्वादत्यन्तबाधानुपपत्तेर्विशेषविषयत्वमावश्यकम्, तथापि तत्र विकल्पाङ्गीकारात्तदभावपक्षे विशेषविषयत्वप्रतिबन्धाद्बाधोक्तलक्षणाव्याप्तिः। यथा तत्र रागप्राप्तनिषेधमरु भ्रान्ति-प्राप्तस्य बाधमङ्गीकृत्य न विकल्पस्तथा कौस्तुभे द्रष्टव्यम्॥

ब्रह्मण्येव । तत्र वाक्यार्थान्यथानुपपत्त्याकाशपदार्थो ब्रह्मेति । सर्वशब्दवाच्यत्वाच्च न लक्षणा मुख्यत्वाच्च । यावन्मुख्यपरत्वं सम्भवति तावन्न कस्यापि वेदान्तस्यापरब्रह्मपरत्वमिति मर्यादा । तस्मात्—"यदेष आकाश आनन्दो न स्यात्" ( तै. २।७ ) इतिवदत्राप्याकाशो ब्रह्मैवेति सिद्धम् ॥ १।१।२२ ॥ ७ ॥

---

श्रयं ब्रह्मेति सर्ववेदान्तवाक्यार्थः । तथा चात्रापि आकाशादेवोत्पत्तिर्लयश्च प्रतिपाद्यते । अत्रत्याकाशपदं ब्रह्मवाचकं न चेदन्यान्य एव सर्वाश्रयो भविष्यतीति सर्वेषामेकवाक्यत्वं न स्यादित्यनुपपत्त्याकाशपदवाच्यं ब्रह्मैवेति भावः । ननु लोके आकाशपदस्य भूताकाशवाचकत्वादत्रानुपपत्त्या तस्य ब्रह्मणि लक्षणास्त्वित्यत आहुः—सर्वशब्देति । ब्रह्मणः वाच्यवृत्त्या सर्ववेदवोध्यत्वान्न लक्षणेत्यर्थः । ननु क्वचिल्लक्षणाऽपि सम्भवतीत्यत आहुः—मुख्यत्वाच्चेति । मुख्यपरत्वमिति । परब्रह्मपरत्वमित्यर्थः । अपरब्रह्मेति । आध्यात्मिकब्रह्मेत्यर्थः । तस्मादिति । वाक्यार्थान्यथानुपपत्त्या आकाशपदस्य ब्रह्मप्रकाशनसामर्थ्यादित्यर्थः । इति सप्तमाधिकरणम् ।

---

(१) तत्र तावत् श्रीशङ्कराचार्याणां मते—ननु पूर्वत्राव्यभिचरितापहतपाप्मत्वादिब्रह्मलिङ्गेन रूपवत्त्वादिकमन्यथा नीतं यथा, न तथेह लिङ्गादाकाशशब्दश्रुतिरन्यथा नेतुं शक्या, तस्या बलवत्त्वादित्यत आह—पूर्वेणास्य प्रत्युदाहरणसङ्गतिः । फलं तु पूर्वपक्षे भूताकाशदृष्ट्या उद्गीथोपास्तिः, सिद्धान्ते ब्रह्मदृष्ट्येति द्रष्टव्यम् । छान्दोग्ये श्रूयते—'अस्य लोकस्य का गतिरित्याकाश इति होवाच' इत्यादि । तत्र किमाकाशशब्देन भूताकाशोऽभिधीयते, उत परं ब्रह्मेति विशये, भूताकाश इति पूर्वः पक्षः । सिद्धान्तस्तु—आकाशशब्देन ब्रह्मैव गृह्यते । कुतः, तल्लिङ्गात्, तस्य ब्रह्मणो यल्लिङ्गं समस्तमहाभूतादिसृष्ट्यादिकं तस्यास्मिन्वाक्ये दृष्टत्वात् । यच्च लिङ्गाच्छ्रुतिर्बलीयसीति, तन्न, भूयसीनां ब्रह्मलिङ्गश्रुतीनामनुग्रहाय एकस्या आकाशश्रुतेर्बाधस्य युक्तत्वात् । 'आकाशो ह्येवैभ्यः...' इति श्रुत्यन्तराच्च आकाशशब्दितं ब्रह्मैवात्रोद्गीथे उपास्यमिति सिद्धम् ॥

(२) श्रीरामानुजीये—आकाशशब्दाभिधेयः प्रसिद्धाकाशादचेतनादर्थान्तरभूतो यथोक्तलक्षणः परमात्मैव । कुतः ? तल्लिङ्गात् । निखिलजगदेककारणत्वं सर्वस्माज्ज्यायस्त्वं परायणत्वमित्यादीनि परमात्मलिङ्गान्युपलभ्यन्ते । निखिलजगदेककारणत्वं ह्यचिद्वस्तुनः प्रसिद्धाकाशशब्दाभिधेयस्य नोपपद्यते । चेतनवस्तुनस्तत्कार्यत्वासम्भवात् । परायणत्वं च चेतनानां परमप्राप्यत्वम् । तच्चाचेतनस्य हेयस्य सकलपुरुषार्थविरोधिनो न सम्भवति । सर्वस्माज्ज्यायस्त्वं च निरुपाधिकं सर्वैः कल्याणगुणैः सर्वेभ्यो निरतिशयोत्कर्षः । तदप्यचितो नोपपद्यते । यदुक्तं जगत्कारणविशेषाकाङ्क्षायामाकाशशब्देन विशेषसमर्पणादन्यत्सर्वं तदनुरूपमेव वर्णनीयमिति । तदयुक्तम्; "सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते" इति प्रसिद्धवन्निर्देशात् । प्रसिद्धवन्निर्देशो हि प्रमाणान्तरप्राप्तिमपेक्षते । प्रमाणान्तराणि च "सदेव सोम्येदमग्र आसीत्" इत्येवमादीन्येव वाक्यानि । तानि च यथोदितप्रकारेणैव ब्रह्म प्रतिपादयन्तीति तत्प्रतिपादितं ब्रह्माकाशशब्देन प्रसिद्धवन्निर्दिश्यते । सम्भवति च परस्य ब्रह्मणः प्रकाशकत्वादाकाशशब्दाभिधेयत्वम् । आकाशत आकाशयति चेति । किञ्चानेनाकाशशब्देन विशेषसमर्पणक्षमेणापि चेतनांशं प्रत्यसम्भावितकारणभावमचेतनविशेषमभिदधानेन "तदैक्षत बहु स्यां प्रजायेयेति" "सोऽकामयत बहु स्यां प्रजायेय" इत्यादिवा-

क्यशेषावधारितसार्वज्ञ्यसत्यसङ्कल्पत्वादिविशिष्टापूर्वार्थप्रतिपादनसमर्थवाक्यार्थान्यथाकरणं न प्रमा-
णपदवीमधिरोहति । एवमपूर्वानन्तविशेषणविशिष्टापूर्वार्थप्रतिपादनसमर्थानेकवाक्यगतिसामान्यं
चैकेनानुवादरूपेणान्यथाकर्तुं न शक्यते । यच्चात्मशब्दश्चेतनैकान्तो न भवति । मृदात्मको घट
इत्यादिषु दर्शनादित्युक्तं तत्रोच्यते । यद्यपि चेतनादन्यत्रापि क्वचिदात्मशब्दः प्रयुज्यते, तथापि
शरीरप्रतियन्धिन्यात्मशब्दस्य प्रयोगप्राचुर्यात् "आत्मा वा इदमेक एवाग्र आसीत्", "आत्मन
आकाशः सम्भूतः" इत्यादिषु शरीरप्रतिसम्बन्धिचेतन एव प्रतीयते । यथा गोशब्दस्यानेकार्थवा-
चित्वेऽपि प्रयोगप्राचुर्यात्सास्नादिमानेव स्वतः प्रतीयते । अर्थान्तरप्रतिपत्तिस्तु तत्तदसाधारणनि-
र्देशापेक्षया । तथा स्वतः प्राप्तं शरीरप्रतिसम्बन्धिचेतनाभिधानमेव "स ऐक्षत लोकान्नु सृजै"
इति, "सोऽकामयत । बहु स्यां प्रजायेय" इत्यादितत्तद्वाक्यशेषा एव स्थिरीकुर्वन्ति । एवं वाक्य-
शेषावधारितानन्यसाधारणानेकापूर्वार्थविशिष्टं निखिलजगदेककारणं "सदेव सोम्येदमग्र आसीत्"
इतिवाक्यसिद्धं ब्रह्मैवाकाशशब्देन प्रसिद्धवत् "सर्वाणि ह वा इमानि भूतानि" इत्यादिवाक्येन
निर्दिश्यत इति सिद्धम् ॥

(३) माध्वे—'को ह्येवान्यात् कः प्राण्याद् यदेष आकाश आनन्दो न स्यात्' इत्याकाशस्यानन्दमयत्वे
हेतुवक्तः, न तु विष्णोरिति न मन्तव्यम् । यतः 'अस्य लोकस्य का गतिरित्याकाशः इति हो वा
चेत्यत्र भूताकाशस्य प्राप्तिः, न चासौ युज्यते, किन्तु विष्णुरेव स एव परो वरीयानुद्गीथः स
एषोऽनन्तः' इत्यादि तल्लिङ्गात् । 'विष्णोर्नु कं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजांसि'
परो मात्रया तन्वा वृधानेत्यादिना तस्यैव हि तल्लिङ्गम् । अनन्तो भगवान् ब्रह्म आनन्देत्यादिभिः
पदैः प्रोच्यते विष्णुरेवैकः परेषामुपचारतः' इति ब्राह्मे । 'नामानि सर्वाणि यमाविशन्तीति' चोक्तं
सर्वनाम्नाऽभिधीयते ॥
यद्युषैव, 'स पुरुषः स ईश्वरः स ब्रह्म सर्वान्तर्यामिको विष्णुः इत्यत्राकाशशब्दवाच्यः
(४) नैम्बार्के—"अस्य लोकस्य का गतिरित्याकाश इति होवाच" इत्यत्राकाशशब्दवाच्यः
परमात्मा । कुतः ? "सर्वाणि ह वा इमानि भूतान्याकाशादेवोत्पद्यन्ते" इति सर्वस्रष्टृत्वादि-
तल्लिङ्गात् ॥

(५) भैक्षवे—विज्ञानभिक्षुस्तु, काण्वचतुर्थाध्याये सुषुप्तं जीवमुपक्रम्य पठ्यते, 'तदेषां प्राणानां
विज्ञानेन विज्ञानमादाय य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते' इत्यादि । तत्र किं भूताका-
शस्तद्देवता वा ब्रह्म वोच्यत इति संशयः । तद्बीजं तु उपक्रमोपसंहारयोर्ब्रह्मवाचकब्रह्मात्मादि-
पदवन्मुख्यवाक्ये भूताकाशादिवाचकस्याकाशपदस्य श्रवणम् । अन्यतरस्य गौणत्वे नियामका-
भावस्त्रयाणामपि स्वापाधारत्वादविशेषश्च । निर्णयस्तु, आकाशो ब्रह्मैवेति । हेतुस्तु तल्लिङ्गात् ।
लिङ्गानि तु, 'स यथोर्णनाभिस्तन्तुनोच्चरेत्' इति 'यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवा-
स्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि व्युच्चरन्ति'. तस्योपनिषद् सत्यस्य
सत्यमित्यादीनि । सर्वश्रुतिषु ब्रह्मणि तथा दृष्टान्तदर्शनात् । अचेतनस्य भूताकाशस्याग्निविस्फुलि-
ङ्गदृष्टान्तानर्हत्वात् । तद्देवतायाश्च सर्वदेवान्तर्गतत्वेनाकारणत्वात् । य एवायमाकाशो पुरुष इति
पूर्ववाक्येनाकाशदेवताया ब्रह्मत्वप्रतिषेधाच्च । सत्यस्य सत्यमिति च नामपूर्ववाक्येन, ब्रह्मण्येव
व्याख्यातम् । तत्र सत्यशब्देन पञ्चभूतानि व्याख्याय तदपेक्षयापि निषेधशेषं ब्रह्म सत्यमिति
श्रुत्यैव स्पष्टमुक्तत्वात् । स्कान्देऽपि, 'चैतन्यापेक्षया प्रोक्तं व्योमादि सकलं जगत् । असत्यरूपं
सत्यं तु कुम्भकुण्डाद्यपेक्षया' ॥ इत्युक्तत्वाच्च । अतः शब्दसाम्येऽपि ब्रह्मलिङ्गाद् ब्रह्मैवाकाश-

शब्दार्थः । आकाशशब्दश्च ब्रह्मणि रूपकविधया विभुत्वनिर्लेपत्वादिगुणलाभाय, मुखे चन्द्रवच्छुत्या प्रयुक्तः । अत एव, 'परमे व्योमन् प्रतिष्ठिता' इत्यादिषु श्रुतिष्वाकाशरूपेण ब्रह्म निर्दिश्यते । नानार्थतायाः, गङ्गायां घोष इतिवल्लक्षणायाश्चायुक्तत्वादिति । एवं प्राणज्योतिरादयः शब्दा अपि जीवनत्वप्रकाशनत्वादिप्रतिपादनाय रूपकत्वेनैव व्याख्येयाः । वस्तुतस्त्वाकाशप्राणज्योतिरादयः शब्दा आकाशादिभावापन्नब्रह्मपरा एवैतेषु ब्रह्मवाक्येषु भवन्ति । केवलब्रह्मपरत्वे सत्याकाशादिलिङ्गानुपपत्तेः । यत्तु छान्दोग्यवाक्यमाधुनिका इहोदाहरन्ति, 'अस्य लोकस्य का गतिः' इत्यादि । तन्न । प्रकरणादिशून्यात् केवललिङ्गाच्छ्रुतेर्बलवत्त्वस्य पूर्वमीमांसासूत्रादेवावधारणात् । तत्र च श्रुतिप्रकरणयोरभावात् । किंच । प्रश्ने, अस्य लोकस्येत्यनेन भूर्लोकजना एवोक्ता इति प्रत्युत्तरे भूतानीत्युक्तत्वात् सर्वाणि भूतानीति ब्रह्मलिङ्गं न भवति । आकाशसाधारण्यात् । आकाशाद् वृष्टिद्वारैषां भूर्लोकस्थानां सृष्टिस्थितिसंहारादित्याद । तदसङ्गततमम् । सूत्रविरोधात् । सूत्रे केवलस्य लिङ्गस्यैव हेतुत्वेनोक्तत्वात् । त्वद्रीत्या तु, श्रुतिलिङ्गप्रकरणैरिति पाठापाताच्छ्रुतिविरोधाच्च । श्रुतौ सामाद्यदोलोकान्तगतिज्ञानवतः शालावत्यस्यैतल्लोकगतिप्रश्नेन सामाद्येतल्लोकान्तस्य परमाश्रये परमोपजीव्ये वा प्रश्नपर्यवसानात्, तादृशत्वस्य चाकाशेऽसम्भवात् । अतश्छान्दोग्यवाक्यस्याविषयत्वकथनमसङ्गतम् । अन्येषामाधुनिकत्वकथनमपि तथा । स्वस्य सर्वार्वाचीनत्वात् । प्राचीनवृत्त्यादीनामनाश्रयणाच्च । आकाशशब्दस्य भूताकाशतद्देवताब्रह्मसु साधारण्यकथनमपि तथा । ब्रह्मणि रूपकविधया प्रयोगाङ्गीकारेण गौण्या वा निरूढलक्षणाया वाऽऽदराद् ब्रह्मवाचकत्वस्याभावेन साधारण्यस्याभावादिति ॥

(६) भास्कराचार्याः—छान्दोग्ये श्रूयते । अस्य लोकस्य का गतिरित्याकाश इति होवाच सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्त्याकाशो ह्येवैभ्यो ज्यायानाकाशः परायणमिति । तत्र संशयः । किमाकाशशब्देन भूताकाशमुच्यते किं वा परं ब्रह्मेति । कुतः संशयः ? प्रयोगदर्शनादुभयत्र भूताकाशो तावत् प्रसिद्धः प्रयोगः परमात्मन्यप्या''काशो वै नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्मे''ति अतो युक्तः संशयः । किं तावत् प्राप्तं लोकप्रसिद्धेर्भूताकाशो गृह्यते । ननु सर्वभूतोत्पत्तिप्रलयवचनं भूताकाशो नोपपद्यते पवनाद्यपेक्षयोत्पत्तिप्रत्यस्तमयश्रुतिराकाशेऽवकल्पिष्यति । अत्र कश्चिदाह । ननु पूर्वपक्षे कर्मशास्त्रमिदं प्राप्नोति न विद्याशास्त्रमिति । अत्रोच्यते । केनैतत् परिभाषितं वेदान्तशास्त्रे कर्म न विधातव्यमिति । भवतु कर्मशास्त्रम्, को विरोधः ? सिद्धान्ताभिप्रायेण तु ब्रह्मशास्त्रमिति गीयते । न हि पूर्वपक्षो वेदान्तवाक्यार्थो भ्रान्तिप्रभवत्वात् । एवं प्राप्तेऽभिधीयते । आकाशः परमेश्वरः स्यात् कुतः तल्लिङ्गात् तल्लिङ्गमव्यभिचारी धर्मः । येन धर्मिविशेषः परिच्छिद्यते धूमेनेवाग्निः किं, पुनस्तल्लिङ्गम् । सर्वभूतोत्पत्तिः प्रत्यस्तमयश्च । न हि सर्वेषां भूतानां भूताकाशादुत्पत्तिः प्रलयो वा श्रूयते किं तर्हि परमेश्वरादेव भूतशब्दश्च जीवाधिष्ठितभूतवचनो महाभूतवचनश्चोभयथोपपद्यते तत्राकाशस्याप्युत्पत्तिप्रलयौ परावचाविति सर्वभूतश्रुतिस्तत्र नावकल्पते । तस्मादाकाशः परमात्मा । प्रयोगश्च दर्शितः । क्रियायोगेन वा आकाशोऽभिविधौ सर्वमभिव्याप्य प्रकाशत इत्याकाशः तस्मादद्वयाद्धेति ॥

(७) श्रीमद्वल्लभाचार्याणामयमाशयः—छान्दोग्ये प्रथमप्रपाठके श्रूयते । 'अस्य लोकस्य का गति'रिति आकाश इति होवाच । "सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते, आकाशं प्रत्यस्तं यन्त्याकाशो ह्येवैभ्यो ज्यायान्, आकाशः परायणम्, स एष परोवरीयानुद्गीथः स एष अनन्त' इति । तत्राकाशशब्दे संशयः । किं लोकप्रसिद्ध्या भूताकाशो ग्राह्यः ? उत 'आकाशो वै नामरूपयोर्निर्वहिता ते यदन्तरा तद् ब्रह्मे'त्यादिवैदिकप्रसिद्ध्या ब्रह्म वा ग्राह्यमिति ? तत्र लोकेऽव-गतसामर्थ्यः शब्दो वेदेऽपि बोधक इति न्यायेन वैदिकपदशक्तिग्रहस्य कोशव्यवहारादिरूपलौ-किकशक्तिग्रहसाधनाधीनत्वात्, सृष्टिप्रक्रियायां 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूत' इत्यादौ भूताकाशेऽपि वैदिकप्रयोगदर्शनाद्, ब्रह्मणि तच्छक्तेरभावेन तत्र लक्षणाया वा योगस्य वा आद-रणीयत्वात्तयोश्च शक्त्यपेक्षया नैर्बल्याच्च भूताकाश एव ग्राह्य इति पूर्वः पक्षः । सिद्धान्तस्तु—आकाशः परमात्मैव । कुतः ? तल्लिङ्गात् । लिङ्गं श्रुतिसामर्थ्यम् । अन्यानपेक्षतया स्वरसेनार्थबोध-कत्वमिति यावत्, तस्मात्, श्रुतिलिङ्गादयोऽप्यर्थनियामकत्वेन पूर्वतन्त्रवदाद्रियन्ते । श्रौतत्वेनो-भयोस्तन्त्रयोरैकशास्त्र्यात् । अयमर्थः । पूर्वाधिकरणेषु 'यतो वा इमानि भूतानि जायन्त' इत्यादि-वाक्यविचारे निखिलजडजीवकारणत्वं ब्रह्मणि सिद्धमितीहापि सर्वपदेन तान्येव सर्वाण्युद्दिश्य, 'इमानि भूतानी'ति पदयोस्तद्वाक्यसम्बन्धत्वप्रत्यभिज्ञानेन तानि देहविशिष्टजीवतया महाभूततया च निष्कृष्य तत्कारणत्वमाकाशे बोध्यते । तथा एभ्य इत्यनेन तान्येव परामृश्य ततो ज्यायस्त्वं परा-यणत्वं च बोध्यते । तद्यदि भूताकाशो गृह्येत, तदा सर्वपदार्थसङ्कोचेन भूतादिपदानामपि तत्स-ङ्कुच्येत । सङ्कोचस्त्वर्थबाधरूप इति सर्वपदसामर्थ्यस्यार्थबाधे बहूनां तथात्वम् । तच्चानुचितम् । बहुषु पदेषु दोषप्रसङ्गात् । किञ्च । 'सर्वे वेदा यत्पदमामनन्ती'त्यादिश्रुत्या सर्वस्य वेदस्य ब्रह्मण्येव तात्पर्यमवधारितम् । तद्यदि निरङ्कुशं सर्वजगत्कारणत्वमस्मिन् भूताकाशस्योच्येत, तदार्थभेदा-द्विभागे साकाङ्क्षत्वाभावाच्चास्य वाक्यस्य भेदापत्त्या सर्वस्य वेदस्यैकवाक्यतापि भज्येत । तत्रत्यं सर्वपदमपि सङ्कुच्येत । किञ्चेदं शालावत्येन एतल्लोकगतेः प्रश्ने जाबालिना तदुपपादनायोक्तम् । 'तच्चोपक्रमादिविचारे सामादिसर्वगतिबोधकतया पर्यवस्यति । सर्वगतित्वं च ब्रह्मण एव । एवं सर्वोत्कृष्टत्वरूपं परोवरीयस्त्वं त्रितयपरिच्छेदराहित्यरूपमानन्त्यं च तस्मिन्नेव । अत उक्तोपपत्ति-रूपात्तात्पर्यलिङ्गादपि परब्रह्मैवाकाशः । न च लक्षणापत्तिः । ब्रह्मणः सर्वशब्दवाच्यत्वस्य समन्व-यादिसूत्रविचार एव साधितत्वादिति । तस्मात् परमात्मैवाकाश इति सिद्धम् । तत्र 'यदेष आकाश आनन्दो न स्या'दित्यानन्दमयाधिकरणविषयवाक्यगताकाशशब्दार्थस्य विचारादुपोद्घात-रूपाधिकरणसङ्गतिः । एतेन व्योमादिशब्दवन्ति 'ऋचो अक्षरे परमे व्योम'न्नित्यादीन्यपि वाक्यानि विचारितानि । एवं निखिलमपि विमर्शनीयं विपश्चिद्भिरिति शम् ॥

## ८ अतिदेशाधिकरणम् ।

( प्राणशब्द आसन्यो ब्रह्म वा? )

अत एव प्राणः ॥१।१।२२ ॥

"प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता" (छां.१।१।१४) इत्युपक्रम्य श्रूयते–"कतमा

---

अस्मिन्नधिकरणे पूर्वाधिकरणसादृश्यादतिदेशेन विचारं कर्तुं प्राणाधिकरणमारचयन्ति । अत एव प्राणः पूर्वस्थलीयं विषयवाक्यमुदाहरन्ति—प्रस्तोतर्या इति ।

अथ विषयवाक्यम्—

मटचीहतेषु कुरुष्वाटिक्या सह जाययोषस्तिर्ह चाक्रायण इभ्य ग्रामे प्रद्राणक उवास सहेभ्यं कुल्माषान्खादन्तं बिभिक्षे तꣳ होवाच ने तोन्ये विद्यन्ते यच्च ये म इम उपनिहिता इत्येतेषां मे देहीति होवाच तानस्मै प्रददौ हन्तानुपानमित्युच्छिष्टं वै मे पीतꣳ स्यादिति होवाच नस्विदे-तेऽप्युच्छिष्टामो इति न वा अजीविष्यमिमा न खादन्निति होवाच, कामो म उदकपानमिति स ह खादित्वातिशेषां जायाया आजहार साग्र एव सुभिक्षा बभूव तान् प्रतिगृह्य निदधौ स ह प्रातः सञ्जिहान उवाच यद्बतान्नस्य लभेमहि लभेमहि धनमात्राꣳ राजासौ यक्ष्यते स मा सर्वैरार्त्विज्यै-र्वृणीतेति तं जायोवाच हन्त पत इम एव कुल्माषा इति तान्खादित्वामुं यज्ञं विततमेयाय तत्रो-द्गातॄनास्तावे स्तोष्यमाणानुपोपविवेश स ह प्रस्तोतारमुवाच प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता तां चेदविद्वान्प्रस्तोष्यसि मूर्द्धा ते विपतिष्यतीत्येवमेवोद्गातारमुवाचोद्गातर्या देवतोद्गीथमन्वायत्ता तां चेदविद्वानुद्गास्यसि मूर्द्धा ते विपतिष्यतीत्येवमेव प्रतिहर्तारमुवाच, प्रतिहर्तर्या देवता प्रतिहारमन्वा-यत्ता तां चेदविद्वान्प्रतिहरिष्यसि मूर्द्धा ते विपतिष्यतीति ते ह समारतास्तूष्णीमासाञ्चक्रिरे ।

अथ हैनं यजमान उवाच भगवन्तं वा अहं विविदिषाणीत्युषस्तिरस्मि चाक्रायण इति होवाच स होवाच भगवन्तं वा अहमेभिः सर्वैरार्त्विज्यैः पर्यैषिषं भगवतो वा अहमवित्त्यान्यानवृषि भग-वाꣳस्त्वेव मे सर्वैरार्त्विज्यैरिति तथेत्यथ तर्ह्येत एव समतिसृष्टाः स्तुवतां यावत्त्वेभ्यो धनं दद्या-स्तावन्मम दद्या इति, तथेति ह यजमान उवाचाथ हैनं प्रस्तोतोपससाद प्रस्तोतर्या देवता प्रस्ता-वमन्वायत्ता तां चेदविद्वान्प्रस्तोष्यसि मूर्द्धा ते विपतिष्यतीति मा भगवानवोचत्कतमा सा देव-तेति प्राण इति होवाच सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते सैषा देवता प्रस्तावमन्वायत्ता तां चेदविद्वान्प्रास्तोष्यो मूर्द्धा ते व्यपतिष्यत्तथोक्तस्य मयेत्यथ हैनमुद्गातोपससादोद्गातर्या देवतोद्गीथमन्वायत्ता तां चेदविद्वानुद्गास्यसि मूर्द्धा ते विपतिष्यतीति मा भगवानवोचत्कतमा सा देवतेत्यादित्य इति होवाच सर्वाणि ह वा इमानि भूतान्यादित्य-मुच्चैः सन्तं गायन्ति सैषा देवतोद्गीथमन्वायत्ता तां चेदविद्वानुदगास्यो मूर्द्धा ते व्यपतिष्य-त्तथोक्तस्य मयेत्यथ हैनं प्रतिहर्तोपससाद प्रतिहर्तर्या देवता प्रतिहारमन्वायत्ता तां चेदविद्वान्प्र-तिहरिष्यसि मूर्द्धा ते विपतिष्यतीति मा भगवानवोचत्कतमा सा देवतेत्यन्नमिति होवाच, सर्वाणि ह वा इमानि भूतान्यन्नमेव प्रतिहरमाणानि जीवन्ति सैषा देवता प्रतिहारमन्वायत्ता तां चेदविद्वान्प्रतिहरिष्यो मूर्द्धा ते व्यपतिष्यत्तथोक्तस्य मयेति तथोक्तस्य मयेति ।

अथ भाष्यं प्राणपदमस्मिन्नेव विषयवाक्ये अन्नादित्यसहपाठे प्रयुज्यत इति। ब्रह्मप्रकर-

सा देवतेति प्राण इति होवाच । सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसम्विशन्ति प्राणमभ्युज्जिहते सैषा देवता प्रस्तावमन्वायत्ता" ( छां. १।११।५ ) इति । तत्र संशयः । आसन्यः प्राणो ब्रह्म वेति ।

( पूर्वाधिकरणोक्तहेतोः प्राणशब्देन ब्रह्मैवोच्यते । )

पूर्वपक्षसिद्धान्तौ पूर्ववदेवेत्यतिदिशति । नन्वधिकरणानां न्यायरूपत्वात्सर्वत्र गमिष्यति किमित्यतिदिश्यत इति । उच्यते । प्राणस्य मुख्यस्यापि सर्वभूतसम्वेशनं स्वापादौ श्रुतावेवोपपाद्यते । "यदा वै पुरुषः स्वपति प्राणं तर्हि वागप्येति" (श.ब्रा. १०।३।३।६ ) इत्यादिना । तत्र यथा प्राणविद्याया न ब्रह्मपरत्वमेवमेवास्यापि न ब्रह्मपरत्वमिति न न्यायेन प्राप्नोति । अतोऽतिदिशति । अनेन चायमतिरिक्तो न्याय आपादितः । यत्रैव प्रकरणे ब्रह्मपरत्वे कल्प्यमाने न किञ्चिद्बाधकं तत्रैव ब्रह्मपरत्वं कल्पनीयमिति । न त्वन्यस्मिन्सम्भवे तत्परत्वमिति । अत एव तल्लिङ्गात्प्राणशब्दवाच्यं ब्रह्मेति ॥ १।१।२२ ॥ ८ ॥

---

णत्वं न भवति । प्राणस्य प्राणमिति श्रुतिस्तु ब्रह्मप्रकरणस्थेति सन्देहबीजं मनसि निधाय संशयमाहुः— तत्र संशय इति । आसन्य इति । आस्ये भवः आसन्यः वायुरूपः मुख्यप्राण इत्यर्थः । पूर्ववदिति । पुराणप्रसिद्धो हृदिस्थ आसन्यो ग्राह्यः । प्राणपदेनेति पूर्वपक्षः । सिद्धान्तस्तु, अत एव लिङ्गादेव प्राणशब्दस्य ब्रह्मप्रकाशनसामर्थ्यादेव प्राणशब्देन ब्रह्मोच्यत इति पूर्ववदित्यर्थः । अतिदिशतीति । अत एवेति । पदेनेति शेषः । अत्र पूर्वपदेन विचारश्चेदिदमधिकरणं न कर्तव्यमिति शङ्कते—नन्विति । सर्वत्रेति । यत्र ब्रह्मासाधारणधर्मस्तत्र ब्रह्मत्वमिति पूर्वाधिकरणन्यायः सर्वत्र गमिष्यतीत्यर्थः । समाधानमाहुः—उच्यत इति । ब्रह्मासाधारणधर्मः । सर्वभूतसम्वेशनत्वं स च प्राणेऽप्यस्तीत्याहुः—प्राणस्येति । श्रुतिमाहुः—पदेति । अत्र पूर्वन्यायो न प्रवर्तते इत्याहुः— तत्रेति । न प्राप्नोति, प्राणपदस्य न ब्रह्मपरत्वं प्राप्नोतीत्यर्थः । अतिदेशस्य फलमाहुः—अनेनेति । यत्रैवेति । प्राणविद्या द्विविधा, "यदा वै पुरुषः स्वपितीत्ये"का, "सर्वाणि ह वा इमानि भूतानी"त्यपरा, पूर्वविद्यायां स्वापकाले प्राणे सर्वभूतशब्दप्रतिपाद्यः सर्वेन्द्रियसन्निवेशः प्रतिपाद्यते । अपरायां प्राणे सर्वभूतानां प्राणिनामभिसम्वेशः लयकाले प्रतिपाद्यते इति प्रकरणभेदात् बाध्यबाधकभावो नास्तीत्यतिदेशेन ब्रह्मप्रकरणस्थप्राणशब्दस्य ब्रह्मपरत्वमिति ज्ञापनार्थमिदमधिकरणम् । यदीदमधिकरणं न स्यात्तर्हि पूर्वाधिकरणन्यायेन पूर्वविद्यायां ब्रह्मपरत्वाभावेनापरविद्यायाः अपि ब्रह्मपरत्वं न स्यादित्याशङ्कार्थः । सूत्रार्थमाहुः—अत एवेति । तल्लिङ्गादिति । तस्याः श्रुतेः लिङ्गात् सामर्थ्यादित्यर्थः । इत्यष्टमाधिकरणम् ।

---

(१) तत्र तावत् श्रीशङ्कराचार्याणां मते—आकाशन्यायमन्यत्रातिदिशति—अत्रातिदेशत्वात्पूर्वपक्षसङ्गतिर्नापेक्षिता । यद्वा पूर्वमाकाशश्रुतेरव्यभिचारिब्रह्मलिङ्गाद्बाधो यथा युक्तः, न तथेह प्राणश्रुतेर्बाधो युक्तः सम्वेशनादिलिङ्गस्य प्राणसाधारणतया ब्रह्माव्यभिचाराभावादिति प्रत्युदाहरणसङ्गतिः । फलं तु पूर्वपक्षे प्राणदृष्ट्या प्रस्तावोपास्तिः, सिद्धान्ते ब्रह्मदृष्ट्येति द्रष्टव्यम् । छान्दोग्ये श्रूयते उद्गीथे—'प्रस्तोतर्या देवता....' इति प्रस्तुत्य, 'कतमा सा देवतेति प्राण इति होवाच' इत्यादि । तत्र किं प्राणशब्देन ब्रह्माभिधीयते, उत वायुविकार इति संशये, वायुविकार इति पूर्वः

पक्षः । सिद्धान्तस्तु—प्राणशब्देन ब्रह्मैवाभिधीयते । कुतः, अत एव पूर्वसूत्रोक्ततल्लिङ्गादेव, तस्य ब्रह्मणो यल्लिङ्गम् '…प्राणमेवाभिसंविशन्ति' इत्यादि सर्वभूतसंवेशनादिकं तस्यास्मिन्वाक्ये दृष्टत्वात् । न च 'प्राणं तर्हि वागप्येति' इत्यादिना वायुविकारेऽपि श्रुतमिति वाच्यम् ; तत्र इन्द्रियसंवेशनादेरेव श्रुतत्वात् । अतोऽनन्यथासिद्धब्रह्मलिङ्गात् प्राणशब्दाभिधेयं ब्रह्मैवोपास्यमिति सिद्धम् ॥

(२) श्रीरामानुजीये—इदमाम्नायते छान्दोग्ये । प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता ( छा. १।१०।९ ) इति प्रस्तुत्य कतमा सा देवता इति । प्राण इति होवाच । सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते । सैषा देवता प्रस्तावमन्वायत्ता तां चेदविद्वान्प्रास्तोष्यो मूर्धा ते व्यपतिष्यत् ( छा. १।११।४-५ ) इति । अत्र प्राणशब्दोऽप्याकाशशब्दवत्प्रसिद्धप्राणव्यतिरिक्ते परस्मिन्नेव ब्रह्मणि वर्तते । तदसाधारणनिखिलजगत्प्रवेशनिष्क्रमणादिलिङ्गात्प्रसिद्धवन्निर्दिष्टात् । अधिकाशङ्का तु कृत्स्नभूतजातस्य प्राणाधीनस्थितिप्रवृत्त्यादिदर्शनात्प्रसिद्ध एव प्राणो जगत्कारणतया निर्देशमर्हतीति । परिहारस्तु शिलाकाष्ठादिषु चेतनस्वरूपे च तदभावात् "सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते"( छा. १।११।५ ) इति नोपपद्यत इति । अतः प्राणयति सर्वाणि भूतानीति कृत्वा परं ब्रह्मैव प्राणशब्देनाभिधीयते । अतः प्रसिद्धाकाशप्राणादेरन्यदेव निखिलजगदेककारणमपहतपाप्मत्वसार्वज्ञ्यसत्यसङ्कल्पत्वाद्यनन्तकल्याणगुणगणं परं ब्रह्मैवाकाशप्राणादिशब्दाभिधेयमिति सिद्धम् ।

(३) माध्वाः—'तद्वै त्वं प्राणोऽभवः महान् भोगः प्रजापतेः भुजः करिष्यमाणः यद्देवान् प्राणयो न वे'ति महाभोगशब्देन परमानन्दत्वं प्राणस्योक्तं, स च प्राणः प्रसिद्धो वायुरित्यापतति । न चैवं यतो विष्णुरेव प्राणः अत एव 'श्रीश्च ते लक्ष्मीश्च पत्न्यावहो रात्रे पार्श्वे' इत्यादि तल्लिङ्गादेव ॥

'यो वेद निहितं गुहायाम्' इत्युक्तं तत्र गुहानिहितं वि मे कर्णायत विचक्षुर्वी इदं ज्योतिर्हृदय आहितं यत् वि मे मनश्चरति दूर आधीः किंस्विद्वक्ष्यामि किमुनूमनिष्य इति ज्योतिरुक्तं तज्ज्योतिरग्निसूक्तत्वात् प्रसिद्धश्चाग्निरेवेति प्राप्तम्, अत आह—विष्णुरेव ज्योतिः कर्णादीनां विचरणाभिधानात् स हि परो मात्रया तन्वा वृधानेत्यादिना कर्णादिविदूरः ॥

(४) निम्बार्कः—"सर्वाणि ह वा इमानि भूतानि प्राणमेव संविशन्ति प्राणमभ्युज्जिहते" इत्यत्रापि संवेशनोद्गमनरूपाद् ब्रह्मलिङ्गात्परमात्मैव प्राणः ॥

(५) भैक्षवाः—ब्रह्मप्रकरणशब्दवति श्रुत्यन्तरे पूर्वसूत्रोदाहृतवाक्यसदृशं वाक्यं श्रूयते "क्वैष एतद्बा लोके पुरुषो शयिष्ट क वा एतदभूत् कुत एतदागादिति प्रश्ने, यदा सुप्तः स्वप्नं न पश्यत्यथास्मिन्प्राण एवैकधा भवति एतस्मादात्मनः प्राणः यथायतनं विप्रतिष्ठन्त इत्यादि । अत्र सर्वं पूर्वसूत्रवद्बोध्यम् । अत एवेति ऊर्णनाभिदृष्टान्तादिरूपात् ब्रह्मलिङ्गादेवेत्यर्थः । अत्राप्याधुनिकाः छान्दोग्यप्रथमप्रपाठकस्थमेव वाक्यान्तरमुदाहरन्ति "सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्तीति । तत्र दूषणं पूर्वसूत्रवदेव बोध्यम् , अधिकं तु अन्नादित्याभ्यां सह पाठो ब्रह्मपरत्वे बाधक इति ॥

(६) भास्कराचार्याः—या देवता प्रस्तावमन्वायत्तेत्युपक्रम्य श्रूयते । कतमा सा देवतेति प्राण इति होवाच सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते सैषा देवता प्रस्तावमन्वायत्तेति । तत्र संशयः । किं पञ्चवृत्तेः प्राणस्य परिग्रहः किं वा परस्योपादानमिति लोकप्रसिद्धेः पञ्चवृत्तेः परिग्रह इति प्राप्ते ब्रूमः । अत एव पूर्वनिर्दिष्टाल्लिङ्गात् प्राणः परमात्मा सम्वेशनोद्गमनं पारमेश्वरं लिङ्गमभ्युज्जिहत इत्युद्गमनमुत्पत्तिरित्यर्थः । ननु पूर्वेणैव न्यायेन सिद्धत्वात् पृथगारम्भो न युक्तो यदि वा तुल्या शङ्का स्यात् ततोऽप्युक्तमारब्धुम् । अत्रोच्यते । पूर्वत्रोत्पत्तिप्रलयौ न श्रुतिप्रसिद्धौ भूताकाशे अत्र पुनः प्रसिद्धौ कथं यदा वै पुरुषः स्वपिति प्राणं तर्हि वागप्येति प्राणं चक्षुः प्राणं श्रोत्रं प्राणं मनः स यदा प्रबुध्यते प्राणादेवाधि पुनर्जायन्त इति प्रत्यक्षं चैतत् प्राणवृत्तौ वर्तमानायामिन्द्रियवृत्तयः परिलुप्यन्ते भूतानां चेन्द्रियसारत्वात् उद्गमनसंवेशनवादी वाक्यशेषस्तेषामेवोद्गमनसंवेशनपर इति न विरुध्यते । किं चोद्गीथप्रतीहारयोरन्नादित्यौ देवते तयोश्चाब्रह्मत्वात् तत्साहचर्यात् प्राणोऽपि तथाभूतो गृह्यत इति विशेषाशङ्का । परिहारस्तु न भूतानां सम्वेशनोद्गमनं श्रूयते करणवृत्तिमात्रोपसंहारः श्रूयते । तत्र च भूतोद्गमनसम्वेशनवादिनी श्रुतिरपराधिता स्यात् । अपि च स्वापकालापेक्षया संवेशनं व्याख्येयमिह वा विशेषेण श्रूयते तत् परमात्मपक्षे युज्यते । अत एव श्रुत्या निर्णीयते साहचर्यमकिञ्चित्करं यथैवान्नादित्ययोः परस्परवैलक्षण्यमेवं ताभ्यां प्राणस्य प्राणं प्राणबन्धनं सौम्य मन इति परस्मिन्नपि प्राणशब्दप्रयोगात् । प्रकर्षेण अणिति स्थितिं लभते तस्मिन् कृत्स्नं जगदिति प्राणः ॥

(७) श्रीमद्वल्लभाचार्यमतेऽयममभिप्रायः—छान्दोग्ये प्रथमप्रपाठके श्रूयते । 'कतमा सा देवता, प्राण इति होवाच, सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते, सैषा देवता प्रस्तावमन्वायत्ते'ति । तत्र संशयः । आसन्यो ? ब्रह्म वेति ? पूर्वपक्षसिद्धान्तौ तु पूर्ववदेवेत्यतिदिशति । अत एवेति । पूर्वोक्तोभयरूपात्तल्लिङ्गादेव प्राणशब्दवाच्यं ब्रह्मेत्यर्थः । नन्वधिकरणानां न्यायरूपत्वादन्यत्रापि तत्प्रवृत्तेस्तल्लिङ्गाधिकरणेनैव गतार्थत्वात् किमित्येतत्सूत्रप्रणयनमिति चेद् । उच्यते । 'यदा वै पुरुषः स्वपिति प्राणं तर्हि वागप्येति प्राणं चक्षुः प्राणं श्रोत्रं प्राणं मनो, यदा प्रबुध्यते प्राणादेवाधि पुनर्जायन्त' इति श्रुतावेव स्वापे सर्वभूतसम्वेशनं मुख्यप्राणधर्मत्वेन प्रतिपाद्यत इति प्राणविद्याया यथा न ब्रह्मपरत्वम्, तथास्यापीति शङ्कानिवारणायास्यावश्यकत्वात् । नचात्र वागादीनामिन्द्रियाणामुक्तत्वेन भूतानामनुक्तत्वान्नास्य प्राणविद्यातुल्यत्वमिति शङ्क्यम् । 'दीपश्चक्षुस्तथा रूपं ज्योतिषो न पृथग्भवेद्' इति पुराणवाक्ये इन्द्रियाणां भूतात्पृथक्त्वस्योक्तत्वेन भूतविशेषत्वे प्राणविद्यासाधारण्यस्य शक्यशङ्कत्वादिति । एतेन बाधकासत्त्व एव वाक्यानां ब्रह्मपरत्वम्, न तु तत्सत्त्वेऽपीति देवान्तरोपासनानुच्छेदायेदमधिकरणमिति बोधितम् । तेनोपोद्घातोऽत्र सङ्गतिः ।



## ९ ज्योतिश्चरणाधिकरणम् ।

### ( ज्योतिःशब्देन भूतात्मकानां चरणानां ब्रह्मधर्मता )

### ज्योतिश्चरणाभिधानात् ॥१।१।२३॥

**इदमामनन्ति । "अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठे-**

---

इदानीं यत्र ब्रह्मासाधारणधर्मः स्पष्टं न प्रतीयते श्रुतिसामर्थ्यमपि नास्ति तत्र ब्रह्मपरत्वबोधनाय चतुर्भिः सूत्रैः ज्योतिश्चरणाधिकरणं रचयाञ्चक्रुः । **ज्योतिश्चरणाभिधानात्** ।

छान्दोग्यपञ्चमप्रपाठकस्थं विषयवाक्यमाहुः—अथ यदिति ।

अत्रादितः विषयवाक्यं—

गायत्री वा इद९ सर्वं भूतं यदिदं किञ्च वाग्वै गायत्री वाग्वा इद९ सर्वं भूतं गायति च त्रायते च या वै सा गायत्री यं वाव सा ये यं पृथिव्यस्या९ हीद९ सर्वं भूतं प्रतिष्ठितमेता-मेव नातिशीयते या वै सा पृथिवी यं वाव सा यदिदमस्मिन्पुरुषे शरीरमस्मिन्हीमे प्राणाः प्रति-ष्ठिता एतदेव नातिशीयन्ते यद्वैतत्पुरुषे शरीरमिदं वाव तद्यदिदमस्मिन्नन्तःपुरुषे हृदयमस्मि-न्हीमे प्राणाः प्रतिष्ठिता एतदेव नातिशीयन्ते सैषा चतुष्पदा षड्विधा गायत्री तदेतदृचाभ्य-नूक्तं तावानस्य महिमा ततो ज्याया९श्च पूरुषः, पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवीति यद्वैतद्ब्रह्मेतीदं वाव तद्योयं बहिर्द्धा पुरुषादाकाशो यो वै स बहिर्द्धा पुरुषादाकाशोऽयं वाव स यो यमन्तःपुरुष आकाशो यो वै सोन्तःपुरुष आकाशो यं वाव स योयमन्तर्हृदय आकाशस्त-देतत्पूर्णमप्रवर्ति पूर्णामप्रवर्तिनी९ श्रियं लभते य एवं वेद ।

तस्य ह वा एतस्य हृदयस्य पञ्चदेवसुषयः स योस्य प्राङ्सुषिः स प्राणस्तच्चक्षुः स आदित्य-स्तदेतत्तेजोन्नाद्यमित्युपासीत तेजस्व्यन्नादो भवति य एवं वेदाथ योस्य दक्षिणः सुषिः स व्यान-स्तच्छ्रोत्र९स चन्द्रमास्तदेतच्छ्रीश्च यशश्चेत्युपासीत, श्रीमान्यशस्वी भवति य एवं वेदाथ योऽस्य प्रत्यङ्सुषिः सोपानः सा वाक् सोग्निस्तदेतद्ब्रह्मवर्चसमन्नाद्यमित्युपासीत ब्रह्मवर्चस्यन्नादो भवति य एवं वेदाथ योस्योदङ्क्सुषिः स समानस्तन्मनः स पर्जन्यस्तदेतत्कीर्तिश्च व्युष्टिश्चेत्युपासीत कीर्तिमान्व्युष्टिमान्भवति एवं वेथाथ योस्योर्द्धः सुषिः स उदानः स वायुः स आकाशस्तदेतदो-जश्च महश्चेत्युपासीतौजस्वी महस्वान्भवति य एवं वेद ते वा एते पञ्चब्रह्मपुरुषाः स्वर्गस्य लोकस्य द्वारपाः स य एतानेवं पञ्चब्रह्मपुरुषान्स्वर्गस्य लोकस्य द्वारपान्वेदास्य कुले वीरो जायते प्रति-पद्यते स्वर्गं लोकं य एतानेवं पञ्च ब्रह्मपुरुषान्स्वर्गस्य लोकस्य द्वारपान्वेदाथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेष्विदं वाव तद्यदिदमस्मिन्नन्तः पुरुषे ज्योतिस्तस्यैषा दृष्टिर्यत्रैतदस्मिञ्छरीरे स९स्पर्शे नोष्णिमानं विजानाति तस्यैषा श्रुतिर्यत्रैतत्क-र्णावपिगृह्य निनदमिव नदथुरिवाग्नेरिव ज्वलत उपशृणोति तदेतद्दृष्टं च श्रुतं चेत्युपासीत चक्षुष्यः श्रुतो भवति य एवं वेद य एवं वेद ।

अथ भाष्यम् । अथ यदिति । अथ गायत्राख्ये ब्रह्मविद्योपास्त्यनन्तरं यत् ज्योतिः अतः दिवो द्युलोकात्, परः परस्मात् विश्वतः प्राणिवर्गात्, सर्वस्मात् भुवरादिलोकात् पृष्ठेषु उपरिभोगेषु, न विद्यते उत्तमा येभ्यः एतादृशेषु लोकेषु दीप्यते यदेवेदमस्मिन् पुरुषे जाठराग्नौ तदिदमेकमेवेत्यर्थः ।

ष्वनुत्तमेषूत्तमेषु लोकेषु । इदं तावद्यदिदमस्मिन्नन्तःपुरुषे ज्योतिः” (छां. ३।१३।७) इति ।

तत्र ज्योतिःशब्देन प्राकृतं ज्योतिराहोस्विद् ब्रह्मैवेति संशयः । अत्रासाधारणब्रह्मधर्माभावात् पूर्वपक्षः । सिद्धान्ते तु चरणस्य ब्रह्मधर्मत्वमिति । तावानस्य महिमातो ज्यायांश्च पूरुषः । पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि । ( छां. ३।१२।६) इति पूर्ववाक्यम् । “गायत्री वा इदं सर्वं भूतं यदिदं किञ्च” (छां. ३।१२।१) इति गायत्र्याख्यब्रह्मविद्यां वक्तुं तस्याः पादचतुष्टयं प्रतिपाद्य ब्रह्मणश्चतुष्पात्त्वमुक्तम् ।

पुरुषसूक्तेऽप्याश्रमचतुष्टयस्था जीवाः पादत्वेनोक्ताः । तथा प्रणवब्रह्मविद्यायामप्यकारोकारमकारनादवाच्याश्चत्वारः पादा विश्वतैजसप्राज्ञतुरीया उक्ताः । “तद्विष्णोः परमं पदमि”ति च । “ब्रह्म पुच्छमि”ति च । सत्यकामब्राह्मणे तु स्पष्टा एव ब्रह्मणश्चत्वारः पादा निरूपिताः । अतः सच्चिदानन्दरूपस्य प्रत्येकसमुदायाभ्यां चतूरूपत्वम् ।

तत्र केवलानां कार्यत्वमेव । चतुर्थपादस्य तु ब्रह्मत्वम् । तत्रापि पड्विधत्वप्रति-

---

संशयमाहुः—तत्रेति । पूर्वपक्षमाहुः—अत्रेति । असाधारणेति । ज्योतिषामपि तज्ज्योतिरिति गीतावाक्योक्तासाधारणधर्माभावात् प्राकृतो जठराग्निरेवात्र ज्योतिर्गृह्यते, इति पूर्वपक्ष इत्यर्थः । सिद्धान्तमाहुः—चरणस्येति । चरणस्य ब्रह्मधर्मत्वप्रसिद्धिमाहुः—एतावानस्येति । तावानस्येति पाठः पूर्ववाक्यमिति । एतद्वाक्यैनैकवाक्यतायोधनार्थमियमुक्तिः । तथा चान्यत्र वाक्ये चरणस्य ब्रह्मधर्मत्वोपादानात् तदैकवाक्यतयाऽत्रापि तद्धर्मत्वेन ज्योतिषः ब्रह्मत्वं बोध्यमिति भावः । ननु कीदृशमेकं वाक्यं यास्यैकवाक्यता वा कीदृशीत्यत आहुः—गायत्रीत्यादिना निरूप्य इति सिद्धमित्यन्तेन । अत्र स्पष्टप्रतिपत्तिरादितः विषयवाक्ये ज्ञेया । ब्रह्मण इति । उक्तमिति । ऋचेति शेषः । तथा च ब्रह्मणः चरणाभिधानेन ब्रह्मप्रकरणसिद्धौ तत्प्रकरणपठितस्य ज्योतिःशब्दस्य ब्रह्मप्रतिपादकत्वमिति भावः ।

अन्यत्रापि ब्रह्मणः चतुष्पात्त्वसिद्धिमाहुः—पुरुषसूक्तेऽपीति । 'त्रिपादूर्ध्व' इत्यत्राश्रमचतुष्टयवद्हिनां जीवानां पादत्वेनोक्तिः । यदि ब्रह्मणः पादा एव न सन्ति चेत् कथमियमुक्तिः सम्भवतीति भावः । स्पष्टं चेदं द्वितीयस्कन्धे सूक्तविवरणाध्याये, अन्यत्र ब्रह्मप्रकरणे ब्रह्मणः चतुष्पात्त्वसिद्धिमाहुः—तथेति । प्रणवेति माण्डूक्ये । काठके, तद्विष्णोरिति, तैत्तिरीयके ब्रह्मपुच्छमिति, पुच्छं स्थितिस्थानम् । अक्षरं ब्रह्मेति यावत्, तस्य चरणे रूपत्वमुक्तम् सत्यकामेति । छान्दोग्यस्येति शेषः । स्पष्टा एवेति । जाबालं प्रति चतुर्भिः ब्रह्मणः पादा उपदिष्टा इति कथारूपेण स्पष्टा इत्यर्थः । ननु पूर्णस्य ब्रह्मणः अंशनिरूपितांशिभावोऽसङ्गत इत्यत आहुः—अत इति । यतः सर्वोपनिषत्सु पादा उक्ताः । अतः कारणादित्यर्थः । चतूरूपत्वमिति । जन्माद्यधिकरणेषु सिद्धमिति शेषः । तथा च ब्रह्मणः विरुद्धधर्माश्रयत्वं अंशिभाववत्त्वं स्वीक्रियत इति भावः । अत एव “ममैवांशो जीवलोके” इति गीतावाक्यं सङ्गच्छते ।

ननु भवतु जन्माद्यधिकरणेषु चतूरूपत्वं रूपचतुष्पात्त्वसिद्धिः तथापि प्रकृते किमायातमित्यत आहुः—तत्रेति । तत्र अंशरूपपादेषु मध्ये, केवलानां, सदंशचिदंशानन्दांशानां कार्यत्वमेवाजडजीवा-

ज्ञानाद् भूतपृथिवीशरीराणां परिचायकत्वेन षड्विधत्वमनिरूप्य हृदयस्य षड्विधत्वं निरूपयन्–"तस्य ह वा एतस्य" ( छां. ३।१३।१ ) इत्यादिना पञ्चदेवपुरुषान्निरूप्य तेषां द्वारपालत्वज्ञानानन्तरं–"अथ यदतः परो दिवो ज्योतिर्दीप्यते" (छां. ३।१३।७ ) इति चतुर्थपादस्य षष्ठविधत्वप्रतिपादनादतश्चतुर्थपादे पञ्च पुरुषास्ततः परो दिवो ज्योतिः षष्ठस्तस्यैव सर्वत्र दीप्यमानत्वं निरूप्य तदेवान्तःपुरुष उपसंहरति। तस्मात्पूर्वं "त्रिपादस्यामृतं दिवि" (छां. ३।१२।६) इत्युक्तत्वादस्य त्रिपात्सम्बन्ध्यमृतमुपरितनलोकेष्विति। अतोऽत्र चतुर्थः पादो निरूप्यत इति सिद्धम्।

अतः पादानां ब्रह्मधर्मत्वात् ज्योतिषो ब्रह्मत्वमिति। ब्रह्मधर्मनिर्णयार्थमिदमधिकरणं चरणानामौपचारिकत्वव्यावृत्त्यर्थम्। एतन्निर्णयेन प्रणवादिविद्या निर्णीता वेदितव्याः १।१।२३॥

---

न्तर्यामिरूपेणेति शेषः। अत एवोक्तं निबन्धे द्वितीयस्कन्धसुबोधिन्यां च श्रीमदाचार्यचरणैः "जडो जीवोऽन्तरात्मेति व्यवहारस्त्रिधा मतः" इत्यादि। भगवदंशस्य कार्यरूपत्वं कथमिति शङ्कानिरासोऽपि तत्रैवावरणभङ्गादिग्रन्थेषु प्रतिपादित इति विस्तरभयाद्विरम्यते। **चतुर्थपादस्येति**। सच्चिदानन्दरूपस्येत्यर्थः। तथा च ब्रह्मणः चतुष्पात्त्वप्रसिद्धिः तेन हेतुना ज्योतिःपदस्य ब्रह्मवाचकत्वसिद्धिरित्यपि प्रकृते समायातमिति भावः। विषयवाक्येऽपि चतुर्थपादस्य ब्रह्मत्वं वक्तुं तस्य पुनः षड्विधत्वं निरूपयितुं 'गायत्री वा वे'त्यादिसम्पूर्णविषयवाक्यैकवाक्यतां प्रतिपादयन्ति—**तत्रापीति**। **चतुर्थः पादो निरूप्यते** इत्यग्रतनेनान्वयः। यस्मिन्वाक्ये गायत्र्याख्यब्रह्मविद्यायाः पादचतुष्टयमुक्तं तत्रापि चतुर्थपादस्य ब्रह्मत्वमुक्तमित्यर्थः। कथमुक्तमित्याकाङ्क्षायां एकवाक्यतां प्रतिपादयन्ति—**षड्विधत्वेति**। **प्रतिज्ञानादिति**। "सैषा चतुष्पदा षड्विधा गायत्रीति प्रतिज्ञानन्तरमि"त्यर्थः।

**भूतपृथिवीति**। विषयवाक्ये वाग्भूतपृथिवीशरीरहृदयप्राणानां गायत्रीरूपब्रह्मणः षड्विधत्वमुक्तम्। **परिचायकत्वेन**, उपलक्षणत्वेन। **तस्य ह वेति**। "तस्य ह वा एतस्य हृदयस्ये"त्यादिना। **प्रतिपादनादिति**। प्रतिपादनं कृत्वेत्यर्थः। **अत इति**। अनेन प्रकारेणेत्यर्थः। तथा च भूतपृथिवीशरीरादीनां उपलक्षणत्वं वक्तुं शक्यते इति तेषां पृथङ्निरूपणं कर्तुं न शक्यत इति। परन्तु तद्विशिष्टगायत्र्युपासना न विवक्षिता, किन्तु हृदयस्य षड्विधत्वविशिष्टैवेति तस्या एव मुख्यत्वमतः गायत्र्याः षड्विधत्वनिरूपणप्रत्युक्ताकाङ्क्षापूरणार्थं हृदयस्य षड्विधत्वं निरूपयन् वेदे षष्ठोऽन्तःपुरुषे उपसंहरतीत्याखण्डलार्थः। एतेन अर्थैक्यत्वे सति साकाङ्क्षत्वमेकवाक्यत्वं अत एवोक्तं पूर्वतन्त्रे जैमिनिभिः "अर्थैक्यादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्या"दिति, तथा च प्रकृते गायत्रीवाक्ये वाग्भूतादिषड्विधत्वोक्त्याकाङ्क्षापूरणेन निराकाङ्क्षत्वं, अथ यदिति ज्योतिर्वाक्ये च हृदयस्य षड्विधत्वोक्तावपि अथेत्यनेन वाक्यभेदः प्रतीयते। एवं च ब्रह्मरूपार्थैक्येऽपि परस्परनिराकाङ्क्षत्वात् वाक्यभेद इति निरस्तम्। तादृशब्रह्मणः उपासनाङ्गत्वेन द्वारपालादिगुणविधानार्थं तस्य ह वेत्यादिग्रन्थेन गायत्र्याख्यब्रह्मण एवाग्रे निरूपणात् तत्रत्यषड्विधत्वनिरूपणेनैवाकाङ्क्षापूर्तिरिति न निराकाङ्क्षत्वम्। अथ शब्दस्य गायत्र्याः ब्रह्मप्रतिपादकत्वाद्ब्रह्मत्वमिति भूतादिषण्णामनिरूपणात् विद्यान्तरारम्भार्थत्वाच्चेति न किञ्चिदेतत्।

ननु तद्धर्मोपदेशाधिकरणे ब्रह्मधर्मेण ब्रह्मत्वसिद्धिरुक्तैव, पुनरिदमधिकरणं व्यर्थमित्यत आहुः— **ब्रह्मेति**। चरणस्य ब्रह्मधर्मत्वमस्ति वा न वेति संशयनिवारणार्थमित्यर्थः। चरणस्य ब्रह्मधर्मत्वनिर्णयस्यान्यदपि फलमाहुः—**एतदिति**। प्रणवादीत्यादिना सर्वासां पादवतीविद्यानां सङ्ग्रह इति।

( गायत्रीछन्द एवोच्यते, न तु चरणानां ब्रह्मधर्मत्वमिति )

**छन्दोभिधानान्नेति चेन्न तथा चेतोर्पणनिगदात्तथा हि दर्शनम् ॥ १।१।२४ ॥**

ननु नात्र ब्रह्म चतुष्पान्निरूपितं किन्तु गायत्रीछन्दः । "गायत्री वा इदं सर्वं यदिदं किञ्च" (छां. ३।१२।१) इत्युपक्रम्य तामेव भूतपृथिवीशरीरहृदयभेदैर्व्याख्याय "सैषा चतुष्पदा षड्विधा गायत्री तदेतदृचाभ्युक्तम्" ( छां. ३।१२।५ ) "तावानस्य महिमा" ( छां. ३।१२।६ ) इति । तस्यामेव व्याख्यानरूपायां गायत्र्यामुदाहृतो मन्त्रः कथमकस्माद्ब्रह्म चतुष्पादभिदध्यात् ? यद्वैतद्ब्रह्मेति ब्रह्मपदमपि छन्दसः प्रकृतत्वात्तत्परमेवावगन्तव्यम् । शब्दस्यापि ब्रह्मवाचकत्वसिद्धेः, ब्रह्मोपनिषदितिवच्छब्दब्रह्मेति च, तस्माच्छन्दस एव पादाभिधानान्न ब्रह्मधर्माः पादा इति चेत्,

( भगवति चेतोऽर्पणार्थं सन्दर्भादौ गायत्री प्रस्तुता, तयोपासने ब्रह्मदर्शनं भवतीति ब्रह्मण एव पादा न गायत्र्याः )

नैष दोषः; तथा चेतोर्पणनिगदात् । तथा तेन द्वारेण चेतसोऽर्पणं निगद्यते । "गायत्री वा इदं सर्वं यदिदं किञ्च" ( छां. ३।१२।१ ) इति । न हि वर्णसमाम्नायस्य सर्वत्वमनुपचारेण सम्भवति । यथा सूचीद्वारा सूत्रप्रवेशस्तथा गायत्रीद्वारा बुद्धिस्तत्प्रतिपाद्ये ब्रह्मणि प्रविशेदिति । कुत एतदेवं प्रतिपाद्यत इति तत्राह-तथा हि दर्शनम् । तथा तेनैव प्रकारेण दर्शनं ज्ञानं भवति, स्थूला बुद्धिर्नाहत्यैव ब्रह्मणि प्रविशेदिति । एतेन सर्वा मन्त्रोपासना व्याख्याताः । हि युक्तश्चायमर्थो लोके स्वतो यत्र प्रविशति तदुपायेन प्रविशतीति । न त्वदृष्टद्वारा । दृष्टे सम्भवत्यदृष्टकल्पनाया अन्याय्यत्वात् । तस्मात्पादा ब्रह्मधर्माः ॥ १।१।२४ ॥

---

**छन्दोभिधानान्नेति चेन्न तथा चेतोर्पणनिगदात् । तथा हि दर्शनम् ।** **छन्दोभिधानादिति** । पूर्वपक्षार्थमाहुः—**नन्विति** । छन्दो वर्णसमाम्नायरूपः । **गायत्र्यामिति** । शब्दरूपायामित्यादिः । नन्वस्मिन्प्रकरणे ब्रह्मपदप्रयोगोऽस्तीत्यत आहुः—**यद्वैतदिति** । **तत्परमिति** । गायत्रीरूपशब्दपरमित्यर्थः । ननु ब्रह्मशब्दस्य कथं गायत्रीरूपशब्दपरत्वमित्यत आहुः—**शब्दस्यापीति** । **ब्रह्मवाचकत्वेति** । गायत्रीरूपशब्दस्यापि ब्रह्मपरपर्यायत्वसिद्धेरित्यर्थः । यथा घटशब्दस्य घटवाचककलशापरपर्यायत्वं तथात्रापीति भावः । ब्रह्मशब्दस्य शब्दपरत्वे दृष्टान्तमाहुः—**ब्रह्मोपनिषदिति** । अत्रापि ब्रह्माभिन्नं यदुपनिषदित्ययमर्थो न स्वीक्रियते, किन्तु ब्रह्मवाचकं यदुपनिषदित्यतः अपरं दृष्टान्तमाहुः—**शब्दब्रह्मेति** । "शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छती"त्यत्र निःसंशय इति चकारार्थः । सिद्धान्तमाहुः—**नैष दोष इति** । **तेनेति** । ब्रह्मप्रतिपादकमन्त्रोपासनया ब्रह्मणि चेतःप्रवेशानन्तरं तत्प्राप्तिरिति हृदयम् । निगदमाहुः—**गायत्रीति** । **उपचारेण** । लक्षणया । लौकिकीं युक्तिमाहुः—**यथेति** । गायत्रीरूपेण ब्रह्मप्रतिपादनफलमाहुः—**तथा हीति** । शेषं सुगमम् ।

( भूतपृथिवीशरीरहृदयानि न गायत्र्याः पादा अपि तु ब्रह्मण एव )

**भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॥ १।१।२५ ॥**

किञ्च, भूतादयोऽत्र पादा व्यपदिश्यन्ते । भूतपृथिवीशरीरहृदयानि चत्वारि । न ह्येतानि गायत्र्याः पादा भवितुमर्हन्ति । ब्रह्मपरिग्रहे तूपपद्यन्ते । यावन्मुख्य-मुपपद्यते तावन्न गौणं कल्पनीयम् ।

( श्रुत्या तत्समर्थनम् )

अयमर्थः । पूर्वहेतौ छन्दसोऽपि पादा व्यपदेशाद्भवन्ति, तथापि ब्रह्मण एव युक्ता इति । पुरुषसूक्ते—"एतावानस्य" (ऋ. सं. १०।९०।३) इत्यस्य ब्रह्मपरत्वात् । अस्मिन्वाक्ये तु गायत्र्याः पादा एव नोपदिष्टाः; किन्तु ते ब्रह्मण एव पादा इति । तद्वाचकत्वेन गायत्र्यामुपचारेणोपसंहारः ।

( न शब्दस्य पादाः, किन्तु, अर्थस्यैव )

चकारादर्था न शब्दस्य पादा भवन्ति किन्त्वर्थस्यैवेति । तस्माद्ब्रह्मवाक्यत्वे भूतादीनां पादत्वमुपपद्यते नान्यथेति । तस्मात्पादानां ब्रह्मधर्मत्वम् ॥ १।१।२५ ॥

( पादोऽस्येति श्रुतौ मुख्यार्थ एव ग्राह्यो न गौणार्थः )

**उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ॥ १।१।२६ ॥**

"पादोऽस्य विश्वा भूतानि" (छां.३।१२।६) सर्वाणि भूतान्येकः पादः । पादत्रय-ममृतं दिवीत्येकोऽर्थः ॥

---

"भूतादिव्यपदेशोपपत्तेश्चैवम्" सूत्रवैयर्थ्यं परिहरन्ति—अयमर्थ इत्यादिना । ब्रह्म-परत्वादिति । गायत्रीविवरणेऽपि 'तावानस्ये'त्यस्य ब्रह्मपरत्वं यथा पुरुषसूक्तेऽपि ब्रह्मपरत्वेन ब्रह्मण एव पादा इत्यर्थः ।

अर्था इति । भूतादयः अर्था इत्यर्थः ।

उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् । अस्मिन् सूत्रे उपदेशभेदो द्विविधः, शब्दतः अर्थतश्च । पुरुषसूक्ते "पादोऽस्य विश्वा भूतानि" । अस्मिन्विषयवाक्ये "पादोऽस्य सर्वा भूतानि" । अत्र विश्व-सर्वशब्दयोरर्थैक्येऽपि शब्दतो भेदोऽस्ति, परन्तु दूषणतावहो न भवतीति । अर्थतः एकार्थप्रतिपादकत्वाभाव-रूपोपदेशभेदस्यैव प्रतिपादयितुमाहुः—पादोऽस्येति । "पादोऽस्य विश्वा भूतानी"ति पुरुषसूक्तस्थमन्त्रस्य प्रतीकम् । अस्यार्थः; अस्य, भगवतः, विश्वा विश्वानि सर्वाणि, भूतानि, कालत्रयवर्त्तीनि प्राणिजातानि, पादश्चतुर्थोऽशः, त्रिपादस्येति त्रिपात् अस्येति छेदः, तथा चास्य त्रिपात् स्वरूपं यत् अवशिष्टं तत्, अमृतं विनाशरहितं सत् दिवि व्यवतिष्ठते इति शेषः । छान्दोग्यमन्त्रे तु पादोऽस्य सर्वा भूतानीति वर्तत इति शब्दतः भेदस्याकिञ्चित्करत्वं स्वीकृत्य छान्दोग्यानुसारेण व्याख्यामाहुः—सर्वाणि भूतान्येक इति । पादत्रयमिति । अंशत्रयमित्यर्थः । अमृतं विनाशरहितम्, दिवि द्योतनात्मके, एकोऽर्थः प्रथमोऽर्थः । अस्मिन्नर्थे पादत्रयममृतं स्वस्वरूपमेवावतिष्ठते । द्वितीयस्कन्धानुसारेणापरमाहुः—

पादेषु सर्वभूतानि पुंसः स्थितिपदो विदुः ।
अमृतं क्षेममभयं त्रिमूर्ध्नोऽधायि मूर्धसु ॥ १९ ॥

इत्यपरः ।

( सप्तमीपञ्चम्योरर्थनिर्णयेन समाधिः )

पुरुषसूक्तानुरोधे द्वितीय एवार्थः । प्रथमे तावत्–ननु दिवीति मन्त्रे सप्तम्या आधारत्वं प्रतिपाद्यते । अतःपरमित्यत्र पञ्चम्या अनाधारत्वमत उपदेशभेदात् पूर्वोक्तपरामर्शाभावान्न ज्योतिषो ब्रह्मत्वमिति चेत्, नैष दोषः, उभयस्मिन्नप्य-विरोधात् । मन्त्रे दिव्येवोक्तमस्मिन् वाक्ये सर्वत्रोच्यते । सर्वत्र विद्यमानस्य दिवि विद्यमानत्वं न विरुध्यते । अतःशब्देन न तत्राविद्यमानत्वम् । किन्तु ततोऽप्यन्यत्र सत्त्वं बोध्यते, तस्मात् सप्तमीपञ्चमीनिर्देशो न विरुद्धः ।

द्वितीये तु–ननु मन्त्रेऽमृतपदमत्र ज्योतिःपदमत उपदेशभेदाच्चतुर्थश्च पादो द्वयम् । अतःशब्दाच्च सर्वस्माद्भेदः प्रतिपाद्यते । अत उपदेशभेदान्नैकवाक्यता ।

---

पादेष्विति । स्थितिपदवाच्याः, भूरादिलोकाः पादा यस्य सः स्थितिपात्, एतादृशस्य पुंसः पादेषु सर्वाणि भूतानि विदुः । त्रयाणां मूर्द्धा इति त्रिमूर्द्धा तस्य त्रिमूर्ध्नः त्रयाणां भूरादिलोकानां मूर्द्धा शिरोभागः महर्लोकः तस्य मूर्द्धसु उपरितनेषु जनतपःसत्यलोकेषु भगवता अमृतादित्रयं अधायि स्थापितम् । अपर इति । द्वितीय इत्यर्थः ।

पुरुषसूक्तानुरोधेन । द्वितीयस्कन्धीयपुरुषसूक्तविवरणानुरोधेन । एवकारोऽप्यर्थे । यद्वा, मुख्यार्थे प्रथमेऽर्थे उपदेशभेदमाहुः—प्रथमेति । सूत्रस्थं पूर्वपक्षमाहुः—नन्विति । दिवीति मन्त्रे । त्रिपाद-स्यामृतं दिवीति मन्त्रे । अतः परमिति । "यदतः परो दिवो ज्योतिर्दीप्यत" इति ब्राह्मणे । ननु अत इत्यनेन दिवीत्यस्य परामर्शो भविष्यतीत्यत आहुः—पूर्वोक्तेति । पञ्चम्यन्तेन सप्तम्यन्तस्य परामर्शाभावा-दित्यर्थः । न ज्योतिष इति । मन्त्रे तु अस्य ब्रह्मणः, अमृतं दिवीत्युक्तम्, ब्राह्मणे अतःपरं ज्योतिरित्युक्तम्, तेन कृत्वा किं ज्ञायते निरूप्य वस्तुभेदान्न ज्योतिषो ब्रह्मत्वमित्यर्थः । प्रथमेऽर्थे समाधानसूत्रमाहुः—उभ-यस्मिन्नप्यविरोधात् । सर्वत्रोच्यत इति । ब्राह्मणे यदतः परेत्युक्त्वा सर्वतः पृष्ठेष्वित्यनेन सर्वत्रो-च्यत इत्यर्थः । अत इति । ल्यब्लोपपञ्चमीं कृत्वा अत आरभ्येत्यर्थं विधायाऽऽहुः—अत इति । न विरुद्ध इति । वृक्षाग्रे श्येनः वृक्षाग्रात्परतः श्येन इतिवन्न विरुद्ध इत्यर्थः । उभयत्रापि यथा श्येन-भानमविरुद्धं तथात्रापि ब्रह्ममानमिति भावः । एवं रीत्या प्रथमेऽर्थे सूत्रसङ्गतिमुक्त्वा द्वितीये तमाहुः— द्वितीयेति । पूर्वपक्षमुत्थापयति—नन्विति । चतुर्थश्चेति । ब्राह्मणे इति शेषः । इदमुपलक्षणम् । मन्त्रे जनादिलोकत्रये अमृतादिपादत्रयमुक्तम्, ब्राह्मणे भूतपृथिवीशरीराणां पादत्रयत्वमुक्तमिति भेदः । तृतीयं दूषणमाहुः—अतः शब्दाच्चेति । सर्वस्मादिति । यत्र वाक्यभेदस्तत्रैव पूर्वपरामर्शः । अत्र अतः-शब्दस्य पूर्वपरामर्शित्वेन सर्वस्माद्भेद इत्यर्थः । अत उपदेशभेदादिति । एवं प्रकारत्रयेण प्रतिपाद्य, वस्तुभेदादित्यर्थः । सूत्रस्थहेतौ स्वरूपासिद्धत्वमाहुः—अस्मिंश्चेति । वाक्ये । यदतःपरो दिव इति वाक्ये ।

( स्वरूपासिद्धत्वपरिहरणम् ब्रह्मधर्मत्वाज्ज्योतिर्ब्रह्मैवेति प्रतिपादनं च )

**अस्मिंश्च वाक्ये चरणाभावात्स्वरूपासिद्धो हेतुरिति चेत्, नैष दोषः; उभयस्मिञ्ज्योतिःपदेऽमृतपदे च प्रयुज्यमान एकार्थत्वान्न विरोधः। पादत्रयमुपरितनलोकेषु, चतुर्थं सर्वत्रेति। अन्यथा वैजात्यं पादानामापद्येत। परिच्छेदश्च विरोधः। अतोऽमृतज्योतिःशब्दयोरेकार्थत्वेन विरोधाभावात् एकवाक्यत्वम्। अतोऽत्र चरणसद्भावात्तस्य च ब्रह्मधर्मत्वाज्ज्योतिर्ब्रह्मैव ॥ १।१।२६॥९ ॥**

---

द्वितीयार्थे समाधानमाहुः—**उभयस्मिन्निति**। मन्त्रे ब्राह्मणे चेत्यर्थः। **एकार्थत्वात्**, ब्रह्मरूप एकार्थप्रतिपादकत्वात्। नन्वस्तु तथापि अमृतहृदयादिरूपपादभेदात् विभागे साकाङ्क्षत्वं नास्तीत्यत आहुः—**पादेति**। मन्त्रे ब्राह्मणे च अमृतज्योतीरूपब्रह्मण इति शेषः। **चतुर्थः**। अमृतज्योतिरूपं ब्रह्म। तथा च साकाङ्क्षत्वादेकवाक्यत्वमस्तीति भावः। **अन्यथा**। स्पष्टब्रह्मधर्माभावेनैतादृशार्थास्वीकाराद्गायत्रीपरतया व्याख्याने। **वैजात्यमिति**। गायत्रीपादाः शब्दरूपाः ब्रह्मणः पादा अर्थरूपाः इति वैजात्यमित्यर्थः। **परिच्छेद इति**। गायत्र्याः शब्दात्मिकायाः परिच्छिन्नत्वं ज्योतीरूपब्रह्मणः सर्वतः पृष्ठेष्वित्यादिना परिच्छेदराहित्यमिति विरोध इत्यर्थः। नतु तथापि किं सिद्धमत आहुः—**अत इति**। एकवाक्यत्वेन ब्रह्मप्रकरणत्वात्। अत्र "अथ यदतः परो दिव" इति वाक्ये। एतेन पादवतीविद्यानां ब्रह्मणि समन्वय इति फलितम्। इति **नवमाधिकरणम्**।

---

१ अत्रेत्थं व्याख्यानान्तराणि—

(१) तत्र तावत् श्रीशङ्कराचार्याणां मते—पूर्वं प्राणवाक्ये ब्रह्मलिङ्गसद्भावात् ब्रह्मपरता यथा न, तथेह स्ववाक्ये ब्रह्मपरता तदभावादिति प्रत्युदाहरणसङ्गत्येदमाह। ज्योतिश्चरणाभिधानादिति। अत्र पूर्वपक्षे कौक्षेये ज्योतिषि आदित्यादिदृष्ट्योपास्तिः, सिद्धान्ते ब्रह्मदृष्ट्येति फलभेदः। छान्दोग्ये श्रूयते—'अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु....' इत्यादि। तत्र किं ज्योतिःशब्देन आदित्यादिकं तेजोऽभिधीयते, उत ब्रह्मेति संशये, आदित्यादिकमिति पूर्वः पक्षः। सिद्धान्तस्तु—'दिवो ज्योति....' इति ज्योतिःशब्देन ब्रह्मैव गृह्यते। कुतः? चरणाभिधानात्। ज्योतिर्वाक्यात्पूर्ववाक्ये 'पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि' इति चतुष्पात्त्वाभिधानात्। अतो ब्रह्मैव ज्योतिःशब्दितमित्यर्थः ॥

नतु 'गायत्री वा इदं सर्वम्' इति गायत्र्याख्यच्छन्दसः प्रकृतत्वात्तस्यैवोपास्यत्वम्, नान्यस्येत्याशङ्क्याह—छन्दोभिधानात् गायत्र्याख्यच्छन्दस एवाभिधानात्, पूर्ववाक्ये न ब्रह्मणः प्रकृतत्वमिति चेत्, न; कुतः? तथा च्छन्दोद्वारेण तद्गते ब्रह्मणि, चेतोर्पणस्य चित्तसमाधानस्य, निगदात् अभिधानात्। तत्र दृष्टान्तः—तथाहि दर्शनम्, अन्यत्रापि विकारद्वारेण 'एतं ह्येव बह्वृचा महत्युक्थे मीमांसन्ते' एतमात्मानं प्रधाने शस्त्रे तदनुगतमुपासते; इति ब्रह्मण उपासनं दृश्यते इति दर्शनं दृष्टमित्यतो ब्रह्मैव पूर्ववाक्ये निर्दिष्टम्, न छन्द इति सिद्धम्।

इतश्च गायत्रीवाक्ये ब्रह्मैव प्रतिपाद्यमित्याह—भूतपृथिवीशरीरहृदयैः 'चतुष्पदा गायत्री' इति व्यपदेशस्य ब्रह्मण्येवोपपत्तेः। न ह्यक्षरसन्निवेशरूपगायत्र्या भूतादिपादव्यपदेशः सम्भवति। अतो गायत्रीवाक्ये ब्रह्मैव प्रतिपाद्यमिति ज्योतिर्वाक्ये द्युसम्बन्धात्तदेव प्रत्यभिज्ञायत इति सिद्धम् ॥

ननु पूर्वं दिवीति सप्तम्या द्यौराधारत्वेन निर्दिश्यते, दिव इति पञ्चम्या द्यौरवधित्वेन। तथा च विभक्तिभेदेन द्युसम्बन्धात् यत्प्रत्यभिज्ञानमुक्तं तन्नेत्याशङ्कयाह—'दिवि' 'दिवः' इति विभक्तिभेदे-नोपदेशात् ज्योतिर्वाक्ये प्रत्यभिज्ञानं न सम्भवतीति चेत्, न; कुतः? उभयस्मिन्नपि विभक्तिभेदेन उपदेशद्वयेऽपि प्रधानप्रातिपदिकार्थेन प्रत्यभिज्ञाया अविरोधात्, प्रकृतत्रिपाद्ब्रह्मपरामर्शियच्छब्दानुब-न्धाच्च परं ब्रह्मैव ज्योतिःशब्दितमुपास्यमिति सिद्धम्।

(२) श्रीरामानुजीये—अतः परं जगत्कारणत्वव्याप्तेन येन केनापि निरतिशयोत्कृष्टगुणेन जुष्टं ज्योतिरिन्द्रादिशब्दैरर्थान्तरप्रसिद्धैरप्यभिधानं परं ब्रह्मैवेति प्रतिपाद्यते ज्योतिश्चरणाभिधानादि-त्यादिना। इदमाम्नायते छान्दोग्ये "अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेष्विदं वाव तद्यदिदमस्मिन्नन्तः पुरुषेज्योतिः" इति। तत्र संशयः, किमयं ज्योतिःशब्दनिर्दिष्टो निरतिशयदीप्तियुक्तोऽर्थः प्रसिद्धमादित्यादिज्योतिरेव कारणभूतब्रह्म, उत, समस्तचिदचिद्वस्तुजातीयः परमकारणभूतोपमितभाः सर्वज्ञः सत्यसङ्कल्पः पुरुषोत्तम इति। किं युक्तम्? प्रसिद्धमेव ज्योतिरिति। कुतः? प्रसिद्धवन्निर्देशेऽप्याकाशप्राणादिशब्दवत्तस्यवाक्योपात्त-परमात्मव्याप्तलिङ्गविशेषादर्शनात्परमपुरुषप्रत्यभिज्ञानासम्भवात्, कौक्षेयकज्योतिषैक्योपदेशाच्च, प्रसिद्धमेव ज्योतिः कारणत्वव्याप्तनिरतिशयदीप्तियोगाज्जगत्कारणं ब्रह्मेति प्राप्ते, प्रचक्ष्महे—द्युस-म्बन्धितया निर्दिष्टं निरतिशयदीप्तियुक्तं ज्योतिः परमपुरुष एव। कुतः, "पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि" इत्यस्यैव द्युसम्बन्धिनश्चरणत्वेन सर्वभूतानामभिधानात्। एतदुक्तं भवति। "यद्यप्यथ यदतः परो दिवो ज्योतिर्दीप्यते" इत्यस्मिन्वाक्ये परमपुरुषासाधारणं लिङ्गं नोपलभ्यते, तथापि, पूर्ववाक्ये द्युसम्बन्धितया परमपुरुषस्य निर्देशादिदमपि द्युसम्बन्धि ज्योतिः स एवेति प्रत्य-भिज्ञायत इति। कौक्षेयज्योतिषैक्योपदेशश्च फलाय तदात्मकत्वानुसन्धानविधिरिति न कश्चि-द्दोषः। कौक्षेयज्योतिषश्च तदात्मकत्वं भगवता स्वयमेवोक्तम्। "अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः" इति।

पूर्वस्मिन्वाक्ये "गायत्री वा इदं सर्वम्" इति गायत्र्याख्यं छन्दोऽभिधाय "तदेतदृचाभ्युक्तम्" इत्युदाहृतायाः "तावानस्य महिमा" इत्यस्या ऋचोऽपि छन्दोविषयत्वादत्र परमपुरुषाभिधान-मिति चेत्, तन्न; तथा चेतोर्पणनिगमात्। न गायत्रीशब्देन छन्दोमात्रमिहाभिधीयते। छन्दोमा-त्रस्य सर्वात्मकत्वानुपपत्तेः। अपितु, ब्रह्मण एव गायत्रीचेतोर्पणमिह निगम्यते। ब्रह्मणि गायत्री-सादृश्यानुसन्धानं फलायोपदिश्यत इत्यर्थः। सम्भवति च "पादोऽस्य सर्वा भूतानि त्रिपादस्या-मृतं दिवि" इति चतुष्पदो ब्रह्मणश्चतुष्पदाया गायत्र्याः सादृश्यम्। चतुष्पदा च गायत्री क्वचि-द्दृश्यते। तद्यथा—"इन्द्रः शचीपतिर्बलेन पीडितः। दुश्च्यवनो वृषा समित्सुसासहिः।" इति। तथा ह्यन्यत्रापि सादृश्याच्छन्दोऽभिधायिशब्दोऽर्थान्तरे प्रयुज्यमानो दृश्यते। यथा सम्वर्गविद्यायां "ते वा एते पञ्चान्ये पञ्चान्ये दश सम्पद्यन्ते" इत्यारभ्य "सैषा विराडन्नादी" इत्युच्यते॥

इतश्च गायत्रीशब्देन ब्रह्मैवाभिधीयते—भूतादि०। भूतपृथिवीशरीरहृदयानि निर्दिश्य "सैषा चतुष्पदा" इति व्यपदेशो ब्रह्मण्येव गायत्रीशब्दाभिधेय उपपद्यते॥

पूर्ववाक्ये "त्रिपादस्यामृतं दिवि" इति दिवोऽधिकरणत्वेन निर्देशादिह च "दिवः परः" इत्यव-धित्वेन निर्देशादुपदेशस्य भिन्नरूपत्वेन पूर्ववाक्योक्तं ब्रह्म परस्मिन्न प्रत्यभिज्ञायत इति चेत्, तन्न;

उभयस्मिन्नप्युपदेशेऽर्थस्यभावैक्येन प्रत्यभिज्ञाया अविरोधात्। यथा वृक्षाग्रे श्येनो वृक्षाग्रात्परतः श्येन इति। तस्मात्परमपुरुष एव निरतिशयतेजस्को "दिवः परो ज्योतिर्दीप्यते" इति प्रतिपाद्यते "तावानस्य महिमा अतो ज्यायांश्च पूरुषः। पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि" इति प्रतिपादितस्य चतुष्पदः परमपुरुषस्य। "वेदाहमेतं पुरुषं महान्तम्। आदित्यवर्णं तमसस्तु पारे" इत्यभिहिताप्राकृतरूपस्य तेजोऽप्यप्राकृतमिति तद्वत्तया स एव ज्योतिःशब्दाभिधेय इति निरवद्यम्।

(३) माध्वे—अथ "यदतः परो दिवो ज्योतिर्दीप्यत" इत्युक्तस्य ज्योतिषो "गायत्री वा इदं सर्वं मि"ति गायत्र्या समारम्भः कृतः, तस्मान्न विष्णुरिति चेत्, न; तथा चेतोर्पणार्थं हि विनिगद्यते। अग्निगायत्र्यादिशब्दार्थरूपोऽसाविति चेतोर्पणार्थं हि निगद्यते। तथाहि—दर्शनं गायति चेत्यादि "सर्वच्छन्दोऽभिधो ह्येष सर्ववेदाभिधो ह्यसौ। सर्वलोकाभिधो ह्येष तेषां तदुपचारत" इति वामने।

'एतावानस्य महिमा अतो ज्यायांश्च पूरुषः। पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि' इति। "सुवर्णकोपं रजसा परीवृतं देवानां वसुधानीविराजं अमृतस्य पूर्णान्तामुपकलां विचक्षते। पादं षडोर्णकिलाविवित्स" इति श्रुतेः। 'तस्मिन् काले महाराजो राम इत्यभिधीयते। तथापि पौरुषे सूक्ते विष्णुरेवाभिधीयते' इति च स्कान्दे॥

"त्रिपादस्यामृतं दिवी"ति पूर्वोपदेशः, "परो दिव" इति पञ्चम्यन्तः पश्चिमः। तस्मान्नैकं वस्त्वत्रोच्यते इति चेत्,न, त्रिसप्तलोकापेक्षयोभयस्मिन्नप्यविरोधात्।

(४) निम्बार्कः—"दिवा ज्योतिरिरिति" ज्योतिर्ब्रह्मैव,"पादोऽस्य सर्वा भूतानी"ति चरणाभिधानात्॥

(५) भैक्षवाः—छान्दोग्यतृतीयप्रपाठक इदमाम्नायते "अथ यदतःपरो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषु लोकेषु इदं वाव तत् यदिदमन्तःपुरुषे ज्योति"रिति अत्र किमादित्यादिज्योतिरुच्यते, किं वा भूतज्योतिर्भावापन्नः परमात्मेति सन्दिह्यते, ज्योतिःशब्दाद्ब्रह्मणश्च पूर्ववाक्यसन्निहितत्वात्, तत्रायं निर्णयः, ज्योतिरिह ब्रह्म, कुतः? चरणाभिधानात्, पूर्वस्मिन् वाक्ये चतुष्पाद्ब्रह्म निर्दिष्टम्, "एतावानस्य महिमा ततो ज्यायांश्च पूरुषः। पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवी"ति मन्त्रेण तत्र यतश्चतुष्पाद्ब्रह्मणस्त्रिपादमृतं द्युसम्बन्धि निर्दिष्टं तस्यैव चरणत्रयस्यात्र ज्योतीरूपेणाभिधानात्, द्युसम्बन्धप्रत्यभिज्ञावलेनोचितत्वादित्यर्थः। आदित्यादिज्योतिस्त्वसन्निहितम्। अतः पूर्ववाक्यस्थपुरुषादिशब्दलिङ्गादिबलात्, ज्योतिःशब्दोऽत्र ज्योतिः (शक्ति)शबलब्रह्मपरो न केवलब्रह्मपरश्च, केवलब्रह्मपरत्वे "तस्यैषा दृष्टिर्यत्रैतदस्मिन् शरीरे संस्पर्शेनोष्णिमानं विजानाति तस्यैषा श्रुतिर्यत्रैतत्कर्णावपि गृह्यनदमिव नदथुरिवाग्नेरिव ज्वलत उपशृणोति तदेतद् दृष्टं च श्रुतं चेत्युपासीते"ति ज्योतिर्लिङ्गानुपपत्तेः। ननु पूर्वस्मिन्नपि वाक्ये चतुष्पात्त्वेन ब्रह्म न प्रक्रान्तं गायत्रीमेव प्रक्रम्य तामेव भूतपृथिवीशरीरहृदयभेदैर्व्याख्याय सैषा चतुष्पदा गायत्री तदेतदेवाभ्यनूक्तमेतावानस्य महिमेत्यादिना गायत्र्याख्यछन्दस एवाभिधानादिति चेन्न; तथा चेतोऽर्पणनिगदात्। गायत्र्याख्यछन्दोविभूत्या तदनुगते ब्रह्मण्येव चेतःसमाधानस्य कथनात्। हि यस्मात्तथा दर्शनश्रुतिर्वर्तते, ततो ज्यायांश्च पूरुष इति केवलगायत्र्यां पुरुषत्वासम्भवादित्यर्थः। "गायत्री छन्दसामहमि"ति स्मृतिरप्येवं दृश्यत इति। किञ्च, एवं गायत्रीद्वारा ब्रह्मण्येव चित्तसमाधानं भूतादिपादकथनोपपत्त्यर्थमपि मन्तव्यमित्यर्थः। न हि ब्रह्मापरिग्रहे भूतपृथिवीशरीरहृदयानां चतुर्णां पादानां छन्दसि सम्भवः, परिच्छिन्नत्वात्। ननु पूर्ववाक्ये त्रिपादस्यामृतं दिवीति द्यौराधा-

रत्वेन निर्दिष्टा, इह तु यदतः परो दिवो ज्योतिरिति पञ्चम्या द्यौरवधित्वेनेत्युपदेशभेदान्न तत्रोक्तस्यात्र प्रत्यभिज्ञानमस्तीति सूत्रावयवेनाशङ्क्य समाधत्ते । नायं दोषः, उभयस्मिन्सप्तम्यन्ते चोपदेशेऽर्थस्याविरोधादर्थैक्यादित्यर्थः । यथा हि वृक्षाग्रे श्येनो वृक्षाग्रात्परतः श्येन इत्युभयथैक एव श्येनो वृक्षाग्र उदीयमान उपदिश्यते सामान्यतो बोधितोऽपि वृक्षाग्रसंलग्नश्येनान्तरव्यावृत्तये परत इति । यथैव दिव्येव सज्ज्योतिरवच्छिन्नं ब्रह्म दिव आरम्भकज्योतिर्व्यावृत्तये दिवः पर इत्युच्यते । एवं हि समिष्टिलिङ्गशरीरभावापन्नं ज्योतिर्विराडाख्यस्थूलशरीरस्य द्युशिरसि स्थितं लभ्यत इति । इदं च लिङ्गाद्देहतापन्नं ज्योतिरिति, अस्यैव चोपपत्तेरूष्मेत्यागामिसूत्रात्, श्रुत्यनुसारिणो बोध्यम् । यद्यपि लिङ्गशरीरं सप्तदशावयवकं सूक्ष्मपञ्चभूताश्रितमेव तथापि (ज्योतिःप्राधान्याद्वैशेष्यात्तद्वादेति न्यायेन) ज्योतिरित्युच्यते तस्मिन् ज्योतिष्यनुगतश्चान्तर्याम्यत्र ज्योतिःशब्दार्थो बोध्यः । तदेतत् श्रुत्योक्तं यदतः परो दिवो ज्योतिर्दीप्यते इदं वा व तद्यदिदमन्तःपुरुषे ज्योतिरिति । प्रदीपकलिकाकारं हृदिस्थमित्यर्थः । अंशांशिनोरभेदादिति भावः । स्थूलदेहमध्ये चान्यतेजो नास्ति जठरादौ चास्यैवाधिक्येन वृत्तिलाभमात्रम्, अस्यैव चोष्मासंस्पर्शेन जीवद्देहेपूपलभ्यत इति श्रुत्योक्तत्वात्, अतो न ब्रह्माण्डाद्बहिःस्थितमावरणरूपं ज्योतिरिह ग्राह्यं दिवीत्याधारत्वानुपपत्तेश्चेति निर्णयः ॥

(६) भास्कराचार्य्याः—"अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेष्विदं वा व तद्यदिदमस्मिन्नन्तःपुरुषे ज्योतिरि"ति । तत्रायमर्थः सांशयिकः, किं ज्योतिःशब्देनादित्यादिज्योतिरभिधीयते किं वा परमात्मेति । प्राणाकाशयोरसाधारणधर्मः श्रुतेर्निर्णयः कृतः, तथा सर्वपाप्मोदयश्रुत्या मण्डले प्रकरणादान्तरश्रुत्या चानन्दमयोऽत्र तु निर्णायकवाक्यदोषाश्रयणात् प्रकरणानुवृत्तेश्चासिद्धत्वात् तदुत्पादनार्थमारभ्यते । किं तावत् प्राप्तम् ? ज्योतिःशब्देन तमसो निवर्तकं प्रसिद्धेः परिगृह्यते दीप्यत इति च तस्यैवोपपद्यते । परमात्मनि तु न ज्योतिःशब्दप्रसिद्धिः । न च दीप्तिक्रियां कुर्वन्नास्ते विश्वतः पृष्ठेष्विति चाधारवत्त्वं तस्मिन्नोपपद्यते द्युमर्यादत्वं च सर्वगतत्वात् । ननु कार्यज्योतिषोऽपि द्युमर्यादत्वमसिद्धमर्वागपि दिवो दर्शनात् । अस्तु तर्हि प्रथमजमत्रिवृत्कृतं तेजः । न । तस्य प्रयोजनाभावात् । ननु चेदमेवोपासनं भवत्प्रयोजनं भवतु । न । त्रिवृत्करणस्य सर्वप्रयोजनार्थत्वात् । न चात्रिवृत्कृतस्य प्रसिद्धमस्तित्वं द्युमर्यादत्वं चासिद्धम् । एवं तर्हि कार्यज्योतिरेवास्तु तस्योपासनार्थं द्युमर्यादत्वं न तु निष्प्रदेशस्य ब्रह्मणः चक्षुष्यः श्रुतो भवतीत्यल्पफलश्रवणाच्चेत्येवं प्राप्तेऽभिधीयते । ज्योतिः परं ब्रह्म । कुतः ? पूर्वत्र चरणाभिधानात् । "त्रिपादस्यामृतं दिवी"ति । इदमुक्तं भवति । प्रकृतं ब्रह्मास्मिन् वाक्ये प्रत्यभिज्ञायते प्रसिद्धानुवादात् । कथम् ? यच्छब्देन व्यपदेशात् । "यदतः परो दिवो ज्योतिः प्रसिद्धमिदं वाव तदि"ति विशेषविधानात् । कौक्षेयेऽनले परं ज्योतिरध्यस्योपासनीयमिति तात्पर्यार्थः । ज्योतिः—शब्दो ब्रह्मण्यपि प्रयुक्तः "तद्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतमि"ति । दीप्यत इति चोपपद्यते नित्यप्रकाशरूपत्वात् । वर्तमानप्रत्ययश्चैवमुपपद्यते । अधिकरणनिर्देशश्चोपासनार्थो द्युमर्यादत्वं च संसारविषयात् काललोकात्मकादादित्यमण्डलात् परमवस्थितं कारणरूपं ब्रह्म त्रिभिर्जाग्रत्स्वप्नसुषुप्त्याख्यैः पादैरुपलक्षितं तैरसंस्पृष्टं कारणरूपं ब्रह्मेति विवक्षयोच्यते, न पुनरव्यापित्वविवक्षयेत्यदोषः । यत् पुनश्चक्षुष्यः श्रुतो भवतीत्यल्पफलत्वमुक्तम् । तदप्युपपन्नं न हीयते । फलाय ब्रह्मोपासननियमोऽस्ति यत्र यथोपासनं तत्र तथा फलम् । तथा चाग्निरहस्ये याजिनां श्रुतिः "तं यथायथोपासते तदेव भवती"ति ॥

"गायत्री वा इदं सर्वं भूतं यदिदं किञ्चे"ति गायत्र्याख्यस्य छन्दसोऽभिधानान्न पूर्वप्रकरणे ब्रह्म निर्दिष्टमस्त्विति चेत्, न तत्र छन्दोभिधानं, तथा छन्दोवचनेन गायत्रीशब्देन सङ्ख्यासामान्येन चतुर्भिः पादैः पादवद्ब्रह्माभिधीयते, तस्मिंश्चित्तसमाधानोपदेशविवक्षया। एवमन्यत्रापि सङ्ख्यासामान्याच्छन्दोऽभिधायी छन्दोर्थान्तरेषु प्रयुज्यमानो दृश्यते, तद्यथा "ते वा एते पञ्च ये पञ्चदश सत" इत्युपक्रम्याह "सैषा विराडन्नादी"ति सम्वर्गविद्यायाम्। एवं छन्दसि न ब्रह्मोपासनम्। अत्र यत् कैश्चित् कल्प्यते गायत्रीच्छन्दसि ब्रह्मोपासनमिति तन्निरस्तं भवति। न चात्र प्रसिद्धा गायत्री प्रत्यभिज्ञायते "सैषा चतुष्पदा षड्विधे"ति षडक्षरैः पादैश्चतुष्पदा गायत्री निर्दिश्यते। प्रसिद्धा तु त्रिपदाष्टाक्षरैः पादैर्वाजसनेयिनां तु "यामेवार्थमन्वाहैवैव से"त्युपनयकालेऽधिगता प्रत्यभिज्ञायते पादकल्पना। तत्रान्यथा उपास्याभेदेऽपि प्रकारभेदादेव सर्वत्र विद्याभेदः शाण्डिल्यविद्यादौ। तस्मादिह विद्याभेदः। एतावानस्येति पुरुषसूक्ते मन्त्रः। तच्च सूक्तं श्वेताश्वतराणां परविद्याधिकारे पठितं, ततश्च न मन्त्रेण छन्दोनिर्दिष्टमितीयं श्रुतिर्नोपपद्यते छन्दोमात्राभिधाने तदेतदन्तराभ्यनूक्तमिति। तस्मादयमस्य गायत्री ब्राह्मणस्य तात्पर्यार्थो विकारपादैर्विशिष्टं ब्रह्म हृदयकमले द्वारपालोपासनपर्यन्तमुपास्यममृतत्वफलायेति। अथ यदत्र इति च प्रतीकोपासनमन्यदेव फलान्तरायेति।

इतश्चैवं पूर्ववाक्ये प्रकृतं ब्रह्मेति भूतादिपादव्यपदेशोपपत्तेः। भूतपृथिवीशरीरहृदयानि निर्दिश्याह सैषा चतुष्पदा षड्विधा गायत्री। वाक्प्राणाभ्यां च षड्विधत्वं षडक्षरपरैः पादैरस्ति चतुष्पदा गायत्रीति। स्मरन्ति च, "इन्द्रः शचीपतिर्बालेन व्रीडितो दुश्च्यवनो वृषा समत्सुतासहेषन्द्रिरि"ति शौनकादयः॥

पूर्वत्र "त्रिपादस्यामृतं दिवी"ति द्यौरधिकरणत्वेनोपदिष्टा। अत्र पुनः पञ्चम्या अतोऽप्रत्यभिज्ञानमिति चेत्। नायं दोषः। उभयमप्यविरोधात्। सप्तम्यन्ते पञ्चम्यन्ते चैकत्वं न विरुध्यते। यथा वृक्षाग्रे श्येनो वृक्षाग्रात् परतः श्येन इति। तस्मात् परमेव ज्योतिःशब्दवाच्यं न कार्यज्योतिरिति सिद्धम्॥

(७) श्रीमद्वल्लभाचार्यमतेऽयमभिप्रायः—छान्दोग्ये पञ्चमप्रपाठके श्रूयते। "अथ यदतःपरो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषु उत्तमेषु लोकेष्विदं वाव तद्यदिदमन्तःपुरुषे ज्योतिरि"ति। विश्वतः पृष्ठेष्विति, सर्वेषामुपरितनेषु। अयं च विश्वशब्दो न सङ्कोचसह इति ज्ञापनाय तदर्थकं शब्दान्तरं सर्वतः पृष्ठेष्विति। अनुत्तमेष्विति। नास्त्येभ्योऽन्य उत्तम इत्यनुत्तमास्तेषु। शेषं स्फुटम्। अत्र सन्देहः। ज्योतिःशब्देन किमत्र प्राकृतं तेज उच्यते, उत ब्रह्मेति। तत्र तावल्लोके तमोविरोधिपदार्थस्यादित्यादेर्ज्योतिःशब्दवाच्यत्वेन प्रसिद्धेः, प्रस्तुतवाक्येऽपि 'दीप्यत' इति प्रकाशलिङ्गेन, तदग्रे च 'तस्यैषा दृष्टिर्यत्रैतदस्मिञ्छरीरे संस्पर्शेनोष्णिमानं विजानाति तस्यैषा श्रुतिः "यत्रैतत् कर्णावपि गृह्य निनदमिव नदथुरिवाग्नेर्ज्वलत उपशृणोती"ति जाठरस्याग्नेर्लिङ्गेन च तदुभयकारणभूततेजःसामान्यस्यात्र ग्रहीतुं शक्यत्वात्। जगत्कर्तृत्वादिरूपब्रह्मधर्मस्यात्रानुपलम्भेन, तदग्रे च 'तदेतद् दृष्टं च श्रुतं चेत्युपासीत चक्षुष्यः श्रुतश्च भवती'त्यल्पफलकथनेन च ब्रह्मणो ग्रहीतुमशक्यत्वाच्चात्र प्राकृतं तेजःसामान्यमेवोच्यत इति पूर्वः पक्षः। सिद्धान्तस्तु ब्रह्मैवात्रोच्यते। कुतः? चरणाभिधानात्। "तावानस्य महिमा ततो ज्यायांश्च पूरुषः। पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवी"ति पूर्ववाक्ये चरणाभिधानात्। ननु वाक्यान्तरस्थो धर्मः कथं वाक्यान्तरे

ग्रहीतुं शक्य इति चेत्? उच्यते, एकवाक्यत्वाद्ग्रहीतुं शक्य इति। तदेव कथमिति चेत्? इत्थम्; अत्र हि "गायत्री वा इदं सर्वं भूतं यदिदं किञ्चे"ति गायत्र्याख्यब्रह्मविद्यां प्रकृत्य; "वाग् वै गायत्री"त्यादिना भूतपृथिवीशरीरहृदयानि तदभिन्नत्वेन निरूप्य, चतुष्पादस्य ब्रह्मणस्तयोपासनार्थं "सैषा चतुष्पदे"ति प्रतिज्ञाय, श्रुत्यन्तरे "चतुर्विंशत्यक्षरा त्रिपदे"ति श्रावणात्, कथं चतुष्पदेत्याकाङ्क्षायामेकैकस्य पादस्य षड्विधत्वे सर्वाक्षरसामान्यात् चतुष्पदेत्याशयेन षड्विधेत्युक्त्वा, त्रिपदायां षडक्षराः पादा न कल्पयितुं शक्यन्ते, यतिभङ्गादिदोषादित्याकाङ्क्षायां वाचकभूताया गायत्र्या वाच्याभेदमनुसन्धाय, ब्रह्मपादैस्तद्विधाभिश्च तस्यास्तथात्वं सम्पाद्यमित्याशयेन तदेतदृचाभ्यनूक्तमित्याह। तत् षड्विधत्वेन चतुष्पादत्वं वक्ष्यमाणर्चा गायत्रीमभिमुखीकृत्य ब्रह्मपादांश्च लक्ष्यीकृत्योक्तमित्यर्थः। तदनु ऋचमुक्त्वा तदुक्तं ब्रह्म विवृणोति। यद्वैतदित्यारभ्य, य एवं वेदेत्यन्तेन। तथाच दहरविद्यायां भार्गव्यां च यदभिमेतं तदेव स्वरूपमत्रापीति बोधितम्। अतः परं पादा विचार्याः। तत्र सर्वभूतात्मक एकः पादः, स गीतायां 'क्षरः सर्वाणि भूतानि' इति वाक्याद्विराड्देहविशिष्टजीवसमष्टिरूपो भवति। तथाप्यत्र "त्रिपादस्यामृतं दिवि" इति कथनात् स न ग्रहीतुं शक्यः। किन्तु सर्वपदे सङ्कोचं विधाय, भूर्लोकस्था व्यष्टिजीवा एव पादत्वेन ग्राह्याः। अस्य मन्त्रस्य पुरुषसूक्तोक्तमन्त्रसाजात्यदर्शनेन तद्व्याख्यानभूतपुराणवाक्योक्तपादानामेवात्र ग्राह्यत्वात्। तत्र च "पादास्त्रयो बहिश्चासन्नप्रजानां य आश्रमाः। अन्तस्त्रिलोक्यास्त्वपरो गृहमेधोऽबृहद्व्रत" इति, "पादेषु सर्वा भूतानि पुंसः स्थितिपदो विदुः। अमृतं क्षेममभयं त्रिमूर्ध्नोऽधायि मूर्धसु"इति वाक्यद्वयात्, तद्विचारणे च भूरादिलोकस्थानां गृहस्थजीवानाम्, जनस्तपःसत्यलोकस्थानन्दयताश्रमान्तरवज्जीवानां पूर्वश्लोके सर्वभूतविशिष्टानां भूरादीनां लोकानां च द्वितीये पादत्वेन सिद्धिः। एवं सिद्धेषु पादेषु तेषां षड्विधत्वं विचारणीयम्। तच्चैवम्। अत्र हि पूर्वं भूतपृथिवीशरीरहृदयान्युक्त्वा, ततः पादान् ब्रह्म चोक्त्वाग्रे "तस्य वा एतस्य हृदयस्य पञ्च देवसुषय"इत्यादिना पञ्चपुरुषान् षष्ठं ज्योतिश्चोक्तम्। तेन भूतपृथिवीशरीराणां न पादत्वम्, नापि तन्मुख्यस्थानत्वम्, किन्तु मुख्यस्थानपरिचायकत्वमेव। हृदयस्य तु "हृद्यन्तर्ज्योतिःपुरुषः"इत्यादिश्रुत्या जीवमुख्यस्थानत्वम्। तथा सति भूतपृथिवीशरीरपरिचायितहृदयस्थानां जीवानां पादानां पञ्चभिः स्थानविधाभिः षष्ठेन स्वान्तर्यामिणा ब्रह्मणा ज्योतिषा च षड्विधत्वमिति सिद्ध्यति। तेनात्रैवं प्रकरणैक्ये सिद्धे मन्त्रब्राह्मणयोः परस्परसाकाङ्क्षत्वादर्थस्याप्यैकवाक्यत्वम्। एवं सिद्धे तस्मिन्नत्र चतुर्थो ब्रह्मपादो निरूप्यते इति सिद्धम्। अनयैव दिशा पादान्तराणामपि षड्विधत्वम्। तथात्र यथा प्रणवविद्यायां ब्रह्मणः पादसङ्ख्यापूरकत्वम्, तथात्र विधासङ्ख्यापूरकत्वमिति ब्रह्मधर्माणां पादानामत्राभिधानाज्ज्योतिषो ब्रह्मत्वं सिद्धमित्यर्थः। पूर्वपक्षोक्तदोषपरिहारस्तु "तमेव भान्तमि"ति. "यदादित्यगतं तेज" इति श्रुतिस्मृतिभ्याम्, 'दीप्यते' इत्युक्तस्य प्रकाशत्वस्य "अहं वैश्वानरो भूत्वे"ति स्मृत्योष्मिणादेश्च वस्तुतो ब्रह्मधर्मत्वात्, "चक्षुष्यः श्रुतो भवती"त्युपासनाफलवाक्यस्यापि "अपवर्गमात्यन्तिकं परमपुरुषार्थमपि स्वयमासादितं नो' एवान्द्रियन्ते, भगवदीयत्वेनैव परिसमाप्तसर्वार्था" इति श्रीभागवतोक्तरीत्या भगवदीयत्वेन दृश्यो विख्यातश्च भवतीत्यर्थेन महाफलत्वात्। "वसन्ते ज्योतिषा यजेत, वाचैव ज्योतिषा कर्म कुरुते" इत्यादिश्रुत्या ज्योतिःपदस्याप्यनेकार्थत्वेन तमोविरोधिपदार्थमात्रवाचकत्वाभावादेव सिद्ध इति नात्र किमप्यनुपपन्नम्॥

ननु यद् प्रकरणैक्यमङ्गीकृत्य पादानां ब्रह्मधर्मत्वं साध्यते, तदसङ्गतम्, उपक्रमे गायत्र्या

उक्तत्वेन तस्या एव प्रकरणित्वात्। उपक्रमस्यासञ्जातविरोधत्वेनावान्तरवाक्यापेक्षया प्रबलत्वात्। एवं सति गायत्र्याः सर्वत्वमुपक्रम्य तामेव भूतपृथिवीशरीरहृदयमेदैर्व्याख्याय, "सैषा चतुष्पदा षड्विधे"ति प्रतिज्ञायोदाहृतो मन्त्रः कथं तात्पर्यलिङ्गोपष्टम्भं विना चतुष्पाद् ब्रह्माभिदध्यात्। नच ब्रह्मपदविरोधः। ब्रह्मोपनिषदितिवच्छन्दब्रह्मेतिवच्च छन्दःपरत्वेनापि तस्य शक्यवचनत्वात्। अतश्छन्दोऽभिधानान्न ब्रह्मधर्माः पादाः। तथाच स्वरूपासिद्धो हेतुरिति चेत्, न; नैष दोषः। कुतः? चेतोऽर्पणनिगदात्। तथा गायत्रीरूपेण ब्रह्मणि चेतोऽर्पणस्य निगदात्। कथनात्। कथमिति चेद्? इत्थम्; अत्र ह्युपक्रम एव गायत्र्याः सर्वत्वं प्रतिज्ञातुम्, गायत्री च वर्णसमाम्नायरूपा तस्याश्च सर्वत्वमनुपचारेण न सम्भवतीति उपक्रम एव विरोधभानम्, अतो न स प्रबलः। अतो ज्ञायते न सर्वत्वादिरूपमाहात्म्योत्थदीप्त्यवबोधनाय तत्कीर्तनम्, किन्तु, मन्त्रस्य देवताप्रकाशकत्वात् तद्द्वारा तत्र चेतोऽर्पणार्थमेव। तथाच यथा सूचीद्वारा सूत्रप्रवेशः, तद्वद्गायत्रीद्वारा ब्रह्मणि चित्तं प्रविशेदिति। तदर्थं तत्कीर्तनम्। ननु कुत एवं ब्रह्म प्रतिपाद्यत इति चेत्, तत्राह, तथाहि दर्शनमिति। तेनैव प्रकारेण ब्रह्मदर्शनं ब्रह्मज्ञानं भवति। तथाच ब्रह्मज्ञानाय तथा प्रतिपाद्यत इत्यर्थः। हि युक्तोऽयमर्थः। लोके यत् स्वतो न प्रविशति, तदुपायेन प्रविशतीति स्थूलाया बुद्धेर्ब्रह्मणि प्रवेशाय तथोपाय इत्यर्थः। अतो गायत्र्याः प्रकरणित्वाभावेन ब्रह्मण एव तथात्वात्तस्यैव पादा इति न स्वरूपासिद्धिरित्यर्थः॥

भूतादीनां पादव्यपदेशस्योपपत्तिर्यस्मात्, तत्तथा, ब्रह्मणस्तादृशत्वात्, एवं, तव मतोपपत्तिरिति। अयमर्थः। गायत्र्याः प्रकरणित्वमङ्गीकुर्वता भवता सन्निहितत्वाद् भूतपृथिवीशरीरहृदयान्येव पादत्वेन वाच्यानि। तानि च स्वारस्येनासम्भवन्ति गौण्या व्यपदेशेन वक्तव्यानि। तथा व्यपदेशश्चैकत्र वास्तवत्वेऽन्यत्र सम्भवति, नान्यथा। अतस्त्वया स्वमतोपपादनाय ब्रह्मणस्तथात्वमवश्यमादरणीयम्। अत आवश्यकत्वाल्लक्षणादिदोषाभावाच्च ब्रह्मवाक्यत्वमेव युक्तमिति पादानां ब्रह्मधर्मत्वमेवेत्यर्थः॥

ननु तथापि पादानां ब्रह्मधर्मत्वं नोपपद्यते। कुतः? उपदेशभेदात्। अयमर्थः। अस्मिन् वाक्ये तु पादा एव नोक्ताः, किन्तु मन्त्रैकवाक्यतया व्युत्पाद्यन्ते। एकवाक्यता त्वर्थैक्ये भवति। प्रकृतवाक्ये तु दिव इति पञ्चमी अनाधारत्वबोधिका। मन्त्रे तु दिवीति सप्तमी आधारत्वबोधिका। एवमुपदेशभेदात्। किञ्च, मन्त्रे अमृतपदम्, ब्राह्मणवाक्ये तु ज्योतिःपदम्, अतोऽप्युपदेशभेदः। तथा प्रकृतवाक्यस्य हृदयमुपक्रम्य पठितत्वात्तत्र हृदयं चतुर्थपादः सिद्ध्यति। मन्त्रे तु सर्वभूतानि वा, भूर्लोको वा। अतोऽप्युपदेशभेदः। अत एव त्रिधोपदेशभेदादेकवाक्यत्वस्य वक्तुमशक्यत्वे पादस्य ब्रह्मधर्मताया वक्तुमयुक्तत्वाद्धारणाभिधानं हेतुर्न इति चेत्? नैष दोषः। कुतः? उभयस्मिन् विभक्तिभेदादिना भिन्नविधेऽप्युपदेशे ब्रह्मवाक्यत्वस्याविरोधात्। अयमर्थः। विभक्तेर्भेदेऽपि पञ्चम्या सर्वत्र सत्त्वं बोध्यते। अतो दिव इत्यस्य ल्यब्लोपपञ्चमीत्वेन द्युलोकमारभ्य "सर्वतः पृष्ठेष्वि"त्यर्थाद् मान्त्रः सप्तमीनिर्देशो न विरुध्यते। एवममृतपदज्योतिःपदयोर्भेदेऽप्युभयोर्ब्रह्मवाचकत्वात्, सोऽपि न विरुध्यते। तथा पादभेदेऽपि सर्वभूतोपलक्षकस्य हृदयस्य सर्वभूतान्तःस्थस्य ज्योतीरूपस्य च सर्वत्र विद्यमानत्वादयमपि न विरुध्यते। तथाचैवमर्थैक्येन विभागे साक्षाद्धेतुत्वेन च मन्त्रब्राह्मणयोरेकवाक्यत्वाद्धारणस्य सिद्धे ब्रह्मधर्मत्वे ज्योतिषोऽन्तःपुरुष उपसंहृतत्वेन, "स यश्चायं पुरुष" इत्यानन्दमयाधिकरणविषयवाक्ये श्रावितस्य पुरुषान्तःस्थस्यात्र निर्णयात्, उपोद्घात एव सङ्गतिरिति बोध्यम्॥

## १० अनुगमाधिकरणम् ॥

( प्राणः किमासन्यो ब्रह्म चेति सन्देहः )

**प्राणस्तथाऽनुगमात् ॥ १।१।२७ ॥**

अस्ति कौपीतकिब्राह्मणोपनिषदीन्द्रप्रतर्दनसम्वादः, "प्रतर्दनो ह वै दैवोदासिः" (कौ. ब्रा. ३।१) इत्यादिना । "एष लोकपाल एष लोकाधिपतिरेष लोकेशः स म आत्मेति विद्यात् स म आत्मेति विद्यात्" (कौ. ब्रा. ३।८) इत्येतदन्तम् । तत्र वरदाने "मामेव विजानीह्येतदेवाहं मनुष्याय हिततमं मन्ये" इत्युपक्रम्य त्वाष्ट्र-

---

इदानीं छान्दोग्यस्थप्रस्तोतर्यादेवतेत्यादिविषयवाक्यस्थप्राणशब्दस्य कौपीतकिब्राह्मणस्थप्राणशब्दस्य च भेदं साधयितुं चतुर्भिः सूत्रैरनुगमाधिकरणमारचयन्ति—प्राणस्तथानुगमात् । अस्तीति । प्रथमाध्याये इति शेषः । अथ विषयवाक्यम्—

प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम युद्धेन पौरुषेण च तं हेन्द्र उवाच प्रत-
र्दन वरं ते ददानीति स होवाच प्रतर्दनस्त्वमेव वृणीष्व यं त्वं मनुष्याय हिततमं मन्यस इति
तं हेन्द्र उवाच न वै वरं परस्मै वृणीते त्वमेव वृणीष्वेत्यवरो वै तर्हि किल म इति होवाच प्रत-
र्दनोऽयो खल्विन्द्रः सत्यादेव नेयाय सत्यं हीन्द्रः स होवाच मामेव विजानीह्येतदेवाहं मनु-
ष्याय हिततमं मन्ये यन्मां विजानीयां त्रिशीर्षाणं त्वाष्ट्रमहनमवाङ्मुखान्यतीन्सालावृकेभ्यः
प्रायच्छं बह्वीः सन्धा अतिक्रम्य दिवि प्रह्लादीनतृणमहमन्तरिक्षे पौलोमान्पृथिव्यां कालकाश्यां-
स्तस्य मे तत्र न लोम च नामीयते स यो मां विजानीयान्नास्य केन च कर्मणा लोको मीयते न
मातृवधेन न पितृवधेन न स्तेयेन न भ्रूणहत्यया नास्य पापं च न चक्रुषो मुखान्नीलं वेत्तीति ॥१॥

स होवाच प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्स्वायुः प्राणः प्राणो वा आयुः प्राण उ
वाचामृतं यावद्ध्यस्मिञ्छरीरे प्राणो वसति तावदायुः प्राणेन ह्येवामुष्मिंल्लोकेऽमृतत्वमाप्नोति प्रज्ञया
सत्यसङ्कल्पं स यो म आयुरमृतमित्युपास्ते सर्वमायुरस्मिंल्लोक एत्याप्नोत्यमृतत्वमक्षितिं स्वर्गे
लोके तद्धैक आहुरेकभूयं वै प्राणा गच्छन्तीति न हि कश्चन शक्नुयात्सकृद्वाचा नाम प्रज्ञापयितुं
चक्षुषा रूपं श्रोत्रेण शब्दं मनसा ध्यानमित्येकभूयं वै प्राणा भूत्वा एकैकं सर्वाण्येवैतानि प्रज्ञा-
पयन्ति वाचं वदतीं सर्वे प्राणा अनुवदन्ति चक्षुः पश्यत्सर्वे प्राणा अनुपश्यन्ति श्रोत्रं शृण्वत्सर्वे
प्राणा अनुशृण्वन्ति मनो ध्यायत्सर्वे प्राणा अनुध्यायन्ति प्राणं प्राणन्तं सर्वे प्राणा अनुप्राण-
न्तीत्येवमुहैवैतदिति हेन्द्र उवाचास्तीत्येव प्राणानां निःश्रेयसादानमिति ॥ २ ॥

जीवति वागपेतो मूकान्हि पश्यामो जीवति चक्षुरपेतोऽन्धान्हि पश्यामो जीवति श्रोत्रापेतो
बधिरान्हि पश्यामो जीवति बाहुच्छिन्नो जीवत्यूरुच्छिन्न इत्येवं हि पश्याम इत्यथ खलु प्राण एव
प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयति तस्मादेतमेवोक्थमुपासीत यो वै प्राणः सा प्रज्ञा या वा प्रज्ञा
स प्राणः सह ह्येतावस्मिञ्छरीरे वसतः सहोत्क्रामतस्तस्यैषैव दृष्टिरेतद्विज्ञानं यत्रैतत्पुरुषः सुप्तः
स्वप्नं न कंचन पश्यत्यथास्मिन्प्राण एवैकधा भवति तदेनं वाक्सर्वैर्नामभिः सहाप्येति चक्षुः सर्वैः
रूपैः सहाप्येति श्रोत्रं सर्वैः शब्दैः सहाप्येति मनः सर्वैर्ध्यातैः सहाप्येति स यदा प्रतिबुध्यते
यथाग्नेर्ज्वलतो विस्फुलिङ्गा विप्रतिष्ठेरन्नेवमेवैतस्मादात्मनः प्राणा यथायतनं विप्रतिष्ठन्ते प्राणेभ्यो

देधा देवेभ्यो लोकास्तस्यैव सिद्धिरेतद्विज्ञानं यत्रैतत्पुरुषः आर्तो मरिष्यन्नाबल्यं न्येत्य मोहं नैति तदाहुरुद क्रमीचित्तं न शृणोति न पश्यति वाचा वदत्यथास्मिन्प्राण एवैकधा भवति तदैनं वाव सर्वैर्नामभिः सहाप्येति चक्षुः सर्वै रूपैः सहाप्येति श्रोत्रं सर्वैः शब्दैः सहाप्येति मनः सर्वैर्ध्यातैः सहाप्येति स यदा प्रतिबुध्यते यथाग्नेर्ज्वलतो विस्फुलिङ्गा विप्रतिष्ठेर-न्नेवमेवैतस्मादात्मानः यथायतनं विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोकाः ॥ ३ ॥

स यदास्माच्छरीरादुत्क्रामति वागस्मात्सर्वाणि नामान्यभिविसृजते वाचा सर्वाणि नामा-न्याप्नोति प्राणोऽस्मात्सर्वान्गन्धानभिविसृजते प्राणेन सर्वान्गन्धानाप्नोति चक्षुरस्मात्सर्वाणि रूपाण्यभिविसृजते चक्षुषा सर्वाणि रूपाण्याप्नोति श्रोत्रमस्मात्सर्वाञ्छब्दानभिविसृजते श्रोत्रेण सर्वाञ्छब्दानाप्नोति मनोऽस्मात्सर्वाणि ध्यातान्यभिविसृजते मनसा सर्वाणि ध्यातान्याप्नोति सैषा प्राणे सर्वाप्तिर्यो वै प्राणः सा प्रज्ञा या वा प्रज्ञा स प्राणः स ह ह्येतावस्मिञ्छरीरे वसतः सहोत्क्रामतोऽथ खलु यथा प्रज्ञायां सर्वाणि भूतान्येकीभवन्ति तद्व्याख्यास्यामः ॥ ४ ॥

वागेवास्या एकमङ्गमुदूढं तस्यै नाम परस्तात्प्रतिविहिता भूतमात्रा प्राणमेवास्या एकमङ्गमुदूढं तस्य गन्धः परस्तात्प्रतिविहिता भूतमात्रा चक्षुरेवास्या एकमङ्गमुदूढं तस्य रूपं परस्तात्प्रतिविहिता भूतमात्रा श्रोत्रमेवास्या एकमङ्गमुदूढं तस्य शब्दः परस्तात्प्रतिविहिता भूतमात्रा जिह्वैवास्या एकमङ्गमुदूढं तस्यान्नरसः परस्तात्प्रतिविहिता भूतमात्रा हस्तावेवास्या एकमङ्गमुदूढं तयोः कर्म परस्तात्प्रतिविहिता भूतमात्रा शरीरमेवास्या एकमङ्गमुदूढं तस्य सुखदुःखे परस्तात्प्रतिविहिता भूतमात्रा उपस्थ एवास्या एकमङ्गमुदूढं तस्यानन्दो रतिः प्रजातिः परस्तात्प्रतिविहिता भूत-मात्रा पादावेवास्या एकमङ्गमुदूढं तयोरित्या परस्तात्प्रतिविहिता भूतमात्रा प्रज्ञैवास्या एकमङ्गमुदूढं तस्यै धियो विज्ञातव्यं कामाः परस्तात्प्रतिविहिता भूतमात्रा ॥ ५ ॥

प्रज्ञया वाचं समारुह्य वाचा सर्वाणि नामान्याप्नोति प्रज्ञया प्राणं समारुह्य प्राणेन सर्वान्ग-न्धानाप्नोति प्रज्ञया चक्षुः समारुह्य चक्षुषा सर्वाणि रूपाण्याप्नोति प्रज्ञया श्रोत्रं समारुह्य श्रोत्रेण सर्वाञ्छब्दानाप्नोति प्रज्ञया जिह्वां समारुह्य जिह्वया सर्वानन्नरसानाप्नोति प्रज्ञया हस्तौ समारुह्य हस्ताभ्यां सर्वाणि कर्माण्याप्नोति प्रज्ञया शरीरं समारुह्य शरीरेण सुखदुःखे आप्नोति प्रज्ञयोपस्थं समारुह्योपस्थेनानन्दं रतिं प्रजातिमाप्नोति प्रज्ञया पादौ समारुह्य पादाभ्यां सर्वा इत्या आप्नोति प्रज्ञयैव धियं समारुह्य प्रज्ञयैव धियो विज्ञातव्यं कामानाप्नोति ॥ ६ ॥

नहि प्रज्ञापेता वाङ्नाम किञ्चन प्रज्ञपयेदन्यत्र मे मनोऽभूदित्याह नाहमेतन्नाम प्राज्ञासिष-मिति न हि प्रज्ञापेतः प्राणो गन्धं कञ्चन प्रज्ञपयेदन्यत्र मे मनोऽभूदित्याह नाहमेतं गन्धं प्राज्ञासिषमिति नहि प्रज्ञापेतं चक्षू रूपं किञ्चन प्रज्ञपयेदन्यत्र मे मनोऽभूदित्याह नाहमेतद्रूपं प्राज्ञासिषमिति नहि प्रज्ञापेतं श्रोत्रं शब्दं कञ्चन प्रज्ञपयेदन्यत्र मे मनोऽभूदित्याह नाहमेतं शब्दं प्राज्ञासिषमिति नहि प्रज्ञापेता जिह्वान्नरसं कञ्चन प्रज्ञपयेदन्यत्र मे मनोऽभूदित्याह नाहमेतमन्नरसं प्राज्ञासिषमिति नहि प्रज्ञापेतौ हस्तौ कर्म किञ्चन प्रज्ञपयेतामन्यत्र मे मनोऽभूदित्याह नाहमेतत्कर्म प्राज्ञासिषमिति नहि प्रज्ञापेतं शरीरं सुखदुःखं किञ्चन प्रज्ञपयेद-न्यत्र मे मनोऽभूदित्याह नाहमेतत्सुखदुःखं प्राज्ञासिषमिति नहि प्रज्ञापेत उपस्थ आनन्दं रतिं प्रजातिं कञ्चन प्रज्ञपयेदन्यत्र मे मनोऽभूदित्याह नाहमेतमानन्दं रतिं प्रजातिं प्राज्ञासिषमिति नहि प्रज्ञापेतौ पादावित्यां काञ्चन प्रज्ञपयेतामन्यत्र मे मनोऽभूदित्याह नाहमेतामित्यां प्राज्ञा-सिषमिति नहि प्रज्ञापेता धीः काचन सिद्ध्येन्न प्रज्ञातव्यं प्रज्ञायेत ॥ ७ ॥

वधादिनाऽऽत्मानं प्रशस्य स्वोपासनायाः पापाभावं फलत्वेन प्रतिपाद्य कस्त्वमिति विवक्षायां–"प्राणो वा अहमस्मि प्रज्ञात्मानं मामायुरमृतमित्युपास्व" ( कौ. ब्रा. ३।२ ) इत्युक्त्वा प्राणत्वमुपपाद्यामृतत्वं च प्राणस्योपपाद्य "प्राणेन ह्येवास्मिँ-ल्लोकेऽमृतत्वमाप्नोति" ( कौ. ब्रा. ३।२ ) इत्यमृतत्वं योगेन प्रतिपादयति। तत्र सन्देहः । प्राणः किमासन्यो ब्रह्म वेति ।

( आसन्य इति पूर्वपक्षः )

अत एव प्राण इत्यत्र प्राणशब्दमात्रे सन्देहः । अत्रार्थेऽपि सन्देहः । बाधकं च वर्तत इति पृथगधिकरणारम्भः । तत्र साधकासाधारणधर्मस्याभावाद् बाधकानां विद्यमानत्वान्न ब्रह्मत्वमिति पूर्वपक्षः ।

( सर्वत्रानुगमात्प्राणो ब्रह्मैव )

सिद्धान्तस्तु, चतुर्भिः सूत्रैः प्रतिपाद्यते । तत्र प्रथमं साधकधर्ममाह एकेन । त्रिभिर्बाधकनिराकरणम् । प्राणः परमात्मा भवितुमर्हति । कुतः? तथानुगमात् । तथाहि । पौर्वापर्येण पर्यालोच्यमाने । वाक्ये पदार्थानां समन्वयो ब्रह्मप्रतिपादन-पर उपलभ्यते । उपक्रमे तावद्वरं वृणीष्वेतीन्द्रः प्रतर्दनोक्तः परमपुरुषार्थं वर-

---

न वाचं विजिज्ञासीत वक्तारं विद्यान्न गन्धं विजिज्ञासीत घ्रातारं विद्यान्न रूपं विजिज्ञासीत रूपविदं विद्यान्न शब्दं विजिज्ञासीत श्रोतारं विद्यान्नान्नरसं विजिज्ञासीतान्नरसविज्ञातारं विद्यान्न कर्म विजिज्ञासीत कर्तारं विद्यान्न सुखदुःखे विजिज्ञासीत सुखदुःखयोर्विज्ञातारं विद्यान्नानन्दं रतिं प्रजातिं विजिज्ञासीतानन्दस्य रतेः प्रजातेर्विज्ञातारं विद्यान्नेत्यां विजिज्ञासीतैतारं विद्यान्न मनो विजिज्ञासीत मन्तारं विद्यात्ता वा एता दशैव भूतमात्रा अधिप्रज्ञं दश प्रज्ञामात्रा अधिभूतं यद्धि भूतमात्रा न स्युर्न प्रज्ञामात्राः स्युर्यद्वा प्रज्ञामात्रा न स्युर्न भूतमात्राः स्युः ॥ ८ ॥

न ह्यन्यतरतो रूपं किञ्चन सिद्ध्येन्नो एतन्नाना तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिता एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणे अर्पिता एष प्राण एव प्रज्ञा-त्मानन्दोऽजरोऽमृतो न साधुना कर्मणा भूयान्नो एवासाधुना कर्मणा कनीयानेष ह्येवैनं साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषत एष उ एवैनमसाधु कर्म कारयति तं यमधो निनीषत एष लोकपाल एष लोकाधिपतिरेष सर्वेश्वरः स म आत्मेति विद्यात्स म आत्मेति विद्यात् ॥ ९ ॥

इति तृतीयोऽध्यायः ॥ ३ ॥

अथ भाष्यम्—अत्र "अथ खलु प्राण एवे"ति, "मामेव विजानीहि" इति, "वक्तारं विद्यादि"ति, "आनन्दोऽजरोऽमृतः" इति वाक्यचतुष्टयेन भासमानं प्राणो वा देवात्मा वा जीवो वा ब्रह्म वेति चतुष्कोटिकसंशयं निराकर्तुमाहुः—तत्र सन्देह इति । "प्राणो न ह्येवास्मिन् लोके" इत्यनेनोभयोरेव लिङ्गप्राबल्यात् द्विकोटिक इत्यर्थः । नन्वत्रापि द्विकोटिक एव सन्देहश्चेत् प्राणाधिकरणाद्वैलक्षण्यं न स्यादित्यत आहुः—अत एवेति ।

पूर्वपक्षमाहुः—तत्रेति । बाधकानामिति । जीवस्य मुख्यप्राणस्य च लिङ्गरूपबाधकानामित्यर्थः । सिद्धान्तसूत्रेषु प्रथमसूत्रार्थमाहुः—प्राण इति । तथा, ब्रह्मैव । कुतः? अनुगमात् । प्राणपदस्य ब्रह्मपरत्वे विषयवाक्यगतपदार्थानां ब्रह्मणि समन्वयात् । तदेवोपपादयन्ति—तथा हीत्यादिना । कथमुपलभ्यन्त इत्यत आहुः—उपक्रमेति । "वरं वृणीष्वे"त्युपक्रमवाक्ये । प्रतर्दनोक्तः । प्रतर्दनेनोक्त !

मुपचिक्षेप। "त्वमेव मे वृणीष्व यं त्वं मनुष्याय हिततमं मन्यसे" (कौ.ब्रा. ३।१) इति। तस्मै हिततमत्वेनोपदिश्यमानः प्राणः कथं परमात्मा न स्यात्। न हि परमात्मनोऽन्यद्धिततममस्ति। परमानन्दस्वरूपत्वात्। पापाभावश्च ब्रह्मविज्ञान एव। "क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे" (मुं. २।२।८) इति श्रुतेः। प्रज्ञात्मत्वं च तस्यैव सम्भवति। उपसंहारेऽपि "आनन्दोऽजरोऽमृतः" (कौ. ब्रा. ३।९) इति। "एष लोकाधिपतिः" (कौ. ब्रा. ३।९) इत्यादि च। तस्मात्सर्वत्रानुगमात्प्राणो ब्रह्म ॥ १।१।२७ ॥

(स एष प्राणो वक्तुरात्मत्वेनोपदिश्यमानो न ब्रह्मेत्याक्षेपः)

**न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन् ॥ १।१।२८ ॥**

बाधकमाह। यदुच्यते प्राणो ब्रह्मेति, तन्न; कुतः? वक्तुरात्मोपदेशात्। वक्ता हीन्द्र आत्मानमुपदिशति। मामेव विजानीहीत्युपक्रम्य—"प्राणो वा अहमस्मि प्रज्ञात्मानं मामायुरमृतमित्युपास्व" (कौ. ब्रा. ३।२) इति। स एष प्राणो वक्तुरात्मत्वेनोपदिश्यमानः कथं ब्रह्म स्यात्। तथा च वाचो धेनुत्वोपासनवत् देवतायाः प्राणत्वेनोपासना बोध्यते। अन्ये च ब्रह्मधर्माः प्राणस्तावका इति। कथमस्य ब्रह्मोपाख्यानत्वमिति चेत्,

(सम्बन्धबाहुल्यपरामर्शे प्राणः परमात्मैव)

न; अध्यात्मसम्बन्धभूमा ह्यस्मिन्। अस्मिन्प्रकरणेऽध्यात्मसम्बन्धः। आत्मानमधिकृत्य यः सम्बन्धः। आत्मशब्दो ब्रह्मवाची। वस्तुतो जीवस्य ब्रह्मत्वाय

---

उपचिक्षेप। दातुं प्रतिज्ञातवान्। मे मतः। ननु पापरूपकर्मणामनेकजन्मसञ्चितानां सत्त्वात्कथमानन्दस्य परमत्वमत आहुः—**पापाभाव इति**। **श्रुतेरिति**। उपनिषद्वाक्यादित्यर्थः। **सम्भवतीति**। चिद्रूपत्वाद्ब्रह्मण एवेति शेषः। एवकारेण प्राणव्यवच्छेदः। **उपसंहारे**। उपसंहारवाक्ये। तथा चोपक्रमोपसंहारवाक्ययोरेकार्थप्रतिपादनपरत्वार्थं प्राणपदस्य ब्रह्मपरत्वमावश्यकमिति भावः। **सर्वत्र**। आदौ मध्ये तथा चान्ते। **अनुगमादिति**। ब्रह्मधर्मत्वेनैव समन्वयोऽस्तीति प्राणो ब्रह्मेत्यर्थः।

साधकसूत्रं व्याख्याय बाधकनिराकरणसूत्राणि क्रमेण व्याख्यातुमाहुः—**न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन्**। **बाधकमाहेति**। सूत्रांशेनेत्यर्थः। व्यास इति शेषः। **बाधक इति चेदित्यन्तेन** वर्णयन्ति—**यदुच्यत** इत्यादिना। **उपदिशतीति**। अहङ्कारवादेनेति शेषः। **कथं ब्रह्म स्यादिति**। तथाच प्राणपदेनेन्द्रदेवता एव बोध्यत इति भावः। **वाचो धेनुत्वेति**। "वाचं धेनुमुपासीत" इत्यत्र वाचि धेनुपदप्रयोगस्तथा बलत्वसाधारणधर्मेण प्राणपदस्य इन्द्रे गौणिलक्षणया प्रयोगसम्भव इत्यर्थः। ब्रह्मधर्माः अमृतत्वादयः।

अस्येन्द्रप्रतर्दनसम्वादरूपस्य सिद्धान्तांशमाहुः—**अध्यात्मसम्बन्धभूमा ह्यस्मिन्**। अस्मिन्प्रकरणे, अध्यात्मसम्बन्धभूमा, अध्यात्मसम्बन्धबाहुल्यम्। प्रतीयत इति शेषः। सूत्रार्थमाहुः—**अस्मिन्निति**। आत्मपदं जीववाचकमप्यस्तीत्यत आहुः—**ब्रह्मवाचीति**। तर्हि ब्रह्मपदमेव कुतो नोक्तमत आहुः—**वस्तुत**

तथावचः । तस्य सम्बन्धस्तद्धर्मास्तेषां बाहुल्यं प्रतीयत एष लोकपाल इत्यादि। यावद्यथाकथञ्चिदपि ब्रह्मप्रकरणत्वं सिद्ध्यति तावदन्यप्रकरणत्वमयुक्तमिति हि-शब्दार्थः । प्राणस्य प्रज्ञात्मत्वं स्वातन्त्र्येणायुर्दातृत्वम्। "न वाचं विजिज्ञासीत, वक्तारं विद्यात्" (कौ. ब्रा. ३।८) इति चोपक्रम्य-"तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिता एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणेऽर्पिताः। स एष प्रज्ञात्मानन्दोऽजरोऽमृतो न साधुना कर्मणा" (कौ. ब्रा. ३।९) इत्यादिविषयेन्द्रियव्यवहारेऽरनाभिभूतं प्रत्यमात्मानमेवोपसंहरति । "स म आत्मे"ति विद्यात् (कौ. ब्रा. ३।९) इति चोपसंहारः। तस्मादध्यात्मसम्बन्धबाहुल्याद्ब्रह्मोपदेश एवायम्॥ १।१।२८॥

( शास्त्रदृष्ट्योपदेशो न तु लोकदृष्ट्या )

तर्हि बाधकस्य का गतिरित्यत्राह—

**शास्त्रदृष्ट्या तूपदेशो वामदेववत्॥ १।१।२९॥**

पूर्वसूत्रेणापरिहृतमत्र परिहरति तुशब्दः। अयं दोषो व्यवहारदृष्ट्योपदेशे। अहं ब्रह्मेत्यार्षेण दर्शनेन तूपदेशः ।

---

इति । वच इति । सूत्रे इति शेषः । सूत्रस्थहिशब्दार्थमाहुः—**यावदिति** । अत्र हिशब्दकथनादेवमवगम्यत इत्यर्थः। अयुक्तत्वमेवोपपादयन्ति—**प्राणस्येति**। प्राणपदवाच्यस्य ब्रह्मणः। **प्रज्ञानात्मत्वमिति**।श्रुतिस्थप्रज्ञात्मपदस्यार्थकथनम्। **स्वातन्त्र्येणेति**। तथा च ब्रह्मणोऽन्यस्य प्राणस्येदं न सम्भवतीति भावः। **उपक्रम्येति**। "न गन्धं विजिज्ञासीत, घ्रातारं विद्यादि"त्यपि बोध्यम्।

उपक्रमोत्तरवाक्यं पठति—**तद्यथेति**। **रथस्य**। रथचक्रस्य। **अरेषु** । नाभिप्रतिष्ठितेषु तीक्ष्णाग्रेषु काष्ठेषु। **नेमिः**। अरेभ्यो बहिर्देशवर्ति वर्तुलं काष्ठम्। **अर्पितः**। संलग्नतया स्थापितः। **नाभावि**ति। रथचक्रस्येति शेषः। नाभो लोहकीलरूपो यो अक्षस्तदाधारछिद्रवति वर्तुलेऽन्तःकाष्ठे। **अरा अर्पिताः** प्रतिष्ठिताः। **भूतमात्राः** गन्धादिविषयाः। **प्रज्ञामात्रेषु** घ्राणेन्द्रियादिषु। **प्राणे** मुखनासिकासञ्चारिणि अन्तर्यामिब्रह्मणि। तथा च रथचक्रस्य अक्षाधारच्छिद्राधिकरणं वर्तुलं अन्तःकाष्ठं नाभिस्तत्र संलग्नाः दण्डाकाराः तीक्ष्णाग्रा अराः, तेषु अर्पितः नेमिः, तद्वत् नाभिस्थानापन्नः प्राणः, अराः प्रज्ञामात्राः, नाभिस्थानीया विषयाः। एव रीत्या बोध्यम्। **कर्मणेति**। "न साधुना कर्मणा भूयान् भवति, न एवासाधुना कनीयानेष ह्येव साधुकर्म कारयति त यमेभ्यो लोकेभ्य उन्निनीषते एष एवासाधुस्तं यमधो निनीषते एष लोकपाल स म आत्मे"त्यादि।

अग्रिमं सूत्रमवतारयन्ति—**तर्हीति**। **बाधकस्य**। आत्मोपदेशरूपबाधकस्य।

**शास्त्रदृष्ट्या तूपदेशो वामदेववत्**। अयं दोषः। स्वात्मोपदेशरूपो दोषः। ननु अत्र कया दृष्ट्येत्यत आहुः—**अहमिति**। अत्र स्थितिः शेषः। आर्षेण जन्मान्तरीयश्रवणादिनाऽस्मिन् जन्मनि स्वतःसिद्धं दर्शनं आर्षं तेन दर्शनेनेत्यर्थः। एवं चैवं रीत्या भासमानेऽपि आर्षज्ञानेनेन्द्रस्य ब्रह्मात्मकत्वेनोपदेशकर्तृत्वमिति दोषः।

ननु "तत्त्वमसि" (छां. ६।९।४) "अयमात्मा ब्रह्म" (बृ० २।५।१९) इति वाक्येषु जीवस्य ब्रह्मत्वं बोध्यते। तत्र प्रत्यधिकारं शास्त्रप्रवृत्तिरिति न्यायेन स्वात्मन एव ब्रह्मत्वावगतिर्मुख्या न प्रतर्दनस्येन्द्रजीवब्रह्मत्वावगतिरुपासनं वा पुरुषार्थाय। अतः शास्त्रदृष्टिरपि नैवम्विधा। केवलस्य चैतन्यमात्रस्य तादृशे ब्रह्मण्यैक्यावगतिविरोधात्, तत्त्वमस्यादिवाक्यार्थोऽध्यवसीयते। न तु ब्रह्मधर्मा जीवे वक्तुं शक्यन्त इत्याशङ्क्य परिहरति। वामदेववत्। "तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्च" ( बृ. १।४।१० ) इति। "य एव प्रत्यबुद्ध्यत स सर्वं भवति"। तत्र सर्वेषां सर्वभावे सर्वानन्त्यप्रसङ्गात्सर्वमेकमेवेति वक्तव्यम्। ततः कारणलय एव सर्वभाव इति-'मनुरभवं सूर्यश्च' इत्यवयुत्यानुवादोऽनुपपन्नः। तत्र यथा ज्ञानावेशात्सर्वधर्मस्फूर्तिः, एवमत्रापि ब्रह्मावेशादुपदेश इति त्वाष्ट्रवधादयो ब्रह्मधर्मा एव तदावेशेन क्रियमाणत्वात्। ननु "एष वज्रस्तव शक्र तेजसा हरेर्दधीचेस्तपसा च तेजितः। तेनैव शत्रुं जहि विष्णुयन्त्रितः" ( भा. ६।११।२० ) इति वृत्रवचनं भागवते। तस्मादयुक्तं ब्रह्मधर्मवचनम्। ननु-"स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि" ( ब्र. सू. ४-४-१६ ) इति सूत्रे सुषुप्तौ ब्रह्मसम्पत्तौ च ब्रह्मधर्माविर्भावो न

---

अत्रार्थे सूत्रोक्तं दृष्टान्तमवतारयन्ति—**नन्विति**। **प्रत्यधिकारमिति**। अधिकारं प्रति, अधिकारं लक्षीकृत्येति प्रत्यधिकारम्। तथा च शुद्धान्तःकरणवानेवाधिकारी, तत्रैव तत्त्वमस्याद्युपदेशशास्त्रप्रवृत्तिः न तु जीवमात्रे। एवं चेन्द्रेण प्रतर्दनेऽप्यधिकारं विज्ञाय महावाक्यानुरोधेन तव आत्मा प्राण इति वक्तव्ये अहं प्राण इत्युक्तम्, इयं च शास्त्रदृष्टिर्न भवतीत्याहुः—**स्वात्मन एवे**त्यादिना। प्रतर्दनस्य स्वात्मन एव ब्रह्मत्वावगतिर्मुख्यमोक्षसाधिका, न इन्द्रजीवब्रह्मत्वावगतिरित्यन्वयः। **नैवं विधे**ति। इन्द्रे जीवे ब्रह्मत्वबोधिका नेत्यर्थः। ननु जीवमात्रस्य ब्रह्मैक्यावगतिरित्यपि तत्त्वमस्यादिशास्त्रे दृश्यते इत्यत आह—**केवलस्ये**ति। **तादृशे**ति। केवले इत्यर्थः। **विरोधादि**ति। किञ्चिज्ज्ञत्वसर्वज्ञत्वादिधर्मविरोधादित्यर्थः। **अध्यवसीयते**। सर्वेषां जीवानां सर्वज्ञत्वादिकं न दृश्यते इत्यन्यथानुपपत्त्यापि चैतन्यैक्यरूपो वाक्यार्थो ज्ञायते इत्यर्थः। **शक्यन्त इति**। केवलचैतन्यैक्यमात्रेण न वक्तुं शक्यन्त इत्यर्थः। इमामाशङ्कां सूत्रकारः दृष्टान्तेन परिहरति **वामदेववदि**ति। **तद्धैतदि**ति। बृहदारण्यके पुरुषविधब्राह्मणे श्रूयते। **तत्र श्रुतौ**। **एकमेव** ब्रह्मैव। **लय इति**। ब्रह्मणि लये जाते सत्येवेत्यर्थः। **अवयुत्य**। पृथक्कृत्य। भावानन्तरं पृथक्भावाभावादनुपपन्न इत्यर्थः। नन्वेवं चेत्कथमुक्तमहं मनुरभवमित्यत आहुः—**तत्रे**ति। **ज्ञानावेशादि**ति। य एव प्रत्यबुध्यतेत्यादिना प्रबोधानन्तरं सर्वभावः श्रुतिसिद्धः ततश्च सर्वज्ञतायां सिद्धायां ज्ञानावेशादित्यर्थः। **सर्वधर्म इति**। मनुत्वसूर्यत्वादिधर्माणामेषामेव ज्ञानं स्वस्मिन्, न तु स्वस्य पृथक्त्वेन ज्ञानमिति भावः। **ब्रह्मावेशादि**ति। जीवस्य ब्रह्माभिन्नत्वं वर्तत एव, परन्तु, आवेशस्तु भगवदनुग्रहाधीन इति भावः। **उपदेश इति**। एवं च शास्त्रदृष्ट्योपदेशो द्विधा। मां ब्रह्म जानीहीत्याकारकः शिष्योपदेशः एकः। अत्र प्रमाणं "मय्येव सकलं जातमि"ति श्रौतं वाक्यम्। त्वं ब्रह्मासीत्याकारकः शिष्योपदेशः अपरः। अत्र प्रमाणं "तत्त्वमसी"तिवाक्यम्। एवं च प्रतर्दनं प्रतीन्द्रेणोक्तमहं प्राण इति ब्रह्मोपदेश एवेति फलितम्। ननु त्वाष्ट्रवधादयः इन्द्रजीवधर्माः, न तु ब्रह्मधर्मा इति कथमेतदुक्तमित्यत आहुः—**त्वाष्ट्रे**ति। **तदावेशेन**। ब्रह्मावेशेन। अत्र भागवतं प्रमाणमाहुः—**नन्वेष**.

त्वन्यपदेति कथमेवमिति चेत्, मैवम्; उपदेशभावनादिष्वपि कदाचिदुत्तमाधिकारि-विषये ब्रह्मप्राकट्यमित्यङ्गीकर्तव्यम् । "मय्येव सकलं जातम्" इत्यादिवाक्यानुरोधात् । "इहैव समवलीयन्ते प्राणाः । ब्रह्मैव सन् ब्रह्माप्येति" (बृ. ४।४।६ ) इत्यप्याविर्भावापेक्षं तस्य च प्राप्तत्वान्न सूत्रे फलत्वमाह । जीवन्मुक्तानामपि परममुक्तेर्वक्तव्यत्वाच्च । असम्प्रज्ञातसमाधावविद्याविर्भावदशायामेव शरीरवियोगे वियोजकाभावाद् वागादिमात्रं लीयते । तस्य च प्राप्तत्वादेव नार्चिरादिगतिः । तथापि प्रायिकत्वादेव न सूत्रगीतादिषु तद्वचनम् । सगुणनिर्गुणभेदेन नियमवचनं त्वप्रामाणिकमेव । ब्रह्मवादे गुणानङ्गीकाराच्च । तस्माद्युक्तमुक्तं शास्त्रदृष्ट्या तूपदेश इति ॥ १।१।२९ ॥

( जीवमुख्यप्राणधर्माणां दर्शनान्नास्य प्रकरणस्य ब्रह्मप्रकरणत्वमित्याक्षेपः )

जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रित-
त्वादिह तद्योगात् ॥ १।१।३० ॥

अन्यद्बाधकद्वयमाशङ्कते । ननु यद्यपि ब्रह्मधर्मा भूयांसः प्रकरणे श्रूयन्ते । तद्वज्जीवधर्मा मुख्यप्राणधर्माश्च बाधकाः सन्ति । "न वाचं विजिज्ञासीत । वक्तारं विद्यात्" ( कौ. ब्रा. ३।८ ) इत्यादि । अत्र हि वागादिकरणाध्यक्षस्य जीवस्य विज्ञेयत्वमभिधीयते । "अथ खलु प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्य" (कौ. ब्रा. ३।३)

---

इति । अग्रिमसूत्रविरोधमाशङ्कते—नन्विति । कथमेवमिति । इन्द्रस्य प्रतर्दनोपदेशकाले कथमित्यर्थः । समाधानमाहुः—मैवमिति । अङ्गीकर्तव्यमिति । तथा च सम्पत्तिपदं उत्तमाधिकारिविषयस्याप्युपलक्षकमिति सूत्रे न न्यूनतेति भावः । यद्वा कदाचित्पदस्वारस्यात् उत्तमाधिकारिणोऽपि सर्वदाऽऽविर्भावो नास्तीत्यतः सूत्रे नोक्तम् । एतत्पक्षे सम्पत्तिपदं नोपलक्षकम् । वाक्येति । श्रुतिश्चेति शेषः । ननु पूर्णज्ञाने सति सर्वदा ब्रह्मभावसम्पत्तौ सत्यामेव "अहं मनुरभवमप्येव"इत्यादिकं ज्ञानं जायते, इन्द्रस्य तु उपदेशकाले कादाचित्क आविर्भावः इति पूर्णज्ञानित्वरूपसाधारणधर्माभावात् वामदेववदित्युपमानोपमेयभावो न सङ्गच्छते इत्यत आहुः—इहैवेति । "प्राणान्तं" उपक्रमवाक्यम्, "ब्रह्मैव"त्युपसंहारवाक्यम् । तथा च "ब्रह्मैव सन्नि"त्यनेनाविर्भावः । उच्यत इति । सद्योमुक्तावप्याविर्भावापेक्षेत्यर्थः । "मुक्तस्य इहैव प्राणाः समवलीयन्ते", लीयन्ते उत्क्रामन्तीति श्रुत्यर्थः । आविर्भावो नाम ब्रह्मभावः, स च ब्रह्मधर्माविर्भावपूर्वकब्रह्मस्फूर्तिरूपः । स च ज्ञानकाले मोक्षदशायां चास्ति । एवं च वामदेवे इन्द्रे च ब्रह्माविर्भाववत्त्वरूपसाधारणधर्मवत्त्वसत्त्वादुपमानोपमेयभावः सङ्गच्छत इति भावः । ननु प्रतर्दनोपदेशकाले अहं प्राण इत्याविर्भावस्य साधनत्वमुक्तं न फलत्वमत आहुः—तस्य चेति । प्रायिकत्वात् । उपदेशकाल एव सत्त्वात् । आहेति । व्यास इति शेषः ।

इदानीं सार्वकालिकब्रह्माविर्भावस्यापि साधनत्वं स्वीकृत्याऽऽहुः—जीवन्निति । तथा च प्रायिकस्याविर्भावस्य फलत्वं नास्ति, सार्वकालिकस्य तु परमत्वं नास्तीतीयान्विशेष इति भावः । नन्वाविर्भावकाले वागादीनां लयादिन्द्रस्य वक्तृत्वानुपपत्तिरित्यत आहुः—असम्प्रज्ञातेति । असम्प्रज्ञातसमाधौ यथा

---

१ ज्ञेयज्ञानज्ञातृभेदशून्यो निर्विकल्पकरूपः समाधिः; तदुक्तम्—सर्ववृत्तिनिरोधे त्वसम्प्रज्ञातः । एकाग्रचेतसि प्रमाणादिवृत्तीनां बाह्यविषयाणां निरोधः सम्प्रज्ञातसमाधिः ।

इति शरीरधारणं मुख्यप्राणधर्मः । "मा मोहमापद्यथा अहमेवैतत्पञ्चधाऽऽत्मानं प्रविभज्यैतद्बाणमवष्टभ्य विधारयामि" (प्र. २।३) इति श्रवणात् । "यो वै प्राणः सा प्रज्ञा या प्रज्ञा स प्राणः" ( कौ. ब्रा. ३।३ ) इति जीवमुख्यप्राणवाच्यत्वे प्रज्ञाप्राणयोः सहवृत्तित्वापचारो युज्यते । उत्क्रान्तिश्च । न तु सर्वथा विलक्षणस्य ब्रह्मणः । तस्माज्जीवमुख्यप्राणलिङ्गयोर्विद्यमानत्वान्न ब्रह्मप्रकरणमिति चेत्, न; उपासात्रैविध्यात् । अयमर्थः । किमत्र चोद्यते । जीवमुख्यप्राणलिङ्गाद्ब्रह्मधर्माणां जीवपरत्वम्, त्रयाणामपि स्वतन्त्रत्वं वा, लिङ्गद्वयस्यापि ब्रह्मधर्मत्वमुच्यतामिति वा ? आद्यः पूर्वमेव परिहृतः । न हि ब्रह्मधर्मा अन्यपरत्वेन परिणेतुं शक्या इति ।

( तथासति वाक्यभेदः )

द्वितीये दूषणमाह । उपासात्रैविध्यात् । तथासत्युपासनं त्रिविधं स्यात् । तद्वाक्यभेदप्रसङ्गान्न युक्तम्, तृतीये तूपपत्तिरुच्यते । जीवधर्मा ब्रह्मणि न विरुध्यन्ते । आश्रितत्वात् । जीवस्यापि ब्रह्माधारत्वात्तद्धर्मा अपि भगवदाश्रिता एव । इहेतु-

---

दिवि लये सति मूकीभावमात्रं जायते न तु शरीरवियोगः इति वाक्यार्थः । एतद्बाणमिति । एतत् शरीरं तच्च वाणं वाति गच्छतीति वानं ववयोरभेदात्, वाणं अस्थिरं शरीरमित्यर्थः । **अवष्टभ्य** । आश्रित्य । नन्वेवं सति उभयोरनिश्चयादिदं जीवप्रकरणमपि न स्यादित्यत आहुः—**यो वै प्राणेति** । प्रज्ञाशब्देन जीवः एवं चैकार्थप्रतिपादकत्वरूपं सामानाधिकरण्यं श्रुतौ प्रतिपादितमिति हेतोः प्रकरणे जीवमुख्यप्राणयोर्वाच्यत्वे सिद्धे जीवप्रकरणमेवेति भावः । ननु श्रुतौ विद्यमानानां ब्रह्मधर्माणां का गतिरित्यत आहुः—**प्रज्ञाप्राणयोरिति** । **सहवृत्तित्वादिति** । शरीरावच्छेदेन सामानाधिकरण्यादित्यर्थः । तथा चानेन हेतुना प्राणो जीव एव न तु ब्रह्म भवितुमर्हतीति श्रुतौ विद्यमानानां ब्रह्मधर्माणामुपासनार्थं जीवे उपचारकल्पनं युक्तमिति जीवप्रकरणमेवेदमिति भावः ।

हेत्वन्तरमाहुः—**उत्क्रान्तिश्चेति** । चोऽप्यर्थे । "स यदास्माच्छरीरादुत्क्रामति सहैवैतेरुत्क्रामती"ति श्रुतौ उत्क्रान्तिरप्युक्तेत्यर्थः । **विलक्षणस्येति** । सहस्थितिसहोत्क्रमणरूपोभयविलक्षणस्येत्यर्थः । **ब्रह्मण इति** । प्रकरणमिति शेषः । **नन्विति** पूर्वेणान्वयः । सिद्धान्तमाहुः—**उपासात्रैविध्यात्** । उपासाया उपासनस्य त्रैविध्यं तस्मात् । यथाश्रुतेनेदं समाधानं न घटते इत्यतः पूर्वपक्षस्य विकल्पत्रयं कृत्वा द्वितीयपक्षे इदं दूषणमिति बोधयितुमाहुः—**अयमर्थ इति** । **किमिति** । अत्र विषयवाक्ये, पक्षत्रयमध्ये किं चोद्यते विधीयत इत्यर्थः । पक्षत्रयमेवाऽऽहुः—**जीवमुख्येति** । अयं पञ्चम्यन्तो हेतुः स्थलत्रये बोध्यः । **त्रयाणामिति** । जीवप्राणब्रह्मणामित्यर्थः । **उच्यतामिति** । इदं च पक्षत्रयबोधकम्, यत् त्वान्तवाक्यत्रयं तत्रान्वेति । **परिहृत इति** । "न वक्तुरात्मोपदेशादि"ति सूत्रे, ब्रह्मधर्मबाहुल्यहेतुना परिहृतः । **शक्या इति** । लक्षणां विनेति शेषः । बहुषु लक्षणा वक्तव्या । तदपेक्षयाऽल्पस्य ब्रह्मपरत्वं सुवचमिति भावः ।

**वाक्यभेद इति** । "मामेव विजानीही"त्यत्र विजानीहीत्यस्यावृत्तौ विधेयभेदविध्यावृत्तिरित्यर्थः । इदमुपलक्षणम् । मामित्यस्यार्थत्रये सति अन्ययोगव्यवच्छेदार्थक एवकारोऽपि न सङ्गच्छेत । **उपपत्तिरिति** । स्वीकृतत्वादिति हेतुः पूरणीयः । **तद्धर्माः** । जीवधर्माः । तथा च "मयि सर्वमिदं प्रोतं सूत्रे

भयत्र सम्बन्धो ब्रह्मवादे। मुख्यप्राणे तु तद्योगात्। तेन योगस्तद्योगस्तस्मात्। प्राणधर्मा भगवति न विरुध्यन्ते। प्राणस्य भगवत्सम्बन्धात्तद्धर्माणामपि भगवत्सम्बन्धात्।

( वक्तृत्वादयो ब्रह्मधर्मा एव )

अथवा वक्तृत्वादयो न जीवधर्माः, किन्तु ब्रह्मधर्मा एव। जीव आश्रितत्वाद् भासन्ते। "परात्तु तच्छ्रुतेः" ( ब्र. सू. २।३।४१ ) इति न्यायात्। प्राणेऽपि तथा। स्वाप्ययसम्पत्त्योर्जीवस्य ब्रह्माश्रितत्वम्। आध्यात्मिकाधिदैविकरूपत्वान्न संयोगः। प्राणस्य तु संयोग एव। तस्मात्सर्वे धर्मा ब्रह्मणि युज्यन्ते। सहोत्क्रमस्तु क्रियाज्ञानशक्त्योर्भगवदीययोर्देहे सहैव स्थानं सहोत्क्रमणमिति भगवदधीनत्वं सर्वस्यापि बोध्यते।

( सर्वे ब्रह्मधर्मा एवेति प्राणो ब्रह्मैव )

ननु ब्रह्मैव प्रतिपादितम्। तत्कथं धर्मयोरुत्क्रमणमिति चेत्? अत्र धर्मधर्मिणोरेकत्वपृथक्त्वनिर्देशयोर्विद्यमानत्वात्। "प्राणो वा अहमस्मिन्प्रज्ञात्मा" ( कौ. ब्रा. ३।२ ) इति। अत्र क्रियाज्ञानशक्तिमान्निर्दिष्टः। तदन्वेकैकस्य धर्मप्रशंसा।

---

मणिगणा इवे"ति गीतावाक्यात् ब्रह्मणो जीवाधारत्वेन परम्परया जीवधर्माधारत्वमपि बोध्यमिति भावः। उभयत्रेति। देहलीदीपन्यायेनेति शेषः। देहेति पदस्यावृत्ती इह जीव आश्रितत्वात् इह प्राणे तद्योगादित्येवंरीत्योभयत्र सम्बन्धः। अन्वय इत्यर्थः। ब्रह्मवाद इति। मायावादिमते अभेदस्यैव प्रतिपादितत्वादाश्रयाश्रयिभावो अवयवावयविभावो नास्तीत्यत उक्तं ब्रह्मवाद इति। जीवे तूपपत्तिरुक्ता मुख्यप्राणे तामाहुः—मुख्येति। सम्बन्धादिति। यथा स्वस्वामिभावसम्बन्धः, तथा नियम्यनियामकत्वरूपसम्बन्धोऽप्यस्तीति तस्मादित्यर्थः। "न प्राणेन नापानेन मर्त्यो जीवति कश्चन, इतरेण तु जीवति यस्मिन्नेतावुपाश्रितौ" इत्यादिवचनमत्र प्रमाणं बोध्यम्। भगवत्सम्बन्धः। परम्परयेति शेषः। तथा च प्राणधर्मा भगवद्धर्मा एवेति भावः।

ननु परम्परया तद्धर्मवत्त्वं लक्षणया भविष्यति न तु शक्त्येत्यस्वरसादाहुः—अथवेति। ब्रह्मधर्मा इति। साक्षादिति शेषः। परात्त्विति। तथा जीववत् ब्रह्मधर्मा एवेत्यर्थः। ननु प्राणस्य जीवतुल्यत्वे आश्रितत्वहेतुनैव चारितार्थ्ये तद्योगादिति हेत्वन्तरं व्यर्थं स्यादित्यत आहुः—स्वाप्ययेति। सुषुप्तिकाले मोक्षे चेत्यर्थः। जीवब्रह्मणोः संयोगाभावे हेतुमाहुः—आध्यात्मिकेति। तादात्म्ये संयोगो नास्तीति फलितम्। सर्वे धर्माः। कौषीतकिब्राह्मणोक्ताः सर्वे धर्माः। ननु "सहैवास्मिन् शरीरे वसतः सहैवोत्क्रामत" इति ब्रह्मणोक्तं वाक्यं न सङ्गच्छते, सहोत्क्रमस्यैकत्वविघटकत्वादित्यत आहुः—सहोत्क्रमस्त्विति। हस्तोत्क्षेपणस्य शरीरधर्मत्वेऽपि शरीरापेक्षया यथा न भिन्नत्वं तथा सहोत्क्रमस्यापि भगवदभिन्नत्वं शक्तिशक्तिमतोरभेदादित्यर्थः। क्रियाज्ञानशक्त्योरिति। प्राणजीवयोरित्यर्थः। सहोत्क्रमणमितीति। अनेन सर्वस्यापि व्यवहारस्य जीवप्राणाधीनत्वेन भगवदधीनत्वं सूचितम्।

अत्र प्राणस्य धर्मत्वे शङ्कते—नन्विति। कथमिति। धर्मधर्मिभावो न वक्तव्य इति 'कथमि'त्यनेन सूचितम्। समाधानमाहुः—अत्र धर्मेति। अत्र श्रुतौ। उत्क्रमार्थं पृथक्त्वनिर्देशः। कथं विषयवाक्ये विद्यमानत्वमत आहुः—प्राणो वेति। अत्र वाक्ये। निर्दिष्ट इति। अनेन पृथक्त्वं

"यो वै प्राणः सा प्रज्ञा या प्रज्ञा स प्राणः" ( कौ. ब्रा. ३।४ ) इत्युपसंहारान्तम्। पुनस्तयोरेवोत्क्रमणप्रवेशाभ्यां-"सह ह्येवास्मिन् शरीरे वसतः सहोत्क्रामतः" (कौ. ब्रा. ३।४) इत्युपक्रम्य सुषुप्तिमूर्च्छामरणेषु प्राणाधीनत्वं सर्वेषामिन्द्रियाणामुक्त्वाऽऽसन्यव्यावृत्त्यर्थं प्रज्ञयैक्यं प्रतिपाद्योपसंहरति। पुनर्ज्ञानशक्तेरुत्कर्षं वक्तुम्-"अथ खलु यथा प्रज्ञायाम्" (कौ. ब्रा. ३।२ ) इत्यारभ्य "न हि प्रज्ञापेतोऽर्थः कश्चन सिध्येत्" (कौ. ब्रा. ३।३) इत्यन्तेन ज्ञानशक्त्युत्कर्षं प्रतिपाद्य धर्ममात्रत्वनिराकरणाय ज्ञानशक्तिमन्तं भगवन्तं निर्दिशति-"न हि प्रज्ञातव्यमि"-त्यारभ्य "मन्तारं विद्यादि"त्यन्तेन। तदनु ज्ञानक्रियाशक्त्योर्विषयभूतभूतमात्रारूपजगतो भगवदभेदं प्रतिपादयन्-"स एष प्रज्ञात्माऽऽनन्दोऽजरोऽमृतः" इत्युपसंहरति ब्रह्मधर्मैः। अतः क्रियाज्ञानविषयरूपो भगवानेवेति प्रतिपाद्य न तावन्मात्रं ततोऽप्यधिक इत्येकोपासनैव विहिता। तस्माज्जडजीवरूपत्वात्सर्वात्मकं ब्रह्मैवेति महावाक्यार्थः सिद्धः॥ १।१।३०॥१०॥

---

सूचितम्। प्रशंसेति। तद्धैक आहुरित्यारभ्य निःश्रेयसमित्यन्तेन। जीवति वागपेत इत्यारभ्य उत्थापयतीत्यन्तेन च प्रत्येकं क्रियाज्ञानशक्त्योः प्रशंसेत्यर्थः। उभयप्रशंसाबोधकं वाक्यमाहुः—यो वै इति। "यो वै प्राण" इत्यारभ्य उपसंहृतेत्येतदन्ता उभयप्रशंसेत्यर्थः। पुनस्तयोरेवेति। प्रशंसा उपसंहृतेति शेषः। इदानीं केवलज्ञानशक्तेरुत्कर्षप्रतिपादनमनुवदन्ति—पुनरिति सिध्येदित्यन्तेन। धर्ममात्रत्वेति। ज्ञानं केवलं नैय्यायिकवद्भगवद्धर्मो न, किन्तु भगवानेवेत्यर्थः। इदानीं भगवतः जगत्स्वरूपत्वं प्रतिपाद्य ततोऽप्यधिकत्वं प्रतिपादयन्ति—तदन्विति। महावाक्यार्थ इति। कौषीतकिब्राह्मणान्तर्गतपञ्चमाध्यायार्थः सिद्ध इत्यर्थः। अत्रेदमवधेयम्—ब्रह्मविचारः कर्तव्य इत्युक्तं, विचारश्चोहापोहात्मकस्तर्कः सर्वसूत्रेषु पञ्चम्यन्तहेतुप्रयोगात् तत्तद्धेतुना तर्क एव कर्तव्य इति सिद्धम्। ऊहापोहात्मकतर्कस्वरूपं तु द्वितीयाध्याये प्रथमे पादे तर्काप्रतिष्ठानादिति सूत्रे, तर्को नाम स्वालोक्षिता युक्तिरिति श्रीमदाचार्यचरणा वक्ष्यन्ति। तर्को नाम अर्थस्वभावविषयेण सामान्यविषयेण वा निरूपणेन प्रामाण्याद्व्यवस्थापकं तदितिकर्तव्यतारूपमूहापरपर्यायज्ञानमिति श्रीगोस्वामिपुरुषोत्तमैः प्रकाशे द्वितीयाध्याये प्रथमे पादे न विलक्षणत्वादिति सूत्रे तर्कस्वरूपमुक्तम्। तर्कश्च पर्वतो वह्निमान्न स्यात्तर्हि धूमवान्न स्यादितिवत्। प्राणादिवाक्यं ब्रह्मपरं न स्यात्तथा निगमो न स्यादित्यूहापोहात्मकः सर्वत्रानुसन्धेय इति दिक्। इति दशमाधिकरणम्॥

इति श्रीमन्मुकुन्दरायसहजमाधुरीपरमानिर्वचनीयसरसवदनतामरससुधाह्लादावगाहिश्रीमदाचार्यपदाब्जकृपापारसारश्रीमत्प्रभुचरणात्मजमहाराजयदुनाथकुलोद्भवगोस्वामिश्रीगोपालात्मजगिरिधरविरचितेऽणुभाष्यविवरणे प्रथमाध्यायस्य प्रथमः पादः समाप्तिमफाणीत्॥

---

१ अत्रेदं व्याख्यानान्तराणि—

(१) तत्र शाङ्कराः—पूर्वस्मिन्नधिकरणे प्रकृतत्रिपाद्ब्रह्मपरामर्शीयच्छन्दसमानाधिकरता ज्योतिःश्रुतिस्तदर्थेत्युक्तम्। यथा, न तथेहासाधारणं किञ्चित्समस्ति प्राणस्य ब्रह्मत्वे मानम्, येन तथा स्यादिति प्रत्युदाहरणसङ्गत्येदमाह—प्राणस्तथानुगमादिति। अत्र पूर्वपक्षे प्राणेन्द्रदेवताजीवानामन्यतमोपास्तिः।

सिद्धान्ते ब्रह्मधीरिति फलभेदः। कौषीतक्युपनिषदि इन्द्रप्रतर्दनाख्यायिकायां प्रतर्दनं प्रतीन्द्रवाक्यं
श्रूयते—'प्राणोऽस्मि प्रज्ञात्मा' इत्यादि। तत्र किं प्राणशब्देन वायुमात्रमभिधीयते, उत इन्द्रदेवता,
उत जीवः, अथवा परं ब्रह्मेति विशये, 'अथ खलु....' इत्यादिलिङ्गाद् वायुमात्रमिति पूर्वः पक्षः।
सिद्धान्तस्तु—प्राणशब्देन ब्रह्मैवाभिधीयते। कुतः, तथानुगमात्, तथा ब्रह्मपरत्वे 'हिततमं मन्यसे'
इत्यादिहिततमत्वाद्यनेकलिङ्गानामनुगमात्, अवगमात्। अतोऽत्र प्राणो ब्रह्मैवेत्यर्थः॥

ननु अस्मीत्यहङ्कारवादाल्लिङ्गादिन्द्रदेवताभिधीयत इत्याशङ्क्याह—वक्तुः इन्द्रस्य देवताविशेषस्य,
आत्मोपदेशात् 'मामेव विजानीहि' इत्यात्मत्वेनोपदिश्यमानत्वात्, प्राणो न ब्रह्मेति चेत्, अत्रोच्यते—
अध्यात्मसम्बन्धभूमा ह्यस्मिन्निति। हि यस्मात्, अस्मिन् अध्याये 'यावद्ध्यस्मिन् शरीरे प्राणो वसति
तावदायुः स एष प्राण एव प्रज्ञात्माऽऽनन्दोऽजरोऽमृतः' इत्याद्यध्यात्मसम्बन्धस्य प्रत्यगात्मसम्बन्धस्य
भूमा बाहुल्यमुपलभ्यते। तस्मात् प्राणात्मकब्रह्मोपदेश एवायम्, न देवताविशेषोपदेश इति सिद्धम्॥
कथं तर्हि वक्तुरात्मोपदेशः, तत्राह—इन्द्रस्य वक्तुः 'मामेव विजानीहि' इत्युपदेशः शास्त्रदृष्ट्या
ज्ञातव्यः, अहमेव परं ब्रह्मेति शास्त्रदृष्ट्या पश्यन्नेवमुक्तवानित्यर्थः। अत्र दृष्टान्तः—वामदेववत्, यथा
वामदेवः शास्त्रदृष्ट्या 'अहं मनुरभवं सूर्यश्च' इत्याह, तद्वदिति। अतो ब्रह्मपरमेवैतद्वाक्यमिति सिद्धम्॥
ननु एवमपि न ब्रह्मपरमिदम्, अपि त्वन्यपरमित्याशङ्क्याह—'वक्तारं विद्यात्' इति जीवलिङ्गात्
'इदं शरीरं परिगृह्योत्थापयति' इति मुख्यप्राणलिङ्गाच्च तदुभयपरम्, न ब्रह्मपरमेवेति चेत्, न;
कुतः, उपासात्रैविध्यात्, जीवमुख्यप्राणब्रह्मोपासनानि त्रीणि प्रसज्येरन्। न च तदिष्टम्, 'मामेव....'
इत्युपक्रम्य 'प्राणोऽस्मि' इत्युक्त्वा अन्ते उपसंहरति 'स एष प्राण एव प्रज्ञात्मा' इति एवमुपक्रमोप-
संहाराभ्यां वाक्यैकवाक्यत्वावगमात्। किञ्च, अन्यत्र ब्रह्मलिङ्गवशात् प्राणशब्दस्य ब्रह्मणि वृत्तेराश्रित-
त्वादिहापि तद्योगात् हिततमत्वाद्यसाधारणब्रह्मलिङ्गयोगात् ब्रह्मण एवायमुपदेश इति सर्वमति-
शोभनम्॥

(२) श्रीरामानुजीये—निरतिशयदीप्तियुक्तं ज्योतिःशब्दाभिधेयं प्रसिद्धवन्निर्दिष्टं परमपुरुष एवे-
त्युक्तम्। इदानीं कारणत्वव्याप्तामृतत्वप्राप्त्युपायतयोपास्यत्वेन श्रुत इन्द्रप्राणादिशब्दाभिधेयोऽपि
परमपुरुष एवेत्याह—"प्राणस्तथानुगमात्" कौषितकीब्राह्मणे प्रतर्दनविद्यायां प्रतर्दनो ह वै दैवो-
दासिरिन्द्रस्य प्रियं धामोपजगाम युद्धेन च पौरुषेण च" इत्यारभ्य "वरं वृणीष्व" इति वक्तारमिन्द्रं
प्रति "त्वमेव मे वरं वृणीष्व यं त्वं मनुष्याय हिततमं मन्यसे" इति प्रतर्दनोक्तः "स होवाच
प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्स्व" इति श्रूयते। तत्र संशयः। किमयं हिततमोपासन-
कर्मतयेन्द्रप्राणशब्दनिर्दिष्टो जीव एव, उत, एतदतिरिक्तः परमात्मेति। किं युक्तम्? जीव एवेति।
कुतः? इन्द्रशब्दस्य जीवविशेष एव प्रसिद्धेः। तत्समानाधिकरणप्राणशब्दस्यापि तत्रैव वृत्तेः। अय-
मिन्द्राभिधानो हि जीवः प्रतर्दनेन "त्वमेव वरं वृणीष्व यं त्वं मनुष्याय हिततमं मन्यसे" इत्युक्तो
मामुपास्स्वेति स्वात्मोपासनं हिततममुपदिदेश। हिततमश्चामृतत्वप्राप्त्युपाय एव। जगत्कारणोपास-
नस्यैवामृतत्वप्राप्त्युपायता, "तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये" इत्यवगता। अतः
प्रसिद्धजीवभाव इन्द्र एव कारणं ब्रह्मेत्याशङ्कायामभिधीयते—प्राणस्तथानुगमादिति। अयमिन्द्र-
प्राणशब्दनिर्दिष्टो न जीवमात्रम्। अपि तु, जीवादर्थान्तरभूतं परं ब्रह्म। "स एष प्राण प्रज्ञात्माऽऽन-
न्दोऽजरोऽमृतः" इतीन्द्रप्राणशब्दाभ्यां प्रस्तुतस्यानन्दाजरामृतशब्दसामानाधिकरण्येनानुगमो हि
तथा सत्येवोपपद्यते॥

यदुक्तमिन्द्रप्राणशब्दनिर्दिष्टस्यानन्दोऽजरोऽमृत इत्यनेनैकार्थ्यादयं परं ब्रह्मेति तन्नोपपद्यते । "मामेव विजानीहि प्राणोस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्व" इति वक्ता "त्रीन्द्रक्त्रिशीर्षाणं त्वाष्ट्रमहनम्" इत्येवमादिना त्वाष्ट्रवधादिभिः प्रज्ञातजीवभावस्य स्वात्मन एवोपास्यतां प्रतर्दनायोपदिशति अत उपक्रमे जीवविशेष इत्यवगते सति "आनन्दोऽजरोऽमृतः" इत्यादिभिरुपसंहारस्तदनुगुण एव वर्णनीय इति चेत्, परिहरति—अध्यात्मसम्बन्धभूमा ह्यस्मिन् । आत्मनि यः सम्बन्धः सोऽध्यात्मसम्बन्धः, तस्य भूमा भूयस्त्वं बहुत्वमित्यर्थः । आत्मन्याधेयतया सम्बध्यमानानां बहुत्वेन सम्बन्धबहुत्वम् । तच्चास्मिन् वक्तरि परमात्मन्येव हि सम्भवति । तद्यथा "रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिता एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणेऽर्पिताः । स एष प्राण एव प्रज्ञात्मानन्दोऽजरोऽमृतः" इति भूतमात्राशब्देनाचेतनवस्तुजातमभिधाय प्रज्ञामात्रशब्देन तदाधारतया चेतनवर्गं चाभिधाय तस्याप्याधारतया प्रकृतमिन्द्रप्राणशब्दाभिधेयं निर्दिश्य तमेवानन्दोऽजरोऽमृत इत्युपदिशति, तदेतच्चेतनाचेतनात्मककृत्स्नवस्त्वाधारत्वं जीवादर्थान्तरभूतेऽस्मिन्परमात्मन्येवोपपद्यत इत्यर्थः ।

अथवाऽध्यात्मसम्बन्धभूमा ह्यस्मिन् । परमात्मासाधारणधर्मसम्बन्धोऽध्यात्मसम्बन्धः । तस्य भूमा बहुत्वं ह्यस्मिन्प्रकरणे विद्यते । तथाहि—"प्रथमं त्वमेव वरं वृणीष्व यं त्वं मनुष्याय हिततमं मन्यसे" इति "मामुपास्वे"ति च परमात्मासाधारणमोक्षसाधनोपासनकर्मत्वं प्राणशब्दनिर्दिष्टस्येन्द्रस्य प्रतीयते । तथा "एष एव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषति । एष एवासाधु कर्म कारयति तं यमधो निनीषति" इति सर्वस्य कर्मणः कारयितृत्वं परमात्मधर्मः । तथा "तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिता एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणेऽर्पिताः" इति सर्वाधारत्वं च तस्यैव धर्मः । तथा "स एष प्राण एव प्रज्ञात्माऽऽनन्दोऽजरोऽमृतः" इत्येतेऽपि परमात्मन एव धर्माः । "एष लोकाधिपतिरेष सर्वेश्वरः इति च परमात्मन्येव सम्भवति । तदेवमध्यात्मसम्बन्धभूम्नोऽत्र विद्यमानत्वात्परमात्मैवात्रेन्द्रप्राणशब्दनिर्दिष्टः ।

कथं तर्हि प्रज्ञातजीवभावस्येन्द्रस्य स्वात्मन उपास्यत्वोपदेशः सङ्गच्छते तत्राह—प्रज्ञातजीवभावेनेन्द्रेण "मामेव विजानीहि मामुपास्व" इत्युपास्यस्य ब्रह्मणः स्वात्मत्वेनोपदेशोऽयं न प्रमाणान्तरप्राप्तस्वात्मावलोकनकृतः । अपि तु शास्त्रेणैव स्वात्मदृष्टिकृतः । एतदुक्तं भवति । "अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि", "ऐतदात्म्यमिदं सर्वम्", "अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा", "य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति स त आत्मान्तर्याम्यमृतः" "य आत्मनि सञ्चरन्यस्यात्मा शरीरं यमात्मा न वेद, एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः" इत्येवमादिना शास्त्रेण जीवात्मशरीरकं परमात्मानमवगम्य जीवात्मवाचिनामहंत्वमादिशब्दानां परमात्मन्येव पर्यवसानं ज्ञात्वा "मामेव विजानीहि मामुपास्व" इति स्वात्मशरीरकं परमात्मानमेवोपास्यत्वेनोपदिदेशेति । वामदेववत् । यथा वामदेवः परस्य ब्रह्मणः सर्वान्तरात्मत्वं सर्वस्य तच्छरीरत्वं शरीरवाचिनां शब्दानां शरीरिणि पर्यवसानं पश्यन्नहमिति स्वात्मशरीरकं परं ब्रह्म निर्दिश्य तत्सामानाधिकरण्येन मनुसूर्यादीन् व्यपदिशति "तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदेऽहं मनुरभवं सूर्यश्च" । "अहं कक्षीवानृषिरस्मि" इत्यादि । यथा च प्रह्लादः—"सर्वगत्वादनन्तस्य स एवाहमवस्थितः । मत्तः सर्वमहं सर्वं मयि सर्वं सनातने" इत्यादि वदति ।

अस्मिन्प्रकरणे जीववाचिभिः शब्दैरचिद्विशेषाभिधायिभिश्चोपास्यभूतस्य परस्य ब्रह्मणोऽभिधाने
कारणं चोद्यपूर्वकमाह—जीव० । "न वाचं विजिज्ञासीत । वक्तारं विद्यात्", "त्रिशीर्षाणं त्वाष्ट्र-
महनमरुन्मुखान्यतीन्सालावृकेभ्यः प्रायच्छम्" इत्यादिजीवलिङ्गाद्यावदस्मिञ्छरीरे प्राणो वसति
तावदायुः", "अथ खलु प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयति" इति मुख्यप्राणलिङ्गाच्च
नाध्यात्मसम्बन्धभूमेति चेत्, न, उपासात्रैविध्याद्धेतोः उपासनात्रैविध्यमुपदेष्टुं तत्तच्छब्देनाभि-
धानम् । निखिलकारणभूतस्य ब्रह्मणः स्वरूपेणानुसन्धानं, भोक्तृवर्गशरीरकत्वानुसन्धानं, भोग्य-
भोगोपकरणशरीरकत्वानुसन्धानं चेति त्रिविधमनुसन्धानमुपदेष्टुमित्यर्थः । तदिदं त्रिविधं ब्रह्मा-
नुसन्धानं प्रकरणान्तरेष्वप्याश्रितम् । "सत्यं ज्ञानमनन्तं ब्रह्म", "आनन्दो ब्रह्म" इत्यादिषु स्वरूपा-
नुसन्धानम् । "तत्सृष्ट्वा तदेवानुप्राविशत् तदनुप्रविश्य सच्च त्यच्चाभवत् निरुक्तं चानिरुक्तं च निल-
यनं चानिलयनं च विज्ञानं चाविज्ञानं च सत्यं चानृतं च सत्यमभवत्" इत्यादिषु भोक्तृशरीरतया
भोग्यभोगोपकरणशरीरतया चानुसन्धानम् । इहापि प्रकरणे त्रिविधमनुसन्धानं युज्यत एवेत्यर्थः ।
एतदुक्तं भवति । यत्र हिरण्यगर्भादिजीवविशेषाणां प्रकृत्याद्यचेतनविशेषाणां च परमात्मासाधा-
रणधर्मयोगस्तदभिधायिनां शब्दानां परमात्मवाचिशब्दैः सामानाधिकरण्यं वा दृश्यते तत्र
परमात्मनस्तत्तच्चिदचिद्विशेषान्तरात्मत्वानुसन्धानं प्रतिपिपादयिषितमिति, अतोऽत्रेन्द्रप्राणशब्दनि-
र्दिष्टो जीवादर्थान्तरभूतः परमात्मैवेति सिद्धम् ॥

(३) माध्वे—'प्राणो विष्णुः' इत्युक्तं तत्र 'ता शीर्षे श्रियः श्रिताश्च ताः श्रोत्रं मनो वाक् प्राण'
इत्यत्र प्राणस्य विष्णुत्वं न विद्यते, 'इन्द्रियैः सहाविधानाद्विस्पष्ट आह' 'तं देवाः प्राणयन्तः स एषोऽश
स एव प्राणः प्राणा ऋच इत्येव विद्यात् तदयं प्राणोऽधितिष्ठती'त्याद्यनुगमादत्रापि प्राणो विष्णुरेव ।
'विष्णुमेवानन्दयन्देवा विष्णुं भूतिमुपासते । स एव सर्ववेदोक्तस्तत्रथो वेद उच्यते'—इति स्कान्दे ।

ब्रह्मशब्दानुगमाच्च । 'प्राणो वा अहमस्मृश' इति पाद्मे वक्तुरात्मोपदेशादिन्द्र एवेति चेत्—न,
'प्राणस्त्वं प्राणः सर्वाणि भूतानि' इतिवदध्यात्मसम्बन्धो ह्यत्र विद्यते ।

शास्त्रमन्तर्यामी 'सम्विच्छाखं परं पदम्' इति हि भागवते । 'सत्यशास्त्रोच्यते विष्णुः सर्वशास्त्रस्य
हेतुतः । न क्वापि किञ्चिन्नामास्ति तमृते पुरुषोत्तमम्' इति च पाद्मे ।

'अहं मनुरभवं सूर्यश्चे'त्यादिवत् । तावन्ति शतसम्वत्सरस्याह्नां सहस्राणि भवन्तीति जीवस्य
लिङ्गम् । प्राणसर्वादिमुख्यप्राणलिङ्गं तस्यावेति चेत् न, अन्तर्यादिः सर्वगतत्वेनेत्युपासनात्रैविध्यादि-
द्वाश्रितत्वाच्च यत्र तमेव सोमानं विदार्य्यैतया द्वारा प्रापद्यत स एतमेव पुरुषं ब्रह्म तं तमपश्यत एतात्
स चैतद्विज्ञानाद्ध महिदास ऐतरेयः' इत्यादिना । 'महिदासाभिधो यज्ञे इतरायास्तपोबलात् । साक्षात्
स भगवान् विष्णुर्यस्तन्त्रं धेण्वयं व्यधात्' इति च ब्रह्माण्डे । तत्तदुपासनयोग्यतया ▪ पुरुषाणां 'केषा-
ञ्चित् सर्वगतत्वेन केषाञ्चिद्धृदये हरिः । केषाञ्चिद्बहिरेव स्यादुपास्यः पुरुषोत्तमः'—इति ब्राह्मे । 'अग्नौ
क्रियावतां विष्णुर्योगिनां हृदये हरिः । प्रतिमास्वल्पबुद्धीनां सर्वत्र विदितात्मनाम्' इति च ।

(४) निम्बार्कः—पूर्ववाक्ये गायत्र्याख्यछन्दोऽभिधानात् तत्परचरणश्रुतिरस्तु न ब्रह्मपरेति चेन्न,
गुणयोगाद्गायत्रीशब्दाभिधेये भगवति चेतोऽर्पणाभिधानात्, दृष्टश्च विवादशब्दः प्रकृतपरः ॥
न केवलं तथा चेतोऽर्पणनिगदाद्गायत्री ब्रह्मेत्युच्यते भूतपृथिवीशरीरहृदयानां ब्रह्मणि भगवत्युप-
पत्तेश्चैवम् ॥

पूर्वमधिकरणत्वेन पुनरवधित्वेन द्यौर्निर्दिश्यते इत्युपदेशभेदान्न ब्रह्म प्रत्यभिज्ञायते इति न, कुतः ? उभयत्रापि ब्रह्मण एकत्वस्याविरोधात् ॥

"प्राणोऽसि" इत्यादिवाक्ये प्राणादिशब्दवाच्यः परमात्मा हिततमत्वाऽनन्तत्वादिधर्माणां परमात्मपरिग्रहेऽवगमात् ॥

प्राणादिशब्दवाच्यं ब्रह्म न भवति, कुतः ? "मामेव विजानीही"ति वक्तृस्वरूपाभिन्नोपदेशादिति चेत्, अस्मिन्प्रकरणे परमात्मसम्बन्धस्य बाहुल्यमस्त्यतः प्राणेन्द्रादिपदार्थः परमात्मैव ॥

इन्द्रो हि सर्वस्य ब्रह्मात्मकत्वमवधार्य "मामेव विजानीही"ति शास्त्रदृष्ट्या युक्तमुक्तवान् । तत्र "कः शोकः को मोह एकत्वमनु पश्यत" इत्यादि शास्त्रं "यथाऽहं मनुरभवं सूर्यश्चे"ति वामदेव उक्तवान् तद्वत् ॥

"न वाच्यं विजिज्ञासीत, वक्तारं विद्यात्रिशीर्षाणं त्वाष्ट्रमहनि"त्यादिजीवलिङ्गात् "प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयती"ति मुख्यप्राणलिङ्गाच्च नात्र ब्रह्मपरिग्रह इति चेत्, नोपासकतारतम्येन, ब्रह्मोपासनायास्त्रैविध्याज्जीववर्गान्तर्यामित्वेन, तदुभयविलक्षणेन चान्यत्राश्रितत्वादिहापि तद्योगात् ॥

(५) भैक्षया:—अत एव प्राण इत्यधिकरणे, विरुद्धलिङ्गाभावाल्लिङ्गेनैव ब्रह्मावधृतम् । इदानीं यत्र विरुद्धनानालिङ्गानि सन्ति तत्र लिङ्गमात्रं न नियामकम्, अतस्तथाविधं प्राणवाक्यं लिङ्गविरोधपूर्वकं हेत्वन्तरेण ब्रह्मपरतया अत्रावधारणीयमित्यपौनरुक्त्यं न केवलं लिङ्गादेव प्राणो ब्रह्म, अपि तु अनुगमादपीति तथाशब्दार्थः । ज्योतिरधिकरणेन व्यवधानं च तदधिकरणस्य न्यायस्योत्तरसूत्रे आश्रितत्वादित्यनेनानुकर्षार्थमिति मन्तव्यम् । कौषीतकीब्राह्मणोपनिषदि इन्द्रप्रतर्दनाख्यायिकायां "प्रतर्दनमिन्द्र उपदिदेश प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमुपास्स्वे"ति । तत्र संशयः, प्राणोऽत्र इन्द्रो, वायुविशेषो जीवः, परमात्मा वेति । चतुर्णामपि लिङ्गदर्शनात् । तत्र तं मामायुरमृतमुपास्स्वेति इन्द्रदेवतालिङ्गम्, अथ खलु प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयतीति प्राणलिङ्गं, "न वाचं विजिज्ञासीत वक्तारं विद्यादि"ति जीवलिङ्गम्, "एष ह्येव साधु कर्म कारयति यमूर्ध्वं निनीषते", "स एष प्राण एव प्रज्ञात्मा आनन्दोऽजरोऽमर"इति च ब्रह्मलिङ्गमिति । तत्रायं निर्णयः— प्राणो अत्र ब्रह्म, कुतः, अनुगमात्, ब्रह्मण इन्द्रादिषु विष्वेवानुगमात्, सर्वलिङ्गोपपत्तेरिति शेषः । तेषु चानुपपत्तेरिति भावः । ब्रह्म हि सर्वरूपं "सर्वं खल्विदं ब्रह्म तज्जलान् तदनुप्रविश्य सच्च त्यच्चाभवदि"त्यादिश्रुतेः । अतः सर्वे धर्मा इन्द्रत्वादयस्तत्र सम्भवन्ति, इन्द्रादिधर्मास्तु न प्राणादिष्विति अनुगमादिति हेतुमेव विवृणोति त्रिभिरपसूत्रैः । ननु प्राणोऽस्मि प्रज्ञात्मेतीन्द्रस्योपदेष्टुः स्वात्मोपदेशात्प्राणो न ब्रह्म, किन्तु बलादियोगादिन्द्र एवेति चेद्, हि यस्मादस्मिन्प्रकरणे अध्यात्मसम्बन्धप्राचुर्यमेव वर्तते, नाधिदैवसम्बन्धप्राचुर्यमिति शेषः । आत्मानं जीवमधिकृत्य वर्तते यत् तदध्यात्मं प्राणादिकं 'स्वभावोऽध्यात्ममुच्यते' इति स्मृतेः, स्वस्यात्मनः पदार्थजातमिति तस्यैव सम्बन्धप्राचुर्यं दृश्यते, "न वाचं विजिज्ञासीत वक्तारं विद्यादि"त्युपक्रम्य, "तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिता एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राश्च प्राणेष्वर्पिताः स एष प्राण एव प्रज्ञात्मा आनन्दोऽजरोऽमर"इत्यादिष्विति । प्रज्ञामात्रा ज्ञानेन्द्रियांशाः । अतो अत्र सर्वोपकरणसहितो जीवो अवश्यं ग्राह्यः । तथा च नेन्द्रपरिग्रहः सम्भवति । इन्द्रस्य प्रतिनियताधिकारेण सर्वानुगतत्वाभावादिति । यच्च "त्रिशीर्षाणं त्वाष्ट्रमहनमरुन्मुखान् यतीन् शालावृकेभ्यः प्रायच्छन्तस्य मे तत्र लोमापि न मीयत" इति वाक्यं तदिन्द्रस्य प्राणत्वे लिङ्गं न भवति, ज्ञानस्तुतिपर-

स्यात्तद्वाक्यस्येति । कथं तर्हि वक्तुरात्मोपदेश उपपद्यतां तत्राह । "तं मामुपास्व" इत्युपदेशस्तु "एष त आत्मा तत्त्वमसी" त्यादिशास्त्रीयज्ञानादेव मन्तव्यो यथा वामदेवस्येत्यर्थः । यथा हि वामदेवो यः ऋषिविशेषो वा स्वस्यात्मा ब्रह्मेति ज्ञात्वा ब्रह्मण्यात्मभावेन "अहं मनुरभवं सूर्यश्चे"ति शास्त्रीयज्ञानवानभूत् "तद्धैतत्पश्यन् ऋषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्चे" त्यादिश्रुतेः । तथैवेन्द्रोऽपि परमात्मानं स्वस्यात्मानं ज्ञात्वोपदिदेश "मामुपास्वे"ति न तु देवात्मानं, "स म आत्मेति विद्यादि"ति पारोक्ष्येणैवोपसंहारादिति । प्रतिपादितं च पञ्चसूत्र्यां ब्रह्मणो मुख्यमात्मत्वं स्वतः सदा सर्वद्रष्टृत्वात् । जीवानां च कादाचित्कात्यल्पतदधीनज्ञानयोग्यतामात्रेण गौणमात्मत्वं ब्रह्मत्ववत् "तमेवं मन्य आत्मानं विद्वान् ब्रह्मामृतोऽमृतं नान्योऽतोऽस्ति द्रष्टा ।", "ते चैनं नाभिनन्दन्ति पश्यंविशकमच्युत । ईश्वरेच्छावशात्सोऽपि जडात्मा कथ्यते बुधैः" ॥ इत्यादिश्रुतिस्मृतिपरम्पराभिः, अतो नेह प्रस्तूयते । ननु देवतालिङ्गाभावेऽपि जीवस्य पञ्चवृत्तेः प्रधानप्राणस्य चोपवर्णितलिङ्गाभ्यां तावेव प्राणशब्दार्थौ युक्तौ, न ब्रह्म तल्लिङ्गद्वयानुपपत्तेरिति चेन्न । उपासात्रैविध्यात् । जीवप्राणब्रह्मधर्मैरत्र उपासायास्त्रैविध्यं श्रूयते । तथा चात्र जीवादीनामुपास्यत्वे जीवोपासनं, प्राणोपासनं ब्रह्मोपासनं चेति, वाक्यभेदः स्यादित्यर्थः । ननु ब्रह्मपरत्वेऽप्युपासात्रैविध्येन वाक्यभेदः स्यात्, नेत्याह तद्योगादिति । इह एकस्मिन्नेव ब्रह्मणि प्रकारत्रयेणैकस्या एवोपासाया युक्तत्वात् उपास्यधर्म्यभेदादित्यर्थः । इदमपि क्व दृष्टं तत्राह आश्रितत्वादिति । तथा चेतोऽर्पणनिगदादित्यनेन पूर्वाधिकरणे गायत्रीरूपेण "पादोऽस्य विश्वा भूतानी" त्यादिपुरुषधर्मेण चैकस्यैव ब्रह्मण एकस्या उपासाया आश्रितत्वादित्यर्थः । उपासात्रैविध्यं च जीवरूपेण, मुख्यप्राणरूपेण, "स न साधुना कर्मणा भूयानि" त्यादिना स्वरूपेण चैकस्या एवोपासायास्त्रिप्रकारत्वम् । नीलं सुगन्धिमहदुत्पलमितिवदिति । अत्र शास्त्रदृष्ट्येत्याद्युक्तसूत्रे जीवब्रह्मणोरेकांशवदखण्डताऽऽचार्य्यसम्मता न भवतीत्यवधारणीयम् । अखण्डत्वे हि जीवधर्मोऽपि ब्रह्मधर्म एवेत्युपासाद्वैविध्यमेव स्यात् । तथा पूर्वपक्षोऽपि जीवलिङ्गेन न स्यात्, यदीन्द्रस्य मामुपास्वेत्युक्तिः । शास्त्रदृष्ट्येत्यादिसूत्रेणाखण्डतया समाहिता स्यात्, तदा तुल्यन्यायतयेतरस्य जीवधर्मस्यापि समाधाने सिद्धे पुनर्जीवलिङ्गानुदयादिति ।

(६) भास्कराचार्य्याः—अस्ति कौषीतकीनां प्रतर्दनविद्या । "प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम युद्धेन च पौरुषेण चे" त्यारभ्याम्नाता । तत्र श्रूयते "स होवाच प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्वे"ति । तथोत्तरत्र "अथ खलु प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयती"ति तथा, "न वाचं विजिज्ञासीत वक्तारं विद्यादि"ति । समाप्तौ च "स एष प्रज्ञात्माऽऽनन्दोऽजरोऽमृत" इति । किमत्र प्राणशब्देन वायुमात्रमभिधीयते किं देवताऽऽत्मा उत जीवोऽथवा परं ब्रह्मेति नानालिङ्गदर्शनात् संशयः । किं तावद् युक्तम् ? देवताऽऽत्मेन्द्रः प्राणशब्दो भवेत् । "प्राणो हि बलं तस्य तेजो देवता या च काचन कृतिरिन्द्रकर्मैव तदि" त्यभियुक्तवचनात् । मुख्यप्राणो वा स्यात् प्रसिद्धेरिति प्राप्तेऽभिधीयते । प्राणः परमात्मा तथा ब्रह्मप्रतिपादनपरत्वेन वाक्यानां समन्वयादुपक्रमे तावद्वरं वृणीष्वेतीन्द्रेणोक्तः प्रतर्दनः प्रोवाच । त्वमेव मे वरं वृणीष्व यं त्वं मनुष्याय हिततमं मन्यस इति । हिततमं च ब्रह्मप्राप्तेरन्यत्रोपपद्यते तं मामायुरमृतमुपास्वेति च ब्रह्मपरिग्रहेऽवकल्पते । "स एष प्राण एव प्रज्ञात्माऽऽनन्दोऽजरोऽमृत" इति चोपसंहारोऽवकल्पते ॥

पूर्वपक्षाभिप्रायः प्रदर्श्यते । न वक्तुरिन्द्रस्यात्मोपदेशाद् विग्रहवान् देवताविशेषः स्वमात्मानं

प्रतर्दनायोवाच । "मामेव विजानीहि प्राणोऽस्मि प्रज्ञात्मे"ति । निश्चिते च देवतात्मोपदेश उपक्रमवशेनानन्दोऽजरोऽमृत इत्युपसंहारो नेतव्यः, कस्मादुपक्रमे यद्विज्ञातं तदनुपजातविरोधित्वात् तथैव ग्रहीतव्यं तद्विरोधित्वादुपसंहारविज्ञानं तद्वशेनावतिष्ठते । अन्यथा ह्येकवाक्यता न स्यादिति प्राप्ते, समाधानमुच्यते । अध्यात्मसम्बन्धभूमा ह्यस्मिन्निति । आत्मन्यध्युपरि वर्तमानः सम्बन्धोऽध्यात्मसम्बन्धः प्रत्यगात्मविषयसम्बन्धभूयस्त्वादित्यर्थः । अस्मिन्नध्याये "यावद्ध्यस्मिन् शरीरे प्राणो वसति तावदायुरि"ति प्राणस्यैव प्रज्ञात्मनः स्वातन्त्र्यं दर्शयति । तथा प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयतीति "न वाचं विजिज्ञासीत वक्तारं विद्यादि"ति चोपक्रम्य "तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिता एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणेऽर्पिताः स एष प्राण एव प्रज्ञात्माऽऽनन्दोऽजरोऽमृत" इति सर्वाश्रयं नाभिभूतं परमात्मानमेवोपसंहरति । स म "आत्मेति विद्यादिति चोपसंहरति । "अयमात्मा ब्रह्म सर्वानुभूतिरि"ति च श्रुत्यन्तरम् । तस्मादात्मविषयवाक्यभूयस्त्वान्न देवतात्मोपदेशः शक्यो विज्ञातुम् ।

कथं तर्हि वक्तुरात्मोपदेशस्तदुच्यते । इन्द्रो देवताविशेषः स्वमात्मत्वेनाहमेव परं ब्रह्मेत्यार्षेण दर्शनेन पश्यन्नुपदिशतिस्म "मामेव विजानीही"ति, "यथा तद्धैतत् पश्यन्नृषिर्वामदेवः प्रतिपेदेऽहं मनुरभवं सूर्यश्चे"ति । तस्माद्वक्तुरात्मोपदेशः परमात्मपरिग्रहे न विरुध्यते ॥

पुनः प्रत्यवतिष्ठते । यद्यपि देवतात्मोपदेशो न भवति, तथापि न ब्रह्मोपदेशपरत्वमस्मिन्नध्याये प्रतिपत्तुं शक्यत इति तदेतच्चोद्यमुपन्यस्य निराकर्तुमाह । न ब्रह्मप्रतिपत्तिरेकान्तेनाश्रयितुं शक्या, कुतः ? जीवलिङ्गान्मुख्यप्राणलिङ्गाच्च । जीवलिङ्गं तावत् "न वाचं विजिज्ञासीत वक्तारं विद्यादि"ति । मुख्यप्राणलिङ्गम् "अथ खलु प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयती"ति । तस्मान्न ब्रह्मवाक्यमिति त्वेतदेवं उपासात्रैविध्यादेवं सति त्रिविधमुपासनं प्रसज्येत जीवोपासनं मुख्यप्राणोपासनं ब्रह्मोपासनं चेति । अत्र चोपक्रमोपसंहारयोरेकार्थपरत्वादेकमिदं वाक्यं निश्चितम् । कथं पुनरुपक्रमोपसंहारयोरेकार्थपरत्वं ? हिततमोपदेशादुपक्रमे तं मामायुरमृतमुपास्वेत्यमृतशब्दात् "स एष प्राण एव प्रज्ञात्माऽऽनन्दोऽजरोऽमृत" इत्युपक्रमोपसंहारौ दृश्येते । तन्मध्यपतितानां वाक्यानां तत्परत्वेनान्वयो युक्तो नार्थान्तरत्वं वाक्यभेददोषप्रसङ्गात् । जीवप्राणलिङ्गयोश्च परमात्मपरत्वेन परिणेतुं शक्यत्वात्, प्राणस्तावत् परमात्मा यतस्तथा च श्रुतिः "न प्राणेन नापानेन मर्त्यो जीवति कश्चन । इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ" इति । जीवलिङ्गमपि परिणेतुं शक्यं "न वाचं विजिज्ञासीत वक्तारं विद्यादि"ति । वचनक्रियाहेतुभूतं परमात्मानमात्मत्वेन विद्यादित्यर्थः । तथा च श्रुतिः "यद्वाचानभ्युदितं येन वागभ्युद्यते तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासत" इति । येन वागिन्द्रियं प्रवर्त्यते सर्वान्तरं तदेव ब्रह्म त्वं विद्धि नेदं दृश्यजातं शरीरेन्द्रियविषयसञ्ज्ञं यदिदमुपासते प्राणिनः सेवन्त इत्यर्थः । एवं च सर्वकार्यकारणप्रत्याख्यानेनान्तर्यामिनं सामान्यभूतं वेदितव्यम् । उक्तमुपसंहरति "न वाचं विजिज्ञासीत वक्तारं विद्यात् तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिता एवमेवैता भूतमात्रा" इत्युक्त्वा "स एष प्राण एव प्रज्ञात्माऽऽनन्दोऽजरोऽमृतः स न साधुना कर्मणा भूयान्नो एवासाधुना कनीयानेष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषत एष उ एवासाधु कर्म कारयति तं यमेभ्योऽधो निनीषत एष लोकपाल एष लोकाधिपतिः स म आत्मेति विद्यादि"ति । अन्यत्रापि ब्रह्मणि प्राणशब्दप्रवृत्तेराश्रितत्वात्, "प्राणबन्धनं

हि सोम्य मन" इति । इह तु तदनुपपत्तेः । अपरे तु त्रिविधमुपासनमिह विवक्षितमिति सूत्रार्थं वर्णयन्ति । प्राणोपासनं जीवोपासनं ब्रह्मोपासनमिति । एतदुक्तं भवति प्राणधर्मेण जीवधर्मेण स्वधर्मेण तुल्योपास्यमिति ॥

(७) श्रीमद्वल्लभाचार्यमतेऽयमभिप्रायः—कौशीतकिब्राह्मणोपनिषदि श्रूयते । "प्रतर्दनो ह वै दैवोदासिरि"त्यारभ्य, "एष लोकपालः एष लोकाधिपतिरेष लोकेशः, स म आत्मेति विद्यादि"-त्यन्तः सर्वोऽध्याय इन्द्रप्रतर्दनसंवादः । तत्रोपक्रमे वरदानमुपक्षिप्य, "मामेव विजानीहि, एतदेवाहं मनुष्याय हिततमं मन्ये" इति स्वोपासनं विधाय, ततस्त्वाष्ट्रवधादिना आत्मानं प्रशस्य, स्वोपासनायाः फलं सर्वपापाभावं प्रतिपादितवान् । ततः कस्त्वमिति विवक्षायां, 'प्राणो वा अहमस्मि प्रज्ञात्मानं मामायुरमृतमित्युपास्स्वे'ति प्रज्ञात्मप्राणगुणकां द्वितीयां स्वोपासनां विधाय, आयुषः प्राणत्वं प्राणस्यामृतत्वं चोपपाद्य, तेन क्रियाशक्तिं प्रशस्य, "प्राणेन ह्येवामुष्मिन् लोकेऽमृतत्वमाप्नोती"त्यमृतत्वरूपं फलं प्राणसंयोगेन प्रतिपादितवान् । ततो "जीवति वागपेत" इत्यादिना "प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयती"त्यन्तेन ज्ञानशक्तिं प्रशस्य "एतदेव उक्थमुपासीते"ति तस्यैवोक्थगुणकामुपासनां विधाय, ततो "न वाचं विजिज्ञासीत वक्तारं विद्या"दित्यादिना ज्ञानशक्तिमन्तं प्रशस्य, अग्रे "ता वा एता दशैव भूतमात्रा" इत्यारभ्य, "न ह्यन्यतरतो रूपं किञ्चन सिध्येदि"त्यन्तेन क्रियाज्ञानशक्त्योः परस्परसापेक्षतया स्वविषयभूतजगत्साधकत्वं प्रतिपाद्य, ततो, "नो एतन्नाने"ति प्रतिज्ञाय, "तद् यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिताः एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः, प्रज्ञामात्राः प्राणेऽर्पिताः, स एव प्राणः प्रज्ञात्माऽऽनन्दोऽजरोऽमृत" इत्यादिब्रह्मधर्मानुक्त्वा, "स म आत्मेति विद्यादि"त्युपसंहृतम् ।

तत्र संशयः । किमत्रेन्द्रस्यात्मा वा, मुख्यः प्राणो वा, सामान्यतो जीवो वा, परं ब्रह्म वा, प्रतिपाद्यत इति । अथवा आन्तं प्राणस्यैव प्रशास्यत्वदर्शनात्, प्राणो वा, ब्रह्म वेति द्विकोटिकः । नच 'अत एव प्राण' इति पूर्वाधिकरणे तल्लिङ्गाद् ब्रह्मत्वं प्रतिपादितमितीहापि तेनैव सन्देहनिवृत्तेः किमित्यधिकरणान्तरारम्भ इति शङ्क्यम् । तत्र प्राणशब्दमात्रे सन्देहाल्लिङ्गस्य बलिष्ठत्वेन बाधकाभावाच्च तावन्मात्रेण सन्देहनिरासस्य सम्भवात् । इह तूपक्रमस्यान्यविधत्वेन प्राणस्य प्रज्ञात्वायुष्ट्वोपपादनेन प्राणशब्दार्थस्यापि सन्दिग्धत्वादन्यलिङ्गरूपबाधकस्यापि सद्भावाच्चलिङ्गेन निर्णयस्यासम्भवादुचित आरम्भ इति ।

पूर्वपक्षस्तु, अस्मिन् वाक्ये प्राणस्य ब्रह्मतासाधकं किमपि न दृश्यते । बाधकानि तु प्राणप्रशंसादिरूपाणि बहूनि दृश्यन्ते । अतोऽत्र प्रतिपाद्यस्य प्राणस्य न ब्रह्मत्वमिति ।

सिद्धान्तस्तु, प्राणः परमात्मैव । कुतः ? तथानुगमात् । पौर्वापर्येणालोच्यमाने वाक्ये पदार्थानां ब्रह्मण्येव समन्वयात् । तथाहि । उपक्रमे तावद् "वरं वृणीष्व" इत्युक्तः प्रतर्दनः "त्वमेव वृणीष्व यत् त्वं मनुष्याय हिततमं मन्यसे" इति परमपुरुषार्थरूपं वरमुपचिक्षेपेति तस्मै हिततमत्वेनोपदिश्यमानः प्राणः कथं परमात्मा न स्यात् । न हि परमानन्दरूपात् परमात्मनोऽन्यः कोऽपि जीवस्य हिततमो भवति । ततः स्वज्ञानेन भ्रूणहत्यादिरूपपापनाश उक्तः, सोऽपि ब्रह्मपरिग्रह एवोपपद्यते । "क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे" इति श्रुतेः । प्रज्ञात्मत्वं च चेतनरूपत्वात् तस्यैव सम्भवति । जीवानामपि तदंशत्वाद् । उपसंहारे"ऽप्यानन्दोऽजरोऽमृतः एव

लोकपाल" इत्यादि। एतदपि निरङ्कुशं ब्रह्मपरिग्रह एवोपपद्यते। तथा 'एष उ एव साधु कर्म कारयती'त्यादिनोक्तं सर्वप्रेरकत्वं च, कर्मलेपराहित्यं च। अतः सर्वत्रानुगमात् प्राणो ब्रह्मेति।

यदुक्तं प्राणो ब्रह्मेति। तन्न युज्यते। कुतः? वक्त्रा इन्द्रेण 'मामेव विजानीही'त्युपक्रम्य, "प्राणो वा अहमस्मि प्रज्ञात्मा, तं मामायुरमृतमित्युपास्स्वे"त्युपासनाविषयत्वेन स्वात्मन एवोपदेशात्, उपक्रमस्य चासञ्जातविरोधित्वेन प्रबलत्वादन्येषामपि पदार्थानां वाचो धेनुत्ववत्तदनुगुणत्वेनेव नेयत्वाच्च। अतो नास्य ब्रह्मोपाख्यानत्वमिति चेत्, न, कुतः? अध्यात्मसम्बन्धभूमा ह्यस्मिन्। हि निश्चयेन अस्मिन् प्रकरणे अध्यात्मसम्बन्धस्य भूमा, आत्मानं परं ब्रह्माधिकृत्य यः सम्बन्धो धर्मस्तस्य बाहुल्यं प्रतीयते। आदावेव परमहितत्वं, स्वज्ञानेन भ्रूणहत्यादिरूपमहापापनिवर्तकत्वम्। उपसंहारे च लोकपालत्वादिकम्'। न ह्येतदिन्द्रे सम्भवति। श्रुत्यन्तरे "विश्वरूपो वै त्वाष्ट्रः पुरोहितो देवानामासीदि"त्युपक्रम्य, "तस्मादिन्द्रोऽबिभेत्, तस्य वज्रमादाय शीर्षाण्यच्छिनत्, तस्याञ्जलिना ब्रह्महत्यामुपागृह्णात्, तां सम्वत्सरमबिभस्तं भूतान्यभ्यक्रोशन्, ब्रह्महन्नि"त्यादिना ब्रह्महत्याविभागश्रावणात्। षष्ठस्कन्धे तदुपबृंहणाद् वृत्रवधेऽपि ब्रह्महत्यास्मरणाच्च। तथा लोकपाललोकेशलोकाधिपतिपदानामर्थावृत्त्या उपचारः साङ्कर्यं च तत्र वार्यते। तदपि तथा। इन्द्रस्य स्वमात्रपालकत्वात्। एवं स्वातन्त्र्येणायुर्दातृत्वं चापि ब्रह्मण एव धर्मो, नेन्द्रस्य, नाप्यासन्यस्य। "न प्राणेन नापानेन मर्त्यो जीवति कश्चन। इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितावि"ति श्रुत्यन्तरात्। तथा प्राणाभिन्नप्रज्ञात्मत्वमपि तस्यैव, सर्वकार्यकर्तृत्वात्। किञ्च, "न वाचं विजिज्ञासीत वक्तारं विद्यादि"त्युपक्रम्य, "तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिता एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणेऽर्पिताः स एष प्राण एव प्रज्ञात्माऽऽनन्दोऽजरोऽमृतो न साधुना कर्मणा भूयान्, नो एवासाधुना कनीयानि"ति, सर्वविधसर्वेन्द्रियव्यापारे अरनाभिभूतं प्रत्यगात्मानमेवोपसंहरति। न हि इदमपि इन्द्रे सम्भवति। ब्रह्महत्यया कनीयस्त्वस्य प्रागेव दर्शितत्वात्। अतः "स म आत्मे"त्युपसंहारोऽप्येतादृशमेवात्मानमिन्द्रसम्बन्धित्वेन परामृशति, न तु देवताजीवम्। अतोऽत्र परमात्मसम्बन्धबाहुल्याद् ब्रह्मोपदेश एवायम्। देवतात्मपक्षे सर्वत्र गौण्यापत्तेश्चेति हिशब्देन सूच्यते।

ननु यद्येवं ब्रह्मण्येवाभिप्रायः स्यात्, तदा अहङ्कारवादेन नोपदिशेत्, अतो नेदं समाधानमिति शङ्कां तुशब्दः परिहरति। अयमेवम्वादो न ब्रह्मवाक्यत्वविघटकतया विभावनीयः। एतस्य वादस्य व्यवहारदृष्ट्यैव दोषत्वेन शास्त्रदृष्ट्या दोषत्वाभावात्। उपदेशस्तु शास्त्रदृष्ट्या आर्षज्ञानेन स्वात्मानं ब्रह्मात्मकमवगत्य इन्द्रेण कृत इति भासमानोप्यहङ्कारवादो न ब्रह्मवाक्यत्वविघटक इत्यर्थः। ननु 'तत्त्वमसि' इत्यादिवाक्येषु जीवस्य ब्रह्मत्वं बोध्यते, तत्र प्रत्यधिकारं शास्त्रप्रवृत्तिरिति न्यायेन स्वात्मन एव ब्रह्मत्वज्ञानं मुख्यमिति प्रतर्दनस्येन्द्रात्मज्ञानमुपासनं वा न पुमर्थाय। यदि च भागत्यागलक्षणया केवलस्य चैतन्यमात्रस्य ज्ञापनादिकमत्रोच्येत, तदा ब्रह्मधर्मा अत्रोक्ता विरुध्येरन्। अतः शास्त्रदृष्टिरपि नेवम्विधा।

किञ्च, क्वचित् सिद्धेऽहङ्कारवादस्य तथात्वेऽत्रापि तथाङ्गीकर्तुं शक्यते, न तु तस्मिन्नसिद्धे इत्यत आह वामदेववदिति। यथा बृहदारण्यके पुरुषविधब्राह्मणे "तद्धैतत् पश्यन् ऋषिर्वामदेवः प्रतिपेदे अहं मनुरभवमहं सूर्यश्चे"ति वामदेवस्याहङ्कारवाद उपदिश्यते, तद्वत्। अयमर्थः। यत्र वामदेवस्याहङ्कारवाद उक्तः, तत्रैव "यो यो देवानां प्रत्यबुध्यत तथर्षीणां स सर्वमभव"दिति प्रतिबुद्धानां सर्वात्मभावोऽप्युक्तः। तत्र सर्वेषां सर्वभावे सर्वानन्त्यप्रसङ्गात् सर्वमेकमेवेति वक्तव्यम्। तादृशं च सर्वोपादान-

त्यात् सर्वात्मकं ब्रह्मैवेति प्रतिवुद्धानां तत्र लयेन सर्वात्मभावो वक्तव्यः । तथा सति 'मनुरभवमहं
सूर्यश्चे'ति वाक्ययोस्तो योऽयमुत्याऽनुवादः स्वसर्वत्वविष्यंशं पृथक्कृत्य मन्वाद्यनुवादरूपः सोऽनुपपन्नः
स्यात् । 'न प्रेत्य सञ्ज्ञास्ती'ति श्रुत्यन्तरेण ब्रह्मणि लये स्वानुसन्धानाभावबोधनात् । अतस्तस्य योऽह-
ङ्कारवादः स ब्रह्मात्मभावेनैव, न तु स्वात्मभावेनेति सिद्धम् । अतस्तत्र यथा स न ब्रह्मवाक्यबा-
धकः, तथायमपीति, न ब्रह्मधर्मोक्तीनामपि विरोधः । ब्रह्मण एवायोक्तत्वात् । नच, यद्ययं शास्त्र-
दृष्ट्या ब्रह्मोपदेशः, तदात्र जगत्कर्तृत्वादयः कुतो नोक्ताः । इन्द्रकर्तृकास्त्वाष्ट्रवधादय एव च कुत
उक्ता इति शङ्क्यम् । त्वाष्ट्रवधस्यापि ब्रह्मधर्मत्वात् । "नन्वेष वज्रस्तव शक्र तेजसा हरेर्दधीचेस्तपसा
च तेजितः, तेनैव शत्रुं जहि विष्णुयन्त्रित" इति षष्ठस्कन्धे वृत्रवाक्येन तथावसायात् । नन्वेतद्सङ्ग-
तम् । "स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं ही"ति सूत्रे सुषुप्तिब्रह्मसम्पत्तिदशयोरेव ब्रह्मधर्माविर्भा-
वस्य सूत्रकृतोपगतत्वादवस्थान्तरे तदङ्गीकारस्य सूत्रविरुद्धत्वादिति चेत्, न; वाक्यानां सूत्रोपजीव्य-
त्वेन तदविरोधाय सौत्रे सम्पत्तिपदे उत्तमाधिकारावस्थाया अपि सङ्ग्राह्यत्वेनाविरोधात् । अन्यथा,
"मय्येव सकलं जातं मयि सर्वं प्रतिष्ठितमि"त्यादीनां विरोधापत्तेः । नन्वत्र ब्रह्मधर्माविर्भावमात्रेण
वामदेवदृष्टान्तो न युक्तः । तस्य पूर्णज्ञानित्वादिन्द्रस्य चावेशित्वेन तद्वैषम्यात् । न चेन्द्रस्यापि पूर्ण-
ज्ञानित्वं शङ्क्यम् । तथा सतीन्द्रस्यापि वामदेववद् ब्रह्मभावापत्तेः । ज्ञानिनोऽपि ब्रह्मभावं विना
मुक्त्यभावात् । "इहैव समवनीयन्ते प्राणा" "ब्रह्मैव सन् ब्रह्माप्येती"ति मुक्तिबोधकश्रुतौ ब्रह्मभावे सत्येव
मोक्षकथनात् । "ब्रह्म वेद ब्रह्मैव भवती"ति श्रुत्यन्तरे ज्ञानेन ब्रह्मभावश्रावणाच्च । एवं सिद्धे ज्ञानेन
ब्रह्मभावे मुक्त्यनुक्तावपि तस्य सिद्धत्वेन वैषम्याभावात् । न च ब्रह्मभावस्य तद्व्यातितादात्म्यनिष्प-
पञ्चतद्भेदान्यतमस्फूर्तिरूपतया उपदेशाप्रयोजकत्वमिति शङ्क्यम् । तस्य स्वस्मिन् ब्रह्मधर्माविर्भावपू-
र्वकब्रह्माभेदस्फूर्त्यात्मकत्वेनादोषात् । न चात्र मानाभावः । सर्वभावस्फूर्तिबोधकश्रुतेरेव मानत्वात् ।
अतो वैषम्याभावाद् युक्तो दृष्टान्तः । एतावान् परं विशेषो यन्मुक्तस्य सार्वदिकः, आवेशिनस्तु कादा-
चित्को भगवद्विचारितकार्यकाल एवोद्गच्छति, नान्यदेति । तस्मात् सूत्रोक्तमुपपन्नतरम् ।

अत्र बाधकत्रयमन्यदाशङ्क्य परिह्रियते ।

ननु यथा ब्रह्मधर्मा अत्र भूयांसः श्रुताः, तथा जीवधर्मा मुख्यप्राणधर्माश्च बाधकाः सन्ति । तत्र
"न वाचं विजिज्ञासीत वक्तारं विद्यादि"त्यादिर्वागादिकरणाध्यक्षं जीवं विशेयत्वेन बोधयति । "अथ
खलु प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयती"ति च प्राणधर्मम् । "मा मोहमापद्यथा अह-
मेवैतत् पञ्चधाऽऽत्मानं प्रविभज्यैतद् बाणमवष्टभ्य विधारयामी"ति श्रुत्यन्तरेण शरीरधारणस्य प्राणधर्म-
त्वनिश्चयात् । बाणं शरीरम् । न चैवं परस्परं वाक्यानां बाध्यबाधकभावेन न कस्यापि प्रकरणित्व-
निश्चय इति वाच्यम् । "यो वै प्राणः सा प्रज्ञा, या प्रज्ञा स प्राण" इति वाक्येन जीवमुख्यप्राणयो-
रङ्गीकारे प्राणप्रज्ञयोः सहवृत्त्या तयोस्तत्तद्भावोपचारसौकर्येण, "स यदास्माच्छरीरादुत्क्रामती"ति
"सहैवैतैः सर्वैरुत्क्रामती"ति वाक्योक्तोत्क्रान्तिसामञ्जस्येन च जीवमुख्यप्राणयोरेकपरिग्रहस्यौचित्याद्,
ब्रह्मणस्तु, व्यापकत्वेनोत्क्रान्त्यसामञ्जस्यात् । अतो जीवमुख्यप्राणलिङ्गादस्य न ब्रह्मवाक्यत्वमिति चेत्,
न; उपासात्रैविध्यात् । आपाद्यमानत्रैविध्यात् । कथमिति चेत् ? इत्थम्; अत्र हि वक्तृजीवमुख्य-
प्राणब्रह्मणां लिङ्गान्युपलभ्यन्ते । तत्र वक्तृलिङ्गस्य ब्रह्मपरत्वं पूर्वसूत्रयोरुपपादितम् । अतस्त्रयाणां
स्वतन्त्रत्वं वा, लिङ्गद्वयस्य ब्रह्मपरत्वं वाऽवशिष्यते । तत्र लक्षणादोषराहित्यरूपया युक्त्या आद्याङ्गीकारे
मामित्यस्यार्थत्रयकल्पनेन, विजानीहि इत्यस्यावृत्त्या वाक्यभेदः प्रसज्येत । एवकारार्थविरोधश्च स्यात् ।

श्रीशङ्कराचार्यादिविभिन्नमतप्रवर्तकाचार्याणां मतेषु कीदृशानि व्याख्यानानि, कुत्र कथं मतभेद इति तत्तदधिकरणान्ते प्रदर्शितम् । तत्र, क्वचन मूलसूत्रपाठेऽपि पाठभेदमादृत्य व्याख्यायते । कस्मिन्सूत्रे केन कीदृशः पाठः स्वीकृतस्तदर्थमत्र पाठभेदपूर्वकं सूत्रपाठोऽपि प्रकाश्यते—

( अयं सूत्रपाठ डेक्कनकलाशालाध्यापकैर्गोलोकवासिभिः प्रोफेसरगमलालशास्त्रिभिः सङ्गृहीतः )

प्रथमाध्याये प्रथमः पादः ।

॥ प्रथममेकसूत्रं जिज्ञासाधिकरणम् ॥ १ ॥

१ अथातो ब्रह्मजिज्ञासा ॥ १ ॥

॥ द्वितीयमेकसूत्रं जन्माद्यधिकरणम् ॥ २ ॥

२ जन्माद्यस्य यतः शास्त्रयोनित्वात् ॥ १ ॥[1]

॥ तृतीयमेकसूत्रं समन्वयाधिकरणम् ॥ ३ ॥

३ तत्तु समन्वयात् ॥ १ ॥

॥ चतुर्थं सप्तसूत्रमीक्षत्यधिकरणम् ॥ ४ ॥

४ ईक्षतेर्नाशब्दम् ॥ १ ॥

५ गौणश्चेन्नात्मशब्दात् ॥ २ ॥

६ तन्निष्ठस्य मोक्षोपदेशात् ॥ ३ ॥

७ हेयत्वावचनाच्च ॥ ४ ॥[2]

८ स्वाप्ययात् ॥ ५ ॥

९ गतिसामान्यात् ॥ ६ ॥

१० श्रुतत्वाच्च ॥ ७ ॥

॥ पञ्चममष्टसूत्रमानन्दमयाधिकरणम् ॥ ५ ॥

११ आनन्दमयोऽभ्यासात् ॥ १ ॥

१२ विकारशब्दान्नेति चेन्न प्राचुर्यात् ॥ २ ॥

१३ तद्धेतुव्यपदेशाच्च ॥ ३ ॥

१४ मान्त्रवर्णिकमेव च गीयते ॥ ४ ॥[3]

१५ नेतरोऽनुपपत्तेः ॥ ५ ॥

१६ भेदव्यपदेशाच्च ॥ ६ ॥

१७ कामाच्च नानुमानापेक्षा ॥ ७ ॥

१८ अस्मिन्नस्य च तद्योगं शास्ति ॥ ८ ॥

---

१. सर्वेऽप्येकदेशिन इह योगविभागमङ्गीकृत्य 'शास्त्रयोनित्वात्' इतिसूत्रभागं पृथक्सूत्रत्वेन पठन्ति । २. हेयत्वावचनाच्चेति सूत्रस्याग्रे 'प्रतिज्ञाविरोधात्' इति पृथक्सूत्रं निम्बार्करामानुजशैवाः पठन्ति । ३. श्रीमद्गोस्वामिगोकुलनाथारमणश्रीमथुरानाथाः सर्वेऽप्येकदेशिनश्च 'गीयते' इतीह पठन्ति ।

॥ षष्ठं द्विसूत्रमन्तस्तद्धर्माधिकरणम् ॥ ६ ॥

१९ अन्तस्तद्धर्मोपदेशात् ॥ १ ॥

२० भेदव्यपदेशाच्चान्यः ॥ २ ॥

॥ सप्तममेकसूत्रं तल्लिङ्गाधिकरणम् ॥ ७ ॥

२१ आकाशस्तल्लिङ्गात् ॥ १ ॥

॥ अष्टममेकसूत्रमतिदेशाधिकरणम् ॥ ८ ॥

२२ अत एव प्राणः ॥ १ ॥

॥ नवमं चतुःसूत्रं ज्योतिश्चरणाधिकरणम् ॥ ९ ॥

२३ ज्योतिश्चरणाभिधानात् ॥ १ ॥

२४ छन्दोऽभिधानान्नेति चेन्न तथाचेतोर्पणनिगदात्तथा हि दर्शनम्[1] ॥ २ ॥

२५ भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॥ ३ ॥

२६ उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ॥ ४ ॥

॥ दशमं चतुःसूत्रमनुगमाधिकरणम् ॥ १० ॥

२७ प्राणस्तथानुगमात् ॥ १ ॥

२८ न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन् ॥ २ ॥

२९ शास्त्रदृष्ट्या तूपदेशो वामदेववत् ॥ ३ ॥

३० जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात्[2] ॥ ४ ॥

इति श्रीमत्कृष्णद्वैपायनविरचिततत्त्वसूत्रेषु समन्वयाख्ये प्रथमाध्याये विचारशास्त्रसमर्थनपूर्वकशाब्दसन्देहनिवारकः प्रथमश्चरणः ॥ १ ॥

---

१. 'चेतोर्पणनिगमात्' इति निम्बार्करामानुजपाठः । २. अत्र भास्करपाठोऽस्पष्ट इति श्रीमन्मलालशास्त्रिणः । वस्तुतः, तन्मते उपासात्रैविध्यादित्यन्तमेव सूत्रम् ।



श्रीकृष्णाय नमः ।

श्रीगोपीजनवल्लभाय नमः ।

श्रीमदाचार्यचरणकमलेभ्यो नमः ।

# श्रीमद्ब्रह्मसूत्राणुभाष्ये

## गोस्वामिश्रीगिरिधरजित्कृतविवरणसमेते

## प्रथमाऽध्याये द्वितीयः पादः ।

### १ सर्वत्र प्रसिद्धोपदेशाधिकरणम् ।

( पूर्वपादानुसन्धानम् )

सर्वत्र प्रसिद्धोपदेशात् ॥ १।२।१ ॥

समन्वये प्रथमेऽध्याये सर्वेषां वेदान्तानां ब्रह्मणि समन्वयो वक्तव्यः । तत्रोद्गीथाद्युपासनावाक्यानां मुख्यवाक्येषु फलोपकार्यङ्गत्वम् । ब्रह्मवाक्यानां पुनर्निःसन्दिग्धानां समन्वयः स्वतःसिद्धः । सन्दिग्धानि द्विविधानि । शब्दतोऽर्थतश्च ।

---

अथ समन्वयाध्यायान्तर्गते अर्थसन्देहनिवारके द्वितीयपादे चतुर्भिः सूत्रैः प्रसिद्धोपदेशाधिकरणमार-
चयन्ति—सर्वत्र प्रसिद्धोपदेशात् । पूर्वपादस्य शब्दसन्देहनिवारकत्वं वक्तुं भूमिकामारचयन्ति—
समन्वयेत्यारभ्य शब्दसन्देहो निवारित इत्यन्तेन । समन्वये समन्वयनामके । सर्वेषामिति ।
नानाशाखागतानामित्यर्थः । वेदान्तानां उपनिषदां समन्वयः वाच्यवृत्त्या तात्पर्यज्ञानादिसहकार्येणा-
परब्रह्मरूपैकार्थविषयकशाब्दबोधजनकत्वरूपो वक्तव्य इति । परमाप्तिसाधनार्थमिति शेषः । ननु तत्तदुप-
निषत्सु उपासनाबोधकानि वाक्यान्यपि सन्ति तेषां कोपयोग इत्यत आहुः—तत्रेति । तेषु उपनिषत्सु
मध्ये । उद्गीथेति । छान्दोग्यारम्भ एवोक्तानां 'मुद्गीथमुपासीते'त्यादि वाक्यानां उद्गीथशब्देन प्रणवः "अथ
खलु उद्गीथः स प्रणवः यः प्रणवः स उद्गीथः" इत्यादि छान्दोग्येऽभिहितम् । मुख्यवाक्येषु उपास-
नायां फलसम्बन्धबोधकेषु तथा चादित्यादिषु प्रणवेन ब्रह्मोपासना उद्गीथोपासना तद्धर्मोपदेशाधिकरणे
विषयवाक्योक्ता । आदिशब्देन सर्वाप्युपासना गृह्यते । तत्तदुपासनां फलबोधकवाक्यैर्लोकोत्तरफलदा-
तृत्वं भगवतो ज्ञायते तेन च माहात्म्यज्ञानमुत्पद्यते । 'आत्मेत्युपासीते'त्यादिवाक्योक्तब्रह्माभेदोपासनया
स्वस्मिन् यथा स्वाभाविकी प्रीतिस्तथा भगवत्यपि स्वाभाविकी प्रीतिरुत्पद्यते । इयमेव माहात्म्यज्ञानपूर्वकं
स्वाभाविकी प्रीतिर्भक्तिपदवाच्या । एवं चैतादृशी भक्तिरेव परब्रह्मप्राप्तिरूपफलोपकारिणीत्युच्यते । अनया
रीत्योपासनावाक्यानां फलोपकार्यङ्गत्वमिति भावः । एवं रीत्या परम्परयोपासनावाक्यानां ब्रह्मणि समन्वयं साधयित्वा साक्षात्केषाञ्चिद्वाक्यानां समन्वयं साधयन्ति—सन्दिग्धानीति । ईक्षत्यधिकरणारम्भे
यानि चतुर्विधानि सन्दिग्धानि वाक्यान्युक्तानि तान्येव प्राणाकाशादिशब्दतो गायत्र्यादीनामर्थतो द्विवि-
धानीत्यर्थः । एवं रीत्या सिद्धस्य साधनं नास्तीत्यतो निःसन्दिग्धब्रह्मवाक्यभिन्नानां सर्वेषां वेदान्तवा-

तदर्थं चैतद्विचारितम्। ब्रह्मणि व्यवहारोऽस्ति कश्चिन्न वेति। तत्र प्रथमसूत्र एव व्यवहारः स्थापितः–"यतो वाचो निवर्तन्ते" (तै. २।४) इत्यादीनां विशेषेणेदमित्थतया निरूपणनिषेधनपरत्वम्। एवमेव कार्यसिद्धेः। अधीतानां ब्रह्मवाक्यानां चतुर्लक्षण्या ब्रह्मपरत्वे सिद्धे श्रवणं सिध्यति। श्रुतस्य कालान्तरेऽप्यसम्भावनाविपरीतभावनानिवृत्त्यर्थं पूर्वस्थितानामङ्गानामनपेक्षितानामुद्वापेनान्येषामपेक्षितानामावापेन तस्यैवार्थस्य निर्धारणे मननं भवति। ततोऽप्येवं ध्यानादिसमाध्यन्तरूपनिदिध्यासनरूपमनसि सर्वतो निवृत्तव्यापारे स्वयमुपलब्धनिजसुखानुभवरूपं ब्रह्म। इदमेव ब्रह्मज्ञानमिति। अतस्तादृशस्यानुभवैकवेद्यत्वाच्छुक्तमुक्ताविषयत्वं पाकभोजनतृप्तिवत्। अतः श्रवणाङ्गमीमांसायां माहात्म्यज्ञानफलायां भगवद्वाक्यानामन्यपरत्वेऽन्यवाक्यानां च भगवत्परत्वे दिव्यधर्मादिव्यधर्मव्य-

---

क्यानां ब्रह्मणि समन्वयः प्रथमाध्याये साधित इति भावः। इदानीं प्रथमपादार्थं वक्तुं तदीयाधिकरणानां च प्रयोजनं वक्तुं प्रथमाधिकरणार्थमाहुः–**तदर्थे**त्यारभ्य **तृप्तिवदि**त्यन्तेन। **तदर्थं** समन्वयसिद्ध्यर्थम्। **विचारित**मीक्षत्यधिकरणे इत्यादि। **प्रथमसूत्रे** इति। स्थापनस्य प्रतिज्ञारूपत्वात् प्रथमेत्युक्तम्। तेन विचारस्य चतुर्थे सत्त्वेऽपि न क्षतिः। नन्वव्यवहार्यस्य कथं व्यवहार्यत्वमत आहुः—**यत** इति। **इत्यादीनां** श्रुतीनामित्यर्थः। **इदमित्थतये**ति। घटादिवदिति शेषः। ब्रह्मणः शब्दज्ञानजन्यबोधविषयत्वमपरोक्षानुभवविषयत्वं च तत्रानुभवैकवेद्यं वस्तु वाण्या वक्तुं न शक्यते इति तत्परेयं यतो वेति श्रुतिः। शाब्दज्ञानं तु शब्दव्यापारमन्तरा न सम्भवतीति श्रवणार्थं तद्विषयत्वं वक्तव्यमित्याहुः—**एवमेवे**त्यादि **तृप्तिवदि**त्यन्तेन। एवमेवाङ्गीकार एव कार्यसिद्धेः श्रवणादिद्वारा "ब्रह्मविदाप्नोति पर"मिति श्रुतिबोधितपरप्राप्तिरूपकार्यसिद्धेः। चतुर्लक्षण्या समन्वयाविरोधसाधनफलरूपमीमांसया मननोपपत्तिमाहुः—**श्रुतस्ये**ति। **पूर्वस्थितानां** ब्रह्मवाक्ये स्थितानाम्। **उद्वापेन** त्यागेन। **आवापेन** सङ्ग्रहेण। **तस्यै**वेति। ब्रह्मणः। **निर्धारणे** उपनियततात्पर्यविषयीभूतो ब्रह्मातिरिक्तोऽन्योऽर्थो नास्तीति निश्चिते सति। **मननं** युक्तिभिर्ब्रह्मण एवानुचिन्तनं भवति। निदिध्यासनमाहुः—**ततोऽप्येव**मिति। एवं मननस्य दार्ढ्ये जाते प्रारब्धवशान्मननेऽपि विक्षेपो जायते इति दृढता मनने अपेक्षितेति भावः। **ध्यानादी**ति। ध्यानादिसमाध्यन्तरूपं यन्निदिध्यासनं तद्रूपं यन्मनस्तस्मिन्मनसि सर्वतो बाह्यविषयेभ्यो निवृत्तव्यापारे सतीत्यर्थः। मननदार्ढ्यानन्तरं ध्यानदार्ढ्यं तदनन्तरं समाधिः। इयमेव एकतानतेत्युच्यते। अस्यामवस्थायां मनसः सङ्कल्पविकल्पात्मकव्यापाराणां बाह्ये विषये व्यापाराणां वा निवृत्त्यनन्तरं शुद्धिः सम्पद्यते इति निदिध्यासनदार्ढ्यं भवतीति भावः। इदानीं "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य" इति श्रुत्या श्रवणादिजन्यत्वं यादृशं दर्शनं प्रतिपादितं तादृशं दर्शनमाहुः—**स्वय**मिति। स्वयमित्यनेन सूर्ये मेघमण्डलमिव तिरोधाननिवृत्तिरपेक्षितेति ध्वन्यते। इत्यनेनातिनैकट्यं व्यज्यते। **अनुभवरूप**मिति। साक्षात्काररूपमित्यर्थः। **ब्रह्मे**ति। स्वयमित्यनेन सत्, सुखमित्यनेन आनन्दः, अनुभवपदेन चित्। एवं च सच्चिदानन्दरूपं ब्रह्मेत्यर्थः। ननु स्वरूपमुक्तं ब्रह्मज्ञानं तत्कीदृशमत आहुः—**इद**मिति। साक्षात्कारस्य ज्ञानरूपत्वादिति भावः। स्वानुभवो वक्तुं न शक्यत इत्यत्र दृष्टान्तमाहुः—**पाके**ति। एतावता श्रुतिजन्यशाब्दबोधविषयत्वाद्ब्रह्मणा विचारकर्तव्यतारूपं प्रथमाधिकरणार्थमुक्त्वा द्वितीयाधिकरणार्थमाहुः—**अत** इत्यारभ्य **कर्मे**तीत्यन्तेन। अतो ब्रह्मणः शाब्दबोधविषयत्वरूपव्यवहार्यत्वाद्विपरीत-

त्वासेन वैपरीत्यं फलमापद्येत । तदर्थं दिव्यधर्मनिर्धारो द्वितीयाधिकरणे विचारितः । वेदा एव वाचका अलौकिकमेव कर्मेति ततः पूर्णालौकिकत्वाय विधिनिषेधमुखेनाधिकरणद्वयं समन्वयेक्षतिरूपम् । तदनु प्रथमे पादे शब्दसन्देहो निवारितो निश्चितार्थे । तत्रापि प्रथमं प्रत्ययसन्देहो निवारितो द्वयेन । प्रकृतिसम्बन्धोऽप्यधिकरणद्वयेन । पुनरन्तिममधिकरणं संश्लेषनिराकरणाय । एवं प्रथमे पादे शब्दसन्देहो निवारितः ।

( तत्र शाङ्करमतनिरासः )

ये पुनः कचित्सगुणनिर्गुणभेदं प्रतिपादयन्ति ते स्वयमेव स्वस्य ब्रह्मजिज्ञासानधिकारं बोधयन्ति । ब्रह्मवादे साङ्ख्यानामिव गुणानामनङ्गीकारात् । भौतिकगुणानामसम्बन्धार्थमेव अध्यायारम्भः । अन्यथा सर्वस्यापि सत्कारणत्वेन तत्सम्बन्धस्य विद्यमानत्वात् । अन्यनिराकरणेन तत्प्रतिपादकत्वनिर्धारकाधिकरणानां वैयर्थ्यमेव ।

( द्वितीयपादारम्भप्रयोजनम् )

अर्थसन्देहनिराकरणार्थं द्वितीयाद्यारम्भः । तत्रार्थो द्विविधो जीवजडात्मकः प्रत्येकसमुदायाभ्यां त्रिविधः । तत्र प्रथमं जीवपुरःसरेण सन्देहा निर्णीयन्ते ।

---

मिति । अपरं संसाररूपं फलमित्यर्थः । दिव्यधर्मजगत्कारणत्वरूपः । अग्रिमाधिकरणे जगत्कारणद्वयार्थमाहुः—तत इति । रूपान्तं पूर्णलौकिकत्वायेति ब्रह्मणः सर्वत्र समन्वयेन पूर्णत्वं, ईक्षित्या जगन्निर्माणकर्तृत्वेनालौकिकत्वं बोध्यम् । प्रथमे पादे यद्वाच्यं तदाहुः—तदन्विति । निश्चितार्थेति । पूर्वाधिकरणेन निश्चयविषयीभूतो ब्रह्मरूपार्थ इत्यर्थः । प्रत्यय इति । मयट्प्रत्ययसन्देह इत्यर्थः । द्वयेन आनन्दमयाधिकरणद्वयेन । प्रकृतिसम्बन्ध इति । प्रकृतौ सम्बन्धो यस्य सः । सन्देह इति पाठान्तरं वा । संश्लेषेति । प्राणजीवब्रह्मधर्माणामेकत्र कथनं संश्लेषः । तन्निराकरणे ब्रह्मधर्मत्वेनोपपादनम् । इदानीं 'यतो वाच' इति श्रुतिसङ्कोचं समुरीकृत्य सर्वथा वागगोचरत्वमेव ब्रह्मणः स्वीकुर्वन्ति । श्रोतव्यादिश्रुत्यन्यथानुपपत्त्या सगुणत्वमपि स्वीकुर्वन्ति ।

तन्मतं दूषयितुमाहुः—ये पुनरिति । ब्रह्मविचारानधिकारबोधनप्रकारमाहुः—ब्रह्मवाद इति । साङ्ख्यानामेवेति । तेषां मते सत्त्वरजस्तमसां साम्यावस्था मूलप्रकृतिः सैव प्रधानमित्युच्यते । तस्या एव जगत्कारणत्वं, तच्चाग्रे चतुर्थपादे दूष्यते इत्यतः प्रकृतेरनङ्गीकारादित्यर्थः । ननु ब्रह्मवादे गुणानङ्गीकारे "प्रधानक्षेत्रज्ञपतिर्गुणेशः" इति श्वेताश्वतरोपनिषदि गुणकथनं न स्यादित्यत आहुः—भौतिकेति ।

इतः परं द्वितीयपादारम्भो प्रकारान्तरमाहुः—अर्थेति । त्रिविध इति । जीवात्मकः, जडात्मकः, जीवजडात्मक इत्यर्थः ।

( प्रथमाधिकरणोपक्षेपः )

इदमाम्नायते–"सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत। अथ खलु क्रतुमयः पुरुषो यथा क्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवति स क्रतुं कुर्वीत" (छां. ३।१४।१) "मनोमयः प्राणशरीरः" छां. (३।१४।२) इत्यादि। तत्र वाक्योपक्रमे "सर्वं खल्विदं ब्रह्म" इति सर्वस्य ब्रह्मत्वं प्रतिज्ञाय "तज्जलान्" इति सर्वविशेषणं हेतुत्वेनोक्त्वा तत्त्वेनोपासनमुक्तम्। न चायं शमविधिः। वाक्यार्थे लक्षणाप्रसङ्गात्, कारणत्वेन सामान्यत एव सिद्धत्वाच्च। अतः सर्वजगतो ब्रह्मत्वेनोपासनमुक्तम्। इदमेव पुराणादिषु विराट्त्वेनोपासनम्। अतः परमग्रिमवाक्यार्थे सन्देहः, क्रतुं कुर्वीतेति। क्रतुर्धर्मो यज्ञ इति यावत्। तस्य स्वरूपं मनो-

---

अत्र यथासङ्ख्यं पादत्रयेषु त्रिविधानामर्थानां सन्देहनिराकरणे कर्तव्ये द्वितीयपादार्थमाहुः—तत्रेति तत्र प्रथमाधिकरणार्थं वक्तुं विषयवाक्यमाहुः—इदमाम्नायत इति। छान्दोग्ये पञ्चमप्रपाठक आम्नायते। अथ विषयवाक्यम्—

"सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीताथ खलु क्रतुमयः पुरुषो यथा क्रतुरस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्य भवति सक्रतुं कुर्वीत ॥ १ ॥ मनोमयः प्राणशरीरो भारूपः सत्यसङ्कल्प आकाशात्मा सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादरः ॥ २ ॥ एष म आत्माऽन्तर्हृदयेऽणीयान् व्रीहेर्वा यवाद्वा सर्षपाद्वा श्यामाकाद्वा श्यामाकतण्डुलाद्वा एष म आत्माऽन्तर्हृदये ज्यायान् पृथिव्या ज्यायानन्तरिक्षाज्ज्यायान्दिवो ज्यायानेभ्यो लोकेभ्यः ॥ ३ ॥ सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादर एष म आत्माऽन्तर्हृदय एतद्ब्रह्मैतमितः प्रेत्याभिसम्भवितास्मीति यस्य स्यादद्धा न विचिकित्साऽस्तीति ह स्माह शाण्डिल्यः शाण्डिल्यः ॥ ४ ॥

अथ भाष्यम्—तज्जलानिति। इदं नपुंसकलिङ्गं प्रथमान्तं सर्वविशेषणं तस्माज्जायतेति तज्जं तस्मिँल्लीयतेति तल्लं तस्मिन्ननिति चेष्टते इति तदनं तज्जं च तल्लं च तदनं चेति तज्जलानं, अस्मिन् कर्मधारये शाकपार्थिवन्यायेन मध्यमपदस्य तच्छब्दस्य लोपः। तज्जलानमिति वक्तव्ये तज्जलानिति छान्दसोऽवयवलोपः। इतिशब्दो हेतौ। शान्त इत्युपासकविशेषणम्। अथ उपासनानन्तरं क्रतुमयः उपासनामयः। अत्र दृष्टान्तमाहुः—यथेति। यथा अस्मिँल्लोके अग्निष्टोमादिक्रतुसाधनेन क्रतुमयो भूत्वा प्रेत्यभावानन्तरं तत्रैव फलं भुङ्क्ते तथोपासको भवतीत्यर्थः। तत्त्वेनेति। ब्रह्मत्वेनेत्यर्थः। नन्वत्रोपासनार्थं 'शमं कुर्वीते'ति शमविधिरेवायं कुतो नाद्रियत इत्यत आहुः—न चेति। न हीत्यर्थः। वाक्यार्थेति। उक्तशमविधेः सर्वं खल्विदं ब्रह्मेति वाक्यार्थज्ञानानन्तरं सम्भव इति वाक्यार्थे लक्षणेत्यर्थः। नन्वस्तु वाक्यलक्षणावादिनां मीमांसकानां मते सेत्यत आहुः—कारणत्वेति। 'सामान्यत इति शान्तो दान्त आत्मन्येवात्मानं पश्ये'दित्यनेन सामान्यतः शमत्वेन ब्रह्मज्ञानत्वे कार्यकारणभावे ब्रह्मेति ब्रह्मज्ञानार्थं शमस्य सिद्धत्वात् पुनर्न ब्रह्मज्ञानसाधनीभूतोपासनार्थशमसाधनापेक्षेति भावः। अन्यनिराकरणेन सिद्धमाहुः—अत इति। विराट्त्वेनेति। 'पातालमेतस्य हि पादमूल'मित्यादिपुराणसम्मतिरपि दर्शिता। इतः परं प्रकृतिसंशयकारणमाहुः—अत इति। सन्देहप्रकारमाहुः—क्रतुरिति। धर्मः यज्ञत्वम्। यावदिति। यमुपासनायज्ञ इति यावदित्यर्थः। ननु द्रव्यदेवतयोरभावात् कथं यज्ञत्वमत आहुः—तस्येति। ज्ञानयज्ञप्राणस्वरूप इत्यर्थः।

मयः प्राणशरीर इति। उपासनाप्रकरणादुपासनैवैषा। तत्र मनोमय इति प्रमाण-
भूतो वेद उक्तः। प्राणशरीर इति कार्यकारणयोरभेदोपचारः।

( सन्देहोद्धारः )

अत्रे सत्यसङ्कल्पादिधर्मवचनात्, किमयं विज्ञानमयो जीवो ब्रह्मत्वेनोपास्यः,
उत ब्रह्मैवान्तर्यामी यः पुराणेषु सूक्ष्म उक्तः। तत्र पूर्वपक्षे जडस्य जगतो ब्रह्म-
त्वेनोपासनस्योक्तत्वाज्जीवस्यापि ब्रह्मत्वेनोपासनमेव युक्तं न त्वान्तर्यामि ब्रह्मवाक्यं
भवितुमर्हति। "विज्ञानं ब्रह्म चेद्वेद" (तै. २।५.) इति शाखान्तरे स्पष्टत्वाच्च।
तस्मात्कार्यकारणयोरभेदाज्जीव एव ब्रह्मत्वेनोपास्यः इत्येवं प्राप्त उच्यते—

( उपदेशोपासनयोर्निर्णयः )

सर्वत्र प्रसिद्धोपदेशात्। अथ खल्वित्यादि ब्रह्मवाक्यमेव। कुतः? सर्वत्र प्रसि-
द्धोपदेशात्। कुर्वीतेत्युपदेशो न तूपासना। तत्र परमशान्तस्य सर्वस्य जगतो ब्रह्म-
त्वेनोपासनया शुद्धान्तःकरणस्य सर्ववेदान्तप्रसिद्धब्रह्मोपदेश एव युक्तो मननरूपो
न तु क्वचित् सिद्धस्य जीवस्योपासना। शाखान्तरे त्वग्र आनन्दमयस्य वक्तव्यत्वा-
त्तथा युक्तम्। न चात्र तथा। तस्मादानन्दरूपप्राणशरीररूपो वाक्यार्थः॥ १।२।१॥

---

ननु देवतोद्देश्यत्वेन त्याग एव यागः। अत एवोक्तं तैत्तिरीये तृतीयाष्टके प्रथमप्रपाठके 'यस्य भूयांसो य-
ज्ञक्रतव' इत्याद्युक्तं देवता वृणुत इत्यत आहुः—उपासनेति। तस्माच्च क्रियेति क्रतुरिति योगेन
क्रतुपदवाच्यत्वमित्यर्थः। वेद इति। मनोमयस्य वेदत्वं तु "तस्य यजुरेव शिर" इत्यनेन "स एष जीवो वि-
वरप्रसूति" रित्येकादशस्कन्धीयभगवद्वचनेन च बोध्यम्। कार्यकारणयोरिति। प्राणवेदयोरभेद इत्यर्थः।
नन्वत्र वेदरूपेऽर्थे सन्देहाभाव इत्यतस्तमाहुः—अत्र इति। धर्मवचनात्। सत्यसङ्कल्पादि ब्रह्मधर्म
आदिपदग्राह्यः 'एष मे आत्मे'त्यादिना जीवधर्म इति। धर्मद्वयवचनादित्यर्थः। एवं संशयमुक्त्वा पूर्वपक्ष-
माहुः—तत्रेति। उक्तत्वादिति। सर्वपदेनेति शेषः। आन्तर्य बलात्कारेण। जीवस्य ब्रह्मत्वेनो-
पास्यत्वे तैत्तिरीयोपनिषत्सम्मतिमाहुः—विज्ञानमिति।
समाधानमाहुः—'सर्वत्र प्रसिद्धोपदेशात्' सर्वत्र उपनिषत्सु प्रसिद्धस्य प्रतिपाद्यस्य ब्रह्मणः 'सर्वं
खल्विदं ब्रह्मेति' वाक्ये 'क्रतुं कुर्वीते'त्यनेनोपदेशादिदं ब्रह्मवाक्यमेवेति सूत्रार्थः। कुर्वीतेति।
मननात्मकं क्रतुं कुर्वीतेत्यर्थः। "केचित्स्वदेहान्तर्हृदयावकाशे प्रादेशमात्रं पुरुषं वसन्त" मित्या-
दिपुराणेषूक्त इत्यर्थः। यद्यपि "उपासीते"त्यपि वर्तते तथापि उपासनायाः अधिकारितावच्छेद-
ककोटौ निवेशात्। मुख्यत्वमित्याशयेनोपदेशं समर्थयन्ति—तत्रेति। शुद्धान्तःकरणस्येति।
अधिकारिण इति शेषः। ब्रह्मविषयकमननोपदेशत्वादस्य ब्रह्मवाक्यत्वमिति भावः। शाखान्तरे
विज्ञानं ब्रह्म चेद्वेदेत्यत्र जीवोपासना न स्यादित्यत आहुः—शाखान्तर इति। तथा युक्त-
मिति। जीववाक्यत्वं युक्तमित्यर्थः। तथा चाग्रे आनन्दमयब्रह्मप्रतिपादकत्वेन तत्रोपनिषद्वाक्यानां
ब्रह्मवाक्यत्वं युक्तमिति भावः। अत्रेति। अस्मिन् विषयवाक्ये स्पष्टब्रह्मप्रतिपादकं वाक्यं नास्तीत्यर्थः।
सिद्धमाहुः—तस्मादिति। आनन्दरूप इति। 'मनसैवानुद्रष्टव्य' इति श्रुत्या साक्षात्कारानन्तरं
मनसोऽप्यानन्दरूपत्वात्प्राचुर्यार्थकमयट्प्रत्ययेन मनोमय इत्यस्यानन्दरूप इत्यर्थः। प्राणशरीरेति।
अन्तर्यामीत्यर्थः॥ १॥

( ब्रह्मज्ञानस्य लोकान्तरभावि फलं न भवति )

ननु क्रतुमयः पुरुष इति यथासङ्कल्पमग्रिमदेहकथनाल्लोकान्तरभाविफलार्थमन्योपासनैव युक्ता। न तु ब्रह्मज्ञानस्य तादृशं फलमित्याशङ्क्य परिहरति—

विवक्षितगुणोपपत्तेश्च ॥ १।२।२ ॥

विवक्षिता लोकान्तरे तादृशरूपप्राप्तिः सा प्रकृतेऽप्युपपद्यते । भगवत्स्वरूपलाभात्सारूप्यलाभाद्वा। न च व्याप्तिरुक्तेत्यधमप्राप्त्युपायो युक्तः। सत्यसङ्कल्पादिवचनं च ब्रह्मवाक्यत्वपोषकमिति चकारार्थः ॥ १।२।२ ॥

( प्राणशरीररूपो न जीवः )

नन्वेतावतापि नैकान्ततो ब्रह्मवाक्यत्वमुपपत्तेरुभयत्रापि तुल्यत्वादित्याशङ्क्य परिहरति—

अनुपपत्तेस्तु न शारीरः ॥ १।२।३ ॥

न च प्राणशरीररूपो जीवो भवति तिरोहितानन्दत्वेन निराकारत्वात्। अध्यासेन तथात्वे त्वनुपास्यत्वमेव। इदानीमेवोपासकस्यापि तथात्वात्। न च प्राणा-

---

अग्रिमसूत्रमवतारयन्ति—**नन्विति**। पुरुष इति। इत्यारभ्येत्यर्थः। यथासङ्कल्पं सङ्कल्पानुरूपम्। **अग्रिमेति**। लोकान्तरभाविदेहकथनादित्यर्थः। तथा च जघन्यफलार्थदेहान्तरप्राप्तिर्ब्रह्मोपासनफलार्थो न भवतीति भावः। **युक्तेति**। जीवोपासनैव युक्तेत्यर्थः। **युक्तमिति**। तथा न ब्रह्मप्राप्तिरेव ब्रह्मज्ञानस्य फलमिति भावः। **इत्याशङ्क्येति**। इमामाशङ्कां मनसि निधाय सूत्रकाराः समाधानमाहुः—**विवक्षितगुणोपपत्तेश्च**। विवक्षिता अभिप्रेता या गुणरूपा आमुष्मिकदेहप्राप्तिः तस्या उपपत्तेरिति सूत्रार्थः। ननु कथमुपपत्तिरित्यत आहुः—**भगवदिति**। परप्राप्तिरूपब्रह्मदेहलाभादित्यर्थः। भगवद्गुणानुवादरसलोभवन्तं प्रत्याहुः—**सारूप्येति**। भगवत्सदंशदेहवतोऽपि पुनरावृत्त्यभावान्न प्राकृतत्वमिति भावः। ननु देहत्वप्राकृतत्वयोर्व्याप्यव्यापकभावात् कथमिदमित्यत आहुः—**न चेति**। कुत्राप्यनयोर्व्याप्तिर्नोक्ता। किन्त्वस्मिन्नेव विषयवाक्ये यथा क्रतुरित्यादिनाऽऽमुष्मिकदेहत्वसङ्कल्पानुरूपत्वयोरेव व्याप्तिरुक्ता इति हेतोरधमस्य प्राकृतदेहस्य प्राप्त्युपायभूता जीवोपासना न युक्तेत्यर्थः। ननु सङ्कल्पानुरूपदेहप्राप्तेरुक्तत्वात्कथं ब्रह्मदेहप्राप्तिरिति चेन्न, सर्वब्रह्मोपासनापूर्वकमननरूपक्रतुना शुद्धसङ्कल्पोदयादलौकिकदेहप्राप्तिरिति सर्वमनवद्यम्। सूत्रस्थचकारद्योतितहेत्वन्तरमाहुः—**सत्येति**। अयं तु केवलं ब्रह्मधर्म एवेति भावः ॥ २ ॥

अग्रिमं सूत्रमवतारयन्ति—**नन्विति**। **नैकान्ततः** केवलम्। **तुल्यत्वादिति**। मक्तस्यापि "न वै क्वचिन्मे मनसो मृषा गति"रिति वचनात्सत्यसङ्कल्पत्वम्। अन्ततो हिरण्यगर्भे जीवे सर्वधर्माणां सत्त्वात्तुल्यत्वादित्यर्थः। समाधानमाहुः—**अनुपपत्तेस्तु शारीरः**। शारीरो जीवो वाक्यार्थो न, कुतः? अनुपपत्तेरिति सूत्रार्थः। अनुपपत्तिमेवाहुः—**न चेति**। प्राणशरीररूपः आनन्दाकारः। प्राणशब्दस्यानन्दवाचकत्वं व्यवस्थापितमधस्तादनुगमाधिकरणे। **निराकारत्वादिति**। आनन्दाकाररूपत्वाभावादित्यर्थः। अध्यासेन सच्चिदानन्दरूपोऽहमित्यारोपकृतिरन्तराध्यासेन तथात्वे प्राणशरीरत्वे अनुपास्यत्वमिति आरोपस्याविद्याकृतत्वात्सद्धत्वाज्जीवस्यानुपास्यत्वमेवेत्यर्थः। दूषणान्तरमाहुः—**इदानीमिति**। उपासनाकाले। **तथात्वात्**। आध्यासिकप्राणशरीररूपत्वात्। तथा चाध्यासं विना उपासनैव न सम्भवतीति भावः। एवं

र्वैलौकिकत्वम् । उपदेशानर्थक्यप्रसङ्गात् । अत आनन्दरूपप्राणशरीररूपत्वाभावान्न वाक्यार्थो जीवः । पूर्वपक्षस्यात्रैव निवृत्तत्वात्तु शब्दः । विज्ञानमये तु प्राप्ताप्राप्तविवेकेन धर्मस्यैवोपासना ॥ १।२।३ ॥

( कर्मत्वकर्तृत्वव्यपदेशः )

ननु प्राप्तव्यताद्दशरूपफलाभिप्रायं भविष्यतीति परिहरति—

कर्मकर्तृव्यपदेशाच्च ॥ १।२।४ ॥

"एतमितः प्रेत्याभिसम्भवितास्मीति यस्य स्यादद्धा न विचिकित्सास्तीति ह स्माह शाण्डिल्यः" ( छां. ३।१४।४ ) इत्ययं फलवाक्यम् । एतं प्राणशरीररूपं कर्मत्वेन ध्येयत्वेन प्राप्यत्वेन च व्यपदिशति । कर्तृत्वेन च शारीरं व्यपदिशति । न च भजनीयरूपाकथने तादृशं फलं सिध्यतीति चकारार्थः, अधिकरणसम्पूर्णत्वद्योतकश्च ॥ १।२।४ ॥ १ ॥

---

चोपासनाजन्यफलस्योपासनाकाले सत्त्वादुपासनाव्यर्थत्वमिति हृदयम् । उपदेशानर्थक्यप्रसङ्गादिति । प्राणशब्देन लौकिकप्राण एव गृह्यते चेल्लौकिकप्राणशरीरस्येदानीमपि सत्त्वे तदर्थं गमनोपदेशोऽपि व्यर्थ इत्यर्थः । ननु पञ्चकोशप्रकरणे विज्ञानमयस्यापि ब्रह्मवाक्यत्वं स्याद् 'विज्ञानमानन्दं ब्रह्मे'ति वाक्याद्विज्ञानशब्दस्य ब्रह्मवाचकत्वेन विज्ञानत्वेन निरूपणादित्यत आहुः—विज्ञानमये त्विति । प्राप्ताप्राप्तेति । तत्र विज्ञानमयस्य "तस्य श्रद्धैव शिर" इत्यनेन श्रद्धादिधर्मत्वाज्जीवत्वं प्राप्तम् । आनन्दमयस्येव सर्वान्तर्यामित्वाभावान्मुख्यत्वाभावेनानन्दरूपत्वमप्राप्तमिति विवेकेन प्राप्तस्य फलत्वाद् धर्मस्य जीवस्यैवोपासनेति न ब्रह्मवाक्यत्वमित्यर्थः । न च जीवस्य भगवद्धर्मत्वं कथमिति वाच्यम् । यथाग्नेर्विस्फुलिङ्गाश्रयत्वं तथा ब्रह्मणोऽपि जीवाश्रयत्वे बाधकाभावादिति ॥ ३ ॥

अग्रिमं सूत्रमवतारयन्ति—नन्विति । प्राप्तेति । जीवेनेति शेषः । तादृशरूपेति । प्राणशरीररूपेत्यर्थः । अयमाशयः—अत्रापि विषयवाक्ये पूर्वोक्तन्यायेन "क्रतुमयः पुरुष" इत्यनेन जीवत्वं प्राप्तम् । "प्राणशरीर" इति ब्रह्मवाक्यफलाभिप्रायकत्वेन ब्रह्मत्वमप्राप्तमिति विवेकेन जीववाक्यत्वमिति । इमामेवाशङ्कां परिहरति सूत्रकारः—'कर्मकर्तृव्यपदेशाच्च' कर्तृत्वेन जीवस्य कर्मत्वेन ब्रह्मणो व्यपदेशात्कथमस्य जीववाक्यमिति सूत्रार्थः । तदेव विशदयन्ति—एतमिति । एतं प्राणशरीरं भगवन्तं अभिसम्भवितास्मि प्राप्स्यामि यस्य साधकस्य अद्धा अपरोक्षः स्यात् । इह अस्मिन् लोके विचिकित्सा कर्तव्यं नास्तीत्यर्थः । शारीरमिति । अधिकारिणं जीवम् । तथा च कर्तृत्वकर्मत्वयोर्भिन्ननिष्ठत्वे ब्रह्मत्वजीवत्वयोरेकत्र प्राप्त्यर्थाभावादत्र पूर्ववत्प्राप्ताप्राप्तविवेकन्यायो न प्रवर्तत इति । इदं ब्रह्मवाक्यमिति भावः । ननूक्तमेव प्राणशरीर इति फलं परमत आहुः— न चेति । यद्भजनीयं तदेव प्राप्यमिति । 'यथा क्रतु'रित्यादिवाक्येन बोधितमिति । उक्तावश्यं गन्तव्यं ब्रह्मपरमेवेत्यर्थः । केषाञ्चिन्मते अष्टसूत्रात्मकमिदमधिकरणमिति तद्‌दूषयितुमाहुः—अधिकरणेति । प्रथमाध्यायस्य द्वितीये पादे प्रथमाधिकरणम् ॥ ४ ॥

---

१ अत्रेदं व्याख्यानान्तराणि—

(१) तत्र तावच्छङ्कराचार्याणां मते—अत्र पूर्वपक्षे जीवस्योपास्तिः सिद्धान्ते ब्रह्मण इति फलभेदः । छान्दोग्ये शाण्डिल्यविद्यायामिदमाम्नायते—'स क्रतुं कुर्वीत' 'मनोमयः प्राणशरीरो भारूपः' इत्यादि । तत्र किं मनोमयत्वादिगुणकः शारीर उपास्यत्वेन उपदिश्यते किं वा परमात्मेति संशये,

शारीर इति पूर्वः पक्षः । सिद्धान्तस्तु, परं ब्रह्मैवोपास्यत्वेनोपदिश्यते । कुतः, सर्वत्र प्रसिद्धोपदेशात् सर्वेषु वेदान्तेषु यत्प्रसिद्धं जगत्कारणं ब्रह्म, तस्यैवात्र 'सर्वं खलु ......' इत्यादिना उपदेशादित्यर्थः ॥

इतश्च ब्रह्मैवात्रोपदिश्यत इत्याह—विवक्षिताः 'भारूपः सत्यसङ्कल्पः' इत्यादिना उपासनायामुपादेयत्वेनोपदिष्टा ये गुणाः सत्यसङ्कल्पत्वादयः तेषां ब्रह्मण्येवोपपत्तेरित्यर्थः । जीवासाधारणस्यापि मनोमयत्वादेः सत्यसङ्कल्पत्वाद्यनुरोधेन सर्वात्मके ब्रह्मण्युपपत्तेः । अतः तद्गुणकं ब्रह्मैवोपास्यमिति सिद्धम् ॥

ननु विपरीतं किं न स्यादिति चेत्, नेत्याह—सत्यसङ्कल्पत्वादीनां जीवे सामञ्जस्येनानुपपत्तेः न शारीरो जीवस्तद्धर्मेणोपास्यः, किं तु ब्रह्मैवेत्यर्थः ॥

इतश्च न शारीर उपास्य इत्याह—'एतमितः प्रेत्याभिसम्भवितास्मि' इत्यनेन एतमिति प्रकृतस्य मनोमयत्वादिगुणकस्य ब्रह्मणः कर्मत्वेन, प्राप्यत्वेन अभिसम्भवितास्मि प्राप्तास्मि इति शारीरस्य कर्तृत्वेन व्यपदिश्यमानत्वादित्यर्थः ॥

(२) रामानुजीये—इदमाम्नायते छान्दोग्ये "अथ खलु क्रतुमयः पुरुषो यथाक्रतुरस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्य भवति स क्रतुं कुर्वीत मनोमयः प्राणशरीरो भारूपः इत्यादि । अत्र स क्रतुं कुर्वीतेति प्रतिपादितस्योपासनस्योपास्यो मनोमयः प्राणशरीर" इति निर्दिश्यत इति प्रतीयते । तत्र संशयः । किं मनोमयत्वादिगुणकः क्षेत्रज्ञ उत परमात्मेति । किं युक्तम्? क्षेत्रज्ञ इति । कुतः? मनःप्राणयोः क्षेत्रज्ञोपकरणत्वात् । परमात्मनस्तु "अप्राणो ह्यमनाः" इति तत्प्रतिषेधाच्च । न च "सर्वं खल्विदं ब्रह्म" इति पूर्ववाक्यनिर्दिष्टं ब्रह्मात्रोपास्यतया सम्यक् शक्यते "शान्त उपासीत" इत्युपासनोपकरणशान्तिनिर्वृत्त्युपायभूतब्रह्मात्मकत्वोपदेशायोपपात्तत्वात् । न च स क्रतुं कुर्वीत इत्युपासनस्योपास्यसाकाङ्क्षत्वाद्वाक्यान्तरस्थमपि ब्रह्म सम्बध्यत इति शक्यं वक्तुम्, स्ववाक्योपात्तेन मनोमयत्वादिगुणकेन निराकाङ्क्षत्वात् । "मनोमयः प्राणशरीरः" इत्यनन्यार्थतया निर्दिष्टस्य विभक्तिविपरिणाममात्रेणोभयाकाङ्क्षानिवृत्तिसिद्धेः । एवं निश्चिते जीवत्व एतद्ब्रह्म इत्युपसंहारस्थं ब्रह्मपदमपि जीव एव पूजार्थं प्रयुक्तमित्यध्यवसीयत इति । एवं प्राप्ते ब्रूमः । सर्वत्र प्रसिद्धोपदेशात् । मनोमयत्वादिगुणकः परमात्मैव । कुतः? सर्वत्र वेदान्तवाक्येषु परस्मिन्नेव ब्रह्मणि प्रसिद्धस्य मनोमयत्वादेरुपदेशात् । प्रसिद्धं हि मनोमयत्वादि ब्रह्मणः । "यथा मनोमयः प्राणशरीरनेता स य एषोऽन्तर्हृदय आकाशः । तस्मिन्नयं पुरुषो मनोमयः । अमृतो हिरण्मयः हृदा मनीषा मनसाभिक्लृप्तो य एनं विदुरमृतास्ते भवन्ति । न चक्षुषा गृह्यते नापि वाचा मनसा तु विशुद्धेन । तथा प्राणस्य प्राणः अथ खलु प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयति सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते" इत्यादिषु । मनोमयत्वं विशुद्धेन मनसा ग्राह्यत्वम् । प्राणशरीरत्वं प्राणस्याप्याधारत्वं नियन्तृत्वं च । एवं च सति "एष म आत्मान्तर्हृदय एतद्ब्रह्म" इति ब्रह्मशब्दोऽपि मुख्य एव भवति । "अप्राणो ह्यमनाः" इति मन आयत्तं ज्ञानं प्राणायत्तां स्थितिं च ब्रह्मणो निषेधति । अथवा "सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत" इत्यत्रैवोपासनं विधीयते । सर्वात्मकं ब्रह्म शान्तः सन्नुपासीतेति । "स क्रतुं कुर्वीत" इति तस्योपादानार्थोऽनुवादः । उपादेयाश्च गुणा मनोमयत्वादयः । अतः सर्वात्मकं ब्रह्म मनोमयत्वादिगुणकमुपासीतेति वाक्यार्थः । तत्र सन्देहः । किमिह ब्रह्मशब्देन प्रत्यगात्मा निर्दिश्यत उत परमात्मेति । किं युक्तम्? प्रत्यगात्मेति । कुतः? तस्यैव

सर्वपदसामानाधिकरण्यनिर्देशोपपत्तेः । सर्वशब्दनिर्दिष्टं हि ब्रह्मादिस्तम्बपर्यन्तं कृत्स्नं जगत् । ब्रह्मादिभावश्च प्रत्यगात्मनोऽनाद्यविद्यामूलकर्मविशेषोपाधिको विद्यत एव । परस्य तु ब्रह्मणः सर्वज्ञस्य सर्वशक्तेरपहतपाप्मनो निरस्तसमस्ताविद्यादिदोषगन्धस्य समस्तहेयाकरसर्वभावो नोपपद्यते । प्रत्यगात्मन्यपि क्वचित्क्वचिद्ब्रह्मशब्दः प्रयुज्यते । अत एव परमात्मा परं ब्रह्म इति परमेश्वरस्य क्वचित्सविशेषणो निर्देशः । प्रत्यगात्मनश्च निर्मुक्तोपाधेर्ब्रह्मत्वं च विद्यते । "स चानन्त्याय कल्पते" इति श्रुतेः । अपि तु बद्धस्यैव कर्मनिमित्तत्वाज्जन्मस्थितिलयानां तज्जलानिति हेतुनिर्देशोऽप्युपपद्यते । तदयमर्थः । अयं जीवात्मा स्वतोऽपरिच्छिन्नस्वरूपत्वेन ब्रह्मभूतः सन्ननाद्यविद्यया देवतिर्यङ्मनुष्यस्थावरात्मनाऽवतिष्ठत इति । अत्र प्रतिविधीयते । सर्वत्र प्रसिद्धोपदेशात् । सर्वत्र "सर्वं खल्विदं ब्रह्म" इति निर्दिष्टे सर्वस्मिञ्जगति ब्रह्मशब्देन तदात्मतयाऽभिधीयमानं परं ब्रह्मैव, न प्रत्यगात्मा । कुतः ? प्रसिद्धोपदेशात् । तज्जलानिति इति हेतुतः सर्वं खल्विदं ब्रह्मेति प्रसिद्धवन्निर्देशात् । ब्रह्मणो जातत्वाद्ब्रह्मणि लीनत्वाद्ब्रह्माधीनजीवनत्वाच्च हेतोर्ब्रह्मात्मकं खल्विदं जगदित्युक्ते यस्माज्जन्मस्थितिलया वेदान्तेषु प्रसिद्धास्तदेवात्र ब्रह्मेति प्रतीयते । तच्च परमेव ब्रह्म । तथा हि "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्म" इत्युपक्रम्य "आनन्दो ब्रह्मेति व्यजानात् आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते" इत्यादिना पूर्वानुवाकप्रतिपादितानवधिकातिशयानन्दयोगिनो विपश्चितः परस्माद्ब्रह्मण एव जगदुत्पत्तिस्थितिलया निर्दिश्यन्ते । तथा "स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः" इति करणाधिपस्य जीवस्याधिपः परं ब्रह्मैव कारणं व्यपदिश्यते । एवं हि सर्वत्र परस्यैव ब्रह्मणः कारणत्वं प्रसिद्धम् । अतः परब्रह्मणो जातत्वात्तल्लीनत्वात्तेन प्राणनाच्चात्मकतया तादात्म्यमुपपन्नम् । अतः सर्वप्रकारं सर्वशरीरं सर्वात्मभूतं परं ब्रह्म शान्तो भूत्वोपासीतेति श्रुतिरेव परस्य ब्रह्मणः सर्वात्मकत्वमुपपाद्य तस्योपासनमुपदिशति । परं ब्रह्म हि कारणावस्थं कार्यावस्थं सूक्ष्मस्थूलचिदचिद्वस्तुशरीरतया सर्वदा सर्वात्मभूतम् । एवंभूततादात्म्यस्य प्रतिपादने परस्य ब्रह्मणः सकलहेयप्रत्यनीककल्याणगुणाकरत्वं न विरुध्यते । प्रकारभूतशरीरगतानां दोषाणां प्रकारिण्यात्मन्यप्रसङ्गात् । प्रत्युत निरतिशयैश्वर्यापादनेन गुणायैव भवतीति पूर्वमेवोक्तम् । यदुक्तं सर्वतादात्म्यमुपपद्यत इति तदसत् । जीवानां प्रतिशरीरं भिन्नानामन्योन्यतादात्म्यासम्भवात् । मुक्तस्यानवच्छिन्नस्वरूपस्यापि जगत्तादात्म्यं जगज्जन्मस्थितिप्रलयकारणत्वं न सम्भवतीति "जगद्व्यापारवर्जम्" इत्यत्र वक्ष्यते । जीवकर्मनिमित्तत्वाज्जगज्जन्मस्थितिलयानां स एव कारणमित्यपि न साधीयः । तत्कर्मनिमित्तत्वेऽपीश्वरस्यैव जगत्कारणत्वात् । अतः परमात्मैवात्र ब्रह्मशब्दाभिधेयः । इममेव सूत्रार्थमभियुक्ता बहु मन्यन्ते । यदाह वृत्तिकारः । सर्वं खल्विति सर्वात्मा ब्रह्मेश इति ॥

वक्ष्यमाणाश्च गुणाः परमात्मन्येवोपपद्यन्ते । "मनोमयः प्राणशरीरो भारूपः सत्यसङ्कल्प आकाशात्मा सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादरः" इति । मनोमयः परिशुद्धेन मनसैकेन ग्राह्यः । विवेकविमोकादिसाधनसप्तकानुगृहीतपरमात्मोपासननिर्मलीकृतेन हि मनसा गृह्यते । अनेन हेयप्रत्यनीककल्याणैकतानतया सकलेतरविलक्षणस्वरूपतोच्यते । मलिनमनोभिर्मलिनानामेव [illegible] प्राणशरीरो जगति सर्वेषां प्राणानां धारकः । प्राणो यस्य

शरीरमाधेयं विधेयं शेषभूतं च स प्राणशरीरः। आधेयत्वविधेयत्वशेषत्वानि शरीरशब्दप्रवृत्तिनिमित्तानीत्युपपादयिष्यते। भारूपो भास्वररूपः। अप्राकृतस्वासाधारणनिरतिशयकल्याणदिव्यरूपत्वेन निरतिशयदीप्तियुक्त इत्यर्थः। सत्यसङ्कल्पोऽप्रतिहतसङ्कल्पः। आकाशात्माऽऽकाशवत्सूक्ष्मस्वच्छस्वरूपः। सकलेतरकारणभूतस्याप्याकाशस्यात्मभूत इति वाऽऽकाशात्मा। स्वयं च प्रकाशतेऽन्यांश्च प्रकाशयतीति वाऽऽकाशात्मा। सर्वकर्मा क्रियत इति कर्म सर्वं जगदस्य कर्म, सर्वा वा क्रिया यस्यासौ सर्वकर्मा। सर्वकामः काम्यन्त इति कामा भोग्यभोगोपकरणादयः, ते परिशुद्धाः सर्वविधास्तस्य सन्तीत्यर्थः। सर्वगन्धः सर्वरसः। "अशब्दमस्पर्शम्" इत्यादिना प्राकृतगन्धरसादिनिषेधादप्राकृताः स्वासाधारणा निरवद्या निरतिशयाः कल्याणाः स्वभोग्यभूताः सर्वविधा गन्धरसास्तस्य सन्तीत्यर्थः। सर्वमिदमभ्यात्तः, उक्तमिदं रसपर्यन्तं सर्वं कल्याणगुणजातं स्वीकृतवान्। अभ्यात्त इति भुक्ता ब्राह्मणा इतिवत्कर्तरि क्तः प्रतिपत्तव्यः। अवाकी वागुक्तिः साऽस्य नास्तीत्यवाकी। कुत इत्याहानादर इति। अवाप्तसमस्तकामत्वेनादर्तव्याभावादादररहितः। अत एवावाक्यजल्पाकः। परिपूर्णैश्वर्यत्वाद्ब्रह्मादिस्तम्बपर्यन्तं निखिलं जगत्तृणीकृत्य जोषमासीन इत्यर्थः। अत एते विवक्षिता गुणाः परमात्मन्येवोपपद्यन्ते॥

तमिमं गुणसागरं पर्यालोचयतां खद्योतकल्पस्य शरीरसम्बन्धनिबन्धनापरिमितदुःखसम्बन्धयोग्यस्य बद्धमुक्तावस्थस्य जीवस्य प्रस्तुतगुणलेशसम्बन्धगन्धोऽपि नोपपद्यत इति नास्मिन्प्रकरणे शारीरपरिग्रहाशङ्का जायत इत्यर्थः॥

"एतमितः प्रेत्याभिसम्भवितास्मि" इति प्राप्यतया परं ब्रह्म व्यपदिश्यते। प्राप्तृतया च जीवः। अतः प्राप्ता जीव उपासकः प्राप्यं परं ब्रह्मोपास्यमिति प्राप्तुरन्यदेवेदमिति विज्ञायते॥

(३) माध्वे—लिङ्गात्मकानां शब्दानां प्रवृत्तिं विष्णौ दर्शयत्यस्मिन् पादे प्राधान्येन ब्रह्मतत्त्वमिति सर्वगतत्वमुक्तं विष्णोः, तच्च तस्यैतस्यासावादित्यो रस इत्यादिना आदित्यस्य प्रतीयते। अतोऽब्रवीत् "स यश्चायमशरीरः प्रज्ञा" इत्यादिना सर्वत्रोच्यमानो नारायण एव "तदेव ब्रह्म परमं कवीनाम्। परमं यो महद् ब्रह्म वासुदेवात् परः को नु ब्रह्मशब्दोदितो भवेत्। स हि सर्वगुणैः पूर्णस्तदन्ये तूपचारतः" इति तस्मिन्नेव प्रसिद्धः ब्रह्मशब्दोपदेशात्॥

"अमीतोऽश्रुतो मतः" इत्यादि "स हि न ते विष्णोर्जायमानो न जातः" इत्यादिना श्रुतत्वादिगुणः। "स सविता स वायुः स इन्द्रः सोऽश्रुतः सोऽदृष्टो यो हरिर्यः परमो यो विष्णुर्योऽनन्तः" इत्यादि चतुर्वेदशिखायाम्॥

न चादित्यपःशब्दाच्चक्षुर्मयत्वादेश्च जीव इति वाच्यम्, एकस्य सर्वशरीरस्थत्वानुपपत्तेरेव॥

"आत्मानं परस्मै शंसति" इत्यादि॥

(४) निम्बार्के—"सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत" इत्युपक्रम्य श्रूयते "मनोमयः प्राणशरीर" इति। अत्र मनोमयत्वेनोपास्यः सर्वकारणभूतः परमात्मा गृह्यते, न प्रत्यगात्मा। कुतः? सर्वेषु वेदान्तेषु प्रसिद्धस्य परमात्मन एव पूर्वत्र "सर्वं खल्विदं ब्रह्मे"त्याद्युपदेशात्। "मनोमयः प्राणशरीरो भारूपः सत्यसङ्कल्प" इत्यादीनां विवक्षितानां मनोमयत्वसत्यसङ्कल्पत्वादीनां गुणानां ब्रह्मण्येवोपपत्तेश्च। मनोमयत्वादिगुणकः पर एव, न जीवस्तस्मिन्मनोमयत्वसत्यसङ्कल्पत्वाद्यनुपपत्तेः। इतोऽप्यत्र मनोमयादिवाच्यो न शारीरः "एतमितः प्रेत्य सम्भवितासी"ति कर्मकर्तृव्यपदेशात्।

(५) भैक्षवे—पूर्वपादे आकाशाधिकरणमारभ्य कानिचिद्विभूतिभी रूपैस्तदनुगतब्रह्मबोधकानि वाक्यान्यवधारितानि, ईश्वरविभूतयस्तद्वाक्यानि च विशिष्य सर्वाणि ब्रह्मणाऽप्यवधारयितुं न शक्यन्ते, तस्य सर्वरूपत्वात्, श्रुतीनां चानन्त्यात् । तथाच गीता—"नान्तोऽस्ति मम दिव्यानां विभूतीनां परन्तप" इति । अत इदानीम् "अथवा बहुनैतेन किं ज्ञातेन तवार्जुन । विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्" इत्यादिस्मृतीरनुसरन् सामान्यतः सर्वैरेव प्रकृतिपुरुषतत्कार्यरूपैस्तत्तच्छ्रुतिषु श्रुतिलिङ्गादिभ्यो ब्रह्मावधारणीयमित्याह । न केवलमाकाशाद्यनुगतमेव ब्रह्माविभागलक्षणाभेदेनाकाशादिरूपमेव मन्तव्यम्, अपि तु सर्वथैव जीवपर्यन्तेष्वनुगतं ब्रह्म सर्वरूपं ज्ञेयम् । कुतः? प्रसिद्धोपदेशात्? "सर्वं खल्विदं ब्रह्म तज्जलान्", "तत्सृष्ट्वा तदेवानुप्राविशत्तदनुप्रविश्य सच्च त्यच्चाभवत्" "रूपं रूपं प्रतिरूपो बभूव" "यः सर्वेषु तिष्ठन् सर्वस्यान्तरो यस्य सर्वं शरीरमि"त्यादिरूपात्सकलस्मृतिप्रसिद्धात्, श्रौतोपदेशादित्यर्थः । एषु च वाक्येषु सामान्यात्मपरत्वे प्रधानपरत्वे च यः संशयः स प्रसिद्धशब्देन निराकृतः, एतादृशोपदेशस्य मनुवसिष्ठपराशरादिभिः स्वशास्त्रेषु परमात्मन्येव कृतत्वात् (यथा मनौ शरीरेष्वंशभेदेनाधिकारिणो विष्ण्वादीनुक्त्वोक्तम् । "प्रशासितारं सर्वेषामणीयांसमणोरपि । रुक्माभं स्वप्नधीगम्यं विद्यात्तं पुरुषं परम् ॥ एतमेके वदन्त्यग्निं मनुमन्ये प्रजापतिम् । इन्द्रमेके परे प्राणमपरे ब्रह्म शाश्वतमि"ति ॥ विष्णुपुराणे च "तदेव सर्वमेवैतत् व्यक्ताव्यक्तस्वरूपवत् । तथा पुरुषरूपेण कालरूपेण च स्थितम् ॥ प्रधानपुरुषव्यक्तकालानां परमं हि यत् । पश्यन्ति सूरयः शुद्धं तद्विष्णोः परमं पदम् ॥" इति) ननूक्तेषु श्रुतिस्मृतिवाक्येषु कुत्रचिदाधाराधेयभावः कुत्रचिदभेद इति कथमेषामेकार्थपरतोच्यत इति चेन्न, अविभागलक्षणस्यैवाभेदस्योक्ततया सर्वेषामेकार्थत्वात् । अत एव तदनुप्रविश्येत्युक्तवाक्ये प्रवेशादेवाभेदः प्रतिपादितः । अत एव च सूत्रकारेणापि पूर्वं ब्रह्मत्वेयं रूपस्य श्रुतिगणस्यार्थोऽविभाग एवेति प्रतिपादयितुं सर्वमित्यनुक्त्वा सर्वत्रेति सूत्रितमिति । अत्रानेन पादेन सर्वभूतेषु चात्मानमित्येवम्विधानां श्रुतीनामन्तर्यामिपराणां ब्रह्मपरत्वमवधार्यते । उत्तरपादेन च "यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यती"त्येवम्विधवाक्यानामाधारतापराणामर्थोऽवधारणीय इति विभागो बोध्यः । एवं च सति "यस्तु सर्वाणि भूतान्यात्मन्येवाऽनुपश्यति । सर्वभूतेषु चात्मानं ततो न विजुगुप्सते । यस्मिन्सर्वाणि भूतान्यात्मैवाभूद्विजानतः । तत्र को मोहः कः शोक एकत्वमनुपश्यतः" इति सकलवेदान्तस्य मुख्योपासना मीमांसिता भविष्यतीत्याचार्याशयः । तथा तत्तु समन्वयादित्यत्रोक्तः समन्वयश्च सिद्धो भविष्यतीति ।

सर्वं खल्वित्यादिवाक्येषु न केवलं स्मृत्यादिप्रसिद्धादेवोपदेशाद्ब्रह्म ग्राह्यम्, अपि तु । सर्वं खल्वित्यादिवाक्येषु विवक्षितास्तात्पर्यविषये गुणाः सत्यसङ्कल्पत्वादयस्तेषां ब्रह्मण्येवाञ्जस्येनोपपद्येश्चेत्यर्थः । तेष्वेकं वाक्यमुदाह्रियते छान्दोग्यतृतीये इदमाम्नायते "सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीताथ खलु क्रतुमयः पुरुषः स क्रतुं कुर्वीत मनोमयः प्राणशरीरो भारूपः सत्यसङ्कल्प आकाशात्मा सर्वकर्मा सर्वकाम एष म आत्माऽन्तर्हृदयेऽणीयान् व्रीहेर्वा यवाद्वा एष म आत्माऽन्तर्हृदये ज्यायान् पृथिव्या ज्यायानन्तरिक्षादेतद्ब्रह्म एतमितः प्रेत्याभिसम्भवितास्मीति यस्य स्याद्द्धा न विचिकित्साऽस्ती"ति अस्यार्थः, सर्वं खल्विदं ब्रह्म तज्जत्वात्तल्लत्वात् तदनत्वात् तज्जीवनाच्च इति हेतोः सर्वत्र रागद्वेषशून्यतया शान्तो भूत्वा प्रकरणाद्वाक्यशेषे ब्रह्मशब्देन प्रत्यभिज्ञाप-

मानत्वाच्च । तदेव ब्रह्मोपासीत सदा चिन्तयेत् । यतोऽयं पुरुषो जीवसमूहः क्रतुमयः सङ्कल्पमय एव । "यं यं वापि स्मरन्भावमि"त्यादिस्मृतेः । तत्राधिकारिणमाह, स क्रतुमिति, यस्य पुरुष स्याद्धा तत्त्वतो ब्रह्मनिश्चयोऽस्ति नतु विचिकित्सा संशयः स क्रतुं वक्ष्यमाणोपासनं कुर्वीत । तत्रोपासनाया आकारमाह मनोमय इत्यादिनेति । प्रेत्येति वचनादत्राभिसम्भवनं ब्रह्मलोकद्वारा बोध्यम् । तत्र संशयः, किमत्र मनोमयत्वादिना प्रसिद्धो मानसो ब्रह्मा गौणब्रह्मोपास्योऽथवा परमिति । तत्रायं निर्णयः, यद्यपि मनोमयब्रह्मशब्दाचेकैकस्य गौणतयोभयत्रोपपत्तेः, तथापि सत्यसङ्कल्पत्वासङ्कुचितसर्वकर्मत्वादयो गुणा ब्रह्मण्येवोपपद्यन्ते, अतोऽणुरपि विशेषो अध्यवसायकर इतिन्यायेन गौणमुख्ययोर्मध्ये मुख्ये सम्प्रतिपत्तिरिति न्यायेन च परं ब्रह्मैव सर्वं खल्विदमत्रोक्तं तदेव चोपास्यमिति मनोमयत्वादयश्च धर्मा ब्रह्मण्यपि गौणास्तस्य सर्वमयत्वप्रसिद्धेः, स म आत्मेत्युच्यमानस्य जीवात्मत्वस्योपपादनार्थं तु विशिष्य जीवोपकरणमयत्वमुक्तम्, न तु मनआदीनां करणत्वादिकमत्र विवक्षितम्, येन ब्रह्मणि तदनुपपत्तिः स्यात्, तदेतत्सूत्रकारैर्विवक्षितशब्देनोक्तमिति बोध्यम्, एवं श्रुत्यन्तरेऽपि संशयनिर्णयादय उन्नेयाः ।

शारीरो जीवः शरीरपरिच्छिन्नप्रवृत्तिकत्वात् स नात्रोक्तः । यथोक्तं गुणानुपपत्तेरिति ।

भेदतत्त्वात्कर्मकर्तृव्यपदेशादपि "एतमितः प्रेत्याभिसम्भवितास्मी"त्येवं रूपात् शारीरो हिरण्यगर्भादिः सकलजीवः श्रुतिस्मृतिषु ब्रह्मोपासकत्वेन प्रसिद्धतया नोक्तश्रुत्यर्थः ।

(६) भास्करीये—श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानामेवान्योन्यबलाबलावधारणसन्दिग्धप्रमाणवचनव्यक्तिषु वाक्येषु निर्णयार्थं द्वितीयतृतीयौ पादावारभ्येते । "सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत अथ खलु क्रतुमयः पुरुषो यथा क्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवति स क्रतुं कुर्वीत मनोमयः प्राणशरीर" इत्यादि समाम्नायते । तत्र संशयः, किमत्र मनोमयत्वादिधर्मैः शारीर उपास्यत्वेनोपदिश्यते किं वा ब्रह्मेति ? किं तावत् प्राप्तम् ? शारीर इति । कुतः ? तस्य हि मनोमयत्वादिलिङ्गाव्यभिचारात्र परस्य "अप्राणो ह्यमनाः शुभ्र" इति मनःप्राणसम्बन्धाभावश्रुतेः । ननु च लिङ्गात् तच्छ्रुतिर्बलीयसी, श्रूयते च ब्रह्मशब्दः । सत्यमेवम् । इह तु ब्रह्मश्रुतिरन्यार्था, शमविधिपरं हीदं वाक्यम् । कथम् ? यस्मात् सर्वमिदं विकारजातं ब्रह्मैव तज्जत्वात् तल्लत्वात् तदनत्वाच्च । सर्वस्य चैकत्वेन कचिद्रागादयः प्रवर्तेरन् । "अतः शान्त उपासीते"ति "स क्रतुं कुर्वीते"ति उपासनं विधीयते । अतो मनोमयत्वादिभिर्धर्मैर्विशिष्टस्य जीवस्य उपासनमत्र विधीयते । अणीयस्त्वश्रुतिश्च "एष म आत्मान्तर्हृदयेऽणीयान् व्रीहेर्वा यवाद्वा"इति जीवस्याराग्रमात्रस्यावकल्पते नाप्रमेयस्य ब्रह्मणः । ज्यायस्त्वं तु ब्रह्मभावापेक्षयाऽवकल्पिष्यत इति प्राप्ते ब्रूमः, परं ब्रह्मात्रोपास्यम् । कुतः ? सर्वत्र, सर्वेषु वेदान्तेषु मूलकारणस्य प्रसिद्धस्यात्रोपदेशात्, सर्वं खल्विदं ब्रह्मेति । नन्वन्यार्थं ब्रह्मग्रहणमित्युक्तम्, सत्यम्; तथापि सन्निहितत्वात् तदपेक्षया प्रकरणगतानामुत्तरेषां वाक्यानां प्रवृत्तेः "शान्त उपासीते"त्युक्ते, किमुपासीतेत्यपेक्षा जायते । तत्रायं विधिरवतरति "स क्रतुं कुर्वीत", क्रतुः सङ्कल्पः समाधिरित्यर्थः । ब्रह्मोपासीतेति प्रकृतेन ब्रह्मपदेन निराकाङ्क्षं वाक्यं सम्पद्यते । अस्य च सामान्यविधेर्गुणविशेषविधानार्थमुत्तरं वाक्यजातम् । जीवस्य पुनरुपक्रमे अनुपादानाच्चोत्तरत्रानुवृत्तिरिति न तस्योपास्यत्वम् । मनोमयत्वं ब्रह्मण्युपपद्यते । मनसा विशुद्धेनोपलभ्यतेऽतो मनोमय उच्यते । प्राणप्रेरितशरीरवृत्तित्वाच्च प्राणशरीर उच्यते । "अप्राणो ह्यमना" इति केवलकारणविवक्षयेत्यविरोधः ॥

वक्तुमिष्टा गुणा विवक्षिताः सत्यसङ्कल्पादयः, ते परस्मिन् ब्रह्मण्युपपद्यन्ते। कथं पुनरकर्तृके वेदे वक्तुमिच्छा सम्भवति। नायं दोषः। उपादेयत्वेनानुपादेयत्वेन च विवक्षितत्वमविवक्षितत्वं चोच्यते। यदुपासनार्थमुपादीयते तद्विवक्षितमित्ययं सूत्रोपालम्भः।

तु शब्दोऽवधारणार्थो ब्रह्मैवोपास्यं न शारीरः। कस्मात्? तस्मिन् सत्यसङ्कल्पादीनामनुपपत्तेः॥

जीवविषयः पूर्वपक्ष इति प्रदर्शनार्थं व्यतिरेककथनार्थं च सूत्रम्। इतश्च न शारीरो मनोमयो यस्मात् तस्य कर्तृत्वेनोपासकत्वेन व्यपदेशः कर्मत्वेनोपास्यत्वेन प्राप्यत्वेन च ब्रह्म व्यपदिश्यते। "एतमितः प्रेत्याभिसम्भवितास्मी"ति। एतं प्रकृतं मनोमयत्वादिगुणमात्मानमितः शरीरपाताद्भूर्ध्वमभिसम्भविता प्राप्तास्मीति यस्यैवं निश्चिता बुद्धिः स प्राप्नोत्युपासक इत्यर्थः।

(७) श्रीमद्वल्लभाचार्यमतेऽयमभिप्रायः—शास्त्रारम्भे ब्रह्मजिज्ञासां प्रतिज्ञाय सर्वेषां वेदान्तानां ब्रह्मणि समन्वयस्य वक्तव्यत्वात्, पूर्वं ब्रह्म कथं जिज्ञास्यमित्याकाङ्क्षायां जन्माद्यधिकरणे लक्षणं प्रमाणं च दर्शितम्। ततो लक्षणस्य कर्तृविधया नैराकाङ्क्ष्ये विधान्तरेणान्यस्यापि कारणत्वेन प्राप्त्या लक्षणश्रुतिसङ्कोचः श्रुत्यन्तरपीडा च स्यादिति तद्वारणाय समन्वयाधिकरणे ब्रह्मणः समवायित्वं विचारितम्। ततोऽधिकरणद्वयेन लक्षणे अव्याप्त्यादिदोषाः परिहृताः। ततोऽधिकरणपञ्चकेनोद्गीथाद्युपासनावाक्यानां फलोपकार्यङ्गत्वं विचारितम्। तत्रापि तल्लिङ्गादिद्वयेन नामान्तरकृतः सन्देहोऽपि परिहृतः। अन्तिमेन च चिदचित्संश्लेषरहितस्य साकारस्य केवलस्य कारणत्वं बोधयितुं तत्संश्लेषनिवारणेन सर्वं निगमितम्। प्रत्ययप्रकृतिरूपशब्दकृतास्सन्देहाश्च वारिताः।

अतः परं अर्थसन्देहवारणार्थं द्वितीयादिपादा आरभ्यन्ते। केवलजीवजडतत्समुदायभेदेनार्थस्य त्रैविध्यात्। तत्र द्वितीये जीवपुरस्कारेण सन्देहा निवार्यन्ते।

तत्र छान्दोग्ये पञ्चमप्रपाठके इदमाम्नायते "सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत, अथ खलु क्रतुमयः पुरुषो यथा क्रतुरस्मिँल्लोके पुरुषो भवति, तथेतः प्रेत्य भवति, स क्रतुं कुर्वीत, मनोमयः प्राणशरीरो भारूपः सत्यसङ्कल्प आकाशात्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादर एष आत्माऽन्तर्हृदयेऽणीयान् व्रीहे"रित्यादि। अत्र वाक्योपक्रमे "सर्वं खल्विदं ब्रह्मे"त्यनेन सर्वस्य ब्रह्मत्वं प्रतिज्ञाय, कथं सर्वं ब्रह्मेत्याकाङ्क्षायां ब्रह्मकार्यत्वाद् ब्रह्मेति बोधयितुं तज्जलानिति सर्वविशेषणम्। जायत इति जम्, लीयत इति लम्, अनितीत्यन्। जं च लं च, तच्च तदन् च अलान्, तस्माज्जलान् तज्जलानिति तदर्थात्। तेनेदमुपासनं वाचो धेनुत्ववत् कल्पितैर्धर्मैरिति सिध्यति। इतिश्च हेतौ। तथा शान्त इत्युपासकविशेषणम्। अग्रे च, "स क्रतुं कुर्वीते"ति क्रतुर्विधीयते। तद्रूपं च मनोमयत्वादिवाक्येनोच्यते। तेन तस्योपासनात्मकत्वमवगम्यते। तथा सत्यत्र वाक्यद्वये एकस्यान्यशेषत्वं वा स्वतन्त्रत्वं वेति विमर्शे, यदि पूर्ववाक्ये जगत उक्तरूपत्वात् सर्वत्र रागद्वेषरहितो भूत्वा वक्ष्यमाणोपासनं कुर्यादित्येवं वक्ष्यमाणानुवादेन तच्छेषतया शमविधिरङ्गीक्रियते, तदा विध्यनुवादवैरूप्यं, पूर्ववाक्यत्वेनानुवादासम्भवः। वक्ष्यमाणोपासनार्थं शमं सम्पादयेदित्यवकल्पने, शान्त उपासीतेति पदद्वयलक्षणापत्त्या वाक्यार्थस्य लाक्षणिकत्वप्रसङ्गः। वक्ष्यमाणोपासनाया जीवात्मविषयत्वे 'शान्तो दान्त' इत्यात्मदर्शनवाक्यसामान्येन शमस्यावापसिद्धतया विध्यानर्थक्यप्रसङ्गश्च स्यात्। नाप्युत्तरवाक्यस्य पूर्वशेषत्वम्। फलवाक्यविरो-

धात् । अत उभयोः स्वातन्त्र्यमेव युक्तम् । तथा सति पूर्ववाक्ये जगतो ब्रह्मत्वेनोपासनं विधीयत इति स्थितम् । एतदेव च पुराणेषु विराडुपासनमित्युच्यते । अतः परमुत्तरवाक्यार्थे सन्देहः । तत्र "स एष जीवो विवरप्रसूतिः प्राणेन घोषेण गुहां प्रविष्टः । मनोमयं सूक्ष्ममुपेत्य रूप"मित्येकादशीयवाक्यान्मनोमयत्वं वेदलिङ्गम् । प्राणेन घोषेण गुहां प्रविष्ट इति प्रवेशव्यवहारकथनात् कारणाभेदोपचारेण तस्य प्राणशरीरत्वम् । अग्रे सत्यसङ्कल्पादिचेतनधर्माणाम्, "एष म आत्माऽन्तर्हृदय" इति च कथनाद् विज्ञानमयो जीवो वेदप्रतिपाद्यब्रह्मत्वेनोपास्य उच्यते ? उत ब्रह्मधर्मबाहुल्याद्न्तर्यामित्वेन पुराणेषु प्रसिद्धं ब्रह्म वा उपास्यमुच्यत इति । तत्र पूर्ववाक्ये जडस्य जगतो ब्रह्मत्वेनोपासनमुक्तमिति द्वितीयवाक्येऽपि जीवस्य ब्रह्मत्वेन उपासनमेव युक्तम्, न तु ब्रह्मवाक्यत्वम् । प्रबलहेतुं विना तथाङ्गीकर्तुमशक्यत्वात् । न च जीववाक्यत्वाङ्गीकारेऽत्र कः प्रबलो हेतुरिति शङ्क्यम् । शाखान्तरे "विज्ञानं ब्रह्म चेद्वेदे"ति जीवस्य ब्रह्मत्वेनोपासनायाः स्पष्टतया, अत्र च भारूपत्वकथनेन तत्प्रत्यभिज्ञानस्यैव हेतुत्वात् । नच पदान्तरानन्वयः शङ्क्यः । वेदबोधितत्वान्मनोमयपदस्य सति असङ्कल्पत्वात् सत्यसङ्कल्पपदस्य प्राणोपाधिकत्वात् प्राणशरीरपदस्य चान्वये शेषाणामुपासनार्थानुवादतयान्वयस्य सुघटत्वात् । अतः कार्यकारणयोरभेदाज्जीव एव ब्रह्मत्वेनोपास्य इत्येवं प्राप्ते—

उच्यते—इदं ब्रह्मवाक्यमेव । कुतः ? सर्वत्र प्रसिद्धोपदेशात् । परमशान्तस्य पूर्वोपासनया शुद्धान्तःकरणस्य सर्ववेदान्तप्रसिद्धकब्रह्ममननात्मकपरमहितानुशासनस्यैव युक्तत्वेन तदुपदेशादित्यर्थः । नच शाखान्तरस्यास्याजीववाक्यत्वं शङ्क्यम् । तत्राग्रे आनन्दमयस्योपदेष्टव्यत्वेन जीवोपासनाया उचितत्वेऽप्यत्राग्रे उपदेश्यान्तरादर्शनेनात्र तदङ्गीकारस्यायुक्तत्वादिति । नन्वस्मिन् सूत्रे पक्षवाचकपदस्यादर्शनात् कथमेतस्यैव विषयवाक्यतयाऽवधारणमिति चेत् ? उच्यते, प्रथमपादे ब्रह्मजिज्ञासां प्रतिज्ञाय, जन्मादिसूत्रे ब्रह्म लक्षयित्वा, आनन्दमयाद्यैरधिकरणैस्तत् परीक्षितम् । ततस्तस्य बाह्यत्वे प्राप्ते, अन्तस्तद्धर्माधिकरणेन तस्यान्तरत्वं साधितम् । तच्च परीक्षणीयम् । अन्यथा आनन्दमयस्य सर्वान्तरत्वं न सम्यगवगतं स्यात् । तदस्मिन् पादे परीक्ष्यते । आन्तं तस्यैव प्रपञ्चदर्शनात् । नच तद्वृथेति शङ्क्यम् । आनन्दमयविषयवाक्यसन्दर्भे "तत्त्वेव भयं विदुषोऽमन्वानस्ये"त्यमन्तुर्दोषकथनेन तन्मननस्यापदयकत्वात् । तच्च, मननमत्र अथ खल्वित्यादिसन्दर्भादवगम्यत इत्यतो विषयत्वावधृतिः । किञ्च, जगत्कारणत्वं निरवद्यानन्दात्मकत्वं यथा श्रौतं लक्षणम्, तथा "उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः, यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वर" इत्यपि स्मार्तं लक्षणम् । तत्र किं लोकत्रयम्, कथमावेशः, किं भरणम्, कथं च भरणम्, कथमव्ययत्वम्, ईश्वरत्वं चेति । तदप्येतेन विमृष्टं भविष्यति । किञ्च, मननं हि अनपेक्षिताङ्गोद्धापेनापेक्षिताङ्गावापेन च वाक्यार्थनिर्धारेण भवति । तत्र पूर्ववाक्योक्तं जगज्जनकत्वं "एत इति वै प्रजापतिर्देवानामसृजते"त्यादिश्रुतिभिर्वेदे चतुर्मुखे चास्तीति किमात्मकत्वेन जगदुपास्यमिति शङ्कायां "अस्य महतो भूतस्य निःश्वसितं यदृग्वेदो यजुर्वेद" इत्यादिभिः "यो ब्रह्माण"मित्यादिभिश्च तयोर्जन्यत्वेऽवधारिते तादृशस्य साङ्कुशजनकत्वस्योद्धापेन "यतो वे"त्यादिश्रुत्युक्तस्य तस्यावापेन च ब्रह्मपदस्य परवाचकत्वं निर्धार्य तदात्मकत्वेनोपास्यमिति वाक्यार्थो यथा मतो भवति । तथा एतद्वाक्येऽपि सत्यसङ्कल्पादिपदोक्तानां धर्माणां वेदे हिरण्यगर्भे जीवान्तरे च असम्भवात्तद्विशिष्टे मनोमये मन्तव्ये, "मनसैवानुद्रष्टव्यः" "स मानसीन आत्मा जनानां," "मनसा तु विशुद्धेने"त्यादिश्रुतिभि-

स न्यायो नात्र प्रवर्तते । किन्तु लोकन्यायः । लोके हि यस्य चेतनस्य महत आशास्यत्वम्, तस्यैव शेषित्वमिति परणीयस्थले दृष्टम् । तथा ध्येयस्य न ध्यातृशेषत्वमिति तु पूर्वतन्त्रेऽपि । प्रकृते तूभयमपि ब्रह्मणीति कथमपि जीवशेषत्वं तस्य न युज्यते । एवं ब्रह्मणः प्राधान्ये तस्यैव प्रकरणित्वादिदं ब्रह्मवाक्यमेव । किञ्चात्र कर्मकर्तृपदेन सेवकत्वं बोध्यते । अतोऽपि न शेषित्वम् । किञ्च, भजनीयरूपं यदि न कथ्यते तदा तादृशं फलं न सिध्यतीत्यतोऽपि तस्य मुख्यत्वमिति ज्ञापनायाधिकरणसम्पूर्णत्वद्योतनाय च चकारः । एवमनेनाधिकरणेनानन्दमयस्यान्तरस्य मनोमयत्वादयो धर्मा विचारिताः ॥



## २ शब्दविशेषाधिकरणम् ॥

शब्दविशेषात् ॥ १।२।५ ॥

( हिरण्मयादिपदैः किमन्तरात्मा ब्रह्मत्वेनाभिधीयते, उत जीवत्वेन ? )

इदमाम्नायते वाजिशाखायाम् । "यथा व्रीहिर्वा यवो वा श्यामाको वा श्यामाकतण्डुलो वैवमयमन्तरात्मन् पुरुषो हिरण्मयः" ( श. ब्रा. १०।३।३।२ ) इति । तत्र संशयः हिरण्मयः पुरुषः किं जीव उत ब्रह्मेति ।

( उपक्रमोपसंहारयोर्बलाबलविचारः )

उपक्रमबलीयस्त्वे जीवः, उपसंहारबलीयस्त्वे ब्रह्मेति । यत्रैकस्यान्यपरत्वेनैकार्थता सम्भवति तद्बलीयस्त्वमिति सिद्धं पूर्वतन्त्रे ।

( पूर्वपक्षः )

तत्र चतुर्विधभूतनिरूपणार्थं जीवस्यैवाराग्रमात्रस्यान्तर्हृदये प्रतिपादकमिदं वचनं फलतो हिरण्मयत्वमिति, न त्वेतादृशाभाससमानत्वं ब्रह्मणो युक्तमतो जीवप्रतिपादकमेवेदं वाक्यमिति प्राप्त उच्यते—

---

इदानीमस्याधिकरणस्य पूर्वाधिकरणेनान्तस्तद्धर्माधिकरणेन वा गतार्थत्वनिराकरणार्थं शब्दविशेषाधिकरणमारचयन्ति—शब्दविशेषादिति । आम्नायत इति । वाजिशाखायामित्यादि । सम्पूर्णं विषयवाक्यमाहुः—यथेति । पूर्वाधिकरणे मनोमयः पक्षः । अत्र हिरण्मयः पक्ष इति । पक्षभेदप्रयुक्ताधिकरणभेदं सूचयितुं संशयाकारमाहुः—तत्र संशय इति ।

ननु अन्तस्तद्धर्माधिकरणे हिरण्मयस्य ब्रह्मत्वमुक्तमेवेति व्यर्थमिदमधिकरणमित्यत आहुः—उपक्रमेति । पूर्वं विषयवाक्ये प्रथमत एव हिरण्मयपदोपादानम् । अत्र तु उपसंहारे तदुपादानम्, प्रबलत्वं तूभयोरपीति प्रकृते उपक्रमस्य प्रबलत्वे व्रीह्यादिसादृश्येन जीवः । उपसंहारे समबलत्वे ब्रह्म प्रतीयत इति संशयादधिकरणान्तरमित्यर्थः । ननूक्तमेव प्राबल्यनियामकस्य प्राथम्यसत्त्वात्, कथमुभयोः प्रबलत्वमित्यत आहुः—यत्रेति । यस्मिन् वाक्ये इत्यर्थः । न हि प्राथम्यं प्रबलतायां प्रयोजकं किन्त्विदमेवेत्याहुः—एकस्येति । उभयोर्मध्ये एकस्येत्यर्थः । अन्यपरत्वेन । इतरपदार्थान्वयेन । एकार्थता एकवाक्यत्वम् । वाक्यस्येति शेषः । पूर्वतन्त्रे पूर्वमीमांसायाम् । तथा चेतरपदार्थान्वयस्य हकृतैकवाक्यत्वप्रयोजकत्वं प्रबलत्वम् । तच्च कचिद्वाक्यविशेषे उपक्रमे कचिदुपसंहारे इति भावः । एवं च समानत्वाभावादधिकरणान्तरमिदमिति मन्तव्यम् ।

पूर्वपक्षमाहुः—तत्रेति । चतुर्विधेति । जरायुजादिचतुर्विधेत्यर्थः । छान्दोग्ये त्रिविधानां सत्त्वादत्र चतुर्थस्याधिकस्य कथनार्थमिति यावत् । आराग्रमात्रस्येति । तोत्रप्रोतायःशलाकाग्रपरिमाणस्य प्रतिपादकमिति व्रीह्यादिचतुर्विधदृष्टान्तैर्जीवस्यैव प्रतिपादकमित्यर्थः । ननु हिरण्मयशब्दस्य ब्रह्मप्रतिपादकत्वात् संशये पर्यवसानं स्यादित्यत आहुः—फलत इति । मोक्षावस्थायामित्यर्थः । आभासेति । आभासास्तुच्छा व्रीह्यादयस्तत्समानत्वमित्यर्थः । उच्यते सिद्धान्तसूत्रमुच्यते ।

( अत्रैव, शब्दोक्तहिरण्मयत्वरूपविशेषात् )

शब्दविशेषात्। हिरण्मयः पुरुषो न जीवस्य फलमपि। तत्प्राप्तेरेव फलत्वात्। नाप्ययं नियमः—तस्यामेव मूर्तौ लय इति। अतः शब्देनैव विशेषस्योक्तत्वान्न हिरण्मयः पुरुषो जीवः ॥ १।२।५॥

( अभिमान्येव जीवो युक्त इत्याशङ्क्य द्वितीयसूत्रावतारः )

ननु हृदये विद्यमानत्वादभिमान्येव जीवो युक्त इति चेत्तत्राह—

स्मृतेश्च ॥ १।२।६॥

( स्मृतेश्चापि न जीव उपास्यः )

"ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति" (भ.गी.१८।६१) इति। ननु सर्ववेदानां यन्निःश्वासत्वं तस्य भगवतो वाक्यं कथं स्मृतिरिति उच्यते। "तं त्वौपनिषदं पुरुषं पृच्छामि" (बृ. ३।९।२६) इति श्रुतेः, केवलोपनिषद्वेद्यं ब्रह्म न प्रमाणान्तरवेद्यम्। ततश्चार्जुनस्य शिष्यरूपेण प्रपन्नस्य पुष्टिभक्तत्वाभावाद्भगवद्वाक्ये निर्विचिकित्सविश्वासाभावाद् रथित्वेनैव स्थाप्यत्वाच्च न

---

**शब्दविशेषात्।** शब्दे हिरण्मयशब्दे यो विशेषः आनन्दमयबोधकत्वरूपो ब्रह्मत्वसाधको यो विशेषस्तस्मिन् हिरण्मयानन्दमयशब्दयोः पर्यायित्वम्। अन्तस्तद्धर्माधिकरणे स्पष्टम्। जीवस्य फलतोऽपि हिरण्मयत्वं न सम्भवतीत्याहुः—**तत्प्राप्तेरिति।** इदं त्वानन्दमयाधिकरणे स्पष्टम्। ननु सायुज्यमुक्तौ हिरण्मयत्वं सम्भवतीत्यत आहुः—**नाप्ययमिति।** अत्र प्रमाणं तु तैत्तिरीयश्रुतिः। तथाहि, "ब्रह्मणः सायुज्यꣳसलोकतामाप्नोत्येतासामेव देवतानाꣳसार्ष्टिताꣳसमानलोकतामाप्नोति य एवं वेदेत्युपनिषदि"ति ॥५॥

स्मृतेश्चेति सूत्रमवतारयन्ति—**नन्विति।** हृदये **विद्यमानत्वादिति।** अनेनैव लिङ्गात् अभिमानी जीव एवेत्यर्थः। एतेन श्रुत्या फलतो हिरण्मयत्वसन्देहेऽपि लिङ्गादेव जीवत्वं युक्तमिति सूचितम्। **तत्राहेति।** इत्याशङ्कायामाहेत्यर्थः।

**स्मृतेश्च।** "सर्वोपनिषदो गावो दोग्धा गोपालनन्दनः" इति वाक्याद्गीतावाक्येषु स्मृतित्वमसहमानः शङ्कते—**नन्विति।** समाधानमाहुः—**उच्यत इति।** **प्रपन्नस्येति।** "शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नमि"ति वाक्यात् प्रपन्नस्येत्यर्थः। अर्जुनस्य पुष्टिभक्तत्वाभावे हेतुमाहुः—**भगवदिति।** **निर्विचिकित्सेति।** निःसंशयेत्यर्थः। "अपरं भवतो जन्म"त्यादिना विश्वासे संशयस्योक्तत्वादिति भावः। किञ्च, भक्तौ पुष्टित्वं नाम माहात्म्यज्ञानाद्युपाधिरहितत्वे सति साक्षाद्धर्मिस्वरूपपर्यवसायित्वे सति सुदृढत्वे सति ज्ञानादिसर्वानयनोद्यत्वे सति सर्वतोऽधिकत्वे सति अगणितानन्दरूपत्वे सति अतुल्यातिशयत्वम्। तत्र, यत्र स्नेहरूपभक्तौ। सैव पुष्टिभक्तिपदवाच्या, सा च गोपीनां गोपालानामेवेति अर्जुनस्य तु माहात्म्यज्ञानोपाधिसद्भावान्न पुष्टिभक्तत्वम्। अत एवोक्तं विश्वरूपदर्शनानन्तरमर्जुनेन "अजानता महिमानं तवे"त्यादिनाऽसत्कारनिवेदनं च सङ्गच्छते। अत एव गोवर्धनोद्धरणानन्तरं स्वस्थाने स्थापनानन्तरं गोपालैर्गोपीभिश्च भगवदुपरि जलं भ्रामयित्वा "दधाति तिलकः कृत" इति स्नेहकार्यमेव कृतम्, न तु माहात्म्यदर्शनेन नमनं विज्ञापनादिकं कृतमिति तेषां तासां च पुष्टिभक्तत्वमिति। इदं च श्रीमत्प्रभुगोस्वामिचरणैः पुष्टिप्रवाहमर्यादाविवरणे स्पष्टमेवोक्तमिति विस्तरभयाद्विरम्यते। तत्त्वर्जुनस्य मास्तु पुष्टिभक्तत्वम्। मर्यादामार्गरीत्या मर्यादाभक्तस्य उपनिषद्वाक्योपदेशे किं बाधकमत आहुः—**रथित्वेनैवेति।** **स्थाप्यत्वाच्चेति।** भगवतेति शेषः। तथा च मर्यादामार्गे कृताचमन-

तादृशाय तादृशदेशकालयोरुपनिषदामवक्तव्यत्वाद्गुरुरूपतादृशरूपं निःश्वसितवेदोद्गमजनकं स्मृत्वा तदर्थमपि स्मृत्वा भगवान्पुरुषोत्तमो वाक्यान्युक्तवान् स्मृतिरूपाणि । ततो ब्रह्मविचारे तान्यप्युदाहृत्य चिन्त्यते । पुनश्च भगवांस्तदधिकारेण ब्रह्मविद्यां निरूप्य स्वकृपालुतया "सर्वगुह्यतममि"त्यादिना भक्तिप्रपत्ती एवोक्तवान् । अतोऽङ्गत्वेन पूर्वं सर्वनिर्णाया उक्ताः इत्यध्यवसेयम् । तथैवार्जुनविज्ञानात्-"करिष्ये वचनं तव" (भ. गी. १८।७३) इति । चकारात्तन्मूलभूतनिःश्वासोऽप्युच्यते । व्यासस्यापि भगवज्ज्ञानांशत्वाददोषः ॥ १।२।६ ॥

( उपक्रमेण विचारः )

उपक्रमबलीयस्त्वमाशङ्क्य परिहरति—

**अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च ॥१।२।७॥**

---

प्राणायामस्य कुशासनोपविष्टस्य गुरुणा उपनिषद्वाक्योपदेशः कर्तव्य इति विधिः । न तु रथोपविष्टस्यापि भावमापन्नस्य शिष्यस्य गुरुणा श्रुतिवाक्योपदेशः सम्भवतीत्यतः स्मृतिवाक्योपदेश इत्यपि बोध्यम् । अत एव मर्यादायां विधिरेव नियामकः पुष्टिमार्गे तु विधेर्गौणत्वं स्नेह एव नियामक इति पुष्टिप्रवाहमर्यादाविवरणे स्पष्टम् । अत एवाहुः—**तादृशायेति** । रथित्वात्तद्युद्धोपयोगिवेषधारिणे कुशासनादिहीनाय पुष्टिभक्तिहीनाय चेत्यर्थः । ननु शुचौ देशे शुभे काले विध्युक्तकर्मणः प्रसरो भविष्यतीत्यत आहुः—**तादृशेति** । सङ्ग्रामाङ्गणरूपदेशे युद्धकाले चेत्यर्थः । **अवक्तव्यत्वादिति** । तत्र सद्भावादिसेवकानामत्यन्तसान्निध्यादवक्तव्यत्वादित्यर्थः । ननु सर्वमिदं गीतायाः स्मृतित्वे सम्भवे, तदेव तु नास्ति भगवन्मुखनिःसृतत्वादित्यत आहुः—**गुरुरूपेति** । विधातुर्गुरुरूपम् । तादृशं रूपं विधातृजनकं स्वस्यादिमं रूपमित्यर्थः । तस्यादिमत्वे हेतुमाहुः—**वेदोद्गमेति** । अत्र प्रमाणं "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै' इत्याद्युपनिषद्वाक्यम् । गीतायाः स्मृतित्वं प्रतिपादयन्ति—**स्मृतित्वेति** । तथा चोभयोः स्मरणेन स्मृतित्वं सिद्धमिति भावः । स्मृतिरूपाणि स्मृतौ यादृशानि सन्ति तादृशानि वाक्यानीत्यर्थः । नन्वेवं चेत्तर्हि "तं त्वौपनिषदं पुरुषं पृच्छामी"त्युक्तत्वादुपनिषद्वाक्यैरेव ब्रह्मप्रतिपादनं कर्तव्यम् । तत्र स्मृतिवाक्यानां क्वोपयोग इत्यत आहुः—**तत इति** । उपनिषदर्थप्रतिपादकत्वरूपकारणादित्यर्थः । एवं च गीतावाक्यैरुपनिषत्प्रतिपाद्यपुरुषविचारः सुखेन कर्तव्य इति भावः । इदानीं ब्रह्मविद्याविचारवान् भक्तः शरणागतश्चाधिकारीति भगवदाशयं स्फुटीकर्तुं ब्रह्मविद्यायास्तदङ्गत्वं वदन्ति—**पुनश्चे**त्यादिनाध्यवसेयमित्यन्तेन । पुनश्चेत्यस्य स्वकृपालुतयेत्यनेन सम्बन्धः । **तदधिकारेण** भक्तिप्रतिपत्त्यधिकारेण । **स्वकृपालुतये**त्यनेनार्जुनस्य तद्विषयकज्ञानाभावादाश्रयाभावेऽपि कथनं सूचितम् । **भक्तिप्रतिपत्तीति** । 'मन्मना भव मद्भक्त' इत्यादिना भक्तिप्रपत्तिर्नाम शरणागमनम्, तच्च "सर्वधर्मान् परित्यज्ये"त्यनेनोक्तवानित्यर्थः । **अत इति** । प्रधानस्यान्ते निरूपणरूपकारणादित्यर्थः । तन्मूलभूतःनिश्वासातिनिःश्वासो वेदः, स वै तैत्तिरीयोपनिषदि "हृदयं चाप्यधोमुखमि"त्युपक्रम्य "तस्यान्ते सुषिण्डं सूक्ष्मं तस्मिन् सर्वं प्रतिष्ठितमि"त्युक्तम् । ननु कश्चिद्व्यासैरपि पुराणेषु ब्रह्मविद्या प्रतिपाद्यते तत्पुराणवाक्यमपि तन्मूलमूतं स्यादत आहुः—**व्यासस्यापीति** । **अदोष इति** । तन्मूलभूतत्वे दोषो नास्तीत्यर्थः ॥ ६ ॥

सूत्रमवतारयन्ति—**उपक्रमेति** । उपक्रमस्य जीवनिर्णायकवाक्यस्य बलीयस्त्व असन्नतिपक्षत्वम् । **अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च** । तद्व्यपदेशपदस्य व्रीहि-

ननु व्यापकस्येश्वरस्य हृदयदेशस्थितिरयुक्ता व्रीह्यादिरूपत्वं च। अतोऽर्भकम-ल्पकमोको हृदयस्थानं यस्य तत्त्वाद् व्रीह्यादितुल्यत्वाच्च न परमात्मा वाक्यार्थ इति चेत्, न, निचाय्यत्वात्।

( अर्भकौकस्त्वादिति हेतुं दूषयति )

पूर्वं प्रथमदूषणं परिहरति। हृदये ज्ञातुं शक्यत इति तदायतनत्वेन प्रतिपाद्यते निदिध्यासनानन्तरं हि साक्षात्कारस्तदन्तःकरण एवेति निचाय्यत्वम्। भक्तौ तु बहिरपीति विशेषः॥

( तद्व्यपदेशत्वादिति द्वितीयं हेतुं दूषयति )

द्वितीयं परिहरति। एवं व्योमवत्। एवं व्रीह्यादितुल्यतया यत्प्रतिपादनं चतुर्विधभूतान्तरत्वख्यापनाय यथा चत्वार उपरवाः प्रादेशमात्रा इति तथा तद्धृदयाकाशे प्रकटस्य सच्चिदानन्दस्वरूपसर्वतःपाणिपादान्तस्य तत्स्वरूपमिति।

( अधिकरणान्तरसूचनम् )

पूर्वपक्षसिद्धान्तयोश्चकारद्वयमेतादृशवाक्यान्तरे पूर्वपक्षसिद्धान्तयोराधिक्योपपत्तिसमुच्चयार्थम्। तेनात एव प्राण इतिवदधिकरणान्तरमपि सूचितमिति॥१।२।७॥

---

सादृश्यव्यपदेशार्थकत्वं निचाय्यत्वपदस्य प्रत्यक्षविषयत्वार्थकत्वं बोध्यम्। सूत्रस्थशङ्कार्थमाहुः—नन्विति। व्रीह्यादिरूपत्वं चेति। अयुक्तमिति लिङ्गविपरिणामेनान्वयः। न परमात्मा वाक्यार्थ इति।

जीवधर्मस्य स्पष्टप्रतीयमानत्वादिति हेतोः पूरणाय सूत्रस्य समाधानार्थमाहुः—पूर्वमिति। तद्धृदयं आयतनत्वेन प्रतिपाद्यते। न तु वस्तुगत्या तदायतनमस्तीति भावः। तदन्तःकरणे जीवान्तःकरणे। ज्ञानमार्गे उपलब्धिस्थानमुक्त्वा भक्तिमार्गे सर्वत्रोपलब्धिमाहुः—भक्तौ त्विति। बहिरपीति। अपिशब्देनान्तःकरणस्य सङ्ग्रहः। अत एव "अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणस्थितः" इति तैत्तिरीयश्रुतिप्रतिपादितव्यापकताऽपि सङ्गच्छते।

द्वितीयमिति। व्रीह्यादिपरिमाणरूपं दूषणमित्यर्थः। चतुर्विधेति। जरायुजादिचतुर्विधेत्यर्थः। व्योमवदिति। दृष्टान्तं विशदयन्ति—यथेति। उपरवा इति। सोमयागीयवेद्यां सदो मण्डपात् पुरतो हविर्धानमस्ति तत्र दक्षिणभागे शकटात् पुरतश्चत्वारः प्रादेशमात्रा बिलविशेषा उपरवपदवाच्या इत्यर्थः। दार्ष्टान्तिकं विशदयन्ति—तथेति। यथा उपरवचतुर्विधं बिलेषु व्यापकीभूतस्याकाशस्य प्रादेशमात्रत्वज्ञानम्। तथा चतुर्विधभूतहृदयेषु व्रीह्यादितुल्यत्वेन व्यापकीभूतस्य परब्रह्मणः प्रतिपादनमिति भावः। तद्धृदयेति। चतुर्विधजीवहृदयेत्यर्थः। तत्स्वरूपमिति। व्रीहितुल्यस्वरूपमित्यर्थः।

सूत्रस्थचकारद्वयतात्पर्यमाहुः—पूर्वपक्षेति। एतादृशवाक्यान्तरे तैत्तिरीयोपनिषदि "आदित्यो वा एष एतन्मण्डलमि"ति वाक्यान्तरे। आधिक्येति। आधिक्ये पूर्वापेक्षया वैलक्षण्ये या उपपत्तिः पूर्वपक्षसमाधानं तत्समुच्चयार्थमित्यर्थः। तथाहि, तैत्तिरीयं विषयवाक्यम्—"आदित्यो वा हिरण्मयः पुरुषः" अत्र हिरण्मयः पुरुषो जीवो वा ब्रह्म वेति संशयः। तत्र जीव इति पूर्वपक्षः। कुतः? आदित्यमण्डले हृदयापेक्षया महत्त्वरूपं वैलक्षण्यं यद्यपि वर्तते, तथापि परममहत्त्वपरिमाणाभावात्तत्रत्यपुरुषस्य जीवत्वमेव वक्तव्यत्वादिति। सिद्धान्तस्तु, तत्रापि निचाय्य एव हृदयादाविवेति। अत्र प्रमाणं "यश्चासावादित्ये स एक" इति श्रुतिरेव। नन्वेतादृशविषयवाक्यघटितमधिकरणान्तरं स्यात्। तत्रेष्टापत्तिमाहुः—तेनेति॥७॥

बाधकमाशङ्क्य परिहरति—

सम्भोगप्राप्तिरिति चेन्न वैशेष्यात् ॥ १।२।८॥

( वैशेष्याज्जीवस्यापेक्षित एव भोगः )

यदि सर्वेषां हृदये भगवान् जीववत्तिष्ठेत्तदा जीवस्येव तस्यापि सुखदुःखसाक्षात्कारस्तत्साधनादिपरिग्रहश्च प्राप्नोतीति चेत्, न, वैशेष्यात्। विशेषस्य भावो वैशेष्यं तस्मात्। सर्वरूपत्वमानन्दरूपत्वं स्वकर्तृत्वं तद्विशेषस्तद्भावो ब्रह्मणि वर्तते न जीव इति जीवस्यैव भोगो न ब्रह्मण इति वैशेष्यपदादयमर्थः सूचितः। अपेक्षित एव भोगो नानपेक्षित इति। न तु तस्य भोगाभाव एव। अग्रिमाधिकरणविरोधात्। यथेन्द्रियाद्यधिष्ठातृदेवतानाम्। तत्त्वमस्यादिवाक्येन जीवस्यापि तथात्वे तस्यापि तद्वदेव भविष्यति ॥ १।२।८।२ ॥

---

सम्भोगप्राप्तिरिति चेन्न वैशेष्याद्बाधकमिति। सम्भोगप्राप्त्या जीवतुल्यत्वरूपबाधकमित्यर्थः। ननु कथं बाधकमित्यत आहुः—यदीति। सम्भोगपदस्य सम्यक् भोगः सम्भोग इत्यर्थकत्वं मनसि निधायाहुः—सुखदुःखेति। सम्भोगपदस्य सम्यक् भोगो यस्मात्साधनात्सः इति साधनीभूतपुण्यपापादिपरत्वं मनसि निधायाहुः—तत्साधनेति। सुखदुःखसाधनेत्यर्थः। समाधानमाहुः—वैशेष्यादिति। स्वकर्तृत्वं स्वस्वरूपजगत्कर्तृत्वम्। तद्विशेषः। तस्माज्जीवाद्विशेषः। तद्भाव इति। तस्य विशेषस्य भावो वैशेष्यमित्यर्थः। अग्रिमेति। चराचरेत्यर्थः। "ब्रह्मणोऽपेक्षितभोग एव वर्तते" इत्यत्रानुमानमेव प्रमाणमाहुः—यथेति। चक्षुषा सुरूपं कुरूपमुभयमपि गृह्यते। अधिष्ठातुस्तत्सुरूपे एवापेक्षेति तस्यैवाभिनिवेशेन ग्रहणं यथा, तथा चात्रास्य अचक्षुषश्चक्षुः अश्रोत्रस्य श्रोत्रमिति सर्वाधिष्ठातुर्ब्रह्मणोऽप्यपेक्षितभोगवत्त्वमनुमीयत इति भावः। अनुमानं च ब्रह्मापेक्षितभोगवत्, अधिष्ठातृत्वात्, इन्द्रियाधिष्ठातृदेवतावत्। तथात्व इति। ब्रह्मत्वेत्यर्थः। भविष्यतीति ब्रह्मवदेवापेक्षितभोगवत्त्वं भविष्यतीत्यर्थः। ततः पूर्वं त्वविद्यावश्यत्वात्पुण्यादिसाधनैनैवापेक्षितभोगवत्त्वं भविष्यतीति सर्वमनवद्यम्। इति द्वितीयाधिकरणम् ॥ ८ ॥

---

१ अत्रेत्थं व्याख्यानान्तराणि—

तत्र शाङ्कराः—इतश्च न शारीर उपास्य इत्याह—समानप्रकरणे 'अन्तरात्मन्पुरुषो हिरण्मयः' इति शारीरस्य यः शब्दोऽभिधायकः सप्तम्यन्तः अन्तरात्मन्निति, तस्माद्भिन्नो विभक्तिरन्यः प्रथमान्तः पुरुषशब्दो मनोमयत्वादिविशिष्टस्यात्मनोऽभिधायकः; तस्य सत्त्वाच्च परस्मादन्यः शारीरः उपास्य इत्यर्थः ॥

किञ्च—'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया ॥' इत्यादौ जीवपरमात्मनोर्भेदस्मरणाच्च परस्मादन्यो जीव उपास्य इति सिद्धम्। अनयोर्भेदस्तु काल्पनिकः, न वास्तव इति रहस्यम् ॥

अधुना परमात्मन उपास्यत्वमाक्षिप्य परिहरति अर्भकौकस्त्वात् अर्भकमल्पम् ओकः स्थानं यस्य सोऽर्भकौकाः तस्य भावस्तत्त्वं तस्मात्, 'एष म आत्मान्तर्हृदये' इति परिच्छिन्नहृदयायतनत्वादित्यर्थः। किञ्च; तद्व्यपदेशाच्च तस्य स्वशब्देनैव 'अणीयान्' इत्यणीयस्तया व्यपदेशात् आराग्रमात्रो जीव इहोपास्यः न सर्वगतः परमात्मेति चेत्, न; कुतः? निचाय्यत्वादेवम्। अर्भकौकस्त्वाणीयस्त्वादिविशिष्टत्वेन रूपेण परमात्मन इह निचाय्यत्वात् उपास्यत्वात्। अतः सर्वगतस्यात्मन उपासनापेक्षया अर्भ-

कौकस्त्वादिगुणः । नैतावता सर्वगतत्वहानिः । तत्र दृष्टान्तः व्योमवत्; यथा सर्वगतमपि व्योम-सूच्याद्यवच्छेदेनार्भकौकोऽणीयश्च व्यपदिश्यते तद्वत् ब्रह्मापीत्यर्थः ॥

अधुना परमात्मनः सर्वगतत्वे दोषमाशङ्क्य परिहरति व्योमवत्परमात्मनः सर्वगतत्वे चेतनत्वावि-शेषात् जीववत् सुखदुःखानुभवरूपसम्भोगप्राप्तिरिति चेत्, न; वैशेष्यात् जीवपरमात्मनोः भोक्तृ-त्वाभोक्तृत्वादिविशेषाच्च तद्भोग इवास्य भोगप्राप्तिः । तस्मान्मनोमयत्वादिगुणकः परमात्मैवोपास्यः, न शारीर इति सुस्थितम् ॥

(२) रामानुजीये—"एष म आत्माऽन्तर्हृदये" इति शारीरः षष्ठ्या निर्दिष्ट उपास्यस्तु प्रथमया । एवं समानप्रकरणे वाजिनां च श्रुतौ शब्दविशेषः श्रूयते जीवपरयोः । "यथा व्रीहिर्वा यवो वा श्यामा-को वा श्यामाकतण्डुलो वा एवमयमन्तरात्मन्पुरुषो हिरण्मयो यथा ज्योतिरधूमम्" इति । अत्रान्तरा-त्मन्निति सप्तम्यन्तेन शारीरो निर्दिश्यते । पुरुषो हिरण्मय इति प्रथमयोपास्यः । अतः पर एवोपास्यः ॥

इतश्च शारीरादन्यः । "सर्वस्य चाहं हृदि सन्निविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं च" । "यो मामेव-मसम्मूढो जानाति पुरुषोत्तमम्" "ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयन्सर्वभूतानि यन्त्रा-रूढानि मायया" ॥ "तमेव शरणं गच्छ" इति शरीरकमुपासकं परमात्मानं चोपास्यं स्मृतिर्दर्शयति ॥

अल्पायतनत्वमर्भकौकस्त्वम् । तद्व्यपदेशोऽल्पत्वव्यपदेशः । "एष म आत्माऽन्तर्हृदये" इत्यणीयसि हृदयायतने स्थितत्वात् "अणीयान्व्रीहेर्वा यवाद्वा" इत्यादिनाऽणीयस्त्वस्य स्वरूपेण व्यपदेशाच्च नायं परमात्मा । अपि तु जीव एव । "सर्वगतं सुसूक्ष्मं यद्भूतयोनिं परिपश्यन्ति धीराः" इत्यादिभिः परमा-त्मनोऽपरिच्छिन्नत्वावगमाज्जीवस्य चाराग्रमात्रत्वव्यपदेशादिति चेन्नैतदेवम् । परमात्मैव ह्यणीयानित्येवं निचाय्यत्वेन व्यपदिश्यते । एवं निचाय्यत्वेनैवं द्रष्टव्यत्वेनैवमुपास्यत्वेनेति यावत् । न पुनरणीयस्त्व-मेवास्य स्वरूपमिति । व्योमवच्चायं व्यपदिश्यते । स्वाभाविकं महत्त्वं चात्रैव व्यपदिश्यते । "ज्यायान्पृ-थिव्या ज्यायानन्तरिक्षाज्ज्यायान्दिवो ज्यायानेभ्यो लोकेभ्यः" इति । अत उपासनार्थमेवाल्पत्वव्यपदेशः । तथा हि । "सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत" इति सर्वोत्पत्तिप्रलयकारणत्वेन सर्व-स्यात्मतयाऽनुप्रवेशकृतजीवयितृत्वेन च सर्वात्मकं ब्रह्मोपासीतेत्युपासनं विधाय "अथ खलु क्रतुमयोऽयं पुरुषो यथा क्रतुरस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्य भवति" इति यथोपासनं प्राप्य, सिद्धिमभिधाय, "स क्रतुं कुर्वीत" इति गुणविधानार्थमुपासनमनूद्य, "मनोमयः प्राणशरीरो भारूपः सत्यसङ्कल्प आका-शात्मा सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादरः" इति जगदैश्वर्यविशि-ष्टस्य स्वरूपगुणांश्चोपादेयान्प्रतिपाद्य,"एष म आत्माऽन्तर्हृदयेऽणीयान्व्रीहेर्वा यवाद्वा सर्षपाद्वा श्यामाकाद्वा श्यामाकतण्डुलाद्वा" इत्युपासकस्य हृदयेऽणीयस्त्वेन तदात्मतयोपास्यस्य परमपुरुषस्योपासनार्थमवस्था-नमुक्त्वा, "एष म आत्मान्तर्हृदये ज्यायान्पृथिव्या ज्यायानन्तरिक्षाज्ज्यायान्दिवो ज्यायानेभ्यो लोकेभ्यः सर्व-कर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादरः" इत्यन्तर्हृदयेऽवस्थितस्योपास्यमानस्य प्राप्याकारं निर्दिश्य, "एष म आत्माऽन्तर्हृदय एतद्ब्रह्म" इत्येवम्भूतं परं ब्रह्म परमकारुण्येनास्मदुज्जिजी-विषयास्मद्धृदये सन्निहितमितीदमनुसन्धानं विधायैतमितः प्रेत्याभिसम्भवितास्मि" "इति यथोपासनं प्राप्तिनिश्चयानुसन्धानं च विधायेति "यस्य स्यादद्धा न विचिकित्सास्ति" इत्येवम्विधप्राप्यप्राप्तिनिश्चयोपे-तस्योपासकस्य प्राप्तौ न संशयोस्तीत्युपसंहृतम् । अत उपासनार्थमर्भकौकस्त्वमणीयस्त्वं च ॥

जीवस्यैव परस्यापि ब्रह्मणः शरीरान्तर्वर्तित्वमभ्युपगतं चेत्तद्वदेव शरीरसम्बन्धप्रयुक्तसुखदुःखोपभोग-

प्राप्तिरिति चेन्न । हेतुवैशेष्यात् । न हि शरीरान्तर्वर्तित्वमेव सुखदुःखोपभोगे हेतुरपि तु पुण्यपाप-रूपकर्मपरवशत्वम् । तत्त्वपहतपाप्मनः परमात्मनो न सम्भवति । तथा च श्रुतिः "तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति" । इति ॥

(३) माध्वे—"एतमेव ब्रह्मेत्याचक्षत" इति न हि जीवमेव ब्रह्मेत्याचक्षते । "एष नु एव ब्रह्मैव उ एवात्मैव उ एवेन्द्रो उ एव हरिर्हरति परः परमानन्दः" इति चेन्द्रद्युम्नशाखायाम् ॥

"अहमात्मा गुडाकेश सर्वभूताशयस्थितः । गामाविश्य च भूतानि धारयाम्यहमोजसा" इत्यादि ॥ न चाप्रामाणिकं कल्प्यम्, सर्वेषु भूतेष्वित्यर्भकौकस्त्वाच्चक्षुर्मयत्वादिना जीवव्यपदेशाच्च नेति चेत्, न; अर्भकौकस्त्वेन चक्षुर्मयत्वादिरूपेण च तस्यैव विष्णोर्निचाय्यत्वात् सर्वगतत्वेऽप्यर्भकौकस्त्वं युज्यते च व्योमवत् । "सर्वेन्द्रियमयो विष्णुः सर्वप्राणिषु च स्थितः । सर्वनामाभिधेयश्च सर्ववेदेडितश्च सः" इति स्कान्दे ॥

जीवपरयोरेकशरीरस्थत्वे समानभोगप्राप्तिरिति चेत्, न; सामर्थ्यवैशेष्यात् । उक्तं हि गारुडे—"सर्व-ज्ञाल्पज्ञताभेदात् सर्वशक्त्यल्पशक्तितः । स्वातन्त्र्यपारतन्त्र्याभ्यां सम्भोगो नेशजीवयोः" ॥

(४) निम्बार्कः—मनोमयत्वादिगुणकः शारीरादन्यः परमात्मा, "एष मे आत्माऽन्तर्हृदये" इति जीवपरमात्मनोः षष्ठीप्रथमान्तशब्दविशेषात् । "ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठती"ति स्मृतेश्च, जीवपरमात्मनोर्भेदोऽस्ति । "एष मे आत्मा हृदये" इत्यल्पायतनत्वात् "अणीयान्व्रीहेर्वे"त्यल्पत्वव्य-पदेशाच्चात्र न ब्रह्मेति चेन्नैव तथात्वेन ब्रह्मण इहोपास्यत्वात्, बृहतोऽल्पत्वन्तु गवाक्षव्योमवत्सङ्गच्छते। सर्वहृदयसम्बन्धात्सुखदुःखसम्भोगप्राप्तिर्ब्रह्मणोऽपि जीवस्येवेति चेत्, नायं दोषः स्वकृतकर्मफलभो-क्तृत्वेनापहतपाप्मत्वेन च जीवब्रह्मणोरत्यन्तविशेषात् ॥

(५) भैक्षवे—नन्वयं कर्मकर्तृव्यपदेशो राहोः शिर इतिवद्गौणतया व्याख्येय इति तत्राह । अभिसम्भवितास्मीत्यादिरूपात्ततः श्रुतिषु यथायोग्यं शब्दविशेषान्नात्र कर्मकर्तृव्यपदेशो गौण इत्यर्थः । अभिसम्भवतः प्रवेशादिकं हि लयरूपं श्रुतिषु भेदेनैव प्रयुज्यते यथा जीवस्यावरोहे वायुर्भूत्वा धूमो भवतीति नदीनां च समुद्रप्रवेशे ताः समुद्रात्समुद्रमेवाभियन्ति स समुद्र एव भवतीति भवनं चाविभाग इति प्रागेवोक्तमिति ।

स्मृतिभिर्भजनीयभक्तादिरूपैर्भेदसिद्ध्या "सर्वं खल्वि"त्यादिश्रुतौ कर्मकर्तृत्वव्यपदेशो न गौण इत्यर्थः ।

ता स्मृतिः "बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते । वासुदेवः सर्वमिति स महात्मा सुदु-र्लभः ॥" "उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः । यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥" इन्द्रियाणि मनो बुद्धिः सत्त्वं तेजो बलं धृतिः । वासुदेवात्मकान्याहुः क्षेत्रं क्षेत्रज्ञ एव च ॥" "ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति" । तमेव शरणं गच्छ सर्वभावेन भारत" इत्यादिरिति । प्रसिद्धोपदेशादिति हेतोरसिद्धिमाशङ्क्य समाधत्ते ।

अर्भकमल्पमोको नीडं स्थानं यस्य तस्य भावस्तत्त्वं तस्मादल्पायतनत्वादिति यावत्, तथा तद्व्यप-देशात् अर्भकव्यपदेशाच्च, न ब्रह्मपरत्वमुपदर्शितवाक्यानां भवति "एष म आत्मा अन्तर्हृदय" इति परिच्छिन्नायतनत्वकथनात्, "अणीयान् व्रीहेर्वे"त्यादिनाचाल्पत्वश्रुतेरिति चेन्न, एवं निचाय्यः त्वात्, एवं द्रष्टव्यत्ववचनादित्यर्थः । अन्तःकरणावच्छेदेनैव हि परमेश्वरो जीवानामात्मतयाऽभिव्य-ज्यत इति । ननु वास्तवमल्पत्वमेव कथं न स्यादित्याशङ्क्याह, व्योमवच्चेति, ज्यायान्पृथिव्या इत्या-

दिना व्योमवद्व्यापकं च यतः श्रूयत इति शेषः। अनेन च दृष्टान्तेन घटाकाशवन्मनआद्यवच्छिन्न-तया अणीयस्त्वव्यपदेशः श्रुत्युक्ताणीयस्त्वदृष्टिश्चोपपादितेति द्रष्टव्यम्।

नन्वेवमेकस्मिन्नेव हृदयमनःप्राणादावात्मद्वयाभ्युपगमे जीववदुपादिना परमात्मनि सम्भोगः प्रसक्तः स्त्रीपुरुषयोरन्योन्यसम्मिश्रणे तुल्यभोगरूपस्य सम्भोगस्य दर्शनादिति चेन्न, वैशेष्यात्, क्षान्य-क्षादिरूपेणोभयोर्विशेषवत्त्वात्, तथाच जीवाद्ब्रह्मणि स्वरूपभेदात् जीवोपाधितो ब्रह्मोपाध्युत्कर्षाच्च न भोगसङ्कर इत्यर्थः। दृष्टं चैतत् यथा अश्वभोगेनाश्वारूढस्य राज्ञो न भोग इति, स्त्रीपुरुषयोश्चो-पाधिभेदेऽप्युपाध्योरेकजातीयतया भोगसाम्यमिति, ये पुनरखण्डतां जीवब्रह्मणोराहुस्तेषामयं दोषोऽपरिहार्य्य एव आत्मैक्ये सति चक्षुराद्यवान्तरोपाधिजन्यभोगस्य तद्व्यापकोपाधिमनोद्वारेण यथा जीवे सम्भवः तथा मनोरूपावान्तरजीवोपाधिजन्यभोगस्यापि तद्व्यापकोपाधिद्वारेणेश्वरे युक्तत्वात्, व्याप्यव्यापकभावापन्ननानामनोभिरेकात्मनि विविधभोगानां कायव्यूहस्थले दृष्टत्वाच्च। यदि च जीव-रूपेण ब्रह्मणोऽपि दुःखभोगादिकमभ्युपगम्यते "स एव जीवः सुखदुःखभोक्ते"तिवाक्यात्तदा "न लिप्यते लोकदुःखेन बाह्यः" "एकस्तयोः स्वादत्ति पिप्पलाश्नन्यो निरशोऽपि बलेन भूयान्" इत्यादिश्रुतिस्मृत्योः जीवभोगस्य प्रतिषेधो ब्रह्मणि विरुद्ध्येत स एव जीवः सुखदुःखभोक्तेत्यादिवाक्यं च ब्रह्मेवेदं विश्वमि-त्यादिवाक्यवदेवाविभागलक्षणाभेदपरमिति प्रपञ्चितं पञ्चसूत्र्यां, यदपि जीवब्रह्मशब्दयोरुपाधिविशिष्टे एव शक्तिर्वाच्या तथा चोपाधिभेदाच्च भोगसङ्कर इति तन्मतं तदपि प्रागेव निराकृतं, विशिष्टस्यानतिरि-क्तत्वे सङ्करतादवस्थ्यात्, अतिरिक्तत्वे च भवदभिमताखण्डत्वानुपपत्तेः, लक्षणां विनाऽप्यस्य उक्ता-भेदेनाभेदवाक्योपपत्तौ लक्षणाया अन्याय्यत्वात्, तटस्थज्ञानपरयाऽहं कर्त्तेत्यविद्यानिवृत्त्यसम्भवाच्च, जीवे ब्रह्मणि चोभयत्रैवाध्यारोपापवादयोरविवेकरूपयोर्वैयधिकरण्यापत्तेश्चेति, यदपि तैरुच्यते जीवेऽपि भोगः कल्पित इति। तदपि न, स्वप्रतिविम्बितसुखदुःखसाक्षात्काररूपत्वात्तस्येति दिक्। अस्मिन्सूत्रे समुपसर्गप्रदानाद्ब्रह्मणि स्वातन्त्र्येण नित्यानन्दभोगोऽस्तीति गम्यत इति सरणीयम्॥

(६) भास्करीये—समानप्रकरणे वाजिनां श्रुतिः यथा "व्रीहिर्वा यवो वा श्यामाको वा श्यामाकतण्डुलो वा एव मयमन्तरात्मन् हिरण्मयः पुरुष" इति। अन्तरात्मन्निति सप्तम्यन्तो, जीववचनस्ततो यः प्रथमान्तः शब्दविशेषः तयोश्च भेदादुपासको जीवो नोपास्य इति॥

"ईश्वरः सर्वभूतानां हृद्देशे वसतेऽर्जुन" इति। तदेवं चतुर्भिः सूत्रैर्जीवपरयोर्भेदः प्रतिपादितो न्यायोपपन्नश्च प्रत्यक्षानुमानागमसिद्धत्वादभेदश्च सिद्धो नान्योऽतोऽस्ति द्रष्टा तत्त्वमसीति। तदेतद् भेदाभेददर्शनं सूत्रकाराभिमतमरोचयमानाः केचिन्मायावादिनो वदन्तीश्वरस्यैव संसारित्वं तदंशभूतो जीवो नाम नास्त्यविद्याकल्पितोपाधिकृतभेदाद्व्यवहारः संसारीति। तदेतदयुक्तम्। नेश्व-रस्य संसारित्वमविद्याऽयोगाद्विज्ञानमानन्दं ब्रह्मेति निरतिशयानन्दस्वरूपत्वात् स्वभावसिद्धविद्या-रूपत्वाच्च। न तस्याविद्यायोगः सम्भवति स च सर्वज्ञः सर्वशक्तिः सन् कस्मादात्मानं संसारिणं कुर्यात् यो हि परतन्त्रः स बन्धनागारे प्रवेश्यतेऽपि। तस्मात् तदंशभूतस्य जीवस्याविद्याकामकर्म-योगात्तु संसारित्वम्। यथा चैतत् तयोरत्र निपुणं वक्ष्यामः॥

अर्भकमल्पमोको नीडमायतनं यस्यासावर्भकौकास्तस्य भावस्तत्त्वं ततः परिच्छिन्नायतनत्वा"देष मे आत्मान्तर्हृदय" इति स्वशब्देन च व्यपदेशा"दणीयानि"ति जीव एवोपास्यो न सर्वगतः परमात्मेति चेत्। नैतदेवम्। अल्पपरिमाणहृदये निचाय्यत्वादेवं व्यपदिश्यत न सर्वगतनिवृत्त्यर्थम्। अणी-यस्त्वं च सूक्ष्मत्वविवक्षया न परिमाणाल्पतया ज्यायान् पृथिव्या इत्युत्तरश्रुतिविरोधात्। यथा च सूचीपाद्यापेक्षया काशाल्पत्वं व्यपदिश्यते तद्वत्॥

सर्वहृदयसम्बन्धात् सुखदुःखाद्युपभोगप्राप्तिरिति चेन्न, वैशेष्यात्, विशेषो हि जीवपरयोर्भवति। जीवस्य हि सुखदुःखभोगे कर्मनिमित्तं नेश्वरस्य अपहतपाप्मादिगुणश्चासौ श्रूयते। न च देशप्राप्तिमात्रेण तदीयधर्मप्राप्तिर्न हि नभसोऽग्निदेशसम्बन्धाद्दाहयोगः। तस्माज्जीवस्यैवोपभोगो न परस्येति सिद्धम् ॥

(७) श्रीमद्वल्लभाचार्याणामयमाशयः—इदं वाजिनां समानप्रकरण आम्नायते। यथा, व्रीहिर्वा यवो वा श्यामाको वा श्यामाकतण्डुलो वैवमयमन्तरात्मन् पुरुषो हिरण्मय इति। अत्र प्रसङ्गादिदं विचार्यते। हिरण्मयः पुरुषः किं जीव उत ब्रह्मेति। 'नन्वत्रापि पक्षानुल्लेखात् पूर्वाधिकरणशेषत्वमेव युक्तम्, नाधिकरणान्तरत्वम्। न च विषयवाक्ये पदान्तरदर्शनात्तथेति वाच्यम्। अन्तस्तद्धर्माधिकरणेनैव चारितार्थ्यादेतद्विचारस्यैव व्यर्थत्वादिति चेत्, न, अत्र तद्धर्मोपदेशस्यास्फुटत्वेन ततो गतार्थताया अभावे विषयभेदस्य स्फुटत्वेनाधिकरणान्तरत्वस्य युक्तत्वादिति। एवं सिद्धेऽधिकरणान्तरत्वे उपक्रमस्याञ्ज्ञातविरोधत्वेन प्रबलत्वात्तत्र च सूक्ष्मपरिमाणश्रावणेन जीववाक्यत्वमेव युक्तम्। यद्यप्ययं न नियमः, आमिक्षाधिकरणादावुपक्रमगतस्यापि वैश्वदेवत्वस्य वाजिनयागादावुत्पत्तिशिष्टादिन्यायेन बाधदर्शनात्, तथाप्युपक्रमोपसंहारयोरन्यतरस्यान्यपरत्वकल्पने न वाक्यस्यैकार्थता सम्भवति। विप्रतिपत्तिनिरासेन वाक्यभेदो न भवति, तस्यैव बलीयस्त्वमिति पूर्वतन्त्रे सिद्धम्। तदैकशाख्यादनाप्यादरणीयम्। तत्र छान्दोग्ये त्रीण्येव तेषां बीजानीति श्रावणादत्र जरायुस्वेदजाण्डजोद्भिज्जभेदेन चतुर्विधानां जीवशरीराणां व्रीह्यादिदृष्टान्तैर्निरूपणार्थमौपाधिकपरिमाणप्रतिपादकमिदमन्तर्हृदयवचनम्। आराग्रश्रुतावौपाधिकपरिमाणस्यापि बुद्धिगुणेनोक्तत्वात्। न च हिरण्मयत्वविरोधः। पूर्वाधिकरणसिद्धेन तत्क्रतुन्यायेन तादृगुपासनायां फलतो हिरण्मयत्वस्य शक्यवचनत्वात्। नच तथापि ब्रह्मवाक्यत्वाङ्गीकारे किं बाधकमिति वाच्यम्। ब्रह्मणो निरवयवत्वेन जीवाख्यसमानव्रीहियवादिरूपदार्शरसास्यस्य तत्रायुक्तत्वात्। अतो जीवप्रतिपादकमेवेदं वाक्यमिति प्राप्ते—

भूमः, शब्दविशेषात्। शब्देनोक्तो विशेषः शब्दविशेषस्तस्मात्। हिरण्मयस्यानन्दमयत्वं तद्धर्मोपदेशाधिकरणे सिद्धम्। तच्च ब्रह्मासाधारणम्। नच तज्जीवस्य फलरूपबोधनायेति वाच्यम्। तस्यामेव लय इति नियमाभावात्। तैत्तिरीये 'आदित्यो वा एष' इत्यनुवाकद्वये मध्ये पूर्वस्मिन् हिरण्मयं पुरुषं प्रस्तुत्य, द्वितीये 'आदित्यो वै तेज' इत्यादिना तद्विभूतिभूता देवताश्चोक्त्वा, तदन्ते 'ब्रह्मणः सायुज्यꣳ सलोकतामाप्नोत्येतासामेव देवतानाꣳ सायुज्यꣳ सार्ष्टिताꣳ समानलोकतामाप्नोति य एवं वेदे'ति श्रावणेन तत्क्रतुनियमाभावात्। न च तत्क्रतुश्रुतिबाधः शङ्क्यः। यथा क्रतुरित्यत्र पुरुषविशेषणस्याधिकारस्यापि प्रकारांशे निवेशेन तदभावात्। एतदनिवेशे श्रुत्योः परस्परविरोधपरिहारस्यासम्भवात्। अतः शब्देनैव विशेषस्योक्तत्वान्न हिरण्मयः पुरुषो जीवः, किन्तु ब्रह्मैव ॥ ५ ॥

ननु हृदये वर्तमानत्वं जीवासाधारणम्। हिरण्मयश्रुतिस्तु 'बिभ्रद्रूपं हिरण्मयम्' इति ध्रुवप्रसङ्गे वाक्याज्जीवसाधारणा। अतो जीववाक्यत्वमेवास्त्विति चेत्, तत्राह, स्मृतेरिति। 'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठती'ति गीतास्मृतेर्लिङ्गस्यासाधारणत्वाभावान्न तेन जीववाक्यत्वनिर्णय इत्यर्थः। गीताया भगवद्वाक्यत्वे यथा स्मृतित्वं तथा भाष्यादवगन्तव्यम्। चकारः स्मृतिमूलभूतभगवन्निःश्वासात्मकश्रुतिसमुच्चायकः ॥ ६ ॥

उपक्रमबलीयस्त्वमाशङ्क्य परिहरति। अर्भकौकस्त्वादित्यादि। अर्भकम् अल्पकम्। वर्णविपर्ययः। तादृशं ओकः स्थानं यस्य तादृशत्वात्। तस्य व्रीह्यादिरूपत्वस्य व्यपदेशात् कथनात्। अत्र व्यापकः

परमात्मा प्रतिपाद्यो नेतिचेत्, न। कुतः। निचाय्यत्वात्। निदिध्यासनानन्तरं हृदये साक्षात्क्रियमाणत्वात्। तथाच। व्यापकत्वेऽपि हृदयस्य तदुपलब्धिस्थानत्वेन स्थानत्वव्यपदेश इति न तत्परमात्मत्वबाधकम्। तर्हि द्वितीयस्य का गतिरित्यत आह। व्योमवदिति। यथा चत्वार उपरवाः प्रादेशमात्राः बिलविशेषास्तद्वत्। ते हि 'दक्षिणस्य हविर्धानस्याधस्तात् पुरोक्षं चतुर उपरवानवान्तरदेशेषु प्रादेशान्तरालान् करोती'ति कल्पश्रुत्या विधानादध्वर्युयजमानयोः किमत्र भद्रमित्यादिमन्त्रैः परस्परहस्तग्रहणाय क्रियन्ते। तैर्बिलैः प्रादेशमात्रमाकाशस्वरूपमभिव्यक्तीक्रियते। तावता किमाकाशस्य व्यापकता भज्यते, अपि तु न। तथा चतुर्विधभूतान्तर्हृदये वर्तमानत्वख्यापनाय व्रीह्यादिस्वरूपत्वमुच्यते। 'अतः परज्यायाणीयस१ हि परात् परं यन्महतो महान्त'मित्येकस्यैव तैत्तिरीयेऽनेकपरिमाणश्रावणात्। अतः परिमाणविरोधस्याप्यभावान्न ब्रह्मवाक्यत्वभङ्ग इत्यर्थः। पूर्वपक्षसिद्धान्तयोश्चकारद्वयमेतादृशवाक्यान्तरे पूर्वपक्षसिद्धान्तयोर्वैलक्षण्यस्य तदुपपत्तीनां च समुच्चयार्थम्। तेन 'अत एव प्राण' इतिवदधिकरणान्तरत्वमिति सूचितम् ॥ ७ ॥

जीवतुल्यतापत्तिरूपबाधकमाशङ्क्य परिहरति। सम्यगभिनिवेशेन भोगः सम्भोगः, सम्यग्भोगो यस्मादिति च सम्भोगस्तयोः प्राप्तिः सम्भोगप्राप्तिः। यदि सर्वेषां हृदि जीववद्भगवाँस्तिष्ठेत्, तदा जीवस्येवास्यापि सुखदुःखसाक्षात्कारस्तत्साधनपरिग्रहश्च तयोरापत्तिः स्यादितिचेत्, न। कुतः ? वैशेष्यात्। विशेषस्य भावो वैशेष्यम्, तस्मात्। सर्वरूपत्वमानन्दरूपत्वं स्वकर्तृत्वं विशेषस्तस्य भावः, सत्ता, सा ब्रह्मणि वर्तते, न जीवे, अतो जीवस्यैव भोगो, न ब्रह्मण इत्यर्थः। अत्र वैशेष्यपदेनाविवक्षितो भोगो नेति सूच्यते, न तु यावद्भोगाभावः। अन्यथाऽग्रिमाधिकरणविरोधप्रसङ्गादिति ॥ ८ ॥ २ ॥



## २ अत्ता चराचराधिकरणम् ।

### अत्ता चराचरग्रहणात् ॥ १।२।९ ॥

(ब्रह्मणो भोक्तृत्वे सन्देहः)

कठवल्लीषु पठ्यते "यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः । मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः ।" (कठ. १।२।२५) इति । अत्र वाक्ये ब्रह्मक्षत्रयोरोदनत्वं वदन्, यच्छब्दार्थस्य भोक्तृत्वमाह । तत्र संशयः । किं जीवो ब्रह्म वेति ? सच्चिदानन्दरूपत्वं सर्वोपास्यत्वं पूर्वाधिकरणद्वयेन सिद्धम् । सर्वभोक्तृत्वं साधयति । ब्रह्मक्षत्रयोरशक्यवधयोः सर्वमारकस्य च मृत्योर्भक्षयिता जीवो न भवत्येवेति कथं सन्देह इति चेत्, उच्यते; ओदनोपसेचनरूपवाक्यार्थाज्जीवधर्मत्वं स्यानाशंक्ययात्र । न हि सर्वगतस्य स्वहृदयेऽपि प्रतिभासमानस्य "क इत्था वेद यत्र स" इत्यज्ञानमुपपद्येत । अलौकिकसामर्थ्यान्न सन्देहः । तत्र निषिद्धत्वाल्लौकिकभोजनवन्निरूप्यमाणत्वात्, स्यानाशंक्यनाय, कश्चिदुपासनोपचितालौकिकसामर्थ्यो महादेवादिरत्ता भविष्यति । ननु तद्विरुद्धधर्मा भगवान् भवितुमर्हत्यक्लिष्टकर्मत्वादिधर्मवान् । तस्माज्जीव एवोपासनोपचितमहाप्रभावो वाक्यार्थ इत्येवं प्राप्तेऽभिधीयते—

---

अपेक्षितभोगवत्त्वं ब्रह्मणि साधयितुं चराचराधिकरणमाहुः—अत्ता चराचरग्रहणात् । विषयवाक्यमाहुः—पठ्यते इति । द्वितीयवल्लिसमाप्तौ । अथ विषयवाक्यम्—

"न जायते म्रियते वा विपश्चिन्नायं कुतश्चिन्न बभूव कश्चित् । अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे । हन्ता चेन्मन्यते हन्तुं हतश्चेन्मन्यते हतम् । उभौ तौ न विजानीतो नायं हन्ति न हन्यते । अणोरणीयान् महतो महीयानात्माऽस्य जन्तोर्निहितो गुहायाम् । तमक्रतुः पश्यति वीतशोको धातुः प्रसादान्महिमानमात्मनः । आसीनो दूरं व्रजति शयानो याति सर्वतः । कस्तं मदामदं देवं मदन्यो ज्ञातुमर्हति । अशरीरं शरीरेष्वनवस्थेष्ववस्थितम् । महान्तं विभुमात्मानं मत्वा धीरो न शोचति । नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम् । नाविरतो दुश्चरितान्नाशान्तो नासमाहितः । नाशान्तमानसो वापि प्रज्ञानेनैनमाप्नुयात् । यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः । मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः ।" इति प्रथमाध्याये द्वितीयवल्ली ।

अथ भाष्यम्, संशयमाहुः—तत्रेति । तत्र यच्छब्दार्थसङ्गतिमाहुः—सच्चिदिति । पूर्वाधिकरणद्वयेनेति । "सर्वं खल्विद"मिति वाक्ये सद्रूपत्वं "सत्यसङ्कल्पो"ऽनेन चिद्रूपत्वं "निरञ्जनो"ऽनेनानन्दत्वं द्वितीयाधिकरणे हृदये सर्वोपास्यत्वं सिद्धमित्यर्थः । साधयतीति । प्रकरणमिति शेषः । अधिकरणविषयवाक्यमाहुः—ब्रह्मक्षत्रयोरिति । समाधानमाहुः—उच्यत इति । धर्मद्वयेन जीवकर्तृकत्वमुपस्थितिमाहुः—ओदनेत्यादिना उपपद्यते इत्यन्तेन । अज्ञातस्थानकत्वरूपं धर्मं जीवस्यैव न तु ब्रह्मण इति प्रतिपादयन्ति—न हीति । तर्हि जीव एव भवतु, मास्तु सन्देह इत्यत आहुः—अलौकिकेति । मृत्यूपसेचनविशिष्टब्रह्मक्षत्रभक्षकत्वं ब्रह्मण्येव, न जीवे इति सन्देह इत्यर्थः । अयमेको धर्मो जीवेऽपि स्यास्यतीति पूर्वपक्षी वदति । तत्रेति । कथं स्यास्यतीत्यत आहुः—उपासनेति । उपासनाविशिष्टः कश्चिज्जीवो महादेवो वा आदिपदग्राह्यः अग्निरपीत्यर्थः । तद्विरुद्धधर्मेति । अग्निरिवालौकिकभोजनकर्तृत्वरूपविरुद्धधर्मेत्यर्थः ।

(ब्रह्मण एव भोक्तृत्वम्)

अत्ता चराचरग्रहणात् । अत्ता भगवानेव । कुतः? चराचरग्रहणात् । चरं सर्वप्राणिवधार्थं परिभ्रमन्मृत्युः । अचरं ब्रह्मक्षत्ररूपं कस्याप्यचाल्यं तयोरत्ता न जीवो भवितुमर्हति । यत्राप्यतिशयो दृष्टः स स्वार्थानतिलङ्घनादिति न्यायात् । अस्मदादिप्रतिपत्त्यर्थं तु लौकिकवद्वचनं भोक्तृत्वाय । प्रलयकर्तृत्वान्नायुक्तत्वम् । सर्वत्र विद्यमानस्याप्यज्ञायमानत्वात् फलतः स्थानाज्ञानमुक्तम् । ब्रह्मक्षत्रयोरपि मोक्षापेक्षित्वात् मृत्युसम्बन्धमात्रेण भगवति भोक्तरि प्रवेशार्थं योग्यरूपमेवौदनत्वं प्राणानां तत्रैव समवलयान्मृत्युरपि तत्रैव लीनोऽग्रे जन्ममरणाद्यभावाय भगवन्तेव प्रविशति । तस्मादस्मिन् वाक्ये ब्रह्मक्षत्रमृत्यूनां भोग्यत्वेन ग्रहणादत्ता भगवानेवेति सिद्धम् ॥ १।२।९ ॥

(प्रकरणादपि न जीवो भोक्ता)

ननु किमित्येवं प्रतिपाद्यते । पूर्वपक्षन्यायेन यमोऽन्यो वा मृत्युं साधनीकृत्य स्ववशे सर्वं करोतीति जीववाक्यमेव किं न स्यादित्यत आह—

प्रकरणाच्च ॥ १।२।१० ॥

प्रकरणं हीदं ब्रह्मणः–न जायते (कठ. १।२।१८) इत्यारभ्य आसीनो दूरं व्रजति

---

सिद्धान्तमाहुः—**अत्ता चराचरग्रहणात्** । सूत्रे चराचरपदे श्रुतौ ब्रह्मक्षत्रपदं च श्रूयते । अनयोर्लक्षणां विना सामानाधिकरण्यं नोपपद्यते कैश्चित् । ब्रह्मक्षत्रपदस्यैव चराचरे लक्षणा एतासां नोपयुज्येत इति वाक्यवृत्त्यैव चराचरपदसमर्थचरमिति । **नचाल्पमिति** । पूर्वमीमांसायां प्रवाहनित्यत्वं तयोरुक्तमिति भावः । ननु मास्तु जीवो मृत्युञ्जयः स एवास्तीत्यत आहुः—**यत्रापीति** । यत्रापि अमात्यादौ । अतिशयमजापालने बुद्धिसौष्ठवरूपः सः स्वार्थानतिलङ्घनात् स्वस्य राज्ञो योऽर्थः सार्वभौमत्वरूपस्तस्योल्लङ्घनं न करोति तावत्पर्यन्तमेवास्तीत्यर्थः । तथा चैवं न्यायात् अमात्ये सार्वभौमत्वं यथा नास्ति तथा सर्वभोक्तृत्वं रुद्रेऽपि नास्तीति भावः । उपसेचनादिलौकिकवद्भोजनकर्तृत्वं बाधकमित्यत आहुः—**अस्मदादीति** । भोक्तृत्वापभोजनकर्तृत्वार्थं लौकिकवद्वचनं तु अस्मदादिप्रतिपत्त्यर्थमित्यन्वयः । तथा च उपसेचनविशिष्टौदनभोजनं भगवताऽपि क्रियत इति जीवस्य ज्ञानार्थमिति भावः । ननु ब्रह्मक्षत्रादीनां भोजनं भगवतो युक्तं न भवतीत्यत आहुः—**प्रलयेति** । प्रलयकाले युक्तायुक्तविचारणायां प्रलय एव न स्यादिति भावः । ननु भगवतः स्थानाज्ञानं नैतत् कथं प्रल्हादेनोक्तं स्तम्भेऽस्तीत्यत आहुः—**सर्वत्रेति** । **फलत** इति । स्थानविषयकपरोक्षाभावेऽपि भगवद्विषयकचाक्षुषत्वाभावे पर्यवसानादित्यर्थः । ननु प्रलयकर्तृत्वेऽपि क्लिष्टकर्मत्वमयोग्यमिति शङ्का तदवस्थैवेत्यत आहुः—**ब्रह्मक्षत्रेति** । मृत्योरुपसेचनत्वकथनेन मृत्युना देहसम्बन्धाभावे मोक्ष एव सर्वेषां मृत्योरपि भवतु न तु जन्मादाविति । भगवदाशयेनाक्लिष्टकर्मत्वं तस्य बोध्यम् । "स न वलयादिति इहैव समवलीयन्ते प्राणाः न चोत्क्रामन्तीति" श्रुत्येति शेषः । उपसंहरन्ति—**तस्मादिति** ॥ ९ ॥

उत्तरसूत्रमवतारयन्ति—**नन्विति** । पूर्वपक्षेऽतिनिषिद्धत्वादीनां भगवत्यनौचित्यादित्यर्थः । **अन्यो वेति** । मृत्युर्वा रोगादिरूपं मृत्युं साधनीकृत्येत्यन्वयः ।

एव तु । वासुदेवः परः पुंसामितरेऽल्पस्य वा न चे"ति स्कान्दे । "एकः पुरस्ताद्य इदं बभूव यतो बभूवुर्भुवनस्य गोपाः । यमप्येति भुवनं साम्पराये मनोहरिर्भूतमिहायुपेऽस्तु देवः" इति श्रुतिः ॥

सम्वत्सरसृष्ट्यादिना तत् प्रकरणाच्च "नेहासीत् किञ्चनाप्यादौ मृत्युरासीद्धरिस्तदा । आत्मनो मनसाऽऽसाक्षीदप एव जनार्दनः । शयानस्तासु भगवाञ्चिर्ममेऽण्डं महत्तरम् । तत्र सम्वत्सरं नाम ब्रह्माख्यमसृजत् प्रभुः । तमत्तुं व्याददा यावन्तदासौ विष्णुराववह । अथ तत् कृपया विष्णुः सृष्टिकर्मण्ययोजयत् । सोऽसृजद् भुवनं विश्वमधार्थं हरये विभुः" इति च ब्रह्मवैवर्ते ॥

(४) निम्बार्कः—"यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनम् । मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः" इत्यत्राऽत्ता श्रीपुरुषोत्तमः । कुतः ? मृत्यूपसेचनौदनस्य ब्रह्मक्षत्रोपलक्षितचराचरात्मकस्य विश्वस्य ग्रहणात् । अत्ता भगवान्पुरुषोत्तमः, "महान्तं विभु"मिति तस्यैव प्रकृतत्वाच्च ॥

(५) भैक्षवे—इदानीं भोगप्रसङ्गेनेश्वरस्यात्तृत्वगुणमवधारयति । कठवल्ल्यां श्रूयते "य इमं मध्वदं वेद आत्मानं जीवमन्तिकात् ईशानं भूतभव्यस्य ततो न विजुगुप्सत" इति । तत्राग्निर्वा, जीवो वा, परमात्मा वा, अत्तृत्वेनोक्त इति संशयः, त्रयाणामेवाग्निजीवपरमात्मनामस्यामुपनिषदि पूर्वमुपवर्णिततया प्रकरणस्य तुल्यत्वादिति । तत्र पूर्वपक्षः, जीव एवात्र भोक्ता मध्विति विशेषवचनात् । ईश्वरो हि मिष्टामिष्टं जगदेव स्वात्मन्युपसंहरतीति तत्परत्वे विशेषवचनानौचित्यात्, अत एव नाग्निरपि तस्यापि मिष्टाविचारात्, तस्मात् जीवमन्तिकादिति जीवशब्दाच्च, जीव एवात्रात्ता युक्त इति । तत्रायं सिद्धान्तः, अत्तात्र परमात्मैव, कुतः, चराचरग्रहणात्, "इयं पृथिवी सर्वेषां भूतानां मध्वि"-त्यादिका एव चतुर्थाध्यायीयमधुविद्यानुसारेणात्र मधुशब्देन समस्तचराचरग्रहणात्, किं च ईशानं भूतभव्यस्येत्यनेनात्तुरीशितव्यतया समस्त चराचरग्रहणमपि परमात्मनो अन्यत्रासङ्कुचितसर्वैश्वर्याभावादत्रोपपद्यते । अतः सकलभूतभव्यचराचरेश्वरत्वेनोक्तोऽत्ता परमेश्वर एव भवति ।

"न जायते म्रियते वा विपश्चिदि"त्यादिना सन्निधानेन ब्रह्मण एव प्रकृतत्वात्, अग्निजीवयोश्च व्यवहितावान्तरप्रकरणस्थत्वादित्यर्थः । जीवशब्दश्च जीवरूपेणोपासनार्थमित्युक्तं जीवमुख्यप्राणलिङ्गादिति सूत्र इति ।

(६) भास्करीये—कठवल्लीषु पठ्यते । "यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः । मृत्युर्यस्योपसेचनं क इत्था वेद यत्र स" इति । ओदनग्रहणेन भोज्यं निर्दिश्यते तस्य च भोक्त्रा भवितव्यमिति, अत्ता प्रतीयते, स किमग्निर्जीवः परमात्मेति सन्दिह्यते, त्रयाणामिह प्रकृतत्वात् । अग्निरत्तेति तावत् प्राप्तम् । तस्य ब्रह्मक्षत्रादिदहने सामर्थ्यात् । विज्ञानात्मा वा स्यात् तस्य भोक्तृत्वप्रसिद्धेः पिप्पलं स्वाद्वत्तीति । न परोऽनश्नन्निति प्रतिषेधादेवं प्राप्ते ब्रूमः, अत्ता पर एव स्याच्चरजङ्गमग्रहणात् । ननु नास्तीह तादृशः शब्दः, तथापि सामर्थ्यादवगम्यते । मृत्यूपसेचनग्रहणात् मृत्युविनाशस्तेन व्याप्तिरुपसेचनमभिप्रेतं कृत्स्नं च व्याप्तं कार्यजातं तच्चोपसंहरन्नीश्वर एवात्तेत्युपपद्यते । न च जीवस्यैतत् सामर्थ्यम् । न चाग्नेराकाशाद्युपसंहारे । न चात्राग्निः साक्षात् प्रकृतोऽस्ति इत्यग्नेः प्रकृतत्वात् । अनश्नन्निति च कर्मफलभोगप्रतिषेधः । उपसेचनश्रुत्या सर्वप्राप्तेर्ब्रह्मक्षत्रग्रहणमनुवादमात्रमन्यनिवृत्तौ वाक्यभेदात् ॥

परस्यैतत् प्रकरणम् "न जायते म्रियते वा विपश्चिदि"ति । प्रकृतत्वाद् गुहायां विपरिवृत्तिः सन्निधिरधिकार इति चानर्थान्तरमतो लिङ्गप्रकरणाभ्यां पर एवेति स्थितम् ॥

(७) श्रीमद्वल्लभाचार्यमतेऽयमभिप्रायः—पूर्वाधिकरणे हृदयान्तर्हिरण्मयस्य ब्रह्मत्वसमर्थनेन 'यश्चायं पुरुषे यश्चासावादित्ये स एक' इति श्रुतिर्विचारिता। तेन सच्चिदानन्दरूपत्वं सिद्धम्। अतः परं तत्र स्थितेः प्रयोजनं विचारयति। तत्र कठवल्लीषु द्वितीयवल्लीसमाप्तौ श्रूयते। 'यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः, मृत्युर्यस्योपसेचनं क इत्था वेद यत्र स' इति। अस्मिन् वाक्ये ब्रह्मक्षत्रयोरोदनत्वं वदन् मृत्युर्यच्छब्दार्थस्य भोक्तृत्वमाह। तत्र संशयः। किं जीवो ब्रह्म वेति। नन्वत्र सन्देहो न घटते। ब्रह्मक्षत्रपदयोरसङ्कुचितवृत्तित्वेन यावत्तद्ग्राहकत्वाद्यावतोस्तयोः सर्वमारकस्य मृत्योश्च भक्षके जीवत्वस्य सम्भावयितुमशक्यत्वादिति चेद्, उच्यते, अत्र पूर्वध-मेवत् ओदनोपसेचनरूपकेण जीववद्भोक्तृत्वस्य ज्ञानाज्ञानकथनेन स्वहृदये अभासमानत्वस्य च सूचनेन सम्भावनोत्पत्तेः। एवं सिद्धे संशये निषिद्धस्य भोग्यत्वकथनेन भोजनस्य लौकिकतुल्य-त्वसूचनेव ज्ञानाज्ञानकथनेन चोपासनोपचितालौकिकसामर्थ्यः कश्चिन्महादेवादिर्वा भवितुम-र्हति। न तु भगवान्। अक्लिष्टकर्मत्वेन तद्विरुद्धधर्मत्वादिति प्राप्ते, अभिधीयते। अत्तेत्यादि। अत्ता भगवानेव। कुतः? चराचरग्रहणात्। चरः सर्वप्राणिवधार्थं परिभ्रमन् मृत्युः, अचरं ब्रह्म-ह्नैयत्वात् केनाप्यचाल्यं ब्रह्मक्षत्रम्। तयोर्ग्रहणात्। अन्तःप्रवेशनात्। न हीदं जीवेन कर्तुं शक्यते। ननु मास्तु जीवः, तथापि मृत्युञ्जयत्वेन संहारकत्वेन ज्ञानदातृत्वेन च महादेवस्य प्रसिद्धत्वान्मुख्यविभूतिरूप एव सोऽस्तु, न तु परमात्मेति चेत्, न; 'यत्राप्यतिशयो दृष्टः स स्वार्थानतिलङ्घना'दिति न्यायेन तावत्सामर्थ्यस्य तत्र वक्तुमशक्यत्वात्। यथा ह्यमात्यो वा, युव-राजो वा, राजकार्यं कुर्वन्नपि सर्वेभ्योऽतिशयवानपि, न राजभोग्यं भुङ्क्ते, तदसाधारणं कार्यं वा करोति, तद्वदिति लोकन्यायाच्च। नच स एव परमेश्वर इति वाच्यम्। नृसिंहपूर्वतापिनीये "अनुपनीतशतमेकेनोपनीतेन तत्सम'मित्यारभ्य, गृहस्थवानप्रस्थयतिरुद्रजाप्यथर्वशिरःशिखाध्यायि-पर्यन्तमुक्त्वा, 'अथर्वशिरःशिखाध्यायिशतमेकमेकेन मन्त्रराजजापकेन तत्सम'मिति विद्यावदुत्कर्षस्य नृसिंहमन्त्रराजजापक एव विश्रान्तिश्रावणेन विद्यावदुत्कर्षस्य च विद्योत्कर्षाधीनत्वेन तदुत्कर्षस्य च तत्प्रतिपाद्योत्कर्षाधीनत्वेन नृकेसरिणि भगवत्येव विश्रान्त्या तथा वक्तुमशक्यत्वात्। अतः परमेश्वर एवात्ता। नच बाधकानां तर्हि का गतिरिति शङ्क्यम्। भोजने लौकिकतौल्यस्या-सदादिप्रतिपत्त्यर्थत्वेन, 'सदेव सोम्येदमग्र आसी'दित्यत्र ब्रह्मणः केवलत्वेऽभिसंहितेऽप्यग्रपदेन तत्प्रतिपत्त्यर्थकालोपरञ्जनवदबाधकत्वात्। नच भोग्यस्य निषिद्धत्वमपि बाधकम्। निषेधस्य जीवेऽपि देहसम्बन्धानन्तरमेव प्रवृत्तेरनुज्ञापरिहारसूत्रे वक्ष्यमाणत्वात्। अशरीरे ब्रह्मणि तदप्रवृत्तेस्तं प्रति निषिद्धत्वाभावात्। अन्यथा प्रलयेऽपि हिंसायास्तौल्यात् प्रलयकर्तृत्वस्यापि अयुक्तत्वापत्तेः। प्रलयाभावापत्तेश्च। अतः, प्रलयवद्भोजनस्यापि नायुक्तत्वम्। नापि ज्ञाना-ज्ञानं बाधकम्। सर्वत्र विद्यमानत्वेऽपि 'हन्त तिरोऽसानी'ति श्रुतेः, सृष्ट्यनन्तरं तिरो-धानेनाज्ञायमानतया तस्यादोषत्वात्। नच क्लिष्टकर्मत्वं शङ्क्यम्। मोक्षणीयानामेवात्राद-नीयत्वेन अभिप्रेततया, तेषां देहसम्बन्धस्य निवर्तनीयतया यथा तण्डुलानां वह्न्यादिसम्ब-न्धेनावयवशैथिल्ये विक्लृप्तावोदनत्वम्, तथात्र मोक्षणीयानां भोक्तरि भगवति प्रवेशमात्रेण योग्यरूपत्वमेव ओदनत्वम्। यथा कंसादीनां कुरुपाण्डवसैन्यानां च। अत एव 'तदेव रूपं दुरवापमाप' 'यास्यन्त्यदर्शनमलं बलभीमपार्थव्याजाह्वयेन हरिणा निलयं तदीय'मित्या-दीनि वाक्यानि। लौकिकेऽपि भिषक्कृतस्य दुश्चिकित्स्यव्रणादिविदारणस्य क्लिष्टत्वेऽपि परि-णामसुखदत्वेन यथा न क्लिष्टकर्मत्वम्, तद्वदस्यापीति न दोषलेशोऽपि। नचैवं मृत्योरुप-

सेचनत्वासम्भवः । अशनाया मृत्युरेवेत्येकमृत्युपक्षे मुच्यमानब्रह्मज्ञप्राणानाम्, 'अत्रैव सम वनीयन्ते प्राणा' इति श्रुतेर्ब्रह्मण्येव लयेन प्राणधर्मात्मकोऽशनायादिरूपो मृत्युरपि तेषां जन्म· मरणाद्यभावाय भगवत्येव प्रविशतीति तस्योपसेचनताया अपि सुखेन सम्भवात् । अतो दोषाभावादत्र भगवानेवात्तेति सिद्धम् । ननु विषयवाक्ये पक्षादिर्योधकपदाभावेन चरा· चरादिपदैर्मृत्य्वादिगतं धर्मं योगेनादाय तद्ग्रहणस्य लिङ्गत्वं कल्पयित्वास्य ब्रह्मवाक्यत्वकल्प· नापेक्षया पूर्वपक्षोक्तानां निषिद्धत्वादीनां शीघ्रं बुद्ध्यारोहाज्जीव एवात्र ग्रहीतुमुचितः । स चेत् साधारणो न समर्थः, तदा संहारेऽधिकृतो यमो देवतारूपं मृत्युं साधनीकृत्य, देवतारूपो मृत्युर्वा रोगादिरूपं मृत्युं साधनीकृत्य ब्रह्मक्षत्रोपलक्षितं सर्वं प्राणिजातं वशी· करोतीत्येव युक्तमिति जीववाक्यत्वमेवास्यादरणीयमित्याशङ्क्याह—प्रकरणादिति । अत्र हि जीवप्रश्नोत्तरश्रवणानन्तर 'अन्यत्र धर्मादन्यत्राधर्मा'दिति प्रश्नान्तरे कृते, 'सर्वे वेदा यत् पदमामनन्ति' इत्यादिना प्रकरणान्तर प्रवृत्तमत इदं ततोऽतिरिक्तस्य ब्रह्मणः प्रकरणम् । तत्र 'सर्वे वेदा यत्पद'मिति मन्त्रे सङ्क्षेपेण कथनं प्रतिज्ञाय, ॐकारस्य सङ्क्षेपरूपतामुक्त्वा, 'एतदेवाक्षरं ब्रह्मेत्यादि'मन्त्रद्वये सर्वफलदायकत्वादिना तं प्रशस्य, 'न जायते न म्रियत' इत्यादिभिरष्टभिर्मन्त्रैस्तत्प्रतिपाद्यस्य ब्रह्मणो माहात्म्यं यद्वक्ते, तस्यैवात्तृत्वं मृत्युरेवाह । तद्यदि देवतारूपो मृत्युर्वा यमो वा अत्तृत्वेनाभिप्रेतः स्यात्, तदा 'न जायते न म्रियत' इति मन्त्रे तस्य जननमरणाभावं न वदेत् । श्रुतिपुराणेषु उभयोरपि जन्यत्वादिकथनात्। तथा 'आसीनो दूरं व्रजति' इति मन्त्रे, 'कस्तं मदामदं देवं मदन्यो ज्ञातुमर्हती'ति स्वस्य तस्य च भेदेन ज्ञातृज्ञेयभावं च न वदेत् । अत इदं मृत्य्वादिदेवताव्यतिरिक्तस्य ब्रह्मण एव प्रकरणम् । अतो यथा आसीनादिमन्त्रेषु विरुद्धधर्माधारत्वादिरूपं तन्माहात्म्यमुच्यते, तथात्रैवम्विधात्तृत्वरूपं माहात्म्यमुच्यते । ततः प्रकरणानुरोधादपि ब्रह्मवाक्यत्वमिति । अन्यथा प्रकृतहानाप्रकृतकल्पने स्यातामिति चकारार्थः ॥ १० ॥ ३ ॥



## ४ गुहां प्रविष्टावित्यधिकरणम् ।

( हृदयप्रविष्टो जीवः परमात्मा वा ? )

**गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॥ १।२।११ ॥**

तस्यैवाग्रे पठ्यते । "ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे । छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः" ( कठ.१।३।१ ) इति । किमिदं ब्रह्मवाक्यमाहोस्विदन्यवाक्यमिति । अस्य वाक्यस्योत्तरशेषत्वे जीवप्रकरणपठितत्वान्न ब्रह्मवाक्यत्वम् । पूर्वशेषत्वे तु ब्रह्मवाक्यत्वमिति हि प्रकरणनिर्णयः । मध्ये पाठादेवं सन्देहः । अर्थविचारे तु द्विवचननिर्देशात्पूर्वशेषत्वे पञ्चमुक्तजीवौ भविष्यतः । उत्तरविशेषत्वे त्विन्द्रियमनसी । उभयथापि न ब्रह्मवाक्यम् । द्वयोर्मुख्यत्वेन प्रतिपादनात् । ब्रह्मवाक्यत्वेऽपि न प्रयोजनसिद्धिः । अथ मन्यत उपनिषत्पाठादन्यत्रानिर्धाराज्जीवब्रह्मपरत्वेऽपि तयोरभेदात् ब्रह्मपरतैव वाक्यस्य युक्तेति । तथापि कस्य निर्णायकत्वं प्रकरणस्यार्थस्य वेति ? उभयोरपि सन्दिग्धत्वादयुक्तो विचार इति चेत्, उच्यते—

---

यद्यपि भोगस्थानं भगवतः सर्वत्रैवास्ति तथापि जीवेश्वरभेदरूपेण भोगस्थानं हृदयमपीति सूचयितुं गुहाधिकरणमारचयन्ति—**गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्** । विषयवाक्यस्थानं दर्शयन्ति—**तस्यैवेति** । पूर्वसूत्रविषयवाक्यस्याग्र इत्यर्थः । अथ विषयवाक्यम्—

'ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे । छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः । यः सेतुरीजानानामक्षरं ब्रह्म यत् परं अभयं तितीर्षतां पारं नाचिकेतं शकेमहि ।

**अथ भाष्यम्** । अस्मिन्नधिकरणे संशयबीजं विशदयन्ति—**किमदमिति** । **उत्तरशेषत्वेति** । यः सेतुरीजानानामित्युत्तरवाक्याङ्गत्वेत्यर्थः । इदं च विषयवाक्ये स्पष्टम् । ननु प्रकरणपठितत्वांशे कथं सन्देह इत्यत आहुः—**मध्ये पाठादिति** देहलीदीपन्यायेनोभयत्राप्यन्वययोग्यतायाः सत्त्वादिति भावः । नन्वर्थविचारे क्रियमाणे न कोऽपि संशय इत्यत आहुः—**अर्थविचारे त्विति** । **पूर्वशेषत्वेति** । 'हन्ता चेन्मन्यते' इत्यनेन 'मत्वा धीरो न शोचती'त्यनेन च बद्धमुक्तजीवयोरुक्तत्वादिति भावः । **इन्द्रियेति** । 'यस्त्वविज्ञानवान् भवती'त्यादावुभयोर्निरूपणादिति भावः । **उभयथेति** । शब्दविचारे तु एकस्मिन् पक्षे ब्रह्मवाक्यत्वं समायाति । अर्थविचारे तु ब्रह्मवाक्यत्वमेवास्य न भवतीति भावः । अत्र पूर्वशेषत्वमङ्गीकृत्य जीवब्रह्मपरमेवेदं वाक्यं भवतु । कुतः, "येयं प्रेते विचिकित्से"त्यनेन "अन्यत्र धर्मादि"त्यनेन चोभयोरुक्तत्वादिति केषाञ्चित्समाधानं, तन्निराकुर्वन्ति—**द्वयोरिति** । जीवब्रह्मणोरित्यर्थः । **न प्रयोजनसिद्धिरिति** । "तं त्वौपनिषदं पुरुषं पृच्छामी"ति प्रश्ने मुख्यतया केवलब्रह्मप्रतिपादनपरत्वेनोपनिषद्वाक्यमुत्तररूपं वक्तव्यम् । तस्योभयपरत्वे केवलब्रह्मपरत्वाभावादसम्भावनाविपरीतभावनानिवर्तकमननाद्यभावान्मोक्षरूपप्रयोजनसिद्धिं न भवतीत्यर्थः । ननु जीवब्रह्मणोरैक्याद्ब्रह्मपरत्वे सम्भवतीति कथं न प्रयोजनसिद्धिरित्याशयेनाशङ्कते—**अथेति** । **उपनिषत्पाठादिति** । अस्य वाक्यस्येति शेषः । तथा चोभयोर्ऋतपानकर्तृत्वस्य उपनिषद्येव निर्द्धार इति भावः । तथापि संशयाकारनिर्णयो न भविष्यतीत्याशयेन विचारं निराकुर्वन्ति—**तथापीति** । **सन्दिग्धत्वादिति** । अर्थे प्रकरणे च पूर्वोत्तरशेषत्वेन सन्दि-

**सन्देहवारकं शास्त्रं पदशक्त्या तु निर्णयः।**
**जीवादुत्कर्षशब्देन द्वयोर्वाक्येऽपि न क्षतिः॥ १६॥**

**गुहातपशब्दाभ्यामित्यर्थः। "ऋतं पिबन्तावि"त्यत्रैवं संशयः। किं जीवद्वयं निरूपयत्याहोस्विज्जीवब्रह्मणी वेति?**

(तत्र पूर्वपक्षः)

**तत्र ब्रह्मप्रकरणस्य सामान्यत्वात् "यस्तु विज्ञानवान् भवती"त्यग्रे विद्वदविद्वतोर्वक्तव्यत्वात् तदर्थमुभयोः प्रथमनिर्देश उचितः। मन्त्रेऽपि ऋतं स्वर्गापवर्गलक्षणं सुखम्। मार्गद्वयस्यापि विहितत्वात्सुकृतलोकत्वम्।**

---

न्धत्वादित्यर्थः। उच्यत इति। विचारे युक्तत्वमुच्यत इत्यर्थः। **शास्त्रं** व्याससूत्रम्। शङ्काकारे सम्भवति सति व्याससूत्राणां प्रवृत्तिः। स एव तु न सम्भवति प्रकरणादीनां सन्दिग्धत्वादित्यत आहुः—**निर्णय** इति। संशयाकारस्य निर्णयः कार्य इत्यर्थः। कीदृशपदशक्त्येत्यत आहुः—**जीवादुत्कर्ष**ेति। संशयजनकं कोटिद्वयं व्यवस्थापयन्ति **द्वयोरि**ति। **वाक्येऽपि** विषयवाक्येऽपि। द्वयोः कोट्योर्न क्षतिरित्यर्थः।

जीवादुत्कर्षशब्देनेत्यस्य जीववाचकं पदं तदुत्कर्षवाचकं पदमिति पदद्वयं मनसि निधायार्थमाहुः—**गुहे**ति। तथा च गुहापदं छायापरपर्यायं जीववाचकम्। आतपपदमाकाशपरपर्यायं मुक्तजीववाचकम्। एवं च पदद्वयशक्त्यैव कोटिद्वयोपस्थितौ सत्यां संशयाकारनिर्णयः सुखेन सम्भवतीति विचारः कर्तव्य इति भावः। एवं पदशक्त्या संशयाकारनिर्णयं साधयित्वा स्वरूपमाहुः—**एवं संशय** इति।

पूर्वपक्षमाहुः—**तत्रे**ति। **सामान्यत्वादि**ति। अन्यत्र धर्मादित्यारभ्याशब्दमित्यन्तं ब्रह्मप्रकरणस्य सामान्यत्वादित्यर्थः। तथा च तन्मध्यपाति "ऋतं पिबन्तावि"ति वाक्यं अवान्तरविशेषप्रकरणस्थम्। एवं च "सामान्यशास्त्रतो नूनं विशेषो बलवान् भवेदि"त्यनेन बद्धमुक्तजीवनिर्देशकं वक्तव्यमिति भावः। अत्रार्थे उपष्टम्भकमाहुः—**यस्त्वि**ति। इदं च विषयवाक्ये स्पष्टम्। ननु "ऋतं पिबन्तावि"त्यत्र बद्धस्य कथं सुखभोगो वक्तव्य इत्यत आहुः—**मन्त्रेऽपी**ति। तथा च प्रवृत्तिमार्गेऽपि यज्ञादिसुकृतजन्यलोकरूपशरीरावच्छेदेन बद्धस्यापि स्वर्गरूपकृतपाककर्तृत्वं सम्भवतीति भावः। **मार्गद्वयस्यापि**। प्रवृत्तिनिवृत्तिरूपस्यापीत्यर्थः। **विहितत्वा**द्वेदोक्तत्वात्। **सुकृतलोकत्वं** सुकृतजन्यलोकाभिन्नशरीरत्वम्। ननु गुहाशब्दार्थः परमव्योम, तच्च ब्रह्मणः स्थानं, न तु जीवद्वयस्येत्यतोऽन्य एव

---

१ ज्ञानार्थकाद्विच्छब्दान्मतुप्प्रत्यये कृते "झय." ८।२।१० इति सूत्रेण मस्य व। बालबोधिनीकारेण श्रीधरशास्त्रिपाठकेन विद्वदविद्वतोरिति प्रतीकमादाय "अयं पाठश्चिन्त्यः। विच्छब्दस्य चवन्तत्वाद्विद्वदविदुषोरित्यपेक्ष्यते, विच्छब्दाज्ज्ञानवाचकान्मतुप्प्रत्ययमादृत्य कृता प्रकाशस्था सिद्धिरपि चिन्त्या मादुपधायाश्चेति पाणिनिसूत्रेण वत्वस्याप्राप्तेः।" मादुपधाया इत्यनन्तरमेव पठितं "झय" इति सूत्रमजानता श्रीधरशास्त्रिणा स्वस्य पाणिनिशास्त्रपरिज्ञानपरिपाकप्राबल्यप्रदर्शनाय बद्धपरिकरेण नैतावता विरम्यते, किन्तु, श्रीगिरिधराणां विवरणम्, इच्छारामभट्टस्य च प्रदीपमेकीकृत्य बालबोधिनीं विरच्य, शुद्धाद्वैतमार्तण्डस्य मगनलालशास्त्रिकृतमुपोद्घातं संस्कृतेनानूद्य, श्रीपुरुषोत्तमानां अधिकरणमालां च प्रतिसूत्रतात्पर्योपन्यासतया प्रक्षिप्य नूतनटीकाकारत्वेन स्वात्मानं पुरस्कृत्य राजकीयग्रन्थावलिसम्पादकानपि वञ्चयित्वा, "निखिलशास्त्रपारङ्गमानां वैयाकरणधुरीणानामपि श्रीवल्लभाचार्याणां भाष्ये 'गुहां प्रविष्टौ' (१।२।११) इत्यादिसूत्रे विद्वदविद्वतोरिति प्रयोग. किञ्चिदिव वैयाकरणानां वैरस्यमुत्पादयेत्। अयमधुनातनोपपाठ इत्यपि वक्तुमशक्यम्। यतः प्रकाशकृद्भिः श्रीपुरुषोत्तममहाराजैस्तस्य पाठस्य सिद्ध्यै बहुप्रयतितम्। तद्विषये बालबोधिन्यां भूयान् विचार" इत्यादिकमपि विलिख्य, मन्वादीन् तिरस्कृत्य नूतनधर्मशास्त्रप्रणयनादिकं समर्थयता तेन स्वस्य व्याकरणज्ञानराहित्यं प्रदर्श्यते नु? न हि श्रीवल्लभाचार्यैः वैयाकरणानां वैरस्यमुत्पाद्यते। प्रकाशकारैरपि "ज्ञानार्थकान्मतुप्" एतावदेव लिखितम्, नान्यत्किञ्चित्। तर्हि प्रकाशकारैर्बहुप्रयतितम्? उत पाठकेन बहुप्रलपितम्?

गुहा तत्त्वविचारो हृदयं वा। जात्यपेक्षया त्वेकवचनम्। परमपरार्धं सत्यलोकः। तत्रोभयोर्भोगात्। अविद्यया पिहितप्रकाशत्वादविदुषश्छायात्वम्। ब्रह्मज्ञानेनातिप्रकाशत्वादातपत्वं विदुषः। अत एव विदुषः स्वरूपं ब्रह्मविदो वदन्ति। पञ्चाग्नयस्त्रिणाचिकेताश्चेतरम्। इन्द्रियमनसोस्त्वचेतनत्वान्न वाक्यार्थसङ्गतिः। वाक्यार्थयोगे हि विशेषणनिर्णयः। तस्माद्बुद्धिमुक्तजीवपरतयोपपन्नत्वात्तत्प्रकरणपाठान्न ब्रह्मवाक्यमिति। एवं प्राप्त उच्यते—

( उभावपि )

गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्। गुहा हृदयाकाशः। तत्र सकृदेकस्मिन्प्रविष्टौ जीवपरमात्मानावेव। "अनेन जीवेनात्मनाऽनुप्रविश्य" इत्युभयोः प्रवेशश्रवणात्। न ह्येकस्मिन् हृदयाकाशे जीवद्वयं प्रवेष्टुमर्हति। अर्थस्त्वेवं सम्भवति। पूर्वाधिकरणे यथाभिलषितभोगो भवति साधितः। प्रकारान्तरेणापि "ऋतं सत्यं परं ब्रह्मे"ति ऋतसत्ययोर्ब्रह्मत्वप्रतिपादनात् स्वरूपामृतपातारौ। सुकृतमपि ब्रह्मैव "तस्मात्तत्सुकृतमुच्यते" (तै. २।७) इति श्रुतेः। स एव लोकः। उपचारात् षष्ठी।

---

गुहाशब्दार्थमाहुः—गुहेति। गहनत्वरूपसामान्यधर्मेण। गुहासादृश्यं तत्त्वविचारे स्वीकृत्याग्निर्माणवक इतिवद्गौणलक्षणया गुहाशब्दार्थमाहुः—तत्त्वविचार इति। ननु गौणीलक्षणादरोऽनुचित इत्यत आहुः—हृदयं चेति। नन्वेकस्मिन् हृदये "द्वा सुपर्णावि"ति श्रुतौ ब्रह्मजीवप्रवेशस्तूक्त एव। जीवद्वयप्रवेशस्तु कुत्रापि नोक्त इति हृदयद्वये वक्तव्यम्। तथा चैकवचनानुपपत्तिरित्यत आहुः—जातीति। हृदयत्वरूपजात्यपेक्षयेत्यर्थः। ननु विषयवाक्ये परमे परार्धे इति वर्तते तस्य का वा गतिरित्यत आहुः—परमेति। उभयोरिति। अविदुषोऽपि कर्मणा सत्यलोकस्थितिरिति भावः। स्वपक्षे विषयवाक्यस्थयोश्छायातपद्वयोर्विनियोगमाहुः—अविद्ययेति। पञ्चाग्नयः अग्निहोत्रिण इतरं वदन्तीत्यन्वयः। त्रिणाचिकेताः "तꣳ हैतमेके पशुबन्ध एवोत्तरवेद्यां चिन्वते" इति तृतीयाष्टकतैत्तिरीयब्राह्मणोक्तनाचिकेतनामकचयनविशिष्टसोमयागस्य त्रिवारं कर्तारस्तेषां ब्रह्मलोकप्राप्तिरित्यर्थः। इतरं अविदुषः स्वरूपं वदन्तीति पूर्वेणान्वयः। ननु पूर्वमेवोक्तमर्थविचारे इन्द्रियमनसोर्ग्रहणं भवतीत्यत आहुः—इन्द्रियमनसोरिति। सर्वेषामुपनिषद्वाक्यानां चेतने ब्रह्मणि तात्पर्यात्, तत्रैव वाक्यार्थसङ्गतिरिति सिद्धान्तस्थितिः। तत्रोपनिषदन्तर्गतानां केषाञ्चिद्विशेषणानामसम्भवसंशयात्तन्निर्णयार्थं शास्त्रप्रवृत्तिः। इन्द्रियमनसोस्त्वचेतनत्वात्, 'सति कुड्ये चित्र'मिति न्यायेन शास्त्रप्रवृत्तिरेव न भविष्यतीति भावः। एतदेवाहुः—वाक्यार्थयोगे इति। वाक्यार्थयोगे सति हि विशेषणनिर्णयः कर्तव्यः स एव तु नास्तीत्यर्थः। पूर्वमुपसंहरति—तस्मादिति। समाधानमाहुः—उच्यते इति।

गुहामिति। एकस्मिन् काले सूत्रस्थद्विशब्दस्य प्रसिद्धार्थकत्वं मनसि निधाय श्रुतौ प्रसिद्धिमाहुः—अनेनेति। "नामरूपे व्याकरवाणी"ति श्रुतिशेषः। जीवेनेत्यर्थः। एकवचनं च जीवद्वयव्यावृत्त्यर्थम्। अर्हतीति। व्याकरणार्थमेकस्यैव प्रवेशौचित्यादित्यर्थः। सिद्धान्ते मन्त्रार्थमाहुः—अर्थस्त्विति। प्रकारान्तरेणापीति। तथेत्यध्याहार्यम्। तथा जीवेन सहाभिलषितभोगमस्मिन्नधिकरणे साधयतीत्यर्थः। प्रकारमेवाहुः—ऋतमिति। स एवेति। तदेवेति वक्तव्ये विधेयानुरोधात्स एवेत्युक्तम्। उपचारादिति। कुत्रचिदभेदेऽपि भेद उपचर्यते। राहोः शिर इत्यादौ उपचारे सामञ्ज-

अक्षरं वा परमपरार्धोपरि तत्रत्यानां परिदृश्यमानत्वात्। छाया प्रतिसारूप्यं सायुज्यं गतस्य जीवस्यापि तथात्वात्ततोऽपि विशिष्टं ब्रह्म प्रकटानन्दत्वात्। आतपः परोक्षवादः। काण्डत्रयेऽपि तद्वाद इति त्रयाणां ग्रहणम्। अतो युक्त एवायमिति हिशब्दार्थः।

( अत्रैव )

नन्वप्रकृतत्वात् कथमेवमिति तत्राह। तद्दर्शनात्। तयोर्दर्शनं तद्दर्शनं तस्मात्। जीवब्रह्मणोः प्रतिपादनीयत्वात्—"येयं प्रेते विचिकित्सा मनुष्ये अस्तीत्येके नायमस्तीति चैके, एतद्विद्यामनुशिष्टस्त्वयाऽहम्" ( कठ. १।१।२० ) इति जीवः पृष्टः। "अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात्। अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वद" ( कठ. १।२।१४ ) इति ब्रह्मापि पृष्टम्। तत्र ब्रह्म निरूप्य जीवं निरूपयन्नुभयोस्तुल्यत्वेन महाभोगं निरूपयन् फलार्थं मध्ये स्वरूपं कीर्तयति। अतो ब्रह्मवाक्यमेवेति सिद्धम्॥ १।२।११॥

विशेषणाच्च॥ १।२।१२॥

विशेषानि पूर्वोक्तानि जीवब्रह्मणोरेव सङ्गतानि। अग्रिमं वा "आत्मानं रथिनं विद्धि" ( कठ. १।३।३ ) "सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्" ( कठ. १।३।९ ) इति। जीवप्राप्यं ब्रह्माह। अत उभयोरेव सर्वव्यावृत्त्या कथनादग्रिमग्रन्थपर्यालोचनयाऽपीदं ब्रह्मवाक्यमेव। "द्वा सुपर्णे"ति

---

स्वाभावेऽपि। प्रकारान्तरमाहुः—अक्षरमिति। परमपरार्धोपरीति। परमव्योमात्मकः सत्यलोकादुपरीत्यर्थः। तथा च श्रुतिः "ऋचोऽक्षरे परमे व्योमन्नि"ति। परार्द्धोपरीत्यत्र हेतुमाहुः—तत्रात्यानामिति। तत्रत्यानां ब्रह्मादीनाम्। छायाशब्दार्थमाहुः—प्रतिसारूप्यमिति। प्रतिबिम्बमित्यर्थः। जीवब्रह्मणोर्बिम्बप्रतिबिम्बभावस्यापि स्वीकृतत्वात्। अथवा स्वमतेऽप्याहुः—प्रतिसारूप्यं भगवत्सदृशरूपवत्त्वम्। ननु स्वमते जीवब्रह्मणोर्बिम्बप्रतिबिम्बभावस्याभावात्। सादृश्यं च बद्धावस्थायामभावात्कथमिदं सङ्गच्छते इत्यत आहुः—तथात्वादिति। भगवत्सदृशत्वात्। छायापेक्षयाऽऽतपे विशेषं प्रतिपादयन्ति—ततोऽपीति। ब्रह्म आतपः प्रकटानन्दत्वादित्यन्वयः। ननु श्रुतावानन्दपदं विहायातपपदप्रयोगे किं प्रयोजनमत आहुः—परोक्षवाद इति। 'परोक्षवादो वेदोऽय'मिति वचनादित्यर्थः। त्रयाणामिति। ब्रह्मविदो ज्ञानिनः, पञ्चाग्नयः उपासकाः, त्रिणाचिकेताः कर्मिण इति त्रयाणामित्यर्थः। सूत्रस्थहिशब्दार्थमाहुः—अत इति।

प्रकरणनिर्णयार्थं सूत्रमागमवतारयन्ति—नन्विति। अप्राकृतत्वात् जीवब्रह्मोभयनिरूपणस्य प्रकरणबहिर्भूतत्वादित्यर्थः। तद्दर्शनात्तयोर्जीवब्रह्मणोः प्रकरणस्य दर्शनादित्यर्थः। कथं दर्शनमित्याकाङ्क्षायां विशदयन्ति—येयमिति। इदं च विषयवाक्ये स्पष्टम्। विषयवाक्ये तूभयोः प्रतिपादनीयत्वं विशदयन्ति—तत्रेति। उभयोस्तुल्यत्वेन "न जायते म्रियते वे"त्यनेन तुल्यत्वम्। महाभोगं "ब्रह्म च क्षत्रं चे"त्यनेन महाभोगं मध्ये स्वरूपं "ऋतं पिबन्तावि"त्यनेन कीर्तयन् इत्यर्थः। सिद्धमिति। उभयनिरूपणस्य प्रकरणबहिर्भूतत्वाभावात् सिद्धं ब्रह्मवाक्यमित्यर्थः॥ ११॥

उभयोः प्रतिपादने हेत्वन्तरप्रतिपादकं सूत्रमाहुः—विशेषणाच्च। पूर्वोक्तानीत्यादिकविषयवाक्यस्य। पूर्वप्रकरणे स्पष्टम्। अग्रिममिति च उत्तरप्रकरणे। पर्यालोचनयापीत्यपि। अस्य मन्त्रस्योत्तरशेषत्वेऽपि

**निःसन्दिग्धम् । चकारः प्रकरणोक्तसर्वोपपत्तिसमुच्चयार्थः ॥ १।२।१२।४ ॥**

---

क्षतिर्नास्तीति सूचितम् । केषाञ्चिन्मतेऽस्मिन् सूत्रे "द्वा सुपर्णेति" विषयवाक्यं, तद्दूषयन्ति—**निःसन्दिग्धमिति** । एतेन "द्वा सुपर्णे"ति मन्त्रे सन्देहाभावाद्विचारप्रवृत्त्यभावात्तन्नेदं विषयवाक्यमिति सूचितम् । इति चतुर्थाधिकरणम् ॥ १२ ॥

---

१ अत्रेत्थं व्याख्यानान्तराणि—

(१) तत्र शाङ्कराः—पूर्वं ब्रह्मक्षत्रपदस्य मृत्युपदसाहित्याद्विनश्वरवस्तुपरत्वमपविदितापि पिबच्छब्दस्य सन्निहितगुहाप्रवेशादिना बुद्धिक्षेत्रज्ञपरत्वमस्त्विति दृष्टान्तसङ्गत्यैवमाह—अत्र पूर्वपक्षे, बुद्धिभिन्नजीवज्ञानम् । सिद्धान्ते तु, जीवविलक्षणपरमात्मज्ञानमिति फलभेदः । कठवल्लीष्वेवं श्रूयते—'ऋतं पिबन्तौ सुकृतस्य लोके' इत्यादि । तत्र किं बुद्धिजीवौ निर्दिष्टौ, उत जीवपरमात्मानाविति विशये, बुद्धिजीवाविति पूर्वः पक्षः । सिद्धान्तस्तु, इह गुहां प्रविष्टौ जीवपरमात्मानावेव । कुतः, आत्मानौ हि, हि यस्मादात्मानौ चेतनौ, 'ऋतं पिबन्तौ' इति कर्मफलभोगश्रवणेन एकस्यात्मत्वे द्वितीयस्याप्यात्मत्वं न्याय्यम् । तत्र हेतुः तद्दर्शनात्, संख्याश्रवणे च समानस्वभावयोरेवैकरूपत्वस्य लोके दर्शनादित्यर्थः ॥

इतश्च जीवपरमात्मानावेव गुहां प्रविष्टावित्याह—'सोऽध्वनः पारमाप्नोति....' 'देवं मत्वा धीरो हर्षशोकौ जहाति' इति जीवपरमात्मनोरेवास्मिन्प्रकरणे गन्तृगन्तव्यभावेन च विशेषितत्वादित्यर्थः ॥

(२) रामानुजीये—अथ स्यादयं ब्रह्मक्षत्रौदनत्वसूचितः पुरुषोत्तमोऽपहतपाप्मा परमात्मा । अनन्तरम्, "ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे । छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः" इति कर्मफलभोक्तुरेव सद्वितीयस्याभिधानात् । द्वितीयश्च प्राणो बुद्धिर्वा स्यात् । ऋतपानं हि कर्मफलभोग एव । स च परमात्मनो न सम्भवति । बुद्धिप्राणयोस्तु भोक्तुर्जीवस्योपकरणभूतयोर्यथाकथञ्चित्पानेऽन्वयः सम्भवतीति तयोरन्यतरेण सद्वितीयो जीव एव प्रतिपाद्यते । तदेकप्रकरणत्वात्पूर्वप्रस्तुतोऽत्ताऽपि स एव भवितुमर्हतीति । अत्रोच्यते—न प्राणजीवौ बुद्धिजीवौ वा गुहां प्रविष्टावृतं पिबन्तावित्युच्येते । अपि तु जीवात्मपरमात्मानौ हि तथा व्यपदिश्येते । कुतः ? तद्दर्शनात् । अस्मिन् प्रकरणे जीवपरयोरेव गुहाप्रवेशव्यपदेशो दृश्यते । परमात्मनस्तावत् "तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम् । अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति" । जीवस्यापि, "या प्राणेन सम्भवत्यदितिर्देवतामयी । गुहां प्रविश्य तिष्ठन्ती या भूतेभिर्व्यजायत" इति कर्मफलान्यत्तीत्यदितिर्जीव उच्यते । प्राणेन सम्भवतीति प्राणेन सह वर्तते । देवतामयीन्द्रियाधीनभोगा गुहां प्रविश्य तिष्ठन्ती हृदयपुण्डरीकोदरवर्तिनी या भूतेभिर्व्यजायत पृथिव्यादिभिर्भूतैः सहिता देवादिरूपेण विविधा जायते । एवं च सति "ऋतं पिबन्तौ" इति व्यपदेशाच्छत्रिणो गच्छन्तीतिवत्प्रतिपत्तव्यः । यद्वा, प्रयोज्यप्रयोजकरूपेण पाने कर्तृत्वं जीवपरयोरुपपद्यते ॥

अस्मिन्प्रकरणे जीवपरमात्मानावेवोपास्योपासकत्वप्राप्यप्राप्तृत्वविशिष्टौ सर्वत्र प्रतिपाद्येते । "ब्रह्मजज्ञं देवमीड्यं विदित्वा निचाय्येमां शान्तिमत्यन्तमेति" ब्रह्मजज्ञो जीवः, ब्रह्मणो जातत्वाज्ज्ञत्वाच्च । तं देवमीड्यं विदित्वा जीवात्मानमुपासकं ब्रह्मात्मकत्वेनावगम्येत्यर्थः । तथा, "यः

सेतुरीजानानामक्षरं ब्रह्म यत्परम्। अभयं तितीर्षतां पारं नाचिकेतं शकेमहि" इत्युपास्यः परमात्मोच्यते। नाचिकेतं नाचिकेतस्य कर्मणः प्राप्यमित्यर्थः। "आत्मानं रथिनं विद्धि शरीरं रथमेव च" इत्यादिनोपासको जीव उच्यते। तथा, "विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः। सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्" इति प्राप्यप्राप्तारावभिधीयेते जीवपरमात्मानौ। इहापि छायातपावित्यज्ञत्वसर्वज्ञत्वाभ्यां तावेव विशिष्य व्यपदिश्येते। अथ स्यात्, "येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैके" इति जीवस्वरूपयाथात्म्यप्रश्नोपक्रमत्वात्सर्वमिदं प्रकरणं जीवपरमिति प्रतीयत इति। नैतदेवम्। न हि जीवस्य देहातिरिक्तस्यास्तित्वनास्तित्वशङ्कयाऽयं प्रश्नः। तथा सति पूर्ववरद्वयवरणानुपपत्तेः। तथा हि पितुः सर्ववेदसदक्षिणक्रतुसमाप्तिवेलायां दीयमानदक्षिणावैगुण्येन क्रतुवैगुण्यं मन्यमानेन कुमारेण नचिकेतसाऽऽस्तिक्यप्रेसरेण स्वात्मदानेनापि पितुः क्रतुसाद्गुण्यमिच्छता कस्मै मां दास्यसीत्यसकृत्पितरं पृच्छता स्वनिर्बन्धरुष्टपितुर्वचनान्मृत्युसदनं प्रविष्टेन स्वसदनात्प्रोषुषि यमे तददर्शनाच्च तिस्रो रात्रीरुपोषुषा स्वोपवासभीततत्प्रतिविधानप्रवृत्तमृत्युप्रत्ते वरत्रय आस्तिक्यातिरेकात् प्रथमेन वरेण पितुः प्रसादो वृतः। एतच्च सर्वं देहातिरिक्तमात्मानमजानतो नोपपद्यते। द्वितीयेन च वरणोत्तीर्णदेहात्मानुभाव्यफलसाधनभूताऽग्निविद्या वृता। तदपि देहातिरिक्तात्मानभिज्ञस्य न सम्भवति। अतस्तृतीयेन वरेण यदिदं व्रियते—"येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैके। एतद्विद्यामनुशिष्टस्त्वयाऽहं वराणामेष वरस्तृतीयः" इति। अत्र परमपुरुषार्थरूपब्रह्मप्राप्तिलक्षणमोक्षयाथात्म्यविज्ञानाय तदुपायभूतपरमात्मोपासनपरावरात्मतत्त्वजिज्ञासयाऽयं प्रश्नः क्रियते। एवं च, येयं प्रेत इति न शरीरवियोगमात्राभिप्रायम्। अपि तु, सर्वबन्धनिर्मोक्षाभिप्रायम्। यथा, "न प्रेत्य संज्ञास्ति" इति। अयमर्थः, मोक्षाधिकृते मनुष्ये प्रेते सर्वबन्धविनिर्मुक्ते तत्स्वरूपविषयवादिविप्रतिपत्तिनिमित्तास्तिनास्त्यात्मिका येयं विचिकित्सा तदपनोदनाय तत्स्वरूपयाथात्म्यं त्वयाऽनुशिष्टोऽहं विद्यां जानीयामिति। तथाहि बहुधा विप्रतिपद्यन्ते। केचिद्वित्तिमात्रस्यात्मनः स्वरूपोच्छित्तिलक्षणं मोक्षमाचक्षते। अन्ये वित्तिमात्रस्यैव सतोविद्यास्तमयम्। अपरे पाषाणकल्पस्यात्मनो ज्ञानाद्यशेषवैशेषिकगुणोच्छेदलक्षणं कैवल्यरूपम्। अपरेऽपहतपाप्मानं परमात्मानमभ्युपगच्छन्तस्तस्यैवोपाधिसंसर्गनिमित्तजीवभावस्योपाध्यपगमेन तद्भावलक्षणमोक्षमातिष्ठन्ते। त्रय्यन्तनिष्णातास्तु, निखिलजगदेककारणस्याशेषहेयप्रत्यनीकानन्तज्ञानानन्दैकस्वरूपस्य स्वाभाविकानवधिकातिशयासङ्ख्येयकल्याणगुणाकरस्य सकलेतरविलक्षणस्य, सर्वात्मभूतस्य परस्य ब्रह्मणः शरीरतया प्रकारभूतस्यानुकूलापरिच्छिन्नज्ञानस्वरूपस्य परमात्मानुभवैकरसस्य जीवस्यानादिकर्मरूपाविद्यातिरोहितस्वरूपस्याविद्योच्छेदपूर्वकस्वाभाविकपरमात्मानुभवमेव मोक्षमाचक्षते। तत्र मोक्षस्वरूपं तत्साधनं च त्वत्प्रसादाद्विद्यामिति नचिकेतसा पृष्टो मृत्युस्तस्यार्थस्य दुरवबोधत्वप्रदर्शनेन विविधभोगवितरणप्रलोभनेन चैनं परीक्ष्य योग्यतामभिज्ञाय परावरात्मतत्त्वविज्ञानं परमात्मोपासनं तत्पदप्राप्तिलक्षणं मोक्षं च "तं दुर्दर्शं गूढमनुप्रविष्टम्" इत्यारभ्य "सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्" इत्यन्तेनोपदिश्य तदपेक्षितांश्च विशेषानुपदिदेशेति सर्वं समञ्जसम्। अतः परमात्मैवात्रेति सिद्धम्॥

(३) माध्वे—सर्वोत्तेकः पर उक्तः । "ऋतं पिबन्तौ सुकृतस्य लोके । गुहां प्रविष्टौ परमे परार्धे छायातपौ ब्रह्मविदो वदन्ति । पञ्चाग्नयो ये च त्रिणाचिकेता" इति पिबन्तौ प्रतीयेते तौ काविति उच्यते, गुहां प्रविष्टौ पिबन्तौ विष्णुरूपे एव धर्म्माः समन्तात् त्रिवृतं व्यासस्तयोर्जुष्टिं मातरिश्वा जगाम" इत्यादिना तद्दर्शनात् । "आत्मान्तरात्मेति हरिरेक एव द्विधा स्थितः । निविष्टो हृदये नित्यं रसं पिबति कर्म्मजम्" इति बृहत्संहितायाम् । "शुभं पिबत्यसौ नित्यं नाशुभं स हरिः पिबेत् । पूर्णानन्दमयस्यास्य चेष्टा न ज्ञायते क्वचित्" इति पाद्मे ॥

"यो वेद निहितं गुहायाम्" इत्यादिना प्रसिद्धं हिशब्देन दर्शयति—"यः सेतुरीजानामक्षरं ब्रह्म तत् परमि' ति, "पृथग्वक्तुं गुणास्तस्य न शक्यन्तेऽमितत्वः । यतोऽतो ब्रह्मशब्देन सर्वेषां ग्रहणं भवेत् । एतस्माद् ब्रह्म शब्दोऽयं विष्णोरेव विशेषणम् । अमिता हि गुणा यस्मान्नान्येषां तमृते विभुम्" इति ब्राह्मे । न च जीवे समन्वयोऽभिधीयते, "सत्य आत्मा सत्यो जीवः सत्यं भिदा सत्यं भिदा सत्यं भिदा मे वारुण्यो मे वारुण्यो मे वारुण्यः" इति पैङ्गिश्रुतेः । "आत्मा हि परमः स्वतन्त्रोऽधिगुणः जीवोऽल्पशक्तिरस्वतन्त्रो वः" इति भाल्लवेयश्रुतिः । "यथेश्वरस्य जीवस्य भेदः सत्यो विनिश्चयात् । एवमेव हि मे वाचं सत्यां कर्तुमिहार्हसि । यथेश्वरस्य जीवस्य भेदः सत्यो विनिश्चयात् । एवमेव हि मे वाचं सत्यां कर्तुमिहार्हसि । यथेश्वरस्य जीवस्य सत्यभेदौ परस्परम् । तेन सत्येन मां देवास्त्रायन्तु सह केशवाः" इत्यादेः । "नासत्यो भेद आदित्यः विष्णुः" इत्युक्तम् । "य एष आदित्ये पुरुषः सोऽहमस्मि स एवाहमस्मी"त्यादावग्नीनामेवादित्यस्थत्वमुच्यते, अतोऽग्न्यादित्ययोरैक्याद् य "एषोऽन्तरक्षिणि पुरुषो दृश्यत" इत्यत्राप्यग्निरेवोच्यते ॥

(४) निम्बार्कः—"ऋतम्पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टा"वित्यत्र गुहां प्रविष्टौ आत्मानौ हि चेतनौ हि जीवपरमात्मानौ बोध्यौ । कुतः? तद्दर्शनात्तयोरेवास्मिन्प्रकरणे गुहाप्रवेशव्यपदेशदर्शनात् "तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितमिति" परमात्मनः । "या प्राणेन सम्भवत्यदितिर्देवतामयी गुहां प्रविश्य तिष्ठन्ती सा भूतेभिर्व्यजायते"ति जीवस्य । जीवपरयोरेवात्र गुहाप्रविष्टत्वेन परिग्रहः, यतोऽस्मिन्प्रकरणे "ब्रह्मयज्ञं देवमीड्यं विदित्वा निचाय्येमां शान्तिमत्यन्तमेति यः सेतुरीजानाना"मित्यादिषु तयोरेवोपास्योपासकभावेन वेद्यत्ववेत्तृत्वादिना च विशेषितत्वाच्च ॥

(५) भैक्षवे—नन्वयं भोगोऽपि जीवरूपेणैवास्तु किं पृथग्भोगान्तरकल्पनयेति तत्राह । इतश्च परमेश्वरोऽत्ता भवति हि यस्मात् गुहां प्रविष्टावात्मानौ जीवेश्वरौ द्वावेवात्तारौ तद्दर्शनात् । "ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे । छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेता" इति पूर्ववाक्ये द्वयोरेव जीवेश्वरयोर्भोक्तृत्वश्रवणादित्यर्थः । पुण्यस्य लोके विराडाख्यपुरे परार्धे परमर्द्धिमति या गुहा भुवर्लोकाख्यं हृदयगह्वरं तस्यां ज्योतिर्मण्डलरूपलिङ्गशरीरोपाधिना प्रविष्टौ ऋतं सत्यं कामजातं पिबन्तौ भुञ्जानौ समष्टिजीवेश्वरौ ब्रह्मविदस्त्रिणाचिकेतसः छायातपसदृशौ वदन्ति, सहस्थितिगतिनियमादिभ्य इति श्रुत्यर्थः । तस्माद् द्वयोरेव पृथक् पृथक् भोक्तृत्वं सिद्धम् । तथा गीतायामपि जीवस्य भोक्तृत्वमुक्तम् । "भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् । उपद्रष्टाऽनुमन्ता च भर्ता भोक्ता महेश्वरः ॥ परमात्मेति चाप्युक्तो देहेऽस्मिन् पुरुषः परः" इत्यादिना । शान्तिपर्वादौ च । "त्रीन् लोकान् व्याप्य भूतात्मा भुङ्क्ते विश्वभुगव्ययः" इत्यादिना । तथा युक्तेरपि ईश्वरस्य भोगः सिद्ध्यति । ईश्वरस्य नित्य आनन्दः श्रुत्यादिभिरानन्त्यम

-त्याधिकरणे पञ्चसूत्र्यां च प्रसाधितः। तथा ईश्वरोपाधेः सत्त्वरूपतयाऽप्यानन्दवत्त्वं सत्त्वस्य सुखस्वभावत्वात्, स चानन्दोऽवश्यमीश्वरचेतने भासते तस्य सर्वज्ञत्वात्, उपाधिसुखादीनामज्ञातसत्त्वादर्शनाच्च, तथा चोपाधिवृत्तिद्वारतां विना स्वप्रतिविम्बितसुखानुभवो ब्रह्मणोऽभ्युपगतः 'स एव च भोग इति। किं चानन्दाभोक्तृत्वे सतीश्वरस्य नित्यानन्दत्वेन स्तुतिर्नोपपद्यते अभोग्यानन्दस्य लोकेऽनुपादेयत्वात्। "अनश्नन्नन्योऽभिचाकशी"त्याद्याः भोगप्रतिषेधकश्रुतिस्मृतयस्तु ( जीवदर्शनं प्रत्ययाविशेषाख्यं मुख्यभोगमेवापाकुर्वन्ति ) किं वा न लिप्यते लोकदुःखेन बाह्य इति श्रुत्यैकवाक्यतया जीवसुखदुःखैरीश्वरे साङ्कर्यमेव प्रतिषेधन्ति। तथा च, यथा राज्ञः सेवकापराधिनौ सुखदुःखे भोजयतस्तद्विलक्षणं सुखमानस्य भोगान्तरं तत्समकालीनं दृश्यते, तथैव परमेश्वरस्यापि भोगान्तरमनुपेयमिति। नचैवं 'क्लेशकर्मविपाकाशयैरपरामृष्ट' इति पातञ्जलसूत्रे विम्बान्तर्गतभोगस्य निराकरणं विरुध्येतेति वाच्यम्। वक्ष्यमाणभोगत्रयमध्ये भोगद्वयप्रतिषेधस्यैव व्यासभाष्यव्याख्यानतत्त्वदर्शत्वात्। तथा हि क्लेशादिव्याख्योत्तरं भाष्यं, विपाकजात्यायुर्भोगाः, ते च मनसि वर्तमानाः पुरुषे व्यपदिश्यन्ते। स हि तत्फलस्य भोक्तेति यो ह्यनेन भोगेनापरामृष्टः स ईश्वर इति। अत्र च द्विविधो भोगोऽवगम्यते एको विपाकान्तर्गतो मनोनिष्ठः, स चान्नपानस्रक्चन्दनादिसूक्ष्मांशैः सुखाद्यात्मकस्य मनसः पोषणं शब्दाद्याकारवृत्तिश्च, "अन्नमशितं त्रेधा विधीयते तस्य योऽणिष्ठस्तन्मनो भवती"त्यादिश्रुतेः,"भुजपालनाभ्यवहारयो"रित्यनुशासनाच्च। एतेन देहप्राणयोरपि भोग उदाहृतश्रुतिशेषादेव बोध्यः। उक्तश्रुतौ च मनःशब्दो मनःप्रधानलिङ्गशरीरवचनस्तेन चक्षुरादीनामपि सङ्ग्रहः। द्वितीयश्च भोगो यथोक्तभोगजन्ययोर्मनोनिष्ठयोः सुखदुःखयोः पुरुषे अविवेकरूपसत्त्वपुरुषयोरत्यन्तासङ्कीर्णयोः प्रत्ययाविशेषो भोग इति सुखभोगप्रतिपादकयोगसूत्रात्। तृतीयस्तु, सुखादीनां साक्षादनुभवमात्ररूपसाङ्ख्यशास्त्रसिद्धो गौणो भोग इति साङ्ख्यसूत्रात्। तत्राद्यो, भोगः सर्वेषामेव पुरुषाणां नास्ति, अविकारित्वादसङ्गत्वाच्च। द्वितीयश्च भोगोऽस्ति बुद्धेः जीवानां च। बुद्धिपुरुषनिष्ठयोः सुखादितदनुभवयोरविविक्तधर्मिकयोरेव भोगत्वात्। तृतीयस्तु जीव ब्रह्मणोरेव उपाधिगतसुखादीनां साक्षित्वादिति। अतस्तृतीय ईश्वरस्य भोगो न क्लेशादिसूत्रे निषिद्ध इति ईश्वरभोगस्य च नित्यसुखगोचरतया नित्यतया च न तत्र कर्माद्यपेक्षा। ननु कथं तर्हि कामव्यूहमीश्वरः पिबतीत्युक्तं, तद्भोगस्य कामाप्रयुक्तत्वादिति चेन्न, नित्यस्याप्यैश्वर्यसुखस्य जीवानां कामभोजनेनाभिव्यज्यमानतया शब्दादिकामसुखमीशो भुङ्क्त इत्युपचारात्। न त्वीश्वरो जीववत्कामजन्यं सुखं भुङ्क्त इति दिक्। अपरे तु ब्रह्मणि भोगमनिच्छन्तो "ऋतं पिबन्तावि"ति-श्रुतौ पिबन् पाययंश्च छायात्मानौ छत्रिणो गच्छन्तीतिवल्लक्षणया प्रयुक्तावित्याहुः। तन्न, लक्षणानौचित्यात्। 'भोगमात्रसाम्यलिङ्गाच्चेति' चतुर्थाध्यायसूत्रे स्मृतिमूलश्रुत्योक्तयुक्त्या च भोगसिद्धेश्च। ("पिबन्ते नाम विषयमसह्याताः कुमारकाः","एषस्तु पिबते देव स्वच्छन्देनात्मकाम्ययेति" श्रुत्योः साक्षादेव ब्रह्मणोऽपि भोगकथनाच्च। "अव्यक्तरूपेण रूपेण वैश्वानरमुखेन च। सर्वं प्रत्युपभोगाय जायते परमात्मनः॥ कर्माणीश्वरतुष्ट्यर्थं कुर्यान्नैष्कर्म्यमाप्नुयात्"। इति याज्ञवल्क्यवाक्यादिभिरपि परमेश्वरस्य भोगसिद्धेश्च। अव्यक्तस्वरूपं कारणोपाधिवदलं वैश्वानरश्च समष्टिजीवो व्यष्टिसमष्ट्यभेदात्, जीवान्तराणामपि सङ्ग्रहः। किञ्च "सुषुप्तस्थान एकीभूतः प्रज्ञानघन एवानन्दमयो ह्यानन्दभुक् चेतोमुखः प्राज्ञ" इति माण्डूक्यादौ स्पष्टमेव प्राज्ञस्येश्वरस्य भोगः श्रूयते। न चात्र प्राज्ञशब्देन जीव एवोक्तः सुषुप्तस्थान इति सुषुप्तावस्थाकथनादिति वाच्यम्। अंशाप-

स्थानामंशिन्युपपत्तेर्लक्षणानौचित्यात्, श्रुतिषु जीवानां सुषुप्तावस्थाया प्राज्ञे विलीनत्वादेव प्राज्ञत्ववचनात्, भिद्येते नामरूपे समुद्र इत्येवं प्रोच्यत इति श्रौतदृष्टान्तात्। प्राज्ञशब्दस्य शानि-निरूढस्य प्रकृष्टाऽज्ञत्वम्, तथा साक्षात्सुषुप्तावस्था तु जीववाचकत्वव्यवस्थापनं तु मोहमूलकत्वाद् उपेक्षणीयं, रूढेर्योगापहारित्वात्, सुषुप्तावस्थायामेवायं पुरुषः "प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किं च न वेदनान्तरमि"तिश्रुत्या स्त्रीपुरुषदृष्टान्तेन प्राज्ञजीवयोर्भेदस्यापि कथनाच्चेति। माण्डूक्यादौ च तुरीयाख्यात्यन्तलयावस्थापर्यन्तमवस्थाचतुष्टयं परमात्मन्यंशांशभेदेनोपासनार्थ-मुक्तम्। पुरुषसूक्तादिषु चतुष्पात्त्वेन परमेश्वरस्यैवोपासनादर्शनात् अत 'ईश्वरप्रणिधानाद्वा' 'तस्य वाचकः प्रणवः' 'तज्जपस्तदर्थ भावनमि'ति योगसूत्रपुरुषसूक्तैकवाक्यतया माण्डूक्यादावपि परमात्मपरत्वमवधार्य्यते, तेन, तेषु जीवपरत्वभ्रमाऽवस्था श्रवणमात्रेण न कार्येति प्रसङ्गा-न्माण्डूक्यादेर्जीवपरत्वं निराकृतमिति द्रष्टव्यम्। ननु ऋतं पिबन्ताविलत्रात्मशब्दाप्रयोगाद्बुद्धि-जीवावेवार्थौ स्यातां, तथा हि पैङ्गिरहस्यब्राह्मणे "द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिष-स्वजाते। तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीती"तिरूपा तदीया ऋग्व्याख्येया। तथा, "तयोरन्यः पिप्पलं स्वाद्वत्ती"ति सत्त्वम्, अनश्नन्नन्योऽभिपश्यति ज्ञः, "तदेतत्सत्त्वं येन स्वप्नं पश्यति अथ योऽयं शारीर उपद्रष्टा स क्षेत्रज्ञः तावेतौ सत्त्वक्षेत्रज्ञावि"ति। तत्र सत्त्वाख्यायाः बुद्धेर्भोगो रूपादिविषयगतसुखदुःखाभ्यवहरणं ताभ्यां पुष्टिर्यथा दुग्धमाधुर्यादीनां शर्करामाधुर्यादिभिः पुष्टिः स एव चाविकारे सुखादिशून्ये च पुरुषे प्रतिबिम्बते, न तु बुद्धिगतसुखदुःखयोः प्रतिबिम्बगतमभ्यवहरणं भोगविशेष इति बोध्यम्। तथा च पैङ्गिरहस्यैकवाक्यतया ऋतं पिबन्तावित्यत्रापि सत्त्वक्षेत्रज्ञावेव विवेकार्थमर्थावास्तामित्याशङ्क्याह, यदुक्तं तत्र विशेषणात् पिबन्ताविति विशेषवचनादित्यर्थः। तत्र ह्येकस्य भोक्तृत्वमन्यस्याभोक्तृत्वम्, अत्र च द्वयोरेव भोक्तृत्वमिति कथमेकवाच्यतास्यादिति। चकारश्च, चराचरग्रहणादिति हेत्वपेक्षया सूत्रद्वय-पर्य्यवसिते द्वितीयहेतौ गुहां प्रविष्टावात्मानौ हीत्यत्र योजनीयः। किं च ऋतं पिबन्तावित्य-स्याव्यवधानेनैवोत्तरवाक्ये जीवब्रह्मणी एव विशिष्य श्रूयेते। "यः सेतुरीजानानामक्षरं ब्रह्म तत्पर-मि"ति, "परमात्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिण" इति च जीव इति, ईजानानां यतमाननामत-स्तावेव पिबन्ताविति पूर्ववाक्ये ग्राह्यौ। अत एव च पैङ्गिरहस्यसमानापि "द्वा सुपर्णा सयुजेत्या"दि-मुण्डकश्रुतिर्न सत्त्वक्षेत्रज्ञपरा। मुण्डकेऽप्यव्यवहितोत्तरवाक्ये जीवेश्वरयोरेव प्रतिपादना "समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमि"ति वीतशोक इत्यनेन। तस्मात्पैङ्गिरहस्यविवेकपरतया साङ्ख्यानां मूलं, काठकमुण्डके ब्रह्ममीमांसकानां मूलमिति विवेक्तव्यम्। न पुनरेकवाक्यताऽत्र कार्य्येति।

(६) भास्करीये—कठवल्लीष्वेवं पठ्यते। "ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे। छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः" इति। तत्र सन्देहः किं बुद्धिजीवौ निर्दिष्टावुत जीवपरमात्मानाविति। किमत्र युक्तम्? बुद्धिजीवौ, गुहां प्रविष्टाविति विशेषणात्। न सर्वगतस्य ब्रह्मणो गुहाप्रवेशकल्पनं युक्तं शरीरं हृदयं वा गुहा। सुकृतस्य लोक इति चान्तःकरणजीवयोरुपपद्यते। अन्तःकरणयुक्तो हि जीवः कर्मकृतो लोके फलममृतव्यपदेशं भुङ्क्ते न पर इति प्राप्ते, ब्रूमः, गुहां प्रविष्टावात्मानौ हीति। हि हेतौ यस्मात् तौ चेतनत्वात् समानस्वभावौ

सहयाश्रवणेन च समानजातीयप्रतिपत्तिर्दृश्यते । अस्य गोर्द्वितीयोऽन्वेष्टव्य इति गौरेव प्रतीयते नाश्वः। यदुक्तं गुहाप्रवेशकल्पनमयुक्तमिति न कल्पते, तद्दर्शनात्, प्रवेशस्य श्रुत्यन्तरे दर्शनात्। "यो वेद निहितं गुहायामात्मानमन्विच्छन् गुहां प्रविष्टं गुहाहितं गह्वरेष्ठं पुराणमि"ति । कथमत्र मानमिति चेन्नायं विरोधः छत्रिन्यायेनोपपत्तेः । यदि वा जीवः पिबति तमितरः पाययतीत्युभयोः पानकर्तृत्वं प्रमाणान्तरसिद्धमनूद्यते। छायातपवदन्योऽन्यविलक्षणत्वाच्च विरुध्यते छायातपाविति ॥

गन्तृगन्तव्यभेदेन विशेषणात्। सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदमिति । द्वा सुपर्णेत्यत्राप्ययमेव न्यायः। परप्रकरणे श्वेताश्वतराणामप्ययं मन्त्रः पठ्यते। अनन्तरश्च मन्त्रस्तावेव दर्शयति। "समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः । जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमि"ति वीतशोक इति । तदेवं श्रुतिसूत्रकारौ जीवपरयोर्भेदं दर्शयतः। केचित्तु श्रुत्यर्थमाचार्योक्तिं च पृष्ठतः कृत्वा मायामात्रं स्वबुद्ध्या कल्पयित्वाप्यदेव दर्शनं स्वयन्ति । तच्च । तत्रायमपि ।

गतानुगतिको लोको न लोकः पारमार्थिकः ।
पश्य लोकस्य मूर्खत्वं नाशितं ताम्रभाजनम् ॥ इति ।

(७) श्रीमद्वल्लभाचार्यमतेऽयमभिप्रायः—एवं पूर्वाधिकरणे भोगः प्रतिपादितः । स भोगो व्यापिवैकुण्ठे वा ब्रह्माण्डे वास्तु, न त्वन्तर्हृदयेऽपीत्याशङ्कावारणायोपोद्घातसङ्गत्येदमधिकरणमारभ्यते। तत्र काठक एव तृतीयवल्ल्यारम्भे श्रूयते, "ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेता" इति । अत्र पुरःस्फूर्तिको वाक्यार्थस्तु, ऋतं सत्यं सुकृतस्य सम्यक्कृतस्य कर्मणः फलं पिबन्तौ भुञ्जानौ लोके अस्मिन् शरीरे । गुहामिति सप्तम्यर्थे द्वितीया । गुहाया विशेषणं परमे परार्धे इति ।परमत्वं स्थानान्तरापेक्षया उत्कृष्टत्वम्, परार्धत्वं ब्रह्मणः स्थानत्वम्, तत्र हि भक्तैर्ज्ञानिभिरुपासकैश्च ब्रह्मोपलभ्यते इति, तौ छायातपौ संसारित्वासंसारित्वाभ्यां धर्माभ्यामितरेतरविलक्षणौ ब्रह्मविदो वदन्ति कथयन्ति । न केवलं त एव कथयन्ति, किन्तु पञ्चाग्न्युपासकास्त्रिणाचिकेताः, त्रिःकृत्वो नाचिकेतोऽग्निर्यैश्चितस्तादृशाः कर्मिणस्तेऽपि वदन्तीति ।

तत्रायं संशयः । किमिदं जीववाक्यमाहोस्विद् ब्रह्मवाक्यमिति । ननु कथमत्र संशयः इति चेत्, इत्थम् । इदं वाक्यं वल्ल्यारम्भे पठितम्, इतः पूर्वं तु ब्रह्म प्रकृतम्, अग्रे तु जीवः, एतस्य तु मध्ये पाठात् किंशेषत्वमिति निर्णयाभावादेवं सन्देहः । न च पूर्ववल्ल्याः समाप्तत्वादस्याग्रिमशेषत्वमेव युक्तम्। "स्वार्थबोधे समाप्तानामङ्गाङ्गित्वाद्यपेक्षया । वाक्यानामेकवाक्यत्वं पुनः संहत्य जायते" इति पूर्वतन्त्रे निर्णयात्, कयाचित्सङ्गत्या पूर्वशेषत्वस्यापि शक्यवचनत्वात्। नचैवं सति समाप्तेः प्रागेव पठितं स्याद्, अत उत्तरशेषत्वमेव युक्तमिति शङ्क्यम्। तथा सति "आत्मानं रथिनं विद्धी"त्येतदनन्तरमेव पठितं स्यात् । अतो न प्रकरणेन निर्णयः। तत्र च प्रकरणापेक्षयार्थस्य बलिष्ठत्वादर्थेन निर्णयोऽस्त्विति वाच्यम्। तस्यापि सन्दिग्धत्वात्। तथाहि । अत्र द्विवचननिर्देशाद् बद्धाबद्धौ कार्यौ । तत्रास्य पूर्वशेषत्वे बद्धमुक्तौ जीवौ शक्यवचनौ । "हन्ता चेन्मन्यते हन्तु"मित्यनेन बद्धजीवस्य, "मत्वा धीरो न शोचती"त्यनेन मुक्तस्योक्तत्वात्। तदनन्तरपठितमन्त्रगतस्य द्वित्वस्य तद्विषयत्वप्रत्यभिज्ञानाद्, न तु जीवपरमात्मानौ । अनश्नन्निति श्रुत्या परमात्मनो भोगनिषेधादिति । एवमुत्तरशेषत्वे इन्द्रियमनसी शक्ये । "यस्त्वविज्ञानवान् भवती"त्यादौ तयोरेवाग्रे निरूपणात्। नच पिबन्ताविति पानकर्तृत्वव्यपदेशस्यानुपपत्तिः । एधांसि पचन्तीतिवत्करणे कर्तृत्वोपचारेण तदुपपत्तेः। येऽत्र पूर्वपक्षे बुद्धि-

जीवाचङ्गीकुर्वन्ति । तन्मते केवलायां बुद्धाविवासम्मत इन्द्रियमनसोर्द्वयोरपि कर्तृत्वोपचारात् । अत्र गोर्द्वितीयोऽन्वेष्टव्य इत्यादौ सङ्ख्यापूरणस्य सजातीयेनैव दर्शनेन सिद्धान्ते बुद्धिग्रहणवदत्रापि जीवग्रहणानौचित्यात् । अतः पूर्वशेषत्वे वा उत्तरशेषत्वे वा न ब्रह्मवाक्यत्वम् । नच "येयं प्रेते विचिकित्सा मनुष्ये" इति जीवस्य, "अन्यत्र धर्मादन्यत्राधर्मादि"ति ब्रह्मणश्च पूर्वं पृष्टत्वात्, पूर्वशेषत्वाङ्गीकारे जीवपरमात्मानौ सुखेन सम्भविष्यत इति युक्तम् । असङ्गतत्वात् । तथाहि, अत्र ब्रह्मणो मुख्यत्वेन भोक्तृत्वप्रतिपत्तये परमात्मनिरूपणमत्राङ्गीकार्यम् । सा तु द्वयोस्तुल्यतया मुख्यत्वप्रतिपादनाद् दुर्घटेत्येवमुपगमस्यापार्थत्वादिति । नचोपनिषदां ब्रह्मविद्यात्वात्तासु निर्धारितमेवोच्यत इति द्वयोः ऋतपातृत्वमन्यत्रानिर्णीतमत्र निर्णेतुं प्रवृत्तं वाक्यमिन्द्रियमनसोर्ग्रहण उपचारदोषेण दुष्येदिति तदभावायास्य जीवब्रह्मपरत्वाङ्गीकारात्तयोश्चावस्थाभेदेनैव मिश्रतया वस्तुत ऐक्याद्वाक्यस्योभयपरत्वेऽपि न ब्रह्मत्वहानिरित्यपि युक्तम् । प्रकरणस्वार्थस्य चोक्तरीत्या सन्दिग्धत्वेन तयोरनिर्णायकतया विचारस्य कर्तुमशक्यत्वात् । अविचारे च ब्रह्मवाक्यत्वानिर्धारात् । नचायमुपचार एव निर्णायक इति शङ्क्यम् । अभेदे भेदोपचारस्य सिद्धान्तेऽपि सत्त्वात् । नच तुल्यतायामपि छायातपशब्दार्थविचार एकस्यापकर्षश्च प्रतीयत इति तदर्थविचारे पदशक्त्या विशेषप्रतिपत्तौ सत्यामस्य ब्रह्मवाक्यत्वनिर्णय इति शङ्क्यम् । तदापि अमुक्तमुक्तजीवौ वा जीवपरमात्मानौ वेति सन्देहानिरासात्, उत्कर्षानुत्कर्षयोरेवमपि प्राप्तेः, अतः कथमप्यनिर्णयात् किं जीवादिवाक्यमुत ब्रह्मवाक्यमिति संशयो दुरुद्धरः । तत्र यद्यस्मिन्मन्त्रे ब्रह्म प्रतिपाद्यं स्यात्, तदा पूर्ववल्यामिवैतन्मन्त्रेऽप्युपास्यत्वेन प्राप्यत्वेन च ब्रह्मोच्येत, न तु साम्येन भोक्तृत्वेन ब्रह्मप्रतिपादकमिदम् । किन्त्वग्रे, "यस्तु विज्ञानवान् भवती"ति यस्त्वविज्ञानवान् भवतीतिवद् विद्वदविद्वज्जीवयोर्वक्तव्यत्वात्तदर्थमुभयविधजीवनिर्देश एव प्रथमं युक्तः । नच मन्त्रवर्णासङ्गतिः । मन्त्रे ऋतपदेन स्वर्गापवर्गलक्षणं द्विविधं सुखमुच्यते । प्रवृत्तिनिवृत्तिलक्षणस्य मार्गद्वयस्यापि विहितत्वात् सुकृतत्वेन तज्जन्यशरीरस्य लोकत्वम् । तत्र तत्तदुपयोगी विचारो गुहेव गुहेति यदि गौणी नाद्रियते, तदा हृदयाकाशोऽस्तु । नच विचारादेर्भिन्नत्वाद् द्विवचनं शङ्क्यम् । जात्यपेक्षयैकवचनस्यापि युक्तत्वात् । तां प्रविष्टौ परमे परार्धे इति । परञ्चतुर्मुखो मीयते ज्ञायत इति तादृशे परार्धे उत्तमे सत्यलोके । तत्रोभयोः शतजन्मीनस्वकर्मशुद्धस्य कर्मिणो वेदान्तविज्ञानसुनिश्चितार्थस्य संन्यासिनश्च भोगादिति । अविद्यया पिहितप्रकाशत्वादविदुषश्छायात्वं, ब्रह्मविदो वदन्ति । पञ्चाग्नयस्त्रिणाचिकेताश्चेतरमित्येवं सङ्गतेः । तस्माद् यद्दमुक्तजीवपरमिदं वाक्यम्, न ब्रह्मपरमिति पूर्वपक्षे प्राप्ते—

उच्यते । गुहां प्रविष्टावात्मानावित्यादि । गुहा हृदयाकाशस्तत्र सकृदेकदैव प्रविष्टौ जीवपरमात्मानावेव । कुतः ? तद्दर्शनात् । "अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणी"त्युभयोर्जीवब्रह्मणोरेव सह प्रवेशस्य श्रुतौ दर्शनात् । नचात्र सहपदाभावाज्जीवरूपेणैव ब्रह्मप्रवेशात् करणार्थैव तृतीयास्त्विति वाच्यम् । "गुहाहितं गह्वरेष्ठं पुराणं, यो वेद निहितं गुहायां परमे व्योम"न्नित्यादौ श्वाचितस्य गुहाहितत्वादेः स्वस्वरूपेण प्रवेशं विनाऽनुपपद्यमानतया सहपदाभावेऽपि तथाङ्गीकारस्यावश्यकत्वात् । नचात्र जीवेनेति जात्येकवचनाज्जीवद्वयप्रवेश एवास्त्विति शङ्क्यम् । एकेनैव कार्यसम्भवे द्वयोः प्रवेशस्य वैयर्थ्यात् । ननु भवतूभयोः प्रवेशः, तथापि "द्वा सुपर्णे"त्यत्र ब्रह्मणो भोगाभावकथनान्मन्त्रार्थस्य कथं सङ्गतिरिति चेत्, इत्थम्; पूर्वाधिकरणे वैशेष्येण भोगस्य साधितत्वाद् द्वा सुपर्णमन्त्रेऽपि न यावद्भोगनिषेधः, किन्तु जीववद्भोगस्यैव निषेधः । सिद्धे च भोगे मन्त्रार्थ एवं बोध्यः । "ऋतꣳ सत्यं परं ब्रह्मे"ति, "तस्मात् तत् सुकृतमुच्यत" इति श्रुतिभ्याम्, ऋतं सुकृतं च ब्रह्मैव । षष्ठी तु

राहोः शिर इतिवदभेदेऽपि भेदोपचारात् । लोकोऽक्षरम् । परमे परार्धे इति सामीप्ये सप्तमी । सत्यलोकसमीपे । छाया अतिसारूप्यं, सायुज्यं प्राप्तस्य जीवस्यापि तथात्वात्ततोऽपि विशिष्टं ब्रह्म प्रकटानन्दत्वादातपः । तथाच परमपरार्धात्मकसत्यलोकोपरितने अक्षरात्मके ब्राह्मशरीरे गुहां हृदयाकाशं प्रविष्टौ सुकृतात्मकब्रह्माभिन्नं ऋतं स्वरूपामृतं पिबन्तावनुभवन्तौ मुक्तजीवपरमात्मानौ ब्रह्मविप्रभृतयश्छायातपौ वदन्तीति । एतस्यार्थस्य युक्तत्वाय सूत्रे हिशब्दः । नन्वस्त्वेवं तथापि तयोरत्राप्रकृतत्वाच्छब्देनासंशब्दितत्वाच्च कथं तल्लाभ इति शङ्क्यम् । सूत्रे तद्दर्शनादित्यस्य तयोर्दर्शनं तद्दर्शनमित्यर्थेन विषयवाक्यस्थयोर्येयं प्रेते विचिकित्सा मनुष्य इति, अन्यत्र धर्मादन्यत्राधर्मादिति मन्त्राभ्यां पृष्टयोर्जीवब्रह्मणोर्मध्ये पूर्ववल्ल्यां ब्रह्मणो निरूपितत्वादत्राग्रे जीवस्य निरूप्यत्वाच्चोभयोः सिद्धावेतन्मन्त्रे तुल्यतया महाभोगनिरूपणार्थं तयोरेव स्वरूपकीर्तनस्य लाभादिति । तस्माद् ब्रह्मवाक्यमेवैतदिति सिद्धम् ।

पूर्ववल्ल्यामणोरणीयानित्यादिमन्त्रेषु द्रष्टृद्रष्टव्यत्वप्रसाद्यप्रसादार्हत्ववरणैकलभ्यत्ववरणीयत्वरूपोभयविशेषणाद्, अस्यां वल्ल्यामात्मानं रथिनं विद्धीति सन्दर्भे, "सोऽध्वनः पारमाप्नोति तद् विष्णोः परमं पद"मिति प्राप्तृत्वप्राप्यत्वरूपाद्विशेषणाच्चेदं ब्रह्मवाक्यमेवेत्यर्थः । द्वा सुपर्णेति श्वेताश्वतरमन्त्रस्तु न सन्दिग्धः । "समाने वृक्षे पुरुषे निमग्नो अनीशया शोचति मुह्यमानः । जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोक" इति समनन्तरमन्त्रे जीवपरमात्मनोरेवोक्तत्वेन पूर्वस्मिन्नपि तयोरेव निश्चयादिति । सूत्रे चकारस्तु प्रकरणोक्तसर्वोपपत्तिसमुच्चायकः ॥



## ५ अन्तर उपपत्तेरित्यधिकरणम्।

### अन्तर उपपत्तेः ॥ १।२।१३ ॥

(वैशेष्यनिर्णयायान्तराधिकरणस्य विषयवाक्यम्)

"य एषोऽक्षिणि पुरुषो दृश्यते। एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्म इति। तद्यद्यप्यस्मिन्सर्पिर्वोदकं वा सिञ्चति वर्त्मनी एव गच्छति" (छां. ४।१५।१) इत्यादि श्रूयते। तत्र संशयः।

(तत्र पूर्वपक्षः)

प्रतिबिम्बपुरुषस्य ब्रह्मत्वेनोपासनापरमिदं वाक्यं ब्रह्मवाक्यमेवेति वा? विरुद्धार्थवाचकत्वात्सन्देहः। तत्र दृश्यत इति वचनात्प्रतिबिम्ब एवायम्। ब्रह्मप्रकरणस्य च समाप्तत्वात् "एषा तेऽस्मद्विद्या आत्मविद्या च" इत्युपसंहारदर्शनात् तत्सिद्ध्यर्थमुपासनापरतैव वाक्यस्य युक्ता। अविरोधे हि ब्रह्मपरता। उपास्यत्वेन ब्रह्मधर्माणामन्वयो भविष्यतीत्येवं प्राप्त उच्यते—

---

पूर्वाधिकरणे परमपरार्धोपरितनाक्षरात्मकलोकस्य स्थानत्वमुक्तम्। तत्रेयं चिन्ता तदेव स्थानमन्यदपीति तत्र सर्वं स्थानमिति बोधयितुमक्षिस्थानसूचकमुपोद्घातसङ्गत्याऽक्षिपुरुषाधिकरणमाहुः—**अन्तर उपपत्तेः।** श्रूयते। इदं विषयवाक्यं छान्दोग्ये षष्ठप्रपाठके उपकोशलविद्यायां श्रूयते।

अथ विषयवाक्यम्—

य एषोऽक्षिणि पुरुषो दृश्यत एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति तद्यद्यप्यस्मिन् सर्पिर्वोदकं वा सिञ्चन्ति वर्त्मनी एव गच्छत्येतꣳसंयद्वाम इत्याचक्षत एतꣳ हि सर्वाणि वामान्यभिसंयन्ति सर्वाण्येनं वामान्यभिसंयन्ति य एवं वेदैष उ एव वामनीरेष हि सर्वाणि वामानि नयति सर्वाणि वामानि नयति य एवं वेदैष उ एव भामिनीरेष हि सर्वेषु लोकेषु भाति य एवं वेदाथ यदु चैवास्मिञ्छव्यं कुर्वन्ति। यदि च नार्चिषमेवाभिसम्भवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान् षडुदङ्ङेति मासाꣳस्तान्मासेभ्यः संवत्सरꣳसंवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एनान्ब्रह्म गमयत्येष देवपथो ब्रह्मपथ एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते नावर्तन्ते ॥

संशयमाहुः—तत्रेति। दर्शनविषयत्वं ब्रह्मणि नास्तीति संशय एव न प्रसरतीत्यतः संशयबीजमाहुः—**विरुद्धार्थेति।** अमृतत्वमप्युक्तमिति दर्शनादमृतत्वरूपविरुद्धार्थवाचकपदसत्त्वादित्यर्थः। पूर्वपक्षमाहुः—**तत्रेति।** **तत्सिद्ध्यर्थमिति।** प्रकरणसमाप्तौ उपसंहारसिद्ध्यर्थम्। **अविरोधे हीति।** अत्र तु दर्शनं विरुद्धमित्यर्थः। ननु त्वन्मतेऽप्यमृतत्वं विरुद्धमित्यत आहुः—**उपास्यत्वेनेति।** **ब्रह्मधर्माणां** अमृतत्वादीनाम्।

( सूत्रार्थ सिद्धान्तश्च )

अन्तरोऽक्षिमध्ये दृश्यत इत्युक्तः परमात्मैव । कुतः ? उपपत्तेः । उपपद्यते हि तस्य दर्शनमार्षम् । सर्वत्र ब्रह्म पश्यन् बहिःसन्निधाने तस्य स्थानस्योत्कृष्टत्वात्तत्र भगवन्तमुपदिशति-"लोकं वाव तेऽवोचन्नहं तु तद्वक्ष्यामि" ( छां. ४।१४।३ ) इति महदुपक्रमाच्च । प्रतिबिम्बमात्रस्य च न पुरुषत्वनियमः । तस्माद्विरोधाभावाद्ब्रह्मवाक्यमेव ॥ १।२।१३ ॥

स्थानादिव्यपदेशाच्च ॥ १।२।१४ ॥

( तर्कनिरसनाय सूत्रान्तरम् )

"एतं संयद्वाम इत्याचक्षते । एतꣳ हि सर्वाणि वामान्यभिसंयन्ति । एष उ एव वामनीरेष हि सर्वाणि वामानि नयति । एष उ एव भामनीरेष हि सर्वेषु लोकेषु भाति" ( छां. ४।१५।४ ) इति । वामानि कर्मफलानि तेषामेव मनोहरत्वेन तदर्थं कर्मकरणात् कर्मफललयः कर्मफलदानं च यतः इति स्वर्गापवर्गफलदातृत्वमुक्तम् । सर्वलोकेषु भानं च । एष इति तमेवाक्षिपुरुषं निर्दिश्य स्थानादि व्यपदिश्यते । न हि प्रतिबिम्बात्मनः स्थानादिव्यपदेशः सम्भवति । चकारादेतत्तुल्यवाक्यस्याप्ययमेवार्थः । इन्द्रविरोचनप्रजापतिसम्वादे-"अथ योऽयं भगवोऽप्सु परिख्यायते" ( छां. ८।७।४ ) इत्यासुरम् । ननु-"य एषोऽक्षिणि पुरुषो दृश्यते" ( छां. ४।१५।१ ) इत्यादि । तस्मादक्षिपुरुषो ब्रह्मैव ॥ १।२।१४ ॥

---

समाधानमाहुः—**अन्तर** इति । **आर्षमि**ति । भक्त्यादिसाधनसम्पत्तौ भगवद्दर्शनं दक्षिणेऽक्षिणि भवतीति ऋषिभिरुक्तत्वादार्षमित्यर्थः । "कश्चिद्धीरः प्रत्यगात्मानमैक्षदि"ति श्रुत्या **सर्वत्र** पश्यन्निति योजना । **बहिःसन्निधाने** परकीयचक्षुःसन्निधाने । **उत्कृष्टत्वा**दुदकस्य सर्पिषो वा सम्बद्धत्वेनोत्कृष्टत्वात् । अस्य ब्रह्मवाक्यत्वे प्रकरणमपि निर्णायकमित्याहुः—**लोकमि**ति । श्रुतौ बहुवचनान्तपाठोऽप्यस्तीति सूचयितुं लोकानित्युक्तम् । उपकोशलेन प्रश्ने कृते ते अग्न्यादयो लोकमवोचन् । अहं तु तद्ब्रह्म वक्ष्यामीत्युक्त्वा ब्रह्मण एवोपक्रम कृत्वा "य एषोऽक्षिणी"त्युक्तमतः प्रकरणेऽप्यस्तीति भावः । अधिकं तु विषयवाक्ये स्पष्टम् । ननु प्रतिबिम्बपुरुषे ब्रह्मत्वेनोपासनापरत्वे किं बाधकमत आहुः—**प्रतिबिम्बे**ति । अन्यस्यापि प्रतिबिम्बः सम्भवतीत्यस्त्येव बाधकमिति भावः ॥ १३ ॥

**स्थानादिव्यपदेशाच्च** । **आचक्षत** इत्येतदन्तस्य व्याख्यानं एतꣳ हीति । एतं अक्षिपुरुषं **संयद्वाम** इति । सयन्ति लीनानि भवन्ति वामानि कर्मफलानि यस्मिन् । एष उ एवेत्यस्य "एष हि सर्वाणी"ति व्याख्यानम् । श्रुत्यर्थमाहुः—**वामानी**ति । संयद्वाम इत्यनेन कर्मफललयः । 'एष उ एवे'त्यनेन कर्मफलदान भान चेति **भाती**त्यनेनोक्तम् । **स्थानादी**ति । सर्वेषां कर्मफलादीनामाश्रय इत्यर्थः । इदं च प्रतिबिम्बेन सम्भवतीतीदं ब्रह्मवाक्यमेवेत्याहुः—**न ही**ति । चकारार्थमाहुः—**चकारादे**रिति । **इन्द्रे**ति । इदं च छान्दोग्ये दशमप्रपाठके । ननु तत्रापि "अथ योऽय"मित्यादिना छायापुरुषाभिधानमस्तीत्यत आहुः—**आसुर**मिति । विरोचनस्यासुरमिन्द्रस्य य एषोऽक्षिणीत्यादिना दैवमित्यर्थः । इदं च विषयवाक्ये स्पष्टम् ॥ १४ ॥

सुखविशिष्टाभिधानादेव च ॥ १।२।१५ ॥

( अक्षिपुरुषस्य ब्रह्मत्वे स्वरूपतो निर्णयः )

ननु किमिति निर्बन्धेन ब्रह्मवाक्यत्वं सम्पाद्यते । उपासनापरत्वे को दोष इत्याशङ्क्याह—

सुखविशिष्टाभिधानात् । "एतदमृतमभयमेतद् ब्रह्म" ( छां. ४।१५।१ ) इति यद्यत्रोपासना विधीयेत—"एष आत्मा" ( छां. ८।३।४ ) इति, तदाऽमृतादिवचनं व्यर्थं स्यात् । तद्धर्माणां पूर्वमेव प्राप्तत्वात् । तस्मादमृतमानन्दः, अभयं चिद्, ब्रह्म सत्, सच्चिदानन्दरूप आत्मेत्युक्तं भवति । अत एव इत्यक्षिपुरुषं निर्दिश्य सुखविशिष्टमभिधीयते । सच्चितोर्न ब्रह्मव्यापकत्वमिति सुखमेव निर्दिष्टम् । अतः सुखविशिष्टाभिधानादेव ब्रह्मवाक्यमिति । एषा मुख्योपपत्तिरित्येवकारः । चकारात् सदादिभिरपि, तस्माद् ब्रह्मैवाक्षिपुरुषः ॥ १।२।१५ ॥

श्रुतोपनिषत्कगत्यभिधानाच्च ॥ १।२।१६ ॥

( फलतो निर्णयः )

स्वरूपतो निर्णीय फलतो निर्णयमाह । श्रुतोपनिषत्कस्य श्रुतोपनिषद्विद्या येन तस्य, प्रविदो, या गतिर्देवयानाख्या साऽक्षिपुरुषविदोऽप्युच्यते । "अथ यदु चैवास्मिन् शव्यं कर्म कुर्वन्ति यदि च नार्चिषमेवाभियन्ति" इत्युपक्रम्य "चन्द्रमसो विद्युतं तत्पुरुषो मानवः स एतान् ब्रह्म गमयति । एष देवपथो ब्रह्मपथः" ( छां. ४।१५।५ ) इत्यन्तेन प्रतिपद्यमाना "इमं मानवमावर्तं नावर्तन्ते" ( छां. ४।१५।५ ) इति ब्रह्मविदोऽप्येष एव मार्गः पुनरावृत्तिरहितः । चकारस्तूक्तसमुच्चयेनाधिकरणपूर्णत्वबोधकः ॥ १।२।१६ ॥

अनवस्थितेरसम्भवाच्च नेतरः ॥ १।२।१७ ॥

( निषेधमुखेन विचारे पूर्वपक्षः )

इदमेवाधिकरणं पुनर्निषेधमुखेन विचारयति । ननूपासनापरत्वेऽपि सर्वमुपप-

---

सुखविशिष्टाभिधानादेव च । 'एतं संयद्वाम' इत्यादिवाक्यात्पूर्वं पदमभिधीयते तदाहुः—एतमिति । अमृतपदेन सुखविशिष्टमभिधीयते यत अत इदं ब्रह्मवाक्यमित्यर्थः ॥ १५ ॥

हेत्वन्तरबोधकसूत्रोत्तरमाहुः—श्रुतोपनिषत्कगत्यभिधानात् । निर्णीयेति । सच्चिदानन्दरूपाभिधानत्वेन ब्रह्मवाक्यत्वं निर्णीयेत्यर्थः । फलत इति । "न स पुनरावर्तते" इति फलत इत्यर्थः । तादृशफलबोधिकां श्रुतिमाहुः—अथेति । अथेति न शङ्कायां नाप्यानन्तर्ये, किन्तु, अक्षिपुरुषं विदुः एतादृशं फलं भवत्येवेति प्रतिज्ञायां, अस्मिन् अक्षिपुरुषविदि, निमित्तसप्तमी, शव्यं शवसम्बन्धात्कर्मसंस्कारः परिचितेति न कुर्वन्तीत्यर्थः । पुत्रादय इति शेषः । उभयथापि तस्य गतिमाहुः—अर्चिषेति । तत्पुरुषः तस्य ब्रह्मणः पुरुषो दूतः । अमानवः मनुष्यधर्मवनुत्पन्नः । ब्रह्मपथः ब्रह्मप्राप्यमार्गः । आवर्तं आवृत्तिजनकं गाङ्गं प्रवाहम् ॥ १६ ॥

अनवस्थितेरसम्भवाच्च नेतरः । सिद्धान्तदार्ढ्यार्थमाहुः—निषेधमुखेनेति । पूर्वपक्षिमतम-

च्यते। तद्धर्मव्यपदेशेनैवोपासनोपपत्तेः। अतः सर्वा उपपत्तयो व्यपदेशिवद्भावेन सङ्गच्छन्त इत्येवं प्राप्त उच्यते—

( सद्वितीयेऽप्यनवस्थितिः )

इतरो नात्र वाक्यार्थः। अनवस्थितेरस्थिरत्वात्। उपदेशकवाक्यत्वादुपदेष्टुरेव चक्षुर्गतं भवेत्। तथा च वक्तुर्दर्शनाभावादनाप्तत्वं द्रष्टुरपगमे चापगच्छति सद्वितीये सद्वितीयः। उपासनाकाले च सुतरामनवस्थितिः। सद्वितीयोपासनायामपि श्रवणमननयोर्भिन्नविषयत्वादनवस्थितिः। वक्तुरेव नियमे गुरोर्निर्बन्धेन सुतरामनवस्थितिः।

( अक्षिपुरुष एव परमात्मा )

किञ्च, मनसा ह्युपासनं कर्तव्यं तत्र चासम्भव एव। तादृशधर्मवत्त्वं च न सम्भवति। आसुरत्वं च भवेदिति चकारार्थः। तस्मादक्षिस्थाने सहज एव यो

---

नूद्यति—नन्विति। व्यपदेशिवद्भावेनेति। उपदेशो व्यवहारः। विशिष्टो उपदेशो व्यपदेशः मुख्यो व्यवहारः स यस्यास्तीति व्यपदेशी तत्सदृशो भावो व्यपदेशिवद्भावः। अयं तु लोकसिद्धो न्यायः। देवदत्तस्यैकपुत्रसत्त्वे अयं मे ज्येष्ठः कनिष्ठो मध्यम इति। समाधानमाहुः—उच्यत इति। इतरश्छाया पुरुषः।

प्रथमहेतुं विशदयन्ति—अनवस्थितेरिति। उपदेशकेति। य एष इति। उपदेशकर्त्रा उच्यते। तथा च स्वचक्षुर्गतप्रतिबिम्बप्रत्यक्षे स्वस्य न सम्भवतीति दृश्यते इत्ययथार्थवक्तृत्वेनाचार्यस्यानाप्तत्वमित्यर्थः। तथा चाचार्यप्रतिपाद्यप्रतिबिम्बपुरुषस्यास्थिरत्वमिति भावः। यदा आचार्येणैवोच्यते मच्चक्षुषि त्वया दृश्यते इत्यभिप्रायेण तदा दूषणान्तरमाहुः—द्रष्टुरिति। यदा शिष्यो द्रष्टा उपदेशानन्तरं गच्छति तदा प्रतिबिम्बस्याभावादस्थिरत्वमित्यर्थः। उपदेशकाले द्वितीयपुरुषेण समं शिष्येणावश्यं भवितव्यम्। तथा च द्रष्टुरपगमेऽपि द्वितीयपुरुषचक्षुषि प्रतिबिम्बस्य सद्भावाद्स्थिरत्वमत आहुः—सद्वितीये त्विति। सद्वितीय इति प्रतिबिम्बोऽपि तद्द्वितीय इत्यर्थः। तथा च यदि उपदेशकाले द्वितीयपुरुषसहभाव आवश्यकः। तदाचार्यचक्षुषि प्रतिबिम्बद्वयसत्त्वात् श्रुतौ पुरुषो दृश्यते इत्येकवचनानुपपत्त्या स्थिरत्वाभाव इति भावः। दूषणान्तरमाहुः—उपासनेति। सुतरामिति। चित्तवृत्तिनिरोधरूपयोगोऽप्युपासनाङ्गं स च नेत्रनिमीलनं विना न सम्भवतीति नेत्रनिमीलनसद्भावात् प्रतिबिम्ब एव न भवतीत्यर्थः। ननु प्रतिबिम्बोपासनान्यथानुपपत्त्या यागे पत्नीसहभाववद्द्वितीयसहभावोऽप्युपासनायामवश्यं स्वीकर्तव्यः। तथा च स्थिरत्वमित्यत आहुः—सद्वितीयेति। भिन्नविषयत्वादिति। उपदेशकाले प्रतिबिम्बस्य सद्वितीयत्वमित्याश्रयणे एकस्य शिष्यस्यैव स्थितिरपेक्षिता मननकाले च द्वितीयसहभावः। तथा च श्रवणमननयोर्भिन्नविषयत्वेन वैरूप्यादस्थिरत्वमित्यर्थः। नन्वेवं चेत्, गुरुणा उपदेशे कृते तदनन्तरमुपासनार्थं तस्यैव पुरतः स्थापनं नियमेन कर्तव्यमित्यत आहुः—वक्तुरेवेति। सुतरामिति। निर्बन्धस्तु गुरोर्दुःखजनकत्वात्सुतरामित्यर्थः।

सूत्रस्थद्वितीयहेतुं व्युत्पादयन्ति—किञ्चेति। तत्र मनोव्यापारे असम्भवे इति चक्षुर्जन्यप्रत्यक्षे सत्येन प्रतिबिम्बो दृश्यते, न तु मानसिकप्रत्यक्षे इत्यतोऽप्रतिबिम्बदर्शनासम्भव इत्यर्थः। मनसि प्रतिबिम्बदर्शने सति तत्र ब्रह्मधर्माणामुपपत्तिः कर्तव्या, सैव तु न सम्भवति, अतो नारोपसम्भव इत्याहुः—तादृशेति। अमृतत्वमभयत्वं चेत्यर्थः। आसुरत्वमिति। यथा विरोचनस्यैवदृश एव प्रतिबिम्बज्ञानेनासुरत्वे तथाक्षिणि प्रतिबिम्बज्ञानेन शिष्यस्यासुरत्वं भवेदित्यर्थः। उपसंहरन्ति—तस्मादिति। सहज एवेति। यथाऽऽदित्यमण्डले हिरण्मयः पुरुषो दृश्यते, एवमक्षिणि पुरुषो दृश्यते सहज-

**भगवानस्ति तत्परमेवैतद्वाक्यमिति सिद्धम् । व्यापकसर्वगतस्य सर्वतः पाणिपादान्तत्वादानन्दमूर्तिर्भगवानेव, ब्रह्मवादे त्वेषैव मर्यादा । सगुणवादो ब्रह्मवादाज्ञानादिति ॥ १।२।१७।५ ॥**

---

स्वभावादेव केनचिदक्षिणा तत्परमेवेदं वाक्यं न तु कस्यचित्पुरुषस्य यः प्रतिविम्बस्तत्परमित्यर्थः । नन्वेतादृशस्य विभोः सूक्ष्मेऽस्थाने सहजस्थितिः कथं वक्तव्येत्यत आहुः—**व्यापकेति** । व्यापकसर्वगतस्य भगवतः सूक्ष्मे स्थाने स्थितिरस्तीत्यध्याहृत्यान्वयः । तत्र हेतुमाहुः—**सर्वत** इति । एवं च सिद्धमाहुः—**आनन्दमूर्तिरि**ति । 'बहुस्या'मितीच्छयैव सर्वत्र विद्यमानत्वेन स्वल्पस्थानेऽपि तस्य स्थितिरिति तादृशो भगवानेव, न तु प्रतिविम्ब इति सिद्धम् । ननु किमर्थमिदमुच्यते सगुणस्य मायावच्छिन्नस्य शबलब्रह्मणः स्वल्पेऽपि स्थाने स्थितिरुचितैवेत्यत आहुः—**ब्रह्मवादे त्विति** । "सर्वं खल्विदं ब्रह्मे"ति वाद एव ब्रह्मवादः । तत्र तस्यैव निर्गुणस्य सर्वतः पाणिपादान्तत्वेन सर्वत्र स्थितिरित्येषैव मर्यादा, नत्वेकं सगुणं ब्रह्म स्वीकृत्य कर्तृत्वबोधकवाक्यानि तत्पराणि, अकर्तृत्वबोधकवाक्यानि निर्गुणब्रह्मपराणीत्येवं मर्यादा । एकस्मिन्नेव परे ब्रह्मणि कर्तृत्वाकर्तृत्वरूपविरुद्धधर्मस्वीकारे बाधकाभावादित्यसकृदवोचाम । ननु शबलं ब्रह्मवादं स्वीकृत्य प्रवृत्ते विचारे किं बाधकमत आहुः—**सगुणेति** । तत्र ब्रह्मवादाज्ञानमेव बाधकमिति हृदयम् । इति पञ्चमाधिकरणम् ।

---

१ अत्रेत्थं व्याख्यानान्तराणि—

(१) तत्र शाङ्कराः—पूर्वं प्राथमिकपिबन्ताविति द्वित्वश्रुत्या चेतनत्वेन तुल्यजीवपरदृष्ट्यनुसाराच्चरमश्रुता गुहाप्रवेशादयो नीताः । तर्हि तद्वदेव 'दृश्यते' इति प्राथमिकप्रत्यक्षत्वोक्त्या अक्षिप्रतिविम्बात्मायगत्यनुरोधाच्चरमश्रुता अमृतत्वादयः स्तुत्यर्थत्वेन कथञ्चिन्नेया इति दृष्टान्तसङ्गत्येदमाह—अत्र पूर्वपक्षे प्रतिविम्बोपास्तिः, सिद्धान्ते ब्रह्मोपास्तिरिति फलभेदः । उपकोसलविद्यायां छान्दोग्ये श्रूयते—'य एषोऽक्षिणि पुरुषो दृश्यत एष आत्मेति होवाच' इत्यादि । तत्र अक्षिण्यन्तरुपदिश्यमानः प्रतिविम्बादिः, उत परमात्मेति संशये, प्रतिविम्बादिरिति पूर्वः पक्षः । सिद्धान्तस्तु—अन्तरः अक्षिमध्यगतः परमात्मैवोपदिश्यते । कुतः? उपपत्तेः, आत्मत्वामृतत्वाभयत्वादीनामिहोक्तानां परमात्मन्येवोपपत्तेः । 'एतं संयद्वाम इत्याचक्षते' इत्यादिनिर्दिष्टसंयद्वामत्वादीनां च परमात्मन्येव, न प्रतिविम्बेऽन्यत्र वोपपत्तिः । अतः अक्ष्यन्तरः पुरुषः परमात्मैवेत्यर्थः ॥

ननु सर्वगतस्याल्पमक्षि स्थानं न सम्भवति इति पूर्वपक्षबीजं दूषयितुमिदमाह—'यश्चक्षुषि तिष्ठन्' इत्यादिचक्षुरादीनि स्थानानि आदयो येषाम् 'तस्योदिति नाम' 'हिरण्यश्मश्रुः' इत्यादिनामरूपाणां तेषामुपासनार्थत्वेन व्यपदेशादिहापि परमात्मनोऽक्षिस्थानादिव्यपदेशो नानुपपन्न इत्यर्थः ॥

प्रकरणादप्यक्षिस्थः परमात्मैवोपदिश्यत इत्याह—'प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म' इति वाक्योपक्रमे श्रूयमाणं यत्सुखविशिष्टं ब्रह्म तस्यैवेहाभिधानादित्यर्थः ॥

प्रकरणादक्षिस्थस्य ब्रह्मत्वमभिधाय लिङ्गादपि तदाह—श्रुता उपनिषत् रहस्यं ब्रह्मविज्ञानं यस्य स श्रुतोपनिषत्कः, तस्य ब्रह्मविदो या गतिः देवयानाख्या 'अथोत्तरेण तपसा ब्रह्मचर्येण' इत्यादिश्रुतौ 'अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम्' इति स्मृतौ च प्रसिद्धा । तस्या गतेः, इहापि 'आदित्याच्चन्द्रमसम्' इत्यादावभिधानात्, अक्षिस्थस्य ब्रह्मत्वं निश्चीयत इत्यर्थः ॥

इत्थं सिद्धान्तमभिधाय पूर्वपक्षं प्रत्याह—उपासकस्य सर्वत्राक्षिणि प्रतिविम्बसम्पादक-

बिम्बभूतपुरुषान्तरस्यानवस्थानात्; असम्भवाच्च अमृतत्वादिगुणानां न छायात्मादिरितरः । अतः परमात्मैवाक्षिस्थान उपदिश्यत इति सिद्धम् ॥

रामानुजीये—इदं समामनन्ति छन्दोगाः "य एषोऽक्षिणि पुरुषो दृश्यत एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्म" इति । तत्र सन्देहः, किमयमक्ष्याधारतया निर्दिश्यमानः पुरुषः प्रतिबिम्बात्मोत चक्षुरिन्द्रियाधिष्ठाता देवताविशेष उत जीवात्माथ परमात्मेति । किं युक्तम्? प्रतिबिम्बात्मेति । कुतः? प्रसिद्धवन्निर्देशात् । दृश्यत इत्यपरोक्षाभिधानाच्च । जीवात्मा वा । तस्यापि हि चक्षुषि विशेषेण सन्निधानात्प्रसिद्धिरुपपद्यते । उन्मीलितं हि चक्षुरुद्वीक्ष्य जीवात्मनः शरीरे स्थितिगती निश्चिन्वन्ति । "रश्मिभिरेषोऽस्मिन्प्रतिष्ठितः" इति श्रुतिप्रसिद्ध्या चक्षुःप्रतिष्ठितो देवताविशेषो वा । एष्वेव प्रसिद्धवन्निर्देशोपपत्तेरेषामन्यतम इति प्राप्ते प्रचक्ष्महे । अन्तर उपपत्तेः । अक्ष्यन्तरः परमात्मा । कुतः? "एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्म ।"...."एतं संयद्वाम इत्याचक्षते । एतं हि सर्वाणि वामान्यभिसंयन्ति । "...."एष उ एव वामनीरेष हि सर्वाणि वामानि नयति ।"..."एष उ एव भामनीरेष हि सर्वेषु लोकेषु भाति" इति । एषां गुणानां परमात्मन्येवोपपत्तेः ॥

चक्षुषि स्थितिनियमनादयः परमात्मन एव "यश्चक्षुषि तिष्ठन्" इत्यादिना व्यपदिश्यन्ते । अतश्च "एषोऽक्षिणि पुरुषः" इति स एव प्रतीयते । अतः प्रसिद्धवन्निर्देशश्च परमात्मन्युपपद्यते । तत एव दृश्यत इति साक्षात्कारव्यपदेशोऽपि योगिभिर्दृश्यमानत्वादुपपद्यते ॥

इतश्चाक्ष्याधारः पुरुषोत्तमः । "कं ब्रह्म खं ब्रह्म" इति प्रकृतस्य सुखविशिष्टस्य ब्रह्मण उपासनस्थाननिधानार्थं संयद्वामत्वादिगुणविधानार्थं च "य एषोऽक्षिणि पुरुषः" इत्यभिधानात् । एवकारान्नैरपेक्ष्यं हेतोर्द्योतयति । नन्वग्निविद्याव्यवधानात् "कं ब्रह्म खं ब्रह्म" इति प्रकृतं ब्रह्म नेह सन्निधत्ते । तथाहि—अग्नयः "प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म" इति ब्रह्मविद्यामुपदिश्य, "अथ हैनं गार्हपत्योऽनुशशास" इत्यारभ्याग्नीनामुपासनमुपदिदिशुः । न चाग्निविद्या ब्रह्मविद्याङ्गमिति वक्तुं शक्यम् । ब्रह्मविद्याफलानन्तर्गततद्विरोधिसर्वायुःप्राप्तिसन्तत्यविच्छेदादिफलश्रवणात् । उच्यते— "प्राणो ब्रह्म", "एतदमृतमभयमेतद्ब्रह्म" इत्युभयत्र ब्रह्मसंशब्दनात् । आचार्यस्तु "ते गतिं वक्ता" इत्यग्निवचनाच्च गत्युपदेशात्पूर्वं ब्रह्मविद्याया असमाप्तेस्तन्मध्यगताग्निविद्या ब्रह्मविद्याङ्गमिति निश्चीयते । "अथ हैनं गार्हपत्योऽनुशशास" इति ब्रह्मविद्याधिकृतस्यैवाग्निविद्योपदेशाच्च । किञ्च, "व्याधिभिः प्रतिपूर्णोऽस्मि" इति ब्रह्मप्राप्तिव्यतिरिक्तनानाविधकामोपहतिपूर्वकगर्भजन्मजरामरणादिभवामयाभिततापायोपकोसलाय "एषा सोम्य तेऽस्मद्विद्यात्मविद्या च" इति समुच्चित्योपदेशान्मोक्षैकफलात्मविद्याङ्गत्वमग्निविद्यायाः प्रतीयते । एवं च, अङ्गत्वेऽवगते सति फलानुकीर्तनमर्थवाद इति गम्यते । न चात्र मोक्षविरोधि फलं किञ्चिच्छ्रूयते "अपहते पापकृत्यां लोकीभवति सर्वायुरेति ज्योग्जीवति नास्यावरपुरुषाः क्षीयन्ते । उपवयं तं भुञ्जानोऽस्मिंश्च लोकेऽमुष्मिंश्च" इत्यमीषां फलानां मोक्षाधिकृतस्यानुगुणत्वात् । अपहते पापकृत्यां ब्रह्मप्राप्तिविरोधि पापं कर्मापहन्ति लोकीभवति तद्विरोधिनि पापे निरस्ते ब्रह्मलोकं प्राप्नोति । सर्वमायुरेति ब्रह्मोपासनसमाप्तेर्यावदायुरपेक्षितं तत्सर्वमेति । ज्योग्जीवति व्याधिभिरनुपहतो यावद्ब्रह्मप्राप्ति जीवति । नास्यावरपुरुषाः क्षीयन्ते शिष्यप्रशिष्यादयः, पुत्रपौत्रादयोऽपि ब्रह्मविद एव भवन्ति । "नास्याब्रह्मवित्कुले भवति" इति श्रुत्यन्तरे ब्रह्मविद्या फलत्वेन श्रूयते । उपवयं तं भुञ्जानोऽस्मिँल्लोकेऽमु-

स्मिँश्च वयमग्नयस्तमेनमुपभुञ्जामो यावद्ब्रह्मप्राप्ति विघ्नेभ्यः परिपालयाम इति। अतोऽग्निविद्याया ब्रह्मविद्याङ्गत्वेन तत्सन्निधानाविरोधात्सुखविशिष्टं प्रकृतमेव ब्रह्मोद्दोपासनस्थानविधानार्थं गुणविधानार्थं चोच्यते। नन्वाचार्यास्तु "ते गतिं वक्ता" इति गतिमात्रपरिशेषेणाचार्येण गतिरेवोपदिश्यत इति गम्यते । तत्कथं स्थानगुणविध्यर्थतोच्यते ? तदभिधीयते । आचार्यस्तु, "ते गतिं वक्ता" इत्यस्यायमभिप्रायः, ब्रह्मविद्यामनुपदिश्य प्रोषुषि गुरौ तदलाभादनाश्वासमुपकोसलमुज्जीवयितुं स्वपरिचरणप्रीता गार्हपत्यादयो गुरोरग्नयस्तस्मै ब्रह्मस्वरूपमात्रं तदङ्गभूतां चाग्निविद्यामुपदिश्य "आचार्याद्धैव विद्या विदिता साधिष्ठं प्रापयति" इति श्रुत्यर्थमालोच्य साधुतमत्वप्राप्त्यर्थमाचार्य एवास्य संयद्वामत्वादिगुणकं परं ब्रह्म तदुपासनस्थानमर्चिरादिकां च गतिमुपदिशत्विति मत्वाऽऽचार्यस्तु ते गतिं वक्तेत्यवोचन् । गतिग्रहणमुपदिश्य विद्याशेषप्रदर्शनार्थम् । अत एव, आचार्योऽपि "अहं तु ते तद्वक्ष्यामि" इत्यभिधाय "यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यते" इत्युपक्रम्य संयद्वामत्वादिकल्याणगुणविशिष्टं ब्रह्माक्षिस्थानोपास्यमर्चिरादिकां च गतिमुपदिदेश। अतः "कं ब्रह्म खं ब्रह्म" इति सुखविशिष्टस्य प्रकृतस्यैव ब्रह्मणोऽत्राभिधानादयमस्याधारः परमात्मा ॥

ननु च "कं ब्रह्म खं ब्रह्म" इति परं ब्रह्माभिहितमिति कथमवगम्यते यस्येहाक्ष्याधारतयाऽभिधानं ब्रूषे ? यावता कं ब्रह्म खं ब्रह्मेति प्रसिद्धाकाशलौकिकसुखयोरेव ब्रह्मदृष्टिर्विधीयत इति प्रतिभाति। "नाम ब्रह्म", "मनो ब्रह्म" इत्यादिवचनसारूप्यात्। तत्राह—अत एव च स ब्रह्म। यतस्तत्र "यदेव कं तदेव खम्" इति सुखविशिष्टस्याकाशस्याभिधानमत एव खशब्दाभिधेयः स आकाशः परं ब्रह्म । एतदुक्तं भवति । अग्निभिः "प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म" इत्युक्त उपकोसलः, उवाच, "विजानाम्यहं यत्प्राणो ब्रह्म कं च तु खं च न विजानामि" इति । अस्यायमभिप्रायः, न तावत्प्राणादिप्रतीकोपासनमग्निभिरभिहितम् । जन्मजरामरणादिभवभयभीतस्य मुमुक्षोर्ब्रह्मोपदेशाय प्रवृत्तत्वात्। अतो ब्रह्मैवोपास्यमुपदिष्टम्। तत्र प्रसिद्धैः प्राणादिभिः समानाधिकरणं ब्रह्म निर्दिष्टम्। तेषु च प्राणविशिष्टत्वं जगद्विधरणयोगेन वा प्राणशरीरतया प्राणस्य नियन्तृत्वेन वा ब्रह्मण उपपद्यत इति विजानाम्यहम्, यत् "प्राणो ब्रह्म" इत्युक्तवान्। तथा सुखाकाशयोरपि ब्रह्मणः शरीरतया तन्नियाम्यत्वेन विशेषणत्वमुतान्योन्यव्यवच्छेदकतया निरतिशयानन्दरूपब्रह्मस्वरूपसमर्पणपरत्वेन वा । तत्र पृथग्भूतयोः शरीरतया विशेषणत्वे वैषयिकसुखभूताकाशयोर्नियामकत्वं ब्रह्मणः स्यादिति स्वरूपावगतिर्न स्यात् । अन्योन्यव्यवच्छेदत्वेऽपरिच्छिन्नानन्दरूपत्वं ब्रह्मणः स्यादित्यन्यतरप्रकारनिर्दिधारयिषया "कं च तु खं च न विजानामि" इत्युक्तवान् । उपकोसलस्येममाशयं जानन्तोऽग्नयो "यद्वाव कं तदेव खं यदेव खं तदेव कम्" इत्यूचिरे । ब्रह्मणः सुखरूपत्वमेवापरिच्छिन्नमित्यर्थः । अतः प्राणशरीरतया प्राणविशिष्टं यद्ब्रह्म तदेवापरिच्छिन्नसुखरूपं चेति निगमितं "प्राणं च हास्मै तदाकाशं चोचुः" इति। अतः "कं ब्रह्म खं ब्रह्म" इत्यत्रापरिच्छिन्नसुखं ब्रह्म प्रतिपादितमिति परं ब्रह्मैव तत्र प्रकृतम्। तदेव चात्राक्ष्याधारतयाऽभिधीयत इत्यस्याधारः परमात्मा ॥

श्रुतोपनिषत्कस्याधिगतपरमपुरुषयाथात्म्यस्यानुसन्धेयतया श्रुत्यन्तरप्रतिपाद्यमानार्चिरादिका गतिर्या तामपुनरावृत्तिलक्षणपरमपुरुषप्राप्तिकरीमुपकोसलायाक्षिपुरुषं श्रुतवते "तेऽर्चिषमेवाभिसम्भवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षम्" इत्यारभ्य चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एनान्

ब्रह्म गमयत्येष देवपथो ब्रह्मपथ एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते" इत्यन्तेनोपदिशतीत्यतोऽप्ययमक्षिपुरुषः परमात्मा ॥

प्रतिबिम्बादीनामक्षिणि नियमेनावस्थानादमृतत्वादीनां च निरुपाधिकानां तेष्वसम्भवान्न परमात्मन इतरश्छायादिरक्षिपुरुषो भवितुमर्हति। प्रतिबिम्बस्य तावत्पुरुषान्तरसन्निधानायत्तत्वान्न नियमेनावस्थानसम्भवः। जीवस्यापि सर्वेन्द्रियगुणत्वाय सर्वेन्द्रियकन्दभूते स्थानविशेषे वृत्तिरिति चक्षुषि नावस्थानम्। देवतायाश्च "रश्मिभिरेषोऽस्मिन्प्रतिष्ठितः" इति रश्मिद्वारेणावस्थितिवचनाद्देशान्तरावस्थितस्यापीन्द्रियाधिष्ठानोपपत्तेर्न चक्षुष्यवस्थानम्। सर्वेषामेवैषां निरुपाधिकामृतत्वादयो न सम्भवन्त्येव। तस्मादक्षिपुरुषः परमात्मा ॥

(३) माध्वे—अतस्तद् यथा—पुष्करपलाश आपो नाश्लिष्यन्त एवमेवम्विदि न पापं किञ्चन श्लिष्यत इत्यादिना ज्ञानादेव सर्वपापाश्लेषान्मोक्षोपपत्तिरिति। अतोऽब्रवीत् चक्षुरन्तस्थो विष्णुरेव "त्रिपादस्यामृतं दिवि" इत्यादिना तस्यैवामृतत्वाद्युक्ते ब्रह्मशब्दाद्युपपत्तेश्च। "सोऽहमस्मी"त्यादिस्वन्तर्याम्यपेक्षया। अन्तर्यामिणमीशेशमपेक्ष्याहं त्वमित्यपि। "सर्वे शब्दाः प्रयुज्यन्ते जातिभेदेऽपि वस्तुषु" इति महाकौर्म्मे ॥

"सर्पिर्वोदकं वा सिञ्चति वर्त्मना एव गच्छति" इत्यादिस्थानशक्तिः। "वामनीर्भामनीः" इत्याद्यात्मशक्तिश्चोच्यते। "तस्य ह्येतल्लिङ्गं स ईशः सोऽसपत्नः स हरिः स परः स वीरोवरीयान्यदिदं चक्षुषि सर्पिर्वोदकं वा सिञ्चति वर्त्मना एव गच्छति स वामनः स भामनः स आनन्दः सोऽच्युतः" इति चतुर्वेदशिखायाम्। स्थानत्वादिदश्चक्षुरसङ्गं सर्ववस्तुभिः। स वामनः परोऽस्माकं गतिरित्येव चिन्तयेत्" इति वामने ॥

"प्राणो ब्रह्म, कं ब्रह्म, खं ब्रह्मे"ति, "विज्ञानमानन्दं ब्रह्म", "आनन्दो ब्रह्मेति व्यजानादि"त्यादेस्तस्यैव तत्तल्लक्षणं "लक्षणं परमानन्दो विष्णोरेव न संशयः। अव्यक्तादितृणान्तास्तु विष्णोरानन्दभागिनः" इति ब्रह्मवैवर्ते ॥

न च मुख्ये सत्यमुख्यं युज्यते स एतान् ब्रह्म गमयतीति ॥

न ह्यन्यविषयाऽन्यगतिर्युक्ता। जीवस्य जीवान्तरः। नियामकत्वेऽनवस्थितेः साम्यादसम्भवाच्च न जीव.। नियमप्रमाणाभावादनीश्वरापेक्षत्वाच्च ॥

(४) निम्बार्कः—"य एषोऽन्तरक्षिणि पुरुषो दृश्यते" इत्यक्षिण्यन्तरः पुरुषः पुरुषोत्तम एव नान्य। कुत.? "एष आत्मेति होवाच एतदमृतमभयमेतद्ब्रह्मेति एतत्संयद्वाम इत्याचक्षते" इत्यात्मत्वाऽभयत्वादीनां संयद्वामत्वादीनाञ्च पुरुषोत्तमे एवोपपत्तेः। परमात्मनो "यश्चक्षुषि तिष्ठन्नि"त्यादिश्रुत्या स्थानादेर्व्यपदेशाच्चाक्षिपुरुष· स एव। अक्षिगतः पर एव "कं ब्रह्म खं ब्रह्मे"ति सुखविशिष्टाभिधानाच्च। तत्कं ब्रह्मेति सुखविशिष्टं ब्रह्मैव, कुतः? "यद्वाव कं तदेव खं यदेव खं तदेव क"मिति परस्परवैशिष्ट्यप्रतिपादकवाक्यादेव च। श्रुतोपनिषद्केन तस्य श्रुतोपनिषत्कस्य या गतिर्देवयानाख्या "अथोत्तरेण तपसा ब्रह्मचर्येण श्रद्धया विद्ययाऽऽत्मानमन्विष्यादि"त्यमभिजयन्ते, "एतद्वै प्राणानामायतनमेतदमृतमभयमेतत्परायणमेतस्मान्न पुनरावर्त्तन्ते" इतिश्रुत्यन्तरे प्रसिद्धा। "तस्या एवेह तेऽर्चिषमेवाभिसम्भवन्ती"त्यादिना गतेरभिधानाच्चाक्ष्यन्तरः पुरुषः पुरुषोत्तम एव अक्ष्यन्तरः परमात्मेतरो न भवति, कुतः? तदितरस्य तत्र नियमेन नावस्थितेरमृतत्वादेस्तत्रासम्भवाच्च ॥

(५) भैक्षवे—इदानीं ब्रह्मण आत्मान्तरशून्यत्वाशनायतीतत्वादिगुणानवधारयितुं तद्वावेदकवाक्यमपि ब्रह्मपरत्वेनावधारयति । काण्वपञ्चमाध्याये "यदेव साक्षादपरोक्षाद् ब्रह्म य आत्मा सर्वान्तरस्तं मे व्याचक्ष्वे"ति प्रश्नस्य प्रत्युत्तरम् "एष त आत्मा सर्वान्तरो योऽशनापिपासे शोकं मोहं जरां मृत्युमत्येति" साक्षादपरोक्षादिति विशेषणयोरगौणमलाक्षणिकं चेत्यर्थः । तत्र संशयः, किमयं सर्वान्तरः पूर्ववाक्योक्तसर्वान्तरो जीव एव, वाक्यद्वयस्य रूपसाम्यात्, उत्तरवाक्ये विवेकपरत्वेन वाऽशनायतीतत्वोपपत्तेरत एवापौनरुक्त्यसम्भवाच्च । किञ्च, परमात्मनोऽशनाद्यतीतत्वस्य सर्वथोपपत्तेरिति । तत्रायं निर्णयः, अन्तरोऽत्र परमात्मैव उपपत्तेः । न हि यदेवेत्यवधारणं जीवेषूपपद्यते परमात्मापेक्षया जीवानामप्यमुख्यब्रह्मत्वात्, "य आत्मनि तिष्ठन्नात्मनोऽन्तर" इत्यादिश्रुत्यन्तरेषु जीवानामन्तरात्मान्तरसिद्धेश्च, अत एव जीवपरे पूर्ववाक्ये यदित्येवास्ति न तु यदेवेति । तत्र च "प्राणेन प्राणिती"त्यादिजीवलिङ्गमप्यस्ति । ब्रह्मणि तु यदेवेत्युपपद्यते ब्रह्मणोऽन्तरात्मान्तरस्यासिद्धेः । "नचास्य कश्चिज्जनिता न चा धिपः" इति श्रुतेश्चेति । इतोऽप्यत्र वाक्येऽन्तरः परमात्मैव स्थानादिव्यपदेशात्स्थानमाधारः व्यपदेशौचित्यात्, इत्यर्थः । पूर्ववाक्ये हि आधाराणां प्राणेन्द्रियादीनां नाड्यन्तानां तत्पूर्ववाक्योपस्थितानामन्तरस्थतया एक आत्मा प्रोक्तः "एष त आत्मा सर्वान्तरः" इत्यादि सर्वशब्दस्य बुद्धिस्थवाचित्वात्तदनन्तरं चान्योऽप्यात्मा सर्वान्तर उच्यते । अतः पूर्वोपस्थिततयाऽत्र तस्याप्यात्मनोऽयमन्तर इति गम्यते । पूर्ववाक्यादेवाधारक्रमेण व्यपदेशौचित्यादिति । सुखेषु विशिष्टमुत्तमं सुखम् । तथा च योऽशनापिपासे शोकं मोहं जरामृत्युमत्येतीत्यनेन दुःखनिष्ठत्रिरूपपारिभाषिकस्योत्तमसुखस्याभावात्, इत्यर्थः । अत्राशनाद्यतीतत्वस्य परमेश्वरगुणस्य प्रशंसार्थे सुखशब्दः सूत्रे गौणः प्रयुक्त इति मन्तव्यम् । श्रुता उनिषदः साकल्येन येस्ते श्रुतोपनिषत्कास्तेषां या गतिः प्रव्रज्या संन्यास इति यावत् । तस्याऽत्र वाक्यशेषेऽभिधानाच्च परमात्मैव ग्राह्यो न जीव इत्यर्थः । तच्च प्रव्रज्यावाक्यं "एतं चैवमात्मानं विदित्वा ब्राह्मणा पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणाया अथ भिक्षाचर्य्यं चरन्ति तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेदि"त्यादि । नह्यत्र विवक्षितं पारिव्राज्यं जीवमात्रज्ञानाङ्गमति ( श्रुतसर्वोपनिषत्कस्य वेदान्तपारगस्यैवात्र ब्राह्मणशब्दार्थत्वात्, अन्यथा ) औपनिषदपरब्रह्माज्ञाने पाण्डित्यनिर्वेदासम्भवात् । पाण्डित्यस्यासमाप्तेः । तथा स ब्राह्मणः केन स्यात् येन स्यात्तेनेदृश एवेति यथोक्तप्रव्रज्यायां निरतिशयत्ववचनं नोपपद्येत औपनिषदपुरुषस्यैवाज्ञानेनैतादृशादधिकब्राह्मणापत्तेरिति भावः । ( अस्याः श्रुतेश्चार्थः, स ब्राह्मणः केनाचारेण वर्त्ततेति प्रश्नः । उत्तरं, येनेति येनकेन तेन प्रकारेण वर्त्तेत सर्वथापि ईदृश एव अधिको वा न्यूनो वा न केनापि प्रकारेण भवतीति ) तस्मात्पूर्वोत्तरसम्वादयोर्द्वौ सर्वान्तरावात्मानौ जीवेश्वराधाराधेयभावेनैवात्रोक्तौ । न पुनरेक एवात्मा पौनरुक्त्यापत्तेः । उत्तरवाक्यस्य विवेकपरत्वेन तु सर्वान्तरत्वस्य सङ्कोचापत्तेः । पूर्ववाक्योक्तजीवत्यागादिति बोध्यम् । नन्वेवमन्तरस्याप्यन्तरात्मान्तरकल्पने तस्याप्यन्तरात्मान्तरं प्रसज्येतेत्याशङ्कामपाकरोति । ( अनवस्थापत्त्यैवे )श्वरस्यान्तरन्य आत्मा न सिध्यति । यदेवेत्यवधारणासम्भवाच्चेत्यर्थः । श्रुतिबलात्त्वीश्वरः कल्प्यते यदि ह्यनवस्थाभयात्प्रामाणिको न सेत्स्यति, तदा देहेन्द्रियाणामन्तरो जीवोऽपि प्रथमवाक्यान्न सिद्ध्येतेति भावः । अथवैवं व्याख्येयम्, ननु प्राणादीनामन्तरस्य जीवस्यान्तरोऽन्यः सिध्यति चेति, अत्रार्थो भवतु । अत्राह अनवस्थितेरित्यादिसूत्रं कस्यापि सिद्धजीवस्य स्वातिरिक्ताखिलजीवानामन्तरवस्थानासम्भवात्, यदेवेत्यवधारणासम्भवाच्चेत्यर्थः ।

(६) भास्करीये—"य एषोऽन्तरक्षिणि पुरुषो दृश्यते। एष आत्मेति होवाच एतदमृतमभयमेतद् ब्रह्मेति" छान्दोग्ये श्रूयते। तत्र सन्देहः, किं छायात्माऽक्षिस्थाने निर्दिश्यते किंवा जीवोऽधिष्ठात्री देवताऽऽदित्योऽथवेश्वर इति? किं तावद्य प्रतिभाति छायात्मा, तस्य दृश्यत्वप्रसिद्धेः। विज्ञानात्मनो वायं निर्देशः, स हि रूपग्रहणार्थं चक्षुषि सन्निहितो भवति। "देवता वा रश्मिभिरेषोऽस्मिन् प्रतिष्ठित" इति श्रुतेरात्मत्वामृतत्वादि च देवताजीवयोः कथञ्चिदुपपद्यते। अतो नेश्वरग्रहणं स्थानविशेषनिर्देशादिति प्राप्ते ब्रूमः। पर एव चक्षुष्यन्तरा पुरुष इहोपदिष्टः कस्मादात्मत्वामृतत्वाद्युपपत्तेः मुख्यया वृत्त्या शब्दार्थश्च प्रथमं प्रतीयते स शब्दार्थो नेतरः पौरुषेयो हि सः संयद्वामाद्युपपत्तेश्च "एतं संयद्वाम इत्याचक्षते एतं हि सर्वाणि वामान्यभिसंयन्ति। एष उ एव वामनीरेष हि सर्वाणि वामानि नयति" कल्याणानीत्यर्थः। "एष उ एव भामनीरेष हि सर्वेषु लोकेषु भाती"ति॥

कथं पुनः सर्वगतस्य स्थानव्यपदेश इत्युपासनार्थमिति ब्रूमः। यथा दहरं पुण्डरीकमादित्ये चक्षुषि तिष्ठन्निति च तत्र तत्र सन्निधानं दर्शयतीति। आदिग्रहणमुपासनार्थं नामरूपमप्यस्य निर्दिश्यते। "तस्योदिति नाम हिरण्यश्मश्रुरि"त्यादि। चशब्दः सम्भावनायाम्॥

पूर्वत्र सुखविशिष्टस्य ब्रह्मणोऽभिधानात् तदेव प्रकृतमत्र परामृश्यते संयद्वामादिगुणविधानार्थं गतिविधानार्थं च। "प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मे"ति। तत्र सूत्रात्मा समस्तजगद्विधारयिता प्राण इति निर्दिश्यते। तद्विशिष्टं ब्रह्मोपास्यमित्यर्थः। कं ब्रह्मेत्यनेन सुखविशिष्टत्वमुच्यते। कंखंशब्दयोरन्योन्यव्यवच्छेदे न तु ब्रह्मसम्बन्धार्थे पुनरुक्तम्। यद्वाव कं तदेव खं यदेव खं तदेव कमिति। कंशब्देन सुखवाचिनाकाशे विशेषिते भूताकाशो निवर्तते, खंशब्देन चाकाशवाचिना सुखे विशेषिते सामान्यसुखनिवृत्तिः। तदेवं निरतिशयानन्दगुणं ब्रह्म प्राणविशिष्टं चोपास्यमिति समुदायार्थः। चशब्दो हेतुसमुच्चयार्थोऽवधारणार्थ एवकारः। "यथा पुष्करपलाश आपो न श्लिष्यन्ते एवमेवंविदि पापं कर्म न श्लिष्यते" इतीयं श्रुतिरन्यत्र नावकल्पते। अत्रावसरेऽत एव तद्ब्रह्मेति सूत्रमन्ये पठन्ति तत् पुनर्गतार्थमिति अस्माभिर्नाभिधीयते॥

श्रुता उपनिषद् आत्मविद्या येनासौ श्रुतोपनिषत्कः। उप निषीदन्ति विशीर्यन्ते संसारग्रन्थयो यस्यां सा उपनिषद्विद्या मुख्यया वृत्त्या। तत्संयोगाद्ग्रन्थोऽप्युपनिषदुच्यते। तस्य ब्रह्मविदो या गतिर्देवयानाख्या प्रसिद्धा श्रुत्यन्तरे, अथोत्तरेण "तपसा ब्रह्मचर्येण श्रद्धया विद्ययाऽऽत्मानमन्विष्यादित्यमभिजयन्ते एतद्वै प्राणानामायतनमेतदमृतमभयमेतत् परायणमेतस्मान्न पुनरावर्तन्त" इति सैवेहोपकोशलस्य श्रुतोपनिषत्कस्याभिधीयमाना दृश्यते "तेऽर्चिषमभिसम्भवन्ती"ति, तया प्रसिद्धया ब्रह्मनिर्देशोऽयमिति निश्चीयतेऽन्यथानुपपत्त्या॥

न छायापुरुषः, कस्मादनवस्थितेः। नह्यसौ चक्षुष्यवस्थितो येनास्योपदेशः स्यात्, पुरुषान्तरसन्निधाने हि दृश्यते। न च तथा वाक्यार्थः शक्यः कल्पयितुम्। यथा श्रुतोपपत्तेरसम्भवाद्यात्मत्वामृतत्वादीनाम्। अचेतनत्वाद्विज्ञानात्मदेवतयोरसम्भवः। न चामृतत्वमभयत्वं च जीवस्योपपद्यते। सर्वदा सांसारिकतया आम्नातत्वात्। देवतायाश्च भयमस्ति। तथा च "भीषास्माद्वातः पवते भीषोदेति सूर्यः भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चम" इति मन्त्रवर्णाद्विद्वद्भिः समाहितचेतोभिर्दृश्यत इति द्रष्टव्यम्॥

(७) श्रीमद्वल्लभाचार्याणामयमाशयः—अतीतेषु त्रिष्वधिकरणेषु प्रथमे वैशेष्येण भोगबाधकं परिहृत्याग्रिमे चराचरग्रहणयुगपदुभयप्रवेशाभ्यामुभयविधो विवक्षितो भोगः साधितः। तत्र किं वैशेष्यमित्याकाङ्क्षायां तन्निर्णेतुमुपोद्घातेनेदमधिकरणमारभ्यते। तत्र छान्दोग्ये षष्ठप्रपाठके उपकोशलविद्यायां श्रूयते। "य एषोऽन्तरक्षिणि पुरुषो दृश्यत एष आत्मेति होवाचैतदमृतमभयमेतद् ब्रह्मेति, तद्यद्यप्यस्मिन् सर्पिर्वोदकं वा सिञ्चति वर्त्मनी एव गच्छती"त्यादि। वाक्यार्थः, कं ब्रह्मेतीत्यन्तं पुरःस्फूर्तिकः स्फुट एव। अग्रे तु पूर्ववाक्ये यदाचार्येणोक्तम्। "अहं तु ते तद् वक्ष्यामि यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यत" इति फलम्। तत्र निदर्शनं च स आह। तद्यद्यपीत्यादि। तद् तत्र इदं निदर्शनम्। यद्यप्यस्मिन्नक्षिपुरुषस्थानभूते अक्षिणि सर्पिर्वा उदकं वा सिञ्चति, धारया भूयः पातयति, वर्त्मनी अक्ष्यावरणादिभूते पक्ष्मणी एव गच्छति प्राप्नोति। ते एवार्द्रे स्निग्धे च भवतो, न त्वक्षि। तथाच यत्स्थानस्येदृशं माहात्म्यं तस्य ज्ञाने सति पापं न श्लिष्यते इत्यत्र किं वाच्यमित्यर्थो बोध्यः। इदं वाक्यं प्रतिबिम्बपुरुषस्य ब्रह्मत्वेनोपासनापरम्? उत ब्रह्मपरमिति? नचात्र दृश्यत इति पदेन दर्शनविषयत्वस्योक्तत्वाद् ब्रह्मणश्चादृश्यत्वात् संशय एव न घटत इति वाच्यम्। अमृतत्वादीनां ब्रह्मधर्माणां श्रावणेन तत्त्वज्ञानजनितालौकिकसामर्थ्यकृतदर्शनस्य शक्यवचनतया तदुभयसम्भवात्। तत्र दृश्यत इति वचनाद्, "एषा सोम्य तेऽस्मद्विद्या आत्मविद्या चे"त्यग्नीनां वाक्ये ब्रह्मविद्योपसंहारदर्शनाच्च प्रतिबिम्ब एवायमिति युक्तम्। अन्यथा उपसंहारदर्शनविरोधापातात्। नचाभयादिपदविरोधः शङ्क्यः। उपासनार्थतया सुखेनान्वयादित्येवं प्राप्ते—

अभिधीयते। अन्तर इत्यादि। अन्तरः अक्षिमध्ये स्थितः परमात्मैव। कुतः? उपपत्तेः। सर्वत्र ब्रह्म पश्यतः स्वसन्निधाने अक्षिरूपस्य स्थानस्य जलाद्यसंश्लेषेण माहात्म्यबोधकतयोत्कृष्टत्वात्तत्र भगवन्तमुपदिशतीति दर्शनस्य स्वल्पस्थानस्य चोपपत्तेः। नचोपसंहारदर्शनस्य बाधकत्वं शङ्क्यम्। उपकोसलेन ब्रह्मोपदेशेऽपहृतेऽपीमे नूनमीदृशा अन्यादृशा इति वदता आचार्येणाग्निकृतोपदेशे ज्ञाते, तत उपकोसलेनाचार्याज्ञयाऽभ्युक्तेऽनूदिते, आचार्यः कं ब्रह्म खं ब्रह्मेति अग्निवाक्यस्य "लोकं वाव किल तेऽवोच"मित्यनेनात्मप्राप्यं ब्रह्मार्थत्वेनोक्त्वा, "अहं तु ते तद् वक्ष्यामी"ति प्रतिज्ञाय, "य एषोऽक्षिणि" इत्यादिना तत्प्राप्तिप्रकारं चोक्तवानिति महता प्रबन्धेन पुनरुपक्रमेणोपसंहारविरोधस्याभावात्। नच प्रकरणस्य श्रुत्यपेक्षयातिदुर्बलत्वात्तदनुरोधेन दर्शनश्रुतिसङ्कोचोऽनुचित इति वाच्यम्। दर्शनविषयस्य पुरुषत्वानियमात्। अन्येषामपि प्रतिबिम्बदर्शनेन तथा निश्चये विषयवशेन दर्शनश्रुतिसङ्कोचस्य पूर्वपक्षिमतेऽपि तौल्यात्। प्रकरणविरोधस्याधिक्याच्च। अतो विरोधाभावादिदं ब्रह्मवाक्यमेव॥

पूर्वसूत्रोक्तस्य हेतोर्वादकबलितत्वाद्धेत्वन्तरमाह। स्थानादिति। स्थानमादिर्येषाम्। अतद्गुणसंविज्ञानः। तेषां व्यपदेशात्। अक्षिपुरुषमेव निर्दिश्य, "एतं संयद्वाम इत्याचक्षते, एतं हि सर्वाणि वामान्यभिसंयन्ति, एष उ एव वामनीरेष हि सर्वाणि वामानि नयति, एष उ एव भामनीरेष हि सर्वेषु लोकेषु भाती"ति कथनात्। कर्मणां फलार्थं करणात्। तेषां मनोहरत्वेन वामत्वम्। संयन्ति वामानि यत्रासौ संयद्वामः। शेषं स्फुटम्। अत्र कर्मफलं कर्मफलदानं च, ततः सर्वेषु लोकेषु भानं, च तस्योक्तम्। न हीदं प्रतिबिम्बात्मनः सम्भवति। तथाच, पूर्वोक्तहेतोर्वादकबलितत्वेऽपि तेभ्योऽसाधारणधर्मेभ्योऽत्र ब्रह्मैव मन्तव्यमित्यर्थः। चकाराच्छान्दोग्य इन्द्रविरोचनसम्वादेऽपि प्रथमपर्याये, "य एषोऽक्षिणी"त्युपक्रम्य "एतद् ब्रह्मे"त्यन्तमेवमेवोपदिष्टत्वात् तत्राप्येवमेव बोध्यमिति सूचितम्॥

ननु किमित्येवं ब्रह्मवाक्यत्वं निर्बन्धेन प्रतिपाद्यते, उपासनापरत्वमेवाद्रियताम्, प्राञ्जलत्वादित्यत आह । सुखविशिष्टेत्यादि । एतदमृतमभयमेतद् ब्रह्मेति सुखविशिष्टाभिधानात् । छान्दोग्ये भूमानं सुखस्वरूपमुपक्रम्य, "यो वै भूमा तदमृतमि"ति श्रावणादमृतमानन्दः । बृहदारण्यके ज्ञानोपदेशोत्तरम् "अभयं वै जनक प्राप्तोऽसी"त्युपसंहारादभयं ज्ञानम् । "सत्यं ज्ञानमनन्तं ब्रह्मे"त्यत्र प्रथमं सत्यपदाद् ब्रह्म सत्, अत्र हेतद्विशेषणत्रयं पूर्वमभिधाय, तदनन्तरं संयद्वामत्वादीनां तद्धर्माणां कथनाद्यदग्निभिः कंपदेन सुखविशिष्टं ब्रह्मरूपमुक्तं तदत्रैव इत्यनेनाऽक्षिपुरुषं निर्दिश्य एतद्वाक्यं प्रवृत्तमित्येतद् ब्रह्मवाक्यमित्यर्थः । यद्यपि सच्चितोरपि ब्रह्मात्मकत्वम्, तथापि तयोर्यथायथं जडे जीवे च प्रव्यक्तत्वेनानैकान्तिकत्वात्तदनुक्तिः । एषा मुख्योपपत्तिरिति बोधनाय सूत्र एवकारः । चकारः सच्चितोरपि समुच्चायकः । तस्माद् ब्रह्मैवाक्षिपुरुषः ॥

एवं स्वरूपतो निर्णीय फलस्य तात्पर्यलिङ्गत्वात् फलतो निर्णयमाह श्रुतेत्यादि । श्रुता उपनिषद् ब्रह्मविद्या येन, तस्य ब्रह्मविदो या गतिश्छान्दोग्ये एव, "अथ यदु चैवास्मिन् शव्यं कर्म कुर्वन्ति, यदि च न, अर्चिषमेवाभिसंयन्ती"त्युपक्रम्य चन्द्रमसो विद्युतमित्याद्युक्त्वा "तत्पुरुषोऽमानवः स एतान् ब्रह्म गमयति, एष देवपथो ब्रह्मपथ एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते" इति । इयं चाग्निविद्यायामुक्त्वा तस्या एवात्राक्षिपुरुषमुपक्रम्याभिधानादप्यक्षिपुरुषो ब्रह्मैवेति । चकारस्तूक्तसमुच्चयार्थः ॥

इदमेवाधिकरणं पुनर्निषेधमुखेन विचारयति । नन्वत्र प्रतिबिम्बपुरुषस्योपासना ब्रह्मत्वेन कर्तव्योच्यते । सा च ब्रह्मधर्मव्यपदेश एव सिध्यति, अतः अमृतत्वमारभ्य गत्यन्ताः सर्वा अप्युपपत्तयो गौण्या व्यपदेशेन सङ्गता भवन्तीति नेदं ब्रह्मवाक्यमिति प्राप्ते—

अभिधीयते । नेतर इत्यादि । इतरः प्रतिबिम्बपुरुषो न वाक्यार्थः । कुतः ? अनवस्थितेः । अस्थिरत्वात् । अयमर्थः । त्वया हि दृश्यत्वकथनात् प्रतिबिम्बपुरुषो वाक्यार्थत्वेनापाद्यते । तत्रेदं विचारणीयम् । किमाचार्येण स्वचक्षुर्गत उपदिश्यतेऽन्यचक्षुर्गतो वा । आद्ये, चक्षुस्तद्दर्शनेन तत्कथने यथाद्दष्टार्थवादित्वाभावाद्दक्कुरनाप्तत्वादुपदेशस्याप्रमाणतया अस्थिरत्वम् । द्वितीये तु, द्रष्टरि सत्येव भानात् तदपगमे चापगमात् प्रतिबिम्बस्यैवास्थिरत्वम् । द्रष्टरि सद्वितीये प्रतिबिम्बस्यापि तथात्वेनैकत्वोपदेशविरोधादस्थिरत्वम् । उपासनाकाले चित्तस्थैर्यायाक्षिनिमीलने प्रतिबिम्बमात्रस्याभवेनोपास्याभावादुपासनायाः सुतरामस्थिरत्वम् । यदि च द्वितीयं विना तदसम्भवात् पत्नीद्वितीयस्याग्निहोत्रादिवदेकत्वं मुख्यपरमङ्गीकृत्य सद्वितीयस्यैवात्रोपासनोपगम्यते, तदा तु वाक्यश्रवणकाले श्रोतुरेकत्वादुपासनाकाले च तस्य सद्वितीयत्वाच्छ्रवणमननयोः प्रकारभेदेनोपासनाया वैरूप्यादस्थिरत्वम् । यदि च श्रवणदशायां वक्तुः सत्त्वाद्वैरूप्यं परिह्रियते, तदा तु वक्त्रैव सद्वितीयत्वाद् गुरोर्निर्बन्धापत्त्या तस्याः कर्तुमशक्यत्वेन च सुतरामुपासनाया अस्थिरत्वम् । किञ्च, मनसा ह्युपासनम्, तत्र च प्रतिबिम्बस्य सन्निधापयितुमशक्यत्वादसम्भव एव । चकारेण प्रतिबिम्बस्यात्मत्वामृतत्वयोरसम्भवे प्रतिबिम्बपरत्व उपासनाया आसुरत्वं च सङ्गृह्यते । तस्मादक्षिस्थाने व्यापकः सर्वतः पाणिपादान्तत्वादानन्दमूर्तिर्भगवानेवोच्यत इति सिद्धम् ॥ १७ ॥ ५ ॥

## ६ अन्तर्याम्यधिकरणम् ।

### अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ॥ १।२।१८ ॥

( अन्तर्यामी परमात्मा )

"य इमं च लोकं परं च लोकं सर्वाणि च भूतान्यन्तरो यमयति" ( बृ. ३।७।१ ) इत्युपक्रम्य श्रूयते । " यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद

---

पूर्वाधिकरणे 'य एषोऽन्तर्यामी अक्षिणि पुरुषो दृश्यते' इत्यनेनोक्तः, स एवाधिदैवादिष्वस्तीति ज्ञापयितुं प्रसङ्गसङ्गत्या अन्तर्याम्यधिकरणमारचयाञ्चक्रुः—अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् । विषयवाक्यमुदाहरन्ति—य इमं चेति । श्रूयते । बृहदारण्यके वाजसनेयिशाखायाम् अन्तर्यामि ब्राह्मणे श्रूयते । अथ विषयवाक्यम्—

अथ हैनमुद्दालकमारुणिः पप्रच्छ याज्ञवल्क्येति होवाच मद्रेष्ववसाम पतञ्चलस्य काप्यस्य गृहेषु यज्ञमधीयानास्तस्यासीद्भार्या गन्धर्वगृहीता तमपृच्छाम कोऽसीति सोऽब्रवीत् कबन्ध आथर्वण इति सोऽब्रवीत्पतञ्चलं काप्यं याज्ञिकाꣳश्च वेत्थ नु त्वं काप्य तत्सूत्रं येनायं च लोकः परश्च लोकः सर्वाणि च भूतानि संदृब्धानि भवन्तीति सोऽब्रवीत्पतञ्चलः काप्यो नाहं तद्भगवन्वेदेति सोऽब्रवीत्पतञ्चलं काप्यं याज्ञिकाꣳश्च वेत्थ नु त्वं काप्य तमन्तर्यामिणं य इमं च लोकं परं च लोकꣳ सर्वाणि च भूतानि योऽन्तरो यमयतीति सोऽब्रवीत्पतञ्चलः काप्यो नाहं तं भगवन्वेदेति सोऽब्रवीत्पतञ्चलं काप्यं याज्ञिकाꣳश्च यो वै तत्काप्य सूत्रं विद्यात्तं चान्तर्यामिणमिति स ब्रह्मवित्स लोकवित्स देववित्स वेदवित्स भूतवित्स आत्मवित्स सर्वविदिति तेभ्योऽब्रवीत्तदहं वेद तच्चेत्त्वं याज्ञवल्क्य सूत्रमविद्वाꣳस्तं चान्तर्यामिणं ब्रह्मगवीरुदजसे मूर्धा ते विपतिष्यतीति वेद वा अहं गौतम तत्सूत्रं तं चान्तर्यामिणमिति यो वा इदं कश्चिद्ब्रूयाद्वेद वेदेति यथा वेत्थ तथा ब्रूहीति ॥१॥

स होवाच वायुर्वै गौतम तत्सूत्रं वायुना वै गौतम सूत्रेणायं च लोकः परश्च लोकः सर्वाणि च भूतानि संदृब्धानि भवन्ति तस्माद्वै गौतम पुरुषं प्रेतमाहुर्व्यस्रꣳसिषतास्याङ्गानीति वायुना हि गौतम सूत्रेण संदृब्धानि भवन्तीत्येवमेवैतद्याज्ञवल्क्यान्तर्यामिणं ब्रूहीति ॥ २ ॥

यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥ ३ ॥

योऽप्सु तिष्ठन्नद्भ्योऽन्तरो यमापो न विदुर्यस्यापः शरीरं योऽपोऽन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥ ४ ॥

योऽग्नौ तिष्ठन्नग्नेरन्तरो यमग्निर्न वेद यस्याग्निः शरीरं योऽग्निमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥ ५ ॥

योऽन्तरिक्षे तिष्ठन्नन्तरिक्षादन्तरो यमन्तरिक्षं न वेद यस्यान्तरिक्षꣳ शरीरं योऽन्तरिक्षमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥ ६ ॥

यो वायौ तिष्ठन्वायोरन्तरो यं वायुर्न वेद यस्य वायुः शरीरं यो वायुमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥ ७ ॥

यो दिवि तिष्ठन्दिवोऽन्तरो यं द्यौर्न वेद यस्य द्यौः शरीरं यो दिवमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥ ८ ॥

य आदित्ये तिष्ठन्नादित्यादन्तरो यमादित्यो न वेद यस्यादित्यः शरीरं य आदित्यमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥ ९ ॥

यो दिक्षु तिष्ठन्दिग्भ्योऽन्तरो यं दिशो न विदुर्यस्य दिशः शरीरं यो दिशोऽन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥ १० ॥

यश्चन्द्रतारके तिष्ठꣳश्चन्द्रतारकादन्तरो यं चन्द्रतारकं न वेद यस्य चन्द्रतारकꣳ शरीरं यश्चन्द्रतारकामन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥ ११ ॥

य आकाशे तिष्ठन्नाकाशादन्तरो यमाकाशो न वेद यस्याकाशः शरीरं य आकाशमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥ १२ ॥

यस्तमसि तिष्ठꣳस्तमसोऽन्तरो यं तमो न वेद यस्य तमः शरीरं यस्तमोन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥ १३ ॥

यस्तेजसि तिष्ठꣳस्तेजसोऽन्तरो यं तेजो न वेद यस्य तेजः शरीरं यस्तेजोन्तरो यमयत्येष त आत्मान्तर्याम्यमृत इत्यधिदैवतमथाधिभूतम् ॥ १४ ॥—

यः सर्वेषु भूतेषु तिष्ठन्सर्वेभ्यो भूतेभ्योऽन्तरो यꣳ सर्वाणि भूतानि न विदुर्यस्य सर्वाणि भूतानि शरीरं यः सर्वाणि भूतान्यन्तरो यमयत्येष त आत्मान्तर्याम्यमृत इत्यधिभूतमथाध्यात्मम् ॥ १५ ॥—

यः प्राणे तिष्ठन्प्राणादन्तरो यं प्राणो न वेद यस्य प्राणः शरीरं यः प्राणमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥ १६ ॥

यो वाचि तिष्ठन्वाचोऽन्तरो यं वाङ् न वेद यस्य वाक् शरीरं यो वाचमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥ १७ ॥

यश्चक्षुषि तिष्ठꣳश्चक्षुषोऽन्तरो यं चक्षुर्न वेद यस्य चक्षुः शरीरं यश्चक्षुरन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥ १८ ॥

यः श्रोत्रे तिष्ठञ्छ्रोत्रादन्तरो यꣳ श्रोत्रं न वेद यस्य श्रोत्रꣳ शरीरं यः श्रोत्रमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥ १९ ॥

यो मनसि तिष्ठन्मनसोऽन्तरो यं मनो न वेद यस्य मनः शरीरं यो मनोऽन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥ २० ॥

यस्त्वचि तिष्ठꣳस्त्वचोऽन्तरो यं त्वङ् न वेद यस्य त्वक् शरीरं यस्त्वचमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥ २१ ॥

यो विज्ञाने तिष्ठन्विज्ञानादन्तरो यं विज्ञानं न वेद यस्य विज्ञानꣳ शरीरं यो विज्ञानमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥ २२ ॥

यो रेतसि तिष्ठन् रेतसोऽन्तरो यꣳ रेतो न वेद यस्य रेतः शरीरं यो रेतोऽन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ॥ २३ ॥

अदृष्टो द्रष्टाऽश्रुतः श्रोताऽमतो मन्ताऽविज्ञातो विज्ञाता नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोता नान्योऽतोऽस्ति मन्ता नान्योऽतोऽस्ति विज्ञातैष त आत्मान्तर्याम्यमृतोऽन्यदार्तं ततो होद्दालक आरुणिरुपरराम ॥ २४ ॥

यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः" (बृ. ३।७।२) इत्यादि। तत्राधिदैवमधिलोकमधिवेदमधियज्ञमधिभूतमध्यात्मं च कश्चिदन्तरवस्थितो यमयिताऽन्तर्यामीति श्रूयते।

( तत्र सन्देहोद्भावनम् )

तत्र संशयः। किमन्तर्याम्यधिदैवादिषु सर्वत्रैक एव। अथाधिदैवादीनां नामभेदाद् भिद्यत इति। सामान्यतस्तु-अन्तस्तद्धर्मोपदेशात् (ब्र. सू. १।१।२०) इति न्यायेनात्रापि ब्रह्मत्वं सिद्धमेव। तथाशब्दभेदात्सन्दिह्यते। अधिदैवादिषड्भेदा आधारधर्मा भगवत्युपचर्यन्ते।

( द्वितीया कोटिः )

अथवा सञ्ज्ञाविशिष्टा अन्य एवेति।

---

अथ भाष्यम्—

अमृत इत्यादीति। आदिपदेन अग्निरित्यारभ्य आत्मान्तानि वाक्यानि सङ्गृह्यन्ते। तेषु वाक्येषु संशयमाहुः—तत्राधिदैवमिति। आदिपदग्राह्येषु वाक्येषु स्तनयित्न्वन्तानि दशाधिदैववाक्यानि, ततः सर्वलोकेति वाक्यचतुष्टयेन सर्वस्थानेऽधिशब्दप्रयोगेणाधिलोकादिचतुष्टयं, तदनन्तरं प्राणवागित्यारभ्यात्मान्तानि दशाध्यात्मवाक्यानि, अधिदैवादिषण्णां बोधकानि सन्ति। एवं रीत्या चतुर्विंशत्स्वन्तर्याम्यस्ति कश्चिदिति श्रूयते इत्यर्थः।

एवं संशयाधिकरणीभूतवाक्यमुक्त्वा संशयबीजमाकारं चाहुः—तत्र संशय इति। संशयाकारचिन्तायां प्रथमतोऽन्तर्यामी एको वा अनेको वेति संशये प्रवृत्ते प्रथमकोटेः सिद्धत्वेन तस्य सत्यभावात्, तादृशं संशयं निरस्यन्ति किमन्तर्यामीति। अपरं कोटिमाहुः—अथेति। भिद्यत इति। आनन्दमयाधिकरणे शब्दान्तराभ्यासेत्यनेन नामधेयस्याधिभेदकत्वोक्त्यान्तर्यामी भिद्यत इत्यर्थः। प्रथमकोटेः सिद्धत्वमाहुः—सामान्यत इति। अत्रापि अधिदैवादिष्वपि। ननु संशयबीजं तु कोटिद्वयोपस्थितिः, सा त्वत्र न सम्भवतीति व्यर्थमधिकरणारम्भ इत्यत आहुः—तथाशब्दभेदादिति। अधिदैवादिशब्दभेदादित्यर्थः। तथा च तथाशब्दभेद एव सन्देहबीजमित्यर्थः। एवं सन्देहबीजमुक्त्वा तदाकारमाहुः—अधिदैवादीति। षड् भेदा इति। दशाऽधिदैवानां भेदा दशाऽध्यात्मभेदाश्चतस्रोऽधिलोकादयः। एवं चतुर्विंशतिः षण्णामवान्तरभेदाः। ते सर्वेऽप्याधारधर्मा बोध्याः। ननु षण्णां कथमाधारधर्मत्वमिति चेदुच्यते-अधिदैवमित्यत्र देवानां समूहो दैवं दैवे अधि इत्याधिदैवमित्यधिकरणार्थकाव्ययीभावसमासे जाते अधिकरणस्याधारवाचकत्वादधिदैवाभिन्न आधारो बोध्यते। न चाधारस्य धर्मत्वं कथमिति वाच्यम्। पूर्वोत्तरमीमांसकानां मते पदानां धर्मे शक्तिरिति सिद्धान्तः। एवं चाधिदैवादिपदादधिदैवत्वरूपधर्मो बोध्यते। तथा चाधारधर्मा अधिदैवत्वादयो भगवति अन्तर्यामिणि उपचर्यन्ते इत्येका कोटिरित्यर्थः।

अपरां कोटिमाहुः—अथवेति। तत्तदधिकारे वर्तन्ते ये ते देवाः। तेषां समूहो दैवम्। तत्तदधिकाराभिमानिजीवसमुदायस्तत्र वर्तते। याः 'अधिदैव' इत्यादिसञ्ज्ञाः तद्विशिष्टाः अभिमानिनो यन्निष्ठा आधारधर्माः अधिदेवकत्वाधिलोकत्वादयो भगवति उपचाराद्भविष्यन्ति ते कल्पनीया इत्यपरा कोटिः। यथा वाऽस्मिन् वाक्ये प्रतिपाद्य अधिदैवत्वाद्युपचारितः। अन्तर्यामी वा तद्विशिष्टा अभिमानिनो जीवा वेति संशयाकार इत्यर्थः।

( पूर्वपक्षः )

तत्र तत्तदधिकृत्य यो वर्ततेऽभिमानेन तस्य तादृशशब्दप्रयोगः। अधिलोकादयश्च शाखान्तरेऽन्यत्रैव प्रसिद्धा योगव्यापकाः। पञ्चस्वधिकरणेषु। अधिलोकमधिज्यौतिषमित्यादि। अतोऽधिदैविकादिशब्दा यौगिकाः सन्तो न भगवति वर्तितुमुत्सहन्ते। नाप्यन्ये कल्पनीया यद्धर्मा उपचाराद्भगवति भवेयुः। कल्प्यमानस्य सर्वानुस्यूतस्य तादृशस्य भगवद्व्यतिरिक्तस्यासम्भवात्। तस्मादन्तर्यामिब्राह्मणं कुत्राप्ययुक्तं सत् तत्तदभिमानिदेवतास्तुतिपरमेव तत्तदुपासनार्थं भविष्यति। अज्ञानं चासन्देहे सन्देहवदुपपद्यते। देहोऽसवोऽक्षा ( भा. ६।४।२५ ) इति न्यायाद्वा। न तु निषिद्धसञ्ज्ञा भगवति कल्पयितुं शक्येति। एवं प्राप्ते—

उच्यते।

---

अभिमानिपरत्वपक्षं स्वीकृत्य पूर्वपक्षमाहुः—**तत्रेति**। तत्तदधिकृत्य अधिकरणीभूतद्वैतवादिना तत्तदधिकारं प्राप्य यो जीवोऽभिमानेन अहममुकाधिकारीत्यभिमानेन तस्य जीवस्य योगवृत्त्या वाचक इति शेषः। **तादृशेति**। अधिदैवादिशब्दप्रयोगः। एवमधिदैवादिशब्दानां यौगिकत्वमुक्त्वाऽधिलोकशब्दस्य यौगिकत्वे वैदिकप्रसिद्धिमाहुः—**अधिलोकेति**। **शाखान्तरे** तैत्तिरीयोपनिषदि शिक्षाध्याये। तथाहि "पञ्चस्वधिकरणेषु अधिलोकमधिज्यौतिषमधिविद्यमधिप्रजमध्यात्मं ता महासंहिता इत्याचक्षते। अथाधिलोकं पृथिवी पूर्वरूपं द्यौरुत्तररूपं आकाशः सन्धिः वायुः सन्धानमित्यधिलोकमि"-त्यादि। **अन्यत्रैवेति**। पृथिव्यादिष्वित्यर्थः। **योगेति**। योगवृत्त्या वाचक इत्यर्थः। **न भगवतीति**। तथा च यौगिकशब्दानामौपचारिकत्वाभावादुपचारो भगवति न सम्भवतीति भावः। नन्वस्तु तेषामभिमानिवाचकत्वम्, तथापि तद्वृत्ति धर्माणां भगवत्युपचारेण ब्रह्मप्रतिपादकत्वं वाक्यस्य सुघटमेवेत्यत आहुः—**नापीति**। अन्याभिमानिवाचकत्वे बाधकमाहुः—कल्प्यमाहुः—**कल्प्यमानस्येति**। बहूनां कल्पनापेक्षया लाघवादेकस्यैव कल्पनोचितेति सर्वानुस्यूतं भगवद्व्यतिरिक्तं चेद्भवतीति ब्रह्मैव कल्पनीयम्, तच्च न सम्भवति। तत्र यौगिकशब्दानामुपचारेण प्रयोगाभावादित्यर्थः। उपसंहरति—**तस्मादिति**। ननु 'यं[1] पृथिवी न वेदे'त्यनेनाज्ञत्वकथनेन निन्दैव प्रतीयते, न तु स्तुतिरित्यत आहुः—**अज्ञानं चेति**। **सन्देहवदिति**। तैत्तिरीयशाखायां द्वितीयाष्टके ब्राह्मणे अन्तिमप्रपाठके उक्तम्। "सो अङ्ग वेद यदि वा न, वेद किंस्विद्वनं क उ स वृक्ष आसीत्। यतो द्यावापृथिवी निष्टतक्षु"रिति अत्रासन्देहेऽपि कल्पनया सन्देहोक्तिस्तद्वदत्रापि ज्ञाने अज्ञानकल्पनया श्रुत्युपपत्तिः कर्तव्येत्यर्थः। ननु ज्ञाने अज्ञानकल्पनायामसामञ्जस्यमत आहुः—**सन्देह इति**। षष्ठस्कन्धे दक्षस्तुतौ "देहोऽसवोऽक्षा मनवो भूतमात्रा नात्मानमन्यं च विदुः परं यत्। सर्वं पुमान् वेद गुणांश्च तज्ज्ञो न वेद सर्वज्ञमनन्तमीडे" असवः प्राणाः मनवोऽन्तःकरणानि देहादयः सर्वे आत्मानमन्यं च न विदुः परन्तु पुमान् जीवः सर्वं देहादिकं वेद सत्त्वादीन् गुणांश्च वेद एतादृशस्तज्ज्ञो जीवः सर्वज्ञं न जानाति एतादृशमनन्तमीडे। अत्र देहादीनां जडत्वाज्ज्ञानासम्भवात् इदं शशशृङ्गं न भवतीतिवत् न विदुरित्यन्तस्य निषेधो नोपपद्यते तस्य सत्त्वप्रतियोगिकत्वात्। तथापि नित्यानुवादेनोपपत्तिर्यथा, तथात्रापि तेन यावदुपपत्तिर्बोध्येति भावः। वेति पक्षान्तरे। नन्वेतादृशक्लिष्टकल्पनापेक्षयाऽधिदैवादिकं भगवन्नामैवास्त्वित्यत आहुः—**नन्त्विति**। **निषिद्धेति**। निकृष्टेत्यर्थः। तथा चाभिमानमूलिकायाः अधिदैवादिसञ्ज्ञाया निकृष्टत्वेन तदपेक्षया क्लिष्टकल्पनैवास्त्विति भावः।

सिद्धान्तमाहुः—**उच्यत इति**।

---

1 केषुचनादर्शेषु बाधकं केषुचनेषु च कल्प्यम्। हस्ताक्षरेषु तु कल्प्यमेव।

(अधिदैवादिषु भगवानेव)

**अन्तर्याम्यधिदैवादिषु।** अन्तर्याम्यधिदैवादिषु भगवानेव नान्यस्तादृशो भवितुमर्हति।

ननु चोक्तं भगवति कथं निषिद्धकल्पनमिति। तत्राह। **तद्धर्मव्यपदेशात्।** तेषां धर्मास्तद्धर्माः तत्प्रयुक्तबोधकाः। ते विशेषेण भगवत्यपदिश्यन्ते। सर्वेषां तत्तत्कार्यसामर्थ्यं च भगवतो, न तु स्वतस्तेषामिति। एवं च सत्यन्यत्सर्वं सङ्गतं भवति, तस्माद् ब्रह्मवाक्यमेव। अन्यथा त्वधिकरणरचना अन्तस्तद्धर्माधिकरणेन गतार्थत्वादयुक्तैव। १।२।१८॥

**न च स्मार्तमतद्धर्माभिलापात्॥ १।२।१९॥**

(साङ्ख्यमतनिरासः)

ननु ब्रह्मवादेऽन्तर्यामी न प्रसिद्धः। जीवब्रह्मजडानामेव प्रसिद्धत्वात्। अतोऽन्तर्यामिणः साङ्ख्यपरिकल्पितस्य गुणयोगात्तादृशस्य ब्रह्मत्वे वा कः पुरुषार्थो भवेत्। नहीश्वरं प्रकृतिधर्मारूढमन्तर्यामिणं मन्यन्ते, तादृशस्योपनिषत्स्वभावात्।

---

अर्हतीति। सर्वत्रैक एवेत्यन्येषां योग्यता न भवति, नानात्वादिति भावः।

सौत्रं हेतुमवतारयन्ति—**नन्विति।** **तद्धर्मव्यपदेशात्।** तेषां पृथिव्यादीनां भूताधारकत्वादिधर्माः, पृथिव्यग्निवाय्वादीनामधिष्ठातृदेवतानां च आवेशेन तत्कार्यकारित्वरूपा ये धर्मा अधिदैवत्वादयस्ते, सर्वेऽपि भगवत्प्रयुक्ताः, न तु स्वतः इति बोधकाः सन्तः भगवति व्यपदिश्यन्ते व्यवह्रीयन्ते न तु भगवत इयमधिदैवादिसम्बन्धेत्यर्थः। **तत्प्रयुक्तबोधका इति।** भगवत्प्रयुक्तबोधका इत्यर्थः। अयमेव पाठः समीचीन इति प्रतिभाति। यथामात्ये दण्डदानकर्तृत्वं राजप्रयुक्तम्, तथात्रापीति भावः। क्वचित्पुस्तके तत्प्रयुक्तिबोधिका इति पाठः। स च प्रकाशे व्याख्यातः। क्वचित्पुस्तके तत्प्रयुक्तयुक्तिबोधका इति पाठः। ते धर्मा भगवत्प्रयुक्ता इत्यर्थः। अमुमेवार्थं विशदयन्ति—**सर्वेषामिति।** **एवं च सतीति।** अन्तर्यामिणो ब्रह्मत्वे सिद्धे सतीत्यर्थः। 'सर्वं नान्योऽतोऽस्ति द्रष्टे'त्यादिब्रह्मबोधकं सर्वं वाक्यं सङ्गतं भवति। अत्र केषाञ्चिन्मते अन्तर्यामी किमधिदैवाद्यभिमानिदेवता परमात्मा वेति संशयः, तत्र देवतात्मेति पूर्वः पक्षः, अमृतत्वादीनां निर्देशात् परमात्मेति सिद्धान्तः, इत्येतादृश्यधिकरणरचनां दूषयितुमाहुः—**अन्यथेति।** **गतार्थत्वादिति।** तत्राप्यमृतत्वादीनां निर्देशात्तत्तुल्यत्वादयुक्तेत्यर्थः। अधिकं प्रकाशादनुसन्धेयम्।

साङ्ख्यमतसिद्धप्रधानविशिष्टोऽन्तर्यामी न भवतीत्याहुः—**न च स्मार्तमतद्धर्माऽभिलापात्।** आशङ्क्य सूत्रावतरणिकामाहुः—**नन्विति।** **ब्रह्मवादे** "सर्वं खल्विदं ब्रह्मे"ति श्रुतिप्रसिद्धे ब्रह्मवादे। **न प्रसिद्ध इति।** कार्यरूपेण कारणरूपेण वा न प्रसिद्ध इत्यर्थः। कारणरूपेण ब्रह्मणः कार्यरूपेणोभयोः प्रसिद्धिमाहुः—**जीवेति।** **साङ्ख्येति।** साङ्ख्यमते तु सगुणं ब्रह्मान्तर्यामीति प्रसिद्धम्। तत्तु स्वमते स्वीकर्तुं न शक्यते सगुणत्वात्। सगुणस्य ब्रह्मत्वे मोक्षरूपपुरुषार्थ एव न सिद्ध्येदित्यर्थः। कुतो न सिद्ध्येदित्यत आहुः—**नहीति।** **प्रकृतिधर्मारूढं,** प्रकृतिधर्माः सत्त्वादयः, तदवच्छिन्नं **मन्यन्ते।** वेदान्तिन इति शेषः। मन्यन्ते केऽपीत्यपि पाठः। केऽपि वेदान्तिन इत्यर्थः। कुतो न मन्यन्ते इत्यत आहुः—**तादृशस्येति।** तादृशस्य सगुणस्य। **उपनिषत्स्वभावादिति।** उपनिषत्सु

पूर्वपक्षन्यायेन स्तुतिपरता तन्मतस्य चाश्रौतत्वमित्याशङ्क्य परिहरति। न च स्मार्तम्। स्मृतिप्रसिद्धं स्मार्तं साङ्ख्यमतसिद्धमिति यावत्। तादृशमन्तर्यामिरूपमत्र भवितुं नार्हति। कुतः? अतद्धर्माभिलापात्। तद्धर्माणामनभिलापात्। तद्विरुद्धधर्माणां चाभिलापात्। नह्यत्र सत्त्वरजस्तमोगुणास्तत्कार्यं वाऽभिलप्यते तद्विरुद्धाश्चैते धर्मा यस्य पृथिवी शरीरमित्यादि। तस्मात्साङ्ख्यपरिकल्पितं नान्तर्यामिरूपमत्र भवितुमर्हतीति सिद्धम्। एवं सति ब्रह्मधर्मा एवैते भवन्तीति ब्रह्मवादः फलिष्यति॥ १।२।१९॥

शारीरश्चोभयेऽपि हि भेदेनैनमधीयते॥ १।२।२०॥

( जीवस्यान्तर्यामित्वनिरसनम् )

ननूक्तन्यायेन शारीर एव भवतु को दोषः किमिति ब्रह्मपरत्वं कल्प्यमिति। तत्राह।

शारीरश्च नेत्यनुवर्तते। शारीरश्च जीवो नान्तर्यामिब्राह्मणे तत्तदभिमानिरूपो यस्य पृथिवी शरीरमिति वाक्यानुरोधेन भवितुमर्हति, ततोऽपि भिन्नतयाऽन्तर्यामिणो वचनात्। उभयेऽपि काण्वमाध्यन्दिनब्राह्मणद्वयेऽपि एनं जीवं भेदेनैवाधीयते ब्राह्मणाः। निःसन्देहार्थमुभयग्रहणम्। "यो विज्ञाने तिष्ठन्नि"ति काण्वाः। "य आत्मनि तिष्ठन्नि"ति माध्यन्दिनाः। नचात्मशब्देनान्यः सम्भवति। अन्येषां पूर्वमेव पठितत्वादन्ते हि जीवमाह। तस्मादन्तर्यामिब्राह्मणे ब्रह्मैव वाक्यार्थ इति सिद्धम्॥ १।२।२०॥ ६॥

---

अभावात् अनुपलभ्यमानत्वादित्यर्थः। नन्वन्तर्यामिब्राह्मणस्य का वा गतिरित्यत आहुः—**पूर्वपक्षेति**। **तन्मतस्येति**। साङ्ख्यमतस्येत्यर्थः। तन्मतस्य श्रौतत्वे स्वीकृते अन्तर्यामिब्राह्मणं तत्परं भविष्यतीति क्षतिरिति भावः।

सूत्रार्थमाहुः—**नचेति**। स्मार्तत्वस्य समानलिङ्गकं विशेष्यमाहुः—**अन्तर्यामिरूपमिति**। हेत्वंशे अधिकांशं पूरयित्वा व्याख्यानमाहुः—**अतद्धर्मेति**। अधिकांशमाहुः—**तद्विरुद्धेति**। **अत्र** अस्मिन् विषयवाक्ये तत्कार्यं प्रपञ्चः सर्वोऽपि। विरुद्धधर्मानाहुः—**यस्येति**। आदिनाऽन्येषामपि सङ्ग्रहः॥ १९॥

**शारीरश्चोभयेऽपि हि भेदेनैनमधीयते** इदं सूत्रमवतारयन्ति—**नन्विति**। **उक्तन्यायेनेति**। सम्वर्गविद्यान्यायेनेत्यर्थः। ब्रह्मत्वेन जीवोपासना तस्यामभिहितेति सा यथा ब्रह्मविद्याङ्गभूता, तथा अन्तर्यामिब्राह्मणमपि देवतास्तुतिपरत्वेन ब्रह्मविद्याङ्गमिति जीव एवान्तर्यामी भवत्वित्यर्थः। **अनुवर्तते**। पूर्वसूत्रादिति शेषः।

अनुवृत्त्यनन्तरमर्थमाहुः—**शारीरश्चेति**। कुत्र वचनमित्यत आहुः—**उभयेऽपीति**। अस्यार्थमाहुः—**काण्वा इति**। विसन्देहार्थमिति विशेषेण ज्ञानं विज्ञानबुद्धिरिति सन्देहनिराकरणार्थमित्यर्थः। उभयग्रहणमिति सूत्रेति शेषः। नन्वतति व्याप्नोतीत्यात्मा एवं च योगेन कालादीनामपि ग्रहणं स्यादित्यत आहुः—**न चेति**। इति षष्ठाधिकरणम्॥ २०॥

---

१ अत्रेत्थं व्याख्यानान्तराणि—

(१) तत्र शाङ्कराः—पूर्वम् 'स्थानादिव्यपदेशाच्च' इति सूत्रे 'यः पृथिव्यां तिष्ठन्' इत्याद्यन्तर्या-

मिब्राह्मणस्थम् 'यश्चक्षुषि तिष्ठन्' इत्यादिवाक्यम् अन्तर्यामिणो ब्रह्मत्वं सिद्धवत्कृत्योदाहृतम्, तदाक्षिप्य समाधत्त इत्याक्षेपसङ्गत्येदमाह—अत्र पूर्वपक्षे प्रधानस्य योगिनो जीवस्य वोपास्तिः। सिद्धान्ते परमात्मन एवेति फलभेदः। बृहदारण्यके श्रूयते—'यः पृथिव्यां तिष्ठन्...पृथिवीमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः, इत्यादि। तत्र अन्तर्यामी प्रधानम्, उत अणिमादिविशिष्टो जीवः, उताहो परमात्मेति विशये प्रधानजीवाविति पूर्वः पक्षः। सिद्धान्तस्तु—इह अधिदैवादिषु श्रूयमाणोऽन्तर्यामी परमात्मैव। कुतः? तद्धर्मव्यपदेशात्। तस्य परमात्मनो ये धर्माः, सर्वान्तर्यामित्वात्मत्वामृतत्वादयः साधारणाः तेषामिह व्यपदेशादित्यर्थः॥

ननु प्रधानमन्तर्याम्यस्त्वित्याशङ्कयाह—स्मार्तं साङ्ख्यस्मृतिकल्पितं प्रधानं नान्तर्यामि। कुतः? अतद्धर्माभिलापात्। अत्र तच्छब्देन प्रधानमुच्यते, न तत् अतत्, प्रधानभिन्नपरमात्मा, तस्यैव चेतनस्य ये धर्माः 'अदृष्टो द्रष्टाऽश्रुतः श्रोता.....' इति वाक्यशेषे श्रूयमाणादृष्टत्वादयः तेषामिहाभिलापात् अभिधानादित्यर्थः॥

ननु तर्हि चेतनो जीवो योगी भवत्वन्तर्यामीत्यत आह—शारीरो नान्तर्यामीति पूर्वसूत्रात् नञोऽनुषङ्गः। कस्मात्? उभयेऽपि 'यो विज्ञाने तिष्ठन्...' इति काण्वाः, 'य आत्मनि तिष्ठन्.....' इति माध्यन्दिनाः, तेऽप्यन्तर्यामिणो भेदेन एनं शारीरं पृथिव्यादिवदधिष्ठानत्वेन नियम्यत्वेन च अधीयते। अतोऽधिदैवादिष्वन्तर्यामी परमात्मैवेति सिद्धम्॥

(२) रामानुजीये—"स्थानिव्यपदेशाच्च" इत्यत्र "यश्चक्षुषि तिष्ठन्" इत्यादिना प्रतिपाद्यमानं चक्षुषि स्थितिनियमनादिकं परमात्मन एवेति सिद्धं कृत्वाऽक्षिपुरुषस्य परमात्मत्वं साधितम्। इदानीं तदेव समर्थयते। काण्वा माध्यन्दिनाश्च वाजसनेयिनः समामनन्ति "यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः" इति। एवमब्ग्न्यन्तरिक्षवाय्वादित्यदिक्चन्द्रतारकाकाशतमस्तेजस्सु दैवतेषु च सर्वेषु च भूतेषु प्राणवाक्चक्षुःश्रोत्रमनस्त्वग्विज्ञानरेतस्स्वात्मीयेषु तिष्ठन्तं तत्तदन्तरभूतं तत्तदवेद्यं तत्तच्छरीरकं तत्तद्यमयन्तं कञ्चिन्निर्दिश्य "एष त आत्माऽन्तर्याम्यमृतः" इत्युपदिश्यते। माध्यन्दिनपाठे तु "यः सर्वेषु लोकेषु तिष्ठन् सर्वेषु वेदेषु यः सर्वेषु यज्ञेष्विति च पर्यायाः। "यो विज्ञाने तिष्ठन्" इत्यस्य पर्यायस्य स्थाने "य आत्मनि तिष्ठन्" इति पर्यायः। "स त आत्मान्तर्याम्यमृतः" इति विशेषः। तत्र संशय्यते, किमयमन्तर्यामी प्रत्यगात्मा, उत परमात्मेति? किं युक्तम्? प्रत्यगात्मेति। कुतः? वाक्यशेषे "द्रष्टा श्रोता" इति करणायत्तज्ञानताश्रुतेः। एवं द्रष्टुरेवान्तर्यामित्वोपदेशात्, "नान्योऽतोऽस्ति द्रष्टा" इति द्रष्ट्रन्तरनिषेधाच्चेत्येवं प्राप्ते—अभिधीयते, अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात्। अधिदैवाधिलोकादिपदचिह्नितेषु वाक्येषु श्रूयमाणोऽन्तर्याम्यपहतपाप्मा परमात्मा नारायणः। काण्वपाठसिद्धेभ्योऽधिदैवादिमद्भ्यो वाक्येभ्योऽधिकान्यधिलोकादिमन्ति वाक्यानि माध्यन्दिनपाठे सन्तीति ज्ञापनार्थमधिदैवाधिलोकादिष्वित्युभयोरुपादानम्। तदेवमुभयष्वपि वाक्येष्वन्तर्यामी परमात्मेत्यर्थः। कुतः? तद्धर्मव्यपदेशात्। परमात्मधर्मो ह्ययं यदेक एव सन् सर्वलोकसर्वभूतसर्वदेवादीन्नियमयतीति। तथा उद्दालकप्रश्नः "य इमं च लोकं परं च लोकं सर्वाणि भूतानि योऽन्तरो यमयति" इत्युपक्रम्य "तमन्तर्यामिणं ब्रूहि" इति। तस्य चोत्तरम् "यः पृथिव्यां तिष्ठन्" इत्यारभ्योक्तम्। तदेतद्

सर्वान् लोकान् सर्वाणि भूतानि सर्वाणि च दैवतानि सर्वान्वेदान् सर्वांश्च यज्ञानन्तः प्रविश्य सर्वप्रकारनियमनं सर्वशरीरतया सर्वात्मत्वं च सर्वज्ञसत्यसङ्कल्पात्पुरुषोत्तमादन्यस्य न सम्भवति। तथा "अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा", "तत्सृष्ट्वा तदेवानुप्राविशत् तदनुप्रविश्य सच्च त्यच्चाभवत्" इत्यादीन्यौपनिषदानि वाक्यानि परमात्मन एव सर्वस्य प्रशासितृत्वं सर्वस्यात्मत्व-मित्यादीनि वदन्ति । तथा सुबालोपनिषदि "नैवेह किञ्चनाग्र आसीदमूलमनाधारमिमाः प्रजाः प्रजायन्ते ।, दिव्यो देव एको नारायणः । चक्षुश्च द्रष्टव्यं च नारायणः। श्रोत्रं च श्रोतव्यं च नारायणः।" इत्यारभ्य "अन्तःशरीरे निहितो गुहायामज एको नित्यो यस्य पृथिवी शरीरं यः पृथिवीमन्तरे सञ्चरन्यं पृथिवी न वेद यस्यापः शरीरम्" इत्यादि "यस्य मृत्युः शरीरं यो मृत्युमन्तरे सञ्चरन्यं मृत्युर्न वेदैष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः" इति परस्यैव ब्रह्मणः सर्वात्मत्वं सर्वशरीरत्वं सर्वनियन्तृत्वं च प्रतिपाद्यते। स्वाभाविकं चामृतत्वं पर-मात्मन एव धर्मः। न परस्यात्मनः कारणयत्तद्रष्टृत्वादिकमपि तु स्वभावत एव। सर्वज्ञत्वसत्य-सङ्कल्पत्वाद्य स्वत एव। तथाच श्रुतिः "पश्यत्यचक्षुः स शृणोत्यकर्णः" "अपाणिपादो जवनो ग्रहीता" इति। नच दर्शनश्रवणादिशब्दाश्चक्षुरादिकरणजन्मानो ज्ञानस्य वाचकाः, अपि तु, रूपा-दिसाक्षात्कारस्य। स च रूपादिसाक्षात्कारः कर्मतिरोहितस्वाभाविकज्ञानस्य जीवस्य चक्षुरादि-करणजन्मा। परस्य तु स्वत एव। 'नान्योऽतोऽस्ति द्रष्टा" इत्येतदपि पूर्ववाक्योदितान्नियन्तुर्द्रष्टु-रन्यो द्रष्टा नास्तीति वदति। "यं पृथिवी न वेद" "यमात्मा न वेद" इत्येवमादिभिर्वाक्यैः पृथिव्यात्मादिनियाम्यैरनुपलभ्यमान एव नियमयतीति यत्पूर्वमुक्तं तदेव "अदृष्टो द्रष्टाऽश्रुतः श्रोता" इति निगमय्य "नान्योऽतोऽस्ति" इत्यादिना तस्य नियन्तुर्नियन्त्रन्तरं निषिध्यते। "एष त आत्मा" "स त आत्मा" इति च त इति व्यतिरेकविभक्तिनिर्दिष्टस्य जीवस्यात्मतयोपदि-श्यमानोऽन्तर्यामी न प्रत्यगात्मा भवितुमर्हति ॥

"न च स्मार्तमतद्धर्माभिलापाच्छरीरश्च"। स्मार्तं प्रधानम्। शारीरो जीवः। स्मार्तं च शारीरश्च नान्तर्यामी। अतद्धर्माभिलापात्। तयोरसम्भावितधर्माभिलापात्। स्वभावत एव सर्वस्य द्रष्टृत्वं सर्वस्य नियन्तृत्वं सर्वस्यात्मत्वं स्वत एवामृतत्वं च तयोर्न सम्भावनागन्धमर्हति। एतदुक्तम्भवति। यथा स्मार्तमचेतनं सर्वज्ञत्वनियन्तृत्वसर्वात्मत्वादिकं नार्हति, तथा, जीवोऽप्य-तद्धर्मत्वादिति। अमीषां गुणानां परमात्मन्यन्वयः प्रत्यगात्मनि व्यतिरेकश्च सूत्रद्वयेन दर्शितः ॥

उभये माध्यन्दिनाः काण्वाश्चान्तर्यामिणो नियाम्यत्वेन वागादिभिरचेतनैः सममेनं शारीरमपि विभज्याधीयते। "य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मा-नमन्तरो यमयति स त आत्माऽन्तर्याम्यमृतः" इति माध्यन्दिनाः, "यो विज्ञाने तिष्ठन्" इत्यादि च काण्वाः। परमात्मनियाम्यतया तस्माद्विलक्षणत्वेनैनमधीयत इत्यर्थः। अतोऽन्तर्यामी प्रत्यगा-त्मनो विलक्षणोऽपहतपाप्मा परमात्मा नारायण इति सिद्धम् ॥

(३) माध्वे—"यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयत्येष त आत्मान्तर्याम्यमृत." इत्यादिना अन्तर्याम्युच्यते। तत्र चैतदमृतमित्यमृतत्व-मुच्यते। स च यस्य पृथिवी शरीरमित्यादिना सर्वात्मकत्वात् प्रकृतिः जीवो वा युक्तः। न हि विष्णोः पृथिव्यादिशरीरत्वमङ्गीक्रियत इत्यत आह—यं पृथिवी न वेद पृथिव्या अन्तर इत्यादिनाऽऽधिदैवा-

दिषु तद्धर्मव्यपदेशाद्विष्णुरेवान्तर्यामी । स हि "न ते विष्णोऽजायमानो न जातः स योऽतोऽश्रुतो गतो मतो दृष्टः सर्वेषां भूतानामन्तरं पुरुष" इत्यादिना विदितोऽन्तरश्च ॥

त्रिगुणत्वादिधर्मानुक्तेर्न स्मृत्युक्तं प्रधानमन्तर्यामी ॥

"य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयत्येष स आत्माऽन्तर्याम्यमृतः । यो विज्ञाने तिष्ठन् विज्ञानादन्तरो यं विज्ञानं न वेद यस्य विज्ञानं शरीरमि"त्युभयेऽपि शाखिनो भेदेनैनं जीवमधीयते । "क्रीयते नित्यमेवास्माद्विष्णोस्तु जगदीदृशम् । रमते च परो ह्यस्मिन् शरीरं तस्य तद् जगत्" इति वचनाच्च शरीरत्वविरोधः ॥

(४) निम्बार्कः—"यः पृथिव्यां तिष्ठन्नि"त्युपक्रम्य "एष ते आत्माऽन्तर्यामी"ति पृथिव्याद्यधिदेवादिसर्वपर्यायेषु श्रूयमाणोऽन्तर्यामी परमात्मैव । कुतः ? तद्धर्मस्य सर्वनियन्तृत्वादेरिह व्यपदेशात् । नच प्रधानमन्तर्यामिशब्दवाच्यं, चेतनधर्माणां सर्वनियन्तृत्वसर्वद्रष्टृत्वादीनां चाभिलापात् । नच जीवोऽन्तर्यामी यतश्चैनमन्तर्यामिणो भेदेन "यो विज्ञाने तिष्ठन्नि"ति काण्वाः, "य आत्मनी"ति माध्यन्दिनाश्चोभयेऽप्यधीयते ॥

(५) भैक्षवे—सर्वान्तरत्वश्रुत्या सर्वान्तर्यामित्वं लब्धमिति सर्वान्तर्यामित्वादिगुणानवधारयितुं वाक्यविशेषं ब्रह्मपरत्वेनावधारयति । काण्वमाध्यन्दिनयोः पञ्चमे अध्याये "यः पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयत्येष त आत्मा अन्तर्याम्यमृतः" इत्यादि श्रूयते । तत्र संशयः, किमत्रान्तर्यामी प्रधानादिः, किं वा हिरण्यगर्भादिः, कश्चिदसिद्धजीवः, वा किं परमात्मेति । तत्रायं निर्णयः, परमात्मैवात्रान्तर्यामी, अधिदेवाधिभूताध्यात्मसु निर्दिष्टः, देवं विराजमधिकृत्य वर्तते यद्वस्तु पृथिव्याद्यधिष्ठातृचेतनपर्यन्तं तदधिदैवं स्थावरजङ्गमादिरूपम्, भूतमधिकृत्य वर्तते यद्वस्तु चेतनपर्यन्तं तदधिभूतम्, आत्मानमुपासकमधिकृत्य वर्तते यच्चक्षुरादिजीवान्तं तदध्यात्ममित्यर्थः । कुत एतत्, तत्राह, तद्धर्मव्यपदेशादिति । परमात्मनो ये धर्माः यं पृथिव्यादि न वेद एष त आत्मा अमृतः अदृष्टो द्रष्टेत्यादिरूपास्तेषां व्यपदेशादित्यर्थः । किञ्च, अत्रान्तःशब्दो राजादीनां च व्यावर्तनाय श्रुत्युक्तः, ते हि राजदेवादयो नियम्यस्य शरीरचित्तादीन्द्रियं नियमयन्त एव चेतनं नियमयन्ति, परमेश्वरस्तु सर्गादिकाले शुद्धं चेतनजातमेव प्रकृतिसंयोगाय प्रेरयति, अतो नियम्यस्योपाधिप्रेरणं विनैव स्वेच्छया प्रेरणमन्तर्यामित्वं परमेश्वरस्यासाधारणं धर्मान्तरमप्यस्मिन्वाक्ये व्यपदिष्टमिति मन्तव्यम्, देवानां च यत्किञ्चित्प्रकृतिपुरुषप्रेरकत्वस्वीकारेऽपि न सर्वान्तर्यामित्वमिति । स्मृतिषु स्पष्टं प्रपञ्चितमिति स्मार्त्तं, प्रधानादिजडवर्गः, तदत्र नान्तर्यामी, ये तद्धर्मा न भवन्ति यमनद्रष्टृत्वादयस्तेषामत्राभिलापादित्यर्थः । शारीरस्तर्ह्यन्तर्यामी भवतु, अदृष्टादिद्वारानियन्तृत्वसम्भवात् । यं पृथिवी न वेदेत्यादिवाक्यानां विविक्तस्वरूपदर्शनपरत्वेनोपपत्तेरित्यत्राह । नच स्मार्तमतद्धर्माभिलापात् । शारीरेत्यत्र नेत्यनुवर्त्तते शारीरो जीवोऽपि नान्तर्यामित्वेनोक्तः । हि यस्मात्समानप्रकरणा उभये काण्वा माध्यन्दिनाश्च जीवाद्भेदेनैनमन्तर्यामिणं पठन्ति "यो विज्ञाने तिष्ठन्" "य आत्मनि तिष्ठन्नि"ति । अत्र ह्यपौनरुक्त्या चान्तरशब्दो भिन्नवाचीति अन्तर्यामिवाक्यमीश्वरसाधने, तस्मात्तत्वे च बलवत्प्रमाणमिति मन्तव्यम् । इयं चान्तर्याम्यवस्था न प्रवेशादिनाशी, यद्यपि ब्रह्मणोऽधिष्ठानावस्थावदेव नित्या, ईश्वरप्रेरणां विना प्रलये साम्यरूपगुणपरिणामानुपपत्तेः, तथापि "प्रधानं पुरुषं चैव प्रविश्ये"त्यादिवाक्येषु प्रवेशकार्यस्य सृष्ट्यादिकारणीभूतस्य क्षोभस्यानित्यतयैवान्तर्यामित्वमपि कादाचित्कं क्वचित् व्यवह्रियते, ततोऽति-

रिक्तत्वेन चावस्थान्तरं विश्वाधारत्वामात्रं गुणत्रयापेक्षया तुरीयमिति नित्यमिति चोच्यत इति बो-ध्यम्। अदृश्यत्वादिगुणानन्तर्यामिणोऽवधारयितुं वाक्यान्तरं तत्प्रतिपादकं ब्रह्मपरत्वेनावधारयति।

(६) भास्करीये—"य इमं च लोकं परं च लोकं सर्वाणि च भूतान्यन्तरो यमयती"त्युपक्रम्य श्रूयते। "यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीम-न्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः" इति। तत्र, अधिदैवतमधिलोकमधिवेदमधियज्ञमधिभूतम-ध्यात्मं च कश्चिदन्तरवस्थितो यमयिता, किं वा जीवः, किं वा परमात्मेति। किं तावद्युक्तम्? जीवः स्यात्, स हि कार्यकारणसङ्घातमात्मीयं भोगार्थमन्तरवस्थितो यमयतीति क्लिश्यते। न परमात्मा तस्याकार्यकारणत्वात्। देवता वाऽभिमानिनी नियन्त्री स्यादिति प्राप्त उच्यते। अन्तर्यामी पर एव। कुतः? तद्धर्मव्यपदेशात्। सर्वभूतयमयितृत्वं नाम तस्य धर्मो नान्यस्यावकल्पते। समस्तं हि विकारजातमनुप्रविश्य कारणत्वान्मृदादिवत्सर्वशक्तित्वाच्च नियमयितृत्वमुपपन्नमा-त्मत्वममृतत्वं च तस्मिन्नेव मुख्यम्। अतः श्रुतिलिङ्गाभ्यामीश्वरोऽन्तर्यामीति निश्चीयते। श्रुतिर्नाम यत्र श्रवणादेवार्थोऽवगम्यते न निमित्तान्तरात् स श्रुत्यर्थः। श्रवणं श्रुतिः। यत्र सामर्थ्यादर्थ-निश्चयस्तल्लिङ्गम्। संहत्यार्थाभिधानं पदानां यत्र तद्वाक्यं मुख्यया वृत्त्या गौण्या लक्षणया वा। प्रकरणं तु व्याख्यातं पुरस्तात्। यं पृथिवी न वेदेति च देवतापरिग्रहे नोपपद्यते, सा हि स्वात्मानं विजानीयात्। "एष त आत्मे"ति चाव्यतिरेकषष्ठी जीवपरिग्रहे नोपपद्यते। यं नियमयत्यन्तर्यामी तदीयमेव कार्यकारणमनुप्रविश्य नियमयति सर्वशक्तित्वादिति नास्य कार्यकारणमपरमपेक्षणीयम्॥

यद्यप्यदृष्टत्वयो धर्माः प्रधानस्यापि सम्भाव्यन्ते तथापि न स्मार्तं प्रधानमिह नियन्तृ परिगृ-ह्यते। स्मृतिप्रतिपाद्यं स्मार्तम्। कस्मादतद्धर्माभिलापात्। तस्य धर्मस्तद्धर्मः न तद्धर्मोऽतद्धर्मः तस्याभिलापादभिधानाच्चेतनधर्मोपदेशादित्यर्थः। अदृष्टो द्रष्टा अश्रुतः श्रोतेति ईक्षतेर्नाशब्दमि-त्यत्र निरस्तमप्यदृष्टादिधर्मसम्भवादाशङ्क्य पुनर्निरस्यते॥

यद्यचेतनमन्तर्यामि न सम्भवति, मा भूत्, चेतनत्वात्तु जीवः स्यात्, स हि द्रष्टा श्रोता चेत्याशङ्क्य निराकरणायाह नच स्मार्तमतद्धर्माभिलापादिति॥

शारीरेत्यत्र नेति पूर्वसूत्राच्चशब्देनानुकृष्यते। न जीवोऽन्तर्यामी तस्य पृथिव्यादिषु नियमन-सामर्थ्यं न सम्भाव्यते। अत्र चैकस्यैव सर्वविकारेषु नियन्तृत्वं श्रूयते। अपि चोभये काण्वा माध्य-न्दिनाश्च विज्ञानात्मनोर्भेदेनैनमन्तर्यामिणमभिधीयते। यो विज्ञाने तिष्ठन्निति काण्वाः। य आत्मनि तिष्ठन्निति माध्यन्दिनाः। विज्ञानशब्देन च विज्ञानप्रधानो जीव एवोच्यते। अत्र केचिदाहुः। ननु कथमेकस्मिन् देहे द्वौ द्रष्टारौ सम्भवत इति। को विरोधो येनैवमुच्यत इति। श्रुतिर्हि नान्यो-ऽतोऽस्ति द्रष्टेति प्रकृतादन्तर्यामिणोऽन्यं वारयतीति। अत्रोच्यते। यथैवेयमेव भेदं दर्शयति तथा पूर्वमुदाहृतम्। आत्मनि तिष्ठन्निति भेदं दर्शयति किं न पश्यसि। न ह्यस्याः श्रुतेर्वचनं सुभगावचन-मिवानादरणीयम्। प्रामाण्यतुल्यत्वादतो भेदाभेदौ ग्रहीतव्यौ। न च तात्पर्यकृतो विशेषोऽन्तर्या-मिस्वरूपविज्ञानपरत्वात् प्रकरणस्य नियन्त्रन्तराशङ्कानिवृत्त्यर्थमपि शक्यते वर्णयितुम्। नान्यः सर्वस्य द्रष्टास्ति सर्वथा यं पृथिवी न वेदेति देवतादिक्षेत्रज्ञानुपन्यस्य तदपलापो न युज्यते॥

(७) श्रीमद्वल्लभाचार्यमतेऽयमभिप्रायः—पूर्वाधिकरणे भोगवैलक्षण्यसाधकं वैशेष्यमक्षिपुरुष उपपादितम्। वाजसनेयिना मण्डलब्राह्मणे, 'स एष ऐन्द्रो योऽयं दक्षिणेऽक्षन् पुरुषोऽथेयमि-न्द्राणी'त्यादिना हृदयदेशे तयोर्भोगस्य श्रवणात्। अतःपरं तदेव वैशेष्यममृतत्वादन्तर्यामिणि

सर्वहृदयदेशवर्तिन्यस्तीति बोधनायेदमधिकरणमारभ्यते । काण्वमाध्यन्दिनयोर्बृहदारण्यके श्रूयते । 'य इमं च लोकं परं च लोकं सर्वाणि च भूतान्यन्तरो यमयती'त्युपक्रम्य, 'यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो, यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृत'इति । एतदग्रे ईदृशान्येव अप्स्वग्न्याकाशवाय्वादित्यचन्द्रतारकदिग्विद्युत्स्तनयित्नुवाक्यानि । तत्समाप्तौ, इत्यधिदैवतमित्युपसंहारः । ततः, सर्वलोकः, सर्ववेदः, सर्वयज्ञः, सर्वभूत इति वाक्यानि । तेषु, अधिलोकम्, अधिवेदम्, अधियज्ञम्, अधिभूतमिति क्रमेणोपसंहारः । ततः प्राणवाक्चक्षुःश्रोत्रमनस्त्वक्तेजस्तमोरेतःप्रभृतीन्यात्मान्तानि वाक्यानि । तेष्वध्यात्ममित्युपसंहारः । काण्वपाठे त्वन्तरिक्षमधिकम् । आत्मस्थाने च विज्ञानं पठ्यते । ततः, अदृष्टो द्रष्टा, अश्रुतः श्रोता, अमतो मन्ता, अविज्ञातो विज्ञाता, नान्योऽतोऽस्ति द्रष्टा, नान्योऽतोऽस्ति श्रोता, नान्योऽतोऽस्ति मन्ता, नान्योऽतोऽस्ति विज्ञातैष त आत्माऽन्तर्याम्यमृतोऽतोऽन्यदार्त'मिति । माध्यन्दिनपाठे तु, स त आत्मेत्युच्यते । वाक्यार्थस्तु य इमं च लोकमेतज्जन्मीनं देहं, परं च लोकं जन्मान्तरीयं देहं, सर्वाणि भूतानि ब्रह्मादितृणस्तम्बान्तानि पृथिव्यादीनि वा, अन्तरः आभ्यन्तरवर्ती सन् यमयति स्वेच्छानुरूपं व्यापारं कारयति, इत्येवं कार्यद्वारा तं ज्ञापयित्वा तत्स्वरूपप्रश्ने उद्दालकेन कृते याज्ञवल्क्यस्तदुक्तमनूद्य, यः पृथिव्यामित्यादीनि वाक्यान्याह । तत्र यः पृथिव्यां तिष्ठन् सोऽन्तर्यामीत्युक्ते आधारात्मकजडव्यावृत्तावपि तथावस्थितेषु प्राणिष्वतिप्रसङ्ग इति तद्वारणाय, यं पृथिवी न वेदेति, पृथिव्यभिमानी यं न जानाति । तेन ततोऽभिन्नाज्जडाज्जीवाच्च भेदेऽपि तस्य तत्र स्थितेः प्रयोजनं वक्तुं, यस्य 'पृथिवी शरीरं यः पृथिवीमन्तरो यमयतीति । तथाच, 'गामाविश्य च भूतानि धारयाम्यहमोजसे'ति भूतधारणकार्यार्थं सशरीरं तन्नियमनं च तस्य सिद्ध्यर्थम् । अनियमने तद्विसम्मतौ तत्कार्यं न सिद्ध्येदिति । अत्र द्वितीयमन्तरपदं नामधातुनिष्पन्नम् । अन्तरं करोत्यन्तरयतीत्यन्तर इति तदन्तःस्थापकत्वबोधनार्थम् । अन्यथा पौनरुक्त्यापत्तेरिति । एवम्प्रकारेण सर्वत्र बोध्यः ।

अत्र प्रश्नवाक्येऽनुक्तानां धर्माणां कथनं याज्ञवल्क्यस्यान्तर्यामिज्ञानज्ञापकम् । तत्र संशयस्तु, किमन्तर्यामी सर्वत्रैकः परमात्मा, उत दैवादीनामभेदात्तत्र तत्र भिद्यत इति । संशयबीजं तु सर्वत्रान्तर्यामिणां तत्तद्वाक्येषु चाधिदैवतादिपदैरुपसंहारः । ननु तैरुपसंहारस्य कथं संशयजनकतेति चेत्, इत्थम्; यद्यपि दैवेष्वित्यधिदैवादिव्युत्पत्त्या तेषां यौगिकत्वं, तथापि गीतायां, "पुरुषश्चाधिदैवतम्" "स्वभावोऽध्यात्ममुच्यते", "अधिभूतं क्षरो भावः", "अधियज्ञोऽहमेवात्रे"ति योगमनादृत्य रूढिबोधनादेतेषां नामत्वमवधार्यते । समानन्यायादधिवेदाधिलोकयोरपि नामत्वम् । नपुंसकलिङ्गं तु लोकाश्रयत्वादशिष्यम् । तेन तेषामपि सम्भवदुक्तिकत्वात् संशयजनकत्वम् । नचान्तस्तद्धर्मोपदेशादित्यधिकरणे सर्वान्तर्वर्तिनः परब्रह्मत्वं निर्णीतमिति पुनः किमर्थोऽयं प्रयास इति शङ्क्यम्; अधिदैवादिपदानामुक्तरीत्या नामत्वात्, तेषां च तत्तद्वाक्यान्ते प्रयुक्तत्वात्तद्वाक्येषु च शब्दतोऽन्तर्यामिणः सन्निधानेऽप्यर्थतोऽभिमानिनामपि सन्निधानात्तत्संज्ञाभूतैरेतैः पदैरन्तर्याम्याधारभूतस्याभिमानिनो धर्मा भगवत्युपचर्यन्ते, उत, तत्तत्संज्ञाविशिष्टाः पुरुषादय एवान्तर्यामित्वेन स्तूयन्त इति सन्देहसम्भवेन प्रयासस्य सार्थक्यात् । एवं सिद्धे सार्थक्ये तत्रेदं प्राप्तम्, तेषु दैवादिष्वधिकरणेष्वेतेषु योगेन वर्तन्ते पुरुषादिरूढ्याऽत उभयेऽपि भगवदाधारभूता अतस्तद्धर्मा भगवत्यौपचारिका इति ज्ञापनायात्र ते शब्दाः प्रयुज्यन्ते । नचैतेषां भावनात्वमिद

शङ्क्यम्, तैत्तिरीयाणां शिक्षोपनिषदि, अथाधिलोकम्, अथाध्यात्ममित्येवं लोकादिष्वेव तेषां प्रसिद्धत्वात्। वैदिकप्रसिद्धेश्च सर्वतो बलिष्ठत्वात्। नचाभिमानिनिष्ठका एवात्रादरणीया इत्यपि शङ्क्यम्। एतेषु शब्देषु केषाञ्चिद्वाक्यसङ्घाते, केषाञ्चिद् बहुवचनान्तसर्वलोकादिशब्दोपबद्धवाक्यान्ते प्रयोगेण, तेषु सर्वानुस्यूतस्यैकस्याभिप्रेततया अभिमन्तुश्च प्रतिनियततया तादृशत्वाभावेन, तस्य सञ्चिततयाऽवकल्पयितुमशक्यत्वात्। अतोऽन्तर्यामिब्राह्मणं कुत्राप्ययुक्तं सत्तत्तदभिमानिदेवतास्तुतिपरमेव तत्तदुपासनार्थं भविष्यति। नच "यं पृथिवी न वेदे"त्यादिभिरुक्तस्याज्ञानस्य चेतनधर्मत्वादभिमानिनां च स्वज्ञानाचदसङ्गतिः शङ्क्या। नित्यानुवादरूपत्वात्। नचात्र मानाभावः। षष्ठस्कन्धे दक्षस्तुतौ "देहोऽसवोऽक्षा मनवो भूतमात्रा नात्मानमन्यं च विदुः परं य"दितिदेहादीनां जडानामप्यज्ञानस्योक्तत्वात्, तस्य च नित्यानुवादत्व एव सम्भवात्, तन्न्यायस्यात्रापि सुवचत्वात्, तस्य सङ्गतावन्यस्याभिमानिव्यावर्तकस्यात्राभावात्। नचायमाग्रहो निर्मूल इति शङ्क्यम्। अभिमानकृतसञ्ज्ञाया निकृष्टतया भगवति कल्पयितुमयुक्तत्वादिति, एवं प्राप्ते—

उच्यते। अन्तर्यामीत्यादि। अन्तर्यामी अधिदैवादिषु सर्वेषु भगवानेव, नान्यः सर्वानुस्यूतो भवितुमर्हति। ननु निषिद्धसञ्ज्ञानां भगवत्ययुक्तत्वमुक्तं, तत्कथं परिहार्यम्। तत्राह,तद्धर्मव्यपदेशात्। तेषां धर्मास्तद्धर्मा,देवाधिष्ठातृत्वाभिमानप्रयुक्तानि कर्माणि,तेषां व्यपदेशात्,भगवत्युपचारेणाधिदैवतादिपदैः प्रयोगात्। अयमर्थः। विषयवाक्ये उद्दालकेनैतल्लोकपरलोकयोः सर्वभूतानां चान्तवर्तित्वे सति तन्नियामकोऽन्तर्यामिशब्दवाच्यः पृष्टः, तत्र चेद्याज्ञवल्क्यस्तावदेव वदेत्, तदाऽन्तर्यामिज्ञातृत्वं न स्फुटीभवेत्, अत उद्दालकश्रुतांस्तद्धर्मान् विशेषतः पृथिव्यादिवाक्यैः प्रकाशयति। तत्र पृथिव्यग्निकार्यस्य भगवत्प्रयुक्तत्वं गीताद्वादशाध्याये, "गामाविश्य च भूतानि", "पुष्णामि चौषधीः सर्वाः सोमो भूत्वा", "अहं वैश्वानरो भूत्वे"त्यत्र स्फुटमुक्तम्। ततः "सर्वस्य चाहं हृदि सन्निविष्ट" इत्यादिनाऽन्तर्यामित्वं चोक्तम्। तृतीयस्कन्धे च "यदो ददाति श्वसतां पदं यन्नियमादनम्" इत्याकाशकार्यस्य "भीषास्मा"दिति श्रुतौ वाय्वादित्याग्नीन्द्रमृत्यूनां कार्यस्य तथात्वं बोधितम्। प्रकृते मृत्स्विन्द्रस्थाने विद्युत्स्तनयित्नु। एवमन्येषामपि बोध्यम्। अत्र देवधर्माणां भगवत्प्रयुक्तत्वबोधनाद्, परलोकात्मकजन्मान्तरीयदेहयमयितृत्वं साधितम्। ततो लोकपदस्य भूरादिषु प्रसिद्धत्वात् 'अथाधिलोक'मिति प्रतिज्ञाय तत्सम्बन्धिनः सर्वस्य तथात्वं बोधितम्। ततः कथं सर्वलोकान् यमयतीत्यपेक्षायां वेदयज्ञाभ्यां यमनबोधनायाधिवेदाधियज्ञवाक्ये उक्ते। ततः सर्वभूतयमनं पूर्ववदुक्त्वा एतल्लोकयमनबोधनाय दशाध्यात्मवाक्यान्युक्तानि। एवं सर्वं तत्कृतं कार्यमुक्त्वा तत्स्वरूपमिदमित्थतया वक्तुमशक्यमिति बोधनाय "अदृष्टो द्रष्टा" इत्याद्युक्त्वा "अतोऽन्यदार्त"मित्युपसंहारे तस्यामृतसुखरूपत्वं यदोक्तं तदाऽन्तर्यामिस्वरूपज्ञातृत्वं याज्ञवल्क्यस्यावगत्य उद्दालकस्तूष्णीम्भूत इत्युद्दालकोपरमोक्त्या सूचितम्। तेन सर्वथा सर्वेषु कार्येषु यत्सामर्थ्यं तदऽन्तर्यामिप्रयुक्तमेव, न स्वत इति साधितम्। अतोऽधिदैवादिपदप्रवृत्तिनिमित्तभूतो योऽभिमानः, सोऽपि भगवत्प्रयुक्त इति तेषां पदानां भगवत्यौपचारिकत्वबोधनायैव तेषां कथनम्। नो चेत्, तदनुक्तावपि विवक्षितज्ञापनस्य सुखेन सिद्धेस्तद्वैयर्थ्यमेव स्यात्। एवं च सौत्रमधिदैवादिष्विति पदं देहलीदीपवदुभयत्रापि सम्बध्यते। तथा चानेनास्पष्टलिङ्गेनान्तर्यामिण एकत्वसाधनान्नाधिकरणवैयर्थ्यम्। यद्यपि, श्रुतावधिदैवतपदं, सूत्रे चाधिदैवपदम्, तथापि, गीतायां'मधिदैवं किमुच्यत'

इति प्रश्ने 'पुरुषश्चाधिदैवतम्'मिति प्रत्युत्तराद्वयोरेकार्थता निश्चीयत इति न कोऽपि दोषः । एवं दोषनिवृत्तेऽन्यत् सर्वं सुसङ्गतमेवेतीदं ब्रह्मवाक्यमेवेति सिद्धम् ॥ १८ ॥

ननु "सर्वं खल्विदं ब्रह्म," "सदेव सोम्येदमग्र आसीदि"त्यादिषु सिद्धे ब्रह्मवादे कार्यत्वेन जडजीवौ, कारणत्वेन ब्रह्मैवेत्येवं त्रय एव पदार्थाः सिद्धाः । अन्तर्यामी तु नोभयथापि सिद्धः । अतो नियमनरूपेण चेतनधर्मेणात्मत्वेन च जडं प्रधानं व्युदस्य, ब्रह्म वा जीवो वा वक्तव्यः । तत्र ब्रह्मणोऽशरीरत्वात् साधारणजीवानां च सर्वनियामकत्वासम्भवात् कार्येश्वरभूत एव कल्पनीयः । तादृशश्च प्रकृत्यभिमान्येव भवतीति तादृशस्य साङ्ख्यपरिकल्पितस्य सिद्धौ, तस्य ब्रह्मत्वे वा साधिते, ब्रह्मवादिना न कोऽपि पुरुषार्थः । उपनिषत्सु तादृशस्य दर्शनात् । अतः पूर्वपक्षन्यायेनान्तर्यामिब्राह्मणस्य प्रकृत्यभिमानिस्तावकत्वं वा, तेनैव साङ्ख्यमतस्य श्रौतत्वं वाऽङ्गीकार्यमित्यत आह न चेत्यादि । स्मार्तं साङ्ख्यस्मृतिसिद्धमन्तर्यामिस्वरूपं न भवति । कुतः ? अतद्धर्माभिलापात् । तद्धर्माणामभिलापस्याभावात् । अतद्धर्माणामभिलापाच्च । न ह्यत्र सत्त्वरजस्तमोगुणास्तित्वादि वा, अत्राभिमन्तुः समष्टिभूते शरीरे विद्यमाने व्यष्टिभूतानि पृथिव्यादीनि न युगपच्छरीराणि भवितुमर्हन्ति । नच योगिवदिति वाच्यम्, गुणप्रधानभावगमकानुपलम्भात् । नापि गमकं कल्पयितुं शक्यम्, तद्धर्मानभिलापस्य बाधकस्योक्तत्वात् । एवं सत्येतेषां ब्रह्मधर्मत्वाद् ब्रह्मवादः फलिष्यति । तस्माद् ब्रह्मवाक्यत्वमक्षुण्णम् ॥ १९ ॥

ननु पूर्वपक्षोक्तन्यायेन शारीर एवान्तर्याम्यस्तु, तथाच यथा सम्यगादिविद्याः प्रतीकविषयास्तथान्तर्यामिब्राह्मणमपीति देवतास्तावकत्वेऽपि ब्रह्मवादविरोधाभावाच्चास्य ब्रह्मवाक्यत्वमित्यत आह । शारीर इत्यादि । नेत्यनुवर्तते । शारीरश्च । अभिमानिजीवोऽपि नाऽन्तर्यामिब्राह्मणे प्रतिपाद्यः । कुतः ? हि यतो हेतोरेनमभिमानिनं तेऽन्तर्यामिणो भिन्नतया अधीयते । यं पृथिवी न वेदेत्यादिभिस्ततोऽपि भिन्नतया कथयन्ति । नच देहोऽस्त्वयोऽक्षा इति न्यायः शङ्क्यः । सर्वानुस्यूतत्वस्य बाधकत्वेनाभिमानिनः प्रतिपादयितुमशक्यत्वादित्युक्तम् । किञ्च, उभयेऽपि काण्वा माध्यन्दिनाश्च शाखिन एनं शारीरं भेदेन 'यो विज्ञाने तिष्ठन्', 'य आत्मनि तिष्ठ'न्नित्येयमन्तर्याम्याधारतया तद्भिन्नत्वेनाधीयते कथयन्ति । तस्मान्मुक्तोऽमुक्तो वा केवलोऽपि जीवो नात्र प्रतिपाद्यः । तस्मादन्तर्यामिब्राह्मणे ब्रह्मैव वाक्यार्थ इति सिद्धम् ॥ २० ॥



## ७ अदृश्यत्वाधिकरणम् ।

### अदृश्यत्वादिगुणको धर्मोक्तेः ॥ १।२।२१ ॥

( परापरविद्यावेदनत्वेन विषयवाक्यावतारः )

मुण्डके हि श्रूयते । कस्मिन्नु भगवो विज्ञाते ( मुं. १।१।३ ) इति पृष्टे—द्वे विद्ये वेदितव्ये ( मुं. १।१।४ ) इत्युत्तरमाह ।

---

प्रसङ्गसङ्गत्या पूर्वाधिकरणविषयवाक्येऽदृष्टो द्रष्टेत्युक्तम् । तत्र किं कारणमित्याकाङ्क्षायां निवर्तकमदृश्यत्वाधिकरणमाहुः—अदृश्यत्वादिगुणको धर्मोक्तेः । अत्र सम्पूर्णं मुण्डकं विषयवाक्यं बोध्यम् ।

ॐ ब्रह्मा देवानां प्रथमः सम्बभूव विश्वस्य कर्ता भुवनस्य गोप्ता । स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राह ॥ १ ॥

अथर्वणे यां प्रवदेत ब्रह्माथर्वा तां पुरोवाचाङ्गिरे ब्रह्मविद्याम् । स भारद्वाजाय सत्यवाहाय प्राह भारद्वाजोऽङ्गिरसे परावराम् ॥ २ ॥

शौनको ह वै महाशालोऽङ्गिरसं विधिवदुपसन्नः पप्रच्छ । कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवतीति ॥ ३ ॥

तस्मै स होवाच ॥ द्वे विद्ये वेदितव्ये इति ह स्म यद्ब्रह्मविदो वदन्ति परा चैवापरा च ॥४॥

तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति । अथ परा यया तदक्षरमधिगम्यते ॥ ५ ॥

यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं तद्भूतयोनिं परिपश्यन्ति धीराः ॥ ६ ॥

यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः सम्भवन्ति । यथा सतः पुरुषात्केशलोमानि, तथाऽक्षरात्सम्भवतीह विश्वम् ॥ ७ ॥

तपसा चीयते ब्रह्म ततोऽन्नमभिजायते । अन्नात्प्राणो मनः सत्यं लोकाः कर्मसु चामृतम् ॥८॥

यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः । तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते ॥ ९ ॥ इति प्रथममुण्डके प्रथमः खण्डः ॥ १ ॥

तदेतत्सत्यं मन्त्रेषु कर्माणि कवयो यान्यपश्यंस्तानि त्रेतायां बहुधा सन्ततानि । तान्याचरथ नियतं सत्यकामा एष वः पन्थाः सुकृतस्य लोके ॥ १ ॥

यदा लेलायते ह्यर्चिः समिद्धे हव्यवाहने । तदाज्यभागावन्तरेणाहुतीः प्रतिपादयेच्छ्रद्धया हुतम् ॥ २ ॥

यस्याग्निहोत्रमदर्शमपौर्णमासमचातुर्मास्यमनाग्रयणमतिथिवर्जितं च । अहुतमवैश्वदेवमविधिना हुतमासप्तमांस्तस्य लोकान्हिनस्ति ॥ ३ ॥

काली कराली च मनोजवा च सुलोहिता या च सुधूम्रवर्णा । स्फुलिङ्गिनी विश्वरुची च देवी लेलायमाना इति सप्त जिह्वाः ॥ ४ ॥

एतेषु यश्चरते भ्राजमानेषु यथाकालं चाहुतयो ह्याददायन् । तं नयन्त्येताः सूर्यस्य रश्मयो यत्र देवानां पतिरेकोऽधिवासः ॥ ५ ॥

एह्येहीति तमाहुतयः सुवर्चसः सूर्यस्य रश्मिभिर्यजमानं वहन्ति । प्रियां वाचमभिवदन्त्योऽर्चयन्त्य एष वः पुण्यः सुकृतो ब्रह्मलोकः ॥ ६ ॥

प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म । एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्युं ते पुनरेवापियन्ति ॥ ७ ॥

अविद्यायामन्तरे वर्तमानाः स्वयं धीराः पण्डितम्मन्यमानाः । जङ्घन्यमानाः परियन्ति मूढा अन्धेनैव नीयमाना यथान्धाः ॥ ८ ॥

अविद्यायां बहुधा वर्तमाना वयं कृतार्था इत्यभिमन्यन्ति बालाः । यत्कर्मिणो न प्रवेदयन्ति रागात्तेनातुराः क्षीणलोकाश्च्यवन्ते ॥ ९ ॥

इष्टापूर्तं मन्यमाना वरिष्ठं नान्यच्छ्रेयो वेदयन्ते प्रमूढाः । नाकस्य पृष्ठे ते सुकृतेऽनुभूत्वेमं लोकं हीनतरं वा विशन्ति ॥ १० ॥

तपःश्रद्धे ये ह्युपवसन्त्यरण्ये शान्ता विद्वांसो भैक्षचर्यां चरन्तः । सूर्यद्वारेण ते विरजाः प्रयान्ति यत्रामृतः स पुरुषो ह्यव्ययात्मा ॥ ११ ॥

परीक्ष्य लोकान्कर्मचितान्ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन । तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् ॥ १२ ॥

तस्मै स विद्वानुपसन्नाय सम्यक् प्रशान्तचित्ताय शमान्विताय । येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम् ॥ १३ ॥ इति प्रथममुण्डके द्वितीयः खण्डः ॥ २ ॥

तदेतत्सत्यं यथा सुदीप्तात्पावकाद्विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः । तथाक्षराद्विविधाः सोम्य भावाः प्रजायन्ते तत्र चैवापियन्ति ॥ १ ॥

दिव्यो ह्यमूर्तः पुरुषः सबाह्याभ्यन्तरो ह्यजः । अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः ॥२॥

एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी ॥३॥

अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग्विवृताश्च वेदाः । वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा ॥ ४ ॥

तस्मादग्निः समिधो यस्य सूर्यः सोमात्पर्जन्य ओषधयः पृथिव्याम् । पुमान् रेतः सिञ्चति योषितायां बह्वीः प्रजाः पुरुषात्सम्प्रसूताः ॥ ५ ॥

तस्मादृचः साम यजूꣳषि दीक्षा यज्ञाश्च सर्वे क्रतवो दक्षिणाश्च । सम्वत्सरश्च यजमानश्च लोकाः सोमो यत्र पवते यत्र सूर्यः ॥ ६ ॥

तस्माच्च देवा बहुधा सम्प्रसूताः साध्या मनुष्याः पशवो वयाꣳसि । प्राणापानौ व्रीहियवौ तपश्च श्रद्धा सत्यं ब्रह्मचर्यं विधिश्च ॥ ७ ॥

सप्त प्राणाः प्रभवन्ति तस्मात्सप्तार्चिषः समिधः सप्त होमाः । सप्त इमे लोका येषु चरन्ति प्राणा गुहाशया निहिताः सप्त सप्त ॥ ८ ॥

अतः समुद्रा गिरयश्च सर्वेऽस्मात्स्यन्दन्ते सिन्धवः सर्वरूपाः । अतश्च सर्वा ओषधयो रसाश्च येनैष भूतैस्तिष्ठते ह्यन्तरात्मा ॥ ९ ॥

पुरुष एवेदं विश्वं कर्म तपो ब्रह्म परामृतम् । एतद्यो वेद निहितं गुहायां सोऽविद्याग्रन्थिं विकिरतीह सोम्य ॥ १० ॥ इति द्वितीयमुण्डके प्रथमः खण्डः ॥ १ ॥

आविः सन्निहितं गुहाचरन्नाम महत्पदमत्रैतत्समर्पितम् । एजत्प्राणन्निमिषच्च यदेतज्जानथ सदसद्वरेण्यं परं विज्ञानाद्यद्वरिष्ठं प्रजानाम् ॥ १ ॥

यदर्चिमद्यदणुभ्योऽणु च यस्मिँल्लोका निहिता लोकिनश्च । तदेतदक्षरं ब्रह्म स प्राणस्तदु वाङ्मनः । तदेतत्सत्यं तदमृतं तद्वेद्धव्यं सोम्य विद्धि ॥ २ ॥

धनुर्गृहीत्वौपनिषदं महास्त्रं शरं ह्युपासानिशितं सन्धयीत । आयम्य तद्भावगतेन चेतसा लक्ष्यं तदेवाक्षरं सोम्य विद्धि ॥ ३ ॥

प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते । अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत् ॥४॥

यस्मिन्द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः । तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथामृतस्यैष सेतुः ॥ ५ ॥

अरा इव रथनाभौ संहता यत्र नाड्यः । स एषोऽन्तश्चरते बहुधा जायमानः । ओमित्येवं ध्यायथ आत्मानं स्वस्ति वः पाराय तमसः परस्तात् ॥ ६ ॥

यः सर्वज्ञः सर्वविद्यस्यैष महिमा भुवि । दिव्ये ब्रह्मपुरे ह्येष व्योम्न्यात्मा प्रतिष्ठितः । मनोमयः प्राणशरीरनेता प्रतिष्ठितोऽन्ने हृदयं सन्निधाय । तद्विज्ञानेन परिपश्यन्ति धीरा आनन्दरूपममृतं यद्विभाति ॥ ७ ॥

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ॥ ८ ॥

हिरण्मये परे कोशे विरजं ब्रह्म निष्कलम् । तच्छुभ्रं ज्योतिषां ज्योतिस्तद्यदात्मविदो विदुः ॥९॥

न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः । तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति ॥ १० ॥ इति द्वितीयमुण्डके द्वितीयः खण्डः ॥ २ ॥

ब्रह्मैवेदममृतं पुरस्ताद्ब्रह्म पश्चाद्ब्रह्म दक्षिणतश्चोत्तरेण । अधश्चोर्ध्वं च प्रसृतं ब्रह्मैवेदं विश्वमिदं वरिष्ठम् ॥ ११ ॥

द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति ॥ १ ॥

समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः । जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः ॥ २ ॥

यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् । तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति ॥ ३ ॥

प्राणो ह्येष यः सर्वभूतैर्विभाति विजानन्विद्वान्भवते नातिवादी । आत्मक्रीड आत्मरतिः क्रियावानेष ब्रह्मविदां वरिष्ठः ॥ ४ ॥

सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग्ज्ञानेन ब्रह्मचर्येण नित्यम् । अन्तःशरीरे ज्योतिर्मयो हि शुभ्रो यं पश्यन्ति यतयः क्षीणदोषाः ॥ ५ ॥

सत्यमेव जयते नानृतं सत्येन पन्था विततो देवयानः । येनाक्रमन्त्यृषयो ह्याप्तकामा यत्र तत्सत्यस्य परमं निधानम् ॥ ६ ॥

बृहच्च तद्दिव्यमचिन्त्यरूपं सूक्ष्माच्च तत्सूक्ष्मतरं विभाति । दूरात्सुदूरे तदिहान्तिके च पश्यत्स्विहैव निहितं गुहायाम् ॥ ७ ॥

(पूर्वपक्षे साङ्ख्यमतसमर्थनम्)

**तत्र नामरूपात्मकजगतो विज्ञानार्थं नामांशो वेदादिरूपांशो परा च। तत्र वेदादिविद्यायां न सन्देहः। परायां सन्दिह्यते किमेषा साङ्ख्यमतविद्या ब्रह्मविद्या वेति। साङ्ख्यधर्माभिलापात्सन्देहः। "अथ परा यया तदक्षरमधिगम्यते यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं**

---

न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वा। ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यते निष्कलं ध्यायमानः ॥ ८ ॥

एषोऽणुरात्मा चेतसा वेदितव्यो यस्मिन्प्राणः पञ्चधा संविवेश। प्राणैश्चित्तं सर्वमोतं प्रजानां यस्मिन्विशुद्धे विभवत्येष आत्मा ॥ ९ ॥

यं यं लोकं मनसा संविभाति विशुद्धसत्त्वः कामयते यांश्च कामान्। तं तं लोकं जयते तांश्च कामांस्तस्मादात्मज्ञं ह्यर्चयेद्भूतिकामः ॥ १० ॥ इति तृतीयमुण्डके प्रथमः खण्डः ॥ १ ॥

स वेदैतत्परमं ब्रह्म धाम यत्र विश्वं निहितं भाति शुभ्रम्। उपासते पुरुषं ये ह्यकामास्ते शुक्रमेतदतिवर्तन्ति धीराः ॥ १ ॥

कामान्यः कामयते मन्यमानः स कामभिर्जायते तत्र तत्र। पर्याप्तकामस्य कृतात्मनस्तु इहैव सर्वे प्रविलीयन्ति कामाः ॥ २ ॥

नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन। यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम् ॥ ३ ॥

नायमात्मा बलहीनेन लभ्यो न च प्रमादात्तपसो वाप्यलिङ्गात्। एतैरुपायैर्यतते यस्तु विद्वांस्तस्यैष आत्मा विशते ब्रह्मधाम ॥ ४ ॥

सम्प्राप्यैनमृषयो ज्ञानतृप्ताः कृतात्मानो वीतरागाः प्रशान्ताः। ते सर्वगं सर्वतः प्राप्य धीरा युक्तात्मानः सर्वमेवाविशन्ति ॥ ५ ॥

वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्त्वाः। ते ब्रह्मलोकेषु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे ॥ ६ ॥

गताः कलाः पञ्चदश प्रतिष्ठा देवाश्च सर्वे प्रतिदेवतासु। कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकीभवन्ति ॥ ७ ॥

यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय। तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम् ॥ ८ ॥

स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति नास्याब्रह्मवित्कुले भवति तरति शोकं तरति पाप्मानं गुहाग्रन्थिभ्यो विमुक्तोऽमृतो भवति ॥ ९ ॥

तदेतदृचाऽभ्युक्तम्। क्रियावन्तः श्रोत्रिया ब्रह्मनिष्ठाः स्वयं जुह्वत एकर्षिं श्रद्धयन्तः। तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णम् ॥ १० ॥

तदेतत्सत्यमृषिरङ्गिराः पुरोवाच नैतदचीर्णव्रतोऽधीते नमः परमऋषिभ्यो नमः परमऋषिभ्यः ॥ ११ ॥ इति तृतीयमुण्डके द्वितीयः खण्डः ॥ २ ॥

अथ भाष्यम्। इति पृष्टे शौनकेनेति शेषः। उत्तरमङ्गिरा आह। परापरविद्याद्वयं सर्वविज्ञानार्थं बोध्यम्। सन्देहबीजमाहुः—साङ्ख्यधर्मेति। अभिलापमेवाहुः—**अथे**त्यादिना **सृष्टिमा**हेत्यन्तेन। अदृश्यं ज्ञानेन्द्रियाणामग्राह्यम्। अग्राह्यं कर्मेन्द्रियाणामग्राह्यम्। अगोत्रं अनन्वयम्। शेषं

तदव्ययम्। यद्भूतयोनिं परिपश्यन्ति धीराः" ( मुं. १।१।५-६ ) इत्यादि। अग्रे च "दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः। अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः" (मुं. २।१।२) इत्युक्त्वा-"एतस्माज्जायते" (मुं. २।१।३ ) इति निरूप्य "अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ" (मुं.२।१।४) इत्यादिना रूपमुक्त्वा पुनः पुरुषात्सृष्टिमाह। तत्रैकप्रकरणत्वादेकवाक्यता वक्तव्या। तत्राक्षरपुरुषयोर्भेदः प्रतीयते। तयोरुभयोरपि सृष्टिः। तद् ब्रह्मवादे न सङ्गच्छते। तस्मात्साङ्ख्यमतमेवैतत्। प्रकृतिपुरुषयोः श्लिष्टत्वादन्यतरप्राधान्येनोभयोः स्रष्टृत्वम्। उभयात्मकत्वाज्जगतः। रूपमपि समष्टिव्यष्टीनामग्रे ह्युत्पत्तिरिति तिरोहितरूपत्वान्न ब्रह्मविद्या, किन्तु, स्मृतिरेवेति ब्रह्मविद्या वेदविद्योपचाराद्धेति। एवं प्राप्त उच्यते-

( साङ्ख्यनिरासः )

अदृश्यत्वादिगुणकः परमात्मैव ब्रह्मविज्ञानेनैव सर्वविज्ञानात्। तत एव विद्याया अपि परत्वम्। अक्षरस्यापि ब्रह्मत्वम्। पुरुषस्यापि तयोः परापरभावो भेदश्च। एतादृश एव हि ब्रह्मवादः। तत्र प्रथममक्षरस्य ब्रह्मत्वमाह अदृश्यत्वादिगुणकः परमात्मैव। कुतः? धर्मोक्तेः। "तथाक्षरात्सम्भवतीह विश्वम्" (मुं.१।१।७) इति। इयं चोपनिषत्। न ह्यन्यत्र ब्रह्मव्यतिरिक्ताज्जगदुत्पत्तिरस्ति। पुरुषस्य ब्रह्मत्वं निःसन्दिग्धमेव। ईषदानन्दतिरोभावेन ब्रह्माक्षरमुच्यते। प्रकटानन्दः

---

स्पष्टम्। अग्रे इति। द्वितीयमुण्डके प्रथममुण्डके भूतयोनिपदवाच्यं साङ्ख्यमतसिद्धं प्रधानमुक्तम्। द्वितीयमुण्डके च योषितायां बह्वीः प्रजाः पुरुषात्सम्प्रसूता इत्युक्तम्। इदमपि साङ्ख्यमतमेवेति सन्देहबीजमित्यर्थः। पूर्वपक्षमाहुः—तत्रेति। सर्वत्र मुण्डके एकवाक्यता तदैव सम्भवति यदा साङ्ख्यमतावलम्बनेनैकप्रकरणं चेदेव। तत्तु वेदान्तिमते न सङ्गच्छते इत्याहुः—तत्रेति। भेद इति। "अक्षरात्परतः पर" इति वाक्ये भेदः प्रतीयते इत्यर्थः। नन्वस्तु वेदान्तिमते तयोर्भेदस्योक्तत्वादित्यत आहुः—तयोरिति। सृष्टिरिति। "एतस्माज्जायते प्राण" इत्यत्र वेदान्तिमते उभयोः सृष्ट्यभावादिति भावः। न सङ्गच्छत इति। एकवाक्यतेति शेषः। एतन्मुण्डकप्रतिपाद्यम्। ननु साङ्ख्ये प्रकृतिः कर्त्री पुरुषस्तु निर्लेप इत्यत आहुः—प्रकृतीति। कार्येण कारणानुमानमपि दर्शयति—उभयेति। प्रकृतिपुरुषात्मकत्वादित्यर्थः। रूपमपीति। 'अग्निर्मूर्द्धादिव' इत्यादिनोक्त रूपमपीत्यर्थः। समष्टेः श्लिष्टस्य एतत्कुतो ज्ञायते इत्यत आहुः—व्यष्टीनामिति। ब्रह्मवादे न सङ्गच्छते इत्युक्तम्, तदाहुः—तिरोहितेति। सच्चिदानन्दस्य मुण्डके क्वाप्यभावादित्यर्थः। ननु मुण्डके ब्रह्मविद्यापदमस्तीत्यस्य का वा गतिरित्यत आहुः—ब्रह्मविद्येति। तथा च ब्रह्मपदस्य वेदवाचकत्वादिति भावः। ननु विद्ययोः परापरविभागकथनाद्वेदविद्या न भवतीत्यत आहुः—उपचारादिति। लक्षणादित्यर्थः। स्मृतावपि। ब्रह्मविद्यासादृश्याद्गौर्वाहीकवदुपचार इति भावः। सिद्धान्तमाहुः—उच्यत इति।

ननु कुतः परमात्मा इत्यत आहुः—ब्रह्मविज्ञानेनेति। एवकारस्य अन्ययोगव्यवच्छेदकार्यकत्वान्न श्रुतेर्व्यवच्छेदः। तत एव ब्रह्मप्रतिपादकत्वादेव। नन्वेवं चेदेकविज्ञानेनेति न सङ्गच्छते। विद्यायामक्षरपुरुषयोरुभयोरप्युक्तत्वादित्यत आहुः—अक्षरस्यापीति। अभेदमेवाहुः—तत्रेति। धर्ममेवाहुः—तथेति। विश्वोत्पत्तिजनकत्वस्य ब्रह्मधर्मकत्वे युक्तिमाहुः—इयमिति। न चैवं सति 'अक्षरात्परतः पर' इति परापरविभागो न सङ्गच्छत इत्यत आहुः—ईषदिति। तथा चैकत्वे क्षतिर्नास्तीति भावः।

पुरुष इति। "ब्रह्मविदाप्नोति परम्" (तै.२।१) इत्यत्रैव तथा निर्णयात्। तस्माददृश्यत्वादिगुणकः परमात्मैव ॥ १।२।२१ ॥

विशेषणभेदव्यपदेशाभ्यां च नेतरौ ॥ १।२।२२ ॥

( परापरविद्या न प्रकृतिपुरुषबोधिका )

ननु पूर्वपक्षन्यायेन ब्रह्मविद्याख्यायामपि स्मृतिः ब्रह्मविद्यैवास्तु। "द्वे ब्रह्मणी वेदितव्ये मूर्तं चामूर्तं च" (मै. ६।२२) इत्यत्र विकारस्यैव ब्रह्मपदवाच्यत्वम्। अतः प्रकृतिपुरुषावेव वाक्यार्थ इति परिहरति।

इतरौ न भवतो वाक्यार्थरूपौ। कुतः? विशेषणभेदव्यपदेशाभ्याम्। विशेषणभेदो व्यपदेशश्च ताभ्यामदृश्यत्वादयो गुणा न प्रकृतेर्भवन्ति सर्वस्यापि तद्विकारत्वात्। न हि यद्दर्शनेन सूक्ष्म दृश्यत इति वदितुं युक्तम्। ब्रह्मवादे पुनः सर्वभवनसमर्थत्वाद् ब्रह्मणि विरोधाभावः। नहि नित्यं सदैकरूपं विक्रियमाणं च भवितुमर्हति। सर्वब्रह्मधर्मतुल्यत्वे तदेव ब्रह्मेति जितं ब्रह्मवादिभिः। "यः सर्वज्ञः सर्ववित्" (मुं. १।१।९) इत्यादयस्तु सुतरामेव न प्रकृतिधर्माः। व्यवधानाच्च न पुरुषसम्बन्धः। अक्षरनिरूपण एव पुरुषविशेषणाच्च। "येनाक्षरं पुरुषं वेद सत्यम्" (मुं. २।१३) इति। तस्मादक्षरविशेषणानि न प्रकृतिविशेषणानि नापि पुरुषविशे-

---

एतेनाक्षरं प्रकृतिरिति साङ्ख्यमतं निरस्तम्। अत्र पूर्वोक्तं स्मारयन्ति—**ब्रह्मविदेति**। **निर्णयादिति**। आनन्दमयाधिकरणे द्वितीयवर्णके निर्णयादित्यर्थः॥ २१ ॥

**विशेषणभेदव्यपदेशाभ्यां च नेतरौ**। अस्यावतरणिकामाहुः—**नन्विति**। **पूर्वपक्षन्यायेनेति**। अक्षरशब्देन प्रधानमिति पूर्वपक्षन्यायेनेत्यर्थः। **ब्रह्मविद्यैवेति**। स्मृतेरेवेयं सञ्ज्ञेत्यर्थः। ननु कस्मिन् विज्ञाते इत्यत्र का गतिरिति चेन्न, तत्र कस्मिन्नित्यस्य कस्मिन् मते इत्यर्थेन साङ्ख्यमतज्ञाने सति सर्वज्ञत्वं सम्पद्यत इति भावः। ननु प्रकृतेः कुत्र ब्रह्मपदवाचकत्वमुक्तं येन स्मृतेरपि ब्रह्मविद्यात्वं स्यादित्यत आहुः—**द्वे ब्रह्मणीति**। मूर्तिः प्रकृतिः।

सूत्रार्थमाहुः—**इतराविति**। प्रथमं व्युत्पादयन्ति—**अदृश्येति**। **सर्वस्यापीति**। दृश्यस्य घटादेरित्यर्थः। ननु घटादिदर्शनं कथं भवतीत्यत आहुः—**न हीति**। ननु प्रपञ्चस्य ब्रह्मरूपत्वात्तद्दर्शनेन ब्रह्मदर्शनं भविष्यतीति कथमदृश्यत्वं ब्रह्मणीत्यत आहुः—**ब्रह्मवाद इति**। ब्रह्मणस्तु विरुद्धधर्माश्रयत्वमित्यसकृदवोचाम। ननु यथा भवद्भिर्ब्रह्मणि विरुद्धधर्माश्रयत्वं स्वीक्रियते तथाऽस्माभिः प्रधानेऽपि स्वीक्रियते इत्यत आहुः—**न हीति**। प्रधानमिति शेषः। प्रकृतेर्नित्यत्वादिकं साङ्ख्यैरनङ्गीकारादिति भावः। ननु तदपि स्वीक्रियते इत्यत आहुः—**सर्वेति**। तथा च प्रधानेति ब्रह्मण एव नामान्तरं न त्वतिरिक्तः पदार्थ इति प्रतिज्ञा संन्यासस्य निग्रहस्थानत्वाज्जितमित्यर्थः। अन्यमपि विशेषणभेदमाहुः—**य इति**। नन्वेतानि पुरुषविशेषणान्यस्त्वित्यत आहुः—**व्यवधानादिति**। प्रथममुण्डके अदृश्यत्वादयो द्वितीयमुण्डके पुरुषनिरूपणमिति व्यवधानेनासत्त्वभावादित्यर्थः। अन्यं विशेषणमाहुः—**अक्षरेति**। एवं चात्राक्षरात्मक एव पुरुषोऽभिप्रेतः। अक्षरनिरूपणे पुरुषविशेषणदर्शनान्नाक्षरशब्देन प्रधानमिति भावः। तदेवाहुः—**येनेति**।

पणानि साङ्ख्यपुरुषस्य। नहि दिव्यत्वादयो गुणाः पुरुषस्य भवन्ति। न हि तन्मते पुरुषभेदो ह्यङ्गीक्रियते जीवब्रह्मवत्। न च तस्य बाह्याभ्यन्तरत्वम्, सर्वत्वाभावात्। न हि तस्माज्जायते प्राणादिः। तस्मात्पुरुषविशेषणान्यपि न साङ्ख्यपुरुषविशेषणानि। अतो विशेषणभेदो व्यपदेशिभेदश्च ब्रह्मविद्यैवैषेति। "स ब्रह्मविद्यां सर्वविद्यामि"त्युपक्रमे "प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्" (मुं.१।२।१३) इति मध्ये। तेषामेवैतां ब्रह्मविद्यां वदे"त्यन्ते। तस्माच्च साङ्ख्यपरिकल्पितौ प्रकृतिपुरुषौ वाक्यार्थः। नहि ब्रह्मा ज्येष्ठपुत्राय स्मृतिरूपां विद्यां वदतीति चकारार्थः॥ १।२।२२॥

रूपोपन्यासाच्च॥ १।२।२३॥

(रूपोपन्यासादपि न प्रकृतिपुरुषौ)

"अग्निर्मूर्धा चक्षुषी" (मुं. २।१।४) इत्यादिरूपं न हि प्रकृतिपुरुषयोरन्यतरस्य सम्भवति। ब्रह्मवादे पुनर्विश्वकायस्यैतद्रूपम्। सूत्रविभागात् पुनर्विभागात्पुनर्मुख्योपपत्तिरेषेति सूचितम्। चकारेण श्रुत्यन्तराविरोध एकवाक्यता च सर्वेषां वेदान्तानामिति। तस्मादक्षरशब्देन पुरुषशब्देन च ब्रह्मैव प्रोक्तमिति ब्रह्मविद्यैवैषेति सिद्धम्॥ १।२।२३॥७॥

---

**साङ्ख्यपुरुषस्येति**। नापि पुरुषविशेषणानि च साङ्ख्यपुरुषस्य विशेषणानीत्यन्वयः। ननु पुरुषविशेषणानां साङ्ख्यमतसिद्धपुरुषे सत्त्वे किं बाधकमत आहुः—**न हीति**। पुरुषस्य साङ्ख्यमतसिद्धपुरुषस्य। ननु पुरुषाणां मध्ये एकः कश्चित्तादृशः स्वीक्रियते इत्यत आहुः—**न हीति**। कैश्चित्साङ्ख्यमते पुरुषभेदोऽपि स्वीक्रियते इत्यत आहुः—**जीवब्रह्मवदिति**। तथा च तन्मतेऽपि समानत्वमेव सर्वेषां, न तु नियम्यनियामक भाव इति भावः। ननु दिव्यत्वमलौकिकत्वमेकत्वं जात्यभिप्रायेण, एवं रीत्या यथा कथञ्चित्सर्वेषां विशेषणानां पुरुषे सम्भव इत्यत आहुः—**न चेति**। अत्र हेतुमाहुः—**सर्वत्वेति**। साङ्ख्यपुरुषात्सृष्टिर्नास्तीत्याहुः—**न हीति**। तथा च महदादिक्रमेण साङ्ख्यमते सृष्टिरिति भावः। इतः परं व्यपदेशभेदं व्युत्पादयन्ति—**व्यपदेशेत्यादिना**। व्यपदेशो नाम व्यवहारः। तथा चादौ मध्ये चान्ते ब्रह्मविद्यामित्येव व्यवहारः, न तु साङ्ख्यविद्यामिति व्यपदेशभेद इत्यर्थः। चकारसूचितं हेत्वन्तरमाहुः—**ब्रह्मेति**। **ज्येष्ठेति**। तथा च वेदाध्यापनयोग्यता सूचिता॥ २२॥

**रूपोपन्यासाच्च**। रूपस्योपन्यासः। 'अग्निर्मूर्द्धा चक्षुषी'त्यादिरूपं तस्य उपन्यासः श्रुतावस्ति। ननु तावता किं सम्पन्नमित्यत आहुः—**न हीति**। न हि रूपं सम्भवतीत्यन्वयः। **सूत्रविभागादिति**। विशेषणभेदव्यपदेशरूपोपन्यासेभ्य इति तु न सूचितम्। किन्तु रूपोपन्यासादिति भिन्नं सूचितम्। तेन कृत्वा किं ज्ञायते, रूपोपन्यासरूपा मुख्योपपत्तिरित्यर्थः। चकारस्वारस्यमाहुः—**चकारेणेति**। चकारेण एतद्द्वयं साङ्ख्यमतस्य बाधकं सङ्गृहीतमिति शेषं पूरयित्वा व्याख्येयम्। 'एकोऽहं बहु स्या'मिति श्रुत्यन्तरविरोधः। तन्मते प्रकृतेः सकाशात् सृष्टिः, न तु प्रकृतिरूपं सर्वं एकवाक्यता भङ्गश्च एतद्द्वयं बाधकमित्यर्थः। स्वमते सिद्धा या सर्वेषां वेदान्तानामेकवाक्यता सा च साङ्ख्यमते न सम्भवति सर्वेषां वेदान्तवाक्यानां प्रकृतिपरत्वाभावात्[1] तथा चैतद्द्वयं तन्मतस्य बाधकमित्यर्थः। इति सप्तमाधिकरणम्॥२३॥

---

१ अत्रेत्थं व्याख्यानान्तराणि—

(१) तत्र शाङ्कराः—पूर्वं प्रधानविरोधिद्रष्टृत्वादिधर्मवशात् न प्रधानमन्तर्यामीत्युक्तम्। तर्हि

तद्विरोधिधर्माणामत्राश्रवणात् प्रधानमेवादृश्यत्वादिगुणको भूतयोनिः स्यादिति प्रत्युदाहरणसङ्गत्येद-माह—पूर्वपक्षे प्रधानस्य शारीरस्य वा ध्यानम्, सिद्धान्ते निर्विशेषब्रह्मज्ञानमिति फलभेदः । मुण्डके श्रूयते—'यत्तदद्रेश्यमग्राह्यम्…तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः' इति । तत्र किम्, अदृश्य-त्वादिगुणको भूतयोनिः प्रधानम्, उत शारीरः, किंवा परमात्मेति सन्देहे, प्रधानशारीराविति पूर्वः पक्षः । सिद्धान्तस्तु—'यत्तदद्रेश्यम्…' इत्यादौ श्रुता अदृश्यत्वादयो गुणाः यस्य, सोऽदृश्यत्वादि-गुणको भूतयोनिः परमात्मैव । कुतः ? धर्मोक्तेः । 'यः सर्वज्ञः सर्ववित्' इत्यादिश्रूयमाणसर्वज्ञत्वादेः परमेश्वरधर्मस्य भूतयोनौ निर्देशात् । न ह्यचेतने प्रधाने किञ्चिज्ज्ञे शारीरे वा सर्वज्ञत्वादिधर्मः सम्भवति, येन भूतयोनिता स्यात् । अतो भूतयोनिः परमात्मैवेत्यर्थः ॥

भूतयोनेः परमात्मत्वे हेत्वन्तरमाह—विशेषणं च भेदव्यपदेशश्च विशेषणभेदव्यपदेशौ ताभ्याम् इतरौ प्रधानजीवौ न भूतयोनी भवतः । तत्र 'दिव्यो ह्यमूर्तः पुरुषः…' इत्यादिना दिव्यत्वादिविशे-षणश्रवणात् । न जीवः; 'अक्षरात्परतः परः' इत्यक्षरस्याव्याकृतस्य परमात्मनश्च भेदेन व्यपदिष्टत्वात् न प्रधानं भूतयोनिः; अपि तु परमात्मैवेत्यर्थः ॥

भूतयोनेः परमात्मत्वे हेत्वन्तरमाह—'अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ' इत्यादिसर्वकार्यात्मकरूपस्यो-पन्यासात् परमात्मैव भूतयोनिरिति वृत्तिकारमतम् । 'पुरुष एवेदं विश्वं कर्म' इत्यादिसर्वात्मकरूपो-पन्यासात् परमात्मैव भूतयोनिरिति भगवत्पादीयमतम् ॥

(२) रामानुजीये—आथर्वणिका अधीयते; "अथ परा यया तदक्षरमधिगम्यते । यत्तदद्रेश्यमग्रा-ह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादम् । नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परि-पश्यन्ति धीराः ।" तथोत्तरत्र "अक्षरात्परतः परः" इति । तत्र सन्दिह्यते, किमिहादृश्यत्वादिगुण-कमक्षरमक्षरात्परतः परश्च प्रकृतिपुरुषावथोभयत्र परमात्मैवेति । किं तावत्प्राप्तम् ? प्रकृतिपुरुषाविति । कुतः ? "अस्याक्षरस्यादृष्टो द्रष्टा" इत्यादाविव न द्रष्टृत्वादिश्चेतनधर्मविशेष इह श्रूयते । "अक्षरा-त्परतः परः" इति च सर्वस्माद्विकारात्परभूतादक्षरादस्मात्परः क्षेत्रज्ञः समष्टिपुरुषः प्रतिपाद्यते । एत-दुक्तं भवति । रूपादिमत्स्थूलरूपाचेतनपृथिव्यादिभूताश्रयं दृश्यत्वादिकं प्रतिषिध्यमानं पृथिव्यादिस-जातीयसूक्ष्मरूपाचेतनमेवोपस्थापयति । तच्च प्रधानमेव । तस्मात्परत्वं च समष्टिपुरुषस्यैव प्रसिद्धम् । तदधिष्ठितं च प्रधानं महदादिविशेषपर्यन्तं विकारजातं प्रसूत इति । तत्र दृष्टान्ता उपन्यस्यन्ते—"यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः सम्भवन्ति । यथा सतः पुरुषात्केशलोमानि तथाऽक्षरात्सम्भवतीह विश्वम्" इति । अतोऽस्मिन्प्रकरणे प्रधानपुरुषावेव प्रतिपाद्येते इत्येवं प्राप्तेऽभि-धीयते, अदृश्यत्वादिगुणको धर्मोक्तेः । अदृश्यत्वादिगुणकोऽक्षरात्परतः परश्च परमपुरुष एव । कुतः ? तद्धर्मोक्तेः । "यः सर्वज्ञः सर्ववित्" इत्यादिना सर्वज्ञत्वादिकास्तस्यैव धर्मा उच्यन्ते । तथा हि—"यया तदक्षरमधिगम्यते" इत्यादिना दृश्यत्वादिगुणकमक्षरमभिधाय "तथाऽक्षरात्सम्भवतीह विश्वम्" इति तस्माद्विश्वसम्भवं चाभिधाय "यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः । तस्मादेतद्ब्रह्म-नामरूपमन्नं च जायते" इति भूतयोनेरक्षरस्य सर्वज्ञत्वादि प्रतिपाद्यते । पश्चा"दक्षरात्परतः परः" इति च प्रकृतमदृश्यत्वादिगुणकं भूतयोन्यक्षरं सर्वज्ञमेव परत्वेन व्यपदिश्यते । अतोऽक्षरात्परतः पर इत्यक्षरशब्दः पञ्चम्यन्तः प्रकृतमदृश्यत्वादिगुणकमक्षरं नाभिधत्ते । तस्य सर्वज्ञस्य विश्वयोनेः सर्व-स्मात्परत्वेन तस्मादन्यस्य परत्वासम्भवात् । अतोऽत्राक्षरशब्दो भूतसूक्ष्ममचेतनं ब्रूते ॥

इतश्च न प्रधानपुरुषौ। विशिनष्टि हि प्रकरणं प्रधानाच्च पुरुषाच्च भूतयोन्यक्षरं व्यावर्तयतीत्यर्थ एकविज्ञानेन सर्वविज्ञानोपादानादिभिः। तथा ताभ्यामस्याक्षरस्य भेदश्च व्यपदिश्यतेऽक्षरात्परतः पर इत्यादिना। तथाहि—"स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राह" इति सर्वविद्याप्रतिष्ठाभूता ब्रह्मविद्या प्रक्रान्ता। परविद्यैव च सर्वविद्याप्रतिष्ठा। तामिमां सर्वविद्याप्रतिष्ठां विद्यां चतुर्मुखाथर्वादिगुरुपरम्परयाऽङ्गिरसा प्राप्तां जिज्ञासुः "शौनको ह वै महाशालोऽङ्गिरसं विधिवदुपसन्नः पप्रच्छ। कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति" इति। ब्रह्मविद्यायाः सर्वविद्याश्रयत्वाद्ब्रह्मविज्ञानेन सर्वं विज्ञातं भवतीति कृत्वा ब्रह्मस्वरूपमनेन पृष्टम्। "तस्मै स होवाच द्वे विद्ये वेदितव्ये इति ह स्म यद्ब्रह्मविदो वदन्ति परा चैवापरा च" इति। ब्रह्म प्रेप्सुना द्वे विद्ये वेदितव्ये ब्रह्मविषये परोक्षापरोक्षरूपे द्वे विज्ञाने उपादेये इत्यर्थः। अत्र परोक्षं शास्त्रजन्यं ज्ञानम्। अपरोक्षं योगजन्यं ज्ञानम्। तयोर्ब्रह्मप्राप्त्युपायभूतमपरोक्षज्ञानम्। तच्च भक्तिरूपापन्नम्। "यमेवैष वृणुते तेन लभ्यः" इत्यत्रैव विशेष्यमाणत्वात्। तदुपायश्चागमजन्यं विवेकादिसाधनसप्तकानुगृहीतं ज्ञानम्। "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" इति श्रुतेः। आह च भगवान् पराशरः "तत्प्राप्तिहेतुर्ज्ञानं च कर्म चोक्तं महामुने। आगमोक्तं विवेकाच्च द्विधा ज्ञानं तथोच्यते" इति। "तत्रापरा ऋग्वेदो यजुर्वेदः" इत्यादिना "धर्मशास्त्राणी"त्यन्तेनागमोत्थं ब्रह्मसाक्षात्कारहेतुभूतं परोक्षज्ञानमुक्तम्। साङ्गस्येतिहासपुराणस्य सधर्मशास्त्रस्य समीमांसस्य वेदस्य ब्रह्मज्ञानोत्पत्तिहेतुभूतत्वात्। "अथ परा यया तदक्षरमधिगम्यते" इत्युपासनाख्यं ब्रह्मसाक्षात्कारलक्षणं भक्तिरूपापन्नं ज्ञानमुच्यते। "यत्तदद्रेश्यम्" इत्यादिना परोक्षापरोक्षरूपज्ञानद्वयविषयस्य परस्य ब्रह्मणः स्वरूपमुच्यते। "यथोर्णनाभिः सृजते गृह्णते च" इत्यादिना यथोक्तस्वरूपात्परस्माद्ब्रह्मणोऽक्षरात्कृत्स्नस्य चेतनाचेतनात्मकप्रपञ्चस्योत्पत्तिरुक्ता। विश्वमिति वचनाच्चाचेतनमात्रस्य "तपसा चीयते ब्रह्म ततोऽन्नमभिजायते। अन्नात्प्राणो मनः सत्यं लोकाः कर्मसु चामृतम्" इति ब्रह्मणो विश्वोत्पत्तिप्रकार उच्यते। तपसा ज्ञानेन। "यस्य ज्ञानमयं तपः" इति वक्ष्यमाणत्वात्। चीयत उपचीयते। बहु स्यामिति सङ्कल्परूपेण ज्ञानेन ब्रह्म सृष्ट्युन्मुखं भवतीत्यर्थः। ततोऽन्नमभिजायते, अद्यत इत्यन्नम्। विश्वस्य भोक्तृवर्गस्य भोग्यभूतं भूतसूक्ष्ममव्याकृतं परस्माद्ब्रह्मणो जायत इत्यर्थः। प्राणमनःप्रभृति च स्वर्गापवर्गरूपफलसाधनभूतकर्मपर्यन्तं सर्वं विकारजातं तस्मादेव जायते। "यः सर्वज्ञः सर्ववित्" इत्यादिना सृष्ट्युपकरणभूतं सार्वज्ञ्यसत्यसङ्कल्पत्वादिकमुक्तम्। सर्वज्ञात्सत्यसङ्कल्पात्परस्माद्ब्रह्मणोऽक्षरादेतत्कार्याकारं ब्रह्म नामरूपविभक्तं भोक्तृभोग्यरूपं च जायते। "तदेतत्सत्यम्" इति परस्य ब्रह्मणो निरुपाधिकसत्यत्वमुच्यते। "मन्त्रेषु कर्माणि कवयो यान्यपश्यन् तानि त्रेतायां बहुधा सन्ततानि तान्याचरत नियतं सत्यकामाः" इति सार्वज्ञ्यसत्यसङ्कल्पत्वादिकल्याणगुणाकरमक्षरं पुरुषं स्वतः सत्यं कामयमानास्तत्प्राप्तये फलान्तरेभ्यो विरक्ता ऋग्यजुःसामाथर्वसु कविभिर्दृष्टानि वर्णाश्रमोचितानि त्रेताग्निषु बहुधा सन्ततानि कर्माण्याचरतेति। "एष वः पन्थाः" इत्यारभ्य "एष वः पुण्यः सुकृतो ब्रह्मलोकः" इत्यन्तेन कर्मानुष्ठानप्रकारं श्रुतिस्मृतिचोदितेषु कर्मस्वेकतरकर्मवैधुर्येऽपीतरेषामनुष्ठितानामपि निष्फलत्वमयथानुष्ठितस्य चाननुष्ठितसमत्वमभिधाय "प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म। एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्युं ते पुनरेवापियन्ति" इत्यादिना फलाभिसन्धिपूर्वकत्वेन ज्ञानविधुरतया चावरं कर्माचरतां पुनरावृत्तिमुक्त्वा "तपःश्रद्धे ये ह्युपवसन्ति" इत्यादिना पुनरपि फलाभिसन्धिरहितं ज्ञानिनाऽनुष्ठितं कर्म ब्रह्मप्राप्तये भवतीति प्रशंस्य "परीक्ष्य लोकान्" इत्यादिना

केवलकर्मफलेषु विरक्तस्य यथोदितकर्मानुगृहीतं ब्रह्मप्राप्त्युपायभूतं ज्ञानं जिज्ञासमानस्य चाचार्योपसदनं विधाय "तदेतत्सत्यं यथा सुदीप्तात्" इत्यादिना "सोऽविद्याग्रन्थिं विकिरतीह सोम्य" इत्यन्तेन पूर्वोक्तस्याक्षरस्य भूतयोनेः परस्य ब्रह्मणः परमपुरुषस्यानुक्तैः स्वरूपगुणैः सह सर्वभूतान्तरात्मतया विश्वशरीरत्वेन विश्वरूपत्वं, तस्माद्विश्वसृष्टिं च विस्पष्टमभिधाय "आविः सन्निहितम्" इत्यादिना तस्यैवाक्षरस्याव्याकृतात्परतोऽपि पुरुषात्परमभूतस्य परस्य ब्रह्मणः परमव्योम्नि प्रतिष्ठितस्यानवधिकातिशयानन्दस्वरूपस्य हृदयगुहायामुपासनप्रकारमुपासनस्य च परमभक्तिरूपत्वमुपासीनस्याविद्याविमोकपूर्वकं ब्रह्मसमं ब्रह्मानुभवं फलं चोपदिश्योपसंहृतम् । अत एवंविशेषणाद्भेदव्यपदेशाच्च नास्मिन्प्रकरणे प्रधानपुरुषौ प्रतिपाद्येते । भेदव्यपदेशोऽपि हि ताभ्यां परस्य ब्रह्मणोऽत्र विद्यते । "दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः । अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः" इत्यादिभिरक्षरव्याकृतात्परो यः समष्टिपुरुषस्तस्मादपि परभूतो ह्यदृश्यत्वादिगुणकोऽक्षरशब्दाभिहितः परमात्मेत्यर्थः । अश्नुत इति वा न क्षरतीति वाऽक्षरम् । तदव्याकृतेऽपि स्वविकारव्याप्त्या वा महदादिवन्नामान्तराभिलापयोग्यक्षरणाभावाद्वाऽक्षरत्वं कथञ्चिदुपपद्यते ॥

"अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग्विवृताश्च वेदाः । वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा" इतीदृशं रूपं सर्वभूतान्तरात्मनः परमात्मन एव सम्भवति । अतश्च परमात्मा ॥

(३) माध्वे—अदृश्यत्वादिगुणा विष्णोरुक्ताः । तत्र "यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः" इत्युक्त्वा, "यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः सम्भवन्ति । यथा सतः पुरुषात् केशलोमानि तथाक्षरात् सम्भवतीह विश्वमि"त्युक्त्वा, तत् परतः पराभिधानात्तस्याक्षरात् परतः पर इति परः प्रतीयत इति अतोऽब्रवीत् पृथिव्यादिदृष्टान्तमुक्त्वा अक्षरात् सम्भवतीह विश्वमित्यतः परं तत् परतः पराभिधानात् कूटस्थो अक्षर उच्यते इति स्मृतेश्च प्रकृतेः प्राप्तिः । ब्रह्मशब्दात् परतः पराभिधानादेव च हिरण्यगर्भस्य, "तमेव विद्वानमृत इह सम्भवति" । "तत् कर्म हरितोषं यत् सा विद्या तन्मतिर्यया" ।

अथ द्वे वा विद्ये वेदितव्ये परा चैवापरा च । तत्र ये वेदा यान्यङ्गानि यान्युपाङ्गानि यानि प्रत्यङ्गानि सा परा, अपरा यया हरिर्वेदितव्यो योऽसावदृश्यो निर्गुणः परः परमात्मे"त्यादिना तद्धर्मत्वेनावगतपरविद्याविषयत्वोक्तेर्विष्णुरेवादृश्यत्वादिगुणकः ॥

"यः सर्वज्ञः सर्ववित् यस्य ज्ञानमयं तपः" इति विशेषणाच्च प्रकृतिः । तस्मादेतद् ब्रह्म नामरूपमन्नञ्च जायत इति भेदव्यपदेशाच्च विरिञ्चिः । "अपरं त्वक्षरं या सा प्रकृतिर्जडरूपिका । श्रीः परा प्रकृतिः प्रोक्ता चेतना विष्णुसंश्रया । तमक्षरं प्राहुः परतः परमक्षरम् । हरिमेवाखिलगुणमक्षरत्रयमीरितम्" इति स्कान्दे । अक्षराभिधानादक्षरात् परतः पर इत्यपि विशेषणमेव । जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोक इति भेदव्यपदेशादीशशब्दप्राप्तोऽपि न रुद्रः ॥

"यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिमि"ति । "एको नारायण आसीन्न ब्रह्मा न शङ्करः स मुनिर्भूत्वा समचिन्तयत् तत्र ते व्यजायन्त विश्वे हिरण्यगर्भोऽग्निर्यमो वरुणरुद्रेन्द्रा इति तस्य हैतस्य परमस्य नारायणस्य चत्वारि रूपाणि शुक्लं रक्तं पीतमं कृष्णमिति । स एतान्येतेभ्यो न्यचीक्लृपद् विश्वामित्राणि व्यमिश्रयदत एतादृगेतद्रूपमिति,तस्यैव हि रूपाण्यभिधीयते" ॥

(४) निम्बार्कः—आथर्वणिकैरुदाहृतः "अदृश्यमि"त्यादिनाऽदृश्यत्वादिगुणकः परमात्मैव कुतः ? "यः सर्वज्ञ" इत्यादिना तद्धर्मोक्तेः । प्रधानजीवौ न भूतयोन्यक्षरपदवाच्यौ, विशेषणभेदव्यपदेशाभ्याम् । सर्वगतमिति विशेषणव्यपदेशः, "अक्षरात्परतः पर" इति भेदव्यपदेशश्च । "अग्निर्मूर्द्धे"त्यादिना परमात्मनो रूपोपन्यासाच्च नेतरौ ॥

(५) भैक्षवे—मुण्डके श्रूयते "अथ परा यया तदक्षरमधिगम्यते यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीरा" इति अत्रापि प्रधानशारीरपरमात्मसु संशये, अयं निर्णयः, अदृश्यत्वादिगुणकोऽत्रान्तर्याम्येव । कुतः ? "य सर्वज्ञः सर्वविदि"त्यादिनाऽव्यवधानेन परमात्मधर्मवचनादित्यर्थः । अथवा "अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः सशृणोत्यकर्णः" "स वेत्ति विश्वं न च तस्य वेत्ता तमाहुरग्र्यं पुरुषं महान्तमि"तिश्रुत्यन्तरे परमेश्वरधर्मत्वेन सिद्धानामपाणिपादत्वादीनामत्र प्रत्यभिज्ञायमानत्वादित्यर्थः । चशब्दः पूर्वोक्तसर्वज्ञत्वादिहेतुं समुच्चिनोति इतरो जीवः प्रधानादिश्च नात्रादृश्यत्वादिगुणकः । कुतः ? विशेषणाद्भेदव्यपदेशाच्चोत्तरवाक्येनेति शेषः । तत्र "दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः अप्राणो ह्यमनाः शुभ्रोऽक्षरात्परतः पर" इत्युत्तरवाक्येऽमनस्त्वान्तं विशेषणं जीवप्रधानादिभ्यां व्यावर्तकम्, अक्षरात्परतः पर इति च प्रधानादेर्जीवाच्च भेदव्यपदेशः । अस्यार्थः अक्षरं प्रधानं तस्मात्परतो जीवादपि यः पर उत्तमस्तत्प्रेरकत्वात्स दिव्यः पुरुष इति । न चास्यैव पुरुषस्य पूर्वमक्षरत्वमुक्तमतस्तस्यैवाक्षरात्परतः परत्वे कथं स्यादिति वाच्यम्, त्रयाणामेवाक्षरत्वात् परिणामिनित्यरूपाक्षरापेक्षया कूटस्थनित्यस्याक्षरस्य जीवस्य परमत्वं तदपेक्षयापि लयशून्याक्षरस्य ब्रह्मणः परमत्वमुक्तमिति, "दूरात्सुदूरे तदिहान्तिके च पश्यत्स्विहैव निहितं गुहायामि"ति च वाक्यशेषे जीवाद्भेदव्यपदेशः पश्यत्सु जीवेष्वित्यर्थः । तथा "तयोरन्यः पिप्पलं स्वाद्वत्ति जुष्टं यदा पश्यत्यन्यमीशमि"त्यागामिवाक्यान्तरेष्वपि जीवाद्भेदव्यपदेशोऽस्ति । जीवस्यादृश्यत्वगुणकत्वाभावे हेत्वन्तरमाह । "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च" । खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी "अग्निर्मूर्द्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग्विवृताश्च वेदाः । वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मे"त्युत्तरवाक्ये समष्टिजीवस्य विराजो रूपोपन्यासादपि जीवो नादृश्यत्वादिगुणकः । उक्तरूपस्य दृश्यमानत्वादित्यर्थः । न चेदं रूपं परमात्मन एव निर्दिष्टं कथं न भवतीति वाच्यम्, अदृश्यत्वप्रकरणात्परमात्मकार्यमध्ये पाठाच्च । आद्यन्तयोः परमात्मकार्याणामेव वचनात् । उत्तराधिकरणविषयप्रभृतिवाक्येषु च प्रकरणवशात्परमात्मन ईदृशरूपकथनं परमात्मनोऽन्तर्यामिविधया शक्तिशक्तिमद्भेदेन कारणविधया कार्यकारणभेदेन वोपासनार्थमेव, न तु साक्षात् । तथा च वक्ष्यति सूत्रकारः 'अरूपवदेव हि तत्प्रधानत्वादिति' । आधुनिकास्तु इदं रूपं प्रकरणिन एवाभ्युपगम्यानेन रूपोपन्यासेन परमात्मन एवादृश्यत्वादिगुणकत्वं साधयन्ति, तन्न, अस्य रूपस्य विराड्जीवसाधारण्येन ब्रह्मलिङ्गत्वासम्भवादिति ।

(६) भास्करीये—आथर्वणे श्रूयते "अथ परा यया तदक्षरमधिगम्यते । यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीरा" इति । तत्रेदं चिन्त्यते । किं प्रधानमदृश्यत्वादिगुणकमथ विज्ञानात्माऽथ परमात्मेति । किं तावत् प्राप्तम् ? प्रधानमिति । पूर्वत्र द्रष्टृत्वादिगुणत्वासम्भवात् पर्युदस्तम् । इह त्वदृश्यत्वादिगुणसम्भवाद्विपक्षा युक्तेति । ननु चात्रापि यः सर्वज्ञः सर्वविदिति गुणान्तरं न सम्भवति । नायं

दोषः। अक्षरात् परतः परो यः, स सर्वज्ञो भविष्यतीत्यक्षरवाच्यं तु प्रधानमेवेति मन्यते पूर्वपक्षवादी। जीवो वा भूतयोनिः, तस्य स्वकर्मार्जितत्वाद्भूतानां निमित्तभावोऽस्ति। योनिशब्दोऽस्मिन् पक्षे निमित्तवचनो व्याख्येयः। अपि चाचेतनानां पृथिव्यादीनां दृष्टान्तान्तरेणोपादानादचेतनं प्रधानं युक्ततरं गृहीतम्। ऊर्णनाभिशरीरं च सूत्रस्य योनिश्चेतनाधिष्ठितं न चेतनादेव सूत्रं जायत इति चेतनस्य योनित्वं नास्तीति प्राप्तेऽभिधीयते। अदृश्यत्वादिगुणकः परो भवितुमर्हति। कुतो धर्मोक्तेस्तदव्यभिचारी धर्म इहोच्यते। "यः सर्वज्ञः सर्ववित् यस्य ज्ञानमयं तप" इत्यनन्तरं च "यथा सुदीप्तात् पावकाद्विस्फुलिङ्गाः सहस्रशः प्रभवन्ति सरूपास्तथाक्षराद्विविधाः सौम्य भावा" इति प्रकृताद्भूतयोनेरक्षरादुत्पत्तिं दर्शयति। "यथा सतः पुरुषात् केशलोमानि तथाऽक्षरात् सम्भवतीह विश्वमि"ति। विशेषकमश्चैवम्। "स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठाय पुत्राय प्राहे"ति। तदपेक्षयोत्तराणि वाक्यानि प्रवृत्तानि। "द्वे एव तु विद्ये वेदितव्ये" इति चोक्त्वा "अथ परा यया तदक्षरमधिगम्यत" इति। परत्वं च विद्यायाः परब्रह्मप्राप्तिहेतुत्वात्। किं तदक्षरमित्यपेक्षायां "यत् तदद्रेश्यमि"त्याद्याम्नातम्। तत्र कथमकस्मात् कूष्माण्डपात्रवत् प्रधानं प्रतीयते॥

न जीवो न प्रधानम्। कस्मात्? विशेषणात्। "दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः। अप्राणो ह्यमनाः शुभ्र" इति। अप्राणः अमनाश्च जीवः प्रधानाद्भेदेन भूतयोनिर्निर्दिश्यते, परेण श्लोकपादेन अक्षरात् परतः पर इति सर्वस्मात् परोऽविकारोऽक्षरं भूतसूक्ष्मं यदव्याकृताकाशमिति प्रसिद्धं वेदान्तवादिनां तादृशादक्षरात् प्रधानशब्दवाच्यात् स्वविकारेभ्यः परात् परो भूतयोनिः सर्वज्ञः सर्वविदिति भेदेन व्यपदिश्यते। अत्र च भूतयोनौ भूतसूक्ष्मे चाक्षरशब्दः प्रयुक्तः, तत्र व्युत्पत्तिभेदादर्थभेदः। न क्षरति न च्यवते अक्षरं भूतयोनिः अश्नुते व्याप्नोति स्वविकारानित्यक्षरं भूतसूक्ष्मम्॥

योऽयं भूतयोनिः कारणात्मा स एव कार्यात्मनाऽवस्थित इति दर्शयितुं रूपमुपन्यस्यते। "अग्निर्मूर्द्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग्विवृताश्च वेदाः। वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मे"ति। हिरण्यगर्भस्यैतद्रूपमिति केचिद्वदन्ति। तदयुक्तम्। प्रकरणविरोधात्। प्रकरणिनि परमकारणे यदीदं रूपं नोपपद्यते तदान्यत्र सञ्चार्येताप्रस्तुते। प्रत्युत हिरण्यगर्भस्यापीदं रूपं परमात्मद्वारेणोपचर्यते नान्यथेति स्थितम्॥

(७) श्रीमद्वल्लभाचार्यमतेऽयमभिप्रायः—पूर्वाधिकरणविषयवाक्यैः, अमृत इति, अतोऽन्यदार्तमिति च श्रावणात् सर्वहृदयवर्तिन्यन्तर्यामिणि भोगवैलक्षण्यसाधकं वैशेष्यं दर्शितम्। तस्माद्दृष्टो द्रष्टेति भाविते तत्कथमित्याकाङ्क्षायां हेतुबोधनायेदमधिकरणं प्रसङ्गसङ्गत्यारभ्यते। मुण्डकोपनिषत् सर्वाऽस्य विषयः। तत्र हि शौनकेन "कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवेदि"त्येकविज्ञानेन सर्वविज्ञाने पृष्टे, अङ्गिरसा, "द्वे विद्ये वेदितव्ये" इत्यादिना नामांशे वेदादिविद्या, रूपांशे परविद्या चोक्ता। तावता नामरूपात्मकस्य सर्वजगतो ज्ञानसम्भवात्। तत्र वेदादिविद्यायां न सन्देहः। परायां सन्दिह्यते। किमेषा साङ्ख्यमतविद्या किं वा ब्रह्मविद्येति। साङ्ख्यधर्माभिलापाच्च सन्देहः। तत्र "स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राहे"त्युपक्रम्य ह्येवं पठ्यते, "अथ परा यया तदक्षरमधिगम्यते, यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययम्, तद्भूतयोनिं परिपश्यन्ति धीराः" इत्यादि। द्वितीयमुण्डके च "दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः। अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात् परतः परः" इत्युक्त्वा, "एतस्माज्जायते प्राणः" इत्यनेन सृष्टिं निरूप्य,

"अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ" इत्यादिना रूपमुक्त्वा, "पुमान् रेतः सिञ्चति योषितायां बह्वयः प्रजाः पुरुषात् सम्प्रसूताः" इति पुरुषात् सृष्टिरिति ।

पूर्वपक्षस्तु । मुण्डकत्रयेऽप्येकस्यैव मतस्य प्रतिपादितत्वेन वाक्यानामितरेतरसाकाङ्क्षतयैकप्रकरणत्वादेकवाक्यता अवश्यं वक्तव्या । सा तत्र ब्रह्मवाक्यत्वाङ्गीकारे न सम्भवति । "अक्षरात् परतः पर" इत्यग्रे अक्षरपुरुषयोर्भेदश्रावणात् । रेतःसेकेन प्रजासृष्टिश्रावणादुभयजन्यायाः सृष्टेरत्राभिमेतत्वाच्च । अत एवोपक्रमगतं ब्रह्मविद्यापदमपि समाख्यारूपत्वाल्लिङ्गापेक्षया निर्बलम् । नच साङ्ख्ये प्रकृतेरेव स्रष्टृत्वादत्र चोभयोक्तत्वात्कथनाद्यत्र साङ्ख्यमतमिति शक्यम् । जगतो जीवजडात्मकत्वेनोभयविषयत्वात्, प्रकृतिपुरुषयोस्तुल्यतया अन्यतरप्राधान्येन वा सृष्टिकथने तन्मतबाधाभावात् । नच 'अग्निर्मूर्धे'त्यादिनोक्तस्य रूपस्य विरोधः । अग्रे समष्टिव्यष्टीनामेवोत्पत्तिकथनेन तज्जनयितृ रूपस्यापि क्लिष्टरूपत्वेन योग्यतया तन्मतबाधाभावात् । नचेदं ब्रह्मवादेऽपि तुल्यमिति वाच्यम् । सच्चिदानन्दरूपताया अनानुक्त्या ब्रह्मवादस्यात्र वक्तुमशक्यत्वात् । नच ब्रह्मविद्यापदस्यासङ्गतिः । 'आनर्थक्ये प्रमाणानां विपरीतं बलाबल'मिति न्यायेन सर्वमिदं शिथिलमिति शङ्क्यम् । ब्रह्मपदस्य वेदेऽपि रूढेस्तस्य वेदविद्यापरतया नेयत्वेनासङ्गत्यभावादिति । एवं प्राप्ते—

अभिधीयते । अदृश्येत्यादि । अदृश्यत्वादिगुणकः परमात्मैव । कुतः ? धर्मोक्तेः । एतद्विज्ञानेन तस्य ब्रह्मविज्ञानधर्मस्य सर्वविज्ञानस्य कथनात् । तत्सम्बन्धादेव विद्यायाः परत्वकथनाच्च । नचात्राक्षरम्, ततः परः पुरुषश्चोक्त इति तदुभयविज्ञानेन सर्वविज्ञानं केवलाक्षरविज्ञानेनेति कथं तस्य ब्रह्मत्वमिति शङ्क्यम् । अक्षरपुरुषयोः परापरभावेऽपि भेदाभावेन ब्रह्मत्वस्याव्याहतेः । नच परापरभावस्य भेदाल्लिङ्गत्वात्तस्मिन् सति कथमभेद इति वाच्यम् । एतदर्थमेवाधिकरणप्रणयनात् । पुरुषे ब्रह्मत्वस्य वाक्यादेव प्रतीत्या अक्षरस्यैव सन्दिग्धत्वेन पक्षतया निर्देशादेव तथा निश्चयात् । अत्रापि धर्मोक्तेरेव हेतुत्वम् । "तथाऽक्षरात् सम्भवतीह विश्व"मिति जगज्जनकत्वस्य ब्रह्मधर्मस्य तत्र कथनात् । उपपत्तिस्तु तत्रैव जगज्जनकतायाः सर्वत्र दर्शनेनात्रान्यस्याङ्गीकर्तुमशक्यत्वात् । नचाभेदे परापरभावविरोधः शङ्क्यः । अभेदे ईषदानन्दतिरोभावपूर्णतत्प्राकट्याभ्यामवस्थाभ्यां सुखेन तत्सिद्धेः, "ब्रह्मविदाप्नोति परम्"त्यत्र प्रागेव निर्णीतत्वात् । अतोऽवस्थाभेदेऽप्यदृश्यत्वादिगुणकः परमात्मैवेति सिद्धम् ॥

ननु पञ्चशिखवृत्तावव्यक्तपर्यायेषु नपुंसकलिङ्गस्याक्षरपदस्य पाठादत्र तादृशाक्षरपदप्रयोगो योनिपदस्योपादानवाचकत्वाद् भूतयोनित्वं चाव्यक्तलिङ्गम्, अक्षरात् परत्वं च पुरुषलिङ्गम्, अतस्तत्सर्वं व्यस्तत्य ब्रह्मविद्यात्वं न स्थापयितुं शक्यम् । नच कस्मिन् विज्ञात इत्येकविज्ञानहेतुकसर्वविज्ञानप्रश्नविरोधः । तत्र कस्मिन् मते विज्ञात इत्यर्थस्य शक्यवचनत्वेन तस्य विज्ञानस्य ब्रह्मविद्यालिङ्गत्वाभावात् । नापि ब्रह्मविद्येति समाख्यावलात् तथा वक्तुं शक्यम् । "द्वे ब्रह्मणी वेदितव्ये, मूर्त चामूर्त चे"तिश्रुतौ विकारेऽपि ब्रह्मपदस्येदेवत्र प्रकृतिपुरुषयोर्ब्रह्मणोर्विद्येति योगस्यापि शक्यवचनात् । लिङ्गापेक्षया पञ्चमप्रमाणभूतायास्तस्या अतिनिर्बल्याचेत्यत आह विशेषणेत्यादि । इतरौ प्रकृतिपुरुषौ नात्र वाक्यार्थभूतौ । कुतः ? विशेषणभेदव्यपदेशाभ्याम् । विशेषणभेदो व्यपदेशश्च ताभ्याम् । को विशेषणभेद इतिचेत्, अदृश्यत्वादीनां विशेषणानां प्रकृतावघटमानत्वमेव स इति वदामः । कथमिति चेद्, इत्थम् । नैर्हि प्रकृतेर्विकारः सर्वैरप्यङ्गीक्रियते । तच विकारजातं दृश्यत्वादिमत् । तथा सति तदुपादानमपि तादृशमेव । न हि घयदौ दृष्टे तदुपादानभूता मृद्घ दृश्यते इति शक्यवचनम् । अतोऽस्मादेव हेतोर्नात्र प्रकृतिः शक्यवचनेति । ननु ब्रह्मवादे ब्रह्मण एवोपादानत्वात् प्रकृतिवत्तस्यापि

दृश्यत्वाद्यापत्तेरस्य ब्रह्मपरतापि न स्यादिति शङ्क्यम्। ब्रह्मणः सर्वभवनसमर्थत्वात् परिणामित्वेऽपि नित्यसदैकरूपत्वाविक्रियमाणत्वयोरिव दृश्यत्वाद्यावप्यदृश्यत्वादेर्विरोधाभावादेवोपपत्त्या वाक्यस्य ब्रह्मपरताया अक्षतेः। नच प्रकृतावपि तथा सामर्थ्याङ्गीकारे परिहारतौल्येन वाक्यस्य प्रकृतिपरता वक्तुं शक्येति नैतेन ब्रह्मवादसिद्धिरिति वाच्यम्। साङ्ख्यैः प्रधानस्य परिणामिनित्यतयैवाङ्गीकृतत्वेन तथा वक्तुमशक्यत्वात्। इदानीं तथाङ्गीकारे च प्रतिज्ञासंन्यासप्रतिज्ञान्तरयोरापत्त्या सर्वब्रह्मधर्मतौल्ये पुरुषस्यापि ततोऽनतिरेकेण नाममात्र एव कलहेन तन्मतस्य ब्रह्मवाद एव प्रवेशेन ब्रह्मवादिनामेव जयाच्च। यः सर्वज्ञः सर्वविदित्यादीनां तु सुतरामघटमानत्वम्। तस्या जडतयैवोपगमात्। नच तत् पुरुषविशेषणमिति वाच्यम्। एतस्य प्रथममुण्डके पाठेन व्यवधानात्। पुरुषस्य द्वितीयमुण्डके पाठात्। पूर्वमुण्डकसमाप्तावेव "येनाक्षरं पुरुषं वेद सत्य"मित्यक्षरविशेषणाच्च। तस्मादक्षरविशेषणानां प्रकृतावघटमानत्वमेव। तथा पुरुषविशेषणानामपि साङ्ख्याभिमतपुरुषे अघटमानत्वम्। तन्मते पुरुषबहुत्वेऽपि जीवब्रह्मवद्विलक्षणत्वाभावेन नियामकत्वरूपस्य दिव्यत्वस्याभावात्। साक्षित्वकैवल्यमाध्यस्थ्यद्रष्टृत्वाकर्तृत्वव्यतिरिक्तधर्मानङ्गीकारात्। सर्वरूपत्वाभावेन बाह्याभ्यन्तरत्वस्य सुतरां तथात्वात्। तैर्महदादिक्रमेण सृष्टेरङ्गीकृततया 'एतस्माज्जायते प्राण' इतिमन्त्रोक्तायाः सृष्टेः क्रमभेदात् सहोत्पन्नत्वात् साक्षात्तज्जन्यस्याच्च तन्मतीयत्वस्याभावात्। अतः स्फुटो विशेषणभेदः। आदिमध्यावसानेषु ब्रह्मविद्यामिति व्यपदेशभेदाच्च। अन्यथा साङ्ख्यविद्यामित्येव नाम वदेत्। न हि वेदाचार्यो ब्रह्मा स्वज्येष्ठपुत्राय वेदसारभूतां ब्रह्मविद्यां विहाय साङ्ख्यविद्यां वक्तुमर्हतीत्यपि चकारेण सूच्यते॥

'अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ'वित्यादिनोक्तं रूपं विश्वकायस्य ब्रह्मण एव सम्भवति, न तु प्रकृतिपुरुषयोरन्यतरस्य, तन्मते केवलयोस्तथारूपानङ्गीकारात्। नच क्लिष्टस्येति वाच्यम्। यथा सुदीप्तादित्यनेन केवलादक्षरात् सृष्टिमुक्त्वा, ततो 'दिव्यो ह्यमूर्त' इति केवलस्य पुरुषस्याक्षरात् परत्वमुक्त्वा, तत "एतस्माज्जायत"इत्यनेन तादृशादेव सृष्टिकथनानन्तरम्, अग्निर्मूर्धेति रूपमुपन्यस्यत इति। तत्र क्लिष्टत्वस्याशक्यवचनत्वादिति। अत्र सूत्रविभागादेषा मुख्योपपत्तिरिति सूच्यते। चकारेण श्रुत्यन्तराविरोधः, सर्वेषां वेदान्तानामेकवाक्यता च सङ्गृह्यते। अत्रेदं बोध्यम्। गीतायां द्वादशाध्याये, "एवं सततयुक्ता ये" इति सन्दर्भे अक्षरपुरुषोत्तमयोरैक्यमवस्थाभेदेन भेदश्च बोधितः। पञ्चदशे च 'द्वाविमा'वित्यादिना (अक्षरपुरुषादुत्तमत्वं स्वस्योक्तम्। श्वेताश्वतरश्रुतावपि "क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एक" इति) अक्षरस्यात्मत्वं देवस्य क्षराक्षरेशितृत्वं चोक्तम्। अतोऽत्राक्षरस्य पुरुषत्वमुक्त्वा पुरुषस्य तत उत्तमत्वं यदुच्यते, तेन गीताद्युक्तमेवाक्षरपुरुषोः स्वरूपं ज्ञाप्यते, न तु तदतिहाय भूतसूक्ष्मरूपमक्षरम्। प्रकृतहानाप्रकृतकल्पनयोः प्रसङ्गात्। नच परत इति पञ्चम्यन्तस्य वैयर्थ्यम्। साङ्ख्ये प्रधानस्याप्यक्षरपदवाच्यत्वात्तद्वारणार्थं परत इत्यस्याक्षरविशेषणत्वेनावश्यकत्वादिति। तस्मादक्षरशब्देन पुरुषशब्देन च ब्रह्मण एवावस्थाभेदपुरःसरमुक्तत्वादेषा ब्रह्मविद्यैवेति सिद्धम्॥ २२॥ ७॥

## ८ वैश्वानराधिकरणम् ।

### वैश्वानरः साधारणशब्दविशेषात् ॥ १।२।२४ ॥

(वैश्वानरविद्याविचारावतरणम्)

अधिकरणत्रयेण भोगमुपपाद्य पूर्वाधिकरणे दृश्यत्वादिगुणानुक्त्वा प्रसङ्गाद्रूपमु-पन्यस्तम् । अधुना साकारब्रह्मतामुपपादयितुमिदमधिकरणमारभ्यते को न आत्मा

---

वैश्वानराधिकरणमाहुः—वैश्वानरः साधारणशब्दविशेषात् । अस्मिन्नधिकरणे उपोद्घात-सङ्गतिं दर्शयन्ति—अधिकरणत्रयेणेति । चराचराधिकरणत्रयेणेत्यर्थः । पूर्वाधिकरणे अदृश्यत्वा-धिकरणे छान्दोग्यपञ्चमप्रपाठकस्य विषयवाक्यमुदाहरन्ति—को न आत्मेत्यादि ।

अथ विषयवाक्यम्—

प्राचीनशाल औपमन्यवः सत्ययज्ञः पौलुषिरिन्द्रद्युम्नो भाल्लवेयो जनः शार्कराक्ष्यो बुडिल आश्वतराश्विस्ते हैते महाशाला महाश्रोत्रियाः समेत्य मीमाꣳसां चक्रुः को नु आत्मा किं ब्रह्मेति ॥ १ ॥

ते ह सम्पादयाꣳश्चक्रुरुद्दालको वै भगवन्तोऽयमारुणिः सम्प्रतीममात्मानं वैश्वानरमध्येति तꣳ हन्ताभ्यागच्छामेति तꣳहाभ्याजग्मुः ॥ २ ॥

स ह सम्पादयाञ्चकार प्रक्ष्यन्ति मामिमे महाशाला महाश्रोत्रियास्तेभ्यो न सर्वमिव प्रति-पत्स्ये हन्ताहमन्यमभ्यनुशासानीति ॥ ३ ॥

तान्होवाचाश्वपतिर्वै भगवन्तोऽयं कैकयः सम्प्रतीममात्मानं वैश्वानरमध्येति तꣳहन्ताभ्या-गच्छामेति तꣳहाभ्याजग्मुः ॥ ४ ॥

तेभ्यो ह प्राप्तेभ्यः पृथगर्हाणि कारयाञ्चकार स ह प्रातः सञ्जिहान उवाच न मे स्तेनो जन-पदे न कदर्यो न मद्यपो नानाहिताग्निर्नाविद्वान्न स्वैरी स्वैरिणी कुतो यक्ष्यमाणो वै भगवन्तोऽह-मस्मि यावदेकैकस्मा ऋत्विजे धनं दास्यामि तावद्भगवद्भ्यो दास्यामि वसन्तु भगवन्त इति ॥ ५ ॥

ते होचुर्येन हैवार्थेन पुरुषश्चरेत्तꣳहैव वदेदात्मानमेवेमं वैश्वानरꣳ सम्प्रत्यध्येषि तमेव नो ब्रूहीति ॥ ६ ॥

तान्होवाच प्रातर्वः प्रतिवक्तास्मीति ते ह समित्पाणयः पूर्वाह्णे प्रतिचक्रमिरे तान्हानुपनी-यैवैतदुवाच ॥ ७ ॥

इत्येकादशः खण्डः ॥ ११ ॥

औपमन्यव कं त्वमात्मानमुपास्स इति दिवमेव भगवो राजन्निति होवाचैष वै सुतेजा आत्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्तव सुतं प्रसुतमासुतं कुले दृश्यते ॥ १ ॥

अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते मूर्धा त्वेष आत्मन इति होवाच मूर्धा ते व्यपतिष्यद्यन्मां नागमिष्य इति ॥ २ ॥

इति द्वादशः खण्डः ॥ १२ ॥

अथ होवाच सत्ययज्ञं पौलुषिं प्राचीनयोग्यं कं त्वमात्मानमुपास्स इत्यादित्यमेव भगवो राजन्निति होवाचैष वै विश्वरूप आत्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्तव बहु विश्वरूपं कुले दृश्यते ॥ १ ॥

प्रवृत्तोऽश्वतरीरथो दासीनिष्कोऽस्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते चक्षुष्ट्वेतदात्मन इति होवाचान्धोऽभविष्यद्यन्मां नागमिष्य इति ॥ २ ॥

इति त्रयोदशः खण्डः ॥ १३ ॥

अथ होवाचेन्द्रद्युम्नं भाल्लवेयं वैयाघ्रपद्य कं त्वमात्मानमुपास्स इति वायुमेव भगवो राजन्निति होवाचैष वै पृथग्वर्त्मात्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्त्वां पृथग्बलय आयन्ति पृथग्रथश्रेणयोऽनुयन्ति ॥ १ ॥

अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते प्राणस्त्वेष आत्मन इति होवाच प्राणस्त उदक्रमिष्यद्यन्मां नागमिष्य इति ॥ २ ॥

इति चतुर्दशः खण्डः ॥ १४ ॥

अथ होवाच जनँ शार्कराक्ष्य कं त्वमात्मानमुपास्स इत्याकाशमेव भगवो राजन्निति होवाचैष वै बहुल आत्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्त्वं बहुलोऽसि प्रजया च धनेन च ॥ १ ॥

अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते सन्देहस्त्वेष आत्मन इति होवाच सन्देहस्ते व्यशीर्यद्यन्मां नागमिष्य इति ॥२॥

इति पञ्चदशः खण्डः ॥ १५ ॥

अथ होवाच बुडिलमाश्वतराश्विं वैयाघ्रपद्य कं त्वमात्मानमुपास्स इत्यप एव भगवो राजन्निति होवाचैष वै रयिरात्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्त्वँ रयिमान्पुष्टिमानसि ॥ १ ॥

अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते बस्तिस्त्वेष आत्मन इति होवाच बस्तिस्ते व्यभेत्स्यद्यन्मां नागमिष्य इति ॥ २ ॥

इति षोडशः खण्डः ॥ १६ ॥

अथ होवाचोद्दालकमारुणिं गौतम कं त्वमात्मानमुपास्स इति पृथिवीमेव भगवो राजन्निति होवाचैष वै प्रतिष्ठात्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्त्वं प्रतिष्ठितोऽसि प्रजया च पशुभिश्च ॥ १ ॥

अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते पादौ त्वेतावात्मन इति होवाच पादौ ते व्यम्लास्येतां यन्मां नागमिष्य इति ॥ २ ॥

इति सप्तदशः खण्डः ॥ १७ ॥

तान्होवाचैते वै खलु यूयं पृथगिवेममात्मानं वैश्वानरं विद्वाँसोऽन्नमत्थ यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति ॥ १ ॥

तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मात्मा सन्देहो बहुलो बस्तिरेव रयिः पृथिव्येव पादावुर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन आस्यमाहवनीयः ॥ २ ॥

इत्यष्टादशः खण्डः ॥ १८ ॥

तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयँस यां प्रथमामाहुतिं जुहुयात्तां जुहुयात्प्राणाय स्वाहेति प्राणस्तृप्यति ॥ १ ॥

प्राणे तृप्यति चक्षुस्तृप्यति चक्षुषि तृप्यत्यादित्यस्तृप्यत्यादित्ये तृप्यति द्यौस्तृप्यति दिवि तृप्यन्त्यां यत्किञ्च द्यौश्चादित्यश्चाधितिष्ठतस्तत्तृप्यति तस्यानुतृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥ २ ॥

इत्येकोनविंशः खण्डः ॥ १९ ॥

अथ यां द्वितीयां जुहुयात्तां जुहुयाद्व्यानाय स्वाहेति व्यानस्तृप्यति ॥ १ ॥

व्याने तृप्यति श्रोत्रं तृप्यति श्रोत्रे तृप्यति चन्द्रमास्तृप्यति चन्द्रमसि तृप्यति दिशस्तृप्यन्ति दिक्षु तृप्यन्तीषु यत्किञ्च दिशश्च चन्द्रमाश्चाधितिष्ठन्ति तत्तृप्यति तस्यानुतृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥ २ ॥

इति विंशः खण्डः ॥ २० ॥

अथ यां तृतीयां जुहुयात्तां जुहुयादपानाय स्वाहेत्यपानस्तृप्यति ॥ १ ॥

अपाने तृप्यति वाक्तृप्यति वाचि तृप्यन्त्यामग्निस्तृप्यत्यग्नौ तृप्यति पृथिवी तृप्यति पृथिव्यां तृप्यन्त्यां यत्किञ्च पृथिवी चाग्निश्चाधितिष्ठतस्तत्तृप्यति तस्यानुतृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥ २ ॥

इत्येकविंशः खण्डः ॥ २१ ॥

अथ यां चतुर्थीं जुहुयात्तां जुहुयात्समानाय स्वाहेति समानस्तृप्यति ॥ १ ॥

समाने तृप्यति मनस्तृप्यति मनसि तृप्यति पर्जन्यस्तृप्यति पर्जन्ये तृप्यति विद्युत्तृप्यति विद्युति तृप्यन्त्यां यत्किञ्च विद्युच्च पर्जन्यश्चाधितिष्ठतस्तत्तृप्यति तस्यानुतृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥ २ ॥

इति द्वाविंशः खण्डः ॥ २२ ॥

अथ यां पञ्चमीं जुहुयात्तां जुहुयादुदानाय स्वाहेत्युदानस्तृप्यति ॥ १ ॥

उदाने तृप्यति त्वक् तृप्यति त्वचि तृप्यन्त्यां वायुस्तृप्यति वायौ तृप्यत्याकाशस्तृप्यत्याकाशे तृप्यति यत्किञ्च वायुश्चाकाशश्चाधितिष्ठतस्तत्तृप्यति तस्यानुतृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥ २ ॥

इति त्रयोविंशः खण्डः ॥ २३ ॥

स य इदमविद्वानग्निहोत्रं जुहोति यथाङ्गारानपोह्य भस्मनि जुहुयात्तादृक्तत्स्यात् ॥ १ ॥

अथ य एतदेवं विद्वानग्निहोत्रं जुहोति तस्य सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मसु हुतं भवति ॥ २ ॥

तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवꣳहास्य सर्वे पाप्मानः प्रदूयन्ते य एतदेवं विद्वानग्निहोत्रं जुहोति ॥ ३ ॥

तस्मादु हैवंविद्यद्यपि चण्डालायोच्छिष्टं प्रयच्छेदात्मनि हैवास्य तद्वैश्वानरे हुतꣳ स्यादिति तदेष श्लोकः ॥ ४ ॥

यथेह क्षुधिता बाला मातरं पर्युपासते । एवꣳ सर्वाणि भूतान्यग्निहोत्रमुपासत इत्यग्निहोत्रमुपासत इति ॥ ५ ॥

इति चतुर्विंशः खण्डः ॥ २४ ॥

किं ब्रह्मेति । आत्मानमेवेमं वैश्वानरं सम्प्रत्यध्येषि तमेव नो ब्रूहीति चोपक्रम्य द्युसूर्यवाय्वाकाशवारिपृथिवीनां सुतेजस्त्वादिगुणयोगमेकैकोपासननिन्दया च मूर्धादिभावमुपदिश्याम्नायते—"यस्त्वेतमेवं प्रादेशमात्रमभिविमानं वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मात्मा सन्देहो बहुलो बस्तिरेव रयिः पृथिव्येव पादावुर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यो मनोऽन्वाहार्यपचनमास्यमाहवनीयः (छां. ५।१८।२) इत्यादि ।

(सन्देहोद्भावनं पूर्वपक्षश्च)

तत्र संशयः । किं वैश्वानरशब्देन ब्रह्म प्रतिपादयितुं शक्यते न वेति । अर्थस्यातिसन्दिग्धत्वात्सन्देहः । तत्रोपक्रमे ब्रह्मात्मपदप्रयोगोऽस्ति नान्यत्किञ्चित् । उपपादने त्वतद्धर्मा एव । साकारस्य तु लोकन्यायेनाब्रह्मत्वम् । वैश्वानरो यद्यप्यग्नावेव प्रसिद्धस्तथापि पूर्वकाण्डसिद्धत्वाद्देवतात्मपरिग्रहो युक्तः । ततश्च "सम्वत्सरो वा अग्निर्वैश्वानरः" (बृ. वा. शा. सप्तान्नब्रा.) इति श्रुतेः सम्वत्सरस्य प्रजापतित्वाच्च हिरण्यगर्भोपासनापरमिति गम्यते । ब्रह्मात्मशब्दावपि हि तत्रैव युक्ततरौ । तदुपासकस्यैवान्नभोजनत्वमपि सर्वत्र युक्तम् । प्रादेशमात्रत्वमपि मुख्यजीवत्वादसदाद्यपेक्षया स्थूलत्वाद्यभिप्रायम् । विराडभिमानित्वाच्च लोकावयवत्वम् । वेदगर्भत्वादग्नित्रयात्मकत्वमिति । तस्माद्धिरण्यगर्भोपासनापरमेवैतद्वाक्यं न भगवदुपासनापरमित्येवं प्राप्त उच्यते—

---

अथ भाष्यम्—संशयबीजमाकारं चाहुः—तत्रेति । अतिसन्दिग्धत्वमेवोपपादयन्ति—उपक्रमेति । आत्मा किं ब्रह्मेत्युपक्रमवाक्ये ब्रह्मात्मपदप्रयोगस्य सत्वात् । अन्यत्किञ्चिद्वाचकपदप्रयोगस्यासत्त्वादिदं वाक्यं ब्रह्मपरमेव प्रतिभातीत्यर्थः । ननु तर्हि सन्देहः कथमित्यत आहुः—उपपादने त्विति । तथा चोपपादनग्रन्थे "तस्य ह वा एतस्य वैश्वानरस्य मूर्धैव सुतेजा" इत्यादिकथनात् । वैश्वानरशब्दस्य ब्रह्मान्याग्निवाचकत्वान्मूर्धाद्यवयवरूपाणामब्रह्मधर्माणां च विद्यमानत्वात्सन्देह इत्यर्थः । अतद्धर्मेति । तस्य ब्रह्मणो धर्मास्तद्धर्माः । न तद्धर्मा अतद्धर्माः शिराद्यवयवत्वादयः । लोकन्यायेनेति । यथा भूरादिलोकानां साकारत्वे नाब्रह्मत्वं तथात्रापीति भावः । पूर्वपक्षमाहुः—वैश्वानरेति । अग्नावेव । भूताग्नावेव । प्रसिद्धः । कोशादौ प्रसिद्धः । सिद्धत्वादिति । "वैश्वानरस्य सुमतौ स्याम राजा हि कं भुवनानामभिश्रीरि"त्यादिमन्त्रेषु सिद्धत्वाद्देवतारूपो य आत्मा स एवात्र ग्राह्य इत्यर्थः । नन्वस्तु पूर्वकाण्डे तथा उत्तरकाण्डे किं सम्पन्नमित्यत आह—तत इति । इति श्रुतेरिति । बृहदारण्यके सप्तान्नब्राह्मणे विशेषः । तथा चोत्तरकाण्डे सम्वत्सररूपा देवता वैश्वानरपदेन ग्राह्येति भावः । नन्वेतावतापि किं सिद्धमित्यत आहुः—सम्वत्सरस्येति । "न्यास इत्याहुर्मनीषिणो ब्रह्माणं ब्रह्मा विश्वः कतमः स्वयम्भूः प्रजापतिः सम्वत्सर" इति तैत्तिरीये नारायणीयश्रुत्या सम्वत्सरपदस्य प्रजापतिवाचकत्वादित्यर्थः । ब्रह्मेति । हिरण्यगर्भस्यैव ब्रह्मापरपर्यायत्वं समष्टिरूपत्वादात्मपदवाच्यत्वमिति भावः । अन्नभोजनमिति पाठः सर्वत्र । क्वचिदन्नभोजनत्वमिति पाठे भोक्तृत्वं अन्नभोजनकर्तृत्वमर्थः । नन्वादित्वाद्युः । जीवस्याणुरूपत्वाद्धिरण्यगर्भजीवस्य प्रादेशमात्रत्वोक्तिरसङ्गतेत्यत आहुः प्रादेशमात्रत्वमिति । लोकावयवत्वम् । द्युमूर्द्धत्वादिकम् । समाधानमाहुः उच्यत इति ।

( वैश्वानरविद्या ब्रह्मविद्यैव )

वैश्वानरः परमात्मैव। कुतः? साधारणशब्दविशेषात् । साधारणशब्दाद्विशेषः। ये पूर्वपक्षे साधारणशब्दा हिरण्यगर्भपरतया ततोऽपि विशेषोऽस्ति येन भगवानेव वैश्वानरो भवति। प्रादेशमात्रस्यैव द्युमूर्धत्वादिधर्मः। न हि विरुद्धधर्माश्रयत्वं भगवद्व्यतिरिक्ते सम्भवति। सर्वभवनसामर्थ्याभावात्। साधारणाद् धर्माच्छब्द एव विशेष इति वा । विशेषादित्येव वक्तव्ये साधारणशब्दशब्दौ प्रादेशमात्रस्यैव वैश्वानरशब्दवाच्यत्वं द्युमूर्धत्वादिकं तस्यैवेति समासेन द्योतयतः। अन्यथा विरोधाभावात् यदपि लोकात्मकं स्थूलं रूपं तदपि भगवत एव न हिरण्यगर्भस्येति। पुरुषत्वात्तस्य। विश्वस्य जडस्य नरस्य जीवस्य च भगवदंशत्वेन देवतात्वात्-देवताद्वन्द्वे च (पा. सू. ७।३।२१) इति विश्वानरौ तौ

---

सौत्रं हेतुं विशदयन्ति—**साधारणेति** । हिरण्यगर्भसाधारणाय शब्दद्युमूर्द्धत्वादयः, तस्माद्विशेषो दृश्यते इत्यर्थः। विशेषमाहुः—**प्रादेशमात्रस्येति**। अस्य विशेषत्वं समर्थयन्ति—**नहीति**। समासान्तरेण प्रकारान्तरमाहुः—**साधारणादिति**। **शब्द एवेति**। प्रादेशमात्रमभिविमानमिति शब्दे। अथवा प्रादेशमात्रद्युमूर्द्धादिवाक्यरूपे शब्दे एवेत्यर्थः। विशेषः विरुद्धधर्माधारत्वरूपः। तथा चाभिविमानत्वं व्यापकत्वम्। एवं च प्रादेशमात्रस्य व्यापकत्वं विरुद्धमिति भावः। द्वितीयपक्षे किञ्चित्स्वारस्यमाहुः—**विशेषादिति**। वक्तव्येति वैश्वानरो विशेषादित्येव सूत्रे वक्तव्येत्यर्थः। **साधारणेति**। प्रादेशमात्रवाक्यरूपः शब्दः साधारणशब्दः। अथ च द्युमूर्द्धादिवाक्यरूपः विशेषशब्दः एतौ शब्दावित्यर्थः। उभयोः शब्दयोः सामानाधिकरण्येऽनेकार्थप्रतिपादकत्वमाहुः—**प्रादेशमात्रस्येति**। नन्विदं कथं ज्ञायते इत्यत आहुः—**समासेनेति**। साधारणशब्दस्य सूत्रे निवेशं कृत्वा ततो ल्यब्लोपे पञ्चमीसमासेन सामानाधिकरण्य द्योत्यत इत्यर्थः। तथा च साधारणाद्धर्मादपेक्ष्य शब्दविशेषः साधारणशब्दविशेषस्तस्मादिति समासे अपेक्ष्येति ल्यबन्तपदेन यथा देवदत्ते एतादृशगुणवत्त्वापेक्षया इदृग्गुणवत्त्वं विशेष इति साधारणविशेषगुणवत्त्वं देवदत्त एव ज्ञायते तथा ब्रह्मण्यपि विरुद्धोभयधर्मवत्त्वं व्यञ्जनया द्योत्यते इति भावः। **अन्यथेति**। सामानाधिकरण्याभावे साधारणधर्ममपेक्ष्य विशेषधर्मवत्त्वकथनेन भगवतो विरुद्धधर्माश्रयत्वं न स्यादिति भावः। ननु प्रायशः द्युमूर्द्धत्व विराण्मये हिरण्यगर्भे श्रूयते अत आहुः—**यदपीति**। अत्र कारणमाहुः—**पुरुषत्वादिति**। यदि हिरण्यगर्भे द्युमूर्द्धत्वं स्यात्तदा भगवत्परपुरुषसूक्ते "सहस्रशीर्षा पुरुष" इत्यत्र पुरुषपदोपादान न स्यादिति भावः। ग्रन्थान्तरे श्रुतौ पुरुषपदस्य चतुर्द्धा प्रवृत्तिरुक्ता। **पुरा आसेति**। पुरं उषति। पुरि शेतेति निधायोगेन आकारविशेषे रूढ्या। एवं च साकारब्रह्मणि पुरुषपदस्य प्रवृत्तिर्मुख्येति भावः। इयं चानन्दमयाधिकरणे स वा एष पुरुषविध एवेत्यनेनानन्दमयस्यैवाकारविशेषस्योक्तत्वात् स एव पुरुषपदवाच्य इति द्युमूर्द्धत्वं तस्यैवेति हृदयम्। ननु पुरुषशब्दस्य तथास्तु नाम, वैश्वानरशब्दस्य, कथं ब्रह्मवाचकत्वमत आहुः—**विश्वस्येति** । **जडस्येति**। चतुर्दशभुवनात्मकब्रह्माण्डस्येत्यर्थः। जीवस्य तदन्तर्गतहिरण्यगर्भनामकस्य भगवदंशत्वेनेति विश्वो वैश्वानरः प्रथमपादः तैजसो हिरण्यगर्भो द्वितीयपाद 'इति श्रुत्या भगवदंशत्वेनेत्यर्थः। देवतात्वे सिद्धे वैश्वानरशब्दस्य योगेन ब्रह्मवाचकत्वमाहुः देवताद्वन्द्वे चेति । तथा च विश्वश्च नरश्च विश्वनरा-

निवासो यस्येति–तस्य निवासः (पा. सू. ४।२।६९) इत्यण्। तेन परमेश्वर एव वैश्वानरो भवति नान्यः। भगवदंशत्वादन्यत्रोपचारात्प्रयोगः। तस्माद्वैश्वानरः परमात्मा ॥ १।२।२४ ॥

(विभूतित्वनिरसनम्)

**स्मर्यमाणमनुमानं स्यादिति ॥ १।२।२५ ॥**

व्याख्यानेन भगवत्परत्वाद्वाक्यस्य प्रमाणान्तरमाह—

"केचित्स्वदेहे हृदयावकाशे प्रादेशमात्रं पुरुषं वसन्तम्।
चतुर्भुजं कञ्जरथाङ्गशङ्खगदाधरं धारणया स्मरन्ति ॥"
(भा. २।२।८) इति।

**स्मर्यमाणं** रूपमनुमानं स्यात्, प्रादेशमात्रवैश्वानरस्य ब्रह्मत्वे। स्मरणं हि मननं श्रुतस्य भवति। श्रुतिवाक्येभ्य एव हि श्रवणं, यदि प्रादेशमात्रवैश्वानरप्रतिपादकजातीयानां न ब्रह्मवाक्यत्वं स्यात्तदा स्मरणं नोपपद्येत। अत इति हेतोः प्रादेशमात्रवैश्वानरो भगवानेवेति सिद्धम् ॥ १।२।२५ ॥

(शाब्दनिरसनपूर्वकपुरुषत्वसमर्थनम्)

**शब्दादिभ्योऽन्तःप्रतिष्ठानाच नेति चेन्न तथा दृष्ट्युपदेशादसम्भवात्पुरुषमपि चैनमधीयते ॥ १।२।२६ ॥**

किञ्चिदाशङ्क्य परिहरति। ननु यदि स्मर्यमाणमनुमानं स्यादिति वाक्यार्थो निर्णीयते, तदा स्मृत्यन्तरेणान्यथापि व्याख्येयम्—

"अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः।
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥"
इति (भ. गी. १५।१४)

---

वित्येवं देवतयोर्द्वन्द्वे कृते देवताद्वन्द्वे चेत्यनेनानङि जाते विश्वानराविति सिद्धौ, तौ निवासो अस्येति 'सोऽस्य निवास' इत्यणि कृते वैश्वानर इति पदं योगेन ब्रह्मवाचकमित्यर्थः। अत्र तौ निवासो अधिष्ठानम् अस्येति विग्रहे ब्रह्मण अधिष्ठानं जगदित्यर्थः समायाति। स च प्रभुचरणानामनतिप्रशस्त इत्यत आहुः— **तस्य निवासेति**। तथा च तयोर्निवासः आश्रय इत्यर्थः। एवं च सूत्रे रूढ्या योगेन च वैश्वानरपदस्य ब्रह्मपरत्वं सिद्ध्यतीत्याहुः—**तेनेति**। **अन्यत्र** हिरण्यगर्भादौ। तथाच गौणी लक्षणा। पुरुषपदवद्वैश्वानरपदस्याप्यन्यत्र प्रयोग इति भावः ॥ २४ ॥

**स्मर्यमाणमनुमानं स्यात्**। एतत्सूत्रान्तरारम्भे प्रयोजनमाहुः—**व्याख्यानेनेति**। वाक्यस्य व्याख्यानेनं भगवत्परत्वं प्रतीयते, न तु स्वारस्येनात आग्रहवादित्वशङ्कानिवारणार्थं अनुमानप्रमाणान्तरसूचकसूत्रान्तरारम्भ इत्यर्थः।

ननु स्मर्यमाणं तत्किमत आहुः—**केचिदिति**। अनुमानं ब्रह्मत्वे स्यादित्यन्वयः।

ननु स्मर्यमाणस्य अनुमितिजनकत्वं कथमत आहुः—**स्मरणं हीति**। **श्रुतिवाक्येभ्य इति**। "श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिरि"ति स्मरणादित्यर्थः। यदि प्रादेशमात्रवैश्वानरः श्रुत्यर्थो न स्यात्तदा तस्य स्मरणं न विहितं स्यात्, तत्तु विहितं, तस्मात्स श्रुत्यर्थ इति तर्क एवानुमापक इति भावः ॥२५॥

**शब्दादिभ्योऽन्तःप्रतिष्ठानान्नेति चेन्न तथादृष्ट्युपदेशादसम्भवात्पुरुषमपि चैन-**

जाठर एवाग्निर्वैश्वानरो भवति। तस्यैव भगवद्विभूतित्वाद्वाक्यार्थो यथाकथञ्चिद् योजयिष्यते। न तु विरुद्धधर्माणां विद्यमानत्वाद् भगवत्परत्वं वाक्यस्य। विरुद्धधर्माः शब्दादयः, अन्तःप्रतिष्ठानं च। अग्निर्वैश्वानर इति शब्दः केवलवैश्वानरे भवेत्। भगवत्परत्वं योगेन। तदग्निसाहचर्यादग्निरेव भवेत्। तस्यैव च त्रेताग्निकल्पनमुपासनार्थम्। "प्राणो हि देवताः तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयम्" (छां. ५।१०।१) इत्यादिना। तदेतेभ्यो हेतुभ्योऽन्तःप्रतिष्ठितत्वमपि न भगवद्धर्मः। "पुरुषेऽन्तःप्रतिष्ठितं वेद" (श. ब्रा. १०।६।१।११) इति भिन्नहेतुर्हेतुहेतुश्च भवतीति न

---

मधीयते। सूत्रान्तस्थशङ्कांशस्यार्थमाहुः—नन्विति।—यथाकथञ्चिदिति। द्युमूर्धत्वादिधर्मवत्त्वं यद्यपि जाठराग्नेर्न भवति, तथापि अहं वैश्वानरत्यादिना भगवद्विभूतित्वात्समृद्धः सचिवो राजा सम्वृत इतिवदुपचाराद्योजना क्रियते इत्यर्थः। वाक्यस्य भगवत्परत्वे विरुद्धधर्मरूपं बाधकमाहुः—न त्वित्यादिना। न त्वित्यस्य वाक्यस्येत्यनेनान्वयः। वक्तुं न शक्यते इति शेषः। अत्र प्रदीपे नन्विति पाठं भ्रमेण धृत्वा व्याख्यातं तदसङ्गतम्। विरुद्धधर्मानाह—विरुद्धेति। तत्रादौ शब्दमाहुः—अग्निरिति। बृहदारण्ये वैश्वानरविद्यायां य पृष्टोऽग्निर्वैश्वानर इति वाक्यं श्रूयते, तत्रेदं विचार्यते। वैश्वानरशब्दके इत्यर्थः। अस्य भगवत्परत्वं निषेधति—केवलेति। अग्निसाहचर्यरहितकेवलवैश्वानरपदे कदाचिद् योगेन भगवत्परत्वं भवेत्। अत्र तु अग्निसाहचर्यस्य विद्यमानत्वात्, न ब्रह्मवाचकत्वमित्यर्थः। नन्वस्तु तथा, प्रकृते किमित्यत आहुः—तदिति। तत् तस्मात् कारणात् अग्निसाहचर्याज्जठराग्निवाचकाग्निपदसामानाधिकरण्यात्। अग्निरेवेति। तथा च विषयवाक्ये वैश्वानरपदेन जठराग्निरेव गृह्यते इति भावः। ननु वाक्ये हृदयं गार्हपत्य इति श्रूयते, इति ब्रह्मण एव त्रेताग्निकल्पनं युज्यते इत्यत आहुः—तस्यैवेति। जठराग्नेरेवेत्यर्थः। ननु कल्पनायाः उभयत्र साम्याज्जठराग्नेरेव कुत इत्यत आहुः—प्राणो हीति। प्राणो देवता तद्यद्भक्तमित्यादिना ज्ञायते इत्यर्थः। तथा चाग्निमवाक्ये स यां प्रथमामाहुतिं जुहुयात्तां जुहुयात् प्राणाय स्वाहेति श्रवणात् प्राणस्य चतुर्थ्या देवतात्वे तस्य जठराग्निरेव मुखं भवतीति तस्यैव त्रेताग्निकल्पनमिति भावः। शब्दादिभ्य इत्यस्योपसंहारमाहुः—तदेतेभ्यो हेतुभ्य इति। तत्तस्मात्कारणाद्विरुद्धधर्मशब्दादिभ्यो हेतुभ्यो न भगवत्परत्वं वाक्यस्येत्यर्थः। इतः परमन्तःप्रतिष्ठानरूपं विरुद्धधर्मे हेतुमाहुः—अन्तःप्रतिष्ठितत्वमिति। वाजिशाखायां श्रूयते "स यो हैतमग्निं वैश्वनरं पुरुषविधं पुरुषमन्तःप्रतिष्ठितं वेदे"ति। तत्र यत् अन्तःप्रतिष्ठितत्वमुक्तं भगवद्धर्मो न भवति, व्यापकीभूतस्य ब्रह्मणः पुरुषेऽन्तःप्रतिष्ठानाभावात्, किन्तु जाठराग्नेरेवायं धर्म इत्यर्थः। ननु पूर्वपक्षे तु वेदशब्दादिभ्योऽन्तःप्रतिष्ठानान्नेति चेन्नेति हेतुद्वयसूचकचकारोऽपेक्षितः, स च नोक्त इत्यत आह—पुरुषेन्तरिति। भिन्नहेतुरिति। शब्दादिभ्य इत्यस्माद्भिन्न हेतुरित्यर्थः। हेतुहेतुरिति। हेतोर्हेतुर्हेतुहेतुरिति षष्ठीसमासः। हेतोः शब्दादिरूपहेतोरन्तःप्रतिष्ठानं हेतुरित्यर्थः। एवं चान्तःप्रतिष्ठानं भिन्नो हेतुः, हेतोरपि हेतुश्च भवतीति पक्षे हेतुद्वयाभावात्, न चकारापेक्षेति भावः। ननु अन्तःप्रतिष्ठितत्वं शब्दादिभ्य इति हेतोः कथं हेतुरिति चेन्न, वैश्वानरविद्यास्थपुरुषोऽग्निर्वैश्वानर इति शब्दे अग्निपदसामानाधिकरण्यात् जठराग्निवाचकत्वं यद्यप्यस्ति, तथापि 'अहं वैश्वानरो भूत्वे'त्यत्राहम्पदसामानाधिकरण्याद्ब्रह्मवाचकत्वमपि स्यादित्यतः अन्तःप्रतिष्ठितत्वं तु जठराग्नेरेव न ब्रह्मण इत्येवंरीत्या जठराग्निसाधकशब्दादिभ्य इति हेतोरन्तःप्रतिष्ठितत्वं हेतुरिति गृहाण। अत्र पुरुषेऽन्तःप्रतिष्ठितं वेदेति हेतुर्हेतुश्च भवतीति हेतुत्रयघटितः पाठः समीचीनः। वेदेति। हेतुः हेतोः

चकारः । तस्माद्विरुद्धधर्माणां विद्यमानत्वान्न भगवान् वैश्वानर इति चेत्, न; तथा दृष्ट्युपदेशात् । सर्वभोक्तृत्वं भगवतो वक्तुं तथा दृष्टिरुपदिश्यते । विरुद्धधर्माणां तत्तद्भावापत्तिरित्यैश्वर्यमेव भगवतो वर्णितम् । तर्हि कार्यवाक्यमेवास्तु स्मृत्यनुरोधादिति चेत्तत्राह । असम्भवात् । नहि तस्य द्युमूर्धत्वादयो धर्माः सम्भवन्ति । उपचारादुपासनार्थं परिकल्पनं भविष्यतीति चेत्, न, पुरुषमपि चैनमधीयते वाजसनेयिनः । "स एषोऽग्निर्वैश्वानरो यत्पुरुषः स यो हैतमेवाग्निं वैश्वानरं पुरुषविधं पुरुषेऽन्तःप्रतिष्ठितं वेद" (श. ब्रा. १०।६।१।११) इति । तस्मात्पुरुषत्वं, पाठान्तरे पुरुषविधत्वं वा जाठरस्य न सम्भवतीति भगवानेव वैश्वानरः । भगवत्परत्वे सम्भवत्यन्यकल्पना न युक्तेति ॥ १।२।२६ ॥

( महाभूतत्वपरिहारः )

अत एव न देवता भूतं च ॥ १।२।२७ ॥

"वैश्वानरो न ऊत्या" (अ. वे. ६।३५।१) इत्यादिमन्त्रैर्देवताया महाभूताग्नेर्वा वाक्यार्थतेति कस्यचिद्बुद्धिः स्यात्तदप्यतिदेशेनैव परिहरति । मुख्योपपत्तिर्भगवत्परत्वे सम्भवति नान्यकल्पना युक्तेति ॥ १।२।२७ ॥

( शब्दार्थयोर्विचारेण ब्रह्मविद्यात्वसमर्थनम् )

साक्षादप्यविरोधं जैमिनिः ॥ १।२।२८ ॥

अधुना परिमाणविशेषो विचार्यते । प्रादेशमात्रत्वं भगवतः स्वाभाविकं कृत्रिमं वेति । अस्मिन् सिद्ध एव पूर्वोक्तं सिद्धं भवेदिति विचार्यते । तत्रास्मिन्नर्थे

---

शब्दादिभ्य इत्यस्य हेतुः हेतुहेतुमेवनार्थः । क्वचित्पुस्तके एकहेतुघटितः कुत्रचिद्धेतुद्वयघटितः क्वचिद्धेतुत्रयघटितोऽपि पाठो दृश्यते । सूत्रस्य समाधानांशस्य व्याख्यानमाहुः—न तथेति । तथा दृष्टेः जाठरदृष्टेः उपदेशः तया दृष्ट्युपदेशः तस्मात् । किमर्थमुपदेश इत्यत आहुः—सर्वेति । ननु सर्वोत्कृष्टस्य भगवतः हीने वैश्वानरे दृष्टिरनुचितेति पूर्वमेवोक्तमित्यत आहुः—विरुद्धेति । विरुद्धधर्माणां वैश्वानरत्वान्तःप्रतिष्ठितत्वादिधर्माणाम् । तत्तद्भावापत्तिरिति । जठराग्न्यादिभावापत्तिः । तथाच भगवतः सर्वभोक्तृत्वं वक्तुं जठराग्न्यादौ ब्रह्मवाचकवैश्वानरपदेनोपवर्णन सर्वकारणस्य सर्वकार्यस्वरूपत्वेन कथं तत्तद्भोगकृतरूपकार्यार्थमिति महदैश्वर्यमेव वेदे वर्णितमिति भावः । ननूपनिषदुक्तविरुद्धधर्माणां तत्तद्भावापत्तिः कार्यार्थमिति सिद्धम् । तथा चेदं कार्यवाक्यमेव भवतु इत्याशयेनाहुः—नहीति । स्मृत्यनुरोधात् । 'अहं वैश्वानरो भत्वे'ति गीतानुरोधात् । तथाच जठराग्निपरमेवेद वाक्यमिति शङ्कायां सूत्रकारः समाधानमाह असम्भवात् । शेषं स्पष्टम् । पाठान्तरेति । उत्तरपाठे 'स य एष' इति मन्त्रे एव पाठद्वयम् । "स य एषाग्निर्वैश्वानरो यत्पुरुष" इति पूर्वपाठः । पूर्वपाठे पुरुष इति पदम् । उत्तरपाठे पुरुषविधमिति पदम् । केचित्तु सूत्रे एव पाठद्वय पुरुषं पुरुषविधमिति वर्णयन्ति । अन्यकल्पनेति । उपासनार्थमग्नौ पुरुषत्वादिकल्पनेत्यर्थः । न युक्तेति । "सर्वे वेदा यत्पदमामनन्ती"ति श्रुत्या न युक्तेत्यर्थः ॥ २६ ॥

अत एव न देवताभूतं च । इत्यादीति । "वैश्वानरं द्वादशकपालं निर्वपेदि"त्यादिपदेन सङ्ग्रहः । शेषं स्पष्टम् ।

साक्षादप्यविरोधं जैमिनिः । मन्यते इति शेषः । एवं पञ्चस्वपि सूत्रेषु ज्ञेयम् । सूत्राणां प्रयोजनमाहुः—अधुनेति । अस्मिन्निति । यथाकथञ्चिदपि प्रादेशमात्रत्वे सिद्धे एवेत्यर्थः । पूर्वोक्त-

चत्वार ऋषयो वेदार्थचिन्तकाः प्रकारभेदेन । तत्र केवलं शब्दबलविचारका आचार्याः १ । शब्दार्थयोर्जैमिनिः २ । आश्मरथ्यस्तु शब्दोपसर्जनेनार्थविचारकः ३ । केवलार्थविचारको बादरिरिति ४ । आचार्यः पुनर्विचाराविचारयोर्दोषं पश्यन् विचारमपि वदन् तेषामल्पबुद्धिख्यापनाय नामान्याह । तत्र जैमिनिरुभयबलविचारकः प्रथमं निर्दिश्यते । व्यापकस्य प्रादेशमात्रत्वे साक्षादपि कल्पनाव्यतिरेकेणापि स्वरूपविचारेणैव विरोधं मन्यते जैमिनिः । आकाशवद्व्यापकं सर्वतः पाणिपादान्तं ब्रह्म । अत एव साकारत्वमनन्तमूर्तित्वं ब्रह्मणः स्वेच्छया परेच्छया स्वभावतश्च विभक्तमिव । त्रयोऽपि नियतपरिमाणाः । अनियतपरिमाणास्त्वाकाशवत्परिच्छेदनिरूप्याः । तद्वृद्धिह्रासाभ्यां तथा भवन्ति । स्मृतावप्युक्तम्—

> "विष्णोस्तु त्रीणि रूपाणि पुरुषाख्यान्यथो विदुः ।
> प्रथमं महतः स्रष्टृ द्वितीयं त्वण्डसंस्थितम् ॥
> तृतीयं सर्वभूतस्थं तानि ज्ञात्वा विमुच्यते ॥" इति ।

---

मिति । प्रादेशमात्रत्वे सति व्यापकत्वमुपविरुद्धधर्माश्रयत्वमिति । तत्र विचारे अस्मिन्नर्थे परिमाणविशेषरूपार्थे ऋषयः प्रकारभेदेन वेदार्थचिन्तका भवन्तीत्यन्वयः । **तत्र** चतुर्षु मध्ये । **शब्दबलेति** । शब्दनिष्ठं यद्बलं विलक्षणतात्पर्यजनकोच्चारणक्रमरूपं तेनार्थविचारका इत्यर्थः । **आचार्याः** बादरायणाः । उच्चारणक्रमादेवार्थनिर्णयात्तेषामाचार्यत्वम् । ऋषिनामकथनस्य प्रयोजनमाहुः—**आचार्य** इति । "नैषा तर्केण मतिरपनेये"ति निषेधेनातिविचारे दोषः कठवल्ल्याम् । "तत्त्वेव भयं विदुषोऽमन्वानस्ये"त्यविचारे दोषस्तैत्तिरीये उक्त इति दोषद्वयं पश्यन् "सोऽन्वेष्टव्य" इति श्रुत्या विचारमपि वदन् आचार्यः व्यासः सूत्रे नामान्याहेत्यर्थः । **उभयबलेति** । शब्दार्थोभयबल इत्यर्थः । सूत्रार्थमाहुः—**व्यापकस्येति** । अविरोधमुपपादयन्ति—**आकाशवदिति** । श्रुतौ प्रादेशमात्रमभिविमानामिति । शब्दक्रमाद्व्यापकत्वं पश्चात्प्रतीयते । तत्र "अग्निहोत्रं जुहोति" "यवागूं पचती"त्यादौ यवागूपाकं विनाऽग्निहोत्रहोमो न सम्भवतीति शब्दक्रमादार्थक्रमस्य बलीयस्त्वं स्वीकृत्य यवागूपाकस्य प्राथम्यं यथा, तथा व्यापकस्यैव प्रादेशमात्रत्वं सर्वतःपाणिपादान्तत्वं सम्भवतीत्यर्थः । बलेन व्यापकत्वस्य प्राथम्यं स्वीकृत्य विरोधो निवारित इत्यर्थः । अत एव सर्वत इत्यस्य श्रौतत्वादेव ब्रह्मण इत्यस्य देहलीदीपन्यायेनोभयत्र सम्बन्धः । **स्वेच्छयेति** । 'बहु स्या'मिति श्रुतौ । **परेच्छयेति** । "यद्यद्धियात उरुगाय विभावयन्ति तत्तद्वपुः प्रणयसे सदनुग्रहाये"ति श्रीभागवते स्वभावतः, "आकाशवत् सर्वगतश्च नित्यः", "सर्वतः पाणिपादं तदि"ति श्रुतौ । **विभक्तमिवेति** । सिद्धमिति शेषः । **त्रयोऽपीति** । पुरुषस्याकाशवत् परममहत्परिमाणत्वम्, पुरुषविधस्य विराड्रूपस्यापि नियतपरिणामवत्त्वम्, पुरुषेऽन्तःप्रतिष्ठितस्य प्रादेशमात्रपरिमाणवत्त्वमिति त्रयोऽपीत्यर्थः । ननु किमिदमुच्यते "समो मशकेन समो नागेने"ति श्रुतावनियतपरिमाणवत्त्वमप्युक्तमत आहुः—**अनियतेति** । **आकाशवदिति** । एक एव सर्वत्राकाशवत्सर्वगतः कथमित्यत्र विचारे क्रियमाणे "समो मशकेने"ति श्रुत्या घटाकाश मठाकाशवत्परिच्छेदनिरूप्या भवन्तीत्यर्थः । **तद्वृद्धीति** । तेषां परिच्छेदकानां नागमशकादीनां वृद्धीत्यर्थः । **तथा भवन्तीति** । यथा यथा यस्य शरीरं, तथा तथा परिमाणानि भवन्तीत्यर्थः । स्मृतिप्रमाणमाहुः—**स्मृताविति** । **त्रीणीति** । पुरुष- पुरुषविधं, पुरुषेऽन्तः...

मानरस्यैव त्रीणीत्यर्थः ।

भूतेषु पञ्चधा। उदरेऽङ्गुष्ठमात्रः, हृदये प्रादेशो, मूर्धनि च मनसीन्द्रियेषु चाणुः, चित्ते व्यापकः। एकस्याप्युपक्रमे सर्वेषु तथात्ववादो विभूतिरभेदाय। तस्माद्वैश्वानरस्य पुरुषत्वात्सच्चिदानन्दरूपेणैवं प्रादेशमात्रत्वं न विरुध्यते। अतः साकारब्रह्मवाद एव जैमिनेः सिद्धान्तः॥ १।२।२८॥

(शब्दोपसर्जनेनार्थविचारकमतोपन्यासः)

अभिव्यक्तेरित्याश्मरथ्यः॥ १।२।२९॥

निराकारमेव ब्रह्म मायाजवनिकाच्छन्नं तदपगमेन पुरुषाकारेणाधिदैविकदेवताधिष्ठितेनाभिव्यक्तः पुरुषोऽन्तर्यामी। अत एव पुरुषविध इति। अभिव्यक्तेर्हेतोः साकारत्वमपि मायापगमनकृतत्वान्न स्वाभाविकत्वं तथापि निर्दिश्यमानं सच्चिदानन्दरूपमेवाश्मरथ्यो मन्यते॥ १।२।२९॥

(केवलार्थविचारकमतम्)

अनुस्मृतेर्बादरिः॥ १।२।३०॥

बादरिः केवलयौक्तिकश्चिन्तनवशात् प्रादुर्भूतरूपानुवादिका श्रुतिरिति। "यद्यद्धिया त उरुगाय विभावयन्ति तत्तद्वपुः प्रणयसे सदनुग्रहाय" (भा. ३।९।१२) इति वाक्यानुरोधात्। अन्यथा बहुकल्पनायां बुद्धिसौकर्याभावात् तार्किकादिमतेष्वपि तथात्वाद्युक्त्यनुरोधेन ब्रह्मवादोऽप्यन्यथा नेय इति हि मन्यते। अस्मिन्पक्षे त्वतात्त्विकत्वम्। अथवा मायास्थानेऽनुस्मृतिः। अभिव्यक्तिस्तु तुल्या। एवं सति बादरिमतेऽपि तात्त्विकमेव रूपम्॥ १।२।३०॥

(प्रादेशमात्रस्थानमेव सम्पत्तिः)

सम्पत्तेरिति जैमिनिस्तथाहि दर्शयति॥ १।२।३१॥

जैमिनिमत आकारवादे नियतसाकारं मन्यमानस्तदेकदेशी नियतमेव प्रादेशमात्रभगवद्रूपं मन्यते। तन्निराकरणाय सर्वत्र प्रादेशत्वं सम्पत्तिकृतमित्याह।

---

तृतीयस्य परिमाणान्याहुः—भूतेष्विति। उदर इति। आश्रयार्थः। "अधो निष्ट्या वितस्त्यान्ते नाभ्यामुपरि तिष्ठती"ति तैत्तिरीयोपनिषदुक्तेः। हृदये ध्यानार्थः, शिरसि सर्वार्थम्, मनसीन्द्रियाणां विषयग्रहणार्थम्, इन्द्रियेषु स्वामित्वार्थम्। चित्तेति। तत्सर्वं व्यापकं चित्तं प्रविश्य व्योम्नि धारयेदिति वाक्यात् चित्तस्य व्यापकत्वात् तत्र व्यापक इत्यर्थः। ननु प्रादेशमात्रोपक्रमे अन्यविचारो निरर्थक इत्यत आहुः—एकस्येति। तथात्ववादः। भगवत्त्ववादः। अभेदाय। वैश्वानराणां भेदबोधनायेत्यर्थः॥२८॥

अभिव्यक्तेरित्याश्मरथ्यः। त्रिषु सूत्रेषु अविरोधं मन्यते इति शेषः। तदपगमेन मायापगमेन। आधिदैवकेति। ब्रह्मविष्णुशिवात्मकेन। अत एव। ब्रह्माद्यधिष्ठानादेव॥ २९॥

अनुस्मृतेर्बादरिः। यौक्तिकः। युक्तिः प्रधानं यस्य सः। अनुस्मृतेरित्यस्यार्थमाहुः—चिन्तनवशादिति। प्रादुर्भूतरूपेति। "भक्तस्यानुग्रहार्थं वै ब्रह्मणो रूपकल्पने"त्यपि बोध्यम्। तथात्वादिति। युक्तिप्रधानत्वात्। अतात्त्विकत्वरूपमस्वरसं हृदि निधायाहुः—अथवेति॥ ३०॥

सम्पत्तेरिति जैमिनिस्तथाहि दर्शयति। पुनः जैमिनिमतप्रदर्शने बीजमाहुः—जैमिनिमत इति। साकारवादः जैमिनिर्मन्यते। नियतसाकारः प्रादेशमात्रः तदेकदेशी मन्यते। तत्र स्थानानुरोधेन तदनुगुणा स्थितिः संपत्तिः, तत्कृतत्वमेव प्रादेशमात्रत्वम्, न तु स प्रादेशमात्र इति जैमिनिराहेत्यर्थः।

तत्र का सम्पत्तिः, कथमिति स्वयमेव श्रुत्या प्रदर्शयति । वाजसनेयिब्राह्मणे द्युप्रभृतीन् पृथिवीपर्यन्तान् वैश्वानरस्यावयवान् अध्यात्मे च मूर्धप्रभृतिषु चिबुकपर्यन्तेषु सम्पादयन् "प्रादेशमात्रमिह वै देवाः सुविदिता अभिसम्पन्नास्तथा तु वै एतान् वक्ष्यामि यथा प्रादेशमात्रमेवाभिसम्पादयिष्यामीति स होवाच मूर्धानमुपदिशन्नेष वा अतिष्ठा वैश्वानरः" (बृ. जाबालशा.) इत्यादिना । सम्पत्तिनिमित्तमेव प्रादेशमात्रत्वं वैश्वानरस्याह । नतु प्रादेशमात्र एव वैश्वानर इति तदेकदेशिपरिहारं जैमिनिर्मन्यते ॥ १।२।३१ ॥

( शब्दबलसिद्धं स्वाभाविकं प्रादेशमात्रत्वम् )

आमनन्ति चैनमस्मिन् ॥ १।२।३२ ॥

मुख्यं स्वसिद्धान्तमाह व्यापक एव प्रादेश इति । नहि विरुद्धमुभयं भगवत्यनवगाह्यमाहात्म्ये । तस्मात् प्रमाणमेवानुसर्तव्यम्, न युक्तिः । शब्दबलविचार एव मुख्यः । नतु प्रातीतिकविरोधादन्यथात्वकल्पनम् । वैश्वानरस्य पुरुषत्वं पुरुषविधत्वं, पुरुषेऽन्तःप्रतिष्ठितत्वं च वाजसनेयिनः समामनन्ति । नहि तस्य तद्विधत्वं तस्मिन्प्रतिष्ठितत्वं च सम्भवति युक्त्या । अतोऽन्ये ऋषयो भ्रान्ता एव, येऽन्यथा कल्पयन्तीत्यभिप्रेत्य स्वमतमाह ।

( तत्र प्रमाणम् )

एवं वैश्वानरमस्मिन्मूर्धचिबुकान्तराले जाबालाः समामनन्ति "एषोऽनन्तोऽव्यक्त आत्मा योऽविमुक्ते प्रतिष्ठित इति सोऽविमुक्तः कस्मिन्प्रतिष्ठितः" (जा. १) इत्यादिना । भ्रुवोः प्राणस्य च यः सन्धिः स एष द्युलोकस्य परस्य च सन्धिर्भवतीति । न ह्यनन्तः सङ्कुचितस्थाने भवति विशेषणवैयर्थ्यापत्तेः । युक्तिगम्या त्वत्र-

---

कथमित्याकाङ्क्षायामाहुः—तत्रेति । स्वयमेव जैमिनिरेव । सम्पादयन्निति । वैश्वानरः स्वावयवान् अध्यात्मे च चिबुकपर्यन्तेषु सम्पादयन् सन् प्रदर्शयतीति पूर्वेणान्वयः । वाजसनेयिश्रुतिमाहुः—प्रादेशमात्रमिहेति । वैश्वानर इत्यादिपदेन वाच्येयं श्रुतिः । तथा हि "चक्षुषी उपदिशन्नुवाच एष वै सुतेजा वैश्वानर इति नासिके उपदिशन्नुवाचैष वै पृथक् वर्त्मा वैश्वानर"इत्यारभ्य "चिबुकमुपदिशन्नुवाचैष वै प्रतिष्ठा वैश्वानर" इत्यन्तेन स्थानानुरोधकृतमेव प्रादेशमात्रत्वं श्रुतौ उक्तम्, न तु स्वाभाविकं तस्य तदित्यर्थः । सम्पत्तिनिमित्तमेवेति । मूर्धानमारभ्य चिबुकपर्यन्तं प्रादेशमात्रं स्थानं सम्पत्तिस्तन्निमित्तमित्यर्थः ॥ ३१ ॥

आमनन्ति चैनमस्मिन् । मुख्यमिति । सम्पत्तिकृतं प्रादेशमात्रत्वं न, किन्तु स्वाभाविकं प्रादेशमात्रत्वं शब्दबलसिद्धमित्यर्थः । व्यापकस्य प्रादेशमात्रत्वं, व्यापकत्वं च शब्देनैव बोध्यते, इति स एव मुख्य इत्यर्थः । कल्पनमिति । एकस्यैव प्रादेशमात्रत्वं व्यापकत्वं च विरुद्धमिति प्रातीतिकविरोधः । न तु शास्त्रसिद्धस्वरूपशात् युक्त्या प्रादेशमात्रो न भवतीत्यन्यथात्वकल्पनं नेत्यर्थः । विरोधो नास्तीति शब्दतः सिद्धमित्यर्थे श्रुतिं प्रमाणयन्ति—वैश्वानरस्येति । स्वमतमाहेति । बादरायणः स्वमतं विरुद्धधर्माश्रयत्वरूपमाहेत्यर्थः । सूत्रार्थमाहुः—एनमिति ।

जाबालश्रुतिमाहुः—एष इति भवतीत्यन्तेन । वैयर्थ्यापत्तेरिति । 'कालोऽनन्तोऽजरोऽमर' इत्यनानन्त इति विशेषणवैयर्थ्यापत्तेरित्यर्थः । नैषा तर्केण मतिरपनेयेत्याशयेनाहुः—युक्तीति । अत्र

ह्मविद्यैव । अविरोधेऽपि वक्ष्यति श्रुतेस्तु शब्दमूलत्वात् (ब्र. सू. २।१।२७) इति । ननु तथापि काचिद्वेदानुसारिणी युक्तिर्वक्तव्या शास्त्रसाफल्यायेति चेत् । उच्यते । विरोध एव नाशङ्कनीयो वस्तुस्वभावात् । अयःकान्तसन्निधौ लोहपरिभ्रमणे या युक्तिर्गर्भस्यौदर्यादाहे, रेतसो मयूरत्वादिभावे । न हि सर्वत्र स्वभावदर्शनाभ्यामन्योपपत्तिः कैश्चिदपि शक्यते वक्तुम् । "तस्यान्ते सुषिरम्" (ना. १३।२) इत्यादिना श्रुतिरेवमेवाह । यशोदा स्तनन्धयस्य च भगवतो मुखारविन्दे विश्वमेव दृष्ट्वा स्वभ्रमायाविद्यानिराकरणाय सिद्धान्तमाह—

"अथो अमुष्यैव ममार्भकस्य यः कश्चनौत्पत्तिक आत्मयोगः" (भा. १०।८।४०) इत्युलूखलबन्धने चायमर्थो निर्णीतः । तस्मादानन्दांशस्यैवायं धर्मो यत्र स्वाभिव्यक्तिस्तत्र विरुद्धसर्वधर्माश्रयत्वमिति चकारार्थः । तस्मात्प्रादेशमात्रो व्यापक इति वैश्वानरो भगवानेवेति सिद्धम् ॥ १।२।३२।८ ॥

इति श्रीवेदव्यासमतवर्तिश्रीवल्लभाचार्यविरचिते ब्रह्मसूत्राणुभाष्ये प्रथमाध्यायस्य द्वितीयः पादः ॥ २ ॥

---

सूत्रकाराशयं प्रकटीकुर्वन्ति—अविरोधेऽपीति । श्रुतेरिति । प्रादेशमात्रमभिविमानमिति श्रुतेः । शब्दमूलत्वादिति । शब्दशक्तिस्वभावाधीनत्वादित्यर्थः । ननु सर्वत्र गौतमादिशास्त्रे युक्त्यैव विरोधपरिहारो दृश्यते इत्याशयेन शङ्कते—नन्विति । 'सति कुड्ये चित्र'मिति न्यायेन समाधानमाहुः—उच्यत इति । दृष्टान्तमाहुः—अयःकान्तेति । लोहचुम्बकः । औदर्यादाहेति । औदर्येण जठराग्निना अदाहेत्यर्थः । रेतस इति । मयूरेण स्वस्त्रीसन्निधौ नृत्यं क्रियते, तदा नेत्रान्तरे बिन्दुपतने मयूर्या भक्षणं क्रियते तत्र रेतसः पतनं न जायते, किन्तु मयूर उत्पद्यते इति वैचित्र्यमित्यर्थः । स्वभावेति । स्वभावः वस्तुस्वभावः । दर्शनं शास्त्रमित्यर्थः । शास्त्रमेवाहुः तस्यान्त इति । "तस्यान्ते सुषिरꣳसूक्ष्मं तस्मिन् सर्वं प्रतिष्ठितमि"ति तैत्तिरीयोपनिषदि एवमाहेत्यर्थः । यशोदेति । आहेत्यनेनान्वयः ।

किमाह—अथेति । औत्पत्तिकः स्वभावसिद्धः । निर्णीत इति । द्व्यङ्गुलन्यूनतया भौतिकवैलक्षण्येन निर्णीतः । वस्तुस्वभावे तर्को नास्तीत्याशयेनोपसंहरन्ति तस्मादिति । इति अष्टमाधिकरणम् ।

इति श्रीमन्मुकुन्दरायसहजमाधुरीपरमानिर्वचनीयसरसवदनतामरसरसस्रुधाह्रदाऽवगाहिश्रीमदाचार्यपदाब्जकृपापारसारश्रीमत्प्रभुचरणात्मजमहाराजयदुनाथकुलोद्भवगोस्वामिश्रीगोपालात्मजगिरिधरविरचितेऽणुभाष्यविवरणे प्रथमाध्यायस्य द्वितीयः पादः समाप्तिमफाणीत् ॥

---

१ अत्रेत्थं व्याख्यानान्तराणि—

(१) तत्र शाङ्कराः—पूर्वं रूपोपन्यासप्रसङ्गात् त्रैलोक्यदेही वैश्वानरोऽत्र स्मृतो विचार्यत इति प्रसङ्गसङ्गत्येदमाह । यद्वा, पूर्वम् उपक्रमस्यादृश्यत्वादिसाधारणधर्मस्य वाक्यशेषस्य सर्वज्ञत्वादिलिङ्गेन ब्रह्मनिष्ठत्वमुक्तम् । तद्वदत्राप्युपक्रमस्य साधारणवैश्वानरशब्दस्य वाक्यशेषस्य होमाधारत्वलिङ्गेन जाठरनिष्ठत्वमस्त्विति दृष्टान्तसङ्गत्येदमाह । अत्र पूर्वपक्षे जाठरादेरुपास्तिः । सिद्धान्ते ब्रह्मण इति फलभेदः । छान्दोग्ये वैश्वानरविद्यायाम् 'को न आत्मा किं ब्रह्म' इति 'आत्मानमेवेमं वैश्वानरम्…' इति चोपक्रम्याम्नायते'—यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते' इत्यादि । तत्र किं वैश्वानरो जाठराग्निः, उत भूताग्निः, उत [illegible]दिदेवता, आहोस्वित् शारीरः, आहोस्वित् परम-

श्वर इति विशये, जाठरादिरिति पूर्वः पक्षः । सिद्धान्तस्तु—वैश्वानरः परमात्मैव । कुतः ? साधारणशब्दविशेषात् । साधारणशब्दयोर्विशेषः तस्मादित्यर्थः । जाठरभूताग्न्यादित्यदेवतासु साधारणो वैश्वानरशब्दः; जीवपरमात्मनोः साधारणः आत्मशब्दः तयोः वैश्वानरात्मशब्दयोः उभयत्र साधारणयोरपि सतोः परमात्मपरत्व एव विशेषोऽवगम्यते । "तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाः" इत्यादौ उक्तद्युमूर्धत्वादिः सर्वात्मकपरमात्मपरत्व एव विशेषोऽवगम्यते उपपन्नतरत्वात् । तस्मात्, वैश्वानरः परमात्मैव न जाठरः; चरमश्रुतहोमाधारत्वापेक्षया प्रथमश्रुतद्युमूर्धत्वादेर्बलवत्त्वादिति सिद्धम् ॥

स्मृत्या च श्रुत्यर्थः शक्यो निर्णेतुमित्याह—वैश्वानरशब्दस्य परमात्मपरत्वे स्मर्यमाणम् "यस्याग्निरास्यं द्यौर्मूर्धा खम् ...." इत्यादिस्मृत्युक्तत्रैलोक्यात्मकं रूपम्, अनुमानं स्यात्, अनुमापकं लिङ्गं स्यादित्यर्थः । एवं च स्मृतौ परमेश्वरस्यैवोक्तत्वात् तन्मूलभूतश्रुतौ विद्यमानवैश्वानरशब्दः परमात्मपर एवेति तात्पर्यम् । सूत्रे इति शब्दः हेतौ, यस्मादेवं लिङ्गमस्ति तस्माद्वैश्वानरः परमात्मैवेति सिद्धम् ॥

सिद्धान्तविधिं विधान्तरेणाक्षिप्य समाधातुमाह—शब्दस्तावत् वैश्वानरशब्दो न परमात्मपरः, जाठरादौ रूढत्वात्; आदिशब्देन 'हृदयं गार्हपत्यः' इत्याद्यग्नित्रितयकल्पनम्, 'तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयम्' इत्यादिना प्राणाहुत्याधारतासङ्कीर्तनं च गृह्यते; एतेभ्यो हेतुभ्यो जाठर एव वैश्वानरः । किञ्च, अन्तःप्रतिष्ठानात् "पुरुषेऽन्तःप्रतिष्ठितं वेद" इति वैश्वानरस्य अन्तःप्रतिष्ठानश्रवणात् जाठर एव वैश्वानरो न परमात्मेति चेत्, न, कुतः ? तथादृष्ट्युपदेशात् । तथा जाठररूपेण परमेश्वरस्य दृष्टेः उपास्तेः उपदेशात्, 'मनोमयः ...' इत्यादिवत् । अथवा तथा तस्मिन् जाठरे परमेश्वरदृष्टेरुपदेशात् 'मनो ब्रह्मेत्युपासीत' इतिवत् । ननु जाठर एव वैश्वानरो मुख्योऽस्तु, तत्राह—असम्भवादिति; 'मूर्धैव सुतेजाः' इत्यादेः जाठरे तावदसम्भवादित्यर्थः । किं च पुरुषमपि चैनं वैश्वानरं वाजसनेयिनोऽधीयते—'एतमेवमग्निं वैश्वानरं पुरुषविधं पुरुषेऽन्तःप्रतिष्ठितं वेद' इति । अतः परमेश्वरस्य सर्वात्मकतया पुरुषविधत्वाद्युपपत्तेः वैश्वानरः परमात्मैवेति सिद्धम् ॥

इत्थं द्युमूर्धत्वादिविशेषस्य जाठरविषयत्वं सन्दूष्य देवतादिविषयत्वं दूषयितुमाह—देवता च भूतं च देवताभूतम्; एकवद्भाव उभयमपि न वैश्वानरः । कुतः ? अत एव उक्तेभ्यो हेतुभ्यः । न हि विकारस्य भूताग्नेः विकारान्तरद्युलोकाधारात्मकत्वं सम्भवति । न च देवताया ऐश्वर्ययोगात्तदस्त्विति वाच्यम्, तस्याः परमेश्वराधीनैश्वर्यवत्त्वात् । अतो वैश्वानरः सर्वात्मकः परमात्मैवेत्यर्थः ॥

पूर्वं जाठरपरत्वं वैश्वानरादिशब्दस्याभ्युपेत्य जाठरोपाधिकं जाठरप्रतीकं वा ब्रह्मोपास्यमत्यभिहितम् । अधुना विना वैश्वानरोपाधिकल्पनां साक्षादेव परमात्मोपासनापरिग्रहे विरोधाभावं जैमिनिराचार्यो मन्यत इत्याह—वैश्वानरस्य पौर्वापर्यपर्यालोचनया ब्रह्मत्वे निर्णीते, विश्वश्चासौ नरश्चेति विश्वानरः सर्वात्मकः, विश्वानर एव वैश्वानर इति योगेन वैश्वानरशब्दो ब्रह्मपरतया नेतव्य इति तात्पर्यार्थः ॥

ननु परमात्मपरत्वे कथं प्रादेशमात्रश्रुतिः इत्याशङ्क्य तां व्याख्यातुमाह—अनवच्छिन्नस्यापि परमात्मनः प्रादेशमात्रत्वमुपपद्यते । कुतः ? अभिव्यक्तेः । उपासकानामनुग्रहाय परमेश्वरो हृदयादिस्थानेषु प्रादेशपरिमाणोऽभिव्यज्यते किलेत्याश्मरथ्याचार्यो मन्यत इत्यर्थः ॥

प्रादेशमात्रहृदयपुण्डरीकस्थेन मनसा अनुस्मृतेर्ध्यानात् प्रादेशमात्र इत्युपचर्यत इति बादरिराचार्यो मन्यत इति ॥

मतान्तरमाह—मूर्धप्रभृतिचिबुकान्ते प्रादेशमात्रे वैश्वानरस्योपास्यत्वप्रतिपादनात् परमेश्वरस्य प्रादेशमात्रत्वं सम्पन्नम् । ततः प्रादेशमात्रत्वसंपत्तेः प्रादेशमात्रश्रुतिरुपपद्यत इति जैमिनिराचार्यो मन्यते । अस्मिन्नर्थे श्रुत्यन्तरसम्बन्धमाह सूत्रकारः—तथाहि दर्शयति । "प्रादेशमात्रमिव ह वै देवाः सुविदिता अभिसम्पन्नाः" इत्यादि वाजसनेयिब्राह्मणं मूर्धादिचिबुकान्तेषु द्युप्रभृतीन् पृथिव्यन्तानवयवान् त्रैलोक्यात्मनो वैश्वानरस्य सम्पादयत् प्रादेशमात्रत्वसम्पत्तिं परमात्मनो दर्शयतीत्यर्थः ॥

प्रादेशमात्रश्रुतिः सम्पत्तिनिमित्ता इत्यत्र श्रुत्यन्तरमाह—अस्मिन्प्रादेशपरिमाणे मूर्धचिबुकान्तराले एनं परमेश्वरं जाबालाः "य एषोऽनन्तोऽव्यक्त आत्मा सोऽविमुक्ते प्रतिष्ठित इति" इत्याद्यामनन्ति । अतः प्रादेशमात्रश्रुतिरुपपन्नेत्यर्थः । तस्मात्सर्वात्मकः परमात्मैवेहोपास्य इत्यतिशोभनम् ॥

(२) रामानुजीये—इदमामनन्ति छन्दोगाः "आत्मानमेवेमं वैश्वानरं सम्प्रत्यध्येषि तमेव नो ब्रूहि" इति प्रक्रम्य "यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते" इति । तत्र सन्देहः, किमयं वैश्वानर आत्मा परमात्मेति शक्यनिर्णय उत नेति । किम्प्राप्तम् ? अशक्यनिर्णय इति । कुतः ? वैश्वानरशब्दस्य चतुष्वर्थेषु प्रयोगदर्शनात् । जाठराग्नौ तावत् । "अयमग्निर्वैश्वानरो येनेदमन्नं पच्यते यदिदमद्यते । तस्यैष घोषो भवति यमेतत्कर्णावपिधाय शृणोति । स यदोत्क्रमिष्यन् भवति, नैनं घोषं शृणोति" इति । महाभूते तृतीये च । "विश्वस्मा अग्निं भुवनाय देवा वैश्वानरं केतुमह्नामकृण्वन्" इति । देवतायां च "वैश्वानरस्य सुमतौ स्याम राजा हि कं भुवनानामभिश्रीः" इति । परमात्मनि च "तदात्मन्येव हृदयेऽग्नौ वैश्वानरे प्रास्यत्" "स एष वैश्वानरो विश्वरूपः प्राणोऽग्निरुदयत" इति च । वाक्योपक्रमादिषु चोपलभ्यमानान्यपि लिङ्गानि सर्वानुगुणतया नेतुं शक्यानीति । एवम्प्राप्तेऽभिधीयते—वैश्वानरः साधारणशब्दविशेषात् । वैश्वानरः परमात्मा । कुतः ? साधारणशब्दविशेषात् । विशेष्यत इति विशेषः । साधारणस्य वैश्वानरशब्दस्य परमात्मसाधारणैश्वर्यविशेष्यमाणत्वादित्यर्थः । तथाहि औपमन्यवादयः पञ्चेमे महर्षयः समेत्य "को न आत्मा, किं ब्रह्म" इति विचार्य "उद्दालको ह वै भगवन् तोयमारुणिः सम्प्रतीममात्मानं वैश्वानरमध्येति तं हन्ताभ्यागच्छाम" इत्युद्दालकस्य वैश्वानरात्मविज्ञानमवगम्य तमभ्याजग्मुः । स चोद्दालक एतान्वैश्वानरात्मजिज्ञासूनमिलक्ष्यात्मनश्च तत्राकृत्स्नवेदित्वं मत्वा तान् होवाच "अश्वपतिर्वै भगवन् तोयं केकयः सम्प्रतीममात्मानं वैश्वानरमध्येति तं हन्ताभ्यागच्छाम" इति । ते चोद्दालकपष्ठास्तमश्वपतिमभ्याजग्मुः, स च तान्महर्षीन्यथार्हं पृथगभ्यर्च्य न मे स्तेनः" इत्यादिना, "यक्ष्यमाणो ह वै भगवन्तोऽहमस्मि" इत्यन्तेनात्मनो वृत्तस्थतया प्रतिग्रहयोग्यतां ज्ञापयन्नेव ब्रह्मविद्भिरपि प्रतिषिद्धस्य परिहरणीयतां विहितकर्मकर्तव्यतां च प्रज्ञाप्य यावदेकैकस्मा ऋत्विजे धनं दास्यामि तावद्भगवद्भ्यो दास्यामि वसन्तु भगवन्तः" इत्यवोचत् । ते च मुमुक्षवो वैश्वानरमात्मानं जिज्ञासमानास्तमेवात्मानमस्माकं ब्रूहीत्यवोचन् । "तदेवं को न आत्मा किं ब्रह्म" इति जीवात्मनामात्मभूतं ब्रह्म जिज्ञासमानैस्तज्ज्ञमन्विच्छद्भिर्वैश्वानरात्मब्रह्मसकाशमागम्य पृच्छ्यमानो वैश्वानरात्मा परमात्मेति विज्ञायते । आत्मब्रह्मशब्दाभ्यामुपक्रम्य पश्चात्सर्वत्रात्मवैश्वानरशब्दाभ्यां व्यवहाराच्च ब्रह्मशब्दस्थाने निर्दिश्यमानो वैश्वानरशब्दो ब्रह्मैवाभिधत्त इति विज्ञायते । किञ्च, "स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति" । तद्यथेषीकतूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते" इति च [illegible] वैश्वानरात्मानं परं ब्रह्मेति ज्ञापयति ॥

इतश्च वैश्वानरः परमात्मा । स्मर्यमाणमनुमानं स्यादिति । द्युप्रभृतिपृथिव्यन्तमवयवविभागेन वैश्वानरस्य रूपमिहोपदिश्यते । तच्च, श्रुतिस्मृतिषु परमपुरुषरूपतया प्रसिद्धम् । तदिह तदेवेदमिति स्मर्यमाणं प्रत्यभिज्ञायमानं वैश्वानरस्य परमपुरुषत्वेऽनुमानं लिङ्गमित्यर्थः । इति शब्दः प्रकारवचनः । इत्थम्भूतं रूपं प्रत्यभिज्ञायमानं वैश्वानरस्य परमात्मत्वेऽनुमानं स्यात् । श्रुतिस्मृतिषु हि परमपुरुषस्येत्थं रूपं प्रसिद्धम् । यथाऽथर्वणे—"अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग्विवृताश्च वेदाः । वायुः,प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा" इति । "अग्निरिह द्युलोकः असौ वै लोकोऽग्निः" इति श्रुतेः । स्मरन्ति च मुनयः, "द्यां मूर्धानं यस्य विप्रा वदन्ति खं वै नाभिं चन्द्रसूर्यौ च नेत्रे । दिशःश्रोत्रे विद्धि पादौ क्षितिं च सोऽचिन्त्यात्मा सर्वभूतप्रणेता" इति । "यस्याग्निरास्यं द्यौर्मूर्धा खं नाभिश्चरणौ क्षितिः । सूर्यश्चक्षुर्दिशः श्रोत्रं तस्मै लोकात्मने नमः" इति च । इह च द्युप्रभृतयो वैश्वानरस्य मूर्धाद्यवयवत्वेनोच्यन्ते । तथाहि, तैरौपमन्यवप्रभृतिभिर्महर्षिभि"रात्मानमेवेमं वैश्वानरं सम्प्रत्यध्येषि तमेव नो ब्रूहि" इति पृष्टः कैकेयस्तेभ्यो वैश्वानरात्मानमुपदिदिक्षुर्विशेषप्रश्नान्यथानुपपत्त्या वैश्वानरात्मन्येतैः किञ्चिज्ज्ञातं किञ्चिच्चाज्ञातमिति विज्ञाय ज्ञाताज्ञातांशबुभुत्सया तानेकैकं पप्रच्छ । तत्रौपमन्यव "कं त्वमात्मानमुपास्से" इति पृष्टे "दिवमेव भगवो राजन्" इति तेन चोक्ते दिवि तस्य पूर्णवैश्वानरात्मबुद्धिं निवर्तयन् वैश्वानरस्य "द्यौर्मूर्धेति" चोपदिशंस्तस्या वैश्वानरांशभूताया दिवः सुतेजा इति गुणनामधेयं प्राचिख्यपत् । एवं सत्ययज्ञादिभिरादित्यवाय्वाकाशपृथिवीनामेकैकेनैकैकमुपास्यमानतया कथितानां विश्वरूपः पृथग्वर्त्मा बहुलो रयिः प्रतिष्ठेत्येकैकगुणनामधेयानि वैश्वानरात्मनश्चक्षुःप्राणसन्देहवस्तिपादावयवत्वं चोपदिष्टम् । सन्देहो मध्यकाय उच्यते । अत एवम्भूतद्युमूर्धत्वादिविशिष्टं परमपुरुषस्यैव रूपमिति वैश्वानरः परमपुरुष एव ॥

पुनरप्यनिर्णयमेवाशङ्क्य परिहरति—यदुक्तं वैश्वानरः परमात्मेति निश्चीयत इति तन्न; शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च जाठरस्याग्नेरिह प्रतीयमानत्वात् । शब्दस्तावद्वाजिनां वैश्वानरविद्याप्रकरणे "स एषोऽग्निर्वैश्वानरः" इति वैश्वानरसमानाधिकरणतयाऽग्निरिति श्रूयते । अस्मिन्प्रकरणे च "हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन आस्यमाहवनीयः" इति वैश्वानरस्य हृदयादिष्वस्याग्नित्रयकल्पनं क्रियते । "तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयं स यां प्रथमाहुतिं जुहुयात्तां जुहुयात्प्राणाय स्वाहा" इत्यादिना प्राणाहुत्याधारत्वं च वैश्वानरस्यावगम्यते । तथा वैश्वानरस्यास्मिन्पुरुषेऽन्तःप्रतिष्ठानं वाजसनेयिनः समामनन्ति । "स यो हैतमेवमग्निं वैश्वानरं पुरुषविधं पुरुषेऽन्तःप्रतिष्ठितं वेद" इति । अतोऽग्निशब्दसामानाधिकरण्यादग्नित्रेतापरिकल्पनात्प्राणाहुत्याधारभावादन्तःप्रतिष्ठानाच्च वैश्वानरस्य जाठरत्वमपि प्रतीयत इति नैकान्ततः परमात्मत्वमिति चेत्, तन्न; तथादृष्ट्युपदेशात् । पूर्वोक्तस्य त्रैलोक्यशरीरस्य परस्य ब्रह्मणो वैश्वानरस्य जाठराग्निशरीरतया तद्विशिष्टस्योपासनोपदेशात् । अग्निशब्दादिभिर्हि न केवलो जाठरः प्रतिपाद्यते । अपि तु जाठराग्निविशिष्टः परमात्मा । कथमिदमवगम्यत इति चेत्, असम्भवात् । जाठरस्य केवलस्य त्रैलोक्यशरीरत्वासम्भवात् । त्रैलोक्यशरीरतया प्रतिपन्नवैश्वानरसमानाधिकरणो जाठरविषयतया प्रतीयमानोऽग्निशब्दो जाठरशरीरतया तद्विशिष्टं परमात्मानमेवाभिदधातीत्यर्थः । तथोक्तं भगवता, "अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः । प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम्" इति । जाठरानलशरीरो भूत्वेत्यर्थः । अतस्तद्विशिष्टस्योपासनमत्रोपदिश्यते । किञ्च, पुरुषमपि चैनमधीयते वाजसनेयिनः "स एषोऽग्निर्वैश्वानरो यत्पुरुषः" इति ।

न हि जाठरस्य केवलस्य पुरुषत्वम् । परमात्मन एव हि निरुपाधिकं पुरुषत्वम् । यथा, "सहस्रशीर्षा पुरुषः", "पुरुष एवेदं सर्वम्" इत्यादौ ॥

अत एव न देवता भूतं च ॥ उक्तेभ्य एव हेतुभ्यो देवतायाश्च तृतीयस्य महाभूतस्यापि न वैश्वानरत्वप्रसङ्गः ॥

साक्षादप्यविरोधं जैमिनिः ॥ वैश्वानरसमानाधिकरणस्याग्निशब्दस्य जाठराग्निशरीरतया तद्विशिष्टस्य परमात्मनो वाचकत्वम्, तथैव परमात्मन उपास्यत्वं चोक्तम् । जैमिनिस्त्वाचार्यो वैश्वानरशब्दवदग्निशब्दस्यापि परमात्मन एव साक्षादव्यवधानेन वाचकत्वे न कश्चिद्विरोध इति मन्यते । एतदुक्तं भवति । यथा वैश्वानरशब्दः साधारणोऽपि परमात्मासाधारणधर्मविशेषितो विश्वेषां नराणां नेतृत्वादिना गुणेन परमात्मानमेवाभिदधातीति निश्चीयत एवमग्निशब्दोऽप्यग्रनयनादिना येनैव गुणेन योगाज्ज्वलने वर्तते तस्यैव गुणस्य निरुपाधिकस्य काष्ठागतस्य परमात्मनि सम्भवादस्मिन्प्रकरणे परमात्मासाधारणधर्मविशेषितः परमात्मानमेवाभिधत्त इति ॥

"यस्त्वेतमेवं प्रादेशमात्रमभिविमानम्" इत्यपरिच्छिन्नस्य परस्य ब्रह्मणो द्युप्रभृतिपृथिव्यन्तावयवस्य प्रादेशसम्बन्धिन्या मात्रया परिच्छिन्नत्वं कथमुपपद्यते तत्राह—अभिव्यक्तेरित्याश्मरथ्यः ॥ उपासकाभिव्यक्त्यर्थं प्रादेशमात्रत्वं परमात्मन इत्याश्मरथ्य आचार्यो मन्यते । "द्यौर्मूर्धादित्यश्चक्षुर्वायुः प्राण आकाशो मध्यकाय आपो बस्तिः पृथिवी पादावि"ति द्युप्रभृतिप्रदेशसम्बन्धिन्या मात्रया परिच्छिन्नत्वं कृत्स्नमभिध्यातवतो विगतमानस्य ह्यभिव्यक्तेरेव हेतोर्भवति ॥

मूर्धप्रभृत्यवयवविशेषैः पुरुषधर्मविधत्वं परस्य ब्रह्मणः किमर्थमिति चेत्, तत्राह—अनुस्मृतेर्बादरिः ॥ तथोपासनार्थमपि बादरिराचार्यो मन्यते । "यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति" इति ब्रह्मप्राप्तये ह्युपासनमुपदिश्यते एतमेवमिति । उक्तप्रकारेण पुरुषाकारमित्यर्थः । स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मसु वर्तमानं यदन्नं भोग्यं तदत्ति । सर्वत्र वर्तमानं स्वत एवानवधिकातिशयानन्दं ब्रह्मानुभवति । यत्तु, सर्वैः कर्मवश्यैरात्मभिः प्रत्येकमनन्यसाधारणमन्नं भुज्यते तन्मुमुक्षुभिस्त्याज्यत्वादिह न गृह्यते ॥

यदि परमात्मा वैश्वानरः, कथं तदुरःप्रभृतीनां वेद्यादित्वोपदेशः । यावता जाठराग्निपरिग्रह एवैतदुपपद्यत इत्यत्राह—सम्पत्तेरिति जैमिनिस्तथा हि दर्शयति ॥ अस्य परमात्मन एव वैश्वानरस्य द्युप्रभृतिपृथिव्यन्तशरीरस्य समाराधनभूताया उपासकैरहरहः क्रियमाणायाः प्राणाहुतेरग्निहोत्रत्वसम्पादनायायमुरःप्रभृतीनां वेदित्वाद्युपदेश इति जैमिनिराचार्यो मन्यते ॥ तथाहि परमात्मोपासनोचितमेव फलं प्राणाहुत्याग्निहोत्रसम्पत्तिं च दर्शयतीयं श्रुतिः । "स य इदमविद्वानग्निहोत्रं जुहोति यथाङ्गारानपोह्य भस्मनि जुहुयात्तादृक्तत्स्यात् । अथ य एतदेवं विद्वानग्निहोत्रं जुहोति तस्य सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मसु हुतं भवति । तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते" इति ॥

आमनन्ति चैनमस्मिन् । एनं परमपुरुषं द्युमूर्धत्वादिविशिष्टं वैश्वानरमस्मिन्नुपासकशरीरे प्राणाहुत्याधारत्वायामनन्ति च । "तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाः" इत्यादिना । अयमर्थः, "यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते" इति त्रैलोक्यशरीरस्य परमात्मनो वैश्वानरस्योपासनं विधाय "सर्वेषु लोकेषु" इत्यादिना ब्रह्मप्राप्तिं च फलमुपदिश्यास्यैवोपासनस्या-

ङ्गभूतं प्राणाग्निहोत्रं "तस्य ह वा एतस्य" इत्यादिनोपदिशति । "यः पूर्वमुपास्यतयोपदिष्टो वैश्वानरस्तस्यावयवभूतानग्न्यादित्यादीन् सुतेजोविश्वरूपादिनामधेयानुपासकशरीरे मूर्धादिपादान्तेषु सम्पादयतीति मूर्धैव सुतेजाः । उपासकस्य मूर्धैव परमात्ममूर्धभूता द्यौरित्यर्थः । चक्षुर्विश्वरूपः । आदित्य इत्यर्थः । प्राणः पृथग्वर्मा । वायुरित्यर्थः । सन्देहो बहुलः । उपासकस्य मध्यकाय एव परमात्ममध्यकायभूत आकाश इत्यर्थः । वस्तिरेव रयिः । अस्य वस्तिरेव तदवयवभूता आप इत्यर्थः । पृथिव्येव पादौ । अस्य पादावेव तत्पादभूता पृथिवीत्यर्थः । एवं उपासकः स्वशरीरे परमात्मानं त्रैलोक्यशरीरं वैश्वानरं सन्निहितमनुसन्धाय स्वकीयान्युरोलोमहृदयमनआस्यानि प्राणाहुत्याधारस्य परमात्मनो वैश्वानरस्य वेदिबर्हिर्गार्हपत्यान्वाहार्यपचनाहवनीयानग्निहोत्रोपकरणभूतान् परिकल्प्य प्राणाहुतेश्चाग्निहोत्रत्वं परिकल्प्यैवम्विधेन प्राणाग्निहोत्रेण परमात्मानं वैश्वानरमाराधयेदित्युर एव "वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यः" इत्यादिनोपदिश्यते । अतः परमात्मा पुरुषोत्तम एव वैश्वानर इति सिद्धम् ।

(३) माध्वे—अदृश्यत्वादिगुणेषु सर्वगतत्वं "यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते" इति वैश्वानरस्योक्तमिति अत आह । अग्नाविष्णोः साधारणस्य वैश्वानरशब्दस्य विष्णोरेव प्रसिद्धत्वादात्मशब्देन विशेषणाद् वैश्वानरो विष्णुरेव ॥

"अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रित" इति स्मर्य्यमाणमत्रापि स एवोच्यत इत्यस्यानुमापकं स्वसमाख्यानात् इति शब्दः समाख्याप्रदर्शकः ॥

अयमग्निः वैश्वानरः "वैश्वानरमृत आजातमग्निम्" इत्यादिशब्दः वैश्वानरे तद्भुतं भवति । हृदयं गार्हपत्यो मनोऽन्वाहार्य्यपचनमास्यमाहवनीय इत्याद्यग्निलिङ्गमादिशब्दोक्तम् । "येनेदमन्नं पच्यते तदन्नक्तं प्रथममागच्छेत् तद्धोमीयमि"त्यादिना पाचकत्वेनान्तःप्रतिष्ठानं प्रतीयते तस्मान्न विष्णुरिति चेत्, न; "अथ हैममात्मानमणोरणीयांसं परतः परं विश्वं हरिमुपासीतेति सर्वनामा सर्वकर्मा सर्वलिङ्गः सर्वगुणः सर्वकामः सर्वधर्म्मः सर्वरूप इति स एतमेवमात्मानं विश्वं हरिमाराधयन्नुपास्ते तस्य सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेषु देवेषु कामचारो भवति" इति तत्तन्नामलिङ्गादिना तस्यैव दृष्ट्युपदेशान्महोपनिषदि "अनात्मत्वादनात्मान ऊनत्वाद्गुणराशितः । अब्राह्मणः परे सर्वे ब्रह्मात्मा विष्णुरेव ही"त्यादिना "को न आत्मा किं ब्रह्मे"त्यारम्भाचान्येषामसम्भवाद् विष्णुरेव वैश्वानरः । "चन्द्रमा मनसो जातश्चक्षोः सूर्य्योऽजायत" इत्यादिना यः पुरुषाख्यो विष्णुरभिहितस्तद्विधमेवात्र "मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मात्मे"त्यादिनैव वैश्वानरमधीयते । चशब्देन सकलवेदशाखागमतन्त्रयामलपुराणादिषु विष्णुपरत्वं पुरुषसूक्तस्य सूचयति । यथा हि पाद्मे, "यथा हि पौरुषं सूक्तं नित्यं विष्णुपरायणम् । तथैव मे मनो नित्यं भूयाद्विष्णुपरायणम्" इति ॥

चतुर्वेदशिखायाञ्च—"सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपादित्येष ह्येवाचिन्त्यः परः परमो हरिरादिरनादिरनन्तोऽनन्तशीर्षोऽनन्ताक्षोऽनन्तबाहुरनन्तगुणोऽनन्तरूपः" इति । बृहत्संहितायाञ्च "यथैव पौरुषं सूक्तं विष्णावेवाभिधायकम् । न तथा सर्ववेदाश्च वेदाङ्गानि च नारद" इत्यादि । यस्माद्यत् जायते चाङ्गाल्लोकवेदादिकं हरेः । तन्नामवाच्यमङ्गं तद्यथा ब्राह्मादिकं मुखमि"ति श्रीनारदीयवचनान्न वेदोक्तिविरोधः । अग्निर्वैश्वानरादिशब्दस्तेजसि भूतेऽग्निदेवतायां प्रसिद्धोऽप्यतः पूर्वोक्तहेतुः तत्र यात्र न सा तथाभिधीयते ॥

' 'नाग्न्यादयः शब्दा अग्न्यादिवाचकाः । तथापि, साक्षादेवानन्ययोगेन ब्रह्मवाचकैः शब्दैः व्यवहारार्थ-

मनभिज्ञानाचान्यत्र व्यवहरन्तीत्यभ्युपगमे विरोधे जैमिनिर्विक्ति । "व्यासचित्तस्थिताकाशादवच्छिन्नानि कानिचित् । अन्ये व्यवहरन्त्येतानुरीकृत्य गृहादिवदि"ति स्कान्दवचनान्न मतानां परस्परविरोधः ॥

तत्र तत्र प्रसिद्धावप्यग्न्यादिषु ब्रह्मणोऽभिव्यक्तेरग्न्यादिसूक्तनियम इत्याश्मरथ्यः ॥

तत्र तत्रोक्तस्य विष्णोरग्न्यादिषु अनुस्मर्य्यमाणत्वात् तन्नियम इति बादरिः ॥

साक्षादप्यविरोधं वदन् जैमिनिः सूक्तादिनियममग्न्यादिसम्भाषया मन्यते । तद् यथा यथोपासते तदेव भवतीति दर्शयति । न ह्यन्योपासकोऽन्यं प्राप्नुत इति युज्यते इति अत आह ॥

एनं विष्णुमस्मिन् अग्न्यादावामनन्ति "योऽग्नौ तिष्ठन्", "य एष एतस्मिन्नग्नौ तेजोमयोऽमृतमयः पुरुष" इत्यादिना ॥

(४) निम्बार्कः—वैश्वानरः परमात्मैव, यतोऽग्निब्रह्मसाधारणस्यापि वैश्वानरशब्दस्य ब्रह्मपरिग्रहे द्युमूर्द्धत्वाद्यवयवविधानेन विशेषावगमात् । परमात्मनो हि वैश्वानरत्वे "यस्याग्निरास्यं द्यौर्मूर्द्धे"-त्यादिस्मृत्युक्तमपि रूपं निश्चायकं स्यात् । जाठराग्नौ वैश्वानरशब्दस्य रूढत्वादग्नित्रेताविधानात्प्राणाहुत्याधारत्वसङ्कीर्त्तनादन्तःप्रतिष्ठानश्रवणाच्च न वैश्वानरः परमात्मा, किन्तु जाठराग्निरिति चेन्न, तथा तस्मिन् जाठरे परमेश्वरदृष्टेरुपदेशात्, परमात्मपरिग्रहाभावे द्युमूर्धत्वाद्यसम्भवात्, पुरुषत्वश्रवणाच्च वैश्वानरः परमात्मैव उक्तहेतुभ्य एव देवता भूतञ्च न गृह्यते वैश्वानरशब्देन । विश्वश्चासौ नरश्च सर्वात्मा भगवान् वैश्वानर इति साक्षादुपास्य इत्यविरोधं जैमिनिराचार्यो मन्यते । उपासकानामनन्यानामनुग्रहायानन्तोऽपि परमात्मा तत्तदनुरूपतयाऽभिव्यज्यते इति प्रादेशमात्रत्वमुपपद्यते, इत्येवमभिव्यक्तेरित्याश्मरथ्यो मुनिर्मन्यते । मूर्द्धादिपादान्तदेहकल्पनमनुस्मृतेरनुसरणार्थमिति बादरिराचार्यो मन्यते । वैश्वानरोपासकेन क्रियमाणाया वैश्वानरविद्याङ्गभूतप्राणाहुतेरग्निहोत्रत्वसम्पत्त्यर्थं तेषामुरआदीनां वेद्यादित्वकल्पनमिति जैमिनिराचार्यो मन्यते । तथैव "अथ य एतदेवं विद्वानग्निहोत्रं जुहोती"त्यादिश्रुतिर्दर्शयति ॥ एनं द्युमूर्धत्वादिमन्तं वैश्वानरमस्मिन्नुपासकदेहे पुरुषविधमामनन्ति च ॥

(५) भैक्षवे—इदानीमात्मयागरूपमत्यभ्यर्हितं ब्रह्मोपासनाविशेषमवधारयितुं वैश्वानराख्यविभूतिपरं वाक्यमवधारयति वैश्वानराधिकरणेन । ननु सर्वत्र प्रसिद्धोपदेशादिति विभूतिसामान्याधिकरणात्प्रागाकाशादिविभूत्यधिकरणवर्गमध्य एवेदमधिकरणं युक्तमिति सत्यम्, तथापि जैमिन्यादिभिर्वैश्वानरस्य विभूतित्वमनभ्युपगम्य साक्षाद्ब्रह्मत्वाभ्युपगमादस्याधिकरणस्य पादान्ते निपातो मन्तव्यः । छान्दोग्यपञ्चमे प्रपाठके "को न आत्मा किं ब्रह्मे"ति "आत्मानमेवेमं वैश्वानरं सम्प्रत्यध्येषि तमेव नो ब्रूहीति" चोपक्रम्य तत्प्रतिवचने शिष्यैरुपास्यमानतां द्युलोकसूर्य्यवाय्वाकाशवारिपृथिवीनां सुतेजस्त्वादिगुणान्वैश्वानरमूर्द्धत्वादिकं चोपदिश्य द्युलोकादीनामेकैकस्योपासनं च क्षयिष्णुफलतया विनिन्द्य समग्रोपानायाः फलं उपासनाप्रकारं चाह "इहोवाचैव खलु यूयं पृथगिवेममात्मानं वैश्वानरं विद्वांसोऽन्नमत्थ यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मात्माऽऽत्मा सन्देहो बहुलो बस्तिरेव रयिः पृथिव्येव पादावुर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यो मनोऽन्वाहार्य्यपचन आस्यमाहवनीयस्तयद्भक्तं प्रथममागच्छेत्तद्धोमीयं स यां प्रथमाहुतिं जुहुयात्तां जुहुयात्प्राणाय स्वाहे"त्यादिना । पृथगिवेति द्युलोकादिषट्कसङ्घातरूपमेकमेवात्मानं पृथगिवा-

न्योन्यं भिन्नमिव विद्वांसो मूढा यूयमर्थात्स्वल्पमेवात्र मन्येत्यर्थः । यस्त्वेतमिति एवं वक्ष्यमाणप्रकारेण यः प्रादेशमात्रं प्रदीपकलिकाकारं हृदिस्थं लिङ्गशरीरात्मकं स्वात्मानमेवांशांश्यभेदेन अधिष्ठेयाधिष्ठात्रभेदेन वा वैश्वानरमभिविमानं पूर्णमुपास्ते स देहपातानन्तरं वैश्वानरतां प्राप्य सर्वभोक्ता भवति। उपासनाप्रकारमाह तस्य ह वेत्यादिना सुतेज आदयः पूर्वोक्ताद्युलोकादयः षट् सुतेजा द्युलोकः विश्वरूपः सूर्यः पृथग्वर्त्मा वायुः स एव वैश्वानरस्यात्मा प्राणः बहुल आकाशः स एव सन्देहो देहमध्यं नाभिः रयिर्जलं तदेव वस्तिर्नाभेरधोदेशः हृदयादिकं चाग्निरूपं हृदयाद्यवच्छिन्नाग्निरूपमिति । अत्र संशयः, किमयं, वैश्वानरो जाठराग्निस्ताग्निसामान्यं, किं वा तद्देवता, अथ वा जीवः, आहोस्वित्परमात्मेति । तत्रायं निर्णयः, परमात्मैवात्र वैश्वानरशब्दोक्तः, कुतः ? साधारणशब्दविशेषात् । सर्ववेदान्तसाधारणात् आत्मब्रह्मादिरूपाच्छब्दविशेषात् जीवदेवतादिव्यावृत्तशब्दादित्यर्थः । "को न आत्मा किं ब्रह्म"त्येवंरूपैर्हि शब्दैः परमात्मैव जीवनामात्मत्वेन सर्ववेदान्तेषु श्रूयते । "एष त आत्मा" "एष म आत्मे"त्यादिष्विति । न च रूपोपदेशो देवादीनां लिङ्गतयाऽत्र गमको भवति । केवललिङ्गापेक्षया श्रुतेर्बलवत्वात् । ब्रह्मशब्दश्च परमात्मन्येव मुख्यः । परं जैमिनिर्मुख्यत्वादिति शाब्दं प्रमाणमुक्त्वा तदनुग्राहकं स्मृतिमूलकमनुमानं प्रमाणमाह । "यस्याग्निरास्यं द्यौर्मूर्धा खं नाभिश्चरणौ क्षितिः सूर्यश्चक्षुर्दिशः श्रोत्रे तस्मै लोकात्मने नम" इत्यादिपरमेश्वरप्रकरणस्थवाक्यैः स्मर्यमाणं रूपं श्रुतावप्यवगम्यमानं रूपिणः परमेश्वरत्वेऽनुमानं लिङ्गं भवतीत्यर्थः । इतिशब्दो हेत्वर्थकः । ननु वैश्वानरो न परमात्मा भवितुं युक्तः । कुतः ? शब्दादिभ्यः । वैश्वानरशब्दात्प्रादेशपरिमितत्वाच्चक्षुराद्यवयवत्वात् गार्हपत्याद्यग्नित्रयरूपत्वाच्च तथाऽन्तःप्रतिष्ठानाच्च । उरस्त एव वेदिरित्यादिनाऽत्र श्रुत्यन्तरे च "पुरुषेऽन्तःप्रतिष्ठितं वेदे"त्यादिना शरीरान्तःस्थितत्वावगमाच्चेति चेन्न, तथा दृष्ट्युपदेशात् । जीवाद्याख्याद्यपरित्यागेन जीवाख्यादिरूपिपरमात्मदृष्ट्युपदेशात् । मनोमयः प्राणशरीरो भारूप इत्यादिष्विवेत्यर्थः । असम्भवादिति । अन्यथा ब्रह्मशब्दवैश्वानरशब्दयोरुभयोरसम्भवात् । प्रादेशमात्रत्वाभिविमानत्वयोरीश्वरेऽसम्भवादित्यर्थः । न केवलमेतच्छाखोक्तधर्माणामेव प्रसिद्धवैश्वानरेऽसम्भवः, अपि तु शाखान्तरोक्तस्य पुरुषत्वस्यापीत्याह पुरुषमपीत्यादिना । अपि च एके वाजसनेयिन एनं वैश्वानरं पुरुषं चेतनं पठन्ति, यथा "स एषोऽग्निर्वैश्वानरो यत्पुरुषः स यो हैतमेवमग्निं वैश्वानरं पुरुषविधं पुरुषेऽन्तःप्रतिष्ठितं वेदेति" परमेश्वरस्य तु पुरुषोत्तमत्वं सुप्रसिद्धमिति अत्र पुरुषविधं जीवविधमित्यर्थः । पुरुषविधमपि चैनमधीयत इति सूत्रपाठेत्ययमर्थः । नन्वसम्भवादग्निर्मा भवतु वैश्वानरः जाठरोपाधिना जीवस्तु स्यात्तत्राह पुरुषविधमित्यादि । जीवस्तु पुरुष एव न पुरुषविधः तस्यैव मुख्यपुरुषत्वादिति । अत एव यथायोग्यं सूत्रत्रयोक्तहेतुसमूहादेवाग्निदेवतातेजोभूतं च नात्र वैश्वानर इत्यर्थः । पूर्वसूत्रे जीवानिराकरणपक्षे चात्र । चशब्दोऽनुक्तजीवसमुच्चयार्थो बोध्यः । अत्रेदमवधेयम् । उर एव वेदिरिति मूर्धैव च सुतेजा इति मनोऽन्वाहार्यपचन इति श्रवणात् । जीवं वैश्वानरं ध्यायेदिति योगियाज्ञवल्क्यादिवचनाच्च तथा । अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः । प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधमिति ॥ गीतादिभ्यश्च न केवलं जाठराग्निर्न वा केवलजीवो नापि केवला देवता नापि लिङ्गदेहमात्रं यत्र परमेश्वरोपासनेऽवच्छेदकम् । किन्तु, लिङ्गशरीरप्राणजीवदेवतावर्गैः संहतं यत्समस्तदेहव्यापकं लिङ्गदेहाश्रयरूपं तेजः प्राधान्यात्तेजः पञ्चभूतात्मकं सूक्ष्मशरीरं तदेवास्यामुपासायां परमात्मनो विशेषणमिति मनुपराशरव्यासादिभिस्तथोपदेशान्मतव्यम् । तस्यैव तेजसो जाठरादिषु न्यूनाधिकभावेन वृत्तिलाभः, हृदि च प्रादेशमात्रं प्रदीपकलिकाकारेण चेतनतयाऽभिव्यक्तिरित्यादयोऽनन्ता विशेषा

उपासावाक्येभ्योऽवगन्तव्याः। बहिश्चेदं तेजः समष्टिज्योतिर्मण्डलरूपेण सर्वदेवमयं विराजो हृदयाकाशे भुवर्लोकाख्ये तिष्ठति व्यष्टिशरीरान्तर्हृदि च तस्यैवांशः स्फुलिङ्ग इव तिष्ठति अंशांशिभावेन चानयोरभेदः तत्कालचक्रं निहितं गुहायामित्यादिमोक्षधर्मादिभ्य' इति सङ्क्षेपः। तथा चोक्तम्। अन्तः पुरुषरूपेण कालरूपेण यो बहिः। समत्वे द्योप सत्त्वानां भगवानात्ममाययेति। ज्योतिश्चरणाभिधानादित्यधिकरणेन चास्याधिकरणस्य न पौनरुक्त्यं गुणभेदनिरूपणार्थं श्रुतिभेदयोर्मीमांसितत्वादिति। पूर्वमग्निप्रधानजीवादिमयसूक्ष्मसङ्घातरूपी परमेश्वरोऽत्र वैश्वानरशब्दार्थ इत्युक्तम्। जैमिनिस्त्वाचार्य्यः साक्षादेव यथोक्तोपाधिं विनैव केवलपरमेश्वरेऽपि शब्दाद्यविरोधं अन्तःप्रतिष्ठानाविरोधं च मन्यते वक्ष्यमाणहेतुभिरित्यर्थः। जैमिन्युक्तेऽविरोधे मुनित्रयोक्तं हेतुत्रयमाह सूत्रत्रयेण। कार्य्यैः कारणमभिव्यज्यते लिङ्गरूपेण। तथा च वैश्वानराख्यमुख्यकार्य्येण परमात्मनोऽभिव्यक्तया तस्य नामगुणादीनां परमात्मन्यविरोध इत्याश्मरथ्य आचार्य्यो मन्यते ज्योतिःकार्य्ययोरौष्ण्यशब्दयोर्दर्शनश्रवणाभ्यां सूक्ष्मस्य शारीरज्योतिषो दर्शनश्रवणगुणयोः श्रुतौ प्रतिपादनात्। "तदेतद्दृष्टं श्रुतं चेत्युपासीतेत्यत्रे"त्यर्थः। वैश्वानरे परमेश्वरस्यानुचिन्तनीयत्वेन वैश्वानरधर्माः परमेश्वरस्योपलक्षका इत्यतो न विरोध इति बादरिराचार्य्यो मन्यत इत्यर्थः। सम्पत्तेरविरोध इति स्वयं जैमिनिराचार्य्यो मन्यते हि यस्मात्तथा दर्शयति श्रुत्यन्तरमित्यर्थः। यथा समानप्रकरणं वाजसनेयिब्राह्मणं द्युप्रभृतीन्पृथिवीपर्य्यन्तान् त्रैलोक्यात्मनो वैश्वानरस्यावयवान् सर्वदेवानध्यात्मं मूर्द्धप्रभृतिचिबुकान्तेषु देहावयवेषु सम्पादयत्प्रादेशसम्पत्तिं वैश्वानरस्य दर्शयति "प्रादेशमात्रमिव ह वै देवाः सुविदिता अभिसम्पन्नास्तथा तु व एतान् वक्ष्यामि, यथा प्रादेशमात्रमेवाभिसम्पादयिष्यामीति सहोवाच मूर्द्धानमुपदिशन्नुवाच एष वा अतिष्ठा वैश्वानर इति चक्षुषी उपदिशन्नुवाच एष वैश्वानर इति नासिके उपदिशन्नुवाच एष वै पृथग्वर्त्मात्मा वैश्वानर इति मुख्यमाकाशमुपदिशन्नुवाच बहुलो वैश्वानर इति चिबुकमुपदिशन्नुवाच एष वै प्रतिष्ठा वैश्वानर इति" मुख्यं मुखे भवं चिबुकमित्यधरफलकमुच्यते। तथा च प्रादेशपरिमितस्थाने सम्पादनेनेश्वरस्य प्रादेशमात्रत्वादिकमविरुद्धमिति। ननु तथाऽपि जैमिनिमते वैश्वानरस्य प्रादेशमात्रत्वादिकमुपपन्नं न परमेश्वरस्येति तत्राह। "यो देवोऽग्नौ योऽप्सु यो विश्वं भुवनमाविवेशेति" श्वेताश्वतरादयः शाखिन एवं प्रकरणिनं परमात्मानमस्मिन् वैश्वानरे स्थितमामनन्ति च। तथा च वैश्वानराख्याग्निनिष्ठतया वैश्वानरशब्दादयः परमात्मनीति भावः। इदं च मानुषादिशरीरस्थतया जीवेषु मानुषशब्दादिकं श्रुतिस्मृत्योरिति। अत एव मनौ "एतमेके वदन्त्यग्निं मनुमन्ये प्रजापतिम्। इन्द्रमेके परे प्राणमपरे ब्रह्म शाश्वतमि"त्युक्तम्। व्यासमताच्चास्य जैमिनिमतस्यायं विशेषो उपास्यकुक्षावग्नेः प्रवेश इति।

(६) भास्करीये—"को न आत्मा किं ब्रह्मेति आत्मानमेवेमं वैश्वानरं सम्प्रत्यध्येषि तमेव नो ब्रूही"ति चोपक्रम्य द्युसूर्यवाय्वाकाशजलपृथिवीनां सुतेजस्त्वादिगुणयोगमेकैकोपासननिन्दया च द्युमूर्धादिभावमुपदिश्याम्नायते। "यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मा सन्देहो बहुलो वस्तिरेव रयिः पृथिव्येव पादावुर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन आस्यमाहवनीय" इति। तत्र सन्दिह्यते किमुदरस्थोऽग्निरुपदिश्यते किं वा भूताग्निस्तदभिमानिनी वा देवता शारीरो वा उत परमेश्वर इति। किं पुनरत्र युक्तम्? जाठरोऽग्निस्तत्र वैश्वानरशब्दप्रसिद्धेः। "अयमग्निर्वैश्वानरो योऽयमन्तः पुरुषे येने-

न्योन्यं भिन्नमिव विद्वांसो मूढा मूढमर्यादास्तन्मन्येवात्र मन्येत्यर्थः । यस्त्वेतमिति एवं वक्ष्यमाणप्रकारेण यः प्रादेशमात्रं प्रदीपकलिकाकारं हृदिस्थं लिङ्गशरीरात्मकं तन्मानमेवांशांशिभेदेन अधिष्ठाधिष्ठातृभेदेन वा वैश्वानरमभिविमानं पूर्णमुपास्ते स देहपातानन्तरं वैश्वानरत्वं प्राप्य सर्वभोक्ता भवति । उपासनाप्रकारमाह तस्य ह वेत्यादिना सुतेजा आदयः पूर्वोक्ताद्युलोकादयः षट् सुतेजा द्युलोकः विश्वरूपः सूर्यः पृथग्वर्त्मा वायुः स एव वैश्वानरस्यात्मा प्राणः बहुल आकाशः स एव सन्देहो देहमध्यं नाभिः रयिर्जलं तदेव वस्तिर्नाभेरधोदेशः हृदयादिकं पादरूपं हृदयाद्यवच्छिन्नाग्निरूपमिति । अत्र संशयः, किमयं, वैश्वानरो जाठराग्निर्नाग्निसामान्यं, किं वा तद्देवता, अथ वा जीवः, आहोस्वित्परमात्मेति । तत्रायं निर्णयः, परमात्मैवात्र वैश्वानरशब्दोक्तः, कुतः ? साधारणशब्दविशेषात् । सर्ववेदान्तसाधारणात् आत्मब्रह्मादिरूपाच्छब्दविशेषात् जीवदेवतादिव्यावृत्तशब्दादित्यर्थः । "को न आत्मा किं ब्रह्म" इत्येवंरूपैर्हि शब्दैः परमात्मैव जीवनामात्मत्वेन सर्ववेदान्तेषु श्रूयते । "एष त आत्मा" "एष म आत्मे"त्यादिष्विति । न च रूपोपदेशो वेदादीनां लिङ्गतयाऽत्र गमको भवति । वेदलिङ्गापेक्षया श्रुतेर्बलवत्त्वात् । ब्रह्मशब्दश्च परमात्मन्येव मुख्यः । परं जैमिनिर्मुख्यत्वादिति शाब्दं प्रमाणमुक्त्वा तदनुग्राहकं स्मृतिमूलकमनुमानं प्रमाणमाह । "यस्याग्निरास्यं द्यौर्मूर्धा खं नाभिश्चरणौ क्षितिः सूर्यश्चक्षुर्दिशः श्रोत्रे तस्मै लोकात्मने नमः" इत्यादिपरमेश्वरप्रकरणस्मृतिवाक्यैः स्मर्यमाणं रूपं श्रुतावप्यवगम्यमानं रूपिणः परमेश्वरस्येऽनुमानं लिङ्गं भवतीत्यर्थः । इतिशब्दो हेत्वर्थकः । ननु वैश्वानरो न परमात्मा भवितुं युक्तः । कुतः ? शब्दादिभ्यः । वैश्वानरशब्दप्रादेशमात्रपरिमितत्वावयवश्रुत्यवयवत्वात् गार्हपत्याद्यग्नित्रयरूपत्वाच्च तथाऽन्तःप्रतिष्ठानाच्च । उत्तर एव वेदिरित्यादिनाऽत्र श्रुत्यन्तरे च "पुरुषेऽन्तःप्रतिष्ठितं वेद" इत्यादिना शरीरान्तःस्थितत्वावगमाच्चेति चेत्, तथा दृष्ट्युपदेशात् । जीवाद्यध्यासपरित्यागेन जीवाग्न्यादिरूपिपरमात्मदृष्ट्युपदेशात् । मनोमयः प्राणशरीरो भारूप इत्यादिष्विवेत्यर्थः । असम्भवादिति । अन्यथा ब्रह्मशब्दवैश्वानरशब्दयोरुभयोरसम्भवात् । प्रादेशमात्रत्वाभिविमानत्वयोरीश्वरेऽसम्भवादित्यर्थः । न केवलमेतच्छाखोक्तधर्माणामेव प्रसिद्धवैश्वानरेऽसम्भवः, अपि तु शाखान्तरोक्तस्य पुरुषत्वस्यापीत्याह पुरुषमपीत्यादिना । अपि च एके वाजसनेयिन एनं वैश्वानरं पुरुषं चेतनं पठन्ति, यथा "स एषोऽग्निर्वैश्वानरो यत्पुरुषः स यो हैतमेवमग्निं वैश्वानरं पुरुषविधं पुरुषेऽन्तःप्रतिष्ठितं वेदेति" परमेश्वरस्य तु पुरुषोत्तमत्वं सुप्रसिद्धमिति अत्र पुरुषविधं जीवविधमित्यर्थः । पुरुषविधमपि चैनमधीयत इति सूत्रपाठेत्ययमर्थः । नन्वसम्भवादग्निर्मा भवतु वैश्वानरः जाठरोपाधिना जीवस्तु स्यात्तत्राह पुरुषविधमित्यादि । जीवस्तु पुरुष एव न पुरुषविधः तस्यैव मुख्यपुरुषत्वादिति । अत एव यथायोग्यं सूत्रत्रयोक्तहेतुसमूहाद्देवाग्निदेवतातेजोभूतं च नात्र वैश्वानर इत्यर्थः । पूर्वसूत्रे जीवानिराकरणपक्षे चात्र । चशब्दोऽनुक्तजीवसमुच्चयार्थो बोध्यः । अत्रेदमवधेयम् । उर एव वेदिरिति मूर्धैव च सुतेजा इति मनोऽन्वाहार्यपचन इति श्रवणात् । जीवं वैश्वानरं ध्यायेदिति योगियाज्ञवल्क्यादिवचनाच्च तथा । अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः । प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधमिति ॥ गीतादिभ्यश्च न केवलं जाठराग्निर्न वा केवलजीवो नापि केवला देवता नापि लिङ्गदेहमात्रं यत्र परमेश्वरोपासनेऽवच्छेदकम् । किन्तु, लिङ्गशरीरप्राणजीवदेवतावर्गैः संहतं यत्समस्तदेहव्यापकं लिङ्गदेहाश्रयरूपं तेजः प्राधान्यात्तेजः पञ्चभूतात्मकं सूक्ष्मशरीरं तदेवास्यामुपासायां परमात्मनो विशेषणमिति मनुपराशरव्यासादिभिस्तथोपदेशान्मन्तव्यम् । तस्यैव तेजसो जाठरादिषु न्यूनाधिकभावेन वृत्तिलाभः, हृदि च प्रादेशमात्र प्रदीपकलिकाकारेण चेतनतयाऽभिव्यक्तिरित्यादयोऽनन्ता [illegible]षा

प्रादेशमात्रश्रुतिं व्याचष्टे । पूर्वेषामुपासकानामनुग्रहायानन्तस्यापीश्वरस्य प्रादेशमात्रमभिव्यज्यत इत्याश्मरथ्यो मन्यते । अथवा द्युलोकादिषु प्रदेशेषु मीयते परिच्छिद्यत इति प्रादेशमात्रः ॥

प्रादेशमात्रेण हृदयेनानुस्मरणात् प्रादेशमात्र इत्युच्यत इति बादरिर्मन्यते स्म ॥

बादरायणाभिप्रायोऽस्माभिरुक्तोऽधिदैवतं व्याप्यावस्थितस्योपासनमिति ( जैमिनेराचार्यस्याभिप्रायोऽधुना वर्ण्यते । सम्पत्तिनिमित्ता प्रादेशश्रुतिरिति ) 'जैमिनिराचार्यो' ददर्श । किं स्वबुद्ध्या नेत्युच्यते । तथाहि दर्शयति । समानप्रकरणे वाजसनेयिब्राह्मणं द्युलोकप्रभृतीनवयवान् यथाक्रमं मूर्द्धप्रभृतिषु चिबुकपर्यन्तेषु देहावयवेषु सम्पादयति । "स होवाच मूर्द्धानमुपदिशन्नुवाच एष वै प्रतिष्ठा वैश्वानर" इति । ( चक्षुषी उपदिशन्नुवाच एष वै सुतेजा वैश्वानर इति नासिके उपदिशन्नुवाच एष वै पृथग्वर्त्मा वैश्वानर इति मुख्यमाकाशमुपदिशन्नुवाच एष वै बहुलो वैश्वानर इति मुख्या अप उपदिशन्नुवाच एष वै रयिर्वैश्वानर इति चिबुकमुपदिशन्नुवाच एष वै प्रतिष्ठा वैश्वानर इति ) चिबुकमधरं मुखफलकमुच्यते । वाजसनेयके द्यौरतिष्ठात्वगुणा आदित्यश्च विश्वरूपगुण इति प्रकारो भिद्यते । चीयमानाग्निसम्बन्धित्वेन तत्र वैश्वानरशब्दः प्रयुक्तो न च छान्दोग्यवत् "को न आत्मा किं ब्रह्मे"ति ब्रह्मोपक्रमोऽस्ति तस्माद्विद्याभेदः ॥

यद्येवं कथं पुरुषविधं पुरुषेऽन्तःप्रतिष्ठितं वेदेति वचनमत आह । एवं नित्यमग्निमस्मिन्नेव सम्पाद्यमानं पुरुषविधं पुरुषेऽन्तःप्रतिष्ठितमिति च समामनन्ति वाजसनेयिनः । चिबुकमुद्दिश्य इत्युक्त्वानन्तरमेतत्पठ्यते । अन्तःशब्दश्चास्य विलाद्यपेक्षया ॥

(७) श्रीमद्वल्लभाचार्यमतेऽयमभिप्रायः—एवमदृश्यत्वाद्यधिकरणेनान्तर्यामिणोऽदृष्टत्वे अहृदयस्वरूपो हेतुः प्रसङ्गाद्दर्शितः । तथा, चराचरग्रहणादिभिस्त्रिभिरधिकरणैस्त्रिविधं भोगमुपपाद्य जीवतुल्यत्ववारणार्थमन्तर्याम्यधिकरणे वैशेष्यं हृदयान्तर्वर्तिनि समर्थयित्वा अन्तर्यामिणो रूपाभावादेवादृश्यत्वमिति शङ्कावारणाय रूपमपि तत्र प्रदर्शितम् । तत् तदा सङ्गतं स्याद्यदि परमात्मनः साकारता वास्तवी स्यात् । अतस्तदुपोद्घातत्वेनेदमधिकरणमधुना आरभ्यते । तद्विषयस्तु छान्दोग्ये सप्तमप्रपाठके श्रूयते । तत्रोपक्रमे, प्राचीनशालः सत्ययज्ञ इन्द्रद्युम्नो जनो बुडिल इतिनामानः पञ्चापि श्रुताध्ययनसम्पन्नाः क्वचन समेत्य मीमांसां चक्रुः, को न आत्मा किं ब्रह्मेति । अत्र किम आवृत्त्या वाक्यभेदस्य स्फुटत्वात् स्वात्मब्रह्मणी अभिन्ने भिन्ने वेति न संशयः, किन्तु अस्माकमुपास्यं ब्रह्म वा तदेकदेशो वेति संशयः । ततस्ते स्वतो निश्चयमलभमाना उद्दालकनामानमन्यं वैश्वानरोपासकं संशयनिवारकत्वेन सम्भाव्य, ततोऽपि तदनिवृत्तौ तेन सह षडपि कैकेयराजस्य वैश्वानरोपासकस्य निकटे गत्वोकथन्तः । आत्मानमेवेमं वैश्वानरं सम्प्रत्यध्येषि, तमेव नो ब्रूहीति । ततो राजा पृथक् ते पृष्टाः "कं त्वमात्मानमुपास्स" इति । तदा ते स्वस्वोपास्यत्वेन द्युसूर्यवाय्वाकाशवारिपृथिवीः पृथक्पृथगुक्तवन्तः । तदा राजा तत्तदुपास्यानां क्रमेण सुतेजस्त्वविश्वरूपत्वपृथग्वर्त्मात्मत्वबहुलत्वरयित्वप्रतिष्ठात्वरूपान् गुणान् उक्त्वा तेषु वैश्वानरमूर्धचक्षुःप्राणदेहमध्यभागवस्तिपादरूपतां चोपदिश्यैकैकोपासने क्रमेण मूर्धविपातान्धत्वप्राणोत्क्रमणदेहविशरणवस्तिभेदपादविम्लानिकथनरूपया निन्दया तान् प्रतीकत्वेन बोधयित्वा स्वयं तत्स्वरूपमाह । यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते, स सर्वेषु लोकेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति, तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाः चक्षुर्विश्वरूपः, प्राणः पृथग्वर्त्मात्मा, सन्देहो बहुलो, वस्तिरेव रयिः, पृथिव्येव पादावुर एव, वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यो, मनोऽन्वाहार्यपचन, आस्यमाहवनीय इत्यादि ।

तत्र संशयः। किं वैश्वानरशब्देन ब्रह्म प्रतिपादयितुं शक्यते, न वेति। ननूपक्रमे ब्रह्मात्मपदयोः सत्त्वाद् उपक्रमस्य चासञ्जातविरोधत्वादयं सन्देह एव कथं घटत इति चेत्। सत्यम्। तथापि तदुपपादकयुक्तेरग्रे अदर्शनेन वैश्वानरश्रुतेर्बलिष्ठतायां तयोरुपासनापरतयापि नेतुं शक्यतायां, विमतो वैश्वानरो न ब्रह्म, साकारत्वाल्लोकवदिति न्यायेन च सन्देहस्य सम्भवदुक्तिकत्वात्। तर्हि किमत्र युक्तम्? नेति। कुतः। वैश्वानरशब्दस्य श्रुतौ प्रजापतौ प्रसिद्धत्वात् "सम्वत्सरो वा अग्निर्वैश्वानरं केतुमह्नामकृण्वन्नि"ति भूताग्नाविव, "वैश्वानरस्य सुमतौ स्याम राजा हि कं भुवनानामभिश्री"रिति देवतात्मन्यपि प्रसिद्ध इति देवतात्मपरिग्रह एव युक्तः। एवं पूर्वकाण्डे सिद्धावप्युत्तरकाण्डे सम्वत्सरादिश्रुतेर्वैश्वानरः प्रथमः पाद इतिश्रुतेश्च हिरण्यगर्भोपासनापरमिदं वाक्यमित्येव युक्तम्। ब्रह्मनामत्वेन जीवसमष्टिरूपत्वेन ब्रह्मात्मशब्दयोस्तत्र युक्ततरत्वात्। अत एव उपासकस्य सर्वान्नभोजनमपि युक्तम्। प्रादेशमात्रत्वमपि तस्य मुख्यजीवत्वाद्सदाद्यपेक्षया स्थूलत्वाभिप्रायम्, विराडभिमानित्वाल्लोकावयवत्वम्, वेदगर्भत्वाद्ग्निश्रयात्मकत्वं च। तस्माद्धिरण्यगर्भोपासनापरत्वमेव युक्तम्। न तु परमात्मपरत्वमिति प्राप्ते—

उच्यते। वैश्वानरेत्यादि। वैश्वानरः परमात्मैव। कुतः? साधारणशब्दविशेषात्। साधारणाः पूर्वपक्षोक्तरीत्या हिरण्यगर्भसाधारणा ये शब्दास्तेभ्योऽपि विशेषात्। प्रादेशमात्रस्यैवाभितो विगतमानत्वलक्षणादाधिक्यात्। तादृशस्यैव सुमूर्धत्वादिलक्षणादाधिक्याच्च। न हि विरुद्धधर्माश्रयत्वं भगवद्व्यतिरिक्ते सम्भवति। सर्वभवनसामर्थ्यस्यान्यत्राभावात्। ननु प्रादेशमात्राभिविमानशब्दयोः पूर्वापरतया समभिव्याहारादस्तु विरुद्धधर्माश्रयत्वम्, तथापि सुमूर्धत्वादेः हिरण्यगर्भसाधारण्यं कथं निवर्ततामिति चेत्, उच्यते; समानप्रकरणे वाजसनेयिभिरत्र पुरुषत्वं श्राव्यते। अत्र च मूर्धैव सुतेजा इत्यादिभिराकारकथनेन तदेव समर्प्यते। एवञ्चाकारविशेषे रूढोऽपि पुरुषशब्दः, ॐकारवाच्ये ब्रह्मण्येव मुख्यवृत्तः। ॐकारविकृतित्वात्। आनन्दमयाधिकरणेऽन्तःस्थस्यानन्दमयस्य परस्यैव विज्ञानमयादिषु पुरुषाकारसमर्पकत्वेन विमृष्टत्वाच्च। एवं सति, पुरुषौ चात्ममानवावित्यभिधानकोशेनान्यत्र शक्तिग्राहणेऽपि "सहस्रशीर्षा पुरुषः वेदाहमेतं पुरुषं महान्तं, पुरुषो ह वै नारायणोऽकामयते"त्यादिश्रुतिषु "तथा पुरुषशब्दोऽयं वासुदेवेऽवतिष्ठते, विना तं पुण्डरीकाक्षं कोऽन्यः पुरुषशब्दभाक्, भगवानिति शब्दोऽयं तथा पुरुष इत्यपि, निरुपाधी च वर्तेते वासुदेवे सनातने, ब्रह्माद्याः सकला देवा यक्षगन्धर्वकिन्नराः, ते सर्वे पुरुषांशत्वादुच्यन्ते पुरुषा इति" इति पुराणान्तरात्। "स एव वासुदेवोऽयं साक्षात्पुरुष उच्यते, स्त्रीप्रायमितरत् सर्वं जगद् ब्रह्मपुरःसरम्, स एव वासुदेवोऽयं पुरुषः प्रोच्यते बुधैः, प्रकृतिस्पर्शराहित्यात् स्वातन्त्र्याद्वैभवादपि" इति नृसिंहपुराणाच्च। अन्येषु तु तदंशत्वाद् गौणः। नचात्र शिवस्यानुक्तत्वात् "पुरुषो वै हर" इतिश्रुतेश्च तत्र मुख्यवृत्तत्वं शङ्क्यम्। प्रकृतिस्पर्शराहित्यस्वातन्त्र्याभ्यां तस्यापि वारणात्। "शिवः शक्तियुतः शश्व"दिति श्रीभागवतवाक्येन, "जगत्कारणतापन्नः शिवया मुनिपुङ्गवाः, सा तस्यापि भवेच्छक्तिस्तया हीनो निरर्थक" इत्यादिभिः पञ्चत्रिंशद्भिः सूतसंहितावाक्यैश्च सर्वावस्थासु शिवस्य प्रकृतियुक्तत्वतदधीनत्वयोरेवोक्तत्वात्। नच कारणस्य सर्वाभिः कार्यावस्थाभिरवस्थावत्त्वात्तादृशं रूपं ध्यानार्थमेवोच्यते। न तु वास्तवं कारणरूपमिति वाच्यम्। अत्र, "मूर्धैव सुतेजा" इत्यादिना सिद्धान्त्येवाङ्गानि निर्दिश्य तेषां पुरुषत्वादिविधानेनाङ्गानां तथात्वस्य वक्तुमशक्यत्वात्। नच साकारस्य लोकन्यायेनाब्रह्मत्वं शङ्क्यम्। विरुद्धधर्माश्रयत्वेनैव सिद्धे वैश्वानरस्य ब्रह्मत्वे, तस्याप्रयोजकत्वात्। अलौकिकाकारत्वेन सत्प्रतिपक्षत्वाच्च। एवं

सिद्धे तस्य स्वाभाविक आकारे सर्वात्मकत्वे तस्याप्रयोजकत्वाद्, अलौकिकाकारत्वेन सत्प्रतिपक्षत्वाच्च।
एवं सिद्धे च लोकात्मकत्वे मन्त्रे विधीयमानमपि रूपं तस्यैव, न तु तत्कार्यस्य हिरण्यगर्भस्यान्यस्य
वेति । नच वैश्वानरोक्तिविरोधः । विश्वो वैश्वानरः प्रथमः पाद इति ब्रह्माण्डदेहस्य जडस्य, विश्वस्य
तैजसो हिरण्यगर्भो द्वितीयः पाद इति तदन्तर्गतस्य मुख्यजीवस्य नरस्य च भगवदंशत्वेन देवतात्वाद्,
देवताद्वन्द्वे कृते विश्वानरौ तौ निवासो यस्येति तद्धिते कृते योगेन भगवद्बोधने विरोधाभावात् ।
नच रूढ्यपेक्षया नैर्बल्यम् । औत्सर्गिकरूढेरत्र प्रागेव व्युत्पादनादिति । तस्माद्वैश्वानरः परमात्मेति
सिद्धम् ॥ २४ ॥

ननु पूर्वसूत्रेण सिद्धे वैश्वानरस्य ब्रह्मत्वे किमिति सूत्रान्तरारम्भ इति शङ्कायां प्रकारान्तरेण श्रुत्यु-
पपादनव्यावृत्त्यर्थं पठति । स्मर्यमाणेत्यादि । "केचित् स्वदेहान्तर्हृदयावकाशे प्रादेशमात्रं पुरुषं वस-
न्तम्, चतुर्भुजं कञ्जरथाङ्गशङ्खगदाधरं धारणया स्मरन्ती"ति स्मर्यमाणं रूपं प्रादेशमात्रवैश्वानरस्य
ब्रह्मत्वेऽनुमानं स्यादिति हेतोः प्रादेशमात्रो वैश्वानरो ब्रह्मैव । ये हि ब्रह्म स्मरन्ति, ते श्रुतितः
श्रुत्वैव स्मरन्ति, अतो मननरूपं तत् । यदि प्रादेशमात्रवैश्वानरप्रतिपादकवाक्यजातीयानां ब्रह्मवा-
क्यत्वं न स्यात्, तदा एतत्स्मरणं नोपपद्येत । तथाच, "अनन्तशाखासापेक्षे वैदिकार्थस्य निर्णये,
स्वबुद्धिकल्पितादर्थाद् बलीयानुपबृंहित" इति बोधनायेदं सूत्रमित्यर्थः ॥ २५ ॥

ननु यदि स्मर्यमाणस्यानुमानतया तदनुरोधेन वाक्यार्थो निर्णीयते, तदा "अहं वैश्वानरो भूत्वा
प्राणिनां देहमाश्रितः, प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विध"मिति स्मृत्यन्तराज्जाठर एवाग्निर्वैश्वा-
नरो भवतु । नच वाक्यार्थविरोधः शङ्क्यः । तस्य भगवद्विभूतित्वेन यथाकथञ्चिद्योजनसम्भवात् ।
नचैवं सति भगवत्परत्वमेवास्त्विति शङ्क्यम्, विरुद्धधर्माणां विद्यमानत्वात् । के ते इति चेत्, तत्राह—
शब्दादिभ्योऽन्तःप्रतिष्ठानादिति । वाजिनां वैश्वानरविद्याप्रकरणे, "स एषोऽग्निर्वैश्वानरो योऽयमन्तः-
पुरुषे येनेदमन्नं पच्यते यदिदमद्यत"इति वैश्वानरपदसमभिव्याहृतोऽग्निशब्दः । आदिपदेनात्रापि
"हृदयं गार्हपत्य"इत्यादिनोक्तस्योपासनार्थं त्रेताग्निकल्पनस्य "तद्यद् भक्तं प्रथममागच्छेत् तद्धोमीय"-
मित्यादिनोक्तस्य प्राणादिदेवताकाहुत्याधारत्वस्य च सङ्ग्रहः । तेभ्यः शब्दादिभ्यः पुरुषेऽन्तःप्रतिष्ठित-
मित्यन्तःप्रतिष्ठानाच्च परमात्मपरत्वं वाक्यस्य युक्तमिति चेत्, नः जाठरविभूतिपरत्वं न वक्तुं
शक्यम् । कुतः । तथादृष्ट्युपदेशात् । भगवतः सर्वभोक्तृत्वं वक्तुमनेन शब्देन भगवति जाठरदृष्टेः
कर्तव्यत्वोपदेशात् । असम्भवात् । द्युमूर्धत्वादीनां धर्माणां जाठरे असम्भवात् । नचोपासनार्थं
तत्कल्पनमुपचारादिति वाच्यम् । पुरुषमपि चैनमधीयते । च पुनः वाजसनेयिनः, "स एषोऽग्निर्वै-
श्वानरो यत्पुरुषः स यो हैतमेवमग्निं वैश्वानरं पुरुषं पुरुषविधं पुरुषेऽन्तःप्रतिष्ठितं वेदे"ति एनं
वैश्वानरं पुरुषमपि वदन्ति । तथा जाठरे असम्भवतां धर्माणामत्रोपदेशाद्भगवति च तेषां सत्त्वात्
प्राप्ताप्राप्तविवेके कृते भगवत्परत्वमेव वाक्यस्य सेत्स्यति, न जाठरपरत्वम् । "सर्वे वेदा यत्पदमामन-
न्ती"ति श्रुत्या सर्ववेदस्य भगवत्परत्वे श्राविते वृथा गौण्यादरस्यायुक्तत्वादित्यर्थः ॥ २६ ॥

अत एव भगवत्परत्वे सम्भवत्यन्यपरत्वकल्पनस्यायुक्तत्वादेव, अग्न्यभिमानी देवता, महाभूततृतीयं
तेजश्च नात्र वाक्यार्थ इत्यर्थः ॥ २७ ॥

एवं भगवदसाधारणेन विरुद्धयोः प्रादेशमात्रत्वाभिविमानत्वयोराश्रयत्वेन वैश्वानरस्य परत्वं
निर्णीय तयोरुभयोरपि साहजिकत्वे विरुद्धधर्माश्रयत्वं सिध्येदिति प्रादेशमात्रत्वं विचारयति । तत्रा-

सिद्ध्यर्थं चत्वार ऋषयो वेदार्थविचारकाः प्रकारभेदेन। तत्र केवलशब्दबलविचारका आचार्याः। शब्दार्थयोर्बलेनार्थविचारको जैमिनिः। शब्दोपसर्जनतयाऽर्थविचारक आश्मरथ्यः। केवलार्थविचारको बादरिरिति। तत्र बृहदारण्यके "मा ते मूर्धा व्यपतदनतिप्रश्न्या वै देवता अतिपृच्छसि गार्गि मातिप्राक्षी"रित्यतिप्रश्ने दोषश्रावणेन, कठवल्ल्यां "नैषा तर्केण मतिरापनेये"ति निषेधेन च कल्पनया विचारे दोषः श्रावितः। तैत्तिरीये च "तत्त्वेव भयं विदुषोऽमन्वानस्ये"त्यविचारेऽपि दोषः श्रावितः। अत आचार्यो विचाराविचारयोर्दोषं पश्यन्, "तदन्वेष्टव्यं तद्विजिज्ञासितव्य"मित्यादिश्रुतेर्विचारमपि वदन् स्वशास्त्रे द्विविधमपि विचारमुपनिबबन्ध। तत्रान्यापेक्षयोत्कृष्टत्वात् पूर्वं जैमिनेर्मतमाह। साक्षादित्यादि। व्यापकस्य प्रादेशमात्रत्वे साक्षादपि कल्पनां विनापि स्वरूपविचारेणैवाविरोधं जैमिनिर्मन्यते। अयमर्थः। श्रुतौ "ह्याकाशवत् सर्वगतश्च नित्य"इति "सर्वतः पाणिपादं तदि"ति। "यदेकमव्यक्तमनन्तरूप"मिति नियतपरिणामपक्षेऽपि स्वेच्छयैव केवलं ब्रह्मणो व्यापकत्वं साकारत्वमनन्तमूर्तित्वं च श्रावितम्। तथा, "बहु स्या"मितीच्छया बहुभवनमपि सिद्धम्। एवं सति नियतपरिमाणपक्षे स्वेच्छयैव केनचिद्रूपेणाभिविमानं केनचिद्रूपेण प्रादेशमात्रमित्यविरोधः। अनियतपरिमाणपक्षे तु एकमेव स्वरूपमाकाशवन्नानापरिच्छेदककृतवृद्धिह्रासाभ्यां नानापरिमाणं सर्वतः पाणिपादत्वात् पूर्णं प्रतीयत इत्यविरोधः। नानारूपत्वं च स्मृतावप्युक्तम्। "विष्णोस्तु त्रीणि रूपाणि पुरुषाख्यान्यथो विदुः, प्रथमं महतः स्रष्टृ द्वितीयं त्वण्डसंस्थितम्, तृतीयं सर्वभूतस्थं तानि ज्ञात्वा विमुच्यते" इति। तत्र सर्वभूतस्थं भूतेषु पञ्चधा तत्तत्कार्यार्थं तिष्ठति। उदरे पुरुषोऽङ्गुष्ठमात्रः। "अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठती"ति। "अधो निष्ट्या वितस्त्यान्ते नाभ्यामुपरि तिष्ठती"ति श्रुतेः। हृदये ध्यानार्थं प्रादेशमात्रः पूर्वमुक्त एव। शिरसि च सर्वार्थमग्रे वक्ष्यते। मनसीन्द्रियेषु चाणुः। चक्षुषश्चक्षुरित्यादिश्रुतेस्तन्नियमनाय तत्र तिष्ठंस्तदनुरोधात्तथा। तत् सर्वव्यापकं चित्तमाकृष्य व्योम्नि धारयेदित्यादिवाक्यात्तद्वृद्ध्यर्थं तत्र तिष्ठन् व्यापक इति। अतो वैश्वानरस्य पुरुषत्वात् सच्चिदानन्दरूपेणैव प्रादेशमात्रत्वं न विरुध्यते इति साकारब्रह्मवाद एव जैमिनेः सिद्धान्तः। चतुर्लक्षण्यन्तभागे स्थितस्य, स विष्णुराहेति, तद्ब्रह्मेत्याचक्षते इति सूत्रद्वयस्य शतदूषणीकारप्रभृतिभिः स्वस्वग्रन्थ उपन्यासादिति ॥

एतदादिषु त्रिषु अविरोधमित्यस्यानुषङ्गो बोध्यः। अर्थस्तु निराकारमेव ब्रह्म मायाजवनिकाच्छन्नं, तदपगमे प्रणवमात्रीयदेवताधिष्ठितेन पुरुषाकारेणाभिव्यज्यते। सोऽभिव्यक्तः पुरुषोऽन्तर्यामी। अत एव पुरुषविध इत्युक्तम्। अभिव्यक्तिहेतुकत्वादाकारस्य न स्वाभाविकत्वम्, अतः प्रादेशमात्रत्वमपि। तथापि निर्दिश्यमानं वस्तु सच्चिदानन्दरूपमेवेत्याश्मरथ्य आचार्योऽभिव्यक्तेर्हेतोरविरोधं परिमाणस्य मन्यत इत्यर्थः ॥

बादरिस्तु केवलयौकिकोऽनुचिन्तनवशात् प्रादेशमात्रो हृदि प्रादुर्भवतीति तादृशरूपानुवादिका श्रुतिरित्येवमविरोधं मन्यते। "यद्यद्धिया त उरुगाय विभावयन्ति तत्तद्वपुः प्रणयसे सदनुग्रहाये"ति वाक्यानुरोधात्। अस्मिन् पक्षे त्वतात्त्विकम् ॥

जैमिनिमते पूर्वत्र प्रकारद्वयं प्रदर्शितम्। अग्निहोत्रं जुहोति यवागूं पचतीत्यत्र शाब्दक्रमादार्थक्रमस्य बलवत्त्वाङ्गीकारादत्राप्यभिविमानस्य प्रादेशमात्रताया आकाशवत् परिच्छेदकवशादुपपद्यमानत्वात्। आद्यं तु तदेकदेशिनोऽभिमतम्। तयोः किं बलवदित्याकाङ्क्षायामेकदेशिनिराकरणाय सम्पत्तेः सकाशात् "प्रादेशमात्रताया अविरोधं जैमिनिर्मन्यते। तत्र का सम्पत्तिः, कथं च सेत्याकाङ्क्षायां तत्र

प्रकारं हि यतो हेतोरेकदेशिव्युदासाय श्रुत्या स्वयं दर्शयति । श्रुतिस्तु वाजसनेयिब्राह्मणे । "प्रादे-
शमात्रमिह वै देवा सुविदिता अभिसम्पन्नास्तथा तु व एतान् वक्ष्यामि यथा प्रादेशमात्रमेवाभिसम्पा-
दयिष्यामीति स होवाच, मूर्धानमुपदिशन्नुवाच एष वै प्रतिष्ठा वैश्वानर इति, चक्षुषी उपदिशन्नुवाच
एष वै सुतेजा वैश्वानर इति, नासिके उपदिशन्नुवाच, एष पृथग्वर्त्मात्मा वैश्वानर इति, मुख्यमा-
काशमुपदिशन्नुवाच एष वै बहुलो वैश्वानर इति, मुख्या अप उपदिशन्नुवाच, एष वै रयिर्वैश्वानर
इति, चिबुकमुपदिशन्नुवाच एष वै प्रतिष्ठा वैश्वानर इती"ति । अत्र हि द्युप्रभृतिपृथिवीपर्यन्तान् वैश्वा-
नरावयवानुपासकाध्यात्ममूर्धादिचिबुकपर्यन्तेषु आधारानुरोधेन सम्पादयन्ति । तथाचैषा सम्पत्तिरेत-
त्कृतं प्रादेशमात्रत्वम्, न स्वाभाविकम् । तथाचान्यत्र तथाऽस्तु वैश्वानर इति जैमिन्याशय इत्यर्थः ॥

एवं मतान्तराण्युक्त्वा मुख्यं स्वसिद्धान्तमाह । आमनन्तीत्यादि । एवं व्यापकमेव वैश्वानरम्
एतस्मिन् मूर्धचिबुकान्तराले जाबाला आमनन्ति । "एषोऽनन्तोऽव्यक्त आत्मा योऽविमुक्ते प्रतिष्ठित
इति । सोऽविमुक्तः कस्मिन् प्रतिष्ठित इति । वरणायां नास्यां च मध्ये प्रतिष्ठित इति । का वै वरणा
का च नासीति । सर्वानिन्द्रियकृतान् दोषान् वारयति तेन वरणा भवतीति । सर्वान् इन्द्रियकृतान्
पापान्नाशयति तेन नासी भवतीति । कतमच्चास्य स्थानं भवतीति । भ्रुवोः घ्राणस्य च यः सन्धिः स
एष द्यौर्लोकस्य च परस्य च सन्धिर्भवती"ति । अत्र मूर्धचिबुकान्तराले प्रतिष्ठितस्यानन्तत्वमाम्नातम् ।
तथा पूर्वोक्ते वाजसनेयिब्राह्मण एकस्यैव वैश्वानरस्य पुरुषत्वं पुरुषविधत्वं पुरुषेऽन्त प्रतिष्ठितत्वं चाम्ना-
तम् । न ह्यनन्तस्य सङ्कुचिते स्थाने स्थितिः सम्भवति, न वा तस्यैव तद्विधत्वं, तत्र प्रतिष्ठितत्वं च ।
नच कालापरिच्छेदोऽत्र च पुरुषान्तरविधत्वादिकमेवोच्यते इति वाच्यम् । आनन्त्येनैव सिद्धे काला-
परिच्छेदे, पुरुषत्वेनैव च सिद्धे तद्विधत्वेऽनन्त इति पुरुषविध इति विशेषणयोर्वैयर्थ्यापत्तेरिति । नच
सूत्रकृता स्फुटतयाऽनुक्तत्वादयमेव सूत्राशय इत्यत्र किं गमकमिति वाच्यम् । अविरोधाध्याये श्रुतेस्तु
शब्दमूलत्वादिति सूत्रे यथाश्रुताङ्गीकारस्य सूत्रकृतैवोक्तत्वेनात्रापि तथैव बोध्यत्वादिति । अत एव
श्रीभागवतेऽपि "न हि विरोध उभयं भगवत्यपरिगणितगुणगण ईश्वरेऽनवगाह्यमाहात्म्य" इत्यादि-
नैतदेवोपबृंहितम् । लोकेऽपि वस्तुस्वभाव एव यत्र कार्यहेतुर्न तत्र युक्तिसम्भावना । तथा अय.का-
न्तसन्निधौ लोहपरिभ्रमणे, गर्भस्यौदर्येणादाहे, रेतसो मयूरादिभावे । अतो ब्रह्मणः श्रुत्येकसमधिग-
म्यत्वाद्यथाश्रुतमेव मन्तव्यम् । दृष्टं चेदं यशोदास्तनन्धयस्य जृम्भालीलायां मृद्भक्षणोत्तर व्यादान-
लीलायां च मुखारविन्दे विश्वं दर्शयतः । उलूखलबन्धने च सन्धीयमानानां स्वगेहदाम्नां द्व्यङ्गुल-
न्यूनता च । तेनानन्दांशस्याय धर्मो, यत्र स्वाभिव्यक्तिस्तत्र विरुद्धधर्माधारत्वमिति । इयमुपपत्तिरपि
चकारेण सूत्रे सूच्यते । तस्मात् प्रादेशमात्रोऽपि व्यापक इति वैश्वानरो भगवानेवेति सिद्धम् ॥

अथात्र मतान्तराणि विचार्यन्ते । तत्र जाठराग्निप्रतीकस्य जाठराग्न्युपाधिकस्य वा परमेश्वरस्योपा-
स्यत्वं व्यासमते । जैमिनिमते तु तदुभयकल्पनं विनैव साक्षात् परमेश्वरोपासनं विधीयत इति साक्षा-
दपीति सूत्रे व्याख्यायाभिव्यक्तयादिसूत्रेषु प्रादेशमात्रत्वस्याविरोधो विचार्यत इति शङ्कराचार्याः प्राहुः ॥

तत्रेदमवधेयम् । आचार्यस्तद्गुरुः सर्ववेदव्यासकर्ता स्वयं समन्वयं प्रतिज्ञाय सरलां सुन्दरीं जैमि-
निविचारितां युक्तिं श्रुत्यादिसम्मतां जानानः किमिति नोपगतवान् । अथ दुष्टां तर्हि कुतो न दूषि-
तवानिति ॥

भास्कराचार्यास्तु, नायं वैश्वानरशब्दो जाठराग्न्यभिप्रायेण प्रयुक्तो, येनात्र तद्गुणकोपासनं
कल्प्येत । किन्तु यौगिकोऽयं शब्दो विश्वान्नरान् नयतीति । तद्धितस्तु राक्षसवायसादिवत् स्वार्थे ।

अभिविमानशब्दश्चाभिमुख्येन विचित्रं जगन्निर्मिमीत इति वा, अभिगतश्चासौ विगतमानश्चेति वा योगेन । वैश्वानरशब्दस्य यौगिकार्थग्रहणे जाठरानलविशिष्टोपासनमनभिप्रेतं बादरायणस्येति साक्षात्सूत्रं व्याचक्रुः । तत्र बीजं तु सौत्रोऽपिशब्दः । साक्षादविरोधं जैमिनिरपीत्यन्वयादिति तदाशयः ।

रामानुजाचार्यास्तु मतद्वयेऽपि जाठरविशिष्टपरमात्मोपासनमङ्गीकृत्य, वैश्वानरशब्दोऽग्निसाधारणोऽपि परमात्मधर्मविशेषितो यथा विश्वेषां नराणां नेतृत्वादिना गुणेन परमात्मानमेवाचष्ट इति निश्चीयते, तथा स एषोऽग्निर्वैश्वानरो यत्पुरुष इति वाजसनेयिपठितोऽग्निशब्दोऽपि येनैवाग्रनयनादिना गुणेन योगाज्ज्वलने वर्तते तस्यैव गुणस्य निरुपाधिकस्य काष्ठां गतस्य परमात्मनि सम्भवादस्मिन् प्रकरणे परमात्मासाधारणधर्मविशेषितः साक्षादव्यवधानेन परमात्मानमेवाभिधत्त इति साक्षात्सूत्रार्थमाहुः । सम्पत्तिसूत्रे चोपासकैः क्रियमाणायाः प्राणाहुतेरग्निहोत्रत्वसम्पादनार्थमुरःप्रभृतीनां वेदित्वाद्युपदेश इति । आमननसूत्रे च, एवं द्युमूर्धत्वादिविशिष्टं वैश्वानरमस्मिन्नुपासकशरीरे प्राणाहुत्याधारत्वायामनन्ति च । तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजा इत्याहुः ।

तत्रापीदमवधेयम् । अत्र प्राचीनयोग्यादिसम्वादवाक्येषु, मूर्धा त्वेष आत्मनश्चक्षुष्ट्वेतदात्मन इत्यादिना यदुक्तं, तस्य निगमनमत्र प्रतीयते । तस्य ह वा एतस्यात्मनो वैश्वानरस्येति सर्वैः पदैस्तमेव परामृश्य मूर्धप्रभृतीनां समभिव्याहरणात् । तत्कथं सन्निहितपरित्यागेन व्यवहितस्योपासकस्य परामर्शः कर्तुं शक्यते । नचाग्रे सुतेजःप्रभृतिभ्योऽतिरिक्तानामुरःप्रभृतीनां वेद्यादित्वकथनात् तथेति वाच्यम् । भगवतो विश्वकायत्वाय तन्मूर्धादीनां सुतेजस्त्वादिदृष्ट्युपदेशवत्तस्य यज्ञत्वाय तदुरआदीनां वेदित्वादिदृष्ट्युपदेशस्य शक्यवचनतया तस्योपासकावयवगमकताया निश्चेतुमशक्यत्वात् । नचैवं सति तद् यद्भक्तं प्रथममागच्छेदित्यादौ यः प्राणाग्निहोत्राधारत्वेनोपासकास्यादिपरिग्रहः स कथं सङ्गच्छेतेति शङ्क्यम् । सम्पत्तिसूत्रविषयवाक्ये वैश्वानरावयवानामुपासकमूर्धादिषु सम्पत्तिकथनेन तेषां तत्र मानवदनुक्तानां तदुरःप्रभृतीनामप्युपासकोरःप्रभृतिषु सम्पत्त्या मानस्याभिप्रेततया सुखेनैव तदास्यादिपरिग्रहसङ्गतेः । अत एव सर्वत्र वैश्वानरस्थितिबोधनायोपसंहारे, तस्मादु हैवंविद् यद्यपि चण्डालायोच्छिष्टं प्रयच्छेदात्मनि हैवास्य वैश्वानरे हुतं स्यादिति श्रावितम् । तस्मादत्र न जाठरप्रतीकोपासना, न वा तदुपाधिकोपासना, नापि वह्निविशिष्टोपासना । किन्तु, केवलपरमात्मोपासनेति निश्चयः । शैवभिक्षू अप्येतेनैव दत्तोत्तरौ, भाव्यास्च ।

प्रकृतमनुसरामः । एवमस्मिन् पादे जीवपुरःसरेष्वार्थसन्देहो निवारितः । मनोमयत्वादिधर्मवान् हिरण्यश्मश्रुत्वादिधर्मवानत्ताऽलौकिकभोगयोगेऽपि दोषरहितः प्रकटसच्चिदानन्दस्वरूपोऽधिदैवादित्रयनियामकोऽक्षरादुत्कृष्टः स्वत एव साकारो विरुद्धधर्माश्रयो भगवानेव, न जीव इति । तेन सर्वान्तर्याम्येको भगवानिति सिद्धम् । आधेयरूपो विचारित इति च ॥

---

## मतान्तरपाठसमेतः सूत्रपाठः ।

### प्रथमाध्याये द्वितीयश्चरणः ।

॥ प्रथमं चतुःसूत्रं सर्वत्र प्रसिद्धोपदेशाधिकरणम् ॥ १ ॥

१ सर्वत्र प्रसिद्धोपदेशात् ॥ १ ॥
२ विवक्षितगुणोपपत्तेश्च ॥ २ ॥
३ अनुपपत्तेस्तु न शारीरः ॥ ३ ॥
४ कर्मकर्तृव्यपदेशाच्च ॥ ४ ॥

॥ द्वितीयं चतुःसूत्रं शब्दविशेषाधिकरणम् ॥ २ ॥

५ शब्दविशेषात् ॥ १ ॥
६ स्मृतेश्च ॥ २ ॥
७ अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च ॥ ३ ॥
८ सम्भोगप्राप्तिरिति चेन्न वैशेष्यात् ॥ ४ ॥

॥ तृतीयं द्विसूत्रमत्ताचराचरेत्यधिकरणम् ॥ ३ ॥

९ अत्ता चराचरग्रहणात् ॥ १ ॥
१० प्रकरणाच्च ॥ २ ॥

॥ चतुर्थं द्विसूत्रं गुहाम्प्रविष्टावित्यधिकरणम् ॥ ४ ॥

११ गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॥ १ ॥
१२ विशेषणाच्च ॥ २ ॥

॥ पञ्चमं पञ्चसूत्रमन्तर उपपत्तेरित्यधिकरणम् ॥ ५ ॥

१३ अन्तर उपपत्तेः ॥ १ ॥
१४ स्थानादिव्यपदेशाच्च ॥ २ ॥
१५ सुखविशिष्टाभिधानादेव च ॥ ३ ॥
१६ श्रुतोपनिषत्कगत्यभिधानाच्च ॥ ४ ॥
१७ अनवस्थितेरसम्भवाच्च नेतरः ॥ ५ ॥

॥ षष्ठं त्रिसूत्रमन्तर्याम्यधिकरणम् ॥ ६ ॥

१८ अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ॥ १ ॥
१९ न च स्मार्तमतद्धर्माभिलापात् ॥ २ ॥
२० शारीरश्चोभयेपि हि भेदेनैनमधीयते ॥ ३ ॥

---

१. चकाररहित शैव. पाठ । २ 'व्यपदेशाच्चेति' इति भास्करपाठ । ३. एतस्य सूत्रस्याग्रे 'अत एव च तद्ब्रह्म' 'अत एव च स ब्रह्म' 'अत एव स ब्रह्म' इति यथाक्रम निम्बार्करामानुजशैवाना पाठः । ४. चकाररहित इह भास्करपाठ । ५. 'अन्तर्याम्यधिदैवाधिलोकादिषु तद्धर्मव्यपदेशात्' इति भास्करनिम्बार्करामानुजशैवाना पाठ । ६. रामानुजशैवौ शारीरश्च' इतीह पठित्वाग्रिमे सूत्रे 'उभयेपि' इत्यादि पठत. ।

॥ सप्तमं त्रिसूत्रमदृश्यत्वाधिकरणम् ॥ ७ ॥

२१ अदृश्यत्वादिगुणको धर्मोक्तेः ॥ १ ॥

२२ विशेषणभेदव्यपदेशाभ्यां च[1] नेतरौ ॥ २ ॥

२३ रूपोपन्यासाच ॥ ३ ॥

॥ अष्टमं नवसूत्रं वैश्वानराधिकरणम् ॥ ८ ॥

२४ वैश्वानरः साधारणशब्दविशेषात् ॥ १ ॥

२५ स्मर्यमाणमनुमानं स्यादिति ॥ २ ॥

२६ शब्दादिभ्योऽन्तःप्रतिष्ठानान्नेति[2] चेन्न तथादृष्ट्युपदेशादसम्भवात् पुरुषमपि चैनमधीयते ॥ ३ ॥

२७ अत एव न देवता भूतं च ॥ ४ ॥

२८ साक्षादप्यविरोधं जैमिनिः ॥ ५ ॥

२९ अभिव्यक्तेरित्याश्मरथ्यः ॥ ६ ॥

३० अनुस्मृतेर्बादरिः[1] ॥ ७ ॥

३१ सम्पत्तेरिति जैमिनिस्तथा हि दर्शयति ॥ ८ ॥

३२ आमनन्ति चैनमस्मिन् ॥ ९ ॥

इति श्रीमत्कृष्णद्वैपायनविरचिततत्त्वसूत्रेषु समन्वयाख्ये प्रथमाध्यायेऽन्तर्यामिस्वरूपविचारो नामाधेयस्वरूपसन्देहनिवारको द्वितीयप्रकरण. ॥ २ ॥

---

१ चकाररहित पाठ शङ्करनिम्बार्कयो । २ 'शब्दादिभ्योऽन्त प्रतिष्ठानाच्च नेति चेन्न' इति शङ्कररामानुजशैवभिक्षूणा पाठ । निम्बार्कभाष्येऽप्येवमेव दर्शनात्तत्सम्मतोपि स एव पाठ । 'पुरुषविधमपि चैनमधीयते' इति माध्व पाठ । श्रीमद्वल्लभाचार्याणामपि स पाठो विदित एवेति 'पाठान्तरे पुरुषविधत्वम्' इति भाष्यवचनात् प्रकाशे च 'सांने पुरुषविधमिति पाठान्तरम्' इति व्याख्यानाच्चावगम्यते । श्रीविवरणकाराणा मतेन तु तत् पाठान्तर श्रुतौ न तु सूत्र इति । शङ्करभाष्येपि 'ये तु पुरुषविधमपि चैनमधीयते' इति सूत्रावयव पठन्तीत्युल्लेखात् सोऽपि तादृशपाठज्ञान नैजमभिव्यनक्ति ।
१. 'अनुस्मृतेरितिबादरि' इति प्रदीपकाराणा पाठ शैवश्च ।



श्रीकृष्णाय नमः।

श्रीगोपीजनवल्लभाय नमः।

श्रीमदाचार्यचरणकमलेभ्यो नमः।

# श्रीमद्ब्रह्मसूत्राणुभाष्ये

## गोस्वामिश्रीगिरिधरजित्कृतविवरणसमेते

### प्रथमाऽध्याये तृतीयः पादः।

### १ द्युभ्वाद्यायतनाधिकरणम्।

**द्युभ्वाद्यायतनं स्वशब्दात्॥ १।३।१॥**

( भगवत आधाररूपत्वप्रतिपादनपुरःसरं समन्वयाय तृतीयपादावतरणम् )

**द्वितीयपाद आधेयरूपो भगवान् प्रतिपादितः। आधाररूपोऽत्र प्रतिपाद्यते। तेन सर्वं ब्रह्मेति फलिष्यति।**

---

तृतीयपादं व्याख्यातुं प्रथमतो द्युभ्वाधिकरणं रचयाञ्चक्रुः–द्युभ्वायतनं स्वशब्दात्। अस्मिन् सम-
न्वयाध्याये सन्दिग्धानामुपनिषद्वाक्यानां ब्रह्मणि समन्वयार्थं विचारारम्भः। तत्र कानिचिदाधेयवाचकानि
कानिचिदाधारवाचकानि, तेषां समन्वयार्थं प्रथमे पादे अन्तस्तद्धर्माधिकरणे तल्लिङ्गाद्यधिकरणे च
उभयरूपो भगवान् प्रतिपादितः, ततः, द्वितीयपादे अन्तस्तद्धर्माधिकरणोक्तमाधेयरूपं ब्रह्म विस्तरेण
प्रतिपादितम्। एवं च एकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकमिति रीत्या स्मृतस्य आधाररूपभगवत्प्रति-
पादनस्योपेक्षानर्हत्वरूपप्रसङ्गसङ्गत्या तृतीयपादं व्याख्यातुमाहुः—**द्वितीयपाद** इत्यादिना। **आधा-
ररूपः**। तल्लिङ्गाद्यधिकरणोक्तः। **अत्र**। तृतीयपादे। **प्रतिपाद्यते**। विस्तरेणेति शेषः। **तेनेति**।
उभयरूपब्रह्मप्रतिपादनेनेत्यर्थः। **सर्वं ब्रह्मेति फलिष्यतीति**। अयम्भावः—"नायमात्माप्रवचनेने"ति
श्रुत्या वरणरूपसाधनमात्रप्राप्यत्वं ब्रह्मणि बोध्यते, एवं च तादृशसाधनेन भक्तिभावानन्तरं "सर्वं खल्विदं
ब्रह्मे"ति वाक्यश्रवणानन्तरं सर्वत्राधेयाधाररूपभगवद्भावे ज्ञाते तत्र विरहभावे अतिगाढभावेन सर्वत्र
तदेव स्फुरतीति तादृशे जीवे स्वीयत्वेन वरणे भक्तिभावात्सहकारियोग्यतासम्पत्त्या ब्रह्मफलं भविष्यतीति
लिङ्गभूयस्त्वाधिकरणोक्तरीत्या आत्मानन्दः "स स्वराड्भवति सर्वेषु लोकेषु कामचारो भवती"ति।
अथवा ज्ञानमार्गे उभयरूपब्रह्मप्रतिपादनेन प्रसिद्धोपदेशाधिकरणन्यायेन सर्वं ब्रह्मेति वाक्यार्थज्ञाने जाते
श्रवणं सिध्यति। ततः क्रतुं कुर्वीतेति मननम्। ततः निदिध्यासनेन सर्वतो मनसि निवृत्तव्यापारे सति
स्वयमुपलब्धनिजसुखानुभवरूपं ब्रह्म फलिष्यतीति॥

बाधकानां बलिष्ठत्वात्साधकानामभावतः ।
आधारधर्मा बाध्येरन्निति पादोऽभिधीयते ॥

(द्युभ्वाद्यायतनतया विषयवाक्यदर्शनम्)

इदं श्रूयते । "यस्मिन्द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः । तमेवैकं जानथात्मानमन्या वाचो विमुञ्चथामृतस्यैष सेतुः" (मुं. २।२।५) इति ।

यस्मिन्नित्यादिवाक्येषु वाक्यार्थः सर्वबाधितः ।
अर्थात्प्रकरणाल्लिङ्गादिति पूर्वं विचार्यते ॥

(तत्रऽर्थकृतप्रकरणलिङ्गबाधोपस्थापनम्)

अत्र संशयः । द्युभ्वाद्यायतनं ब्रह्म, आहोस्वित्पदार्थान्तरमिति । अर्थान्तरमेव भवितुमर्हति । द्युभ्वादीनां सूत्रे मणिगणा इव प्रोतानां भारत्वान्न तद्वाहकः परमात्मा । अन्यवाग्विमोकश्चासङ्गतः । एकविज्ञानेन सर्वविज्ञानस्य पृष्टत्वात्कथमन्य-

---

ननु आकाशस्तल्लिङ्गाद्यधिकरणेषु आकाशात्मत्वाऽऽकाशज्यायस्त्वब्रह्मक्षत्रौदनकत्वलोकशरीत्वादिभिर्धर्मैर्व्यापकत्वबोधे जाते आधाररूपताऽवधारणं भविष्यतीति तृतीयपादारम्भप्रयोजनं नास्तीत्यत आहुः **बाधकानामिति** । **बलिष्ठत्वादिति** । तेष्वधिकरणेषु प्रेत्याभिसम्भवाऽव्यपारान्तरात्मत्वादीनां साधितत्वेन बाधकानां बलिष्ठत्वादित्यर्थः । **साधकानामिति** । असाधितत्वेनेति शेषः । **अभावत इति** । दुर्बलत्वात्साधकाभावादित्यर्थः । **आधारधर्माः** । ज्यायस्त्वादयः । **बाध्येरन्निति** । विचारकबुध्या उपासनायां बाधिता भवेयुरित्यर्थः । एते धर्माः यदि उपासनायां विवक्षिताः स्युस्तदा आचार्यो विचारयेदेवेति भावः । **इतीति** । इतिहेतोः आधाररूपभगवत्प्रतिपादनार्थं तृतीयपादो अभिधीयत इत्यर्थः ॥

विषयवाक्यमुपन्यसन्ति—**इदं श्रूयत** इत्यादि । **श्रूयते** । द्वितीमुण्डकोपनिषदि श्रूयते । द्वितीये पादे सप्तमाद्दृश्यत्वाधिरणे सम्पूर्णं मुण्डक विषयवाक्यमुक्तं तत्रत्यमत्र बोध्यम् । **यस्मिन्निति** । यस्मिन् पुरुषे । **ओतं** समर्पितम् । शेषं सुगमम् । ननु उपनिषदि बहूनां वाक्यानां सत्त्वादेतस्यैव वाक्यस्य प्रथमतः विचारे किं बीजमित्यत आहुः—**यस्मिन्नित्यादि** । **वाक्येष्वित्यादि** । बाधस्तु त्रिप्रकारकः, अर्थकृतः, प्रकरणकृतः, लिङ्गकृतश्चेति । अयं वाक्यार्थस्तु सर्वप्रकारैर्बाधित इति हेतोः पूर्वं विचार्यत इत्यर्थः ।

पूर्वपक्षमाहुः—**अर्थान्तरमेवेति** । अर्थकृतं बाधं विवृण्वन्ति—**द्युभ्वित्यादि** । भगवतः भारवाहकत्वासम्भवात् ब्रह्मवाक्यत्वबाध इत्यर्थः । लिङ्गप्रकरणकृतं बाधं व्याकुर्वन्ति—**अन्येत्यादि** । **पृष्टत्वादिति** । प्रथममुण्डकोपनिषदि शौनकेनाङ्गिरसः पृष्टत्वादित्यर्थः । तथाहि—"शौनको ह वै महाशालोऽङ्गिरसं विधिवदुपपन्नः पप्रच्छ कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवती"ति । अस्यार्थः, शौनकस्यापत्यं महाशालः महागृहस्थः, अङ्गिरसं भारद्वाजशिष्यं आचार्यम्, विधिवत् यथाशास्त्रमित्येतत्, उपपन्नः उपगतः सन् पप्रच्छ पृष्टवान्, हे भगवः हे भगवान् एकस्मिन् विज्ञाते सर्वविद्भवतीति शिष्टप्रवादं श्रुतवानहम्, अतः प्रश्नं करोमि कस्मिन्विज्ञातेति । शेषं सुगमम् । **कथमन्यविमोक** इति । एकातिरिक्तस्य सर्वान्तःपातित्वात् अन्यविमोकासम्भवात्[1] प्रथममुण्डकोक्तप्रकरणकृतबाधस्य विद्यमानत्वादिति

विमोकः । सेतुश्च गतिसाधनः । तस्मादफलत्वमपि । "आत्मलाभान्न परं विद्यत" इति विरोधश्च । अतो न ब्रह्मविद्यापरमेतद्वाक्यम्, किन्तु; स्मृतिमूलं भविष्यतीत्येवं प्राप्ते—

(सिद्धान्तावतारः)

उच्यते, द्युभ्वाद्यायतनं ब्रह्मैव । द्यौर्भूश्चादिर्येषां ते द्युभ्वादयस्तेषामायतनम् ।

(बाधपरिहारः)

यस्मिन्द्यौरिति वाक्योक्तानां साधकं वदन् प्रथमपरिहारमाह—स्वशब्दात् । आत्मशब्दो व्याख्यातः स्वशब्देन । अत्र न जीवस्यात्मत्वेनोपासनार्थमात्मपदम्, किन्तु, पूर्वोक्तानामात्मभूतं तेन न भारकृतो दोषः । कारणे हि कार्यमोतं भवति सेतुत्वं च युज्यते । तज्ज्ञानेनामृतत्वप्राप्तेः । अभेदेऽपि "ब्रह्मविदाप्नोति परम्" (तै. २।१) इतिवदर्थः । तस्मादबाधितार्थत्वाल्लक्ष्यस्य सर्वगतत्वव्युत्पादकत्वाद् द्युभ्वाद्यायतनं ब्रह्मैव ॥ १।३।१ ॥

(प्रकरणकृतपरिहारः)

मुक्तोपसृप्यव्यपदेशात् ॥ १।३।२ ॥

ननु चोक्तं सर्वविज्ञानस्योपक्रान्तत्वादन्यवाग्विमोको विरुद्ध इति नैष दोषः । मुक्तोपसृप्यव्यपदेशात् । मुक्तानां जीवन्मुक्तानां शरीराध्यासरहितानामवान्त-

---

भावः । लिङ्गकृतं बाधं व्याकुर्वन्ति—**सेतुरित्यादि** । आत्मज्ञानस्य फलत्वात्, सेतोश्च साधनत्वात्, साधनफलयोश्चैक्यासम्भवात् सेतुरूपलिङ्गकृतो ब्रह्मवाक्यत्वबाध इति भावः । ननु ब्रह्मात्मज्ञानस्य परप्राप्तिरूपफलसाधनत्वमेवोच्यत इत्यत आह—**आत्मलाभादिति** । **स्मृतिमूलमिति** । श्रुतेः स्मृतिमूलत्वात् साङ्ख्यप्रतिपाद्यप्रधानपरं पुरुषपरं वा भविष्यतीत्यर्थः ।

सिद्धान्तं व्याकुर्वन्ति—**उच्यत इति** ।

अर्थकृतबाधस्य लिङ्गकृतबाधस्य च परिहारार्थं ब्रह्मवाक्यत्वसाधकं हेतुं वदन्नि-**साधकमिति** । अर्थकृतबाधस्य लिङ्गकृतबाधस्य परिहारः तम् । **व्याख्यात इति** । सूत्रस्यार्थः । **प्रथमपरिहारमिति** । प्रथमस्य अर्थकृतबाधस्य परिहारः तम् । **व्याख्यात इति** । सूत्र-त्यर्थः । **प्रथमपरिहारमिति** । प्रथमस्य अर्थकृतबाधस्य परिहारः तम् । व्याख्यानेन आत्मशब्दस्फोरणस्य प्रयो-स्यस्वशब्देन विषयवाक्यस्य आत्मशब्दो व्याख्यात इत्यर्थः । व्याख्यानेन आत्मशब्दस्फोरणस्य प्रयो-जनमाहुः—**अत्र नेति** । **पूर्वोक्तानाम्** । द्युभ्वादीनाम् । **आत्मभूतमिति** । अनारोपितानागन्तुकं यत्स्वरूपं तद्वाचकमात्मपदमित्यर्थः । एवं च एतद्बोधनार्थं सूत्रे स्वशब्दप्रयोगः । अन्यथा आत्मशब्दादि-त्येव वदेदिति भावः । ननु भगवतः सर्वस्याधारभूतत्वे भारवाहकत्वपरिहारः कथमित्यत आहुः—**कारणे हीति** । लिङ्गकृतबाधपरिहारमाहुः—**सेतुत्वमिति** । सेतुवाक्ये अमृतसाधनत्वं ब्रह्मणः उच्यते, न तु तज्ज्ञानस्य "तमेवैकं जानथे"त्यस्मिन् वाक्ये तस्य फलत्वम् । एवं च कथमुपपत्तिरित्यत आहुः—**अभेदेऽपीति** । तथा च ब्रह्मविदिति वाक्यवदत्रापि तस्यैव साधनत्वं तस्यैव फलत्वं अवस्थाभेदेन भेदात्, उभयवाक्यसामञ्जस्यमिति भावः । **तस्मादिति** । अर्थकृतलिङ्गकृतदोषद्वयस्य वारणादित्यर्थः । लक्ष्य-स्येति । एतद्विषयवाक्यात् पूर्ववाक्योक्तशरधनुर्न्यायेन ब्रह्मणो लक्ष्यस्येत्यर्थः । न्यायस्त्वनुपदमेव लक्ष्यते ॥१॥

प्रकरणकृतदोषपरिहारमाक्षिपन्ति—**नन्विति** । **मुक्तोपसृप्यव्यपदेशादिति** । उपसृप्यत्वमिति भावप्रधानो निर्देशः । मुक्तनिष्ठं यत् भगवतः उप समीपे सर्पणं गमनं तत्र योग्यत्वं मुक्तोपसृप्यत्वं तस्य उपदेशः मुक्तोपसृप्यव्यपदेशः तस्मात् । व्यपदेशेन दोषप-रिहारप्रकारमाहुः—**मुक्तानामित्यादि** । व्यपदिश्यते, इत्यनेनान्वयः । जीवन्मुक्तानां भगवदुपसर्पण-

रप्रकरणशरधनुर्न्यायेन ब्रह्मत्वेन ज्ञातं पृथक्त्वेन वा जीवं लक्ष्ये योजयितुं तदुपसृप्यता व्यपदिश्यते, तेन शरीराद्यध्यासविशिष्टं न ब्रह्मणि योजनीयमिति।

किञ्च, वाग्विमोक एव, न वस्तुविमोकः। वस्तुनो ब्रह्मत्वात्। वाचारम्भणमात्रत्वाद्विकारस्य। अतो न सर्वविज्ञानबाधः। अतो बाधकाभावादिदं ब्रह्मवाक्यमेव।

( परमतनिरासः )

ये तु श्रुतेरन्यथार्थत्वं कल्पितमतानुसारेण नयन्ति ते पूर्वोत्तरस्पष्टश्रुतिविरुद्धार्थवादिन उपेक्ष्याः॥ १।३।२॥

( साङ्ख्यमतनिरासः )

**नानुमानमतच्छब्दात्॥ १।३।३॥**

ननु जडधर्मा जडदृष्टान्ताः प्रकरणे बहवः सन्ति। अरा इव ब्रह्मपुरे मनोमय इत्यादि। तस्मात्प्रकृतिपुरुषनिरूपकसाङ्ख्यानुमापकमेवैतत्प्रकरणमस्तु। निर्णीत-

---

योग्यता भवतीत्यत्र प्रमाणं अवान्तरप्रकरणं, तत्र शरधनुर्न्यायेन बोद्धव्यम्। तथाहि द्वितीयमुण्डके "तदेतत्सत्यं तदमृतं तद्वेद्धव्यं सौम्य विद्धि। धनुर्गृहीत्वौपनिषदं महास्त्रं शरं ह्युपासानिशितं सन्धयीत। आयम्य तद्भावगतेन चेतसा लक्ष्यं तदेवाक्षरं सौम्य विद्धि। प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते। अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेदिति। अस्यार्थः, तद्भावगतेन चेतसेति। ब्रह्मभावप्रापकत्वेन चेतसा या उपासा तया निशितं ब्रह्मत्वेन ज्ञातं जीवं लक्ष्ये ब्रह्मणि योजयितुमुपासानिशितत्वाधायकतद्भावगतचेतःसिध्यर्थमन्यवाग्विमोकोऽत्रोच्यते, स च शरीराद्यध्यासराहित्ये एव सिध्यतीति भगवतो मुक्तोपसृप्यता व्यपदिश्यते उक्तरीत्या जीवयोग्यताकथनद्वारा उच्यते। व्यपदिश्यत इत्यस्य उच्यत इत्यर्थः। अन्यवाग्विमोके दोषद्वयम्। शरः धनुः शरीरमिति वाचा व्यवहारपवनं भविष्यतीति प्रकरणबाधरूप एकः, अपरः वाग्विमोके अर्थस्यैव बाधः, तत्राद्ये दोषमुद्धरन्ति—**न ब्रह्मणि योजनीयमिति।** एतद्बोधनाय वाग्विमोकोऽत्रोच्यते न तु सर्वविज्ञानविघाताय। एवं प्रकरणेन निवारितस्यान्यवाग्विमोकनिष्ठदोषस्यार्थेनापि निवारयन्ति—किञ्चेत्यादिना। **न वस्तुविमोक** इति। यथा कटककुण्डलादिसञ्ज्ञापरित्यागे एकरूपं सुवर्णं ज्ञायते तद्वद्वाग्विमोके ब्रह्मस्वरूपवस्तुपरिज्ञानं भवतीत्यर्थः।

मायावादिमतं कटाक्षयन्ति—येत्विति। श्रुतेरिति। "सर्वं खल्विदं ब्रह्मे"ति सामानाधिकरण्यं प्रपञ्चविलापनार्थं नानेकरसताप्रतिपादनार्थमित्याद्यन्यार्थत्वम्। **कल्पितमतानुसारेणेति।** प्रपञ्चो मायिक इति कल्पितमतानुसारेणेत्यर्थः। ते इति। "यथा सुदीप्तात्पावकाद्विस्फुलिङ्गाः सहस्रशः प्रभवन्ते" इत्यादिपूर्वोत्तरश्रुतिविरुद्धार्थवादिन इत्यर्थः॥ २॥

**नानुमानमतच्छब्दात्।** इदमधिकरण प्रधानपरमिति साङ्ख्यमतं दूषयितुं तन्मतासानुरेण पूर्वपक्षं दर्शयन्ति—**नन्वित्यादि।** **अरा इवेति।** "अरा इव रथनाभौ संहता यत्र नाड्यः स एषोऽन्तश्चरते बहुधा जायमान" इत्यत्र नाडी सङ्घातवत्त्वं शरीरनिष्ठो जडधर्मः। रथनाभिदृष्टान्तो जडदृष्टान्तः। **ब्रह्मपुर** इति। "यः सर्वज्ञः सर्वविद्यस्यैष महिमा भुवि। दिव्ये ब्रह्मपुरे ह्येष व्योम्न्यात्मा प्रतिष्ठित" इत्यत्र पुरमिव पुरमिति पुरपदबोधितो दृष्टान्तो भूमिष्ठमहिमवत्त्व शरीरधर्मः, एवं "मनोमयः प्राणशरीरनेता प्रति-

मप्यक्षराधिकरणे जडधर्मात्पुनरुज्जीवनम्। तस्माद् द्युभ्वाद्यायतनं प्रकृतिरेव भवितुमर्हतीति चेत्,

नानुमानं तन्मतानुमापकं न भवति। कोऽपि शब्दो निःसन्दिग्धस्तन्मतख्यापको नास्ति। ब्रह्मवादख्यापकास्तु बहवः सन्ति आत्मसर्वज्ञानन्दरूपादिशब्दाः। अतः सन्दिग्धा जडधर्मत्वेन प्रतीयमाना अपि ब्रह्मधर्मा एवेति युक्तम्। न हि ब्रह्मवादः श्रुतिव्यतिरिक्ते सिद्धोऽस्ति। येन ब्रह्मधर्माभावो निश्चेतुं शक्येत। तस्मात् सर्वाधारत्वेन निरूप्यमाणः परमात्मैव न प्रधानमिति ॥ १।३।३ ॥

( जीवनिराकरणम् )

प्राणभृच्च ॥ १।३।४ ॥

ननवस्ति निर्णायकं प्राणनामोक्तत्ववचनं "मनोमयः प्राणशरीरनेता" ( मुं. २।२।७ ) इति च। अतो जीवधर्माः केचन जडधर्माश्चापरे सर्वज्ञत्वादयोऽपि योगप्रभावाज्जीवधर्मा इति। तस्माज्जडजीवविशिष्टः साङ्ख्यवाद एव युक्त इति चेत्। न।

प्राणभृज्जीवो न सम्भवति। अतच्छब्दादेव। न ह्यानन्दरूपः स भवितुमर्हति। तन्मते, पृथग्योगकरणमुत्तरार्थम् ॥ १।३।४ ॥

( ईश्वरविषयकज्ञानवान् जीवः )

भेदव्यपदेशात् ॥ १।३।५॥

विशेषहेतुमाह—"तमेवैकं जानथ" ( मुं. २।२।५ ) इति कर्मकर्तृभावः प्रतीयते, अतो भेदव्यपदेशान्न प्राणभृज्जीवः ॥ १।३।५ ॥

( साङ्ख्यनिराकरणाय प्रकरणानुसन्धानम् )

प्रकरणात् ॥ १।३।६ ॥

जीवजडसाधारणनिराकरणाय विशेषहेतुमाह— प्रकरणं हीदं ब्रह्मणः। "ब्रह्मा देवानामि"त्यारम्भे "स ब्रह्मविद्या"मिति। "तेषामे-

---

ष्ठितोऽन्ने हृदय सन्निधाय। तद्विज्ञानेन परिपश्यन्ति धीरा आनन्दरूपममृतं यद्विभाति"इत्यत्र मनोमयत्व विकारधर्म' आदिपदेन ग्राह्य। आत्मसर्वज्ञादिशब्दा चेतनधर्मबोधका पुरुषप्रतिपादका। तस्मादिति। प्रकृतिपुरुषबोधकपदानां सत्वात्।

सिद्धान्तमाहु.—नानुमानमिति। इद प्रकरण साङ्ख्यमतमूलभूतम्, तदसाधारणधर्मबोधकशब्दवत्त्वात्, इत्यनुमान साङ्ख्यमतानुमापक न भवतीत्यर्थ। तत्र हेतुमाहु —कोऽपीत्यादि। अन्यत्स्पष्टम् ॥३॥

प्राणभृच्च। जीवनिराकरणाय पूर्वपक्ष दर्शयन्ति—नन्वित्यादि। निर्णायकम्। साङ्ख्यमतनिर्णायकम्। सिद्धान्तमाहु —नेत्यादि। पृथग्योगकरणमिति। सूत्रपृथक्करणं न शब्दयोगकरण चोत्तरसूत्रेष्वन्वयार्थमित्यर्थ ॥ ४ ॥

भेदव्यपदेशात्। कर्मकर्तृभाव इति। ईश्वरविषयकज्ञानवान् जीव इति कर्मकर्तृभावः मन्त्रे प्रतीयत इत्यर्थ' ॥ ५ ॥

प्रकरणात्। जीवजडसाधारणेति। तमेवैकमित्यत्र एवकारस्याप्यर्थकत्वे ततोऽपि मुख्य-

वैतां ब्रह्मविद्यामि"त्यन्ते च। ब्रह्मविद्याया एव प्रकरणित्वमवगम्यते। "ब्रह्मैवेदममृतं पुरस्तात्" ( मुं. २।२।११ ) इत्येवमादिभिर्विस्पष्टो ब्रह्मवादः प्रतीयते ॥ १।३।६ ॥

सर्वस्याप्यन्यथाभावशङ्कय विशेषहेतुमाह—

( पैङ्गीश्रुतिव्याख्यानम् )

**स्थित्यदनाभ्यां च ॥ १।३।७ ॥**

द्वा सुपर्णेति वाक्ये "अनश्नन्नन्यो अभिचाकशीति" ( मुं. ३।१।१ ) इति केवलस्थितिः परमात्मनः। कर्मफलोपभोगो जीवस्य। अतः स्थित्यदनाभ्यां जीवपरमात्मनावेव मध्ये परामृष्टौ। न हि साङ्ख्यमतमेतादृशं भवति। अतोऽस्य वैशेषिकोपपत्तेर्विद्यमानत्वात्प्रातिलोम्येन सर्वा उपपत्तयो दृढा इति द्युभ्वाद्यायतनं भगवानेवेति सिद्धम्। यद्यपि पैङ्ग्युपनिषदि द्वा सुपर्णेत्यस्यान्यथा व्याख्यानं प्रतिभाति तदृचां प्रदेशविशेषेऽन्यथा व्याख्यानं न दोषाय। तस्मात् सत्त्वक्षेत्रज्ञौ जीवब्रह्माणौ व्याख्येयौ ॥ १।३।७ ॥ १ ॥

---

मात्मानं जानथेत्यर्थकरणे जडजीवसाधारणत्वं तन्निराकरणायेत्यर्थः ॥ ६ ॥

स्थित्यदनाभ्यां च । अन्यथाभावशङ्कयेति । ब्रह्मपदस्य जीवसाधारण्यात् सर्वस्यापि प्रकरणस्य जीवपरत्वशङ्कयेत्यर्थः । यद्यपीति । पैङ्ग्युपनिषदि पैङ्गिरहस्यब्राह्मणे । अन्यथाव्याख्यानमिति । सत्त्वक्षेत्रज्ञपरत्वेन व्याख्यानमित्यर्थः ॥ इति प्रथमाधिकरणम् ॥

---

१ अत्रेत्थं व्याख्यानान्तराणि—

(१) तत्र शाङ्कराः—वैश्वानराधिकरणे त्रैलोक्यात्मा वैश्वानरः परमात्मेत्यभिहितम्, तर्हि त्रैलोक्यायतनमन्यद्वित्याक्षिप्य समाधानादाक्षेपसङ्गत्या, उपक्रमस्थसाधारणशब्दस्य वाक्यशेषस्थद्युमूर्धत्वादिना ब्रह्मपरत्वमुक्तम्, तद्वदत्रापि उपक्रमस्थसाधारणायतनत्वस्य "अमृतस्यैष सेतु." इति वाक्यशेषस्थसेतुत्वलिङ्गेन परिच्छिन्नप्रधानादिपरत्वमस्त्विति दृष्टान्तसङ्गत्या वा इदमधिकरणमारभते— अत्र पूर्वपक्षे प्रधानाद्युपास्ति॰, सिद्धान्ते ब्रह्मप्रमितिरिति फलभेदः। मुण्डके श्रूयते "यस्मिन्द्यौः पृथिवी चान्तरिक्षमोतम्॰," इत्यादि। तत्र द्युभ्वादीनामोतत्वेन किञ्चिदायतनं प्रतीयते। तत्किं प्रधानम्, उत जीवः, आहोस्विद्ब्रह्मेति संशये, प्रधानादिरिति पूर्वः पक्षः। सिद्धान्तस्तु—द्युभ्वाद्यायतनं द्यौश्च भूश्च द्युभ्वौ, द्युभ्वौ आदी यस्य, द्यौः पृथिव्यन्तरिक्षमित्येवमात्मकस्य, तद्द्युभ्वादि, तस्यायतनम् अधिष्ठानं ब्रह्मैव। कुत॰, स्वशब्दात् स्वस्य परब्रह्मणो वाचको,॰य आत्मशब्द॰ "तमेवैकं जानथ आत्मानम्" इति श्रुतेः तस्मादित्यर्थः। एवं च उपक्रमस्थसाधारणायतनत्वस्य गौणसेतुत्वलिङ्गात्प्रथमश्रुतात्मश्रुत्या ब्रह्मपरत्वमेव, न प्रधानादिपरत्वमिति भाव॰ ॥ द्युभ्वाद्यायतनं ब्रह्मेत्यत्र हेत्वन्तरमाह— मुक्तैरुपसृप्यं मुक्तोपसृप्यम्, भावप्रधानोऽयं निर्देशः। तथा च, "तथा विद्वान्नामरूपाद्विमुक्त॰ परात्परं पुरुषमुपैति दिव्यम्" इति ब्रह्मणोऽविद्यातत्कार्यसकलानर्थोच्छेदद्वारा मुक्तप्राप्यत्वस्य व्यपदिश्यमानत्वात्। अतो द्युभ्वाद्यायतनं ब्रह्मैवेत्यर्थ॰ ॥ सिद्धान्तमभिधाय प्रधानपक्षं निषेधति—अनुमीयत इत्यनुमानम्, साङ्ख्यपरिकल्पित प्रधानम्। न तद्द्युभ्वाद्यायतनम्। कुतः? अतच्छब्दात् तस्याचेतनस्य प्रधानस्य प्रतिपादक शब्दः तच्छब्दः, न तच्छब्दोऽतच्छब्द॰, तस्मात् प्रधानप्रतिपादकशब्दस्येहाश्रवणात्, प्रत्युत तद्विपरीतचेतनप्रतिपादकस्य "यः सर्वज्ञः सर्ववित्" इत्यादेः शब्दस्य श्रवणा-

दित्यर्थः ॥ ननु तर्हि शारीरोऽस्तु द्युभ्वाद्यायतनम्, तस्य चेतनत्वादियोगादित्याशङ्क्याह—प्राणभृत्, शारीरोऽपि न द्युभ्वाद्यायतनम्। कुतः? अतच्छब्दादेव, शारीरस्य सर्वज्ञत्वासम्भवात् तत्साधारण आत्मशब्दोऽतच्छब्द एव ॥ शारीरनिरासे हेत्वन्तरमाह त्रिभिः सूत्रैः—"तमेवैकं जानथ" इति ज्ञातृज्ञेयभावेन जीवपरयोर्भेदेन व्यपदिश्यमानत्वादित्यर्थः ॥ "कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातम्" इत्युपक्रमात् ब्रह्मणं एवेदं प्रकरणम्। न हि शारीरज्ञानात् सर्वविज्ञानं सम्भवति। तस्मात्प्रकरणादपि न शारीर इत्यर्थः ॥ "द्वा सुपर्णा" इति मन्त्रे "अनश्नन्नन्यो अभिचाकशीति" इत्यौदासीन्येन स्थितिः परमात्मनो निर्दिश्यते, "तयोरन्यः पिप्पलं स्वाद्वत्ति" इति अदनं शारीरस्य। अतः स्थित्यदनाभ्यां न शारीरो द्युभ्वाद्यायतनम्, अपि तु परं ब्रह्मैवेति सिद्धम् ॥

(२) रामानुजीये—आथर्वणिका अधीयते "यस्मिन्द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः। तमेवैकं जानथात्मानमन्यावाचो विमुञ्चथामृतस्यैष सेतुः" इति। तत्र संशयः, किमयं द्युपृथिव्यादीनामायतनत्वेन श्रूयमाणो जीव उत परमात्मेति। किं युक्तम्? जीव इति। कुतः? "अरा इव रथनाभौ संहता यत्र नाड्यः। स एषोऽन्तश्चरते बहुधा जायमानः" इति परस्मिञ्श्लोके पूर्वप्रस्तुतं द्युपृथिव्याद्यायतनं यत्रेति पुनरपि सप्तम्यन्तेन परामृश्य, तस्य नाड्याधारत्वमुक्त्वा, पुनरपि "स एषोऽन्तश्चरते बहुधा जायमानः इति तस्य बहुधा जायमानत्वं चोच्यते। नाडीसम्बन्धो देवादिरूपेण बहुधा जायमानत्वं च जीवस्यैव धर्मः। अस्मिन्नपि श्लोके "ओतं मनः सह प्राणैश्च सर्वैः" इति प्राणपञ्चकस्य मनसश्चाश्रयत्वमुच्यमानं जीवधर्म एव। एवं जीवत्वे निश्चिते सति द्युपृथिव्याद्यायतनत्वादिकं यथाकथञ्चित्सङ्गमयितव्यमिति। एवं प्राप्ते प्रतिचक्ष्महे—द्युभ्वाद्यायतनं स्वशब्दात्। द्युपृथिव्यादीनामायतनं परं ब्रह्म। कुतः? स्वशब्दात्। परब्रह्मासाधारणशब्दात्। "अमृतस्यैष सेतुः" इति परस्य ब्रह्मणोऽसाधारणः शब्दः। "तमेवं विद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यते" इति सर्वत्रोपनिषत्सु स एवामृतत्वप्राप्तिहेतुः श्रूयते। सिनोतेश्च बन्धनार्थत्वात्सेतुरमृतस्य प्रापक इत्यर्थः। सेतुरिव वा सेतुः। नद्यादिषु सेतुर्हि कूलस्य प्रतिलम्भकः। संसारार्णवपारभूतस्यामृतस्यैष प्रतिलम्भक इत्यर्थः। आत्मशब्दश्च निरुपाधिकः परस्मिन् ब्रह्मणि मुख्यवृत्तः। आप्नोतीति ह्यात्मा। स्वेतरसमस्तस्य नियन्तृत्वेन व्याप्तिस्तस्यैव सम्भवति। अतः सोऽपि तस्यैव शब्दः। "यः सर्वज्ञः सर्ववित्" इत्यादयश्चोपरितनाः परस्यैव ब्रह्मणः शब्दाः। नाड्याधारत्वं तस्यापि सम्भवति। "सन्ततं शिराभिस्तु लम्बत्याकोशसन्निभम्" इत्यारभ्य, तस्याः शिखाया मध्ये परमात्मा व्यवस्थितः" इति श्रवणात्। "बहुधा जायमानः" इत्यपि परस्मिन्ब्रह्मणि सङ्गच्छते। "अजायमानो बहुधा विजायते। तस्य धीराः परिजानन्ति योनिम्" इति देवादीनां समाश्रयणीयत्वाय तत्तज्जातीयरूपसंस्थानगुणधर्मसमन्वितः स्वकीयं स्वभावमजहदेव स्वेच्छया बहुधा विजायते "परः पुरुषः" इत्यभिधानात्। स्मृतिरपि—"अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन्। प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया" इति। मनःप्रभृतिजीवोपकरणाधारत्वं च सर्वाधारस्य परस्यैवोपपद्यते ॥

इतश्च परमपुरुषः। मुक्तोपसृप्य व्यपदेशाच्च ॥ अयं द्युपृथिव्याद्यायतनभूतः पुरुषः संसारबन्धनान्मुक्तैरपि प्राप्यतया व्यपदिश्यते। "यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम्। तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति" "यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय। तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्" इति।

संसारबन्धनाद्विमुक्ता एव हि विधूतपुण्यपापा निरञ्जना नामरूपाभ्यां विमुक्ताश्च । पुण्यपापनियन्ध-नाचित्संसर्गप्रयुक्तनामरूपभाक्त्वमेव हि संसारः । अतो विधूतपुण्यपापैर्निरञ्जनैः प्रकृतिसंसर्गरहितैः परेण ब्रह्मणा परमसाम्यमापन्नैः प्राप्यतया निर्दिष्टो द्युपृथिव्याद्यायतनभूतः पुरुषः परं ब्रह्मैव ॥

एवं परब्रह्मासाधारणशब्दादिभिः परमेव ब्रह्मेति प्रसाध्य प्रत्यगात्मासाधारणशब्दाभावाद्यायं पर एवेत्याह—नानुमानमतच्छब्दात्प्राणभृच्च । यथास्मिन्प्रकरणे प्रधानप्रतिपादकशब्दाभावात्प्रधानं न प्रतिपाद्यमेवं प्राणभृदपीत्यर्थः । अनुमीयत इत्यनुमानं परोक्तं प्रधानमुच्यते । अनुमानप्रमितत्वाद्वानुमान-मिति वा । अतच्छब्दात्तद्वाचिशब्दाभावादित्यर्थः । अर्थाभावे यद्व्ययमित्यत्पर्यभावः ॥

इतश्चायं न प्रत्यगात्मा । भेदव्यपदेशात् । "समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः । जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः" इत्यादिभिर्जीवाद्विलक्षणत्वेनायं व्यपदि-श्यते । अनीशया भोग्यभूतया प्रकृत्या मुह्यमानः शोचति जीवः । अयं यदा स्वस्मादन्यं सर्वस्येशं प्रमीयमाणमस्येश्वरस्य महिमानं च निखिलजगन्नियमनरूपं पश्यति तदा वीतशोको भवति ॥

प्रकरणात् । प्रकरणं चेदं परस्य ब्रह्मण इत्य"दृश्यत्वादिगुणको धर्मोक्तेः" इत्यत्रैव प्रतिपादितम् । नाडीसम्बन्धबहुधाजायमानत्वमनःप्राणधारत्वैश्च प्रकरणविच्छेदाशङ्कामप्यमत्र पर्यहाप्म ॥

स्थित्यदनाभ्यां च । "द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति" इत्येकस्य कर्मफलादनमन्यस्य च कर्मफलमनश्नन्दीप्यमान एव सर्व-ज्ञोऽमृतसेतुः सर्वात्मा द्युभ्वाद्यायतनं भवितुमर्हति न पुनः कर्मफलमदञ्छोचन्प्रत्यगात्मा । अतो द्युभ्वाद्यायतनं परमात्मेति सिद्धम् ॥

(३) माध्वे—तत्र चान्यत्र प्रसिद्धानां शब्दानां विष्णौ समन्वयं प्रायेणास्मिन् पादे दर्शयति । विष्णोः परविद्याविषयप्रकृतिमुक्तं तत्र "यस्मिन् द्यौः पृथिवी चान्तरीक्षमोतं मनः सह प्राणैश्च सर्वैः तमेवैकं जानथ आत्मानमि"त्यत्र "प्राणानां ग्रन्थिरसि रुद्रो माविशान्तकः प्राणेश्वरः कृत्तिवासाः पिना-की"त्यादिना रुद्रस्य प्राणाद्याधारत्वप्रतीतेः । "स एषोऽन्तश्चरते बहुधा जायमान" इति जीवलिङ्गाच्च तयोः प्राप्तिरिति । अत उच्यते तमेवैकं जानथ आत्मानमित्यात्मशब्दात् द्युभ्वाद्याश्रयो विष्णुरेव "आत्मब्रह्मादयः शब्दास्तमृते विष्णुमव्ययं न सम्भवन्ति यस्मात्तैर्नैवात्मा गुणपूर्णत"ति ब्रह्मवैवर्ते ॥ "अमृतस्यैष सेतुरि"ति "ब्रह्मविदाप्नोति परम्" "नारायणं महाज्ञेयं विश्वात्मानं परायणम्" "मुक्तानां परमां गतिम्" "एतमानन्दमयमात्मानमुपसङ्क्रामति" इत्यादि तस्यैव मुक्तप्राप्यत्वव्यपदेशात् । "बहुनात्र किमुक्तेन यावन्नैनं न गच्छति । योगी तावन्न मुक्तः स्यादेष शास्त्रविनिर्णयः" इत्यादित्यपुराणे ॥ नानुमानात्मकागमपरिकल्पितरुद्रोऽत्र वाच्यो, भस्मधरोग्रादितच्छब्दाभावात् । "सोऽन्तकः, स रुद्रः, स प्राणभृत्, स प्राणनायकः, स ईशो यो हरिर्योऽनन्तो यो विष्णुर्यः परः परो वरीयानि-त्यादिना प्राणानां ग्रन्थित्वरुद्रत्वादेर्विष्णोरेवोक्तत्वात् । "ब्रह्माण्डे च रजं द्रावयते यस्मात् तस्माद्रुद्रो जनार्दनः । ईशानादेव चेशानो महादेवो महत्त्वतः । पिबन्ति ये नरा नाकं मुक्ताः संसारसागरात् । तदाधारो यतो विष्णुः पिनाकीति ततः स्मृतः । शिवः सुखात्मकत्वेन शर्वः संरोधनाद्धरिः । कृत्या-त्मकमिदं देहं अतो वस्ते प्रवर्त्तयन् । कृत्तिवासास्ततो देवो विरञ्चिश्च विरेचनात् । बृंहणाद् ब्रह्मना-मासावैश्वर्यादिन्द्र उच्यते । एवं नानाविधैः शब्दैरेक एव त्रिविक्रमः । वेदेषु स पुराणेषु गीयते पुरुषोत्तम इति वामने च । न तु नारायणादीनां नाम्नामन्यत्र सम्भवः । अन्यनाम्नां गतिर्विष्णुरेक एव प्रकीर्तित इति । स्कान्दे च । ऋते नारायणादीनि नामानि पुरुषोत्तमः । प्रादादन्यत्र भगवान्

राजवर्त्तेस्वकं पुर इति । चतुर्मुखः शतानन्दो ब्रह्मणः पद्मभूरिति । उग्रो भस्मधरो नग्नः कपालीति शिवस्य च । विशेषनामानि ददौ स्वकीयान्यपि केशव इति ब्राह्मे ॥ एतैरेव हेतुभिर्न जीवो वायुश्च । "अजायमानो बहुधा विजायत" इति तस्यैव बहुधा जन्मोक्तेः ॥ "नाट्यं वाच्यं जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमि"ति भेदव्यपदेशात् ॥ "द्वे विद्ये वेदितव्ये" इति तस्य ह्येतत् प्रकरणम् ॥ "द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशी"ति इतीशजीवयोः स्थित्यदनोक्तेः ॥

(४) निम्बार्कः—"यस्मिन्द्यौ"रिति द्युभ्वाद्यायतनं ब्रह्म, स्वशब्दाद्ब्रह्मवाचकादात्मादिशब्दात् ॥ द्युभ्वाद्यायतनं ब्रह्मैव, कुतः ? तदायतनस्यैव "यदा पश्यः पश्यते रुक्मवर्णं कर्त्तारमीशं पुरुषं ब्रह्मयोनिम् ।· तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैती"त्यादिमुक्तोपसृप्यव्यपदेशात् ॥ नानुमानगम्यं प्रधानं तदायतनं, तद्बोधकशब्दाभावात् ॥ न प्राणभृदपि द्युभ्वाद्यायतनम् । कुतः ? अतच्छब्दादेव ॥ किञ्च, ज्ञातृज्ञेयभावे भेदव्यपदेशादपि द्युभ्वाद्यायतनं न प्राणभृत् ॥ परमात्मप्रकरणाच्च द्युभ्वाद्यायतनत्वेन जीवपरिग्रहः ॥ "द्वा सुपर्णे"त्यादिमन्त्रे परमात्मनोऽभोक्तृत्वेन स्थितेर्जीवस्यादनाच्च, न जीवात्मा द्युभ्वाद्यायतनम् ॥

(५) भैक्षवे—आकाशाधिकरणमारभ्य पादद्वयेन सर्वान्तर्यामिणो ब्रह्मणः सर्वरूपत्वाख्यं सर्वाधिष्ठातृत्वमुपासनार्थमवधारितं तथाऽमृतत्वान्तर्यामित्वादिकमपि इदानीं तृतीयपादेन ब्रह्मणः सर्वाधारत्वमवधारयति एवं हि "यत्परं ब्रह्म सर्वात्मा सर्वस्यायतनं महत् । सूक्ष्मात्सूक्ष्मतरं नित्यं तत्त्वमेव तदि"त्येवम्विधवाक्यशतोक्तो ब्रह्मज्ञानप्रकारः प्रतिपादितः स्यादिति । मुण्डके श्रूयते "यस्मिन्द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः । तमेवैकं जानथ आत्मानमन्यावाचो विमुञ्चथामृतस्यैष सेतुरिति" । अत्रायतनं किं प्रधानम्, किं वा जीवः, उत परमात्मा वेति, संशयेऽयं निर्णयः—ब्रह्मैवात्र द्युभ्वाद्यायतनं द्यौश्च भूश्च द्युभुवौ तदादीनां सर्वेषामायतनम् । कुतः ? स्वशब्दात् । ब्रह्मणोऽसाधारणात् शब्दात् "स्वस्ति वः पाराय तमसः परस्ताद्विरजं ब्रह्म निष्कलं तच्छुभ्रं ज्योतिषां ज्योतिः सर्वैतत्परमं ब्रह्मधाम परात्परं पुरुषमुपैति दिव्य"मित्यादिवाक्यशेषेष्वित्यर्थः । नन्वियं मुण्डकश्रुतिरदृश्यत्वाधिकरणे ब्रह्मपरत्वेनावधारिता तत्कथमियं श्रुतिरस्याधिकरणस्य विषय इति चेन्न, महावाक्यार्थनिर्णयेऽपि सर्वाधारत्वयोधकावान्तरवाक्ये संशयसम्भवादिति । हेत्वन्तरमाह—"गताः कलाः पञ्चदश प्रतिष्ठा देवाश्च सर्वे प्रतिदेवतासु । कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्वे एकी भवन्ती"ति वाक्यशेषे मुक्तैरात्मभिरुपगम्यत्ववचनाच्चेत्यर्थः । न हि मुक्तैरुपगम्यत्वं प्रधानस्य सम्भवति प्रधानप्राप्तावपि पुनरावृत्तिस्मरणात् । नापि जीवस्य गम्यगन्तृभावस्य भेदतन्त्रत्वादित्यर्थः । उदाहृतश्रुतेरयमर्थः, विदुषो मोक्षकाले सर्व एते परे ब्रह्मण्येकीभवन्त्यत्यन्तमविभागं गच्छन्ति । के त इत्याकाङ्क्षायामाह पञ्चदश जीवस्य कलाः शक्तिरूपा अंशाः, दशेन्द्रियतन्मात्ररूपाः स्वकारणान्निर्गताः, सत्यस्तद्द्वारा आत्यन्तिकप्रलये ब्रह्मण्येकीभवन्ति । तथा देवाश्चक्षुराद्यवच्छिन्नाः सूर्य्याद्यंशाः प्रतिदेवतासु स्वस्वांशिषु सूर्य्यादिषु गताः सन्तस्तद्द्वारा प्रलये ब्रह्मण्येकीभवन्ति । तथा विज्ञानमयो बुद्ध्यवच्छिन्न आत्मा जीवोऽपि कर्मणि गतः सन् कर्मतन्त्रः सन् कर्मद्वारा ब्रह्मण्येकीभवति, ब्रह्मणि कर्मैकीभावात्, जीव एकीभवतीति यावत् । कर्मनिमित्तकाविर्भावतिरोभावाभ्यामेव च जीवस्य कर्माश्रयत्वं श्रुत्यन्तरेपूक्तं यथा "यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येती"त्याद्यनन्तरं "क्वायं तदा पुरुषो भवती"ति प्रश्ने सति गुरुशिष्यौ रहस्यममुमर्थ-

मान्त्रयाञ्चाते तं च श्रुतिराह "तौ ह यदूचतुः कर्म ह यै तदूचतुरिति"। अत्र च सूत्रे चकारो वक्ष्यमाणसूत्रादनुषञ्जनीयः। पूर्वसूत्रे हेत्वन्तरस्योक्तत्वादिति बोध्यम्। अनुमानं तु न द्युभ्वाद्यायतनम्। अत्रोक्तं कुत अतच्छब्दात्प्रधानवाचकशब्दाभावादस्मिन्प्रकरण इत्यर्थः। जीवोऽपि न तथा। अतच्छब्दात्, जीवनिर्णायकशब्दाभावादित्यर्थः। भेदव्यपदेशादपि न प्रधानजीवौ द्युभ्वाद्यायतनं तमसः परस्तादिति तमः शब्दोक्तादचेतनात्प्रधानाद्भेदव्यपदेशः "जुष्टं यदा पश्यत्यन्यमीशमिति पश्यन्त्स्विहैव निहितं गुहायामि"ति च पश्यद्भ्यो जीवेभ्यो भेदव्यपदेश इत्यर्थः। "ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामि"त्यादिवाक्योपक्रमादिभ्यो ब्रह्मण एव प्रकरणावधारणाच्चेत्यर्थः। स्थितिश्चादनं च स्थित्यदने ताभ्यामपि प्रधानजीवौ न द्युभ्वाद्यायतनमित्यर्थः। तत्र "स वै एतत्परमं ब्रह्म धाम यत्र विश्वं निहितं भाति शुभ्रमि"त्यादिः प्रधानप्राणभृतोरुभयोरेव द्युभ्वाद्यायतने स्थितिव्यपदेशः। "प्रधानं पुरुषश्चैव लीयेते परमात्मनी"ति। विष्णुपुराणादिषु पुंप्रकृत्योरुभयोरपि परमात्मनि स्थितिस्मरणेन तदेकवाक्यतां परित्यज्य विश्वशब्दस्य केवलकार्यपरत्वेन सङ्कोचानर्हत्वात्, "तयोरन्यः पिप्पलं स्वाद्वत्ती"ति च जीवमात्रस्यादनव्यपदेशः, तथा च स्थितिश्रवणात्, पुंप्रकृत्योः प्रतिषेधः स्वस्मिन्मुख्यस्थित्यसम्भवात्, अदनश्रवणाच्च केवलजीवस्य प्रतिषेधः, द्युभ्वाद्यायतनस्यानश्नन्नन्योऽभिचाकशीतीत्यनेन प्रकृतादनप्रतिषेधादिति भावः॥

(६) भास्करीये—"यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः। तमेवैकं जानथात्मानमन्या वाचो विमुञ्चथामृतस्यैष सेतुरि"ति श्रूयते। अत्र सन्देहो यदेतद् द्युप्रभृतीनां सप्तम्यन्तमायतनं निर्दिष्टं किं तत् परं ब्रह्म स्यादाहोस्विदर्थान्तरमिति। किं तावत् प्राप्तम्? प्रधानमायतनं स्यात्। विकारस्य हि कारणमाश्रयः। कस्मादेवम्? सेतुश्रुतेः। पारवान् हि सेतुरवगतो लोके, न ब्रह्मणः पारवत्त्वमनन्तमपारमिति श्रवणात्। आत्मशब्दश्चायं तदुपकारित्वात् प्रधानविषयः प्रयुक्त इति व्याख्येयम्। यद्वात्मश्रुतेः सेतुश्रुतेश्च जीवो वा ग्रहीतव्यः तस्याप्यायतनत्वमुपपद्यते कर्मनिमित्तत्वात्, द्युलोकाद्युपपत्तेः। सिद्धान्ते यमर्थं सूत्रकारो निराकरोति, स एव सर्वत्र पूर्वपक्षे प्रदर्शनीयो, न हि यः कश्चित् स्वमनीषिकया। अत्रोच्यते। परं ब्रह्म द्युभ्वाद्यायतनम्। द्यौश्च भूश्च द्युभुवौ तौ द्युभुवावादी यस्य तदिदं द्युभ्वादि तस्यायतनम्। आयतनशब्दो नपुंसकलिङ्गः। तत्र द्युभ्वाद्यायतनमिति पाठो युक्तः। कस्मात्? स्वशब्दादात्मशब्दात्। तमेवैकमिति विकारजातं तस्मिन्नेव चेतसोपसंहृत्य तमेव कारणात्मानं जानथोपासीतेत्यर्थः। सर्वत्र हि विदिनोपक्रम्योपासिनोपसंहरत्युपासिना चोपक्रम्य विदिनोपसंहरति श्रुतिरतो यत्रान्यतरोपादानं तदेकार्थतैव प्रत्येतव्या। ये पुनः प्रपञ्चबहिरङ्गो शुचैतन्यमात्रं ध्येयमुपदिशन्ति। तेषां सर्वं तं परादादिति श्रुतिविरोधः। सेतुश्रुतिश्चामृतत्वावधारणमात्रविवक्षया तदधीनममृतत्वमित्यर्थः। न पारवत्त्वविवक्षयेति, न सर्वथा सेतुसाम्यम्। कश्चिदाह आत्मज्ञानं सेतुश्रुत्या निर्दिष्टमिति। तदयुक्तम्। एष इत्यनन्तरवृत्तस्य प्रधानस्य वाचकं सर्वनाम्नोपसर्जनस्य ज्ञानस्येति॥ इतश्च परप्रतीतिः रागद्वेषादिदोषमुक्तैर्विद्वद्भिरुपसृप्यं गन्तव्यमायतनं निर्दिश्यते। तथा हि "विद्वान् नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यमि"ति॥ अनुमीयत इत्यनुमानं प्रधानम्। तद्वाचकशब्दाभावादितरस्य चेतनस्यास्ति यः सर्वज्ञः सर्वविदिति॥ भवतु तर्हि शारीरस्तस्य पर्यायेण सर्वज्ञत्वोपपत्तेरात्मत्वस्य च अत आह—न मुख्यया वृत्त्या सर्वज्ञत्वं तस्यावकल्प्यते। न च पर्यायवाची शब्दोऽत्र प्रयुक्तः। पृथग्योगकरणमुत्तरार्थम्॥ तमेवैकमिति ज्ञातृज्ञेयतया भेदव्यपदेशात् परप्रकरणं चेदमुपक्रमे पृष्टत्वात्। "कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवती"ति। प्रकरणे च जातिगुण-

क्रियाशब्दाः प्रयुज्यमानाः सन्निहितार्थविषया भवन्तीत्याग्नेयाधिकरणे स्थितम् ॥ इतश्च न प्राणभृत् । द्वा
सुपर्णेति शुभाशुभफलभोजनादत्तीति व्यपदिश्यते । अनश्नन्निति औदासीन्येन स्थितिः । अभिचाक-
शीति दीप्यत इत्यर्थः । अत्रापि सूत्रकारो जीवपरयोर्भेदमुपगम्य जीवनिराकरणं चकार । अपरे तु
स्वानुभवमप्यपह्नुवाना भेदं मायामात्रं सङ्गिरन्ते । भूतयोनिवाक्ये निराकृतमपि प्रधानं सेतुश्रुत्या
पुनराशङ्क्य निरस्तमित्यपौनरुक्त्यम् ॥

( ७ ) श्रीमद्वल्लभाचार्यमतेऽयमभिप्रायः—द्वितीयपादस्यान्तस्तद्धर्माधिकरणप्रपञ्चरूपत्वादाधेय-
रूपो भगवानन्तर्यामी निरूपितः । तेनाष्टाधिकरण्यां "उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः, यो
लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वर" इति गीतोक्तलक्षणमपि विचारितम् । प्रथमेऽधिकरणे अन्तः-
स्थस्य मनोमयत्वादीनां (धर्माणाम्, द्वितीये हिरण्यश्मश्रुत्वादीनां च) विचारेण तादृशधर्मविशिष्ट-
त्वस्य तत्र सिद्ध्या, ततस्त्रिभिः कार्यबोधनेन बिभर्तिपदार्थस्य धारणपोषणात्मकस्वरूपसिद्ध्या,
ततोऽन्तर्याम्यधिकरणेऽन्यत्वपरमात्मत्वावेशानां सपरिकरस्य लोकत्रयस्य च स्वरूपज्ञापनेन, ततोऽदृ-
श्यत्वाद्यधिकरणेऽक्षरादुत्तमत्वेनाव्ययत्वस्य, वैश्वानराधिकरणे विरुद्धधर्माधारत्वेनेश्वरत्वस्य च
सिद्धया तथाऽवसायात् । अतः परं तृतीयपादे तल्लिङ्गाद्यधिकरणप्रपञ्चरूपतया आधाररूपो विचा-
र्यते । तेन सर्वं ब्रह्मेति फलनात् सर्वेषां ब्रह्मणि समन्वयः सेत्स्यति । न च पूर्वपाद आधेयनिरूप-
णेऽप्याकाशात्मत्वाकाशज्यायस्त्वादिभिर्व्यापकत्वावधारण आधारतयाऽप्यवधारितो भवत्येवेति व्यर्थः
पादारम्भ इति वाच्यम् । तत्र प्रेत्याभिसम्भवाध्वपारप्राप्त्यन्तरात्मत्वादीनामाधेयत्वसाधकानामुपपादि-
तत्वेन तेषां बलिष्ठतया आकाशात्मत्वादीनामाधारत्वसाधकानां चानुपपादितत्वेन निर्बलतया आधा-
रत्वधर्मस्य बाध्यत्वमाशङ्क्येतेति तन्निर्धारणार्थमावश्यकत्वात् । पादक्रमनियामिका तु जडार्थवारण-
रूपाऽवसरसङ्गतिरेवेति न पुनरुच्यते । तत्राथर्वणोपनिषदि द्वितीयमुण्डके श्रूयते । "यस्मिन् द्यौः
पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः, तमेवैकमात्मानं जानथान्या वाचो विमुञ्चथाऽमृत-
स्यैष सेतु"रिति । न चास्यैव वाक्यस्य कुतः पूर्वं विचार इति शङ्क्यम् । एतद्वाक्यस्यार्थप्रकरणलिङ्गै-
र्बाधितत्वाभानेन तन्निर्णयस्यात्यन्तमावश्यकतया पूर्वं तस्यैव विचार्यत्वात् ।

अत्र संशयः । द्युभ्वाद्यायतनं ब्रह्म वा, पदार्थान्तरं वेति । किमत्र युक्तम् ? अर्थान्तरमेवेति । अत्र
द्युभ्वादीनामोतत्वोक्त्या सूत्रप्रोतमणिकुसुमादिव भारत्वबोधनात्तद्ग्राहकस्यार्थबलादेव परमात्मत्वनिरा-
सात् । एकविज्ञानेन सर्वज्ञानस्यारम्भ एव पृष्टत्वेनात्रोच्यमानवाग्विमोकस्य प्रकरणविरुद्धत्वात् । सेतोः
प्राप्तिसाधनत्वेन शब्दसामर्थ्यविचारेऽप्यफलतयैव सिद्धेरात्मलाभश्रुतिविरुद्धत्वाच्च । किन्तु साङ्ख्यो-
क्तस्य प्रधानस्य वा तद्विशिष्टस्य पुरुषस्य वा बोधकमिदं वाक्यमिति प्राप्ते, उच्यते—

द्युभ्वित्यादि । उक्तवाक्योक्तानां द्युभ्वादीनाम् आयतनं ब्रह्मैव । कुतः ? स्वशब्दात् । द्युभ्वादीनां
सर्वेषाम् अनारोपितानागन्तुकभूतस्वरूपत्वबोधकादात्मशब्दात् । स्वपदमत्र श्रौतात्मपदव्याख्यानरू-
पम् । तथा च नेदं जीवस्यात्मत्वेनोपासनार्थमात्मपदम्, किन्तु पूर्वोक्तानामात्मभूतमिति बोधनार्थ-
मिति लभ्यते । अतः कारणे कार्यस्यौततया भारत्वाभावान्नार्थकृतो बाधः । तज्ज्ञानस्यामृतत्वसाध-
कतया ज्ञानद्वारा सेतुत्वस्यापि युक्तत्वान्न लिङ्गादपि बाधः । अतो बाधितार्थत्वाभावाल्लक्ष्यं सर्वगतं
चैवेत्युक्तस्य लक्ष्यस्य सर्वगतत्वव्युत्पादनायास्य प्रवृत्तत्वाच्चात्रोक्तं द्युभ्वाद्यायतनं ब्रह्मैवेत्यर्थः ॥

ननूपक्रमे एकविज्ञानेन सर्वविज्ञानस्योक्तत्वादस्य वाग्विमोकबोधकत्वेन विरुद्धत्वमिति चेत्,
तत्राह । मुक्तेत्यादि । मुक्ताः देहाद्यध्यासरहिता जीवन्मुक्तास्तेषामुपसृप्यत्वेन उपसृप्तुं योग्यतया व्यप-

देशात् । अयमर्थः । अवान्तरप्रकरणे "तद्वेद्धव्यं सोम्य विद्धी"त्यैकाग्र्येण तु ज्ञानं प्रतिज्ञाय, तत् कथं स्यादित्याकाङ्क्षायां "धनुर्गृहीत्वौपनिषदं महास्त्रं शरं ह्युपासा निशितं सन्धयीत, आयम्य तद्भागवतेन चेतसा लक्ष्यं तदेवाक्षरं सोम्य विद्धी"त्यत्र ब्रह्मभावगतेन चेतसा या उपासा तया निशितस्य शरस्य सन्धानमुक्त्वा, किमस्त्रं,कः शर इत्यपेक्षायां, "प्रणवो धनुः शरो ह्यात्मे"त्यनेन धनुःशरावुक्त्वा उपासनानिशितत्वाधायकं तद्भागवतं चेतः कथं स्यादित्यपेक्षायां तदर्थमन्यविषयकवाग्विमोक उच्यते । स च शरीराद्यध्यासराहित्य एव भवतीति तेन जीवन्मुक्तनिष्ठा भगवदुपसृप्यता बोध्यते, न तु ब्रह्मज्ञानं निषिध्यते । अतस्तस्या अत्रोपदेशो न सर्वज्ञानोपक्रमविरोधक इत्यर्थः । किञ्चात्र वाग्विमोक एवोच्यते, न त्वर्थविमोकः । वस्तुनो ब्रह्मरूपत्वात् । विकारस्य वाचारम्भणमात्रत्वात् । अतः सर्वज्ञानबाधाभावादिदं ब्रह्मवाक्यमेवेति । एवं प्रकरणविरोधोऽपि परिहृतः ॥

इदमेवाधिकरणं पुनर्निषेधमुखेन विचारयति । नन्वत्र प्रकरणे, "अरा इव रथनाभौ संहता यत्र नाड्यः, स एषोऽन्तश्चरते बहुधा जायमान" इति नाडीसङ्घाताधिकरणत्वं शरीरधर्मत्वाज्जडधर्मेऽरनाभिदृष्टान्तो जडदृष्टान्तः । "यः सर्वज्ञः सर्वविद् यस्यैष महिमा भुवि, दिव्ये ब्रह्मपुरे ह्येष व्योम्नि आत्मा प्रतिष्ठित" इत्यत्र पुरत्वं पुरमिव पुरमिति च जडदृष्टान्तः । भूमिष्ठमहिमवत्त्वं च जडधर्मः । "मनोमयः प्राणशरीरनेते"त्यत्र मनोविकारत्वं च, तथा प्राणशरीरनेतृत्वं, पुरे व्योम्नि प्रतिष्ठितत्वं, बहुधा जायमानत्वं च पुरुषधर्म इति बहूनां साङ्ख्यानां निरूपकाणां शब्दानां दर्शनादिदं तन्मतानुमापकमेव प्रकरणमिति द्युभ्वाद्यायतनं प्रकृतिरेवेति चेत्, न; अनैतैः शब्दैः क्रियमाणमनुमानं न साधकम् । कुतः ? अतच्छन्दात् । तन्मतासाधारणशब्दाभावात् । तथा हि, यत्तदोर्नित्यसम्बन्धान्नाडीसङ्घाताधिकरणत्वमन्तःप्रविष्टस्य सञ्चरतो भोक्तुः प्रतीयते, अतो न जडधर्मः । दृष्टान्तस्तु विष्टम्भकत्वमेव बोधयति, न तु जडत्वमपि । अन्यथा दृष्टान्तीयाशेषधर्मोपपत्तिः पक्षे भवन्ती, अनुमानस्य प्रामाण्यमेव भञ्ज्यात् । एवं सर्वज्ञ इत्यत्राप्युक्तयुक्त्या आत्मन एव महिमा प्रतीयते, न जडस्य । पुरमपि दिव्यत्वेन लोकविलक्षणमेव सिध्यतीति दृष्टान्तमात्रेण न जडत्वम्, मनोमय इत्यत्रापि प्राचुर्यमेवार्थो, न विकार इति प्रागपि सिद्धम् । अतो निःसन्दिग्धतन्मतबोधकशब्दाभावाद् आत्मसर्वज्ञानन्दरूपादिशब्दानां ब्रह्मवादबोधकानामसन्दिग्धानां सत्त्वात् सन्दिग्धानां तत्समभिव्याहारादिना ब्रह्मपरत्वे निर्णीते एतद्वाक्येऽपि सर्वाधारत्वेन निरूप्यमाणः परमात्मैव, न प्रधानमिति ॥

ननु माऽस्त्वेवं साङ्ख्यानुसारित्वनिर्णयः, तथापि प्राणानामोतत्ववचनं प्रधानासाधारणम् । प्राणशरीरनेतेति प्राणयुक्तशरीरनायकत्वं पुरुषासाधारणम् । सर्वज्ञादिकमपि योगप्रभावविशिष्टजीवधर्मः । अतः, केषाञ्चिज्जीवधर्माणां जडधर्माणां च दर्शनाज्जीवजडविशिष्टः साङ्ख्यवाद एवात्रास्त्विति चेत्, न; प्राणभृद् अत्र जीवो न भवति । कुतः ? अतच्छब्दात् । न शब्दो हेतुश्च पूर्वसूत्रादेवानुवर्तते । तथा च मनोमयः प्राणशरीरनेता प्रतिष्ठितोऽन्ने हृदयं सन्निधाय तद्विज्ञानेन परिपश्यन्ति धीरा आनन्दरूपममृतं यद् विभातीति मन्त्रे हि मनोमयत्वादिधर्मविशिष्टस्य प्राणभृतो विज्ञानेनानन्दामृतरूपस्य विभातो दर्शनमुच्यते । ज्ञानदर्शनयोश्चैकविषयत्वं द्रष्टॄणां च धीराणां ततो भेदः । न हि तन्मते पुरुषस्यानन्दामृतरूपत्वं, येन पुरुषः शङ्क्येत । अतः प्राणभृत्त्वमपि साधारणमेव ॥

ननु मास्तु मनोमयमन्त्रे जीवसिद्धिः । यस्मिन् द्यौरिति मन्त्रे तु भविष्यतीत्यतो हेत्वन्तरमाह । भेदेति । "तमेवैकं जानथ आत्मान"मिति ज्ञातृज्ञेयभावः प्रतीयते, प्राणानामोतत्वं च ज्ञेये उच्यते । स च ज्ञातृभिन्नः, अतो भेदव्यपदेशाच्च प्राणभृत् जीव इत्यर्थः ॥

ननु यद्यपि मन्त्रगतो हेतुर्जीवव्यावर्तकः, तथाप्येकशब्दस्य मुख्यार्थत्वाङ्गीकारे द्वितीयसिद्धावेवकारस्यासङ्कुचितान्ययोगव्यवच्छेदकत्वस्याशक्यवचनत्वात् तमपि जानथ, ततोऽपि मुख्यमात्मानं जानथेति वचनव्यक्तावस्य मन्त्रस्य जडजीवसाधारणधर्मबोधकत्वं स्यादतस्तदभावायाह । प्रकरणादिति । आरम्भे, स ब्रह्मविद्यामिति, मध्ये च, ब्रह्मैवेदमित्यादि, अन्ते च प्रोवाच तां तत्त्वतो ब्रह्मविद्यामिति निरूपणात् प्रकरणं ब्रह्मणोऽवगम्यते । अतस्तदतिहाय, मन्त्रः कथमकस्मात् साङ्ख्यमभिदध्यात्, प्रकृतहान्यप्रकृतकल्पनाप्रसङ्गात्, अतो नात्र साङ्ख्यसिद्धिरित्यर्थः ॥

ब्रह्मपदस्य साङ्ख्यमते प्रधानवाचकत्वात् सर्वस्यान्यार्थत्वमाशङ्क्य हेत्वन्तरमाह । स्थितीत्यादि । द्वा सुपर्णेति मन्त्रे, अनश्नन्नन्यो अभिचाकशीतीति परमात्मनः केवला स्थितिः श्राव्यते । तयोरन्यः पिप्पलं स्वाद्वत्तीति जीवस्य कर्मफलभोगः श्राव्यते । अतः स्थित्यदनाभ्यां जीवपरमात्मानावेव मध्ये परामृष्टौ । न हि साङ्ख्यमते तथास्ति । सर्वेषां पुरुषाणां साम्यात् । वैषम्येऽप्येकन्नात्मद्वयस्थित्यनङ्गीकारात् । अतोऽनया विशेषोपपत्त्या तन्मते निरस्ते तदुपोद्बलितप्रकरणादिभिरपि ब्रह्मवादस्यैव सिद्धिः । तेन द्युभ्वाद्यायतनं ब्रह्मैवेति सिद्धम् ॥ ७ ॥ १ ॥



## २ भूमाधिकरणम् ।

( भूमत्वसाधनायाधिकरणारम्भः )

**भूमा सम्प्रसादादध्युपदेशात् ॥ १।३।८ ॥**

**इदं श्रूयते "यो वै भूमा तत्सुखम्" ( छां. ७।२३।१ ) इति सुखलक्षणमुक्त्वा**

---

**भूमासम्प्रसादादध्युपदेशात्** । अथ तमेवैकं जानथेत्यादिना ज्ञानमार्गे शरधनुर्न्यायेनोपासनं बोधितम्, भक्तिमार्गे आनन्दस्यैव प्राधान्यात् तथोपासनं बोधयितुं भूमाधिकरणमारभन्ते—**भूमासम्प्रसादादध्युपदेशात्** । विषयवाक्यमुपन्यस्यन्ति—इदं श्रूयत इति । छान्दोग्ये सप्तमप्रपाठके श्रूयते ॥ **अथविषयवाक्यम्** ॥

ॐ अधीहि भगव इति होपससाद सनत्कुमारं नारदस्तꣳ होवाच यद्वेत्थ तेन मोपसीद ततस्त ऊर्ध्वं वक्ष्यामीति ॥ १ ॥

स होवाचर्ग्वेदं भगवोऽध्येमि यजुर्वेदꣳ सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यꣳ राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्याꣳ सर्पदेवजनविद्यामेतद्भगवोऽध्येमि ॥ २ ॥

सोऽहं भगवो मन्त्रविदेवास्मि नात्मविच्छ्रुतꣳ ह्येव मे भगवद्दृशेभ्यस्तरति शोकमात्मविदिति सोऽहं भगवः शोचामि तं मा भगवाञ्छोकस्य पारं तारयत्विति तꣳ होवाच यद्वै किञ्चैतदध्यगीष्ठा नामैवैतत् ॥ ३ ॥

नाम वा ऋग्वेदो यजुर्वेदः सामवेद आथर्वणश्चतुर्थ इतिहासपुराणः पञ्चमो वेदानां वेदः पित्र्यो राशिर्दैवो निधिर्वाकोवाक्यमेकायनं देवविद्या ब्रह्मविद्या भूतविद्या क्षत्रविद्या नक्षत्रविद्या सर्पदेवजनविद्या नामैवैतन्नामोपास्स्वेति ॥ ४ ॥

स यो नाम ब्रह्मेत्युपास्ते यावन्नाम्नो गतं तत्रास्य यथा कामचारो भवति यो नाम ब्रह्मेत्युपास्तेऽस्ति भगवो नाम्नो भूय इति नाम्नो वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥ ५ ॥ इति प्रथमः खण्डः ॥ १ ॥

वाग्वाव नाम्नो भूयसी वाग्वा ऋग्वेदं विज्ञापयति यजुर्वेदꣳ सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यꣳ राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्याꣳ सर्पदेवजनविद्यां दिवं च पृथिवीं च वायुं चाकाशं चापश्च तेजश्च देवाꣳश्च मनुष्याꣳश्च पशूꣳश्च वयाꣳसि च तृणवनस्पतीञ्छ्वापदान्याकीटपतङ्गपिपीलकं धर्मं चाधर्मं च सत्यं चानृतं च साधु चासाधु च हृदयज्ञं चाहृदयज्ञं च यद्वै वाङ्नाभविष्यन्न धर्मो नाधर्मो व्यज्ञापयिष्यन्न सत्यं नानृतं न साधु नासाधु न हृदयज्ञो नाहृदयज्ञो वागेवैतत्सर्वं विज्ञापयति वाचमुपास्स्वेति ॥ १ ॥

स यो वाचं ब्रह्मेत्युपास्ते यावद्वाचो गतं तत्रास्य यथाकामचारो भवति यो वाचं ब्रह्मेत्युपास्तेऽस्ति भगवो वाचो भूय इति वाचो वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥ २ ॥ इति द्वितीयः खण्डः ॥ २ ॥

मनो वाव वाचो भूयो यथा वै द्वे वामलके द्वे वा कोले द्वौ वाक्षौ मुष्टिरनुभवत्येवं वाचं च

नाम च मनोऽनुभवति स यदा मनसा मनस्यतिमन्त्रानधीयीयेत्यथाधीते कर्माणि कुर्वीतेत्यथ
कुरुते पुत्रांश्च पशूꣳश्चेच्छेयेत्यथेच्छत इमं च लोकममुं चेच्छेयेत्यथेच्छते मनो ह्यात्मा मनो हि
लोको मनो हि ब्रह्म मन उपास्वेति ॥ १ ॥

स यो मनो ब्रह्मेत्युपास्तेऽस्ति यावन्मनसो गतं तत्रास्य यथाकामचारो भवति यो मनो ब्रह्मे-
त्युपास्तेऽस्ति भगवो मनसो भूय इति मनसो वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥ २ ॥

इति तृतीयः खण्डः ॥ ३ ॥

सङ्कल्पो वाव मनसो भूतान्यदा वै सङ्कल्पयतेऽथ मनस्यथ वाचमीरयति तामु नाम्नीरयति
नाम्नी मन्त्रा एकं भवन्ति मन्त्रेषु कर्माणि ॥ १ ॥

तानि ह वा एतानि सङ्कल्पैकायनानि सङ्कल्पात्मकानि सङ्कल्पे प्रतिष्ठितानि समक्लृपतां द्यावा-
पृथिवी समकल्पेतां वायुश्चाकाशं च समकल्पन्तामापश्च तेजश्च तेषाꣳ सङ्क्लृप्त्यै वर्षꣳ सङ्कल्पते
वर्षस्य सङ्क्लृप्त्या अन्नꣳ सङ्कल्पतेऽन्नस्य सङ्क्लृप्त्यै प्राणाः सङ्कल्पन्ते प्राणानाꣳ सङ्क्लृप्त्यै मन्त्राः
सङ्कल्पन्ते मन्त्राणाꣳ सङ्क्लृप्त्यै कर्माणि सङ्कल्पन्ते कर्मणाꣳ सङ्क्लृप्त्यै लोकः सङ्कल्पते लोकस्य
सङ्क्लृप्त्यै सर्वꣳ सङ्कल्पते स एष सङ्कल्पः सङ्कल्पमुपास्वेति ॥ २ ॥

स यः सङ्कल्पं ब्रह्मेत्युपास्ते क्लृप्तान्वै स लोकान् ध्रुवान् ध्रुवः प्रतिष्ठितान् प्रतिष्ठितोऽव्यथमा-
नानव्यथमानोऽभिसिध्यति यावत्सङ्कल्पस्य गतं तत्रास्य यथाकामचारो भवति यः सङ्कल्पं ब्रह्मे-
त्युपास्तेऽस्ति भगवः सङ्कल्पाद्भूय इति सङ्कल्पाद्वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥ ३ ॥

इति चतुर्थः खण्डः ॥ ४ ॥

चित्तं वाव सङ्कल्पाद्भूयो यदा वै चेतयतेऽथ सङ्कल्पयतेऽथ मनस्यत्यथ वाचमीरयति तामु
नाम्नीरयति नाम्नि मन्त्रा एकं भवन्ति मन्त्रेषु कर्माणि ॥ १ ॥

तानि ह वा एतानि चित्तैकायनानि चित्तात्मानि चित्ते प्रतिष्ठितानि तस्माद्यद्यपि बहुविदचित्तो
भवति नायमस्तीत्येवैनमाहुर्यदयं वेद यद्वा अयं विद्वान्नेत्थमचित्तः स्यादित्यथ यद्यल्पवि-
च्चित्तवान्भवति तस्मा एवोत शुश्रूषन्ते चित्तꣳ ह्येवैषामेकायनं चित्तमात्मा चित्तं प्रतिष्ठा चित्तमु-
पास्वेति ॥ २ ॥

स यश्चित्तं ब्रह्मेत्युपास्ते चित्तान्वै स लोकान् ध्रुवान् ध्रुवः प्रतिष्ठितान् प्रतिष्ठितोऽव्यथमाना-
नव्यथमानोऽभिसिध्यति यावच्चित्तस्य गतं तत्रास्य यथाकामचारो भवति यश्चित्तं ब्रह्मेत्यु-
पास्तेऽस्ति भगवश्चित्ताद्भूय इति चित्ताद्वावभूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥ ३ ॥

इति पञ्चमः खण्डः ॥ ५ ॥

ध्यानं वाव चित्ताद्भूयो ध्यायतीव पृथिवी ध्यायतीवान्तरिक्षं ध्यायतीव द्यौर्ध्यायन्तीवापो
ध्यायन्तीव पर्वता ध्यायन्तीव देवमनुष्यास्तस्माद्य इह मनुष्याणां महत्तां प्राप्नुवन्ति ध्यानापा-
दाꣳशा इवैव ते भवन्त्यथ येऽल्पाः कलहिनः पिशुना उपवादिनस्तेऽथ ये प्रभवो ध्यानापा-
दाꣳशा इवैव ते भवन्ति ध्यानमुपास्वेति ॥ १ ॥

स यो ध्यानं ब्रह्मेत्युपास्ते यावद्ध्यानस्य गतं तत्रास्य यथाकामचारो भवति यो ध्यानं
ब्रह्मेत्युपास्तेऽस्ति भगवो ध्यानाद्भूय इति ध्यानाद्वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति
॥ २ ॥ इति षष्ठः खण्डः ॥ ६ ॥

विज्ञानं वाव ध्यानाद्भूयो विज्ञानेन वा ऋग्वेदं विजानाति यजुर्वेदꣳ सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यꣳ राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्याꣳ सर्पदेवजनविद्यां दिवं च पृथिवीं च वायुं चाकाशं चापश्च तेजश्च देवाꣳश्च मनुष्याꣳश्च पशूꣳश्च वयाꣳसि च तृणवनस्पतीञ्छ्वापदान्याकीटपतङ्गपिपीलकं धर्मं चाधर्मं च सत्यं चानृतं च साधु चासाधु च हृदयज्ञं चाहृदयज्ञं चान्नं च रसं चेमं च लोकममुं च विज्ञानेनैव विजानाति विज्ञानमुपास्स्वेति ॥ १ ॥

स यो विज्ञानं ब्रह्मेत्युपास्ते विज्ञानवतो वै स लोकाञ्ज्ञानवतोऽभिसिध्यति यावद्विज्ञानस्य गतं तत्रास्य यथाकामचारो भवति यो विज्ञानं ब्रह्मेत्युपास्तेऽस्ति भगवो विज्ञानाद्भूय इति विज्ञानाद्वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥ २ ॥ इति सप्तमः खण्डः ॥ ७ ॥

बलं वाव विज्ञानाद्भूयोऽपि ह शतं विज्ञानवतामेको बलवानाकम्पयते स यदा बली भवत्यथोत्थाता भवत्युत्तिष्ठन्परिचरिता भवति परिचरन्नुपसत्ता भवत्युपसीदन्द्रष्टा भवति श्रोता भवति मन्ता भवति बोद्धा भवति कर्ता भवति विज्ञाता भवति बलेन वै पृथिवी तिष्ठति बलेनान्तरिक्षं बलेन द्यौर्बलेन पर्वता बलेन देवमनुष्या बलेन पशवश्च वयाꣳसि च तृणवनस्पतयः श्वापदान्याकीटपतङ्गपिपीलकं बलेन लोकस्तिष्ठति बलमुपास्स्वेति ॥ १ ॥

स यो बलं ब्रह्मेत्युपास्ते यावद्बलस्य गतं तत्रास्य यथाकामचारो भवति यो बलं ब्रह्मेत्युपास्तेऽस्ति भगवो बलाद्भूय इति बलाद्वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥ २ ॥ इत्यष्टमः खण्डः ॥ ८ ॥

अन्नं वाव बलाद्भूयस्तस्माद्यद्यपि दशरात्रीर्नाश्नीयाद्यद्यु ह जीवेदथवाऽद्रष्टाऽश्रोताऽमन्ताऽबोद्धाऽकर्ताऽविज्ञाता भवत्यथान्नस्यायै द्रष्टा भवति श्रोता भवति मन्ता भवति बोद्धा भवति कर्ता भवति विज्ञाता भवत्यन्नमुपास्स्वेति ॥ १ ॥

स योऽन्नं ब्रह्मेत्युपास्तेऽन्नवतो वै स लोकान्पानवतोऽभिसिध्यति यावदन्नस्य गतं तत्रास्य यथाकामचारो भवति योऽन्नं ब्रह्मेत्युपास्तेऽस्ति भगवोऽन्नाद्भूय इत्यन्नाद्वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥ २ ॥ इति नवमः खण्डः ॥ ९ ॥

आपो वावान्नाद्भूयस्तस्माद्यदा सुवृष्टिर्न भवति व्याधीयन्ते प्राणा अन्नं कनीयो भविष्यतीत्यथ यदा सुवृष्टिर्भवत्यानन्दिनः प्राणा भवन्त्यन्नं बहु भविष्यतीत्याप एवेमा मूर्ता येयं पृथिवी यदन्तरिक्षं यद् द्यौर्यत्पर्वता यद्देवमनुष्या यत्पशवश्च वयाꣳसि च तृणवनस्पतयः श्वापदान्याकीटपतङ्गपिपीलकमाप एवेमा मूर्ता अप उपास्स्वेति ॥ १ ॥

स योऽपो ब्रह्मेत्युपास्त आप्नोति सर्वान्कामाꣳस्तृप्तिमान्भवति यावदपां गतं तत्रास्य यथाकामचारो भवति योऽपो ब्रह्मेत्युपास्तेऽस्ति भगवोऽद्भ्यो भूय इत्यद्भ्यो वा भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥ २ ॥ इति दशमः खण्डः ॥ १० ॥

तेजो वावाद्भ्यो भूयस्तद्वा एतद्वायुमागृह्याकाशमभितपति तदाहुर्निशोचति नितपति वर्षिष्यति वा इति तेज एव तत्पूर्वं दर्शयित्वाऽथापः सृजते तदेतदूर्ध्वाभिश्च तिरश्चीभिश्च विद्युद्भिराह्लादाश्चरन्ति तस्मादाहुर्विद्योतते स्तनयति वर्षिष्यति वा इति तेज एव तत्पूर्वं दर्शयित्वाऽथापः सृजते तेज उपास्स्वेति ॥ १ ॥

स यस्तेजो ब्रह्मेत्युपास्ते तेजस्वी वै स तेजस्वतो लोकान्भास्वतोऽपहततमस्कानभिसिध्यति यावत्तेजसो गतं तत्रास्य यथाकामचारो भवति यस्तेजो ब्रह्मेत्युपास्तेऽस्ति भगवस्तेजसो भूय इति तेजसो वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥ २ ॥ इत्येकादशः खण्डः ॥ ११ ॥

आकाशो वाव तेजसो भूयानाकाशे वै सूर्याचन्द्रमसावुभौ विद्युन्नक्षत्राण्यग्निराकाशेनाह्वयत्याकाशेन शृणोत्याकाशेन प्रतिशृणोत्याकाशेन रमत आकाशेन न रमत आकाशे जायत आकाशमभिजायत आकाशमुपास्स्वेति ॥ १ ॥

स य आकाशं ब्रह्मेत्युपास्त आकाशवतो वै स लोकान्प्रकाशवतोऽसम्बाधानुरुगायवतोऽभिसिध्यति यावदाकाशस्य गतं तत्रास्य यथाकामचारो भवति य आकाशं ब्रह्मेत्युपास्तेऽस्ति भगव आकाशाद्भूय इत्याकाशाद्वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥ २ ॥ इति द्वादशः खण्डः ॥ १२ ॥

स्मरो वावाकाशाद्भूयस्तस्माद्यद्यपि बहव आसीरन्नस्मरन्तो नैव ते कञ्चन शृणुयुर्न मन्वीरन्न विजानीरन् यदा वाव ते स्मरेयुरथ शृणुयुरथ मन्वीरन्नथ विजानीरन् स्मरेण वै पुत्रान्विजानाति स्मरेण पशून् स्मरमुपास्स्वेति ॥ १ ॥

स यः स्मरं ब्रह्मेत्युपास्ते यावत्स्मरस्य गतं तत्रास्य यथाकामचारो भवति यः स्मरं ब्रह्मेत्युपास्तेऽस्ति भगवः स्मराद्भूय इति स्मराद्वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥ २ ॥ इति त्रयोदशः खण्डः ॥ १३ ॥

आशा वाव स्मराद्भूयस्याशेद्धो वै स्मरो मन्त्रानधीते कर्माणि कुरुते पुत्रांश्च पशूंश्चेच्छत इमं च लोकममुं चेच्छत आशामुपास्स्वेति ॥ १ ॥

स य आशां ब्रह्मेत्युपास्त आशयाऽस्य सर्वे कामाः समृध्यन्त्यमोघा हास्याशिषो भवन्ति यावदाशाया गतं तत्रास्य यथाकामचारो भवति य आशां ब्रह्मेत्युपास्तेऽस्ति भगव आशाया भूय इत्याशाया वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥ २ ॥ इति चतुर्दशः खण्डः ॥ १४ ॥

प्राणो वा आशाया भूयान्यथा वा अरा नाभौ समर्पिता एवमस्मिन् प्राणे सर्वं समर्पितं प्राणः प्राणेन याति प्राणः प्राणं ददाति प्राणाय ददाति प्राणो ह पिता प्राणो माता प्राणो भ्राता प्राणः स्वसा प्राण आचार्यः प्राणो ब्राह्मणः ॥ १ ॥

स यदि पितरं वा मातरं वा भ्रातरं वा स्वसारं वाऽऽचार्यं वा ब्राह्मणं वा किञ्चिद् भृशमिव प्रत्याह धिक्त्वाऽस्त्वित्येवैनमाहुः पितृहा वै त्वमसि मातृहा वै त्वमसि भ्रातृहा वै त्वमसि स्वसृहा वै त्वमस्याचार्यहा वै त्वमसि ब्राह्मणहा वै त्वमसीति ॥ २ ॥

अथ यद्यप्येनानुत्क्रान्तप्राणाञ् शूलेन समासं व्यतिषं दहेन्नैवैनं ब्रूयुः पितृहाऽसीति न मातृहाऽसीति न भ्रातृहाऽसीति न स्वसृहाऽसीति नाचार्यहाऽसीति न ब्राह्मणहाऽसीति ॥ ३ ॥

प्राणो ह्येवैतानि सर्वाणि भवति स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नतिवादी भवति तं चेद्ब्रूयुरतिवाद्यसीत्यतिवाद्यस्मीति ब्रूयान्नापह्नुवीत ॥ ४ ॥ इति पञ्चदशः खण्डः ॥ १५ ॥

एष तु वा अतिवदति यः सत्येनातिवदति सोऽहं भगवः सत्येनातिवदानीति सत्यं त्वेव विजिज्ञासितव्यमिति सत्यं भगवो विजिज्ञास इति ॥ १ ॥ इति षोडशः खण्डः ॥ १६ ॥

यदा वै विजानात्यथ सत्यं वदति नाविजानन् सत्यं वदति विजानन्नेव सत्यं वदति विज्ञानं त्वेव विजिज्ञासितव्यमिति विज्ञानं भगवो विजिज्ञास इति ॥ १ ॥ इति सप्तदशः खण्डः ॥ १७ ॥

यदा वै मनुतेऽथ विजानाति नामत्वा विजानाति मत्वैव विजानाति मतिस्त्वेव विजिज्ञासितव्येति मतिं भगवो विजिज्ञास इति ॥ १ ॥ इत्यष्टादशः खण्डः ॥ १८ ॥

यदा वै श्रद्दधात्यथ मनुते नाश्रद्दधन्मनुते श्रद्दधदेव मनुते श्रद्धा त्वेव विजिज्ञासितव्येति श्रद्धां भगवो विजिज्ञास इति ॥ १ ॥ इत्येकोनविंशः खण्डः ॥ १९ ॥

यदा वै निस्तिष्ठत्यथ श्रद्दधाति नानिस्तिष्ठञ्छ्रद्दधाति निस्तिष्ठन्नेव श्रद्दधाति निष्ठा त्वेव विजिज्ञासितव्येति निष्ठां भगवो विजिज्ञास इति ॥ १ ॥ इति विंशः खण्डः ॥ २० ॥

यदा वै करोत्यथ निस्तिष्ठति नाकृत्वा निस्तिष्ठति कृत्वैव निस्तिष्ठति कृतिस्त्वेव विजिज्ञासितव्येति कृतिं भगवो विजिज्ञास इति ॥ १ ॥ इत्येकविंशः खण्डः ॥ २१ ॥

यदा वै सुखं लभतेऽथ करोति नासुखं लब्ध्वा करोति सुखमेव लब्ध्वा करोति सुखं त्वेव विजिज्ञासितव्यमिति सुखं भगवो विजिज्ञास इति ॥ १ ॥ इति द्वाविंशः खण्डः ॥ २२ ॥

यो वै भूमा तत्सुखं नाल्पे सुखमस्ति भूमैव सुखं भूमा त्वेव विजिज्ञासितव्य इति भूमानं भगवो विजिज्ञास इति ॥ १ ॥ इति त्रयोविंशः खण्डः ॥ २३ ॥

यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमाऽथ यत्रान्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पं यो वै भूमा तदमृतमथ यदल्पं तन्मर्त्यꣳ स भगवः कस्मिन्प्रतिष्ठित इति स्वे महिम्नि यदि वा न महिम्नीति ॥ १ ॥

गोअश्वमिह महिमेत्याचक्षते हस्तिहिरण्यं दासभार्यं क्षेत्राण्यायतनानीति नाहमेवं ब्रवीमि ब्रवीमीति होवाचान्यो ह्यन्यस्मिन्प्रतिष्ठित इति ॥ २ ॥ इति चतुर्विंशः खण्डः ॥ २४ ॥

स एवाधस्तात्स उपरिष्टात्स पश्चात्स पुरस्तात्स दक्षिणतः स उत्तरतः स एवेदꣳ सर्वमित्यथातोऽहङ्कारादेश एवाहमेवाधस्तादहमुपरिष्टादहं पश्चादहं पुरस्तादहं दक्षिणतोऽहमुत्तरतोऽहमेवेदꣳ सर्वमिति ॥ १ ॥

अथात आत्मादेश एवात्मैवाधस्तादात्मोपरिष्टादात्मा पश्चादात्मा पुरस्तादात्मा दक्षिणत आत्मोत्तरत आत्मैवेदꣳ सर्वमिति स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नात्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दः स स्वराड् भवति तस्य सर्वेषु लोकेषु कामचारो भवति । अथ येऽन्यथाऽतो विदुरन्यराजानस्ते क्षय्यलोका भवन्ति तेषाꣳ सर्वेषु लोकेष्वकामचारो भवति ॥ २ ॥ इति पञ्चविंशः खण्डः ॥ २५ ॥

तस्य ह वा एतस्यैवं पश्यत एवं मन्वानस्यैवं विजानत आत्मतः प्राण आत्मत आशाऽऽत्मतः स्मर आत्मत आकाश आत्मतस्तेज आत्मत आप आत्मत आविर्भावतिरोभावावात्मतोऽन्नमात्मतो बलमात्मतो विज्ञानमात्मतो ध्यानमात्मतश्चित्तमात्मतः सङ्कल्प आत्मतो मन आत्मतो वागात्मतो नामात्मतो मन्त्रा आत्मतः कर्माण्यात्मत एवेदꣳ सर्वमिति ॥ १ ॥

तदेष श्लोको न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताꣳ सर्वꣳ ह पश्यः पश्यति सर्वमाप्नोति सर्वश इति स एकधा भवति त्रिधा भवति पञ्चधा सप्तधा नवधा चैव पुनश्चैकादश स्मृतः शतं च दश चैकश्च सहस्राणि च विꣳशतिराहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षस्तस्मै मृदितकषायाय तमसस्पारं दर्शयति भगवान् सनत्कुमारस्तꣳ स्कन्द इत्याचक्षते तꣳ स्कन्द इत्याचक्षते ॥ २ ॥ इति षड्विंशः खण्डः ॥ २६ ॥ इति सप्तमः प्रपाठकः ॥ ७ ॥

भूम्नो लक्षणमाह "यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा" (छां. ७।२३।१) इति।

तत्र संशयः। भूमा बाहुल्यमाहोस्विद्ब्रह्मेति। तत्र प्रपाठकारम्भे ततस्त ऊर्ध्वं वक्ष्यामिति प्रतिज्ञातत्वाद्वेदादीनां नामत्वमुक्त्वा ततो भूयस्त्वं वागादीनां प्राणपर्यन्तानामुक्त्वा मुख्यप्राणविद्याया अवरब्रह्मविद्यात्वख्यापनायार्द्धप्रपाठकं समाप्य ततोऽपि विज्ञानादीनामन्तरङ्गाणां सुखान्तानां भूयस्त्वमुक्त्वा सुखस्य फलत्वात्तस्यैव भूयस्त्वं वदति।

यद्यपि-"तरति शोकमात्मवित्" (छां. ७।१।३) इति नारदप्रश्नाद् भूम्नो ब्रह्मत्वं प्रकरणाद्वक्तुं शक्यते। तथाऽपि तस्यैवाथात आत्मादेश इत्यहङ्कारादेशवदात्मादेशोऽप्यस्ति। तेनाब्रह्मत्वेऽपि प्रश्नसिद्धिः। तस्य सुखबाहुल्यस्य स्वे महिम्नि प्रतिष्ठितत्वं सर्वतः पूर्णविषयलाभेऽपि भवति। सुषुप्तावपीति तयोरन्यतरद् ग्राह्यम्। तत्राप्यन्तरङ्गत्वात्सुषुप्तिरेवात्र भूमत्वेनोच्यते। न सुखबाहुल्यं सुषुप्तिरूपमेव भूमेत्येवं प्राप्ते, उच्यते—

भूमा भगवानेव। कुतः? सम्प्रसादादध्युपदेशात्। सम्प्रसादः सुषुप्तिः। तस्मादधि आधिक्येनोपदेशात्। यद्यपि नान्यत्पश्यतीत्यादि समानं, तथापि स एवाधस्तादित्यादिना तु ततोऽप्यधिकधर्मा उच्यन्ते। न हि सुषुप्तेः सर्वत्वादिधर्माः

---

तत्रेयमाख्यापिका सनत्कुमारनारदसम्वादरूपा। उपनिषदे सनत्कुमार इति छान्दसः प्रयोगः सनत्कुमारं प्रति नारदेन प्रश्नः कृतः वेदादिसर्वविद्याध्ययनं मया कृतं मन्त्रविदेवास्मि नात्मवित् तरति शोकमात्मविदिति शोकस्य पारं तारयतु भवान्, अनन्तरं सनत्कुमारेण ततस्त ऊर्ध्वं वक्ष्यामीति प्रतिज्ञां कृत्वा वेदादीनां भूमत्वमुक्त्वा तत्रैव ब्रह्मोपासनमुक्तम्। तदनन्तरं वाग्वाव नाम्नो भूयसीत्यादिना तदपेक्षया वाचः भूयस्त्वमुक्तं, वागपेक्षया मनसः, तदपेक्षया सङ्कल्पस्य, तदपेक्षया चित्तस्य, चित्तात् ध्यानस्य भूयस्त्वं, ध्यानात् विज्ञानस्य, विज्ञानात् बलस्य, तस्मात् अन्नस्य, तस्मात् जलस्य, तस्मात्तेजसः, तस्मादाकाशस्य, तस्मात् स्मरस्य, तस्मादाशायाः तस्याः, प्राणस्य भूयस्त्वमुक्तम्। नारदेन प्राणादधिकं किञ्चिन्नास्तीति ज्ञात्वा प्रश्नो न कृतः। पश्चात्सनत्कुमारेण प्रश्नमकृत्वैव सत्यस्य भूयस्त्वमुक्तम्। तस्मात् विज्ञानस्य, तस्मात् मत्याः, तस्याः श्रद्धायाः, निष्ठायाः, तस्याः कृतेः, तस्मात् सुखस्य, तस्मात् भूम्नः "यो वै भूमा तत्सुखमि"ति॥

अथ भाष्यम्॥ संशयबीजमाकारं चाहुः—तत्र प्रपाठकेति वदतीत्यन्तम्। वदतीति। "यो वै भूमा तत्सुखमि"त्यादिना भूमशब्दस्य सुखमुपास्तौ पर्यवसायत्वभूयस्त्वरूपबाहुल्यं वाक्यार्थ इति प्रतीयते। अथ वयः सत्येनातिवदतीत्यादिना सत्यस्यैव ब्रह्मत्वमुक्तं "सत्यं ज्ञानमनन्तं ब्रह्मे"ति श्रुत्या ब्रह्मापि वाक्यार्थ इति प्रतिभाति। अत एवं संशय इति भावः।

पूर्वपक्षमाहुः—यद्यपीति। तेनाऽब्रह्मत्वेऽपि प्रश्नसिद्धिरिति। उपसंहारे "अथात आत्मादेश एवात्मैवाधस्तादात्मोपरिष्टादि"त्यादिना जीवपरत्वे आत्मविषयकनारदप्रश्नसिद्धिरित्यर्थः। सुषुप्तिरूपमेव भूमेति। उपसंहारे "यो वै भूमा तत्सुखं नाऽल्पे सुखमस्ती"त्यादिना सुखबाहुल्यस्य वाक्यार्थत्वात् तस्य च सुषुप्तौ प्रतीयमानत्वात् सम्प्रसाद एव वाक्यार्थ इति पूर्वपक्षाशय इत्यर्थः॥

सिद्धान्तमाहुः—उच्यत इति। सम्प्रसाद इति। सम्यक् प्रसादः अस्मिन्निति योगवृत्त्या

यदा वै मनुतेऽथ विजानाति नामत्वा विजानाति मत्वैव विजानाति मतिस्त्वेव विजिज्ञासितव्येति मतिं भगवो विजिज्ञास इति ॥ १ ॥ इत्यष्टादशः खण्डः ॥ १८ ॥

यदा वै श्रद्दधात्यथ मनुते नाश्रद्दधन्मनुते श्रद्दधदेव मनुते श्रद्धा त्वेव विजिज्ञासितव्येति श्रद्धां भगवो विजिज्ञास इति ॥ १ ॥ इत्येकोनविंशः खण्डः ॥ १९ ॥

यदा वै निस्तिष्ठत्यथ श्रद्दधाति नानिस्तिष्ठञ्छ्रद्दधाति निस्तिष्ठन्नेव श्रद्दधाति निष्ठा त्वेव विजिज्ञासितव्येति निष्ठां भगवो विजिज्ञास इति ॥ १ ॥ इति विंशः खण्डः ॥ २० ॥

यदा वै करोत्यथ निस्तिष्ठति नाकृत्वा निस्तिष्ठति कृत्वैव निस्तिष्ठति कृतिस्त्वेव विजिज्ञासितव्येति कृतिं भगवो विजिज्ञास इति ॥ १ ॥ इत्येकविंशः खण्डः ॥ २१ ॥

यदा वै सुखं लभतेऽथ करोति नासुखं लब्ध्वा करोति सुखमेव लब्ध्वा करोति सुखं त्वेव विजिज्ञासितव्यमिति सुखं भगवो विजिज्ञास इति ॥ १ ॥ इति द्वाविंशः खण्डः ॥ २२ ॥

यो वै भूमा तत्सुखं नाल्पे सुखमस्ति भूमैव सुखं भूमा त्वेव विजिज्ञासितव्य इति भूमानं भगवो विजिज्ञास इति ॥ १ ॥ इति त्रयोविंशः खण्डः ॥ २३ ॥

यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमाऽथ यत्रान्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पं यो वै भूमा तदमृतमथ यदल्पं तन्मर्त्यꣳ स भगवः कस्मिन्प्रतिष्ठित इति स्वे महिम्नि यदि वा न महिम्नीति ॥ १ ॥

गोअश्वमिह महिमेत्याचक्षते हस्तिहिरण्यं दासभार्यं क्षेत्राण्यायतनानीति नाहमेवं ब्रवीमि ब्रवीमीति होवाचान्यो ह्यन्यस्मिन्प्रतिष्ठित इति ॥ २ ॥ इति चतुर्विंशः खण्डः ॥ २४ ॥

स एवाधस्तात्स उपरिष्टात्स पश्चात्स पुरस्तात्स दक्षिणतः स उत्तरतः स एवेदꣳ सर्वमित्यथातोऽहङ्कारादेश एवाहमेवाधस्तादहमुपरिष्टादहं पश्चादहं पुरस्तादहं दक्षिणतोऽहमुत्तरतोऽहमेवेदꣳ सर्वमिति ॥ १ ॥

अथात आत्मादेश एवात्मैवाधस्तादात्मोपरिष्टादात्मा पश्चादात्मा पुरस्तादात्मा दक्षिणत आत्मोत्तरत आत्मैवेदꣳ सर्वमिति स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नात्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दः स स्वराड् भवति तस्य सर्वेषु लोकेषु कामचारो भवति । अथ येऽन्यथाऽतो विदुरन्यराजानस्ते क्षय्यलोका भवन्ति तेषाꣳ सर्वेषु लोकेष्वकामचारो भवति ॥ २ ॥ इति पञ्चविंशः खण्डः ॥ २५ ॥

तस्य ह वा एतस्यैवं पश्यत एवं मन्वानस्यैवं विजानत आत्मतः प्राण आत्मत आशाऽऽत्मतः स्मर आत्मत आकाश आत्मतस्तेज आत्मत आप आत्मत आविर्भावतिरोभावावात्मतोऽन्नमात्मतो बलमात्मतो विज्ञानमात्मतो ध्यानमात्मतश्चित्तमात्मतः सङ्कल्प आत्मतो मन आत्मतो वागात्मतो नामात्मतो मन्त्रा आत्मतः कर्माण्यात्मत एवेदꣳ सर्वमिति ॥ १ ॥

तदेष श्लोको न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताꣳ सर्वꣳ ह पश्यः पश्यति सर्वमाप्नोति सर्वश इति स एकधा भवति त्रिधा भवति पञ्चधा सप्तधा नवधा चैव पुनश्चैकादश स्मृतः शतं च दश चैकश्च सहस्राणि च विꣳशतिराहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षस्तस्मै मृदितकषायाय तमसस्पारं दर्शयति भगवान् सनत्कुमारस्तꣳ स्कन्द इत्याचक्षते तꣳ स्कन्द इत्याचक्षते ॥ २ ॥ इति षड्विंशः खण्डः ॥ २६ ॥ इति सप्तमः प्रपाठकः ॥ ७ ॥

(२) रामानुजीये—इवमामनन्ति छन्दोगाः "यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति
स भूमा । अथ यत्रान्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पम्"इति । तत्रायं भूमशब्दो भाव-
प्रत्ययान्तो व्युत्पाद्यते । तथा हि—पृथ्वादिषु बहुशब्दः पठ्यते, ततः पृथ्वादिभ्य इमनिज्वा इती-
मनिच्प्रत्यये कृते बहोर्लोपो भूच बहोः इति प्रकृतिप्रत्यययोर्विकारे भूमेति भवति । भूमा बहुत्वमि-
त्यर्थः । अत्र चायं बहुशब्दो वैपुल्यवाची, न सङ्ख्यावाची । यत्रान्यत्पश्यति तदल्पमित्यल्पप्रतियो-
गित्वश्रवणात् । अल्पशब्दनिर्दिष्टधर्मिप्रतियोगिप्रतिपादनपरत्वादेव धर्मिपरश्च निश्चीयते न धर्म-
मात्रपरः । तदेवं भूमेति विपुल इत्यर्थः । वैपुल्यविशेष्यश्चेहात्मेत्यवगतः । "तरति शोकमात्मवित्"
इति प्रक्रम्य भूमविज्ञानमुपदिश्य "आत्मैवेदं सर्वम्"इति तस्यैवोपसंहारात् । अत्र संशय्यते किमयं
भूमगुणविशिष्टः प्रत्यगात्मोत परमात्मेति । किं युक्तम् ? प्रत्यगात्मेति । कुतः ? श्रुतं ह्येवमेव भग-
वद्दृशेभ्यः "तरति शोकमात्मवित्" इत्यात्मजिज्ञासयोपससेदुषे नारदाय नामादिप्राणपर्यन्तेषूपास्यतयो-
पदिष्टेषु "अस्ति भगवो नाम्नो भूयः", "अस्ति भगवो वाचो भूयः" इत्यादीनि च प्रतिवचनानि
प्राणात्प्राचीनेषु दृश्यन्ते । प्राणे तु न पश्यामः । अतः प्राणपर्यन्त एवायमात्मोपदेश इति प्रतीयते ।
तेनेह प्राणशब्दनिर्दिष्टः प्राणसहचारी प्रत्यगात्मैव न वायुविशेषमात्रम् । "प्राणो ह पिता प्राणो ह
माता" इत्यादयश्च प्राणस्य चेतनतामवगमयन्ति । "पितृहा" "मातृहा"इत्यादिना सप्राणेषु पितृ-
प्रभृतिषूपमर्दकारिणि हिंसकनिमित्तोपक्रोशवचनात् । तेष्वेव विगतप्राणेष्वत्यन्तोपमर्दकारिण्यप्युप-
क्रोशाभाववचनाच्च हिंसायोग्यश्चेतन एव प्राणशब्दनिर्दिष्टः । अप्राणेषु स्थावरेष्वपि चेतनेषूपमर्दभावा-
भावयोर्हिंसातदभावदर्शनादयं हिंसायोग्यतया निर्दिष्टः प्राणः प्रत्यगात्मैवेति निश्चीयते । अत एव
घारनाभिदृष्टान्ताद्युपन्यासेन प्राणशब्दनिर्दिष्टः पर इति न भ्रमितव्यम् । परस्य हिंसाप्रसङ्गाभावात् ।
जीवादितरस्य तद्भोग्यभोगोपकरणभूतस्य कृत्स्नस्याचिद्वस्तुनो जीवायत्तस्थितित्वेन प्रत्यगात्मन्येवा-
रनाभिदृष्टान्तोपपत्तेश्च । अयमेव च प्राणशब्दनिर्दिष्टो भूमा । "अस्ति भगवः प्राणाद्भूयः" इति प्रश्नस्य
"अदो वाव प्राणाद्भूयः"इति प्रतिवचनस्य चाभावाद्भूमसंशब्दनात्प्रक्प्राणप्रकरणस्याविच्छेदात् । किञ्च,
प्राणवेदिनोऽतिवादित्वमुक्त्वा "तमेवैष तु वा अति वदति" इति प्रत्यभिज्ञाप्य "यः सत्येनाति-
वदति" इति तस्य सत्यवदनं प्राणोपासनाङ्गतयोपदिश्योपादेयस्य सत्यवदनस्य शेषतया पूर्वनिर्दिष्ट-
प्राणयाथात्म्यविज्ञानं "यदा विजानात्यथ सत्यं वदति" इत्युपदिश्य तत्सिद्ध्यर्थं च मननश्रद्धानिष्ठा-
प्रयत्नानुपदिश्य तदारम्भाय च प्राप्यभूतप्राणशब्दनिर्दिष्टप्रत्यगात्मस्वरूपस्य सुखरूपताज्ञानमुपदिश्य
तस्य च सुखस्य विपुलता "भूमा त्वेव विजिज्ञासितव्यः" इत्युपदिश्यते । तदेवं प्रत्यगात्मन एवा-
विद्यावियुक्तं रूपं विपुलसुखमित्युपदिष्टमिति "तरति शोकमात्मवित्"इत्युपक्रमाविरोधश्च । अतो
भूमगुणविशिष्टः प्रत्यगात्मा । यत एवं भूमगुणविशिष्टः प्रत्यगात्माऽत एवाहमर्थे प्रत्यगात्म"न्यह-
मेवाधस्तादहमुपरिष्टात्" इत्यारभ्य "अहमेवेदं सर्वम्" इति प्रत्यगात्मनो वैभवमुपदिशति । एवं
प्रत्यगात्मत्वे निश्चिते सति तदनुगुणतया वाक्यशेषो नेतव्य इति । एवं प्राप्तेऽभिधीयते—भूमा
सम्प्रसादादध्युपदेशात् । भूमगुणविशिष्टो न प्रत्यागात्मा । अपि तु परमात्मा । कुतः ? सम्प्रसादा-
दध्युपदेशात् । सम्प्रसादः प्रत्यगात्मा । "एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य
स्वेन रूपेणाभिनिष्पद्यते" इत्युपनिषत्प्रसिद्धेः । संम्प्रदात्प्रत्यगात्मनोऽधिकगुणतया भूमगुणविशिष्टस्य
सत्यशब्दाभिधेयस्योपदेशादित्यर्थः । सत्यशब्दाभिधेयं च परं ब्रह्म । एतदुक्तं भवति, यथा नामादिषु
प्राणपर्यन्तेषु पूर्वपूर्वाधिकतयोत्तरोत्तराभिधानात्पूर्वेभ्य उत्तरेषामर्थान्तरत्वमेवं प्राणशब्दनिर्दिष्टात्प्रत्यगा-

त्मनोऽधिकतया भूमगुणविशिष्टो निर्दिष्टः सत्यशब्दाभिधेयस्तस्मादर्थान्तरभूत एव । अतः सत्यशब्द-निर्दिष्ट एव भूमेति सत्याख्यं परं ब्रह्मैव भूमेत्युपदिश्यत इति । × ×× । अतः प्राणशब्दनिर्दिष्टा-त्प्रत्यगात्मनोऽर्थान्तरभूतस्य सत्यशब्दाभिधेयस्य ब्रह्मणो भूमेत्युपदेशाद्भूमा परं ब्रह्म ॥ अस्य भूम्नो ये धर्मा आम्नायन्ते तेऽपि परस्मिन्नेवोपपद्यन्ते । "एतदमृतम्" इति स्वाभाविकममृतत्वं "स्वे महिम्नि" इत्यन्याधारत्वं "स एवाधस्तात्" इत्यादि, "स एवेदं सर्वम्" इति सर्वात्मत्व"मात्मतः प्राणः" इत्यादि प्राणप्रभृतेः सर्वस्योत्पादकत्वमित्यादयो हि धर्मा परमात्मन एव ॥

(३) माध्वे—"प्राणो वा आशाया भूयानि"त्युक्त्वा "यो वै भूमा तत् सुखमि"त्युक्तेस्तस्यैव भूमत्वप्राप्तिः उत्क्रान्त प्राणानित्यादिलिङ्गात् प्राणशब्दो वायुवाची अतो वक्ति । सम्प्रसादात् पूर्ण-सुखरूपत्वात् अध्युपदेशात् सर्वेषाम् उपर्युपदेशाच्च विष्णुरेव भूमा "सहस्रशीर्षं देवं विश्वाक्षं विश्व-सम्भवम् । विश्वं नारायणं देवमक्षरं परमं पदम् । विश्वतः परमं नित्यमि"ति श्रुतिः । "तमुत्क्रामन्तं प्राणान्युत्क्रामती"त्यादिना उत्क्रमणादिलिङ्गविरोधोऽपि ॥ सर्वगतत्वादिधर्म्मोपपत्तेश्च ॥

। (४) निम्बार्कः—"परमाचार्यैः श्रीकुमारैरस्मद्गुरवे श्रीमन्नारदायोपदिष्टो, "भूमात्वेव विजिज्ञासि-तव्य" इत्यत्र भूमा प्राणो न भवति । किन्तु, श्रीपुरुषोत्तमः । कुतः ? प्राणादुपरि भूम्न उपदेशात् ॥ निरतिशयसुखरूपत्वामृतत्वस्वमहिमप्रतिष्ठितत्वादीनां परमात्मन्येवोपपत्तेश्च भूमा परमात्मैव ॥

(५) भैक्षवे—छान्दोग्यसप्तमे प्रपाठके "एष तु वा अतिवदति यः सत्येनातिवदतीति" सत्ये मन्त्रातिवदनं प्रस्तूय तत्कारणपरं परा विज्ञानादिसुखान्ता तत्त्वतो ज्ञेयेत्युक्तम् । तत्र सुखतत्त्वनिरूपणे श्रूयते "सुखं भगवो विजिज्ञासस्व" इति "यो वै भूमा तत्सुखं नाल्पे सुखमस्ति भूमैव सुखं भूमात्वेव विजिज्ञासितव्य" इति "भूमानं भगवो विजिज्ञासस्व" इति "यत्र नान्यत्पश्यति नान्यच्छृणोति नान्य-द्विजानाति स भूमा" अथ "यत्रान्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पं यो वै भूमा तदमृतं अथ यदल्पं तन्मर्त्यं स भगवः कस्मिन् प्रतिष्ठित इति स्वे महिम्नि यदि वा न महीम्नीत्यादि तस्मै मृदित-कषायाय तमसः पारं दर्शयति भगवन् सनत्कुमार" इत्यन्तम् । अत्र यो वै भूमा तत्सुखमिति कार्य्य-कारणाभेदादुक्तं नाल्पे सुखमस्तीत्युत्तरवाक्ये भेदावगमात्, यथा चाल्पप्राप्त्या सुखं न भवति किंतु भूम्नः प्राप्त्यैव सुखं भवति "एष ह्येवानन्दयातीति" श्रुतेः, अतो भूमैव जिज्ञास्य इत्यर्थः । सुखं चेदं जीव-न्मुक्तस्य सन्तोषाख्यधीवृत्तिविशेष एव, दुःखाभावो वा, यदा वै सुखं लभते अथ करोतीति पूर्व-वाक्यात् तत्र च लाभः फलत्वेन निश्चयः तस्यैवोपायकृतिकारणत्वादिति, तथा च भूमप्राप्तिजमेव प्रकृष्टं सुखं अल्पप्राप्तेः क्षयित्वसातिशयत्वादिना दुःखहेतुत्वादिति युक्तम् । भूम्नो लक्षणमाह यत्रे-त्यादिना । यत्रेति विषयसप्तम्याः पञ्चम्यर्थे पर्य्यवसानाद्यतोऽन्यत्र पश्यति स भूमेत्यर्थः । स एवाध-स्तादित्यादिना स एवेदं सर्वमित्यन्तेनोत्तरवाक्येन भूमप्रतिपादनादिति । अत्रायं संशयः, किमयं भूमा जीवः, परमेश्वरो वा बहोर्लोपो"भू च बहोरिति" सूत्रेण व्युत्पादितस्य भावकृते मनिच्प्रत्य-यान्ततया बहुत्वार्थकस्य भूमशब्दस्य च भाववाचकस्य धर्मधर्म्यभेदेन जीवब्रह्मणोः प्रयोगोऽपि समानः । अथ वा सुखरूपतावचनात् सत्त्वप्रधाना प्रकृतिरेवास्तु भूमशब्दार्थः । सुषुप्त्यादौ हि प्रकृतौ लीनो जन्तुर्नान्यत्पश्यतीति । अथ वा अलौकिकः सुखविशेष एव भूमा । यथाश्रुतशब्दाऽनुरोधादिति । तत्रादौ सुखप्रधानपरत्वं निरस्यन् ब्रह्मपरत्वमवधारयति, भूमात्र ब्रह्मैव, न सुखं, नापि प्रधानम् । कुतः ? सम्प्रसा-दादध्युपदेशात् । सम्प्रसादात्सत्त्ववृत्तिरूपात्सुखादधिकस्यात्मनश्चेतनस्योपदेशादुत्तरवाक्येन आत्मैवाध-स्तादित्यादिना न हि केवलसुखस्यात्मत्वमुपपद्यत इत्यर्थः । एतेन प्रधानमपि निरस्तम् । तमसः पार-

मितिवाक्यशेषे भूम्नि तमआख्यप्रकृतेः पारत्वोपदेशाच्चेति । तस्मात् सुखश्रवणेऽपि न सुखं नापि प्रधानं
ग्राह्यमिति भावः । इदानीं जीवपरत्वमपाकरोति । "स भगवः कस्मिन्प्रतिष्ठित इति "स्वे महिम्नि यदि
वा न महीम्नी"त्यादिनोक्ताः स्वप्रतिष्ठितत्वादयोऽपि धर्माः ब्रह्मण्येवाञ्जस्येनोपपद्यन्ते न जीवादौ "सति
सम्पद्य न विदुः सति सम्पद्यामह" इत्यादिश्रुत्यन्तरेषु । (प्रधानं पुरुषश्चैव सर्वभूतात्मभूतया ।
विष्णुशक्त्या महाबुद्धे वृत्तौ संश्रयधर्मिणौ । इत्यादिस्मृत्यैकवाक्यतया) जीवादीनां परप्रतिष्ठितत्वाव-
गमात्, अतो धर्मोपपत्तेरपि ब्रह्मैव भूमेत्यर्थः । अन्ये तु अनेनाधिकरणेन प्राणस्यैव भूमत्वं निरस्यते
सम्प्रसादात्पूर्ववाक्योक्तात् प्राणादधिकस्योपदेशादित्यर्थ इत्याहुः । तन्न । प्राणस्य सुखरूपताया एवा-
सम्भवेन संशयासम्भवात्, अस्मिन्प्रकरणे प्राणाधिक्योपदेशाभावाच्च । सम्प्रसादशब्दो हि श्रुतौ जीवे
सुषुप्त्याख्यतदवस्थायां च दृश्यते य एष सम्प्रसादोऽस्माच्छरीरात्समुत्थायेत्यत्र स वा एष एतस्मिन्स-
म्प्रसाद इत्यत्र च तत्र जीवे सम्प्रसादस्यौपाधिकतया धर्मधर्म्यभेदेनौपचारिकः प्रयोगः सुषुप्तावस्थायां
च प्रतिक्षणं सत्त्ववृद्ध्या सम्प्रसीदति चित्तमस्यामिति व्युत्पत्त्या सम्प्रसादशब्दप्रयोगः प्रसादप्राप्त्योः
पर्यायतया च सुख एव सम्प्रसादशब्दो मुख्यः सत्त्वे तु प्रसादरूपिणि सकलस्मृतिषु प्रसिद्ध एव
सम्प्रसादशब्द इति । प्राणे च सम्प्रसादशब्दो न क्वापि प्रयुज्यमानो दृश्यत इत्यनुचितं सम्प्रसादश-
ब्दस्य प्राणार्थत्वोपवर्णनम् ॥

(६) भास्करीये—इदमाम्नायते । भूमात्वेवं विजिज्ञासितव्य इति भूमानं भगवो विजिज्ञास इति
यत्र नान्यत् पश्यति नान्यत् शृणोति नान्यद्विजानाति स भूमा अथ यत्रान्यत् पश्यत्यन्यच्छृणोति
अन्य द्विजानाति तदल्पमिति । तत्र संशयः किं प्राणो भूमा किं वा पर इति । किं तावद्युक्तम् ।
भूमेति बहुत्वं वैपुल्यमुच्यते । तत्कस्येत्यपेक्षायां प्राणो वा आशाया भूयानिति प्रकरणात् प्राणो भूमेति
गम्यते । किं च पुनः प्रश्नप्रतिवचनाभावात् । यथा अस्ति भगवो नाम्नो भूय इति वाग्वाव नाम्नो
भूयसीति न तथाऽस्ति भगवः प्राणाद् भूय इति । अतिवादित्वं प्राणोपासकस्य मतमुक्त्वा सत्यादि-
परम्परया भूम्नोऽवताराद् प्राणस्यैवायं गुणो न परस्येति निश्चीयते । कथं पुनः प्राणपरिग्रहे यत्र
नान्यत् पश्यतीत्येतद्वचनम् । नायं विरोधः । सुषुप्तावस्थायां प्राणग्रस्तेषु करणेषु दर्शनादिव्यवहार-
निवृत्तेः । यो वै भूमा तत् सुखमित्यप्यविरुद्धम् । अत्रैष देवः स्वप्नान्न पश्यत्यथ यदेतस्मिन् शरीरे
सुखमनुभवतीति । ननु च तरति शोकमात्मविदित्यात्मज्ञानविवक्षया प्रकरणोत्थानं प्राणपरिग्रहे नाव-
कल्पते । तथात्मतः प्राण आत्मत आशेत्युपसंहारः । एवं मन्यते पूर्वपक्षवादी भूमपर्यन्ता प्राणविद्यैव ।
अतः परमात्मविद्या भविष्यतीत्येवं प्राप्तेऽभिधीयते परमात्मैव भूमा । कुतः ? सम्प्रसादादध्युपदेशात् ।
सम्प्रसीदत्यस्मिन् जीव इति सुषुप्तस्थानमुच्यते तेन च प्राणो लक्ष्यते । तत्र च प्राणो जागर्तीति
प्राणादुपरिष्टादुपदिश्यमानत्वाद् भूम्न इत्यर्थः । नन्वसिद्धो हेतुः । अत्रोच्यते नासिद्धः । कथम् ?
एष तु वा अतिवदति यः सत्येनातिवदतीति न प्राणवाद्यतिवादीत्यवच्छेदाय तु शब्दः, यः सत्यरूपं
ब्रह्मविषयं वदनं करोति सोऽतीत्य प्राणपर्यन्तं प्रपञ्चं वदतीति मुख्यं तस्यातिवादित्वमिति । सत्यं
ज्ञानमनन्तमिति सत्यशब्दः परमात्माभिधायी सोऽहं भगवः सत्येनातिवदानीति च प्राणातिवादित्वप-
रित्यागेन सत्यवदनानुष्ठानं प्राणप्रकरणविच्छेदं विज्ञापयत्यतो विज्ञानादिसाधनपरम्परया तस्यैव सत्यस्य
भूम्न उपदेश इति निश्चितुमः । अथात्मतः प्राण आत्मतः आशेति प्राणस्याप्युत्पत्तिमात्मनो दर्शयति
तरति शोकमात्मविदिति तस्मै मृदितकषायाय तमसः पारं दर्शयति भगवान् सनत्कुमार इत्यत्युपक्रमो-
पसंहारयोरेकविषयत्वात् स एवात्र प्रकरणी । सर्वमन्यत् प्राणपर्यन्तं प्रासङ्गिकमात्मज्ञानात्त्वन्यत्रामृतत्वं

नोपपद्यते ॥ यत्र नान्यत् पश्यति यत्र भूम्नि सुखे वर्तमानोऽन्यद् दुःखं न पश्यतीत्यर्थः । अन्यशब्दः प्रकृतात् सुखादन्यत् प्रतियोगि दुःखमाह न पुनर्वस्त्वन्तराभावोऽत्र विवक्षितः । न च निःसम्बोधो मोक्षो भूमसुखस्य मुक्तं प्रति श्रुत्यैव दर्शितत्वात् । अमृतत्वं च परस्मिन्नेवावकल्पते । तथा चाह न पश्यो मृत्युं पश्यति नोतरोगं नोतदुःखितां सर्वं हि पश्यः पश्यति सर्वमाप्नोति सर्वश इति तस्माद्भूमा परमात्मेति सिद्धम् ॥

(७) श्रीमद्वल्लभाचार्यमतेऽयमभिप्रायः—छान्दोग्ये नवमप्रपाठके सनत्कुमारनारदसम्वादे श्रूयते । "यो वै भूमा तत् सुखं, नाल्पे सुखमस्ति, भूमैव सुखं, भूमा त्वेव विजिज्ञासितव्य" इति सुखलक्षणत्वेन भूमानं जिज्ञास्यतयोपक्षिप्य, को भूमेति जिज्ञासायां भूम्नो लक्षणमाह । "यत्र नान्यत् पश्यति, नान्यद्विजानाति स भूमे"ति । तत्र संशयः । भूमा किं सुखबाहुल्यमुत ब्रह्मेति । उपक्रमे वेदादीनां नामत्वमुक्त्वा, ततस्ततो भूयस्त्वं वागादीनां प्राणान्तानामुक्त्वा, ततोऽपि भूयस्त्वं विज्ञानादीनामन्तरङ्गाणामुक्त्वा, सुखस्य फलत्वादन्ते तस्यैव भूयस्त्वं वदतीति । तथोपक्रमे, "तरति शोकमात्मवि"दिति प्रश्नबीजमुपन्यस्य मध्ये च मुख्यप्राणविद्याया अवरत्वं बोधयति । विज्ञानादीनां पञ्चात्कथनेन । तदेतद् यथार्थं कोटिद्वयोपस्थितिबीजम् ।

तत्र पूर्वः पक्षस्तु यद्यप्युपक्रमे, तरति शोकमात्मविदिति नारदप्रश्नेन ग्रन्थावतारादुपसंहारे भूम्नो अमृतत्वेन विशेषणाच्च भूम्नो ब्रह्मत्वं प्रकरणाद् वक्तुं शक्यम्, तथाप्युपान्ते भूमानमेव प्रकृत्य अहङ्कारादेशात्मादेशावुक्तौ । तत्राहङ्कारादेशो सर्वत्र विद्यमानत्वेन सर्वत्वेन च भूयस्तयोक्तस्याप्यहङ्कारस्य तद्विशिष्टस्यात्मनो वा यथा न ब्रह्मत्वम्, तथा आत्मादेशेऽपि तथोक्तस्य केवलस्याप्यात्मनो न ब्रह्मत्वम् । आत्मा चात्र सुखस्य स्वरूपम् । पूर्वाधिकरणे आत्मपदस्यानारोपितानागन्तुकस्वरूपपरताया पक्षोपगमात् । न च प्रश्नापूर्तिः शङ्क्या । विविक्तजीवात्मज्ञानस्येव तादृशसुखस्वरूपज्ञानस्याप्यात्मज्ञानत्वेन तावतैवात्मवित्त्वे शोकतरणसिद्ध्या प्रश्नपूर्तेः सम्भवात् । ब्रह्मण परमात्मत्वादिना ज्ञानस्यं विवक्षितत्वे गमकाभावात् । न च भूम्नः स्वप्रतिष्ठत्वश्रावणात् तस्य च ब्रह्मासाधारणत्वाद् ब्रह्मत्वं शङ्क्यम् । आत्मैवाधस्तादित्यादिना तस्य सर्वत्र व्याप्तेरुक्तत्वात् सर्वतः पूर्णविषयलाभेऽनाकाङ्क्षायां तस्य पूर्णत्वानुसन्धाने स्वमहिमप्रतिष्ठतायाः सम्भवात् । यदि च तस्य लाभस्य प्रयाससाध्यतया सुखबाहुल्यं तत्राङ्गीक्रियते, तदा सुषुप्तिरस्तु । तत्रापि, "न कञ्चन कामं कामयत" इत्यादि, "तद्यथा प्रियया स्त्रिया सम्परिष्वक्त" इत्यादिश्रावणाद् अन्यापेक्षत्वेनान्तरङ्गत्वाच्च । अत. सैवात्र भूमत्वेन ग्राह्येति प्राप्तम् ।

तत्रोच्यते । भूमेत्यादि । भूमा भगवानेव । कुतः ? सम्प्रसादादध्युपदेशात् । बृहदारण्यके, "स वा एष एतस्मिन् सम्प्रसादे रत्वा चरित्वे"ति श्रवणात् सम्यक् प्रसादोऽस्मिन्निति व्युत्पत्त्या सम्प्रसादः सुषुप्तिः । तत्र यद्यपि, "यद्वैतत् प्रपश्यती"त्यादिना योऽन्यदर्शनाभाव उच्यते, सोऽत्र "यत्र नान्यद् पश्यती"त्यादिनोच्यते, इति लक्षणं समानम्, तथापि "स एवाधस्ता"दित्यादिना या सर्वत्र व्याप्तिः सर्वत्वं च यदुच्यते, तत्ततोऽधिकम् । न हि सुषुप्तेः सर्वत्वादिधर्माः सम्भवन्ति । आत्मशब्दश्च मुख्यवृत्तो भवति । अतस्तदुपदेशादित्यर्थ. । न च, बहोर्लोपो भू च बहोरिति सूत्र भावार्थप्रत्ययाधिकारे पठितम् । तत्र व्युत्पादितो भूमशब्दो नानात्वं बाहुल्य वा वदिष्यतीति कथं तस्य ब्रह्मवाचकत्वमिति शङ्क्यम् । भगवतः सर्वत्वस्यात्र श्रावणात् । सर्वमध्ये भावस्यापि प्रवेशात्तस्यापि भगवति वृत्ते सुखेन सम्भवादिति । तस्माद् भूमा भगवानेव ॥

ननु भवतु सम्प्रसादाद् भूम्न आधिक्योपदेशः, तथापि भूमजिज्ञासया प्रश्ने तल्लक्षणत्वेन, यत्र नान्यत् पश्यतीत्यादिवाक्यमुच्यते। तत्र योऽन्यदर्शनादिनिषेधः, स तु सुषुप्तिसाधारण इति भूमपर्यन्ता अन्यविद्या भवतु। ततो भूमाधारमारभ्यात्मविद्येति शङ्कायामिदमुच्यते। धर्मोपपत्तेरिति। यत्र नान्यत् पश्यतीत्याद्युक्ता येऽन्यदर्शनाभावप्रयोजकत्वादयो धर्मास्तेषां भगवत्युपपत्तेः। कथमिति चेत्? इत्थम्। फलाध्यायोपान्तभागे "स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं ही"ति सूत्रे मैत्रेयीब्राह्मणोक्तमद्वैतदर्शनं प्रकारवैशिष्ट्येन उभयत्राम्नानात् सुषुप्तिब्रह्मसम्पत्तिरूपावस्थाद्वयेऽपि जीवस्य ब्रह्मसम्बन्धादेवेति निर्णीतम्। तेन सुषुप्तावन्यदर्शनाभावस्य ब्रह्मसम्बन्धप्रयुक्ततया तदीयत्वनिश्चयात् तस्मिन् सति लक्षणे अतिव्याप्तिनिरासाद् भूमविद्याऽप्यात्मविद्यैवेत्यर्थः। चकारात्, "स वा एष एवं मन्वान" इत्यादिनोक्तमात्मक्रीडत्वादिरूपं फलमपि ब्रह्मसम्बन्धादेव सम्भवति, न सुषुप्तिसम्बन्धात्। तस्यां तमोऽभिभवेन क्रीडाद्यभावादिति। तस्माद् भूमा ब्रह्मैवेति सिद्धम्॥ ९॥ २॥



## ३ अक्षराधिकरणम् ।

( अक्षरपदवाच्यं ब्रह्मैवेति सूत्रावतरणम् )

**अक्षरमम्बरान्तधृतेः ॥ १।३।१० ॥**

**गार्गीब्राह्मणे "कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चेति । स होवाच । "एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनणु" ( बृ. ३।८।७।८ ) इत्यादि श्रूयते ।**

( तत्र संशयः, अम्बरान्तधृतेर्हेतोः सिद्धान्तसमर्थनं च )

**तत्र संशयः । किमक्षरशब्देन पदार्थान्तरं ब्रह्म वेति । तत्राचेतनसाधारण्याद् बाणतुल्यत्वादाकाशवदस्याप्यब्रह्मत्वमेव । द्युभ्वाद्यायतनविरोधस्तु तुल्यः । अत**

---

अक्षराधिकरणमारचयन्ति—**अक्षरमम्बरान्तधृतेः** । बृहदारण्ये तृतीयाध्याये गार्गिब्राह्मणे विषयवाक्यमुदाहरन्ति ॥ **अथ विषयवाक्यम्** ॥

**अथ हैनं गार्गी वाचक्नवी पप्रच्छ याज्ञवल्क्येति होवाच यदिदꣳ सर्वमप्स्वोतं च प्रोतं च कस्मिन्नु खल्वाप ओताश्च प्रोताश्चेति वायौ गार्गीति कस्मिन्नु खलु वायुरोतश्च प्रोतश्चेत्यन्तरिक्षलोकेषु गार्गीति कस्मिन्नु खल्वन्तरिक्षलोका ओताश्च प्रोताश्चेति गन्धर्वलोकेषु गार्गीति कस्मिन्नु खलु गन्धर्वलोका ओताश्च प्रोताश्चेत्यादित्यलोकेषु गार्गीति कस्मिन्नु खल्वादित्यलोका ओताश्च प्रोताश्चेति चन्द्रलोकेषु गार्गीति कस्मिन्नु खलु चन्द्रलोका ओताश्च प्रोताश्चेति नक्षत्रलोकेषु गार्गीति कस्मिन्नु खलु नक्षत्रलोका ओताश्च प्रोताश्चेति देवलोकेषु गार्गीति कस्मिन्नु खलु देवलोका ओताश्च प्रोताश्चेतीन्द्रलोकेषु गार्गीति कस्मिन्नु खल्विन्द्रलोका ओताश्च प्रोताश्चेति प्रजापतिलोकेषु गार्गीति कस्मिन्नु खलु प्रजापतिलोका ओताश्च प्रोताश्चेति ब्रह्मलोकेषु गार्गीति कस्मिन्नु खलु ब्रह्मलोका ओताश्च प्रोताश्चेति स होवाच गार्गि माति प्राक्षीर्मा ते मूर्धा व्यपतदनतिप्रश्न्यां वै देवतामतिपृच्छसि गार्गि मातिप्राक्षीरिति ततो ह गार्गी वाचक्नव्युपरराम ॥ १ ॥ इति षष्ठं ब्राह्मणम् ॥ ६ ॥**

**अथ भाष्यम्** ॥ **कस्मिन्नु खल्विति । पदार्थान्तरमिति** । जडजीवरूपपदार्थान्तरमित्यर्थः । क्वचित् ओतत्व प्रोतत्व विकारित्वापादकतया जडलिङ्गम् । अमृताक्षरमिति श्रुत्या क्वचित् अक्षरपदस्य जीवे प्रसिद्धिर्दृश्यते क्वचिदक्षरपदस्य प्रशासनकर्तरि ब्रह्मणि प्रसिद्धिः । एव त्रिष्वपि लिङ्गस्य सद्भावात् सशय इति भाव. ।

पूर्वपक्षमाहुः । **तत्रेति** । **अचेतनसाधारण्यादिति** । ओतप्रोततया विकारित्वेनाचेतनसाधारण्यादित्यर्थ· । **तुल्य इति** । "मयि सर्वमिद प्रोत सूत्रे मणिगणा इवे"ति स्मार्तदृष्टान्ताद्भारवाहत्वमेव

---

१ वर्णतुल्यत्वादिति प्रदीपबालबोधिन्यो पाठस्त्वपपाठ । अह त्वा याज्ञवल्क्य यथा काश्यो वा वैदेहो वोग्रपुत्र उज्ज्य धनुरधिज्य कृत्वा द्वौ बाणवन्तौ सपत्नातिव्याधिनौ हस्ते कृत्वोपोत्तिष्ठेदेवमेवाह त्वा द्वाभ्या प्रश्नाभ्यामुपोदस्थाम्" इति श्रुत्या द्वयो प्रश्नयो क्लेशजनकतया प्रथमप्रश्नोत्तरभूताकाशवदस्य द्वितीयप्रश्नोत्तरभूतस्याक्षरस्याप्यब्रह्मत्वमेव । श्रुत्यर्थस्तु–अह गार्गी त्वा त्वा याज्ञवल्क्य काशिषु भव काश्य शूरत्वेन प्रसिद्ध विदेहो विदेहाना राजा । उग्रपुत्र इति षष्ठीतत्पुरुष । उज्ज्यमवतारितज्याक धनुरधिज्यमारोपितज्याक कृत्वा द्वौ द्वौबाणवन्तौ बाण शराग्रे सन्धीयमानो वशखण्ड तद्वन्तौ शरौ, यद्वा बाणावन्तौ बाणौ मनोहरौ तौ च सपत्नातिव्याधिनौ शत्रुभेदिनौ उपोत्तिष्ठेत् शत्रुसमीपे तिष्ठेत् तद्वदह गार्गी त्वा याज्ञवल्क्य उपोदस्था मत्समीपे स्थितवत्यस्मीति इदमित्थतयाऽविषये, आभिर्भवतीति क्लेश । एव बाणशब्दस्यैवात्रसम्बधात्र वर्णतुल्यत्वादिति पाठ साधीयान् । प्रदीपे तद्व्याख्यानाच्च । प्रदीपमनुसरत पाठकस्यापि सम्पूर्णविषयवाक्याभानाच्च प्रमाद एवेति । शाङ्करमते अक्षरशब्देन सन्देहोद्भावने वर्णग्रहणाच्च । २ ब्रह्मजीवजडग्रहणेषु ।

---

1 बाणावन्तावित्यपि पाठ ।

एवागतार्थता अदृश्यत्वाधिकरणेन। न हि तत्र विरुद्धधर्मा आशङ्क्य निराक्रियन्ते। अतोऽचेतनतुल्यत्वाद् ब्रह्मवादस्यासमाप्तत्वादाग्रहाविष्टत्वात्प्रष्टुः स्त्रीत्वाच–"स-रो वाव आकाशाद्भूयान्" (छां ७।१३।१) इतिवत्कथञ्चिदुपपत्त्या स्मरणकाल-भूतसूक्ष्मप्रकृतिजीवविशेषाणामन्यतरपरिग्रह इति वक्तव्यमुपासनार्थम्। अत्र हि प्रापञ्चिकसर्वधर्मराहित्यं ब्रह्मधर्मत्वं च प्रतीयते। तदुपासनार्थत्व उपपद्येत। ब्रह्मत्वपरिग्रहे तु वैयर्थ्यमेव उपदेष्टृत्वाभावात्। तस्मादक्षरमन्यदेव ब्रह्मधर्म-त्वेनोपास्यमित्येवं प्राप्ते,

उच्यते अक्षरं परमात्मैव। कुतः? अम्बरान्तधृतेः। श्रुतिं व्याख्याय सिद्धं हेतुमाह। अत्रैक एव प्रश्न उत्तरं चैकम्। आकाशस्यावान्तरत्वमेव। तेनाम्बरा-

---

गमयिष्यतीति द्युभ्वाद्यायतने यो भारवाहकत्वविरोधः, स इहापि समान इत्यर्थः। अत एव अमहापर-त्वादेव। ननु विषयभेदाभावात् कथमगतार्थत्वमित्यत आह—न हीति। अत्र तु निराक्रियन्ते इति-विषयभेदसद्भाव इति भावः। अत इति। विषयभेदादित्यर्थः। अचेतनतुल्यत्वादित्यस्य अन्य-तरपरिग्रह इत्यनेनान्वयः। ब्रह्मवादस्येति। अरुणिसम्वादे अन्तर्यामिनिरूपणेनैव समाप्तत्वादिति भावः। आग्रहाविष्टत्वं स्त्रीत्वं च ब्रह्मविद्याश्रवणेऽनधिकारित्वादाह—स्त्रीत्वाचेति। स्मरो वा वेति। छान्दोग्ये सप्तमप्रपाठके सनत्कुमारनारदसम्वाद इत्यर्थः। कथञ्चिदिति। अश्रुते, न क्षरतीति वा योगेने-त्यर्थः। स्मरणेति। स्मरणादिप्रकृत्यन्तानामचेतनानां जीवविशेषाणां वा उपासनार्थे परिग्रह इति वक्तव्य-मित्यर्थः। अत्र हीति। अक्षरे हीत्यर्थः। उपदेष्टृत्वाभावादिति। स्त्रीत्वात् श्रवणाधिकाराभावस्यो-पपादितत्वादिति भावः॥

---

१ कयाचिदित्यपि पाठः। २ यद्यप्यत्र "द्वाभ्यां प्रश्नाभ्यामुपोदस्थाम्" इति द्वौ प्रश्नौ प्रतीयेते, तथापि पूर्वब्राह्मणे "यस्मिन्वा आप ओताश्च प्रोताश्चे"त्यादिषु तावत्सु प्रश्नेषु कृतेष्वपि न प्रश्नपरिसमाप्तिरेवमत्राकाशप्रश्नेऽपि, ततः "कस्मिन्वा आकाश ओतश्च प्रोतश्चे"ति प्रश्ने आकाश एवेत्युक्त्वा तमाकाशमक्षरत्वेन निगमयति "एतद्वै तदक्षरम्" इति। एतद् स्वरूपतद्द्वितीयप्रश्नोत्तरभूतं यदाकाशं तदक्षरमित्येवं वचनव्यक्तेः। अत आकाशस्याप्यवान्तरत्वमेवेति पूर्वब्राह्मणे सर्वपदोक्ता पृथिवीमारभ्यात्र प्रथमं य आकाश उक्तस्तदन्तानां या धृतिर्धारणं तेन हेतुना अम्बरान्तानां पृथिव्यादीनां विशेषेण परान-पेक्षतया धारकः परमात्मैव। अयम्भावः, पतनप्रतिबन्धकव्यापारातिरिक्तशक्त्यनपेक्षतया धारको विधारकः। "यस्मिन्ना-काश ओतश्च प्रोतश्च" इति प्रश्नवचनात् "यस्मिन्नोतश्च प्रोतश्च पृथिव्यादिरेतदाकाशरूपं गार्गि अक्षरम्" इत्युत्तरात् अम्बरान्तधारणमोतप्रोतधारणात्मकं वक्तव्यं तथाकाशोतप्रोतधारणं पृथिव्यादिसाधारणमिति हेतोर्नद्यादौ साधारणत्वेना-क्षरस्य परमात्मत्वासाधकत्वमाशङ्क्य ओतप्रोतधारणं समवायिकारणतासमनाधिकरणमित्याशयकं द्युभ्वाद्यायतनसिद्धो धर्मोऽत्र हेतुरिति भाष्ये। तत्तात्पर्यं च परमात्मैवेति भाष्ये। नन्वत्र एवकारेण जीवजडव्यावर्तकेन परमात्मनि प्राप्तं भारवाहकमिति चेत्, न; पूर्वब्राह्मणे अब्वाय्वनन्तरमाकाशस्योक्तत्वेऽप्यत्र पुनर्यदाकाशकथनं, न तद्भूताकाशपरम्; किन्तु, भूतसूक्ष्मकाल-प्रकृत्यन्यतमं यद्वस्तु तत्परम्। तत्र, उपनिषद्व्याख्यातृमते (मायावादिमते) पदार्थान्तरम्, अविद्याशबलित ईश्वर एव तन्मते प्रकृतिरूपम्। नैयायिकमते द्रव्यमात्मा कालश्चेति पदार्थान्तरम्। परमाणुरूपा वा शब्दादयः। प्रथमं कार्यमिति शब्दरूपाकाशात्मकम्। "तस्माद्वा एतस्मादात्मन आकाशः सम्भूत इति श्रुते.। अत्र मात्रात्मक आकाशो विवक्ष्यते। यद्वा, यथाश्रुत एवार्थः। पूर्वब्राह्मणे सम्पत्त्याविर्भाविते रूपे सर्वोतप्रोतत्वं विचारितमन्तिमे "कस्मिन् प्रजापतिलोका ओताश्च प्रोताश्चेति" इति गार्गीप्रश्ने ब्रह्मलोकेषु गार्गीस्तुत्तरात्सम्पत्तिरुक्ते. ब्रह्मलोकस्याक्षरत्वात्सर्वकारणकारणस्य प्राप्य-स्यात्। अत्र तु सुषुप्त्याविर्भाविते रूपे सर्वोतप्रोतत्वस्य "न तदश्नोति कश्चन" इति श्रुतेरभावात् प्रथमकार्यस्योतप्रोतसहितस्या-क्षराभेदस्योपपादनात्। ननु भूतसूक्ष्मकालप्रकृतिजीवविशेषाणामन्यतममित्यपि सुवचमिति चेत्, न; ततोऽधिको धारको न जीवो न जीवविशेषोऽपि भवति, उक्ताकाशोतप्रोतत्वस्य जीवे कार्त्स्न्यसिद्धत्वात्। एवं च जडजीवयोर्निवृत्तौ तद्ब्रह्मकार्यत्वेनैव

---

1 भूतसूक्ष्माणि शब्दादीनि पञ्च तन्मात्राणि। 2 अन्तः सच्चिदानन्दत्वे सति व्यवहारे ईषत्सत्त्वेन प्रकटत्वं कालत्वम्। 3 भगवन्निर्मितत्वे सति मुख्यं भगवद्रूपत्वं प्रकृतित्वम्।

**न्तानां पृथिव्यादीनां विधारकः परमात्मैव । द्युभ्वाद्यायतनसिद्धो धर्मोऽत्र हेतुः**

---

सिद्धान्तं व्याकुर्वन्ति । **उच्यत** इति । यद्यपि अम्बरान्तधृतेरित्यस्य विषयवाक्ये पाठाभावादसिद्धोऽयं हेतुस्तथापि श्रुतितात्पर्यसिद्धत्वादस्येत्याहुः—**श्रुतिमिति** । तात्पर्यसिद्धत्वं विशदयन्ति—**अत्रैक** इत्यादिना । अयमाशयः । प्रथमब्राह्मणे "यदिदं सर्वमोतं च प्रोतं चे"त्यादिना ब्रह्मलोकपर्यन्तं पूर्वपूर्वस्योत्तरोत्तरस्मिन्नोतप्रोतत्वं निरूप्य तदन्तरमरुणिसम्वादोत्तरं पुनरपि गार्ग्या प्रश्नः कृतः, "यदूर्ध्वं याज्ञवल्क्यदिवो यदर्वाक् पृथिव्या" इत्यादि "कस्मिँस्तदोतं च प्रोतं चे"ति । तदनन्तरं याज्ञवल्क्येन आकाश इत्युत्तरिते पुनराकाशविषयके ओतप्रोतत्वप्रश्ने "एतद्वै तदक्षरं गार्गी"त्याद्युत्तरम् । अत्र यद्यपि प्रश्नद्वयं प्रतिभाति तथापि प्रश्नैक्यं उत्तरैक्यमेव । आकाशविषयक ओतत्वप्रश्ने अक्षरस्यैव अन्तरितत्वात् आकाशस्यावान्तरत्वमागतं तेन पृथिव्यादेराकाशान्तानां विधारको भगवानेवेति सिद्धम् । **द्युभ्वायतनसिद्धो धर्म**

---

निर्धीयते । भौतिकाकाशाजीवविशेष उपासापचितजीव. कुतस्तरां साधारणजीवजडौ, एकस्याण्डत्वाज्जडस्य परिच्छिन्नपरिमाणधरत्वात् । तेन ग्रामं गच्छन् तृणं स्पृशतीति न्यायेन सामान्यत पूर्वपक्षोऽपास्तः । एतेन "एतद्वै तदक्षरं गार्गि यस्मिन्नाकाश ओतश्च प्रोतश्च" इति श्रुतेः, अक्षराधिकरणकाकाशनिरूपिततादात्म्यस्य सत्वात्कार्यकारणवस्त्वैक्यपरामर्शः । "कार्यकारणवस्त्वैक्यमर्शनं पटतन्तुवत् । अवस्तुत्वाद्विकल्पस्य भावाद्वैतं तदुच्यते" इति सप्तमस्कन्धात् । यत्तु, "स होवाच एतद्वै तदक्षरम्" इति श्रुतिव्याख्याने स याज्ञवल्क्यो ह उवाच यत्त्वं पृष्टवत्यसि कस्मिन्नु खल्वित्यादिना व्याकृतानामाकाशाधिष्ठानं तद्वै अव्याकृताधिष्ठानमेतदक्षरमित्यक्षराकाशयोराधाराधेयभावः स श्रौतोऽपि भारवाहकत्वापादको नाङ्गीक्रियते । श्रौतोऽपि ह्यक्षरे आकाशः इत्याधाराधेयभावोऽभिव्यापकाधारे सप्तमीं स्वीकृत्य निर्वाह्यते "तन्तुष्वङ्ग यथा पटः" इति दृष्टान्तात् । आरोपापवादेनादृश्यत्वाद्यधिकरणोक्तमदृश्यत्वादिकं पूर्वं पूर्वपक्षे समर्थितं तन्मायावादे, सिद्धान्ते तु पुनः, विरुद्धधर्माधारत्वं प्राग्वैश्वानराद्यधिकरणे ब्रह्मण उक्तमेवेति । न च विरुद्धधर्माधारत्वसमर्थनं यावताऽस्थूलमनणु इत्यादिनाऽत्यन्ताभावप्रतिपादनादारोपापवादसङ्गत्या श्रौतधर्मनिषेधात्कैर्धर्मैरदृश्यत्वविरुद्धैर्विरुद्धधर्माधारत्वमिति वाच्यम्; अस्थूलमनण्वित्यादिना पर्युदासप्रतिपादनात् तथाहि । "सर्वतः पाणिपादान्तं सर्वतोक्षिशिरोमुखम् । सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति" ॥ इत्यतः श्रुतौ "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च" इति च "सर्वत. पाणिपादं तत्" इत्यादिश्च गीता । एतस्मात्साकारब्रह्मणः सर्वेन्द्रियाभासवत इत्यर्थः । "नासतो विद्यते भाव." इति गीतायाः । तदुक्तम् । "सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम्" इति गीतायाम् । तथा चास्थूलमित्यत्र भेदवत् भेदप्रतियोगी सदृशं नञर्थ उक्तश्रुत्यादिभ्यः । एवं च स्थूलभिन्नस्थूलसदृशमक्षरमित्यर्थ. । एवमनण्वित्यादावपि । ननु अलोहितमच्छायमित्यत्र कथमिति चेन्न लोहितभिन्नलोहितसदृशं छायाऽस्त्यस्य तद्वच्छच्छायं तद्भिन्नतत्सदृशमिति व्युत्पत्तिसम्भवात् । ततश्चारोपापवादसङ्गतिं त्यक्त्वा निर्वाहकसङ्गत्या स्थूलभिन्नस्थूलसादृश्यैर्धर्मैरदृश्यत्वविरुद्धैः विरुद्धधर्माधारमिति । ननूक्तं श्रौतधर्मनिषेधान्नैवमिति चेन्न, प्रक्षालनपङ्कन्यायापत्त्या श्रौतधर्मानिषेधात् । स्पष्टं चेदं विद्वन्मण्डने । नन्वेवमारोपापवादसङ्गतित्यागापत्तिरिति चेन्न, ब्रह्मनिरूपणार्थं निर्धर्मसधर्मनिरूपकश्रुत्योर्निरूपणम् । "सत्यं ज्ञानमनन्तं ब्रह्मे"ति "अथात आदेशो नेति नेती"ति निर्धर्मकब्रह्मनिरूपणानन्तरं किं ब्रह्मनिरूपणनिर्वाहप्रयोजकमिति जिज्ञासया "यतो वा इमानि भूतानि जायन्ते" इत्यादिभि. सधर्मकनिरूपणात् निर्वाहकसङ्गतिस्वीकारात् । ननु क्वोक्तेयं सङ्गतिरिति चेन्न आरोपापवादवत् अथातो ब्रह्मजिज्ञासेति प्रतिज्ञाय जन्माद्यस्येत्यत्रैवेति । किञ्च, वेदस्तुतौ 'कथं चरन्ति श्रुतयः साक्षात्सदसतः परे' इति राजप्रश्ने "बुद्धीन्द्रियमन·प्राणान् जनानामसृजत्प्रभु." इति शुकोत्तरात् । विद्वन्मण्डने च "जगदप्रत्ययात्तितः" इति चरिकांशप्रतिपादके, तथा हि जगदप्रतीतिप्रसङ्गाद्धि जगत्प्रतीतिः श्रुतिसिद्धा येन पूर्वं बोधयति पश्चान्निषेधतीत्युच्येत अनधिगतार्थगन्तृत्वलक्षणप्रामाण्यभङ्गप्रसङ्गात् । न च वेदेषु सर्वस्याधिगतत्वेनासम्भव इति वाच्यम् । लोकेऽनधिगतेत्यादेर्लक्षणत्वासम्भवः । नन्विमानि भूतानीति लोके प्रयोगात्कथं लोके अनधिगतार्थत्वमिति शङ्क्यम् । "प्रधानाज्जगज्जायते" इति साङ्ख्यानां प्रधानकारणवादः, नैयायिकानां परमाणुकारणवादः, शाङ्कराणां मायाशबलकारणवादः, इति यतो वै जायन्त इत्यस्यानधिगतत्वात् तदन्त.पातिन इमानि भूतानीत्यस्यापि लोकेऽनधिगतत्वात् भक्तिमार्गान्त.पातिनां ज्ञानपूजादीनां भक्तित्ववत् । भक्तिहंसे स्पष्टम् । ३ अश्नुत इत्ययं योगः सरणस्य कालस्य भूतसूक्ष्माणां शब्दरूपरसगन्धस्पर्शानां च छान्दसः प्रत्ययः क्वाचित्कमात्मनेपदित्वमनुसन्धाय क्षर सञ्चलने इत्यस्य भ्वादेः परस्मैपदिनो न क्षरत इति जीवप्रकृत्योः, पचाद्यच्, अतएव तस्मात् क्षरत्यश्नुते चेत्यक्षरं परमेव ब्रह्मेति शाङ्करभाष्ये परस्मैपदयुक्तः । अतएव कथञ्चित्सरणस्य कालस्य [illegible] व्यापकव्याप्त्या भूतसूक्ष्माणां च प्रकृतेस्तु आप्राकृतिकलयात् क्षरणाभाव. जीवेषु स्पष्टो योगः । ४ प्रतीकमिदं जटाशङ्करशास्त्रिप्रहिते पुस्तके न दृश्यते ।

"न तदश्नोति कश्चने"ति मुख्यतया परिगृहीतो भवति। अन्यथा मूर्ध्नो विपतनं च भवेत्। न ह्यन्यः सर्वाधारो भवितुमर्हति। परोक्षेण ब्रह्मकथनार्थमक्षरपदमन्यनिराकरणार्थं तद्धर्मोपदेशश्च। तस्मादक्षरं परमात्मैव॥ १।३।१०॥

ननु क्वचिद्वाक्ये विधारणं ब्रह्मधर्मत्वेनाश्रितमित्यन्यत्रापि न तथाश्रयितुं शक्यते। नियामकाभावादित्यत आह—

सा च प्रशासनात्॥ १।३।११॥

(प्रशासनोक्तेः साकाशान्तधृतिर्ब्रह्मधर्म एव)

सा च विधृतिरत्रापि वाक्ये ब्रह्मधर्म एव। कुतः? प्रशासनात्। "एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिवी विधृते तिष्ठतः" (बृ. ३।८।९) इति प्रशासनेन विधारणमन्यधर्मो भवितुं नार्हति। अप्रतिहताज्ञाशक्तेर्भगवद्धर्मत्वात्। तस्मादक्षरं ब्रह्मैव॥ १।३।११॥

ननूक्तमुपासनापरं भविष्यतीति तत्राह—

अन्यभावव्यावृत्तेश्च॥ १।३।१२॥

(अब्रह्मधर्मव्यावृत्तेरपि अक्षरं ब्रह्मैव)

अन्यभावव्यावृत्तेः। अन्यस्य भावोऽन्यभावः। अब्रह्मधर्म इति यावत्। तस्यात्र व्यावृत्तेः। अब्रह्मत्वे हि ब्रह्मत्वेनोपासना भवति कार्यकारणभावभेदेन। न ह्यत्र

---

इति। तत्स्वरूपात्मकतया तद्धारकत्वधर्म इत्यर्थः। तथा चोक्तं श्रीभागवते "नैतच्चित्रं भगवति ह्यनन्ते जगदीश्वरे। ओतप्रोतमिदं यस्मिन् तन्तुष्वङ्ग यथा पट" इति। अतः भारवाहकत्वदोषोऽपि न। "न तदश्नोती"ति। अयम्भावः। द्वावपि निषेधौ व्यापकत्वं तदभावं च बोधयन्तौ विरुद्धधर्माश्रयत्वं वस्तुपरिच्छेदराहित्यं च द्योतयतः। किञ्च, ब्रह्म ज्ञात्वा अभावसम्भावनायां मूर्द्धविपातः प्रतिपादितः स च गार्ग्याः न जात इति तस्याः ब्रह्मवित्त्वेनाधिकारित्वात् स्त्रीत्वदोषोऽपि न, एवं चायं सर्वोऽपि ब्रह्मवाद एव पारोक्ष्येण प्रतिपादितः। तथा च द्युभ्वाधिकरणसिद्धब्रह्मधर्म एव हेतुर्मुख्यः। अनेन हेतुना अक्षरं ब्रह्मेति सिध्यतीति। अत्र 'अस्थूलादिवाक्योक्तमक्षरं परमात्मैव। विरुद्धधर्माधारत्वे सत्यं अन्यरान्तधारकत्वात् यन्नैवं तन्नैवमित्यनुमानप्रयोगो बोध्यः॥

**सा च प्रशासनात्**। सूत्रमवतारयन्ति **नन्विति**। **क्वचिद्वाक्ये**। द्युभ्वाद्यधिकरणोक्त"यस्मिन् द्यौरि"तिवाक्ये। सूत्रं व्याकुर्वन्ति—**सा चेति**। **विधृतिरिति**। साङ्ख्यमतरीत्या अहिलरूपा प्रधाननिष्ठाऽम्बरान्तधृतिरित्यर्थः। एवं च यथा त्रिशङ्कुनिष्ठा विधृतिर्विश्वामित्रधर्मस्तथान्यनिष्ठा विधृतिर्ब्रह्मधर्म एव प्रशासनस्य चेतनधर्मत्वादिति भावः॥

**अन्यभावाव्यावृत्तेश्च**। सूत्रमवतारयन्ति—**नन्विति**। **भविष्यतीति**। उक्तं श्रुतिवाक्यं प्रधानपरं जीवपरं वाऽस्तु प्रशासनहेतुका विधृतिः ब्रह्मधर्मः उपासनार्थं आरोपितो भविष्यतीति भावः॥

सिद्धान्तं व्याकुर्वते—**अन्यस्येति**। **कार्यकारणभावभेदेनेति**। **अब्रह्मत्वे** हीत्यनेनान्वितम्। तथा चाक्षरे चेतनधर्मस्य प्रशासनकर्तृत्वस्य कथनेन प्रधानव्यावृत्तिः आकाशोतप्रोतत्वकथनेन जीवव्यावृत्तिः। तेन च अब्रह्मणि ब्रह्मत्वेनोपासनापरमिति वक्तुं न शक्यते। अक्षरस्याब्रह्मत्वाभावादिति भावः। मुख्य-

---

[1] अत्रादिवाक्य इति पाठकस्य प्रामादिकः पाठ। अब्रह्मशब्दस्य तत्राप्रयोजकत्वात्। स्वतोऽप्यव्याख्यानाच्च।

तादृशो धर्मोऽस्ति । चकाराद्–"यो वा एतदक्षरमविदित्वा गार्गि" ( बृ. ३।८।१० ) इत्यादिना शुद्धब्रह्मप्रतिपादनमेव नोपासनाप्रतिपादनमिति । तस्मादक्षरं ब्रह्मैवेति सिद्धम् ॥ १।३।१२।३ ॥

---

न्तरमपि वदन्ति—चकारादित्यादि । "यो वा एतदक्षरमविदित्वा गार्गि अस्मिन् लोके जुहोति ददाति तपस्तप्यति बहूनि वर्षसहस्राण्यन्तवानेव स लोको भवती"त्यादिना शुद्धब्रह्मप्रतिपादनमिति भावः । अक्षरज्ञानं ज्ञानमार्गीयाणां मुख्यम् । "ये त्वक्षरमनिर्देश्यमि"ति गीतावाक्यात् । भक्तिमार्गीयाणामङ्गमित्यन्यत्र विस्तरः ॥ इति तृतीयाधिकरणम् ॥

---

१ अत्रेत्थं व्याख्यानान्तराणि—

(१) तत्र शाङ्कराः—पूर्वं सत्यशब्दस्य ब्रह्मणि रूढत्वात् भूमा ब्रह्मेत्युक्तम् । तद्वदिहाप्यक्षरशब्दस्य वर्णे रूढत्वाद्वर्णं एवाक्षरमस्त्विति दृष्टान्तसङ्गत्येदमाह–अत्र पूर्वपक्षे, ओङ्काररूपाक्षरोपास्तिः, सिद्धान्ते ब्रह्मज्ञानमिति फलभेदः । बृहदारण्यके गार्गीं प्रति याज्ञवल्क्य आह—"एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलम् ···" इत्यादि । तत्र किम्, अक्षरशब्देन वर्ण उच्यते, उत ब्रह्मेति सन्देहे, वर्ण इति पूर्वः पक्षः । सिद्धान्तस्तु—न क्षरतीत्यक्षरं ब्रह्मैव । कुतः, अम्बरान्तधृतेः । "एतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च" इति पृथिव्यादेः आकाशान्तस्य विकारजातस्य धारणादित्यर्थः ॥ प्रधानादिनिरासेन ब्रह्मोपादाने हेत्वन्तरमाह—अन्यस्य प्रधानादेः भावो धर्मः सोऽन्यभावः, तद्व्यावृत्तेः "तद्वा एतदक्षरं गार्ग्यदृष्टं द्रष्टृ ···" इत्यादि तद्विपरीतधर्मश्रवणात् न प्रधानादि अक्षरम्, किन्तु ब्रह्मैवेति सिद्धम् ॥

(२) रामानुजीये—वाजसनेयिनो गार्गिप्रश्ने समामनन्ति । "स होवाचैतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायम्" इत्यादि, तत्र संशयः, किमेतदक्षरं प्रधानं जीवो वोत परमात्मेति ? किं युक्तम् ? प्रधानमिति । कुतः ? "अक्षरात्परतः परः" इत्यादिष्वक्षरशब्दस्य प्रधाने प्रयोगदर्शनात्" अस्थूलत्वादीनां च तत्रैव समन्वयात् । यया तदक्षरमधिगम्यते इत्यादिषु परस्मिन्नप्यक्षरशब्दो दृश्यते इति चेन्न, प्रमाणान्तरप्रसिद्धश्रुतिप्रसिद्धयोः प्रमाणान्तरप्रसिद्धस्य प्रथमप्रतीतेः, प्रतीतपरिग्रहे विरोधाभावात् । किञ्च, "यदूर्ध्वं गार्गि दिवो यदर्वाक्पृथिव्याः" इत्यारभ्य सर्वस्य कालत्रयवर्त्तिनः कारणभूताकाशाधारत्वे प्रतिपादिते "कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्च" इत्याकाशस्यापि कारणं तदाधारभूतं किमिति पृष्टे प्रत्युच्यमानमक्षरं सर्वविकारकारणतया तदाधारभूतं प्रमाणान्तरप्रसिद्धं प्रधानमिति प्रतीयते । अतोऽक्षरं प्रधानमिति प्राप्त उच्यते । अक्षरमम्बरान्तधृतेः । अक्षरं परं ब्रह्म । कुतः ? अम्बरान्तधृतेः । अम्बरस्याकाशस्यान्तःपारभूतमव्याकृतमम्बरान्तः । तस्य धृतेः । तदाधारतयास्याक्षरस्योपदेशादिति यावत् । अयमर्थः । कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्च इत्यत्राकाशशब्दनिर्दिष्टं न वायुमदम्बरम् । अपितु तत्पारभूतमव्याकृतम् । अतस्तस्याव्याकृतस्याप्याधारत्वेनोच्यमानमक्षरं नाव्याकृतं भवितुमर्हतीति । नन्वाकाशशब्दनिर्दिष्टो न वायुमानिति कथमवगम्यते ? उच्यते, "यदूर्ध्वं गार्गि दिवो यदर्वाक्पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षत आकाश एव तदोतं च प्रोतं च" इत्युक्ते त्रैलोक्यवर्त्तिनो विकारजातस्याधारतया निर्दिष्ट आकाशो न वायुमदाकाशो भवितुमर्हति । तस्यापि विकारान्तर्गतत्वात् । अतोऽत्राकाशशब्दनिर्दिष्टं भूतसूक्ष्ममिति प्रतीयते । ततस्तस्यापि भूतसूक्ष्मस्याधारभूतं किमिति

पृच्छ्यते । "कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्च" इति । अतस्तदाधारतया निर्दिश्यमानमक्षरं न प्रधानं
भवितुमर्हति । यत्तु, श्रुतिप्रसिद्धात्प्रमाणान्तरप्रसिद्धं प्रथमं प्रतीयत इति तन्न; अक्षरशब्दस्यावयव-
शक्त्या स्वार्थप्रतिपादने प्रमाणान्तरानपेक्षणात् । सम्बन्धग्रहणदशायामर्थस्वरूपं येन प्रमाणेनाव-
गम्यते न तत्प्रतिपादनदशायामपेक्षणीयम् । एवं तर्ह्यक्षरशब्दनिर्दिष्टो जीवोऽस्तु । तस्य भूतसूक्ष्म-
पर्यन्तस्य कृत्स्नस्याचिद्वस्तुन आधारत्वोपपत्तेः । अस्थूलत्वाद्युच्यमानविशेषणोपपत्तेश्च । "अव्यक्तमक्षरे
लीयते" "यस्याव्यक्तं शरीरम्" "यस्याक्षरं शरीरम्" "क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते"
इत्यादिषु प्रत्यगात्मन्यप्यक्षरशब्दप्रयोगदर्शनादिति अत्रोत्तरम् । सा च प्रशासनात् । सा चाम्बरान्तधृ-
तिरस्याक्षरस्य प्रशासनादेव भवतीत्युपदिश्यते "एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ
विधृतौ तिष्ठतः" । "एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते तिष्ठतः" । "एतस्य
वा अक्षरस्य प्रशासने गार्गि निमेषा मुहूर्ता अहोरात्राण्यर्धमासा मासा ऋतवः सम्वत्सरा इति विधृ-
तास्तिष्ठन्ती"त्यादिना । प्रशासनं प्रकृष्टं शासनम् । न चेदृशं स्वशासनाधीनसर्ववस्तुविधरणं बद्धमु-
क्तोभयावस्थस्यापि प्रत्यगात्मनः सम्भवति । अतः पुरुषोत्तम एव प्रशासित्रक्षरम् ॥ अन्यभावव्यावृ-
त्तेश्च । अन्यभावोन्यत्वं प्रधानादिभावः । अस्याक्षरस्य परमपुरुषादन्यत्वं वाक्यशेषे व्यावर्त्यते । "तद्वा
एतदक्षरं गार्ग्यदृष्टं द्रष्टृश्रुतं श्रोत्रमतं मन्त्रविज्ञातं विज्ञातृ नान्यदतोऽस्ति द्रष्टृ नान्यदतोऽस्ति श्रोतृ
नान्यदतोऽस्ति मन्तृ नान्यदतोस्ति विज्ञात्रेतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च" इति । अत्र
दृष्टृत्वश्रोतृत्वाद्युपदेशादस्याक्षरस्याचेतनभूतप्रधानभावो व्यावर्त्यते । सर्वैरदृष्टस्यैव सतः सर्वस्य द्रष्टृ-
त्वाद्युपदेशाच्च प्रत्यगात्मभावो व्यावर्त्यते । अत इयमन्यभावव्यावृत्तिरस्याक्षरस्य परमपुरुषतां द्रढयति ।
एवं वान्यभावव्यावृत्तिः । अन्यस्य सद्भावव्यावृत्तिरन्यभावव्यावृत्तिः । "यथैतदक्षरमन्यैरदृष्टं सदन्येषां
द्रष्टृ च सत्स्वव्यतिरिक्तस्य समस्तस्याधारभूतमेवमन्येनादृष्टमेतस्य द्रष्टृ च सदेतस्याधारभूतमन्यन्नास्तीति
यद्वान्यदतोऽस्ति द्रष्टृ" इत्यादिवाक्यशेषोऽन्यस्य सद्भावं व्यावर्तयन्नस्याक्षरस्य प्रधानभावं प्रत्यगात्म-
भावं च प्रतिषेधति । "किञ्चैतस्य वा अक्षरस्य प्रशासने गार्गि ददतो मनुष्याः प्रशंसन्ति यजमानं देवा
दर्वीपितरोन्वायत्ता" इति श्रौतं स्मार्तं च यागदानहोमादिकं सर्वं कर्म यस्याज्ञया प्रवर्तते तदक्षरं परब्रह्म-
भूतः पुरुषोत्तम एवेति विज्ञायते । अपि च यो वा एतदक्षरं गार्ग्य विदित्वास्मिँल्लोके जुहोति यजते,
तपस्तप्यते बहूनि वर्षसहस्राण्यन्तवदेवास्य तद्भवति यो वा एतदक्षरं गार्गि विदित्वास्माल्लोकात्प्रैति स
कृपणोऽथ य एतदक्षरं गार्गिविदित्वास्माल्लोकात्प्रैति स ब्राह्मणः इति यदज्ञानात्संसारप्राप्तिर्यज्ज्ञानाच्चा-
मृतत्वप्राप्तिस्तदक्षरं परं ब्रह्मैवेति सिद्धम् ।

(२) माध्वे—अदृश्यत्वादिगुणाः अदृष्टं दृष्टः श्रुतं श्रोत्रेत्यादिना अहं सोममाहृ न संविभर्मीत्या-
देस्तस्यापि सम्भवान्मध्यमाक्षरस्योक्ता इति । अतो ब्रूते । एतस्मिन् खल्वक्षरे गार्ग्याकाश ओतश्च प्रोत-
श्चेत्यम्बरान्तस्य सर्वस्य धृतेर्ब्रह्मैवाक्षरं य उ त्रिधातुः पृथिवीमुत द्यामेको दधार भुवनानि विश्वा भर्त्ता
स न भ्रियमाणो बिभर्त्येको देवो बहुधा निविष्टः यदा भारं तन्द्रयते समभेति यस्मिन्निदं सन्च विचैति
सर्वं यस्मिन् देवा अधि विश्वे निषेदुरित्यादिश्रुतेः, पृथिव्यादि प्रकृत्यन्तं भूतं भव्यं भवच्च यत् । विष्णु-
रेको बिभर्तीदं नान्यस्तस्मात् क्षमो धृताविति च स्कान्दे ॥ सा च धृतिः प्रशासनादुच्यते । "एतस्य
वा अक्षरस्य वा प्रशासने गार्गि सूर्य्याचन्द्रमसौ विधृतौ तिष्ठत" इत्यादिना । तच्च प्रशासनं विष्णोरेव ।
"सप्तार्द्धगर्भा भुवनस्य विष्णोस्तिष्ठन्ति प्रदिशा विधिमणिचतुर्भिः साकं नवतिश्च नामभिश्चक्रं न
वृत्तं व्यतीरवी वियदि"त्यादि श्रुतेः । "एकः शास्ता न द्वितीयोऽस्ति शास्ता यो हृच्छयस्तमहमिदं
ब्रवीमि । न केवलं भवतश्च राजन् सर्वं बलं बलिनाञ्चापरेषामि"त्यादेश्च ॥ "अस्थूलमनण्वि"त्यादिना

स्थूलत्वादीनामन्यवस्तुस्वभावानां व्यावृत्तेश्च "अस्थूलोऽणुरमध्यमो मध्यमो व्यापको योऽसौ हरिरादिरनादिरविश्वो विश्वः सगुणो निर्गुण" इत्यादेर्विष्णोरिव ते धर्माः "अस्थूलोऽनणुरूपोऽसावविश्वो विश्व एव च । विरुद्धधर्मरूपोऽसावैश्वर्य्यात् पुरुषोत्तम" इति ब्राह्मे ॥

(४) निम्बार्कः—अक्षरम्ब्रह्म, कुतः ? कालत्रयवर्त्तिकार्य्याधारतया निर्दिष्टस्याकाशस्य धारणात् ॥ सा च धृतिः पुरुषोत्तमस्यैव, कुतः ? "एतस्यैवाक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत" इत्याज्ञापयितृत्वश्रवणात् ॥ अत्र प्रधानस्य जीवस्य वाऽक्षरशब्देन ग्रहणं नास्ति, परमेवाक्षरशब्दः । कुतः ? "तद्वा एतदक्षरं गार्ग्यदृष्टं द्रष्टृ अश्रुतं श्रोतृ अमतं मन्तृ अविज्ञातं विज्ञातृ" इत्यन्यभावव्यावृत्तेः ॥

(५) भैक्षवे—बृहदारण्यकपञ्चमाध्याये श्रूयते "कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चेति सहोवाच एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वि"त्यादि । तत्र प्रधानब्रह्मजीवाः सन्दिग्धाः त्रयाणामेवाक्षरात्परतः परः एतदेवाक्षरं ब्रह्म । क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते । उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ॥ इत्यादिश्रुतिस्मृतिष्वक्षरशब्दप्रयोगात् योगाच्च स्थूलादिगुणानां च प्रधानादिषु तुल्यत्वादिति । प्रणवे तु शङ्का नास्ति तत्र द्रव्यधर्माणां स्थूलत्वादीनामप्रसक्तया तत्प्रतिषेधानौचित्यात् वर्णसामान्यवाचिनो अक्षरशब्दस्य प्रणवरूपविशेष्यवाचितायाः ॐमित्यादिविशेषणं विनाप्यदर्शनाच्चेति, तत्रायं निर्णयः, अक्षरमत्र ब्रह्मैव कुतः ? अम्बरान्तधृतेः आकाशान्तधारणात् सर्वाधारत्वेनावधृतमाकाशं प्रकृत्य हि कस्मिन्नु खल्वाकाशे ओतश्च प्रोतश्चेति प्रश्ने उदाहृतवाक्यं प्रवृत्तं तच्चाकाशान्तविश्वधारणं परमात्मनोऽन्यत्र न सम्भवतीत्यर्थः, ननु प्रधानस्याप्याकाशान्तजगदाधारकत्वमस्ति अखिलकार्य्याधारत्वादित्याशङ्क्याह । सा च धृतिः प्रशासनपूर्विकैव श्रूयते "एतस्य वाक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत" इति वाक्यशेषादित्यर्थः, अचेतनस्य च प्रधानस्य प्रशासनं मुख्यं न सम्भवति प्रशासनं हि नियोग इच्छाविशेषस्त्वमिदं कुर्वित्यादिरूप इति । ननु वेदान्तसिद्धान्ते इच्छादयोऽप्यचेतनधर्मा एव भवतु वा सर्गाद्युत्पन्नो जीवविशेष एवाक्षरस्तस्य सूर्यादिनियोक्तृत्वस्य श्रवणादित्याशङ्क्याह । परमात्मनो येऽन्ये भावाः पदार्थाः पुंप्रकृत्यादयः तेभ्यः सर्वेभ्य एव व्यावृत्तेः व्यावृत्तिश्रवणाच्चेत्यर्थः । यथा "एतद्वै एव व्यावृत्तेः" व्यावृत्तिश्रवणाच्चेत्यर्थः । यथा "एतद्वै तदक्षरं गार्ग्यस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोऽवाय्वनाकाशमसङ्गमरसमगन्धमचक्षुष्कमश्रोत्रमवागमनोऽतेजस्कमप्राणममुखममायमनन्तरमबाह्यं न तदश्नाति किञ्चन न तदश्नाति कश्चनेति" प्रक्रम्य "तद्वा एतदक्षरं गार्ग्यदृष्टं द्रष्टृ"त्याद्यनन्तरं नान्यदतोऽस्ति द्रष्ट्रित्यादि उपसंह्रियते, अत्रातम इत्यादिना प्रधानादिभ्यो जडेभ्यः कारणकार्य्यरूपेभ्योऽक्षरस्य व्यावृत्तिः श्रूयते, अनशनेन जीवव्यावृत्तिरिति । न चेश्वरोऽप्यत्तीत्युक्तं तत्कथं "न तदश्नाति किञ्चने"त्युपपद्यतामिति चेत् न, "न लिप्यते लोकदुःखेन बाह्य" इति श्रुत्यन्तरैकवाक्यतया जीवतुल्यस्य अभिमानगर्भमुख्यभोगस्यैवात्रापि प्रतिषेध्यत्वादिति । नन्वियं व्यावृत्तिर्जीवेऽपि विवेकत उपपद्यत इति, मैवं, विविक्तात्मन्येव भोगात्, अचक्षुष्कत्वादीनां जीवेऽसम्भवाच्च । अत्र हि बहुव्रीहिसमासेन चक्षुरादिमनोन्तःकरणशून्यत्वमेवावगम्यते न तु तद्भिन्नत्वम्, असकृदाम्दसाहचर्य्यात् कप्रत्ययवैयर्थ्याच्च । तच्च करणशून्यत्वं विविक्तजीवानामपि नास्ति करणकृतोपकारस्य सुखदुःखप्रतिबिम्बसाश्रयतया तत्स्वामित्वात् । अत एव पातञ्जले बुद्ध्यात्मनोऽर्भोग्यभोक्तृभावयोग्यतालक्षणस्य स्वस्वामिभावरूपसम्बन्धस्यानादित्वमेवाभ्युपगम्य । इति पुरुषे सुखादिप्रतिबिम्बस्य तुच्छत्वानित्यत्वाभ्यामेव च भोगः कल्पित इत्युच्यते ।

युद्धिकृत उपकारः पुरुषे नास्तीत्याशयेनेति । नान्यदतोऽस्ति द्रष्टित्यनेन च सुतरां जीवान्तर्सर्वभाव-व्यावृत्तिरिति ॥

(६) भास्करीये—"कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चेति स होवाचैतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमि"ति श्रूयते। तत्रायमर्थः सांशयिकः, किमक्षर-शब्देन प्रधानमुच्यते किं वा ब्रह्मेति। किं तावत् प्राप्तम्, प्रधानं वक्तुं युक्तं तस्य स्वविकारधारणोपपत्ते-रोतत्वं युज्यते, अस्थूलादि च तस्मिन्नुपपत्तेः रूपादिहीनत्वाभ्युपगमात्। केचिदक्षरशब्दस्य वर्णे प्रसि-द्धत्वादक्षरमोङ्कार इति पूर्वपक्षयन्ति। वैयाकरणदर्शनं च स्फोटः[१] शब्द इत्यवतार्य गकारादयो वर्णा एव शब्दा इति स्थापयन्ति। तदेतदधिकरणेनासम्बद्धम्। अलोहितमस्नेहमच्छायमित्येवमादिप्रतिषेधानु-पपत्तेः। प्रधानस्य तु युज्यते विकारधर्माणां कारणप्रसक्तेः। कार्यकारणयोश्चानन्यत्वाभ्युपगमा-त्साङ्ख्यानाम्। किञ्च, वृत्तिकारेण मीमांसायामथ गौरित्यत्र कः शब्द इति स्फोटनिराकरणं कृतं, न

१ वर्णातिरिक्तो वर्णाभिव्यङ्ग्योऽर्थप्रत्यायको नित्यः शब्दः स्फोटः । अत्र व्युत्पत्तिः, स्फुट्यते व्यज्यते वर्णैरिति स्फोटः इति, स्फुटत्यर्थोऽस्मादिति स्फोटः इति च यौगिकशब्दाभिधेयत्वं शब्दब्रह्मणः सूचयति । स्फोटत्वं च स्फुटत्वभिव्यक्तीभव-त्यर्थोऽस्मादनेन वा इति व्युत्पत्त्या, अर्थप्रकाशकत्वम्। प्रकाशश्च ज्ञानम्। तथा च अर्थनिष्ठविषयताप्रयोजकशक्तिमत्त्वं पर्य-वस्यति। वर्णस्यैव तत्त्वाभ्युपगमे वर्णस्फोटः, पदादीनां तत्त्वाभ्युपगमे तु पदादिस्फोट इति व्यवहारः । स्फोटस्यावश्यकत्वं तु-पदानां वर्णसमूहरूपाणामाशुविनाशितयैकक्षणावस्थायित्वाभावादप्रत्यक्षत्वं तावन्निरूढम्। तथा च पदाप्रत्यक्षे पदार्थस्मृतेः शाब्दबोधहेतोः असम्भवः स्यात्। अतः स्फोटः कथनाङ्गीकर्तव्यः, यतोऽर्थप्रत्यय इति। अथवा वर्णानां प्रत्युच्चारणमन्यथा-प्रतीयमानतया अनित्यत्वेन आशुविनाशिनां च तेषां मेलनासम्भवेन तत्समुदायस्यापि सम्बन्धित्वाभावेन प्रत्येकं वर्णेषु वृत्तौ व्यभिचारेण च पूर्वपूर्ववर्णानुभवजन्यसंस्कारबीजवत्यन्त्यवर्णजनितपरिपाकशालिनि हृदये झटिति समुदीयमानस्य स्फोट-रूपस्यैव नित्यतया तत्रैव नित्यसम्बन्धस्य योग्यतया वृत्तित्वमुचितमिति। तथा च योगसूत्रभाष्यकृद्व्यास आह–तदेतेषामर्थ-सङ्केतेनावच्छिन्नानामुपसंहृतध्वनिक्रमाणां य एको बुद्धिनिर्भासस्तत्पदं वाचकं वाच्यस्य सङ्केत्यते, तदेकं पदमेकबुद्धिविषय एकप्रयत्नाक्षिप्तमभागमक्रमवर्णं बौद्धमन्त्यवर्णप्रत्ययोपस्थापितं प्रतीयते इति। स्फोटश्च पूर्वपूर्ववर्णानुभवसहितचरमवर्णानुभव-व्यङ्ग्यः । अत्र स्फोटस्याभिव्यक्तौ प्राकृतो ध्वनिः कारणम् । चिरचिरतरस्थितौ तु प्राकृतध्वनिजातवैकृतध्वनिः कारणमिति विवेकः। स च शाब्दिकमतप्रसिद्धः। अत्र महाभाष्यम्–अथ गौरित्यत्र कः शब्दः । येनोच्चारितेन सास्नालाङ्गूलककुदखु-रविषाणानां सम्प्रत्ययो भवति स शब्द उच्यते इति। तथा च भागवते, स्फोटश्रवणस्यात्मलिङ्गत्वमुक्तम्, "शृणोति य इमं स्फोटं सुप्ते शून्ये च शून्यदृक्। येन वाग्व्यज्यते यस्य व्यक्तिराकाश आत्मनः" ( १२–६–४० ) इति।

नैयायिकमते तु स्फोटो नाङ्गीक्रियते । यद्यङ्गीक्रियेत तदापि वर्णवत्सोऽनित्य एव । अयम्भावः—पूर्वपूर्ववर्णगोचर-संस्कारसहितचरमवर्णोपलम्भ एव स्फोटव्यञ्जक इति शाब्दिकैः स्वीकरणीयम्। तथा च नैयायिकमतेऽपि तादृशचरमवर्णोप-लम्भेनैवार्थप्रत्ययोपपत्तावलं स्फोटाङ्गीकारेण।

स्फोटभेदाश्चाष्टौ। (१) वर्णस्फोटः, (२) पदस्फोटः, (३) वाक्यफोटः, (४) अखण्डपदस्फोटः, (५) अखण्डवाक्य-स्फोटः, (६) वर्णजातिस्फोटः, (७) पदजातिस्फोटः, (८) वाक्यजातिस्फोटश्चेति। तत्र वाक्यस्फोट एव वास्तवः, अन्येषां त्ववास्तवत्वम् इति शाब्दिकसिद्धान्तः। अत्र वर्णस्फोटमारभ्याखण्डवाक्यस्फोटपर्यन्तं पञ्च व्यक्तिस्फोटा भवन्ति। शिष्टास्तु त्रयो जातिस्फोटा भवन्तीति ध्येयम्। पुनश्च स्फोटो द्विविधः। सखण्डः, अखण्डश्च। तत्र पदवाक्ययोरखण्डत्वं चाविद्य-मानावयवकत्वम्।

अत्र मीमांसका वेदान्तिनश्च प्रत्येकपदशक्तिसान्निध्येनाकाङ्क्षादिवशात्पदाद्वाक्यार्थबोधस्तदा पदस्फोटः इत्याहुः।

पार्थसारथिमिश्रास्तु स्फोटवादनिरसने एवमाहुः—नन्वेवं प्रतिवर्णं संस्कारकल्पनादनेककल्पना स्यात्, तद्वरमेकमेव शब्द-तत्त्वं कल्पितम्। नैवम्। दृश्यादर्शनेन निरस्तत्वात्। शब्दो हि प्रत्यक्षग्राह्योऽभ्युपगम्यते। न च प्रत्यक्षेण वर्णातिरिक्तं किञ्चित्प्रकाशते। तेन नास्तीत्यवगच्छामः। त्वयापि हि शब्दतत्त्वं कल्पयित्वा पुनः संस्कारकल्पनाऽवश्यं कर्तव्या। ध्वनयो हि न प्रत्येकं स्फोटमभिव्यञ्जति। साहित्यं च क्रमवर्तिनां संस्कारद्वारमेवेति तुल्यं तत्कल्पनम्। स्यान्मतम्। प्रत्येकमेव नादाः शब्दमभिव्यञ्जन्ति। नचैवमुत्तरनादवैयर्थ्यम्; पूर्वे हि नादाः शब्दमस्फुटमभिव्यञ्जन्ति, उत्तरोत्तरं स्फुटं स्फुटतरं च व्यञ्जन्तीति नोत्तरेषामानर्थक्यम्। यद्येवं ततो य एवोत्तरे नादाः स्फुटाभिव्यक्तिसमर्थास्तैरेव भवितव्यमलं पूर्वैः। ननु न कश्चिदपि नादः स्वतोऽस्य स्फुटाभिव्यक्तिं करोति, किन्तु सर्वे ते प्रत्येकं व्यञ्जकाः। स तु न प्रागेव स्फुटमवभासते, प्रथमम-

सूत्रकारेण । अत्रापि यदि वक्तव्यं वृत्तिकारैरेवोच्यतां, न सूत्रकारस्योपरि तदध्यारोपः कर्तव्यो यत्र वेदवाक्यात् सन्देहो जायते तन्निराकरणे सूत्रकारप्रवृत्तिः । प्रथमतन्त्रसिद्धत्वाच्चात्र स्फोटनिराकरणं निष्फलं स्यात् । यत्र विप्रतिपत्तिस्तन्निराकरणार्थं युक्तं वक्तुं नान्यत्रेति । प्रधानत्वेऽक्षरमिति प्राप्ते ब्रूमोऽक्षरं ब्रह्म कस्मादम्बरान्तधृतेराकाशपर्यन्तस्य धारणात् ॥ ननूक्तं प्रधानेऽप्युपपद्यत इति तत्रोत्तरं पठति सा च धृतिः परस्यैव, कुतः ? प्रशासनात् । "एतस्यैवाक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत" इति प्रशासनमाज्ञापयितृत्वं चेतनधर्मः ॥ यद्यपि प्रशासनं प्रधानेऽपि कथञ्चित् प्रकल्प्यते तथापि ह्यत्र तस्य ग्रहणं नास्ति कथमन्यस्य भावस्य प्रधानस्य व्यावृत्तिश्रुतेः । "तद्वा एतदक्षरं गार्ग्यदृष्टं द्रष्टृ अश्रुतं श्रोतृ अमतं मन्तृ अविज्ञातं विज्ञातृ"इति । "नान्यदतोऽस्ति द्रष्टृ" इति । तस्मात् परमेवाक्षरं स्थितमिति ॥

(७) श्रीमद्वल्लभाचार्यमतेऽयमभिप्रायः—गार्गी ब्राह्मणे श्रूयते । "कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्च, स होवाचैतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वि"त्यादि । तत्र संशयः । किमक्षरशब्देन पदार्थान्तरमुच्यते, ब्रह्म वेति । तद्बीजं तु ओतप्रोतत्वस्य विकारित्वापादकतया जडलिङ्गत्वमक्षरपदस्य च "क्षरं प्रधानममृताक्षरं हर" इत्यादिश्रुतौ जीवबोधकत्वेन प्रसिद्धजीवलिङ्गं, "क्षरात्मानावीशते देव एक" इति श्रुत्यन्तरात् प्रशासनं ब्रह्मलिङ्गं बोध्यम् । तत्रौतप्रोततया विकारित्वेनाचेतनसाधारण्यात् । "अहं त्वा याज्ञवल्क्य यथाकाश्यो वा वैदेहो वोग्रपुत्र उज्ज्यं धनुरधिज्यं कृत्वा द्वौ बाणवन्तौ सपत्नातिव्याधिनौ हस्ते कृत्वोपोत्तिष्ठेदेवमेवाहं त्वां द्वाभ्यां प्रश्नाभ्यामुपोदस्था"मिति द्वयोः प्रश्नयोर्बाणतुल्यतया क्लेशजनकत्वात् प्रथमप्रश्नोत्तरभूताकाशवदस्य द्वितीयप्रश्नोत्तरभूतस्याक्षरस्याप्यब्रह्मत्वमेव । किञ्च, "यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतमि"त्यत्रौतस्येवात्र प्रोतत्वस्यापि, "मयि सर्वमिदं प्रोतं

---

स्फुटावभासितः सन् पुनः पुनः श्रूयमाणः स्फुटो भवति, तद्यथा दूरादवस्थितः सहकारः प्रथमं हस्तिपलालकूटादिसाधारणरूपेण प्रतिभातः पुनरालोच्यमानो वृक्षात्मना प्रकाशते, पुनः सहकारात्मना स्फुटो भवति, तद्वदेव द्रष्टव्यम् । यद्येवं य एव ते पूर्वे नादास्तैरेवाभ्यस्यमानैरीदृशी स्फुटाभिव्यक्तिः स्यात्, उत्तरैर्वा केवलैरभ्यस्यमानैः । तत्र विजातीयनादाश्रयणमनर्थकम् । तथा प्रत्येकं हि व्यञ्जकत्वे सत्युत्तरैरस्फुटाभिव्यक्तिः, पूर्वैश्च स्फुटाभिव्यक्तिः स्यादिति व्युत्क्रमेणाप्युच्चारणं स्यात् । अतोऽपेक्षितक्रमविशेषानेकविजातीयनादसमुच्चयाश्रयणादवश्यं पूर्वनादाहितसंस्कारसहितान्तिमनादाभिव्यङ्ग्यः स्फोट इति अवश्यमङ्गीकर्तव्यमिति तुल्या संस्कारकल्पना । यद्वा, तवैवेयं संस्कारकल्पना । मत्पक्षे तु स्मृतिहेतुभिरेव संस्कारैः सिद्धत्यर्थावगतिरिति न संस्कारान्तरं कल्पयितव्यम् । ननु ममापि त एव भविष्यन्ति । न । तेषां स्मृतेरन्यत्र व्यापारात् । मत्पक्षे तु स्मृतिमेव जनयन्तोऽर्थप्रतिपत्तिं संस्कारा जनयन्ति । तथाहि प्रत्येकवर्णानुभवभावितैः संस्कारैः सहत्य सर्ववर्णगोचरैका स्मृतिर्जन्यते । तस्यां च युगपदवभासमाना वर्णा विनैव संस्कारान्तरेण सहत्यार्थप्रत्ययं जनयन्ति । त्वत्पक्षे तु नैवं सम्भवति । तथाहि—नादा हि न ज्ञायमानतया स्फोटं व्यञ्जयन्ति अश्रावणत्वात् । अगृहीतत्वादेव च न स्मर्यमाणतया व्यञ्जकत्वम्, येन वर्णवत्स्मर्यमाणाः कार्यं कुर्वन्तीत्युच्यते । सत्तया हि श्रोत्रसंस्कारं कुर्वन्तः शब्दं व्यञ्जयन्ति । न च युगपत्सत्तास्ति, क्रमवर्तित्वात् । अतः संस्कारद्वारमेव साहित्यमित्यवर्जनीयं संस्कारान्तरकल्पनम् । अथ मतम् । सत्यं न स्मृतिहेतुभिः स्फोटाभिव्यक्तिः, ये तु वर्णोपलब्धिहेतवो नादजन्याः श्रोत्रगताः संस्कारास्तैरेव वर्णानामिव स्फोटाभिव्यक्तिर्भविष्यति, किं संस्कारान्तरकल्पनयेति; तदयुक्तम् । तेषां क्षणिकत्वात् । नह्याद्यवर्णोपलब्धिहेतुः संस्कारोऽन्त्यवर्णश्रवणवेलायामवतिष्ठते । यद्यवतिष्ठते ततो विसर्जनीयश्रवणवेलायामपि गकारश्रवणमनुवर्तेत, तस्मात्क्षणभङ्गिनस्ते, अतो न तेषां सहत्यस्फोटाभिव्यञ्जकत्वं भवति । प्रत्येकाभिव्यक्तौ चोत्तरोत्तरेषामनर्थकत्वमित्युक्तम् । अथवा, ध्वनिसंयोग एव श्रोत्रसंस्कारो नान्यः । तस्य च विस्पष्टमेव भङ्गुरत्वं गत्वरत्वाद्ध्वनीनाम् । तस्मादन्ये स्थायिनः संस्काराः कल्प्याः । तथा वर्णातिरिक्तः शब्दः कल्प्य इति बहुप्रमाणकमापन्नम् । मत्पक्षे तु, दृढस्मृतिविपरिवर्तिनां वर्णानां वाचकत्वान्न किञ्चिद्दूनम् । ननु युगपत्स्मर्यमाणानां वाचकत्वे व्युत्क्रमेणाप्युच्चारिता वर्णा वाचकाः स्युः, न, तत्क्रमस्याप्यङ्गत्वात् । कः पुनः क्रमोऽङ्गम् ? नहि वर्णानां विभूनां नित्यानां च स्वरूपतः क्रमवत्त्वम् । न प्रतीतिक्रमः, तस्याः स्मृतिरूपाया एकत्वात् । एवं तर्हि ध्वनिक्रमो यो वर्णेष्वारोपितः प्रतिभासते सोऽङ्गमित्यदोषः । तस्माद्व्यञ्जकानां ध्वनीनां क्रमेण व्यङ्ग्येषु वर्णेषु समारोपितेन तद्वन्तः स्मर्यमाणा वर्णा वाचकाः, नान्यः शब्दोऽस्तीति सिद्धम् ।

सूत्रे मणिगणा इवे''ति स्मार्तदृष्टान्ताद्भारवाहकतास्फोरकत्वम्। अतोऽचेतनतुल्यत्वाद्ब्रह्मवादस्य समास-
त्वात् प्रश्नकर्त्र्या गार्ग्याः स्त्रीत्वेनाब्रह्मविष्टत्वेन च ब्रह्मश्रवणेऽनधिकारित्वाच्च, यथा "सरो वा आका-
शाद् भूयानि"त्यत्र कार्योत्कर्षमादाय भूयस्त्वोक्तिः, तथात्र अश्नुते इति न क्षरतीति वा योगेनाक्षरत्वं
प्रशासितृत्वं च स्मरणकालभूतसूक्ष्मप्रकृतिजीवविशेषाणामन्यतमस्यादस्य तदन्यतमपरिग्रह उपास-
नार्थं वक्तव्यः । नचात्र प्रापञ्चिकसर्वधर्मराहित्यस्य ब्रह्मधर्मस्य विरोधः शङ्क्यः । उपासनार्थत्वेनो-
पपत्तेः । नचैतदनुरोधेन ब्रह्मैवात्राऽस्त्विति युक्तम्। प्रष्टुः श्रवणानधिकारस्योपपादिततयाऽत्र वक्तुरुप-
देष्टृत्वस्याभावाद् वाक्यवैयर्थ्यापत्तेः। तस्मादत्राक्षरमन्यदेव, न तु ब्रह्मेति प्राप्ते, उच्यते—

अक्षरं परमात्मैव । कुतः ? अम्बरान्तधृतेः। पृथिव्याद्यम्बरान्तानां धारकत्वात्। नच विषयवाक्ये
अदर्शनात् स्वरूपासिद्धो हेतुरिति शङ्क्यम्। श्रुतौ व्याख्यातायां तात्पर्यसिद्धत्वात्। कथमिति चेत्?
इत्थम् । अत्र यद्यपि प्रश्नानेकत्वमापाततः प्रतीयते, तथापि पूर्वब्राह्मणे, अन्वाय्यनन्तरमाकाशस्योक्तत्वे-
ऽप्यत्र यदाकाशस्य पुनः कथनं तत्र भूताकाशपरम्, किन्तु सूक्ष्माद्यन्यतमप्रथमकार्यपरम्। ततोऽधिको
धारकस्तत्र तदन्यतमो जीवविशेषो वा न भवति। उक्ताकाशौतप्रोतत्वस्य तेषु जीवेषु क्वाप्यदर्शनात्।
एवं जडजीवयोर्निवृत्तौ तद्धारणं ब्रह्मकार्यत्वेनैव निश्चीयते। नच भारवाहकत्वापत्तिः, केवलस्य प्रोत-
स्यैव वस्तुभेदबोधकत्वेनौतप्रोतत्वस्योपादानतागमकत्वात्। "नैतच्चित्रं भगवति ह्यनन्ते जगदीश्वरे,
ओतप्रोतमिदं यस्मिंस्तन्तुष्वङ्ग यथा पट"इति श्रीभागवतवाक्यात्। नच श्रोतृदोषाद् ब्रह्मोपदेशो
नात्रेति शङ्क्यम्, दोषवत्त्वेऽपि ब्रह्मवित्त्वेनाधिकारित्वादुपदेशस्य युक्तत्वात्। नच ब्रह्मत्वे माना-
भावः, अतिप्रश्ने मूर्धविपातस्य पूर्वमुक्ततयाऽत्र तस्य पुनः करणेऽपि मूर्धविपाताभावस्यैव ब्रह्मवित्त्व-
गमकत्वात्। अतः सर्वाधारत्वेनात्र ब्रह्मैवोपदिश्यते । निरङ्कुशस्य सर्वाधारत्वस्यान्यत्राभावात्।
नन्वेवं सति ब्रह्मपदस्यात्र कुतोऽनुक्तिरिति शङ्क्यम्, परोक्षेण कथनार्थं तदनुक्तेः। अतोऽत्र ब्रह्म-
धर्मस्याम्बरान्तधारणस्योपदेशादक्षरं परमात्मैव ॥ १० ॥

ननु द्युभ्वाद्यधिकरणविषयवाक्ये सर्वविधारणं ब्रह्मधर्मत्वेन आश्रितमित्यन्यत्रापि तथाऽऽश्रयितुं न
शक्यम्, नियामकस्याभावादित्यत आह—सेत्यादि । सा च विधृतिरत्रापि ब्रह्मधर्म एव ।
चोऽप्यर्थे। कुतः ? प्रशासनात्। अत्राकाशोपादानप्रश्ने तदुत्तरत्वेनाक्षरं द्यावापृथिव्यादिविधारणं च
वदन् विधारणहेतुत्वेन मध्ये प्रशासनं वक्ति । "एतस्यैवाक्षरस्य प्रशासने, गार्गि द्यावापृथिवी
विधृते तिष्ठत" इत्यादि । प्रशासनं चाज्ञैव । तथाच यदि विधारणमन्यधर्मत्वेन स्वीक्रियते,
तदापि तद्भगवदाज्ञाहेतुकमेव । तिष्ठेति विश्वामित्रोक्तत्रिशङ्कुधारणवत्, नतु तदाकाशादिसामर्थ्य-
हेतुकम्। एतेनैवाक्षरं प्रशासनादिति सूत्रापत्तिरपि निरस्ता । आकाशान्तधर्मत्वेन प्रतीयमानाया
एव तस्याः प्रशासनहेतुकत्वस्य विवक्षितत्वेनाम्बरान्तधृतिपदस्यावश्यकत्वादिति ॥ ११ ॥

ननूक्तमुपासनार्थं ब्रह्मधर्मकथनमित्यत आह—अन्येत्यादि । अन्यस्य भावोऽन्यभावो ब्रह्मेतरधर्म-
स्तद्व्यावृत्तेः । एतस्यैवाक्षरस्येत्येवकारेण प्रशानस्यान्यधर्मत्वं व्यावर्त्यते । "एतद्वै तदक्षरं गार्गि अदृश्यं
द्रष्टृ" इत्यादिना चाकाशधर्तर्यक्षरे चेतनत्वबोधनेन जडत्वं निवर्त्यते। "यस्मिन्नाकाश ओतश्च प्रोतश्चे"ति
कथनेन जीवत्वं व्यावर्त्यते । एवमक्षरस्य जडजीवत्वनिवृत्तौ प्रशासनस्य धर्मत्वमेवेति तथेत्यर्थः।
चकाराद्, "यो वा एतदक्षरमविदित्वा गार्ग्यस्माल्लोकात् प्रैति स कृपणोऽथ यो वा एतदक्षरं गार्गि
विदित्वाऽस्माल्लोकात् प्रैति स ब्राह्मण" इति फलकथनमप्यक्षरस्य ब्रह्मत्वगमकम्। अतोऽत्र नोपासन-
प्रतिपादनम्। तस्मादक्षरं ब्रह्मैवेति सिद्धम् ॥ १२ ॥ ३ ॥

## ४ ईक्षतिकर्माधिकरणम् ।

( अभिध्यानश्रुतिप्रतिपाद्यमोङ्कारस्वरूपं, तस्य च ब्रह्मरूपतेति चतुर्थाधिकरणावतरणम् )

**ईक्षतिकर्मव्यपदेशात्सः ॥ १।३।१३ ॥**

**पञ्चमप्रश्ने—"एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोङ्कारस्तस्माद् विद्वानेतेनैकतरमन्वेति यद्येकमात्र" (प्र. ५।२) इत्यादिना। एकद्वित्रिमात्रोपासनया ऋग्यजुःसामभिर्मनुष्यलोकसोमलोकसूर्यलोकप्राप्तिपुनरागमने निरूप्य "अर्धचतुर्थमात्रोपासनया परं पुरुषमभिध्यायीत । स तेजसि परे सम्पन्नो यथा पादोदरस्त्वचा" ( प्र. ५।५ ) इत्यादिना "परात्परं पुरिशयं पुरुषमीक्षते" ( प्र. ५।५ ) इति ।**

---

**ईक्षतिकर्मव्यपदेशात्सः ॥ विषयवाक्यमाहुः—**

**पञ्चमप्रश्न इति ।** अथर्वणानां प्रश्नोपनिषदः पञ्चमे प्रश्ने । श्रुतिस्तु—

अथ हैनं शैब्यः सत्यकामः पप्रच्छ स यो ह वै तद्भगवन्मनुष्येषु प्रयाणान्तमोङ्कारमभिध्यायीत कतमं वा व स तेन लोकं जयतीति तस्मै स होवाचैतद्वै सत्यकाम परं चापरं च ब्रह्म यदोङ्कारस्तस्माद्विद्वानेतेनैवायतनेनैकतरमन्वेति स यद्येकमात्रमभिध्यायीत स तेनैव सम्वेदितस्तूर्णमेव जगत्यामभिसम्पद्यते तमृचो मनुष्यलोकमुपनयन्ते स तत्र तपसा ब्रह्मचर्येण श्रद्धया सम्पन्नो महिमानमनुभवत्यथ यदि द्विमात्रेण मनसि सम्पद्यते सोऽन्तरिक्षं यजुर्भिरुन्नीयते स सोमलोकं स सोमलोके विभूतिमनुभूय पुनरावर्तते, यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत स तेजसि सूर्ये सम्पन्नः । स सामभिरुन्नीयते सूर्यलोकं स सूर्यलोके विभूतिमनुभूय पुनरावर्तते । यः पुनरर्द्धचतुर्थमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत स तेजसि परे सम्पन्नो यथापादोदरस्त्वचा विनिर्मुच्यते एवं ह वै स पाप्मना विनिर्मुक्तः सोऽथर्वभिरुन्नीयते ब्रह्मलोकं स एतस्माज्जीवघनात् परात्परं पुरिशयं पुरुषमीक्षते इति ॥

अस्मिन्विषयवाक्ये पाठद्वयम् । स्वमते त्वयमेव पाठः । परमते तु—

स तेजसि सूर्ये सम्पन्नो यथा पादोदरस्त्वचा विनिर्मुच्यते, एवं ह वै स पाप्मना विनिर्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकमित्यादि ॥

अस्य प्रयोजनं त्वनुपदमेव स्फुटीभविष्यति । श्रुत्यर्थस्तु–पिप्पलादं प्रति सत्यकामप्रश्नः । यः कश्चिन्मनुष्याणां मध्ये प्रयाणान्तं यावज्जीव ओङ्काराऽभिध्यानेन कतम लोक जयतीति पृष्टवते, स होवाच पिप्पलादः । यत्, एतत् परं चापरं च ब्रह्मास्ति तदोङ्कारः । आयतनेन साधनेन ओङ्काराभिध्यानेनेत्यर्थः । एकतरं परमपरं वा । एकमात्रम् अकारमात्रम् । अथवा । एकमात्राप्रधानम् । अप्रधानीभूतमात्राद्वयं कृत्स्नमोङ्कारम् । सम्वेदितः तन्मात्रासाक्षात्कारवान् । ऋच इति । "पृथिव्यकारः स ऋग्वेद" इति श्रुतेः । महिमानम् विभूतिम् । यथेष्टचेष्टो भवतीत्यर्थः । मनसि सम्पद्यत इति । मनसा एकाग्रतया चिन्तनमित्यर्थः । यथाऽपरम् सूर्यान्तर्गतं पुरुषं प्रतीकेनाभिध्यायीत । सूर्ये सम्पन्नः प्रविष्टः । पादोदरः सर्पः जीर्णत्वग्वियुक्तः, तथा स पाप्मना विनिर्मुक्तः । एतस्माज्जीवघनात् । हिरण्यगर्भात् परात् परं, परमात्माख्यम् । पुरिशयम् सर्वशरीरानुप्रविष्टम् । इति विषयवाक्यार्थः ।

( ध्यानविषयः परपुरुषो वा विराट्पुरुषो वेति सन्देहः )

तत्र संशयः, परपुरुषः परमात्मा, ध्यानविषयः। अहोस्विद् विराट् पुरुषो ब्रह्मा वेति।

तत्रामुख्यप्रवाहपतितत्वाद् ब्रह्मलोकं गतस्य तदीक्षणमेव च फलं श्रूयते। न हि परमपुरुषस्य ब्रह्मत्वे तज्ज्ञानमेव फलं भवति । तस्माद् विराट् ब्रह्मा वाभिध्यानविषय इत्येवं प्राप्ते,

( परपुरुष एवेति सिद्धान्तः )

उच्यते—सः अभिध्यानविषयः परपुरुषः परमात्मैव। कुतः ? ईक्षतिकर्मव्यपदेशात्। जीवघनात्केवलजीवाधारभूताद् ब्रह्मलोकात्पररूपपुरुषदर्शनमीक्षतिः, तस्याः कर्मत्वेन व्यपदेशादुभयोः कर्मणोरेकत्वमपरं त्रिमात्रपर्यन्तं निरूप्य, परं ह्यग्रे निरूपयति। तथैव च श्लोके "तिस्रो मात्रा" इत्यादि । अभिध्यानस्य हि साक्षात्कारः फलम्। अतः फलरूपज्ञानस्य विषयत्वात् परपुरुषः परमात्मैव। मन्दशङ्कानिवृत्त्यर्थमेवेदं सूत्रम् । अत्र सर्वसङ्करवादिनामन्यथा पाठो भ्रमात्। तत्रापि विचारस्तुल्यः॥ १।३।१३ ॥ ४ ॥

---

संशयमाहुः—तत्रेति । परापरयोरुभयोरपि प्रकृतत्वं सन्देहबीजम् । त्रिमात्रेणार्द्धचतुर्थमात्रेण च परपुरुषध्यानस्योक्तत्वात् तत्तुल्यत्वेनामुख्यप्रवाहपतितत्वादित्यर्थः । ब्रह्मलोकमिति । ब्रह्मज्ञानफलं न भवति, किन्तु परप्राप्तिः फलं "ब्रह्मविदाप्नोति परमि"ति श्रुत्या प्रतिपाद्यते। अत्र तु तदीक्षणस्य फलत्वेन प्रतिपादनम्। तस्मात् परात्परशब्देन ब्रह्म न भवतीति भावः ।

पूर्वपक्षमाहुः—तत्रामुख्यप्रवाहपतितत्वादिति ।

सिद्धान्तं व्याकुर्वते—उच्यत इति। जीवघनात् । जीवानां घनः पिण्डीभावो यत्र तादृशात् अक्षरात् । उभयोरिति । ध्यानेक्षणकर्मणोरेकविषयत्वमित्यर्थः । तद्विवृण्वन्ति—अपरमिति । ब्रह्मोङ्कारयोरभेदोपक्रमादिति भावः। तथैव च श्लोकेति। विषयवाक्यादग्रे। तदैतौ श्लोकौ भवतः। "तिस्रो मात्रा मृत्युमत्यः प्रयुक्ता अन्योन्यसक्ता अनविप्रयुक्ताः क्रियासु बाह्याभ्यन्तरमध्यमासु सम्यक् प्रयुक्तासु न कम्पते ज्ञः" इत्यादि। युक्त्यन्तरमाहुः—अभिध्यानस्येति। मन्दशङ्केति। परं ब्रह्म न दृश्यते इति मन्दशङ्कानिवृत्त्यर्थमित्यर्थः । परमतपाठे अस्वरसं सूचयन्ति—अत्र सर्वसङ्करेति। श्लोके। तिस्रो मात्रा मृत्युमत्य इत्यनेन माण्डूक्यादौ तुरीयोपासनार्थं अर्धमात्रोक्तिदर्शनेन च अस्वरसः सूचितः। परन्तु दोषो नास्तीत्याहुः—तत्रापीति ॥ इति चतुर्थाधिकरणम् ॥

---

१ अत्रेत्थं व्याख्यानान्तराणि—

(१) तत्र शाङ्कराः—पूर्ववर्णे रूढस्याक्षरशब्दस्य जगद्धृतिलक्षणलिङ्गेन ब्रह्मणि "न क्षरति" इति योगवृत्तिराश्रिता । तद्वदिहापि देशापरिच्छिन्नफलश्रुतिलिङ्गेन परशब्दस्य आपेक्षिकपरत्वविशिष्टे हिरण्यगर्भे वृत्तिरस्त्विति दृष्टान्तसङ्गत्येदमाह—अत्र पूर्वपक्षे कार्यब्रह्मोपास्तिः, सिद्धान्ते परब्रह्मोपास्तिरिति फलभेदः । प्रश्नोपनिषदि श्रूयते—"यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत····" इति । तत्र ध्येयं वस्तु किं हिरण्यगर्भाख्यमपरं ब्रह्म, उत परं ब्रह्मेति विशये, अपरमिति पूर्वः पक्षः। सिद्धान्तस्तु—सः ध्यातव्यः परमात्मैव । कुतः ? ईक्षतिकर्मव्यपदेशात् । "परात्परं

पुरिशयं पुरुषमीक्षते" इति वाक्यशेषे ध्यातव्यस्य ईक्षतिकर्मत्वेन व्यपदेशात्, ध्यानेक्षणयोरेकविषयत्व-नियमात्। अतः, क्रममुक्त्यर्थमोङ्कारावलम्बनेन ध्यातव्यः परमात्मैवेति समञ्जसम् ॥

(२) रामानुजीये—आथर्वणिकाः सत्यकामप्रश्नेऽधीयते। "यः पुनरेतं त्रिमात्रेणोमित्यनेनैवाक्षरेण परं पुरुषमभिध्यायीत स तेजसि सूर्ये सम्पन्नो यथा पादोदरस्त्वचा विनिर्मुच्यत एवं ह वै स पाप्मना विनिर्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकं स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षत" इति। अत्र ध्यायतीक्षतिशब्दावेकविषयौ, ध्यानफलत्वादीक्षणस्य। "यथाक्रतुरस्मिँल्लोके पुरुषः" इति न्यायेन ध्यानविषयस्यैव प्राप्यत्वात्। परं पुरुषमित्युभयत्र कर्मभूतस्यार्थस्य प्रत्यभिज्ञानाच्च। तत्र संशय्यते, किमिहायं परं पुरुषमिति निर्दिष्टो जीवसमष्टिरूपोऽण्डाधिपतिश्चतुर्मुख उत सर्वेश्वरः पुरुषोत्तम इति। किं युक्तम्? समष्टिक्षेत्रज्ञ इति। कुतः? "स यो ह वै तद्भगवन्मनुष्येषु प्रायणान्तमोङ्कारमभिध्यायीत कतमं वा व स तेन लोकं जयति" इति प्रक्रम्यैकमात्रं प्रणवमुपासीनस्य मनुष्यलोकप्राप्तिमभिधाय, द्विमात्रमुपासीनस्यान्तरिक्षलोकप्राप्तिमभिधाय, त्रिमात्रमुपासीनस्य प्राप्यतयाऽभिधीयमानो ब्रह्मलोकोऽन्तरिक्षात्परो जीवसमष्टिरूपस्य चतुर्मुखस्य लोक इति विज्ञायते। तद्गतेन वेक्ष्यमाणस्तल्लोकाधिपतिश्चतुर्मुख एव। एतस्माज्जीवघनात्परात्परमिति च देहेन्द्रियादिभ्यः परादेहेन्द्रियादिभिः सह घनीभूताज्जीवव्यष्टिपुरुषाद्ब्रह्मलोकवासिनः समष्टिपुरुषस्य चतुर्मुखस्य परत्वेनोपपद्यते। अतोऽत्र निर्दिश्यमानः परमपुरुषः समष्टिपुरुषश्चतुर्मुख एव। एवं चतुर्मुखत्वे निश्चिते अरत्वादयो यथाकथञ्चिन्नेया इति प्राप्ते प्रचक्ष्महे—ईक्षतिकर्मव्यपदेशात्सः। ईक्षतिकर्म स परमात्मा। कुतः? व्यपदेशात्। व्यपदिश्यते हीक्षतिकर्म परमात्मत्वेन। तथाहि—ईक्षतिकर्मविषयतयोदाहृते श्लोके तमोङ्कारेणैवायतनेनान्वेति विद्वान्यत्तच्छान्तमजरममृतमभयं परं च" इति। परं शान्तमजरमभयममृतमिति हि परमात्मन एवैतद्रूपम्। "एतदमृतमभयमेतद्ब्रह्म" इत्येवमादिश्रुतिभ्यः। एतस्माज्जीवघनात्परात्परमिति च परमात्मन एव व्यपदेशो न चतुर्मुखस्य। तस्यापि जीवघनशब्दगृहीतत्वात्। यस्य हि कर्मनिमित्तं देहित्वं स जीवघन इत्युच्यते। चतुर्मुखस्यापि तच्छ्रूयते "यो ब्रह्माणं विदधाति पूर्वमि"त्यादौ। यत्पुनरुक्तमन्तरिक्षलोकस्योपरि निर्दिश्यमानो ब्रह्मलोकश्चतुर्मुखलोक इति प्रतीयतेऽतस्तत्रस्थश्चतुर्मुख इति, तदयुक्तम्। "यत्तच्छान्तमजरममृतमभयम्" इत्यादिनेक्षतिकर्मणः परमात्मत्वे निश्चिते सतीक्षितुः स्थानतया निर्दिष्टो ब्रह्मलोको न क्षयिष्णुश्चतुर्मुखलोको भवितुमर्हति।

किञ्च, "यथा पादोदरस्त्वचा विनिर्मुच्यत एवं वै स पाप्मना विनिर्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकमि"ति सर्वपापविनिर्मुक्तस्य प्राप्यतयोच्यमानं न चतुर्मुखस्थानम्। अत एव चोदाहरणश्लोक इममेव ब्रह्मलोकमभिरस्य श्रूयते "यत्तत्कवयो वेदयन्ते" इति। कवयः सूरयः। सूरिभिर्दृश्यं च वैष्णवं पदमेव। "तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः" इत्येवमादिभ्यः। न चान्तरिक्षात्परश्चतुर्मुखलोक; मध्ये स्वर्गलोकादीनां बहूनां सद्भावात्। अत एव "एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोंकारस्तस्माद्विद्वानेतेनैवायतनेनैकतरमन्वेती"ति प्रतिवचने यदपरं कार्यं ब्रह्म निर्दिष्टं तदैहिकामुष्मिकत्वेन द्विधा विभज्यैकमात्रं प्रणवमुपासीनानामैहिकं मनुष्यलोकप्राप्तिरूपं फलमभिधाय, द्विमात्रमुपासीनानामामुष्मिकमन्तरिक्षशब्दोपलक्षितं फलं चाभिधाय, त्रिमात्रेण परब्रह्मवाचिना प्रणवेन परमपुरुषं ध्यायतां परमेव ब्रह्म प्राप्यतयोपदिशतीति सर्वं समञ्जसम्। अत ईक्षतिकर्म परमात्मा ॥

(३) माध्वे—"सदेव सौम्येदमग्र आसीदि"त्यादिना सतः स्रष्टृत्वमुच्यते, तच्च सद् "बहु स्यां प्रजायेये"ति परिणाम प्रतीतेर्न विष्णुः, स ह्यविकारः "सदा शुद्धो नित्य आत्मा सदा हरिरि"त्यादिना

विष्णुरत्रोच्यते ।
अविकारः प्रसिद्ध इति अतो ब्रवीति, तदैक्षतेतीक्षति कर्मव्यपदेशात् स एव विष्णुरत्रोच्यते ।
"नान्योऽतोऽस्ति द्रष्टा" "नातोऽस्ति द्रष्टे"त्यादिना तस्यैव हि तल्लक्षणं बहुत्वं चाविकारेणैवोक्तम् ।
"अजायमानो बहुधा विजायत" इति ॥

(४) निम्बार्कः—"पुरिशयं पुरुषमीक्षते", इतीक्षतेः कर्म ब्रह्माण्डान्तर्गतो ब्रह्मलोकस्थो ब्रह्मा न
भवति, किन्तु स एव प्रकृतः स्वासाधारणाप्राकृतब्रह्मलोकेशः यः परमात्मेक्षति कर्म । कुतः ? "यत्त-
च्छान्तमजरमभय"मित्यादिना तद्धर्माणां व्यपदेशात् ॥

(५) मैक्षवे—प्रश्नोपनिषदि पञ्चमप्रश्ने "एतद्वै सत्यकाम परमपरं च ब्रह्म यदोङ्कारस्तस्माद्विद्वाने-
नेतेनैवायतनेनैकतरमन्वेती"ति प्रक्रम्य "यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायी-
ते"ति श्रूयते, अत्र संशयः, किमत्राभिध्येयं परं ब्रह्म, उतापरं हिरण्यगर्भाख्यमिति, उभयोरेवात्र
प्रक्रान्तत्वात्, ( वक्ष्यमाणस्य ब्रह्मलोकगतिरूपफलस्य कार्यब्रह्मोपासनायामेवौचित्यात् ) हिरण्यगर्भ-
स्यापीतरकार्य्यापेक्षया परत्वसम्भवाद्येति । तत्रायं निर्णयः, अस्मिन्नपि वाक्ये स परमात्मैव ग्राह्यः,
ईक्षतिकर्मव्यपदेशादित्यर्थः । वाक्यशेषे हि "स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते" इती-
क्षणकर्मतया प्रकृतस्याभिध्येयस्य व्यपदेशो दृश्यते, अभिधानस्य समानविषयकसाक्षात्कारफलकत्वौ-
चित्यात् । तच्चेक्षतिकर्म हिरण्यगर्भो न सम्भवति तस्य समस्तजीवमयतया जीवघनत्वेन ततः परा-
दावरणवर्गात् परत्वानुपपत्तेः । नन्वेवं परब्रह्माभिध्यानपरत्वे कथं "तेजसि सम्पन्नः स सामभिरुन्नीयते
ब्रह्मलोकमि"ति वाक्यशेषोक्तं ब्रह्मलोकफलमुपपद्येतेति कषायसत्त्वे क्रममुक्तिफलसम्भवादित्येवं केचनेद-
मधिकरणं व्याचक्षते । तत्र । अस्याधिकरणेऽस्योक्तवाक्यविषयत्वानौचित्यात् । तथाहि—उदाहृतवाक्यस्था-
त्रिमात्रप्रणवेनोक्तामुपासनामुत्तरस्मिन् षष्ठे प्रश्ने वाक्यं "तिस्रो मात्रामृत्युमत्यः प्रयुक्ता" इत्यनेन
विनिन्द्य, तुरीयाख्यस्य मात्रस्य परब्रह्मण उपासनां तत्रैव प्रश्ने वक्ष्यति "नातः परमस्ती"ति प्रशंसापूर्वक-
मतोऽवधार्य्यते पञ्चमप्रश्नो परब्रह्मोपासनां न विदधातीति । किञ्च, यत्त्वभिध्यायति तत्साक्षात्करोतीति
सामान्यत एव प्राप्ततया तद्वचनं व्यर्थमतः पञ्चमप्रश्ने कार्यब्रह्मोपासनायाः परब्रह्मदर्शनमेव फलमुक्तम् ।
तस्मात्, षष्ठप्रश्नवाक्यमेवास्याधिकरणस्य विषयः । षष्ठप्रश्नस्यैव सशब्दस्य सूत्रे प्रत्यभिज्ञायमानत्वाच्च ।
तद्यथा, षष्ठप्रश्नः श्रूयते "इहैवान्तः शरीरे स पुरुषो यस्मिन्नेताः षोडशकलाः प्रभवन्तीति" । तत्र
संशयः, किमयं पुरुषो जीवः ? किं वा परमात्मेति ? तत्रायं निर्णयः, सशब्देनोक्तः पुरुषः परमात्मैव,
कुतः ? ईक्षतिकर्मव्यपदेशात् । "स ईक्षां चक्र"इति वाक्यशेषे सशब्देन परामृष्टस्य यथोक्तपुरुषस्य ईक्षण-
रूपकर्मकथनादीक्षणकर्मणां वा प्राणादीनां कथनादित्यर्थः । न हीदं प्राणादिषोडशकलासृष्ट्यर्थं तेषामीक्षणं
जीवस्य सम्भवति, ईक्षायाः करणादीनां तदानीमभावात् । षोडशकलाश्च प्राणः श्रद्धा पञ्चभूतेन्द्रियमनो-
ऽन्नवीर्यतपोमन्त्रकर्मलोकनामानीति तत्रैवोक्ताः । अस्मिंश्च व्याख्याने सशब्दोऽपि सफल इति बोध्यम् ॥

एकतर-
(६) भास्करीये—"एतद्वै सत्यकामः परं चापरं च ब्रह्म यदोङ्कारस्तस्माद्विद्वानेतेनैवायतनेन एकतर-
मन्वेती"ति प्रकृत्य श्रूयते—"यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीते"ति । तत्र सन्देहः
किमपरं ब्रह्म ध्यातव्यं किं वा परमिति ? उभयोः प्रकृतत्वात् । "स सामभिरुन्नीयते ब्रह्मलोकमि"ति
लोकश्रुतेरपरं ब्रह्मेति पूर्वपक्षः । कथं परं पुरुषमिति विशेषणं पुरुषान्तरापेक्षया वा भविष्यतीति प्राप्ते,
प्रतिविधीयते । स एव परमात्माऽभिध्येयः, य ईक्षतिकर्मत्वेन व्यपदिष्टः । "स एतस्माज्जीवघनात् परात्
परं पुरिशयं पुरुषमीक्षत" इति परपुरुषशब्दाभ्यां प्रत्यभिज्ञानात् । ध्यानस्य चेदं फलम्, यो ध्यायति
परं पुरुषं स तमेव पश्यतीति । परमिति च श्रुत्या विशेषणात् प्रकृतबुद्धिरपरविषया बाध्यते । "यत् तत्

शान्तमजरममृतमभयं परं चेत्युपसंहारात्, परशब्दः परमात्मपरो निश्चीयते। परस्य च प्रकृतत्वात्। अपरग्रहणं चैकैकमात्रोपासनापेक्षं द्रष्टव्यम्। जीवघनादिति कोऽर्थः? तदुच्यते। घनो मूर्तिरविद्या-कर्मभ्यां मूर्तिभावमापन्नो जीवः, शरीरेन्द्रियेभ्यश्च परस्तस्मात्। अथवा, कार्यब्रह्मलोको हिरण्यगर्भनिवासो लोकानां परलोकः करणपरिवृत्तानां तत्र घनभावोपपत्तेः, ततः परात् परमात्मा "स सामभिरुन्नीयते ब्रह्मलोकमिति। ब्रह्मैव लोक इति व्याख्येयम्। न हि सगुणनिर्गुणकृतो भेदोऽस्तीति वक्ष्यामः॥

(७) श्रीमद्वल्लभाचार्यमतेऽयमभिप्रायः—आथर्वणानां प्रश्नोपनिषदः पञ्चमे प्रश्ने श्रूयते। "एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोङ्कारः, तस्माद् विद्वानेतेनैवायनेनैकतरमन्वेति यद्येकमात्रमभिध्यायीत" इत्यादिना एकद्वित्रिमात्रोपासनया ऋग्यजुःसामभिर्मनुष्यसोमसूर्यलोकप्राप्तिपुनरागमने निरूप्य, "अर्धचतुर्थमात्रोपासनया परं पुरुषमभिध्यायीत स तेजसि परे सम्पन्नो यथा पादोदरस्त्वचे"त्यादिना परात् परं पुरिशयं पुरुषमीक्षत" इति। अत्र ध्यानविषयः परः पुरुषः किं परमात्मा, उत विराट् पुरुषो, ब्रह्मा वेति संशयः। परापरयोरुभयोरपि प्रकृतत्वात्। तत्र, तावदोङ्कारेण प्रतीकेन ब्रह्मोपासनार्थमोङ्कारस्य द्विविधब्रह्मरूपतामुक्त्वा तेनैवायतनेनैकतरमन्वेतीत्येकतरप्राप्तिं प्रतिज्ञाय, साधनैक्ये कथं फलभेद इत्याकाङ्क्षायां भावनाप्रकारभेदस्य तत्र नियामकत्वं बोधयितुमेकद्वित्रिमात्रोपासनया तत्तल्लोकप्राप्तिपुनरागमने निरूप्यार्धचतुर्थमात्रोपासनया परतेजःसम्पत्तिपापनिर्मुक्तिब्रह्मलोकप्राप्तीरुक्त्वा, परपुरुषलक्षणं फलत्वेन वदति। तत्र, परपुरुषध्यानस्य त्रिमात्रेणाप्युक्तत्वादर्धचतुर्थमात्रेणापि तद्ध्यानस्य तत्तुल्यकक्षत्वेनामुख्यप्रवाहपतितत्वात् प्राप्यब्रह्मलोकस्याप्यमुख्यत्वात्तं लोकं गतस्य यत् परपुरुषेण फलं श्रूयते, तत्, पूर्वापेक्षया तत्परस्यैव, न तु सर्वतः परस्य। "ब्रह्मविदाप्नोति परमि"त्यत्र परप्राप्तेरेव फलत्वेन सिद्धतया तज्ज्ञानमात्रस्य फलत्वाभावात्। अतस्तात्पर्यलिङ्गात् फलादपरस्यैव सिद्धेर्विराड् वा, तदभिमानी वा ध्यानविषयः। स एवेक्षतिकर्मभूतः। नच जीवघनात् परात्परमिति विशेषणानन्वयः, ल्यब्लोपपञ्चम्या जीवघनं प्राप्येत्यर्थे पूर्वेभ्यः परं जीवघनं प्राप्य पुरिशयमित्यर्थात् सुखेनान्वयसिद्धेः। अतो, न परमात्मेति प्राप्ते, प्रतिवदति—

ईक्षतीत्यादि। अभिध्यानविषयः परपुरुषः परमात्मैव। कुतः? ईक्षतिकर्मव्यपदेशात्। ईक्षतिर्दर्शनं तत्कर्मत्वेन निर्देशात्। अत्र जीवघनो हि मुक्तजीवानां घनः पिण्डीभावो यत्र तादृशो ब्रह्मलोकोऽक्षरं सर्वस्मात् परं तस्मात् परः पुरिशयः सर्वान्तर्यामी यः पुरुषः सोऽत्र तथा व्यपदिश्यते। ध्यानेक्षणयोरेककर्मकत्वम्। अन्यथा "द्वे ब्रह्मणी" इत्युपक्रम्य, त्रिमात्रपर्यन्तमपरं निरूप्य, यदि परं न निरूपयेत्, प्रतिज्ञा न पूर्येत। मन्त्रे च "तिस्रो मात्रा मृत्युमत्यः प्रयुक्ता" इत्युक्त्वा, द्वितीयमन्त्रोत्तरार्धे "यत्तच्छान्तमजरममृतमभयं परं परायणं चे"ति फलान्तरं च न वदेत्। किञ्चाभिध्याने हि साक्षात्कारः फलम्, अतः, फलरूपज्ञानविषयत्वादपि परमात्मैवात्र युक्तः। एतेनैव परशब्दादौ ल्यब्लोपपञ्चम्यप्यपास्ता। तस्माद् ध्यानविषयः परमात्मैव। इदं च सूत्रं परमात्मा न दृश्यत इति मन्दाशङ्कानिवृत्त्यर्थं प्रसङ्गादुक्तम्। अत्र यद्यपि शङ्कराचार्यादिभि"र्यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत स तेजसि सूर्ये सम्पन्नः स सामभिरुन्नीयते ब्रह्मलोकमि"ति पाठ आद्रियते, स त्विदानीन्तनेषु पाठकेषु न प्रसिद्ध इत्युपेक्षणीयः॥ १३॥ ४॥

## ५ दहराधिकरणम् ।

### ( दहरविद्योपदेशः )

### दहर उत्तरेभ्यः ॥ १।३।१४ ॥

"अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मि-
न्यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यम्" ( छां. ८।१।१ ) इत्यादि श्रूयते ।

( दहरत्वेनोपदिष्टो परमात्मा जीवो वा? जीवश्चेद् व्यर्थोऽधिकरणारम्भः )

तत्र संशयः । किं जीवोऽन्वेष्टव्यो ब्रह्म वेति जीवब्रह्मवादो निर्णीयते । श्रुत्यर्थो हि
निर्णेतव्यः । तद्यदिदमस्मिन्वाक्ये परमार्थतो जीव एव ब्रह्म चेच्छास्त्रं च तत्रैव समाप्तं

---

दहराधिकरणमाहुः—दहर उत्तरेभ्यः ॥ विषयवाक्यमुपन्यस्यन्ति—अथेति ।

अथ विषयवाक्यम्—

विजिज्ञासितव्यं, तं चेद्ब्रूयुर्यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः किं
तदत्र विद्यते यदन्वेष्टव्यं यद्वा व विजिज्ञासितव्यमिति स ब्रूयात् यावान्वा अयमाकाशस्तावानेषो-
ऽन्तर्हृदय आकाशः उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते उभावग्निश्च वायुश्च सूर्याचन्द्र-
मसावुभौ विद्युन्नक्षत्राणि यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन् समाहितमित्यादि ।

अथ भाष्यम्—श्रूयते । छान्दोग्योपनिषदि दशमप्रपाठके श्रूयते । ब्रह्मपुरे । शरीरे दहरं
अल्पं, पुण्डरीकम् हृदयकमलम् । वेश्म इव वेश्म ब्रह्मणः उपलब्ध्यधिष्ठानं दहरोऽस्मिन्नन्तराकाशः,
आकाशाख्यं ब्रह्म आकाश इवाशरीरत्वात् विचार्य ज्ञेयम् । आचार्यं ब्रूयुः । अन्तेवासिन इति शेषः ।
आचार्यान्तेवासिसम्वादं श्रुतिर्वदति । स ब्रूयात् आचार्यो ब्रूयात् ॥

संशयमाहुः—तत्रेत्यादि । अल्पं हृदयकमलम् । तत्राप्याराग्रमात्रं जीवः प्रतीयते । अन्तेवासिभिः
पृष्टः आचार्यो वदति, यावान्वा आकाश इत्यादिना ब्रह्मापि । अत एव संशय इत्यर्थः । तल्लिङ्गाधिकरणे[1]
चिदाकाशस्य ब्रह्मणः सर्वाधारत्वकथनात्किमनेनाधिकरणेनेत्यत आह—जीवेति । उपाधिभेदात् भेदेऽपि
वस्तुतः, चैतन्यमात्रत्वात् जीवाभिन्नमेव ब्रह्मेति वादो जीवब्रह्मवादः स सम्भवति न वेति निर्णीयते
तथा चैतन्निर्णयस्य पूर्वमकृतत्वात् तदर्थमेतत्प्रणयनमिति भावः । ननु किं तन्निर्णयेनेत्यत आहुः—
श्रुत्यर्थ इति । तथा च तन्निर्णयार्थमेतन्निर्णय इति भावः । ननु अधिकरणस्य प्रयोजनं इदमित्यत्र
किं गमकमत आह—तदिति । **समाप्तमिति** । पर्यवसितमित्यर्थः । व्यर्थमिति सामान्ये नपुंसकम्
तथा च यदि तथा स्यात्, तदा घटाकाशादिवत् उपाधिभेदस्य इतरत्वाप्रयोजकत्वादितरपरामर्शसूत्रव्याहत्य
व्यर्थ एवाधिकरणारम्भः स्यात्, एतस्यैव वाक्यश्रुतिवाच्यत्वापातेन नेति निषेधोऽपि न सम्भवेत्, तस्मा-
दस्मिन्नधिकरणे जीवब्रह्मैक्यकृतसर्वसङ्करवादस्य मायावादस्य निराकृतिरेव मुख्या, सा च जीवस्य पर-

---

१ तल्लिङ्गाधिकरणे—आकाशस्तल्लिङ्गादित्यधिकरणे । तत्र च चिदाकाशरूपस्य ब्रह्मणः सर्वाधारत्वनिरूपणात् । २ मुक्तत्वा-
दित्यपि पाठो दृश्यते, परं स न साधीयान् ।

चेद् व्यर्थमधिकरणारम्भः । इदमेव च वाक्यं श्रुत्या वक्तव्यं च भवेत् । तस्माद-स्मिन्नधिकरणे मुख्या सर्वसङ्करवादादिनिराकृतिः ।

( दहर आकाशो वा जीवो वा ? ) .

किं तावत् प्राप्तम् ? दहर आकाशो जीव इति । अत्रावान्तरप्रकरणद्वयम् । तत्र द्वितीये प्रजापतिप्रकरणे जीव एवामृताभयरूपः प्रतिभाति । स्पष्टार्थं च द्वितीय-प्रकरणम् । तस्मात्प्रथमेऽपि जीव एव तादृशधर्मवान् भवितुमर्हति । अर्थानुगुण्य-मपि व्याख्येयम् । अयमेव "जीवो ब्रह्म" "अयमात्मा ब्रह्म" ( बृ. ४।४।५ ) इति श्रुतेः । मैत्रेयीब्राह्मणं चानुगुणं भविष्यति । तस्य पुरं शरीरं, तत्र हृदयकमलं सूक्ष्मम् । तत्राराग्रमात्रो जीव एवाकाशः । तास्थ्यात्तद्व्यपदेश इति । अन्वेष्टव्यस्तु तस्मिन् विद्यमानस्तन्महिमा । वासनारूपेण सर्वं तत्र वर्तत इति । अन्यथोभयत्र,

---

मुक्तितादशायामपि ब्रह्मनियम्यत्वे पर्यवस्यति इदं परामर्शसूत्रे वक्ष्यते । अतोऽधिकरणसार्थक्यानुपपत्तिरेव प्रणयनप्रयोजनगमिकेति भावः ॥

पूर्वपक्षमाहुः—किं तावदिति । द्वयमिति । दहरविद्यारूपं, इन्द्रप्रजापतिसम्वादरूपं च । प्रति-भातीति । तत्र चतुर्भिः पर्यायैर्जाग्रदादिसुषुप्त्यन्तावस्थाचतुष्टयेन जीवस्यैव प्रतिपादनादिति भावः । अर्थानुगुण्यमिति । कश्चिदर्थः विरुद्धश्चेत् प्रकरणान्तरं भिन्नं कल्पनीयम्, नो चेत्तदर्थानुगुण्यं व्याख्ये-यम् । दहराकाशं प्रक्रम्य एषः अपहतपाप्मा जीव इति अङ्गुल्या निर्देश इत्यानुगुण्यमिति भावः । अत्र श्रुतिप्रमाणमाहुः—अयमिति । मैत्रेयीति । न वा अर इत्यादिनाऽऽनुगुणमित्यर्थः । अन्यदप्यर्थानुगु-ण्यमाहुः—तस्येत्यादिना । सूक्ष्ममिति "तस्मान्ते सुषिरꣳ सूक्ष्ममि"ति श्रुतेः । महिम्नः स्वरूप-माहुः—वासनेति । अन्यथा । ईदृशमहिम्नोऽनङ्गीकारे । उभयत्र सर्वं समाहितं "सर्वाणि च

---

१ तथा च, उपधिभेदस्येतरत्वाप्रयोजकत्वादाकाशतुल्यतासम्भवादितरपरामर्शसूत्रव्याहत्याऽधिकरणारम्भो व्यर्थ एव स्यात् । एतस्यैव वाक्यस्य श्रुतिवाच्यत्वापातेन, नेति निषेधोऽपि न सम्भवेत् । तस्मादस्मिन्नधिकरणे जीवब्रह्मैक्यकृतसर्वस-ङ्करवादस्य मायावादस्य च निराकृतिरेव मुख्या । सा च जीवस्य परममुक्तिदशायामपि ब्रह्मनियम्यत्वे पर्यवस्यति, तदिदं परामर्शसूत्रे प्रदर्शयिष्यते । दहरसूत्रे सर्वसङ्करवादादिनिराकरणवाचकपदज्ञानं प्रमाणं नास्तीति अधिकरणसार्थक्यानुपपत्तिरेव प्रणयनप्रयोजनगमिकेति ध्येयम् । एवंच, श्रुतार्थापत्तिरत्राभिहितानुपपत्तिरूपाधिकरणार्थो ह्यभिधार्यः, सोऽत्रानुपपन्नत्वेन ह्यासस्वलिङ्गाधिकरणेन गतार्थत्वात् । तथासत्यर्थान्तरं सर्वसङ्करवादादिनिराकरणं रूपं कल्पयति । यथा "ज्योतिष्टोमेन स्वर्ग-कामो यजेत" इत्यत्र वाक्यावगतज्योतिष्टोमस्य क्षणिकतया स्वर्गसाधनतानुपपत्त्या मध्यवर्त्यपूर्वं कल्प्यत इति वेदान्तपरि-भाषाकारः । वस्तुतस्तु, द्वारमित्यादौ द्वितीयाऽभिहिता कर्मताऽनुपपन्ना सती स्वान्वययोग्यां क्रियां कल्पयतीत्यभिहितानुपप-त्तिरेवार्थाध्याहारपक्षमावायादरणीया लाघवात्, तथा च सर्वसङ्करवादादिनिराकरणस्य अधिकरणावाच्यत्वेऽपि अभिहिता-नुपपत्तिरूपप्रमाणप्रमितत्वेन सर्वसङ्करवादादिनिराकरणवाचकपदज्ञानं प्रमाणं नास्तीत्यसिद्धम् । शब्देन प्रत्यक्षेण वा प्रमित-स्यार्थस्यार्थान्तरं विनाऽनुपपद्यमानस्योपपत्तयेऽर्थान्तरकल्पना, सेयं प्रमाणान्तरमिति मीमांसकाः, पदरूपवाचकस्याध्याहृतस्य सत्त्वाच्च । अधिकरणार्थस्यानुपपन्नत्वाभावात्सार्थक्यपदम् । यदि च तल्लिङ्गाधिकरणेन गतार्थत्वादधिकरणार्थस्यानुपपत्तिरस्त्ये-वेति सार्थक्यपदमसङ्गतमिति तत्स्थलेऽर्थपदं प्रयोक्तव्यमिति विभाव्येत तदोमिति ब्रूमः । यद्वा, अधिकरणसार्थक्येत्यस्याय-मर्थः । अर्थेन सह सार्थं, सार्थं एव सार्थकम् । अधिकरणार्थस्य चानुपपत्त्यभावादधिकरणं सार्थकम् । सार्थकमेव सार्थक्यम् । स्वार्थे ष्यञ् । तादृशस्यानुपपत्ति । अधिकरणस्य प्रयोजनं सर्वसङ्करवादादिनिराकरणं तस्य गमिका तत्र प्रमाणमिति यावत् ।

२ तत्र जीव इत्युक्ते कथमाकाशाभेद इत्याकाङ्क्षायामाह—तात्स्थ्यादिति । तात्स्थ्यादित्याकाशस्थत्वात्, जीवाकाशस्य व्यपदेशः आकाशाभेदः, "आदित्यो वै सर्वा देवता" इतिवत् । ३ महिम्नः स्वरूपमुक्तं वासनेत्यादिना । तथा च वासना-रूपेण तत्र विद्यमानमशेषं सर्वमेव तन्महिमेत्यर्थः । इदमेव तापनीयेऽप्युक्तं "सर्वं सर्वमयं सर्वे जीवाः सर्वमयास्तया-प्यल्पा." इति । वसनाश्च "ऊतयः कर्मवासना." कर्मभिर्भिन्नाः सप्तमस्कन्धे निरूपिताः । अन्यत्र च—"दृढभावनया त्यक्तपूर्वापरविचारणम् । यदादानं पदार्थस्य वासना सा प्रकीर्तिता" इत्येतेन रूपेण ।

सर्वकथनं विरुद्धमापद्येत। भूतानि महाभूतानि पुत्रादयो वा। तं चेद्ब्रूयुरित्यादिना नित्यतामुपपाद्यैष आत्मेत्यादिना तस्यैव ब्रह्मत्वमुपदिशति, तज्ज्ञानं च प्रशंसति। स्वात्मज्ञानिनः कामसिद्धिं चाह—य इहेत्यादिना। येऽपि च विरुद्धा धर्माः प्रतिभान्ति अहरहर्गमनादयस्तेऽपि स्वकल्पितजीवानां स्वप्नमायामनोरथादिषु तेषामेव गमनागमने प्रति, स्वातिरिक्तस्य ब्रह्मणोऽभावात्। एवं लोकाधारत्वमपि। ब्रह्मचर्यं च तस्य साधनमिति। योगश्च "तयोर्ध्वमायन्नमृतत्वमेति" (क. ६।१६) इति च। तस्माज्जीव एव दहर इत्येवं प्राप्ते,

( परमात्मत्वसमर्थनम् )

उच्यते—दहरः परमात्मा न जीवः। कुतः? उत्तरेभ्यः। उत्तरत्र वक्ष्यमाणेभ्यो हेतुभ्यः। तेषामपि साध्यत्वादेवमुक्तम्। जीवो नाम भगवदंशो न भगवानेवेत्यग्रे

---

भूतानी"त्यत्र। नन्वेतस्य जीववाक्यत्वं न सम्भवति, तं चेद्ब्रूयुरित्यादिना दहरान्तस्थस्य ब्रह्मत्वोपदेशादित्यत आह—तं चेदिति। तस्यैव। जीवस्यैव। उपदिशतीति। उपासनार्थमिति शेषः। य इहेत्यादिना। "य इहात्मानमनुविद्य व्रजन्ती"त्यादिना। ननु "इमाः प्रजाः अहरहर्गच्छन्त्यः एतं ब्रह्मलोकं न विन्दन्ती"त्यादिग्रन्थासङ्गतिः, जीवान्तराणां जीवान्तरे गमनाभावात्। किञ्च, सत्यलोके अहरहर्गमनासम्भवाद्ब्रह्मैव लोको ब्रह्मलोक इति समासाश्रयणेन ब्रह्मण एव तत्र विवक्षितत्वात्, ब्रह्मलोकपदासङ्गतिरित्यत आह—येऽपीत्यादि। प्रतिलक्षणे। स्वाज्ञानकल्पितानां जीवानां स्वप्नादिषु सिद्धत्वात् तेषामेव गमनागमने लक्षीकृत्य प्रवृत्तं वाक्यमिति भावः। एवं कल्पनायां बीजमाहुः—स्वातिरिक्तस्येति। तत्त्वमसीत्यादिवाक्येषु तथैव सिद्धत्वादिति भावः। "अयमात्मा स सेतुर्विधृति"रित्यादिवाक्यस्य "यथा गन्तारोऽज्ञानकल्पितास्तद्वल्लोका अपी"ति नासङ्गतिरित्याह—एवमिति। अमृतत्वमेतीति। अग्रे "तद्य एवैतं ब्रह्मलोकं ब्रह्मचर्येणानुविन्दन्ती"त्यादि। अथ च "या एता हृदयस्य नाड्य" इत्यादि "अमृतत्वमेती"त्यन्तस्य वाक्यस्य जीवभावस्याज्ञानकल्पितत्वाङ्गीकारे सङ्गतिः। कर्मणः अविद्वदधिकारकत्वात् तादृशस्याज्ञानवत्त्वादिति भावः। तस्मादिति। उत्तरप्रकरणस्थादित्यर्थः॥

सिद्धान्तमाहुः—उच्यत इति। स्वमते अज्ञानकल्पितभिन्नभावरूपो जीवो भवतीति सूचयितुं जीवस्वरूपमाहुः—जीवो नामेति। एवंच दहरः द्विविधोऽपि जीवो नेति भावः॥

---

१ यदि जीवमद्भिन्नो वासनारूपत्वं नोपगम्येत, तदा, यावानित्यादिनाऽन्तर्बहिश्च सर्वनिरूपणं प्रत्यक्षविरुद्धमापद्येत। २ न च वासनारूपस्य सर्वस्याङ्गीकारे यथाकथञ्चिद् द्यावापृथिव्यादिवासनासम्भवेऽपि, सर्वं समाहितं सर्वाणि च भूतानीति भूतपदविरोधः स्यात्, मा हिंस्यात्सर्वा भूतानीत्यादौ भूतपदस्य जीवविशिष्टदेहवाचकताया निश्चितत्वात्, प्रकृते ■ भूतपदस्य सर्वपदेन विशेषणाल्लोके च तत्तज्जीवविशिष्टसर्वदेहविषयकानुभवस्य वक्तुमशक्यतया तद्विषयकवासनाया अशक्यवचनत्वादिति वाच्यम्; विशेषणीभूतस्य सर्वपदस्य वृत्तिसङ्कोचे भूतानीत्यनेन महाभूतानि पुत्रादयो वा ग्रहीतुं शक्यन्त इति अनुभवविरोधाभावात्, दृढभावनया पदार्थोदानं विवक्षितं, तेन वाक्योक्तवासनाप्रकीर्तनं सम्भवति। ३ अग्रे "तद्य एवैतं ब्रह्मलोकं ब्रह्मचर्येणानुविन्दन्ती"त्यादिना यज्ञादीनां ब्रह्मचर्यत्वरूपेण ब्रह्मलोकप्राप्तिसाधनत्वमुक्तम्। ततः "अथ या हृदयस्य नाड्यः" इत्यादिना "तयोर्ध्वमायन्नमृतत्वमेति" इत्यन्तेन तत्र गमनस्योपायभूतो योगो गमनप्रकारश्चोक्तः। तत्सर्वं गन्तुः काल्पनिकत्वे कथं सङ्गच्छते इत्याद्यशङ्कावारणाय मूले ब्रह्मचर्यमित्यादि। ४ उत्तरत्र वक्ष्यमाणसूत्रविषयीभूते वाक्यशेषे। तथा च, विषयवाक्ये ब्रह्मपुरं शरीरं आत्मोपनिषदि बाह्यदेहस्यात्मत्वात्। तत्र दहरमक्षरं बालकं वा पुण्डरीकं वेश्म महागृहम्। नैतत्। दहरपदस्याक्षरे शक्तेः सर्वेषां शब्दानां ब्रह्मवाचकत्वात्। शक्तिसङ्कोचलक्षणया बालके दहरपदम्। यद्वा,

वक्ष्यते-अंशो नानाव्यपदेशात् ( ब्र. सू. २।३।४३ ) इति । नापि ब्रह्म तावन्मात्रम् । इदमप्यग्रे वक्ष्यते—अधिकं तु भेदनिर्देशात् ( ब्र. सू. २।१।२२ ) इति । तस्मादिदं प्रकरणं न जीवब्रह्मविद्यापरम्, किन्तु ब्रह्मवाक्यमेवेति ॥ १।३।१४ ॥

( गतिशब्दरूपहेतुद्वयदर्शनात् दहरस्य परमात्मत्वम् )

उत्तरहेतूनां मध्ये हेतुद्वयमाह—

गतिशब्दाभ्यां तथाहि दृष्टं लिङ्गं च ॥ १।३।१५ ॥

गतिशब्दाभ्याम् । गतिर्ब्रह्मलोकगमनम् । "एवमेवेमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति" ( छां. ८।३।२ ) इति । "एष आत्माऽपहतपाप्मा सत्यकामः सत्यसङ्कल्पः" ( छां. ८।१।५ ) इति केवलभगवद्वाचकाः शब्दा ब्रह्मलोकशब्दश्च । ननूक्तं जीवस्यैवैते शब्दा गतिश्च मनोरथादिकल्पितानामिति । तन्निराकरणायाह—तथाहि । तथैव गतिशब्दौ भगवत्येव युक्तौ । अनृतेनापिधानं हि तेषां विशेषणम् । अज्ञानावेष्टितत्वमित्यर्थः । नत्वज्ञानपरिकल्पितत्वम् । दृष्टत्वात् । तथैव हि दृश्यते । सर्वोऽप्याह न किञ्चिदवेदिषमिति । न च गन्तुरभाव एव । शास्त्रवैफल्यापत्तेः । न ह्यात्मनाशः पुरुषार्थः । कर्मकर्तृविरोधश्च । तथाऽप-

---

गतिशब्दाभ्यां तथाहि दृष्टं लिङ्गं च । सूत्रमवतारयन्ति—उत्तरेत्यादि । व्याकुर्वन्ति—गतिमारभ्य युक्तावित्यन्तम् । सूत्रस्थं तथाहीति वाक्यमवतारयन्ति—नन्विति । तथा गतिशब्दौ हि युक्तौ । गतेरज्ञानकल्पितत्वं परिहरन्ति—अनृतेनेत्यादि विरोधश्चेत्यन्तम् । "अनृतेन प्रत्यूढाः प्रजा" इत्यत्र प्रत्यूढशब्दस्य हि तत्त्वमेवार्थः । "अमृतापिधाना" इतिवाक्यान्तरस्वारस्यात् । तथाच कल्पितत्वमर्थो नास्तीत्याह—नन्विति । न किञ्चिदिति । जागरणदशायामज्ञाननाशे तत्कल्पितस्य गन्तुरपि नाशात् स्मरणं न स्यादिति भावः । न च गन्तुरभाव इति । वस्तुतो ब्रह्मस्वरूपस्य जीवस्य व्यापकत्वेनौपचारिकमेव गमनमिति भावः । शास्त्रवैफल्यापत्तेरिति । गन्तुरनङ्गीकारे । अनुविद्य व्रजन्तीत्यादिना अज्ञानिनः फलाभावबोधकं "अथ य इहात्मानमनुविद्य व्रजन्ती"त्यादि द्विविधगतिबोधकं शास्त्रं तस्य वैफल्यापत्तेरित्यर्थः । विरोधश्चेति । वस्तुतो जीवस्य ब्रह्माभेदे आत्मानमनुविद्य व्रजन्तीत्यादौ विरोध इत्यर्थः । अत्र एकवचनबहुवचनप्रयोगादेव अंशांशिभावेन भेदसिद्धौ तद्गतेर्ब्रह्मविषयकत्वं दृष्टत्वेन हेतुना साधितम् । अतः परं शब्दस्य ब्रह्मपरत्वं दृष्टत्वेन हेतुना साधयन्ति—तथेत्यादि । अपह-

---

धर्मकीकरत्वादित्यादिसूत्रे तथा व्याख्यानाद्दहरो बालक: अस्मिन्वेश्मनि अन्तर्दहराकाशः तस्मिन् यदन्तः सर्वे कामास्तदन्वेष्टव्यम् । तत्र दहरः परमात्मा बालग्रहणे धर्मानुपपत्तेः, अतो भाष्ये "ज्ञानशक्तिक्रियाशक्ती सन्दिग्धेते परस्थिते" इत्युक्ते द्वावी विचार्ये, परन्तु आधारनिरूपणं भज्येत, अतोऽत्र उक्त धर्माधारो दहरः परमात्मेति । ननु दहरपदस्य मूषिकादौ शक्तेः तत्रैव धर्माणामुपासनार्थमुपसंहारे को दोषो भक्तिस्तु भविष्यत्येवोपासनासत्त्वात् "श्रेयोभिर्विविधैश्चान्यैः कृष्णे भक्तिर्हि साध्यते" इतिवाक्यादिति चेत्, न; श्रीमदाचार्यवाक्येषु अविश्वासस्यापराधेषु गणनादपराधप्रसङ्गात् । "दहरो मूषिकायां च स्वल्पभ्रातरि बालके" इति विश्वकोशे त्रिषु वस्तुष्वपि नामनारायणादिकोशेष्वन्यत्रापि शक्तेः । किञ्च, दहरपदं परमात्मवाचकम्, "ॐ इत्येकाक्षरमिदं सर्वं तस्योपव्याख्यानम्" इति माण्डूक्यश्रुते. । अत्र ओमितिपदं दहरवाचकम् । ओमिति पदस्य ब्रह्मव्याख्यानस्य इदं पदजातमुपसमीपवर्तिनां पदार्थानां व्याख्यानत्वादुपव्याख्यानं यद्यपि, तथाप्यग्रे भूतं भवद्भविष्यदिति सर्वमोङ्कार एवे"ति श्रुत्या वाच्यवाचकाभेदविवक्षयोङ्कारभेदोक्तेर्दहरपदमपि ओङ्कारवाचकम् । ननु तथापि परमात्मैकदेशभूतभूषिकादौ श्रुतिप्राप्ता शक्तिः श्रुत्यन्तरेण परमात्मनि प्रोक्ता तत्र किं कारणमिति चेत्, शृणु ; मूषिकादावपि दशविधलीलासहितस्य भगवतोऽवस्थानाच्छ्रुतीनां तदर्थकत्वेन परमात्मनि शक्ति. प्रोक्तेति । तथा च सुबोधिनी "एकैकस्मिन् पदार्थे दशविधलीलासहितो भगवांस्तिष्ठती"ति एवमन्यत्रापि ।

हतपाप्मत्वं च। तद्विरुद्धधर्माणामनुभवात् । भगवति त्विदानीमेव तेषामनु-
भवः। ध्यानादावुपलब्धेः। पृथिवीशरावववदेव जीवब्रह्मविभागो न त्वज्ञानकृतः।

( जीवब्रह्मभेदस्याज्ञानकृतत्वप्रदर्शनम् )

तथाहि, अज्ञानं नाम चैतन्यान्तर्भूतं तच्छक्तिरूपमनादि, उत बहिर्भूतं साङ्ख्यवत्? न; बहिर्भूतं चेत्, साङ्ख्यनिराकरणेनैव निराकृतम्। अन्तःस्थितायाः शक्तिरूपायाः स्वरूपाविरोधिन्या न स्वरूपविभेदकत्वम्, आश्रयनाशप्रसङ्गात्, कल्पनायाश्चाप्रामाणिकत्वात् । बहिःस्थितस्यैव हि भेदकत्वम्, कुठारादिवत्। नापि वायुवत्, तच्छक्तित्वात्।

( मिथ्यावादस्य निरासः )

किञ्च, कोऽयं ब्रह्मवादे प्रद्वेषो येन मिथ्यावादः परिकल्प्यते? अज्ञानादिति चेत्, पीतशङ्खप्रतिभानवद्युक्तं मतप्रकरणम् । ब्रह्मविदुपासनयाऽनुगमिष्यति[1]। शर्कराभक्षणेनेव पीतिमप्रतीतिः । सर्वज्ञेन हि वेदव्यासेन भाविमिथ्यावादनिरा-करणेनेदमधिकरणमारब्धम् । तस्माज्जीवानामेवाज्ञानदर्शनाद्ब्रह्मणः सर्वज्ञत्व-दर्शनाद्भूतिशब्दौ ब्रह्मविषयावेव न जीवविषयौ।

---

तपाप्मत्वादिविरुद्धधर्माणां जीवे दृष्टत्वादुभयत्रापि दृष्टस्यैव साधकत्वात् तेऽपि शब्दा ब्रह्मपरा इत्यर्थः। ब्रह्मलोकशब्दस्य ब्रह्मपरत्वं पूर्वमेवोक्तमिति सर्वमनवद्यम् । ब्रह्मवादे विभागोऽविभागोऽपि बहु स्यामितीच्छाकृत इति दृष्टान्तेनाह—**पृथिवीति**।

विभागस्याज्ञानकृतत्वं दूषयितुमज्ञानं विकल्पयन्ति—**तथाहीति** । सूचीकटाहन्यायेन द्वितीयं दूषयन्ति—**साङ्ख्येति** । प्रथमं दूषयन्ति—**अन्तरिति**। अन्तश्शक्तिः स्वरूपाविरोधिनी स्वरूपवि-रोधिनी वा। आधेयस्वरूपभूतान् जीवान् न व्याप्नुयात्, तथाच भेद एव न स्यादित्याहुः—**न स्वरूपेति**। द्वितीये जीवानिव परमात्मानमपि व्याप्नुयात्, तथा च ब्रह्मशक्तित्वभङ्गः स्यादित्याहुः—**आश्रयेति**। ननु तस्याः शुद्धसत्त्वेनेश्वरोपाधित्वम्, मिश्रसत्त्वेन जीवोपाधित्वं परिकल्प्याविभेदकत्वमुच्यते चेत्तत्राहुः—**कल्पनाया** इति। **अप्रामाणिकत्वादिति**। श्रुत्याद्यनुक्तत्वेनेति शेषः। अन्तःशक्तेर्वि-भेदकत्वं नास्तीति दृष्टान्तेनाहुः—**कुठारादीति** । ननु अन्तःस्थितस्यापि भेदकत्वं वायौ; तत्र प्रमाणम्, "नासिके निरमिद्येतां दोधूयति नभस्वती" त्यत आहुः—**नापीति** । वायोर्ब्रह्माण्डशक्तित्वा-भावादस्तु विभेदकत्वम्, अस्यास्तु ब्रह्मशक्तित्वान्न तथेति दृष्टान्तवैषम्यमिति भावः।

प्रपञ्चमिथ्यावादे दूषणान्तरमाहुः—**किञ्चेति** । **ब्रह्मवादे** । बहु स्यामिति प्रत्यक्षश्रुतिसिद्धे। **अज्ञानादिति** । प्रत्यक्षादिना प्रपञ्चे ब्रह्मत्वाज्ञानादित्यर्थः । **ब्रह्मविदुपासनया**। सत्सङ्गेन गमिष्यतीति । **पीतप्रतीतिरिति**। कामलारोगस्य पित्तजन्यत्वात् पित्तनाशकशर्कराभक्षणेन रोगनि-वृत्तौ शङ्खे पीतिमप्रतीतिनिवृत्तिर्यथा, तथा सत्सङ्गेनाज्ञाननिवृत्तौ मिथ्यात्वनिवृत्तेर्व्यर्थं मतकरणमित्यर्थः। कटुप्रतीतिरिति पाठस्त्वपपाठः। नन्वेतन्मतस्याधुनिकत्वे तन्निराकरणार्थं व्यर्थमधिकरणप्रणयनमित्यत आहुः—**सर्वज्ञेनेति**। प्रकृत्यादिभ्य इति वार्तिकात् स्वरूपे निराकरणेनेति तृतीया । तथा च पुराणेषु भाविकथनवद्भाविमिथ्यावादनिराकरणरूपमधिकरणमिति भावः। **दर्शनादिति**।

---

[1] अपगमिष्यतीत्यपि पाठः।

( लिङ्गाज्जीवब्रह्मवादनिरासः )

किञ्च, लिङ्गं च वर्तते । "यथैवेह कर्मजितो लोकः क्षीयत एवमेवात्र पुण्यजितो लोकः क्षीयते" ( छां. ८।१।६ ) इति । न हि स्वाज्ञानं स्वस्य सम्भवति । हिताकरणप्रसक्तिश्च । न च ज्ञानेन सामर्थ्यमुद्बुद्धमिति वाच्यम्, विरोधित्वात् । न हि ज्ञाने जाते कर्तृत्वमस्तीति विप्लववादिनोऽङ्गीकुर्वन्ति । विरुद्धा च कल्पना, अहं ब्रह्मास्मीति ।

( सर्वभावश्रुतिनिर्वचनम् )

अत एव सर्वभावश्रुतेः, तज्ज्ञानं च तस्य सार्वज्ञ्ये लिङ्गम् । तस्य हि स गुणो भगशब्दवाच्यानामन्यतरः । स चेज्जीवे समायाति, तत्कृपया तस्यैवास्यापि माहात्म्यं भवति । तस्माल्लिङ्गादपि गतिशब्दौ ब्रह्मविषयौ । चकारात्–"तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" ( श्वे. ३।८ ) इति श्रुत्या ब्रह्मत्वेन ज्ञानं नात्मनो मोक्षाय । ब्रह्मण एव तु ज्ञानमात्मत्वेनापि । तस्माद् दहरः परमात्मा ॥ १।३।१५ ॥

---

दर्शनद्वयं क्रमेण गतिशब्दयोस्तथात्वसाधकं लिङ्गं व्याकुर्वन्ति—किञ्चेत्यादिना । लिङ्गमिति । गतिशब्दयोर्ब्रह्मपरत्वे लिङ्गमस्तीत्यर्थः । अग्रत्यवाक्यशेषेण पूर्वं गतेर्लिङ्गं व्याकुर्वन्ति–यथैवेहेति । इह लोके कर्मजितः स्वामिसेवादिना प्राप्तः धनराज्यादिरिति यावत् । लोकः । सुखहेतुत्वेन भोग्यः । पराधीनोपभोग इति यावत् । क्षीयते अन्तवान् भवति । तथा अग्निहोत्रादिना प्राप्तः स्वर्गोऽपि क्षीयते इति श्रुत्यर्थः । एतदग्रे आत्मानमनुविद्य व्रजन्तीति वाक्यम् । तदग्रे "आत्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामांस्तेषां सर्वेषु लोकेषु कामचारो भवती"ति वाक्यम् । अयमाशयः । आत्मज्ञानमसम्पाद्य ये व्रजन्ति तेषां सर्वेषु लोकेष्वकामचारः पुनरागमनं चेति प्रथमवाक्यार्थः । अत्र दृष्टान्तः—यथेहेत्यादि । ये आत्मज्ञानं सम्पाद्य व्रजन्ति तेषां सर्वेषु लोकेषु कामचारो भवतीति द्वितीयवाक्यार्थः । तथा च प्रथमवाक्यं जीवस्याज्ञानं बोधयन् गतेर्ब्रह्मविषयत्वे लिङ्गम् । द्वितीयवाक्येन गतेर्लिङ्गं व्याकुर्वन्ति—नहि स्वेति । यदि गन्तॄणां मनोरथादिकल्पितत्वं स्यात्तदा अज्ञानिवत् ज्ञानिनामपि गन्तॄणां मिथ्यात्वात् तेषु सर्वलोककामचाररूपहितस्याप्यकरणप्रसक्तिः, अतः, हितकरणे सत्यजीवकर्तृत्वं बोधयन् गतेर्जीवभिन्नब्रह्मविषयत्वे लिङ्गमिति भावः । ननु ज्ञानेनाज्ञाननाशे कल्पितरूपनिवृत्त्या स्वसामर्थ्योद्बोधेन ब्रह्माभिन्ने जीवे हितस्योपयोगादित्यत आह—नचेति । विरोधित्वादिति । अनुविद्येति श्रुत्युक्तव्रजनविरोधित्वात् । तदेव व्युत्पादयन्ति—नहीति । गतेर्लिङ्गं व्याख्याय शब्दस्य ब्रह्मपरत्वे लिङ्गमाहुः—विरुद्धेति । अप्यर्थे चकारः । तथाच जीवाभिन्नकल्पनाऽपि श्रुतिविरुद्धेत्यर्थः । अत्र हेतुमाहुः—अहमिति । बृहदारण्यके "य एवं वेदाहं ब्रह्मास्मीति स इदं सर्वं भवती"ति ज्ञानानन्तरमेव सर्वभावश्रुतेः ।

तज्ज्ञानम् । अहं ब्रह्मास्मीति ज्ञानम् । तस्य जीवस्य, लिङ्गकरणम् । तस्यहीति । भगवत इत्यर्थः । सगुणो भगवत्कृपया वामदेवादिवत् जीवे समायाति यदा, तदा तस्यापि सर्वलोककामचारादिरूपमाहात्म्यं भवतीति वाक्यार्थः । एवं चापहतपाप्मत्वादिरूपः शब्दः जीवभिन्नब्रह्मपर इति सिद्धम् । ब्रह्मत्वेन ज्ञानमिति । आत्मनो ब्रह्मत्वेन ज्ञानमित्यन्वयः । श्रुतौ तमेवेत्येवकारादयमर्थो गम्यते । पुरुषविधब्राह्मणोक्तं अहं ब्रह्मास्मीति ज्ञानं ब्रह्मणः सर्वरूपत्वज्ञानानन्तरमेवेति विरोधः । एवमहङ्ग्रहोपासनायां बोध्यम् । तस्मात् गतिशब्दरूपाद्धेतुद्वयात् ॥

( धारणात्मकमहिम्नो ब्रह्मण्येवोपलब्धेर्दहरो ब्रह्मैव )

अपरं हेतुमाह—

धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ॥ १।३।१६ ॥

धृतेः । "अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसम्भेदाय (छां. ८।४।१)
इति न हि सर्वलोकविधारकत्वं ब्रह्मणोऽन्यस्य सम्भवति । चकारात्सेतुत्वमपि ।
"तदन्वेष्टव्यं तद्विजिज्ञासितव्यम्" (छां. ८।१।१) इति लोकविधारणस्य माहात्म्य-
रूपत्वात्तस्यैव कर्मत्वमित्याह—महिम्न इति। महिमैष पुरुषस्य । न तु वासनारूपेण
तस्मिन् विद्यमानत्वम् । संसारिधर्मत्वेनामाहात्म्यरूपत्वात् । न च विरुद्धमुभयत्रै-
कस्य दर्शनमिति वाच्यम्, अस्यास्मिन्नुपलब्धेः । अस्यैतादृशविरुद्धधर्माश्रयमाहा-
त्म्यस्यास्मिन् भगवत्येवोपलब्धेः । "ज्यायानाकाशात् । यावान्वा अयमाकाशः"
( छां. ८।१।३ ) "अणुः स्थूलः" इति । यशोदादयश्च बहिःस्थितमपि जगदन्तः
मपश्यन्ति । न त्वेतादृशो जीवो भवितुमर्हति । तस्माद्ब्रह्मैव दहरः ॥ १।३।१६ ॥

(आकाशपदवाच्यत्वापहतपाप्मत्वादयो धर्मा ब्रह्मण्येव प्रसिद्धाः )

प्रसिद्धेश्च ॥ १।३।१७ ॥

आकाशशब्दवाच्यत्वप्रसिद्धिः । अपहतपाप्मत्वादिप्रसिद्धिः । किं बहुना
प्रकरणोक्तसर्वधर्मप्रसिद्धिर्भगवत्येव न जीवे सम्भवत्यतोऽपि भगवानेव दहरः ।
चकाराद्विधिमुखेनाधिकरणसमाप्तिः सूचिता ॥ १।३।१७ ॥

( जीवे जगदाधारत्वादिधर्माणामसम्भवान्न जीवः, किन्तु ब्रह्मैव )

अन्यनिषेधमुखेन पुनर्विचारयति—

इतरपरामर्शात्स इति चेन्नासम्भवात् ॥ १।३।१८ ॥

ननु ब्रह्मैतादृशं जीवो नैतादृश इति न क्वचित्सिद्धमस्ति, श्रुत्येकसमधिगम्य-
त्वादुभयस्वरूपस्य ब्रह्मवादे । अतो यथा सर्वत्र ब्रह्मणोऽसाधारणधर्मदर्शनात्त-
त्प्रकरणं ब्रह्मण इति निश्चीयते । एवमिहापि जीवस्यासाधारणधर्मदर्शनाज्जीव-
प्रकरणमिति कुतो न निश्चीयते? निश्चिते तु तस्मिन्नाकाशतुल्यत्वादयो धर्मा

---

धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः । सूत्रमवतारयन्ति—अपरमिति । उत्तरेभ्य इति । हेतु-
बाहुल्यादिति शेषः । असम्भेदाय असाङ्कर्यायेत्यर्थः । विधारकत्वमिति । क्तिन्क्तो सञ्ज्ञायामिति
सूत्रविहितस्य कर्त्रर्थकक्तिजन्तस्य धृतिशब्दस्यार्थः । सेतुत्वमिति । स्वय साधनीभूय निःसाधनपार-
प्रापकत्वम् । अग्रिम व्याकुर्वन्ति—तदन्वेष्टव्यमिति । अन्वेषणकर्मत्वं तस्य विधारणस्येत्याशयेन हेत्व-
न्तरमाहेत्यर्थः । महिमेति । एतावानस्येति मन्त्रे पुरुषस्य ब्रह्मणोऽपि महिम्नः ज्यायस्त्वं श्रुत्यैवोक्त-
मतोऽस्मान्महिम्नोऽपि तथेत्यर्थः । तथाच हेतुद्वयमिति भावः । नचेति । उभयत्र । अन्तर्बहिश्च ।
एकस्य । द्यावापृथिव्यादिजगतः दर्शनं विरुद्धमिति न वाच्यमिति योजना । यावान्वेति । आकाश-
तुल्येत्यर्थः । यशोदादीनामुभयत्र दर्शनाद्विरुद्धधर्माधारत्वं स्फुटमिति भावः । "अथो अमुष्यैव ममार्भकस्य
यकश्चनौत्पत्तिक आत्मयोग" इत्यनेन मायापक्षनिराकरणेन महिम्नः स्फुटत्वं बोध्यम् ।

प्रसिद्धेश्च । स्फुटम् ।

इतरपरामर्शात्स इति चेन्नासम्भवात् । इत आरभ्य चतुःसूत्र्याः प्रयोजनमाहुः—अन्य-

जीवस्यैव भविष्यन्ति नान्यस्येत्यभिप्रायेणाह—इतरपरामर्शात्सः । इतरो जीवस्तस्य परामर्शः । उपक्रमोपसंहारमध्यपरामर्शैः सन्दिग्धे निर्णयः । तत्रात्मविदः सर्वान्कामानुक्त्वा मध्ये-"अथ य एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत एष आत्मेति होवाचैतदमृतमभयम्" ( छां. ८।३।४ ) इत्यादि । अग्रे-"अथ य आत्मा स सेतुः" ( छां. ८।४।१ ) इति । तत्र सम्प्रसादः सुषुप्तिः जीवावस्था । तत्र परसम्बन्धनिमित्तेन स्वेनैव रूपेणाभिनिष्पत्तिवचनाज्जीव एवैतादृश इति गम्यते । न ह्यत्र परमात्मनोऽयं धर्मः सम्भवति । अतः सर्वमेव प्रकरणं जीवपरं भविष्यतीति स एव जीव एव प्रकरणार्थ इति चेत्, न; जीवस्तादृशो न भवति, विरुद्धधर्मत्वेनैव सर्वत्र तन्निश्चयात् । उभयोरेकरूपत्वे ह्युभयत्वमेव न स्यात् । "ऋतं पिबन्तावि"त्यादिवाक्यविरोधश्च, अतो न जीवस्तादृश इत्यभिप्रायेणाह—असम्भवात् । न हि जीवे जगदाधारत्वादिकं सम्भवति । न हि परामर्शमात्रेण सर्ववेदान्तविरुद्धं कल्पयितुं शक्यते । परामर्शस्यान्यार्थत्वमुत्तरत्र वक्ष्यति । तस्माद् दहरो जीवो न भवितुमर्हति । वाक्यार्थो यथोपपद्यते तथोत्तरत्र वक्ष्यते । ब्रह्म त्वेकमेव नोभयमिति निश्चयः ॥ १।३।१८ ॥

( उत्तरप्रकरणानुरोधेन, भगवदाविर्भावेन तद्धर्माणां जीवे सम्भवः,
अतो न जीवो दहरपदवाच्यः )

उत्तराच्चेदाविर्भूतस्वरूपस्तु ॥ १।३।१९ ॥

उत्तरात्प्रकरणात्प्राजापत्यात् । तत्र हि दिव्ये चक्षुषि मनोरूपे प्रतीयमानो जीव एवामृताभयरूपो निरूपितः । तस्यैवोदशरावे जाग्रत्साक्षित्वं, तदनु स्वप्नसाक्षित्वं, तदनु सुषुप्तिसाक्षित्वं निरूप्य, सर्वत्र तस्यामृतरूपत्वमेव निरूप्यावस्थानामतात्त्विकत्वमुक्त्वा, समाध्यवस्थायां मनसि तमेव जीवं तादृशं प्रतिपादयत्यतो जीवोऽपि वस्तुतस्तादृश एवेति प्रकृतेऽपि परामर्शात्स एवेति चेत्? एवमाशङ्क्य परिहरति तुशब्देन । नायमर्थो दूष्यते, किन्तु, किञ्चिदन्यदस्तीति न नकारप्रयोगः ।

---

निषेधेति । आशङ्कामवतारयन्ति—नन्त्विति । परामर्शमाहुः—तत्रात्मविदेति । अभयमित्यादीति । उक्त्वेति शेषः । जीवपरत्वं व्याकुर्वन्ति—तत्रेति । जीवावस्थेति । बृहदारण्ये सम्प्रसादस्य जीवावस्थाविशेषत्वं प्रतिपादितम् । तत्र । सुषुप्तौ । ब्रह्मसम्बन्धनिमित्तेनेत्यर्थः । वचनेति । इदमेव जीवासाधारणं लिङ्गमिति भावः । परामर्शस्यासाधकत्वमाहुः—नेत्यादि । विरुद्धेति । ब्रह्मविरुद्धेत्यर्थः । तन्निश्चयादिति । जीवत्वनिश्चयादित्यर्थः । ननु जीवस्य ब्रह्माभिन्नत्वात् विरुद्धधर्माध्यासाङ्गीकारे दोषाभावादित्यत आहुः—उभयोरिति । असम्भवमाहुः—न हीति । जीवेति । हृदयान्तर्वर्तिनीति शेषः । उत्तराच्चेदाविर्भूतस्वरूपस्तु प्राजापत्यप्रकरणस्य जीवपरत्वमाहुः—तत्रेति । प्राजापत्यप्रकरणार्थस्तु तस्मिन्नेवाध्याये विषयवाक्ये बोध्यः । विस्तरभयाद्विरम्यते । परिहारं व्याकुर्वते—एवमित्यादि । कथं

तदाह—आविर्भूतस्वरूपः । स्वाप्ययसम्पत्त्योर्भगवदाविर्भावो जीवे भवति । नृसिंहोपासकस्य नृसिंहाविर्भाववत् ब्रह्मण उपदेशसमये, भगवदाविर्भावात् । सर्वत्र स्वात्मानं पश्यन्निन्द्रेऽपि तथैवोपदिष्टवान् प्रजापतिः । अन्यथा प्रतिबिम्बा-दावमृताभयवचनं मिथ्या स्यात् । इन्द्रे त्वाविर्भावाभावात्प्रजापत्यसन्निधाने विपरीतं पश्यति । अतस्तावन्मात्रदोषपरिहारायान्यथोपदेशः स्वप्नादिषु, तथा प्रकृतेऽपि । सुषुप्तावस्थायां भगवदाविर्भावात्तथावचनम् । तस्मादुभयमपि भगव-त्प्रकरणमेव । एवमन्यत्रापि भगवदावेशकृता भगवद्धर्माभिलापा ऊह्याः । तस्माद् दहरः परमात्मैव ॥ १।३।१९ ॥

परामर्शस्य प्रयोजनमाह—

( आदिमध्यावसानेषु जीवपरामर्शस्यान्यत्प्रयोजनमिति )

अन्यार्थश्च परामर्शः ॥ १।३।२० ॥

अन्य एवार्थः प्रयोजनं यस्य । तस्माद् "यमहरहर्वा एवम्वित् स्वर्गमेति" । स्वस्यैवं ज्ञाने हि ब्रह्मसुखं फलं ब्रह्मज्ञानापेक्षायामुपयुज्येत । भगवतश्च तदाविर्भावो भवतीति चकारार्थः । सम्पत्तौ भगवदावेशकथनार्थं वक्ष्यति च—स्वाप्ययसम्प-त्त्योरन्यतरापेक्षमाविष्कृतं हि ( ब्र. सू. ४।४।१६ ) इति चतुर्थे । तस्मान्न परामर्शे-नान्यथाकल्पनम् ॥ १।३।२० ॥

( हृदयकमले ब्रह्मणो द्रष्टुं शक्यत्वात्तदायतनत्वेन निरूपणमिति )

अल्पश्रुतेरिति चेत्तदुक्तम् ॥ १।३।२१ ॥

ननु न वयं जीव उपपत्तिरस्तीति जीवप्रकरणं कल्पयामः । किन्तु ब्रह्मणि नायमर्थ उपपद्यते । अल्पश्रुतेः । अल्पे हि पुण्डरीके कथं भगवदयस्थानम् ? व्यापकत्वश्रवणात् । "यावान्वायमाकाशः" (छां. ८।१।३) इति । तस्माद्विरोध-परिहाराय जीव एवाराग्रमात्रस्तथा भवत्विति कल्प्यत इति चेत्तर्हि भवान्सम्यग् विचारकोऽस्मदीय एव । परं, तत्समाधानं पूर्वमेवोक्तम्, "निचाय्यत्वादेवं व्योमवच्च" ( ब्र. सू. १।२।७ ) इत्यत्र । तन्न प्रसर्तव्यम् । विरोधस्तु सर्वभवनसमर्थे ब्रह्मणि नाशङ्कनीयः । तथा पुरुषशरीरं च ।

---

परिहार इत्यत आहुः—तदाहेति । आविर्भूतस्वरूप इति । उत्तरप्रकरणे प्रजापतिवाक्ये "परं ज्योतीरूपं सम्पद्य स्वेन रूपेणाभिनिष्पद्यते" इति श्रूयते । तथाच आविर्भूतं प्रकटीभूतं ब्रह्मस्वरूपं यस्मिन् इत्यर्थः । कथमाविर्भाव इत्यत आहुः—स्वाप्ययेति । अन्यार्थश्च परामर्शः । सूत्रमवतारयन्ति—परा-मर्शस्येत्यादि । अर्थमाहुः—तस्मादित्यादि । यः स्वस्यैवेति भगवान् अमृतरूपः मर्त्यतः यमयिता एवं स्वस्य जातं चेत् ब्रह्मसुखं फलं जायते इत्यर्थः । ब्रह्मज्ञानेति । फलसाधनीभूतेत्यादि । उप-युज्येतेति । अमृतभूतजीवज्ञानमित्यादि । एतादृशसूत्रार्थे प्रमाणमाहुः—वक्ष्यतीति । अल्पश्रुते-

---

१ माद्या इति प्रकाशकारादृतपाठः । सच हस्ताक्षरपुस्तके दृश्यत एव । तथापि रश्मिसम्पादकैः, प्रदीप-विवरणयोरेव पाठोऽङ्गीकृत, सर्वेगोस्वामिनां हस्ताक्षरपुस्तकानि स्वायत्तीकृत्यापि । २ वस्यनमित्यपि पाठः ।

पुरुषत्वे च मां धीराः साङ्ख्ययोगविशारदाः ।
आविस्तरां प्रपश्यन्ति सर्वशक्त्युपबृंहितम् ॥

( भा. ११-७-२१ )

इति भगवद्वाक्यात् । तस्माद्भगवानेव दहर इति सिद्धम् ॥ १।३।२१।५ ॥

---

रिति चेत्तदुक्तम् । तथा पुरुषशरीरं चेति विजिघत्सोऽपिपासः इत्यादिधर्मैः सूचितं पुरुषशरीरं च विरुद्धमिति नाशङ्कनीयमित्यर्थः । भक्तिमार्गेऽपि एतादृश एव भगवन् साक्षाद्भवतीति सिद्धम् । इति पञ्चमाधिकरणम् ।

---

१ अत्रेत्थं व्याख्यानान्तराणि—

(१) तत्र शाङ्कराः—पूर्वपरपुरुषशब्दस्य ब्रह्मणि रूढत्वात् ब्रह्म उपास्यमित्युक्तम् । तद्वदिहाप्याकाशशब्दस्य भूताकाशे रूढत्वात् तस्यैवोपास्यत्वमस्त्विति दृष्टान्तसङ्गत्येदमाह—अत्र पूर्वपक्षे आकाशाद्युपास्तिः, सिद्धान्ते ब्रह्मोपास्तिरिति फलभेदः । छान्दोग्ये श्रूयते—"अथ यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः" इत्यादि । तत्र दहरपुण्डरीके यो दहराकाशः श्रुतः, स किं भूताकाशः, उत जीवः, उताहो परमात्मेति विशये, भूताकाशादिरिति पूर्वः पक्षः । सिद्धान्तस्तु—दहराकाशः परमात्मैव । कस्मात्, उत्तरेभ्यः "यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश उभे अस्मिन्द्यावापृथिवी अन्तरेव समाहिते एष आत्माऽपहतपाप्मा" इत्यादिवाक्यशेषगतेभ्य आकाशोपमानत्वद्यावापृथिव्यधिष्ठानत्वात्मत्वापहतपाप्मत्वादिहेतुभ्य इत्यर्थः । दहराकाशस्य परब्रह्मपरत्वे हेत्वन्तरमाह—"इमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति" इति दहरवाक्यशेषे प्रजाशब्दवाच्यानां जीवानां प्रत्यहमुच्यमाना प्रकृतदहरविषया या गतिः, यश्च ब्रह्मलोकशब्दः, ताभ्यां दहरस्य परब्रह्मताऽवगम्यते । तथाहि दृष्टं श्रुत्यन्तरे "सता सोम्य तदा सम्पन्नो भवति" इति । एवं च प्रत्यहं हिरण्यगर्भलोकगमनासम्भवाद्ब्रह्मैव लोक इति सामानाधिकरण्यस्य परिग्रहे अहरहर्गमनमेव लिङ्गं ज्ञापकम् । चशब्देन निषादस्थपतिन्यायोऽपि सामानाधिकरण्यपरिग्रहे सूचित इति ध्येयम् । दहरस्य परब्रह्मत्वे हेत्वन्तरमाह द्वाभ्याम्—"अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसम्भेदाय" इति श्रुताया धृतेरपि हेतोर्दहराकाशः परमात्मैव । अस्य च सर्वलोकविधारणलक्षणमहिम्नः अस्मिन् परमात्मनि "एष भूतपाल एष सेतुर्विधरणः" इत्यादिश्रुत्यन्तरेऽप्युपलब्धेरित्यर्थः । दहराकाशस्यापि परमात्मन्येव प्रसिद्धेः, लोकरूढ्यपेक्षया "आकाशो वै नाम नामरूपयोर्निर्वहिता" इत्यादिश्रौतरूढेर्बलीयस्त्वाद्दहराकाशः परमात्मैव, न भूताकाश इति सिद्धम् । ननु तर्हि जीवोऽस्त्वित्याशङ्क्याह—"एष सम्प्रसादः" इति सम्प्रसादशब्देन इतरस्याप्यस्मिन्प्रकरणे परामर्शात्स जीवो दहराकाशोऽस्त्विति चेत्, न; असम्भवात्, जीवे आकाशोपमेयत्वापहतपाप्मत्वादीनामसम्भवादित्यर्थः । इत्थमभिहितासम्भवस्यासिद्धिमाशङ्क्य परिहरति—उत्तरात् "य एषोऽक्षिणि पुरुषो दृश्यते" इत्यादिप्रजापतिवाक्यात् जाग्रदाद्यवस्थावृस्थापन्ने जीवे अपहतपाप्मत्वादिसम्भवाज्जीव एव दहराकाश इति चेत्, अत्राह—आविर्भूतस्वरूपस्तु । तुशब्दो जीवशङ्काव्यावृत्त्यर्थः । यतः, तत्राप्याविर्भूतं पारमार्थिकं स्वरूपमस्येत्याविर्भूतस्वरूपो जीवो विवक्षितः, न तु जीवत्वेन रूपेण, "परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" इत्युपसंहारदर्शनात् । अतः, तस्य ब्रह्मत्वेनापहतपाप्मत्वादिसम्भव इति, जीवत्वेन तदसम्भवात्

पूर्वसूत्रस्थहेतुरसिद्ध इति भावः । ननु तर्हि "सम्प्रसादः" इति जीवपरामर्शो व्यर्थः स्यादित्यत आह—जीवपरामर्शः "अभिनिष्पद्यते" इति उपसम्पत्तव्यपरमात्मपर एव, न जीवप्रतिपादनार्थ इत्यर्थः । जीवपूर्वपक्षबीजमाशङ्क्य परिहरति—"दहरोऽस्मिन्नन्तराकाशः" इत्याकाशस्याल्पत्वश्रवणान्न परमात्मत्वम्, किं तु जीवत्वमिति चेत्, तत्र समाधानमुक्तम् "अर्भकौकस्त्वात्तद्व्यपदेशाच्च···" इत्यत्र । तस्माद्दहराकाशः परमात्मैवोपास्य इति सिद्धम् ॥

(२) रामानुजीये—इदमामनन्ति च्छन्दोगाः "अथ यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तर आकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यमि"ति । तत्र सन्देहः, किमसौ हृदयपुण्डरीकमध्यवर्तिदहराकाशो महाभूतविशेष उत प्रत्यगात्माऽथ परमात्मेति ? । किं तावद्युक्तम् ? महाभूतविशेष इति । कुतः ? आकाशशब्दस्य महाभूताकाशे ब्रह्मणि च प्रसिद्धत्वेऽपि भूताकाशे प्रसिद्धिप्रकर्षात् । तस्मिन्यदन्तस्तदन्वेष्टव्यमित्यन्वेष्टव्यान्तरस्याधारतया प्रतीतेश्चेति । एवं प्राप्तेऽभिधीयते । दहर उत्तरेभ्यः । दहराकाशः परं ब्रह्म । कुतः ? उत्तरेभ्यो वाक्यगतेभ्यो हेतुभ्यः । "एष आत्मापहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः" इति निरुपाधिकात्मत्वमपहतपाप्मत्वादिकं सत्यकामत्वं सत्यसङ्कल्पत्वं चेति दहराकाशे श्रूयमाणा गुणा दहराकाशं परं ब्रह्मेति ज्ञापयति । "अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामांस्तेषां सर्वेषु लोकेषु कामचारो भवती"त्यादिना "यं कामं कामयते सोऽस्य सङ्कल्पादेव समुत्तिष्ठति" । "तेन सम्पन्नो महीयते" इत्यन्तेन दहराकाशवेदिनः सत्यसङ्कल्पत्वप्राप्तिश्चोच्यमाना दहराकाशं परं ब्रह्मेत्यवगमयति । "यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः" इत्युपमानोपमेयभावश्च दहराकाशस्य भूताकाशत्वे नोपपद्यते । हृदयायच्छेदनिबन्धन उपमानोपमेयभाव इति चेत्तथा सति हृदयावच्छिन्नस्य द्यावापृथिव्यादिसर्वाश्रयत्वं नोपपद्यते । ननु च दहराकाशस्य परमात्मत्वेऽपि बाह्याकाशोपमेयत्वं न सम्भवति । "ज्यायान्पृथिव्या ज्यायानन्तरिक्षाद्"इत्यादौ सर्वस्माज्ज्यायस्त्वश्रवणात् । नैवम् । दहराकाशस्य हृदयपुण्डरीकमध्यवर्तित्वप्राप्ताल्पत्वनिवृत्तिपरत्वादस्य वाक्यस्य । यथाधिकजवेऽपि सवितरीषुवद्गच्छति सवितेति वचनं गतिमान्द्यनिवृत्तिपरम् । "अथ स्यादेष आत्मापहतपाप्मे"त्यादिना दहराकाशो न निर्दिश्यते । "दहरोऽस्मिन्नन्तराकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यमि"ति "दहराकाशान्तरवर्तिनस्ततोऽन्यस्यान्वेष्टव्यत्वेन प्रकृतत्वादिदैष आत्मापहतपाप्मे"ति तस्यैवान्वेष्टव्यस्य निर्देष्टुं युक्तत्वात् । स्यादेतदेवं यदि श्रुतिरेव दहराकाशं तदन्तरवर्तिनं च न व्यभाङ्क्षयत् । व्यभाङ्क्षीत्तु सा । तथाहि । "यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यमि"ति ब्रह्मपुरशब्देनोपास्यतया सन्निहितपरब्रह्मणः पुरत्वे नोपासकशरीरं निर्दिश्य तन्मध्यवर्ति च तदवयवभूतं पुण्डरीकाकारमल्पपरिमाणं हृदयं परस्य ब्रह्मणो वेश्मतयाभिधाय, सर्वज्ञं सर्वशक्तिमाश्रितवात्सल्यैकजलधिमुपासकानुग्रहाय तस्मिन्वेश्मनि सन्निहितं सूक्ष्मतया ध्येयं, दहराकाशशब्देन निर्दिश्य, तदन्तर्वर्ति चापहतपाप्मत्वादि स्वभावतो निरस्तनिखिलहेयत्वसत्यकामत्वादिस्वाभाविकानधिकातिशयकल्याणगुणजातं च ध्येयं तदन्वेष्टव्यमित्युपदिश्यते । अत्र, तदन्वेष्टव्यमिति तच्छब्देन दहराकाशं तदन्तर्वर्ति गुणजातं च परामृश्य तदुभयमन्वेष्टव्यमित्युपदिश्यते । "यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म" इत्यनूद्य तस्मिन्दहरपुण्डरीकवेश्मनि यो दहराकाशो यच्च तदन्तर्वर्ति गुणजातं तदुभयमन्वेष्टव्यमिति विधीयत इत्यर्थः । दहराकाशशब्दनिर्दिष्टस्य परब्रह्मत्वं तस्मिन्यदन्तरिति निर्दिष्टस्य च तद्गुणत्वं तच्छब्देनोभयं परामृश्योभयस्याप्यन्वेष्टव्यतया विधानं च कथमवगम्यत इति चेत्तदवहितमनाः शृणु ।—"यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय

आकाशः" इति दहराकाशस्यातिमहत्तामभिधायोभे अस्मिन्द्यावापृथिवी अन्तरेव समाहिते । "उभावग्निश्च वायुश्च सूर्याचन्द्रमसावुभौ विद्युन्नक्षत्राणि" इति "प्रकृतमेव दहराकाशमस्मिन्निति निर्दिश्य, तस्य सर्वजगदाधारत्वमभिधाय, यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन्समाहितमि"ति "पुनरप्यस्मिन्निति तमेव दहराकाशं परामृश्य तस्मिन्नस्योपासकस्येह लोके यद्भोग्यजातमस्ति, यच्च मनोरथमात्रगोचरमिह नास्ति, सर्वं तद्भोग्यजातमस्मिन्दहराकाशे समाहितमिति निरतिशयभोग्यत्वं दहराकाशस्याभिधाय, तस्य दहराकाशस्य देहावयवभूतहृदयान्तर्वर्तित्वेऽपि देहस्य जराप्रध्वंसादौ सत्यपि, परमकारणतयातिसूक्ष्मत्वेन निर्विकारत्वमुक्त्वा तत एवैतत्सत्यं ब्रह्मपुरमि"ति "तमेव दहराकाशं सत्यकारणतया सत्यभूतं ब्रह्माख्यं पुरं निखिलजगदावासभूतमित्युपपाद्यास्मिन्कामाः समाहिताः" इति "दहराकाशमस्मिन्नि"ति निर्दिश्य, काम्यभूतांश्च गुणान्कामा इति निर्दिश्य, तेषां दहराकाशान्तर्वर्तित्वमुक्त्वा तदेव दहराकाशस्य काम्यभूतकल्याणगुणविशिष्टत्वं तस्यात्मत्वं चै"ष आत्मापहतपाप्मे"त्यादिना सत्यसङ्कल्प इत्यन्तेन स्फुटीकृत्य, "यथा ह्येवेह प्रजा अन्वाविशन्ती"त्यारभ्य "तेषां सर्वेषु लोकेष्वकामचारो भवती"त्यन्तेन तदिदं गुणाष्टकं तद्विशिष्टं दहराकाशशब्दनिर्दिष्टमात्मानं चाविदुषामेतद्व्यतिरिक्तभोग्यसिद्धये च कर्म कुर्वतामन्तवत्फलावाप्तिमसत्यसङ्कल्पत्वं चाभिधायाथ "य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामांस्तेषां सर्वेषु लोकेषु कामचारो भवती"त्यादिना दहराकाशशब्दनिर्दिष्टमात्मानं तदन्तर्वर्तिनश्च काम्यभूतानपहतपाप्मत्वादिकान्गुणान्विजानतामुदारगुणसागरस्य तस्य परमपुरुषस्य प्रसादादेव सर्वकामावाप्तिः, सत्यसङ्कल्पता चोच्यते । अतो दहराकाशः परं ब्रह्म तदन्तर्वर्ति चापहतपाप्मत्वादिकाम्यगुणजातं तदुभयमन्वेष्टव्यं विजिज्ञासितव्यमिति चोच्यत इति निश्चीयते । तदेतद्वाक्यकारोऽपि स्पष्टयति तस्मिन्यदन्तरिति काम्यव्यपदेश इत्यादिना अत एतेभ्यो हेतुभ्यो दहराकाशः परमेव ब्रह्म ॥

इतश्च दहराकाशः परं ब्रह्म । तथा हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि संचरन्तो न विन्देयुरेवमेवे"माः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्त्यनृतेन हि प्रत्यूढाः" इत्येतमिति प्रकृतं दहराकाशं निर्दिश्य तत्राहरहः सर्वेषां क्षेत्रज्ञानां गमनं गन्तव्यस्य तस्य दहराकाशस्य ब्रह्मलोकशब्दनिर्देशश्च दहराकाशस्य परब्रह्मतां गमयतः । कथमनयोरस्य परब्रह्मत्वसाधकत्वमित्याह—तथा हि दृष्टमिति । परस्मिन्ब्रह्मणि । सर्वेषां क्षेत्रज्ञानामहरहः सुषुप्तिकाले गमनमन्यत्राभिधीयमानं दृष्टम् । "एवमेव खलु सोम्येमाः सर्वाः प्रजाः सति संपद्य न विदुः सति सम्पद्यामहे" इति । "सत आगम्य न विदुः सत आगच्छामहे" इति च । तथा ब्रह्मलोकशब्दश्च परस्मिन्ब्रह्मणि दृष्टः । एष ब्रह्मलोकः सम्राडिति होवाच इति । मा भूदन्यत्र ब्रह्मणि गमनदर्शनम् । एतदेव तु दहराकाशे सर्वेषां क्षेत्रज्ञानां प्रलयकाल इव निरस्तनिखिलदुःखानां सुषुप्तिकालेऽवस्थानं श्रूयमाणस्य परब्रह्मत्वे पर्याप्तं लिङ्गम् । तथा ब्रह्मलोकशब्दश्च समानाधिकरणवृत्त्यास्मिन्दहराकाशे प्रयुज्यमानोऽस्य ब्रह्मत्वे प्रयोगान्तरनिरपेक्षं पर्याप्तं लिङ्गमित्याह । लिङ्गं चेति । निषादस्थपतिन्यायाच्च । षष्ठीसमासात्समानाधिकरणसमासो न्याय्यः । अथवाहरहर्गच्छन्त्य इति न सुषुप्तिविषयं गमनमुच्यते । अपि त्वन्तरात्मत्वेन सर्वदा वर्तमानस्य दहराकाशस्य परमपुरुषार्थभूतस्योपर्युपर्यहरहर्गच्छन्त्यः सर्वस्मिन्काले वर्तमानास्तमजानन्त्यस्तं न विन्दन्ति न लभन्ते । यथा हिरण्यनिधिं निहितं तत्स्थानमजानानास्तदुपरि सर्वदा वर्तमाना अपि न लभन्ते तद्वदित्यर्थः । सेयमेवमन्तरात्मत्वेनावस्थितस्य दहराकाशस्योपरि तन्नियमितानां सर्वासां प्रजानामजानतीनां सर्वदा गतिरस्य दहराकाशस्य परब्रह्मतां गमयति । तथा ह्यन्यत्र परस्य ब्रह्मणोऽन्तरात्मतयावस्थितस्य स्वनियम्याभिः स्वस्मिन्वर्तमानाभिः प्रजाभिरवेदनं दृष्टम् ।

यथान्तर्यामिब्राह्मणे य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति अदृष्टो द्रष्टाऽश्रुतः श्रोता इति च । मा भूदन्यत्र दर्शनं स्वयमेव त्वियं निखिलदृष्टान्तावगत-परमपुरुषार्थभावस्यास्य हृदयस्थस्योपरि तदाधारतयाऽऽरूढः सर्वदा सर्वासां प्रजानामजानतीनां गति-रस्य परब्रह्मत्वे पर्याप्तं लिङ्गम् । इतश्च दहराकाशः परं ब्रह्म ॥

अथ य आत्मेति प्रकृतं दहराकाशं निर्दिश्य स सेतुर्विधृतिरेषां लोकानामसंभेदाय इत्यस्मिञ्जग-द्विधरणं हि परस्य ब्रह्मणो महिमा । "एष सर्वेश्वर एष सर्वभूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसंभेदाय इत्येतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः" इत्या-दिभ्यः । स चायं परस्य ब्रह्मणो धृत्याख्यो महिमास्मिन्दहराकाश उपलभ्यते, अतो दहराकाशः परं ब्रह्म ॥

आकाशशब्दश्च परस्मिन्ब्रह्मणि प्रसिद्धः । "को ह्येवान्यात्कः प्राण्यात् । यदेष आकाश आनन्दो न स्यात् सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्त आकाशं प्रत्यस्तं यन्ती"त्यादिषु । अपहत-पाप्मत्वादिगुणसनाथा प्रसिद्धिर्भूताकाशप्रसिद्धेर्बलीयसीत्यभिप्रायः । एवं तावद्दहराकाशस्य भूताका-शत्वं प्रतिक्षिप्तम् । अथेदानीं दहराकाशस्य प्रत्यगात्मत्वमाशङ्क्य निराकर्तुमुपक्रमते ॥

यदुक्तं वाक्यशेषवशाद्दहराकाशः परं ब्रह्मेति तदयुक्तम् । वाक्यशेषे परस्मादितरस्य जीवस्यैव साक्षात्परामर्शात् । "अथ य एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणा-भिनिष्पद्यत एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मे"ति । यद्यपि दहरोऽस्मिन्नन्तराकाश इति हृदय-पुण्डरीकमध्यवर्तितयोपदिष्टस्याकाशस्योपमानोपमेयभावाद्यसम्भवाद्भूताकाशत्वं न सम्भवति, तथापि वाक्यशेषवशात्प्रत्यगात्मत्वं युक्तमाश्रयितुम् । आकाशशब्दोऽपि प्रकाशादियोगाज्जीववर्तिष्यत इति चेदत्रोत्तरं नासम्भवादिति । नायं जीवः । न ह्यपहतपाप्मत्वादयो गुणा जीवे सम्भवन्ति ॥

उत्तरात्प्रजापतिवाक्याज्जीवस्यैवापहतपाप्मत्वादिगुणयोगो निश्चीयत इति चेत् । एतदुक्तं भवति । प्रजापतिवाक्यं जीवपरमेव । तथा हि "य आत्मापहतपाप्मा विजरो विमृत्युर्विशोकोऽवि-जिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः" । स सर्वांश्च लोका-नाप्नोति सर्वांश्च कामान्यस्तमात्मानमनुविद्य विजानातीति प्रजापतिवचनमैतिह्यरूपेणोपश्रुत्यान्वेष्टव्या-त्मस्वरूपजिज्ञासया प्रजापतिमुपसेदुषे भगवते प्रजापतिर्जागरितस्वप्नसुषुप्त्यवस्थं जीवात्मानं सशरीरं क्रमेण शुश्रूषुयोग्यतापरिचिक्षिषयोपदिश्य तत्र भोग्यमपश्यते, परिशुद्धात्मस्वरूपोपदेशयोग्याय तस्मै मघवते मघवन्मर्त्यं वा इदं शरीरमात्तं मृत्युना । तदस्यामृतस्याशरीरस्यात्मनोऽधिष्ठानमिति शरीर-स्याधिष्ठानतामात्मनश्चाधिष्ठातृतामशरीरस्य च तस्यामृतत्वस्वरूपतां चोक्त्वा न वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति । "अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशत" इति कर्मारब्धशरीरयोगिन-स्तदनुगुणसुखदुःखभागित्वरूपानर्थं तद्विमोक्षे च तदभावमभिधायैवमेवै"ष सम्प्रसादोऽस्माच्छरीरा-त्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत" इति जीवात्मनः स्वरूपमेव शरीरवियुक्त-मुपदिदेश । स उत्तमः पुरुषः स तत्र पर्येति जक्षन्क्रीडन्रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा नोप-जनं स्मरन्निदं शरीरमिति प्राप्यस्य परस्य ज्योतिषः पुरुषोत्तमत्वं निवृत्ततिरोधानस्य परं ज्योति-रुपसम्पन्नस्य प्रत्यगात्मनो ब्रह्मलोके यथेष्टभोगावाप्तिं प्रियाप्रियादियुक्तकर्मनिमित्तशरीराद्यपुरुषार्था-ननुसन्धानं चाभिधाय स यथा प्रयोग्य आचरणे युक्त एवमेवायमस्मिञ्छरीरे प्राणो युक्त इति यथो-क्तस्वरूपस्यैव संसारदशायां कर्मतन्त्रं शरीरयोगं प्रयोग्यशकटयोग दृष्टान्तेनाभिधायाथ यत्रैतदाका-

शमनुविपण्णं चक्षुः स चाक्षुषः पुरुषो दर्शनाय चक्षुरथ यो वेदेदं जिघ्राणीति । स आत्मा गन्धाय घ्राणमथ यो वेदेदमभिव्याहराणीति स आत्माभिव्याहाराय वागथ यो वेदेदं शृणवानी स आत्मा श्रवणाय श्रोत्रमथ यो वेदेदं मन्वानीति स आत्मा मनोस्य, दैवं चक्षुरिति चक्षुरादीनां करणत्वं रूपादीनां ज्ञेयत्वमस्य च ज्ञातृत्वं प्रदर्श्य तत एव शरीरेन्द्रियेभ्योस्य व्यतिरेकमुपपाद्य स वा एष एतेन दिव्येन चक्षुषा मनसैतान्कामान्पश्यन्रमते य एते ब्रह्मलोक इति तस्यैव विधूतकर्मनिमित्त-शरीरेन्द्रियस्य मनःशब्दाभिहितेन दिव्येन स्वाभाविकेन ज्ञानेन सर्वकामानुभवमुक्त्वा तं वा एतं देवा आत्मानमुपासते । तस्मात्तेषां सर्वे च लोका आप्ताः सर्वे च कामा इत्येवम्विधमात्मानं ज्ञानिनो जानन्तीत्यभिधाय स सर्वांश्च लोकानाप्नोति सर्वांश्च कामान्यस्तमात्मानमनुविद्य विजानातीति ह प्रजापतिरुवाचेत्येवम्विधमात्मानं विदुषः सर्वलोकसर्वकामावाप्त्युपलक्षितं ब्रह्मानुभवं फलमभिधायोपसंहृतम् । अतस्तत्रापहतपाप्मत्वादिगुणको ज्ञातव्यतया प्रक्रान्तो जीव एवेत्यवगतम् । अतो जीवस्यापहतपाप्मत्वादयः सम्भवन्ति । अतो दहरवाक्यशेषे श्रूयमाणस्य जीवस्यापहतपाप्मत्वादिगुणसम्भवात्स एव दहराकाश इति निश्चीयत इति चेदिति । तत्राह—आविर्भूतस्वरूपस्त्विति । पूर्वमनृततिरोहितापहतपाप्मत्वादिगुणकः स्वस्वरूपः पश्चाद्विमुक्तकर्मबन्धः शरीरात्समुत्थितः परंज्योतिरुपसम्पन्न आविर्भूतस्वरूपः सन्नपहतपाप्मत्वादिगुणविशिष्टस्तत्र प्रजापतिवाक्येऽभिधीयते । दहरवाक्येत्वतिरोहितस्वभावापहतपाप्मत्वादिविशिष्ट एव दहराकाशः प्रतीयते । आविर्भूतस्वरूपस्यापि जीवस्यासम्भावनीयाः सेतुत्वसर्वलोकविधरणत्वादयः सत्यशब्दनिर्वचनावगतं चेतनाचेतनयोर्नियन्तृत्वं दहराकाशस्य परब्रह्मतां साधयन्ति । सेतुत्वसर्वलोकविधरणत्वादय आविर्भूत स्वरूपस्यापि न सम्भवन्तीति जगद्व्यापारवर्जमित्यत्रोपपादयिष्यामः । यद्येवं दहरवाक्येऽथ य एष सम्प्रसाद इत्यादिना जीवप्रस्तावः किमर्थ इति चेत्तत्राह—

दहराकाशस्यैवापहतपाप्मत्वजगद्विधरणत्वादिवन्मुक्तस्य तदुपसम्पत्त्यापहतपाप्मत्वादिकल्याणगुणविशिष्टस्वाभाविकरूपप्राप्तिकथनेन तद्धेतुस्वरूपं परमपुरुषासाधारणं गुणमुपदेष्टुं प्रजापतिवाक्योक्तस्य जीवस्यात्र परामर्शः । प्रजापतिवाक्ये च मुक्तात्मस्वरूपयाथात्म्यविज्ञानं दहरविद्योपयोगितयोक्तम् । ब्रह्मप्रेप्सोर्हि जीवात्मनः स्वरूपं च ज्ञातव्यमेव । स्वयमपि कल्याणगुण एव सन्ननवधिकातिशयासङ्ख्येयकल्याणगुणं परं ब्रह्मानुभविष्यतीति ब्रह्मोपासनफलान्तर्गतत्वात्स्वस्वरूपयाथात्म्यविज्ञानस्य । "सर्वांश्च लोकानाप्नोति सर्वांश्च कामान्स तत्र पर्येति जक्षन्क्रीडन्रि"त्यादिकं प्रजापतिवाक्ये कीर्त्यमानं फलमपि दहरविद्याफलमेव ॥

दहरोऽस्मिन्नित्यल्पपरिमाणश्रुतिराराग्रोपमितस्य जीवस्यैवोपपद्यते, न तु सर्वस्माज्ज्यायसो ब्रह्मण इति चेत्तत्र यदुत्तरं वक्तव्यं तत्पूर्वमेवोक्तं निचाय्यत्वादेवमित्यनेनातो दहराकाशोनाघ्रातानिधाद्यशेषदोषगन्धः स्वाभाविकनिरतिशयज्ञानबलैश्वर्यवीर्यशक्तितेजःप्रभृत्यपरिमितोदारगुणसागरः पुरुषोत्तम एव । प्रजापतिवाक्यनिर्दिष्टस्तु घ्नन्ति त्वे"वैनं विच्छादयन्तीत्येवमादिभिरनगतकर्मनिमित्तदेहपरिग्रहः पश्चात्परं ज्योतिरुपसंपद्याविर्भूतापहतपाप्मत्वादिगुणकस्वरूप इति न दहराकाशः" । इतश्च तदेव ॥

(३) माध्वे—चन्द्रादित्याधारत्वं विष्णोरुक्तम् । तथाच "यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः किन्तदत्र विद्यते "उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते उभा-

यग्निश्च वायुश्च सूर्याचन्द्रमसावुभौ विद्युन्नक्षत्राणीत्यादिना आकाशस्य प्रतीयते स चाकाशो न विष्णुः तस्यान्ते शुषिरं सूक्ष्मं तस्मिन् सर्वं प्रतिष्ठितमि"ति श्रुतिरिति । अत आह–"य आत्मापहतपाप्मा विजरो विमृत्युर्विशोकोऽविजघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्य इत्यादिभ्य उत्तरेभ्यो गुणिभ्यो दहरो विष्णुरेव" । योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति । स एष सर्वेभ्यः पाप्मभ्य उदित इत्यादिना विष्णोरेव हिते गुणाः नित्यतीर्णाशनायादिरेक एव हरिः स्वतः अशनयादिकानन्ये तत्प्रसादात्तरन्ति हीति पाद्मे । सापेक्षनिरपेक्षयोश्च निरपेक्षं स्वीकर्तव्यम् । "सत्यकामोऽपरो नास्ति तमृते विष्णुमव्ययम् । सत्यकामत्वमन्येषां भवेच्च काम्यकामिते"ति च स्कान्दे ॥ "अहरहर्गच्छन्तं एतं ब्रह्मलोकं न विन्दती"ति सुप्तस्य त्वसङ्गतिर्ब्रह्मशब्दश्चोच्यते–"सता सोम्य तदा सम्पन्नो भवती"ति श्रुतेः तं हि सुप्तो गच्छति । अरश्च हरैण्यश्चार्णवौ ब्रह्मलोके इति लिङ्गञ्च तथा दृष्टम् । अरश्चारण्यश्च सुधासमुद्रौ तत्रैव सर्वाभिमतप्रदौ ह्यावित्यादिना तस्यैव हि तल्लक्षणत्वेनोच्यते–एष सेतुर्विधृतिरिति श्रुतेः । एष भूताधिपतिरेष भूतपाल इत्याद्यस्य महिम्नोऽस्मिन्नुपलब्धेः । एतस्मिन् खल्वक्षरे "गार्ग्याकाश ओतश्च प्रोतश्च एतस्य वा अक्षरस्य प्रशासने" । "स हि सर्वाधिपतिः सर्वपालः स ईशः स विष्णुः पतिः विश्वस्यात्मेश्वर" इत्यादि श्रुतिभ्यस्तस्य ह्येव महिमा । "सर्वेशो विष्णुरेवैको नान्योऽस्ति जगतः पति"रिति स्कान्दे ॥ तत्रापि दहरं गगनं विशोकस्तस्मिन् तदन्तस्तदुपासितव्यमिति प्रसिद्धेश्च । तदन्तस्यापेक्षत्वात्, तत् सुषिर इति श्रुतिविरोधः ॥ परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत एष आत्मेति होवाचेति जीवपरामर्शात् स इति चेत्–न, तस्य स्वतोपहतपाप्मत्वाद्यसम्भवात् ॥ स तत्र पर्य्येति जक्षत्क्रीडन्रममाण इत्याद्युत्तरवचनाद् जीवेति चेत्–न, तत्र हि परमेश्वरप्रसादाविर्भूतस्वरूपोऽयमुच्यते–यत्प्रसादात् स मुक्तो भवति स भगवान् पूर्वोक्तः ॥ यं प्राप्य स्वेन रूपेण जीवो निष्पद्य स एष आत्मेति परमात्मार्थश्च परामर्शः ॥ दहर इत्यल्पश्रुतेर्नेति चेत्–न, "निचाय्यत्वादेवं व्योमवच्चे"त्युक्तत्वात् । "एष म आत्मान्तर्हृदये ज्यायानि"ति श्रुत्युक्तत्वाच्च ॥

(४) निम्बार्कः—"अस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः" इति श्रुत्या प्रोक्तो दहराकाशः परमात्मा भवितुमर्हति । कुतः ? उत्तरेभ्यः । "यावान्वाऽयमाकाशस्तावानसौ अन्तर्हृदय आकाशः उभेऽस्मिन्द्यावा पृथिवी अन्तरेव समाहिते", "एष आत्माऽपहतपाप्मा विजर" इत्यादिभिर्वक्ष्यमाणा ये परमात्मासाधारणधर्मास्तेभ्यो हेतुभूतेभ्यः ॥ "सर्वाः प्रजा अहरहर्गच्छन्ती"ति गतिः ब्रह्मलोकमिति शब्दस्ताभ्यो हरः पर इति निश्चीयते । "सता सोम्य तदा सम्पन्नो भवती"ति प्रत्यहं गमनं श्रुत्यन्तरे तथैव दृष्टम् । कर्मधारयसमासपरिग्रहे ब्रह्मैव लिङ्गं शब्दसामर्थ्यञ्च ॥ "स सेतुर्विधृतिरेषां लोकानां" विधारकत्वं दहरस्य परमात्मत्वे सङ्गच्छते । अस्य च महिम्नो धृत्याख्येऽस्मिन्परमात्मन्येव "एतस्य वाऽक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत" इति श्रुत्यन्तरे उपलब्धेः ॥ "आकाशो ह वै नामरूपयोर्निर्वहिता", "सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते" इति परमात्मन्यप्याकाशशब्दप्रसिद्धेश्च दहराकाशः परमात्मैव ॥ "एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परञ्ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते", "एष आत्मेति होवाचे"ति दहरवाक्यमध्ये जीवस्यापि परामर्शाज्जीवोऽस्तु दहर इति चेत् । नाऽपहतपाप्मत्वादीनां जीवेऽसम्भवात् ॥ उत्तराज्जीवपरात्प्रजापतिवाक्याज्जीवेऽप्यपहतपाप्मत्वादिगुणाष्टकमवगम्यतेऽतः, स एव दहराकाशोऽस्त्विति चेत्, उच्यते–पूर्वोक्तगुणयुक्तो नित्याविर्भूतस्वरूपः परमात्मा दहर, आविर्भूतस्वरूपो जीवस्तु न ॥ जीव-

परामर्शः परमात्मनो जीवस्वरूपाविर्भावहेतुत्वप्रदर्शनार्थः ॥ ननु यदि दहराकाशो नित्याविर्भूतस्व-रूपः परमात्मा, तर्हि दहरवाक्ये "अथ य एष सम्प्रसादोऽस्माच्छरीरादि"त्यादिना जीवपरामर्शोऽप्यर्थः स्यादित्यत आह ॥ अल्पश्रुतेर्न विभुरत्र ग्राह्य इति चेत् । तत्समाधानाय यद्वक्तव्यं तदुक्तं पुरस्तात् ॥

(५) मैक्ष्वे—छान्दोग्याष्टमप्रपाठके श्रूयते "यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यमिति तं चेद्ब्रूयुर्यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः तदत्र विद्यते यदन्वेष्टव्यं यद्वाव विजिज्ञासितव्यमिति स ब्रूयात् यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश उभे अस्मिन्द्यावापृथिवी अन्तरेव समाहिते उभावग्निश्च वायुश्च सूर्याचन्द्रमसा उभौ विद्युन्नक्षत्राणि यच्चास्येहास्ति यच्च नास्ति सर्वं तदत्र समाहितमि"ति । तत्र संशयः, योऽयं ब्रह्मपुरे शरीरेऽन्तर्दहरे स्वल्पे हृदयपुण्डरीकरूपे वेश्मनि स्वल्पः आकाशः स किं भूताकाशादिरुत परमात्मेति ? तत्रायं निर्णयः, दहराकाशः परमात्मैव, कुतः ? उत्तरेभ्यः उत्तरवाक्येभ्यः । इत्यनेनैवाकाशवाक्यानां विचारितत्वात् पौनरुक्त्यं तद्विप्रकर्षानौचित्यं चास्याधिकरणस्येति वाच्यम्, तत्र भूताकाशाख्यविभूतिरूपेण ब्रह्मावधृतम्, अत्र चाकाशप्रवेशेन विश्वाधारतया च ब्रह्मावधार्यमित्यपौनरुक्त्यात्, आकाशशब्दश्चात्र ब्रह्मणि रूपकमात्रमन्यथा "यावान्वाऽयमाकाशस्तावानेषोऽन्तर्हृदय आकाश"इति भेदतन्त्रस्य दृष्टान्तत्वस्यानुपपत्तेरिति । अत एव सूत्रे दहर इत्येवोक्तं नत्वाकाश इति, एतेन विप्रकर्षोऽप्युचितः, पूर्वपादद्वये ब्रह्म सर्वान्तर्यामितया सर्वरूपत्वेन विचारितम्, अस्मिंश्च पादे सर्वाधिष्ठानत्वेनेति विशेषेण विप्रकर्षस्यापेक्षणात् अत्र यद्यपि दहरस्यस्यैवान्वेष्यत्वमुक्तं न तु दहरस्य तथाऽपि तद्वत "इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामानि"ति वाक्यशेषे द्वयोरेव ज्ञेयत्वावगमादात्मन एव विशेष्यतयोपास्यत्वमुपास्यद्वये गौरवादिति उत्तरेभ्य इत्युक्तं विवृणोति । गते शब्दाच्चेति पूर्ववदुत्तरार्थः "इमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्त्यनृतेन हि प्रत्यूढा" इति गतिवाक्यं ब्रह्मलोकमिति च ब्रह्मणः शब्दः ब्रह्मैव लोको ब्रह्मलोक इत्यर्थात्, आभ्यां गतिशब्दाभ्यां परमात्मैव दहराकाशो न भूताकाशादिरिति । ननु गतिवाक्यं ब्रह्मलोकशब्दहृदयावच्छिन्ने भूताकाशेऽप्युपपद्यत इत्यत आह—तथाहि दृष्टं चेति श्रुत्यन्तरे हि "सता सोम्य तदा सम्पन्नो भवती"त्यादौ ब्रह्मण्येव गमनं दृष्टं न विन्दन्तीत्यादि च ब्रह्मण एव लिङ्गं हृदयस्थभूताकाशस्य सर्वैर्वेद्यत्वादित्यर्थः, ननु ब्रह्मलोकशब्दस्य सत्यलोकस्यैव वाचकतया हिरण्यगर्भ एवात्र ग्रहणयोग्य इति चेन्न, अहरहर्गमनादिलिङ्गैर्ब्रह्मण एवात्र ब्रह्मलोकशब्दार्थत्वात्, लोकशब्देन स्थानवाचिना कर्मधारयसमासादिति । धृतेश्च हेतोः परमेश्वर एव दहरः "अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसम्भेदाये"त्युत्तरवाक्यादित्यर्थः, ननु जीवस्याप्यदृष्टद्वारा धारकत्वमस्त्येवेत्याशङ्कायामाह—महिम्न इत्यादि अस्य धारणरूपमहिम्नः प्रमावस्य अस्मिन् ब्रह्मण्येव श्रुत्यन्तरे उपलब्धेः "एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत" इति । नन्वेवमपि समस्तदेवतामयः सिद्धो विराट् जीव एव तथाऽस्तु तस्यापि हृदयस्थत्वादिश्च इत्याशङ्कायामाह । स्मृत्यादिषु प्रसिद्धेरपि हृदयपुण्डरीके ब्रह्मैवोपास्यतया ग्राह्यं यथा स्मृतिः । "ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया" । "तमेव शरणं गच्छ सर्वभावेन भारते"त्यादेति । ननु वाक्यशेषे "अथ य एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते एष आत्मेति होवाचे"त्यत्र सम्प्रसादाख्यस्येतरस्य जीवस्य परामर्शो दृश्यते । य एष इत्यनेन तस्यात्र एव पूर्वं दहरशब्दार्थ इति चेन्न, असम्भवात् । "एष आत्मा अपहतपाप्मा विजरो

विमृत्युर्विशोकः सत्यसङ्कल्प" इत्यादीनां पूर्ववाक्योक्तगुणानामाश्रयत्वेन हिरण्यगर्भादिव्यासम्भवादित्यर्थः। ननु स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्तीत्याद्युत्तरवाक्यात् जीवेऽपि सत्यसङ्कल्पत्वापहतपाप्मत्वादयः सम्भवतीति चेन्न। यत उत्तरवाक्ये आविर्भूतस्वरूपः स्वेन रूपेणाभिनिष्पन्नो जीव एवोक्तः, अतो न सत्यसङ्कल्पत्वादिकं जीवे सम्भवति स्वरूपानाविर्भावदशायां सङ्कल्पादितिरोधानादित्यर्थः परामर्शमुपपादयति। जीवपरामर्शस्तु परमात्मप्रतिपादनार्थो न तु जीवस्यैव प्रतिपादनार्थ इत्यर्थः तथा चायं च एषेत्यादिश्रुतेरर्थः यः सम्प्रसादः धर्मधर्मिणोरभेदात्सम्प्रसन्नः पूर्वोक्तो विज्ञान एव परं ज्योतिः परं ब्रह्मोपसम्पद्य स्वेनासंसारिरूपेण निष्पन्नो भवति एव परं ज्योतिःस्वरूप आत्मेति यथि यत्र गत्वा वैकारिकं रूपमेदं जहाति तत्तस्यात्मा भवति स्थावरजङ्गमानामिव पृथिवीति श्रुतेराशयः। एतेन माण्डूक्यादिश्रुत्यन्तरेऽपि परमात्मप्रकरणे जीवपरामर्शः परमात्मप्रतिपादनार्थं एव न पुनरखण्डतामतिपादनार्थं इत्याचार्य्यैरुक्तप्रायं वेदितव्यम्। ये च जीवब्रह्मणोरखण्डताम्भ्युपगच्छन्ति तेषामन्यार्थत्ववचनमयुक्तं स्यादिति मन्तव्यम्। स इत्यनुवर्तते दहर इत्यनेनाल्पत्वश्रवणात् स जीव एव दहर इति चेत् तदुक्तं तत्रोक्तं "निचाय्यत्वादेवं व्योमवच्चे"त्यनेन सूत्रावयवेनेत्यर्थः (अन्तर्यामिविद्यया ह्यल्पतयैव हृदये परमात्म व्यज्यत इति) ॥

(६) भास्करीये—अथ "यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यमिति श्रूयते"। दहरोऽस्मिन्नन्तराकाश इत्यत्र सन्देहः किं भूताकाशः? किं वा जीवोऽथ पर एवेति? भूताकाश इति ब्रूमः प्रसिद्धेः। ननु च "यावान् वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश" इत्येकस्यैवोपमानोपमेयभावो नोपपद्यते नायं विरोधो बाह्याभ्यन्तरकृतं भेदमङ्गीकृत्योपपत्तेः। जीवो वा स्यादन्तर्निवासित्वात् दहरश्रुत्युपपत्तेश्च। दहरमल्पम्। आराग्रमात्रश्च जीवः तथाहि श्रुतिः। "आराग्रमात्रो ह्यवरोऽपि दृष्ट इति प्राप्तेऽभिधीयते पर एव दहराकाशः कस्मादुत्तरेभ्यो वाक्यशेषगतेभ्यो हेतुभ्यो यावान् वा अयमाकाश" इति प्रसिद्धेनाकाशेनोपमीयते दहराकाशः भिन्नयोश्चोपमानोपमेयभावो "गोगवयवत्" नैकस्यैकश्रुत्यर्थपरित्यागप्रसङ्गात्। "उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते" इति समस्तविकाराधारत्वं परमकारणस्योपपद्यते "एष आत्माऽपहतपाप्मा" विजर इत्यात्मत्वादिरपहतपाप्मत्वादिवदन्यत्र नावकल्पते। अत एव जीवोऽपि न गृह्यते। दहरत्वं पुनः पुण्डरीकदहरत्वेनैवोपाधिकं तन्निवृत्त्यर्थमेव चोपादानम् ॥ उत्तरे हेतवः सामान्योक्ताः प्रपञ्च्यन्ते, प्रथमे"येमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ती"ति प्रजानां गति यश्च ब्रह्मलोकशब्दस्ताभ्यां दहराकाशं ब्रह्म प्रतिपद्यामहे। तथाहि दृष्टं "सता सोम्य तदा सम्पन्नो भवतीति"। तेषामेवैव ब्रह्मलोक इति वाक्यशेषो लिङ्गम्। अथवा लिङ्गं सामर्थ्यं ब्रह्मैव लोक इति विशेषणसमासपरिग्रहे। न हि प्रजानामहरहर्ब्रह्मणश्चतुर्मुखस्य लोकगमनं सम्भवति ॥ धृतेश्च हेतोः पर एवायम्। अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसम्भेदायेति। विधृतिर्विधारयितेत्यर्थः कर्तरि क्त्युत्पत्तेः। अध्यात्माधिदैवभेदभिन्नानां लोकानां विधारयिता। असम्भेदायासङ्कराय विदारणाय वा। तेन हि विधृता लोका न स्फुटन्ते। अस्य च महिम्नोऽपि धृतेरस्मिन्नेवार्थेऽन्यत्रोपलब्धेरे"तस्य वाक्षरस्य प्रशासने गार्गी"ति ॥ परस्मिन्नप्याकाशशब्दप्रसिद्धेः। आकाशो वै नामरूपयोर्निर्वहितेति ॥ इतरस्य जीवस्य वाक्यशेषे परामर्शात्। "अथ य एष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत एष आत्मेति होवाचेति"। स एवोपक्रमे दहराकाश इति चेन्न असम्भवादपहतपाप्मादीनां गुणानां तस्मिन्नसम्भवात् ॥ उत्तरात् प्राजापत्या-

द्वाक्याद् य आत्मापहतपाप्मेत्युपक्रम्य य एषोऽक्षिणि पुरुषो दृश्यत एष आत्मेति जीवः प्रतीयते। स एवोपक्रमेऽपि दहराकाशः स्यात् तथोत्तरत्राप्यनुकर्षणं भवत्येव एतं त्वेव ते भूयोऽनुव्याख्यास्यामीति । य एष स्वप्ने महीयमानश्चरत्येष त आत्मेति तद् यत्रैतत्सुप्तः समस्तः सम्पन्नः स्वप्नं न विजानातीति सुषुप्तावस्थायामपि स एव व्याख्येयत्वेनानुकृष्यते । पुनश्चोपसंहरत्येवमेवैष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्येत्यतो जीव एवेति चेत् । परिचोदनानिवृत्त्यर्थस्तु-शब्दः । जीवोऽत्राविर्भूतस्वरूपो विवक्षितः । आविर्भूतं स्वरूपं यस्य सोऽयमाविर्भूतस्वरूपः । परमात्मस्वरूपेणायं जीवो विवक्ष्यते न जैवेन रूपेणानाविर्भूतं हि तस्य जीवावस्थायां पररूपमविद्याकामकर्मतिरस्कृतत्वात् । तत् पुनर्विद्ययाभिसम्पत्तव्यं तेनाकारेण जीवो निर्दिश्यते । ततश्चापहतपाप्मादयो धर्मा उपपद्यन्ते जैवे रूपे ते विरुध्यन्ते ॥ यद्येवं जीवरूपोपन्यासः किमर्थः य एषोऽक्षिणीत्याशङ्क्याह—चशब्दः सम्भावनायाम् । अनादिकालप्रवृत्तप्रत्यक्षादिप्रमाणसिद्धकर्तृभोक्त्रादिरूपं पराभृश्यतेऽनूद्यते प्रजापतिना पररूपं मघवते करतलस्थबिल्ववत् प्रदर्शयितुमित्यविरोधः । प्रस्थानादिगतयः काश्चित् परं प्रतिपाद्य तदसीति ग्राहयन्ति यथा तत्त्वमसीति । काश्चित् । पुनर्जीवमेवाधिकृतां तान्तामवस्थां प्रत्याख्याय ततः परमात्मरूपं दर्शयन्ति । यथा कतम आत्मा योऽयं विज्ञानमय इत्युपक्रम्य अनस्थिकोऽशरीरः स वा एष महानज आत्मेत्युपसंहारात् । परमात्मना सम्पन्नस्यैकात्मनः कर्तृभोक्तृस्वरूपविनिवृत्तिः सा च श्रुत्या दर्शिता । अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः अस्माच्छरीरात् समुत्थायेति च । प्रारब्धकर्मफलभोगस्यावश्यम्भावित्वाद्धियमाणशरीरस्यावश्यम्भावी सुखदुःखानुभवस्तस्माज्जीववदेवमुक्तमिति ये प्रतिजानते ते श्रुतिमतियन्ते दृष्टानुभं बाधन्ते ॥ दहरश्रुतेर्न परमेश्वर इति चेत् तत्र यद्वक्तव्यं तदुक्तं पुरस्तादर्भकौकस्त्वादिति ॥

( ७ ) श्रीमद्वल्लभाचार्यमतेऽयमभिप्रायः—छान्दोग्ये दशमप्रपाठकारम्भे श्रूयते । "अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तर आकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यमि"ति । तत्र संशयः । किं जीवोऽन्वेष्टव्यः ? किं वा परं ब्रह्मेति ? नचाकाशस्तल्लिङ्गादित्यधिकरणे आकाशशब्दवाच्यतया ब्रह्मणि विचारितत्वादधिकरणस्य किं प्रयोजनमिति शङ्क्यम् । अत्र दर्शने श्रुत्यर्थस्य निर्णेयत्वाज्जीव एव परमार्थतो ब्रह्म ? उत ब्रह्म भिन्नमित्येतन्निर्णयार्थत्वेऽनावश्यकत्वात् ।

तत्र तावद्दहराकाशो जीव एव । तथाहि अत्रापहतपाप्मादिगुणकात्मप्रतिपादके महावाक्ये आद्यं दहरप्रकरणं, द्वितीयं चेन्द्रप्रजापतिसंवादात्मकम् । तत्र द्वितीये चतुर्भिः पर्यायैर्जाग्रत्स्वप्नसुषुप्तिमुक्त्यवस्थाभेदेन अमृताभयरूपो जीव एव प्रतिपादित इति प्रथमेऽपि प्रकरणे स एव युक्तः । द्वितीयस्यैतद्व्याख्यारूपत्वात् । अत्राप्यर्थविचारे हृदयाकाशमेव प्रक्रम्य, तस्य ब्रह्मवेश्मत्वमप्युक्त्वा, तत्र वर्तमानस्यैव जीवस्यैव आत्मापहतपाप्मेत्यङ्गुल्येव निर्देशात् । तत्र च आराग्रमात्रस्य जीवस्यैव मातुं शक्यत्वात् । नचाकाशशब्दवाच्यत्वविरोधः । तात्स्थ्यात्तद्व्यपदेशस्य सुवचत्वात् । यदि च, तस्मिन् यदन्तस्तदन्वेष्टव्यमित्याकाशान्तर्वर्तिनोऽन्वेष्टव्यत्वं, न जीवस्येति शङ्क्यते, तथा सति तत्र वासनारूपेण विद्यमानस्य सर्वस्यात्रोक्तस्य तन्महिमरूपत्वात्तस्यान्वेष्टव्यत्वमस्तु । नच तन्महिम्नो वासनात्मकत्वे मानाभावः । "यावान् वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः", "उभे अस्मिन् द्यावापृथिवी समाहिते" इत्यादिना अन्तर्बहिश्च सर्वस्थने प्रत्यक्षविरोधापत्त्या जीवान्तस्तादृशस्यैव मन्तव्यत्वात् । नचैतद्यथापि हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरिसञ्चरन्तोऽपि न विन्देयुरेवमे-

घे"माः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ती"ति जीवानां प्रत्यहं ब्रह्मनिकटगमने तदज्ञानं यच्च श्रावितं, तज्जीवस्य वस्तुतो ब्रह्मत्वे सत्यस्य ज्ञानाप्राप्त्योरवाच्यवचनत्वादसङ्गतं स्यादिति शङ्क्यम् । स्वप्नमायामनोरथादिषु स्वयं कल्पिता ये जीवास्तद्गमनागमने उद्यीशस्य सुखेन सङ्गतिसम्भवात् । तस्माज्जीव एव दहर इत्येवं प्राप्ते, प्रत्युच्यते--

दहर इत्यादि । दहरः परमात्मैव, न जीवः, कुतः ? । उत्तरेभ्यः । दहरनिरूपणानन्तरं वक्ष्यमाणेभ्यो हेतुभ्यः । तेषामपि हेतूनां हेतुताया अस्फुटत्वे साध्यत्वादेवं कथनम् । तस्माद् दहरः परमात्मा ॥

उक्तहेतूनां मध्ये हेतुद्वयं प्रसाधयति । गतीत्यादि । गतिर्ब्रह्मलोकगमनं, तद्यथा हिरण्यनिधिमित्यादिनोक्तम्, शब्दः एष आत्मापहतपाप्मेत्यादिपदानि, ब्रह्मलोकपदं च, ताभ्यां हेतुभ्यां तथा । ननु तयोरेव कथं भगवत्परत्वम् ? । गतेर्मनोरथादिकल्पितजीवपरत्वस्य शब्दानां मुक्तावस्थजीवपरत्वस्योपपादितत्वादित्यत आह । तथाहीत्यादि । गतिशब्दौ भगवत्परत्व एव युक्तौ, न तु जीवपरत्वे । अत्र हि, ब्रह्मलोकेऽहरहर्गच्छतां ब्रह्मलोकाज्ञानहेतुभूतं विशेषणमनृतेन प्रत्यूढा इति । तेन चाज्ञानावेष्टितत्वमुच्यते, न त्वज्ञानकल्पितत्वम् । तच्च दृष्टं प्रत्यक्षगम्यमेव । सर्वेषां सुषुप्त्यनन्तरमुत्थाने, न किञ्चिदवेदिषमित्येवं स्मरणस्यानुभवसाक्षिकत्वात् । यदि हि गन्तारोऽज्ञानकल्पिता भवेयुः, तदा जाग्रद्दशायामज्ञाननाशात् स्मरणं नोपपद्येत । नच गन्तुरभाव एवेति युक्तम् । तथा सति "य इहात्मानमनुविद्य व्रजन्ती"ति गतिबोधकशास्त्रानर्थक्यप्रसङ्गात् । आत्मगन्त्रोर्ज्ञानकर्मकर्तृत्वविरोधापत्तेश्च । न च अज्ञानस्य चरमवृत्तिनाश्यत्वात् ततः पूर्वमज्ञानसत्त्वात् सर्वमुपपद्यत इति वाच्यम् । तथा सति गन्तृत्वेन विवक्षितस्य चरमवृत्तौ वा नष्टे आत्महानात्तस्या अपुरुषार्थत्वापत्तेः । तस्माज्जीवब्रह्मवादे गत्यनुपपत्तेस्तथाकल्पनमयुक्तं, किन्तु मते जीवभिन्नपरत्वमेव युक्तमित्यर्थः । एवमपहतपाप्मत्वादिशब्दानामपि ब्रह्मपरत्वमेव । तद्विरुद्धधर्माणां जीवे दृष्टत्वात् । मुक्तावस्थाप्रसङ्गस्याप्रस्तावेन तेषामत्र वक्तुमशक्यत्वात् । भगवति तु ध्यानावस्थायामिदानीमपि तेषामुपलब्धेः । अतः शब्दानामपि ब्रह्मपरत्वमेव युक्तमित्यर्थः । ननु ब्रह्मवादेऽपि सर्वस्य ब्रह्माभिन्नत्वाज्जीवब्रह्मणोरंशांशिभावजनकविभागस्याज्ञानिकत्वमेव वाच्यम् । वियया तदङ्गीकारे ब्रह्मणोऽनित्यत्वापत्तेः । अतो जीवानामज्ञानकल्पितत्वमेव सेत्स्यतीति वृथा तत्परिहाराडम्बर इति चेत्, न बहु स्यामित्यादीच्छयैव विभागेऽपि पृथिवीशरावयोरिवांशांशिभावस्याज्ञानाकृतत्वोपपत्तेः सर्वसामञ्जस्येनाबाधात् । अतो जीवानामज्ञानदर्शनाद् ब्रह्मणः सर्वगतत्वदर्शनाद्गतिशब्दौ जीवभिन्नब्रह्मविषयावेव, न जीवविषयौ । किञ्च, गतिशब्दयोर्ब्रह्मपरत्वे लिङ्गं च वर्तते । तथाहि । "तद्यथेह कर्मजितो लोकः क्षीयत एवमेवामुत्र पुण्यजितो लोकः क्षीयत" इत्यस्य वाक्यस्य शेषे आत्मानमनुविद्य व्रजन्तीत्यात्मज्ञानं लोकक्षयहेतुत्वेनोच्यते । यदि [illegible] गन्तारो मनोरथकल्पिताः स्युः, तदा तेषां मिथ्यात्वेन अनुविद्य व्रजन्तीत्याद्युक्तसर्वलोककामचारादिरूपस्य हितस्य वैयर्थ्यात् तत्करणं प्रसज्येत । अतोऽस्या गतेर्ब्रह्मभिन्नाभिमानिकल्पितसत्यजीवकर्तृकत्वं जीवविषयत्वावगमे लिङ्गम् । एवं सर्वलोककामचारसत्यसङ्कल्पादिरूपं माहात्म्यमप्यपहतपाप्मादिशब्दानां जीवभिन्नब्रह्मपरत्वावगमे, लिङ्गम् । यथा बृहदारण्यके 'तद्यो यो देवानां प्रत्यबुध्यत तथर्षीणां तथा मनुष्याणामित्यनेकजीवानुपक्रम्य "तदिदमप्येतर्हि य एवं वेदाऽहं ब्रह्मास्मीति स इदं सर्वं भवती"त्युक्तं सार्वात्म्यं ब्राह्मणोपक्रमपठितस्यात्मपदस्य जीवभिन्नब्रह्मपरत्वे लिङ्गं तद्वत् । अतो लिङ्गादपि गति-

शब्दौ जीवभिन्नब्रह्मविषयौ । चकारात् "तमेव विदित्वा अतिमृत्युमेती"ति श्रुतौ विशेष्यान्वित एवकारोऽपि ब्रह्मण एवात्मत्वेन ज्ञानं मोक्षायेति बोधयति, न त्वात्मनो ब्रह्मत्वेन ज्ञानं मोक्षायेति सूच्यते । श्रुतौ विषयत्वेन ब्रह्मण एव परामर्शादिति । तस्माद् दहरः परमात्मा ॥

दहरसूत्रे हेतुबाहुल्यस्य प्रतिज्ञानादत्र तृतीयं हेतुमाह । धृतेरित्यादि । इतोऽपि हेतोर्दहरः परमात्मा । कुतः ? । धृतेः । "अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसम्भेदाये"ति श्रुत्युक्ताद् विधारणान्निरङ्कुशसर्वलोकधारकत्वस्य ब्रह्मासाधारणत्वात् तथेत्यर्थः । चकारात् सेतुत्वं संगृह्यते । सेतुत्वस्य निःसाधनपारतारणसाधनात्मकत्वात् तादृशत्वस्य च 'अक्षयापूतं निशि शयानम्' इत्यादौ ब्रह्मधर्मत्वेन सिद्धत्वादिति । अन्यं हेतुमाह । महिम्न इति । पुरुषसूक्ते, "एतावानस्य महिमा अतो ज्यायाँश्च पूरुष' इति महिम्नो ब्रह्मज्यायस्त्वगमकत्वं श्रावितम् । अत्र च दहरस्य शरीरैकदेशान्तर्वर्तित्वकथनपूर्वकं, यावान् वेत्यादिना परममहत्त्वं श्राव्यते । उभे अस्मिन्नित्यादिना बहिर्वर्तिनामेवान्तर्वर्तित्वं च । तच्च जीवजडयोरसम्भवद्युक्तिविरोधेनाश्चर्यं जनयद्भगवदसाधारणोत्कर्षात्मकत्वान्माहात्म्यरूपं भवति । उत्कर्षजनक एव च महिमा । गोअश्वमिह महिमेत्याचक्षत इत्यादिश्रुतेः । अतो लोकविधारणादेर्विरुद्धधर्माश्रयत्वबोधकतया महिमरूपत्वात् ततोऽपि दहरो भगवानित्यर्थः । एवं लोकविधारणस्वरूपेण महिमरूपतया चेति द्विधा हेतुत्वं बोधितम् । अथ कथमस्यासाधारणतेत्यत आह अस्येत्यादि । एतादृशविरुद्धधर्माश्रयत्वस्यास्मिन् ब्रह्मण्येव शब्दात् प्रत्यक्षाच्चोपलब्धेः । शब्दस्तु, "ज्यायान् दिवो ज्यायानाकाशात्" । "यावान् वा अयमाकाशः, अणोरणीयान् महतो महीयान्", "आसीनो दूरं व्रजति, शयानो याति सर्वतः", "अन्धो मणिमविन्दत् तमनङ्गुलिरावय"दित्यादिः । प्रत्यक्षं च यशोदाप्रभृतीनाम् । तस्मात् परमात्मैव दहरः ॥

आकाशशब्दवाच्यत्वप्रसिद्धेरपहतपाप्मत्वादिप्रसिद्धे "रश्च ह वैण्यश्चार्णवौ ब्रह्मलोक" इत्यरण्यान्तर्गतवापाद्युपबृंहितश्रीमागाख्यभगवल्लोकप्रसिद्धेश्च जीवे असम्भवाद् दहरो भगवानेवेत्यर्थः । चकारो विधिमुखेनाधिकरणसमाप्तिसूचकः ॥ १७ ॥

इदमेव पुनर्निषेधमुखेन विचारयति । एवं चतुःसूत्र्या दहरस्य परमात्मत्वं साधयित्वेदानीं चतुःसूत्र्या जीवस्य दहरत्वं दूषयन् सूत्रांशेनाशङ्क्य परिहरति—इतरेत्यादि । ननु ब्रह्मवादे जीवब्रह्मणोः स्वरूपस्य श्रुत्येकसमधिगम्यत्वाद्यथाश्रुतमादरणीयम् । तत्र यथा सर्वत्र ब्रह्मासाधारणधर्मदर्शनाद् ब्रह्मप्रकरणत्वं निश्चीयते, एवमत्रोपक्रमाद्युपसंहारान्तं जीवपरामर्शाज्जीव एव प्रकरणी निश्चेयः । कथं स इतिचेत् ? इत्थम् । अत्र हि, "य इहात्मानमनुविद्य व्रजन्ती"त्यारम्भे जीवमुपक्रम्य, "अत्र ह्यस्यैते सत्याः कामा अनृतापिधाना" इत्यन्तेन दहरविदः कामा उक्ताः । मध्येऽपि, "तद्यथापि हिरण्यनिधिं निहित"मित्यत्र ब्रह्मसमीपगमनेऽपि तदप्राप्तिः प्रतिपादिता, आत्मनो हृदि स्थितिश्च । अन्ते च "य एष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परञ्ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत" इति प्रतिपाद्य तस्यैव सेतुत्वादिकं प्रतिपादितम् । तत्रादिमध्ययोर्जीवो निःसन्दिग्धः । अन्तेऽपि सम्प्रसादो जीव एव । बृहदारण्यके, "स एषोऽस्मिन् सम्प्रसादे रत्वा चरित्वे"ति सम्प्रसादस्य जीवावस्थाविशेषत्वेनोक्ततया तदुपलक्षितस्य जीवस्यैव आदरणीयत्वात् । तस्य च परत्वसम्बन्धेन स्वरूपाभिनिष्पत्तिवचनं जीवासाधारणं लिङ्गम् । तेनोपक्रमगतमात्मवेत्तृत्वमपि स्ववेत्तृत्वरूपं जीवधर्म एव । अतोऽनस्य जीवधर्मत्वं स्फुटमेव । सेतुत्वमपि साधनत्वम् । तथाचात्र प्राप्यत्वेन ब्रह्मणः प्रतिपादनेऽपि न तस्य प्रकरणित्वम् । मन एवं सर्वत्रेतरस्य जीवस्य परामर्शाज्जीव एव प्रकरणार्थ इति चेत् । न । जीवः प्रकरणी

न भवति । कुतः ? । असम्भवात् । सर्वत्र वेदान्ते "द्वावजावीशानीशौ" "ऋतं पिबन्ता"वित्यादिभिर्ब्रह्मविरुद्धधर्मवत्त्वैव ब्रह्माभिन्नतया च तन्निश्चयेनात्रसकलजगदाधारत्वादेस्तत्रासम्भवात् । नचैवं सति प्रदर्शितस्य परामर्शस्य का गतिरिति शङ्क्यम् । तस्यान्यार्थताया अग्रिमसूत्रे वक्ष्यमाणत्वात् । तावन्मात्रेण सर्ववेदान्तविरुद्धकल्पनस्य कर्तुमशक्यत्वात् । वाक्यार्थोपपत्तेरुत्तरसूत्रे वक्ष्यमाणत्वाच्चेति । तस्माच्च जीवो दहर इति ॥ १८ ॥

पुनराशङ्क्य समाधत्ते । उत्तरादिति । उत्तरात् । प्राजापत्यात् प्रकरणादत्रापि जीवः प्रकरणीतिचेत् । अयमर्थः । उत्तरस्मिन् । इन्द्रप्रजापतिसंवादप्रकरणे चतुर्भिः पर्यायैरात्मा बोधितः । तत्र प्रथमे पर्याये, "य एषोऽक्षिणि पुरुषो दृश्यते, एष आत्मेति होवाचैतदमृतमभयमेतद् ब्रह्मे"त्यनेन जाग्रत्साक्षिणं निर्दिश्य तस्यामृताभयरूपत्वं च दर्शितम् । नचैतदग्रे, 'अथ योऽयं भगवोऽप्सु परिख्यायते, यश्चायमादर्शे 'कतम एष' इति प्रश्ने 'एष उ एव सर्वेष्वेतेषु परिख्यायत' इत्युत्तरात् प्रतिबिम्बपुरुष एवोच्यते, न जाग्रत्साक्षीति शङ्क्यम् । द्वितीयादिपर्यायारम्भे"एवं त्वेव ते भूयोऽनुव्याख्यास्यामी"ति प्रतिज्ञाविरोधापत्तेः । अतस्तत्पर्यायेष्ववस्थाविशेषविशिष्टस्य जीवस्यैवोपदेश इति निश्चीयते । तथा सति प्रथमे 'एषोऽक्षिणी'ति यदुक्तम्, तत्राक्षिपदेन मन एव ग्राह्यम् । उपान्तभागे 'मनोऽस्य दैवं चक्षु'रितिवक्ष्यमाणत्वात् । तत्र दृश्यमानश्च जाग्रत्साक्ष्येव । अहंवित्तेः प्रतीयमानत्वात् । तदनु तस्यैव 'य एष स्वप्ने महीयमान' इत्यादिना स्वप्नसाक्षित्वम्, तदनु 'तद्यत्रैतत् सुप्तः समस्त' इत्यादिना सुषुप्तिसाक्षित्वं च निरूप्य सर्वत्र तस्यामृतत्वं च निरूप्य, तदनु 'मघवन् मर्त्यं वा इदं शरीर'मित्यादिना शारीरत्वादासामवस्थानां तस्मिन्नतात्त्विकत्वं बोधयित्वा, समाप्यवस्थायां मनसि जीवं तादृशं प्रतिपादयतीत्यतो जीवोऽपि वस्तुतोऽपहतपाप्मत्वादिधर्मवान् ब्रह्माभिन्न एव प्रकरणीतिचेत् । एवं सूत्रांशेन आशङ्क्यांशान्तरेण परिहरति । आविर्भूतस्वरूपस्त्विति । अत्र पूर्वपक्षपरिहारकस्तुशब्दः । जीवस्यैवंरूपतायां कारणान्तरमुक्त्वा एतस्य जीवप्रकरणतायाः स्थाप्यत्वाच्चात्र नकारप्रयोगः । परिहारप्रयोजकं कारणमाह आविर्भूतस्वरूप इति । स्वाप्ययसम्पत्त्योर्जीवे भगवदावेशः फलाध्यायोपान्ते वक्ष्यते । ब्रह्मसम्पत्तिश्चोपासनादिपौष्कल्यात् । अतो नृसिंहोपासकस्य नृसिंहाविर्भाववत्प्रजापतेर्ब्रह्मत्वेनोपदेशावसरे ब्रह्माविर्भावात् सर्वत्र स्वात्मानममृताभयरूपं पश्यन्निन्द्रं प्रत्यात्मनस्तथात्वमुपदिष्टवान्, "परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत" इति चोक्तवान् । अतः, आविर्भूतस्वरूपत्वाज्जीवस्तादृश उच्यते, न तु स्वतस्तादृश इतीतरपरामर्शेऽपि न पूर्वत्र जीवः प्रकरणीत्यर्थः । नच जीवस्य स्वतस्तादृशत्वाभावे किं गमकमिति शङ्क्यम् ? । अवस्थाभेदानामेव गमकत्वात् । नच तासामागन्तुकत्वाच्च तदभावगमकत्वमिति वाच्यम् । अमृतत्वादेः अभावरूपस्य तत्र साहजिकत्वे घ्नन्तीव जिनन्तीवविच्छादयन्तीवेत्यादिश्राविवस्य तत्प्रतियोगिनो भयादेस्तत्र प्रामाणिकस्यादास्यवचनत्वप्रसङ्गादिति । अतोऽत्रापि ब्रह्मण एवोपदेष्टव्यत्वाद् ब्रह्मैव प्रकरणि, न तु जीवः । तस्माद् दहरः परात्मैव ॥ १९ ॥

ननु यदि प्रकरणद्वयेऽपि ब्रह्मैवोपदेष्टव्यम्, तदा जीवपरामर्शस्य किं प्रयोजनमत आह । अन्येत्यादि । प्रथमप्रकरणे जीवपरामर्शोऽन्यार्थः । ब्रह्मसुखरूपफलानुभवे स्वरूपयोग्यतासम्पत्त्या बोधनार्थः । कथमिति चेत् ? इत्थम् । तत्र हि, "तस्य ह वा एतस्य नाम सत्यमि"ति । तानि ह वा एतानि त्रीण्यक्षराणि स ति यमिति । तद् यत् सत् तदमृतमथ यत् ति तन्मर्त्यमथ यद् तेनोभे यच्छति यदने-

नोमे यच्छति तस्मायमदहवां पवम्वित् स्वर्गं लोकमेती"ति वाक्ये भगवत्कर्तृकामृतमर्त्ययमयितृत्वज्ञाने स्वस्य ब्रह्मसुखं फलमुक्तम् । तत्र यमयितृत्वज्ञानं यन्तव्यज्ञानाधीनमिति तयोर्मर्त्यस्य प्रसिद्धत्वादमृतं ज्ञापनीयमतस्तज्ज्ञापनाय जीवपरामर्शः । किञ्चेतः पूर्वमथ य एष इत्यादिना स्वरूपाभिनिष्पत्तिरुक्ता । तेन ज्ञानिदशायां भगवदाविर्भावो भवति । सः चकारेण सूच्यत इति तज्ज्ञापनाय च परामर्श इति । नचैतदर्थमेव परामर्श इत्यत्र किं मानमिति शङ्क्यम् । फलाध्यायोपान्ते स्वाप्ययसम्पत्त्योरिति सूत्रे सम्पत्तौ भगवदावेशस्य वक्तव्यत्वादिति । तस्मान्न परामर्शमात्रेण तथा कल्पनं युक्तमित्यर्थः ॥ २० ॥

ननु न वयं जीवे उपपत्तिरस्तीति जीवप्रकरणं कल्पयामः, किन्तु ब्रह्मणि नायमर्थ उपपद्यत इत्यतो जीवप्रकरणं यदाम इत्याशङ्क्य तत्र पूर्वोक्तं समाधिं स्मारयति । अल्पेत्यादि । अल्पश्रुतेः अल्पेऽधिकरणेऽवस्थानश्रवणात् । दहरपुण्डरीके भगवतो "यावान् वा अयमाकाश" इत्यादिना व्यापकत्वेन श्रावितस्यावस्थानं न सङ्गच्छते । अतो जीव एवाराग्रमात्रो विरोधपरिहाराय तत्र भवत्विति कल्प्यत इति चेत् । तदुक्तम् । यद्येयमसद्धीत्या विचारयसि, तदा तत्समाधानमस्माभिरर्भकौकस्सूत्रे प्रागेवोक्तम्, "निचाय्यत्वादेवं व्योमवच्चे"त्यनेन । हृदये चिन्तनीयत्वाद् इति । तच्च विस्मर्तव्यम् । सर्वभवनसमर्थे ब्रह्मणि विरोधासम्भवस्यासकृदुपपादितत्वाच्च । तथा "विजिघत्सोऽपिपास" इत्यादिसूचितं पुरुषशरीरमपि विरुद्धमिति नाशङ्कनीयम् । "पुरुषत्वे च मां धीराः सांख्ययोगविशारदाः, आविस्तरां प्रपश्यन्ति सर्वशक्त्युपबृंहित"मिति भगवद्वाक्यात् । तस्माद्दहरो भगवानेवेति सिद्धम् ॥ २१ ॥ ५ ॥



## ६ अनुकृत्यधिकरणम् ।

( सर्वावभासकत्वप्रतिपादनम् )

**अनुकृतेस्तस्य च ॥ १।३।२२ ॥**

दहरविरुद्धं वाक्यमाशङ्क्य परिहरति—"न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः । तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति" (मुं. २।२।१०), (कठ. २।५।१५), (श्वे. ६।१४) इति कठवल्ल्यामन्यत्र च श्रूयते । यत्तच्छब्दानामेकार्थत्वं प्रकरणाद् ब्रह्मपरत्वं चावगतम् । अर्थाच्च सन्देहः । यस्मिन् द्यौरित्यत्र सूर्यादीनां ब्रह्माधारत्वमुक्तम् । अस्मिंश्च वाक्ये पूर्वार्धे तत्र तेषां भानं निषिध्यते ।

> यत्र यत्सर्वदा तिष्ठेत् तत्र चेत्तन्न भासते ।
> क्व भासेताप्यपेक्षायां कर्मत्वे श्रुतिबाधनम् ॥ २० ॥

यत्रेत्यधिकरणसप्तमी । यत्र लोकान्तरस्थितानामप्यभानं तत्राग्नेः का वार्तेति वचनात् सत्यलोकस्थितेः कश्चित्तेजोविशेष एव वाक्यार्थ इत्येवं प्राप्ते, उच्यते—

अनुकृतेस्तस्य । भगवदनुकारार्थमेवैतद्वचनम् । स्वतो भाननिषेधः पूर्वार्धे । सर्वोऽपि पदार्थस्तमेवानुकरोति सूर्यं रश्मय इव छाया पुरुषमिव । तस्माद् वाक्ये भगवदनुकारित्ववचनान्न नानार्थकल्पनम् । किञ्च, "तस्य भासा सर्वमिदं विभाति" (मुं. २।२।१०) इति सूर्यादीनां स्वतः प्रकाशो नास्त्येव घटवत् । भगवत्प्रकाशेनैव प्रकाशकत्त्वमिति चकारार्थः । तस्मात्स्वतो भाने लक्षणया कर्मत्वे वा भगवत्परत्वे सिद्धे नान्यार्थकल्पनम् ॥ १।३।२२ ॥

**अपि स्मर्यते ॥ १।३।२३ ॥**

व्याख्यातेऽर्थे सम्मत्यर्थमाह—अपीति समुच्चयः । "न तद् भासयते सूर्यो न शशाङ्को न पावकः" (भ. गी. १५।६) । "यदादित्यगतं तेजो जगद्भासयतेऽखिलम् । यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्" (भ. गी. १५।१२) इति च । तस्माद् भगवानेव सर्वावभासकः । तमेव सर्वमनुकरोतीति सिद्धम् ॥ १।३।२३ ॥ ६ ॥

---

अनुकृत्याधिकरणमाहुः—अनुकृतेस्तस्य च । अन्यत्रेति । मुण्डके श्रूयते । 'पञ्चमवल्लीसमाप्तौ, द्वितीयमुण्डकसमाप्तौ श्रूयते । संशयमाहुः—यत्तदिति । "य एष सुप्तेषु जागर्ति" । मन्त्रान्तरेऽपि "तस्मिन् लोकाश्रिताः सर्वे" इत्यादिमन्त्रेषु यत्तच्छब्दानामित्यर्थः । अर्थजन्यसन्देहमाहुः—यस्मिन्निति । पूर्वपक्षी श्रुतितात्पर्यमुक्त्वा समाधानमाहुः—तत्रेति । सूर्यादीनामभाने पूर्वार्द्धश्रुतेर्न तात्पर्यं, किन्तु गजा यत्रेति न्यायेनास्य (?) तात्पर्यमित्यदोषः । तमेव भान्तमित्युत्तरार्द्धे तेजोविशेष एव वाक्यार्थ इत्यर्थः । समाधानमाहुः—भगवदिति । नान्यार्थकल्पनमिति । सत्यलोकस्थिततेजोविशेष इत्यर्थः । अपि स्मर्यते । स्पष्टम् । इतिषष्ठाधिकरणम् ॥

---

१ अत्रेत्थं व्याख्यानान्तराणि—

(१) तत्र शाङ्कराः—पूर्वम् "परं ज्योतिरुपसम्पद्य:....." इति वाक्यार्थविचारप्रसङ्गात् "तच्छुभ्रं

ज्योतिषां ज्योतिः ……" "……आयुर्होपासतेऽमृतम्" इति वाक्योक्तपरंज्योतिष्ट्वसाधकम् "न तत्र सूर्यः" ॥ इत्यादिवाक्यं विचार्यत इति प्रसङ्गसङ्गत्येदमाह—अत्र पूर्वपक्षे अलौकिकतेजस उपास्तिः, सिद्धान्ते निर्विशेषब्रह्मधीरिति फलभेदः। मुण्डके श्रूयते—"न तत्र सूर्यो भाति न चन्द्रतारकम्……" इत्यादि। तत्र सूर्यादिजगद्भासकतया प्रतीयमानं किं तेजोविशेषः, उत ब्रह्मेति संशये, प्रबलेन तेजसा दुर्बलस्याभिभवदर्शनात्तेजोविशेष इति पूर्वः पक्षः। सिद्धान्तस्तु—तथा प्रतीयमानं ब्रह्मैव। कुतः? अनुकृतेः अनुकृतिरनुकरणं तस्मात्, "तमेव भान्तमनुभाति सर्वम्" इत्यनुभावात्। न हि सूर्यादिकं तेजस्तेजोऽन्तरमनुभाति, लोके तददर्शनात्। तर्हि प्राप्तं स्वतः सूर्यादेर्भानमित्यत्राह—तस्य चेति। "तस्य भासा सर्वमिदं विभाति" इति ब्रह्मभासा भास्यत्वावगमात्। न च विपरीतं किं न स्यादिति वाच्यम्, "तच्छुभ्रं ज्योतिषां ज्योति" इति वाक्योपक्रमे ब्रह्मणः स्वयंज्योतिष्ट्वावगमात्, "न तत्र……" इति तच्छब्देन तस्यैव प्रकृतज्योतिषः परामर्शात्। अतः, स्वयंज्योतिः सूर्यादिसकलजगदवभासकं ब्रह्मैव, न तु लौकिकं तेजः, तस्याप्रकृतत्वादिति सिद्धम् ॥ अस्मिन् श्रुत्युक्तार्थे स्मृतिं दर्शयितुमाह—"न तद्भासयते सूर्यो न शशाङ्को न पावकः" "यदादित्यगतं तेजो जगद्भासयतेऽखिलम्……" इति भगवद्गीतासु स्मर्यत इत्यर्थः ॥

(२) रामानुजीये—तस्य दहराकाशस्य परस्य ब्रह्मणोऽनुकारादयमपहतपाप्मत्वादिगुणको विमुक्तबन्धः प्रत्यगात्मा न दहराकाशः। तदनुकारस्तत्साम्यम्। तथा हि प्रत्यगात्मना विमुक्तस्य परब्रह्मानुकारः श्रूयते। "यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम्। तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति"। इति अतोऽनुकर्ता प्रजापतिवाक्ये निर्दिष्टोऽनुकार्यं ब्रह्म दहराकाशः ॥

संसारिणोऽपि मुक्तावस्थायां परमसाम्यापत्तिलक्षणः परब्रह्मानुकारः स्मर्यते। "इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च"। "केचिदनुकृतेस्तस्य चापि स्मर्यत इति सूत्रद्वयमधिकरणान्तरं तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति"। इत्यस्याः श्रुतेः "परब्रह्मत्वनिर्णयाय प्रवृत्तं वदन्ति तत्त्वदृश्यत्वादिगुणको धर्मोक्तेः" "द्युभ्वाद्यायतनं स्वशब्दादि"त्यधिकरणद्वयेन तत्प्रकरणस्य "परब्रह्मविषयत्वप्रतिपादनाज्ज्योतिश्चरणाभिधानादि"त्यादिषु परस्यब्रह्मणो भारूपत्वावगतेश्च पूर्वपक्षानुत्थानादयुक्तं सूत्राक्षरवैरूप्याच्च ॥

(३) माध्वे—अदृश्यत्वादयः परमेश्वरे गुणा उक्ताः। तेषां सुखं शाश्वतं नेतरेषां तदेतदिति मन्यन्ते। निर्देश्यं, परमं सुखमित्यादिना ज्ञानिसुखस्याप्यनिर्देश्यत्वमत्र यत्वश्चोच्यते। अतो वक्ति। "तमेव भान्तमनुभाति सर्वमित्यनुकृतेस्तस्य भासा सर्वमिदं विभाती"ति वचनाच्च। परमात्मेवानिर्दिश्य सुखरूपः। न हि ज्ञानिसुखमनुभाति सर्वम्। न च तद्भासा अहं तत्तेजो राशीन् नारायण भासा हि सर्वं भाति। "यदादित्यगतं तेजो जगद्भासयतेऽखिलम्। यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकमिति"। "न तद्भासयते सूर्यो न शशाङ्को न पावकः। यद् गत्वा न निवर्त्तन्ते तद्धाम परमं मम"ति च ॥

(४) निम्बार्कः—तस्य नित्याविर्भूतस्वरूपस्य "तमेव भान्तमनुभाति सर्वं"मित्यनुकृतेश्चानुकर्त्ता जीवो नित्याविर्भूतस्वरूपो दहरो न भवितुमर्हति। अपि च "मम साधर्म्यमागता" इति स्मर्यते ॥

(५) भैक्षवे—तस्य जीवस्यानुकरणाच्च परमात्मन्यल्पश्रुतिरुपपद्यते, जीवे लिङ्गानुकरणादित्यर्थः। दहरस्याङ्गुष्ठपरिमितलिङ्गशरीरपरिच्छिन्नजीवानुकारीहितदधिष्ठाता परमात्मापि भवति तदन्तर्यामित्वात्तु अनुकारित्वं च मुखप्रतिबिम्बमुखयोरिव शक्तिशक्तिमतोर्जीवब्रह्मणोः समानव्यापारकत्वं तथा च शक्ति-

रल्पत्वं शक्तिमत्युपचर्यत इति भावः । न केवलमत्रैव परमात्मा अल्परूपः श्रूयते, किन्तु स्मृत्यादावपी-त्याह—परमात्माल्प इति । स्मर्यतेऽपि भगवद्गीतादौ "कविं पुराणमनुशासितारमणोरणीयांसमनुस्मरेद्य" इत्यादिनेत्यर्थः ॥

(६) भास्करीये—"न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः । तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाती"ति श्रूयते । यं भान्तमनुभाति इदं सर्वं यस्य च भासेदं सर्वं यस्य च भासेदं सर्वं जगद्विशेषेण भाति स तेजोधातुः कश्चि-द्वथवा परमेश्वर इति । किं तावद् युक्तं ? तेजोधातुः । कस्मात् ? पूर्वत्र दहरश्रवणेऽपि वाक्यशेषैः परमात्मा निर्णीतोऽत्र तु विशेषहेत्वभावाच्च परो गृह्यते सूर्यादीनां च तेजःस्वभावानां भानप्रतिषेधात् तत्समानजातीयमेव तेजः प्रतीयते । किञ्च, समानजातीयेऽनुशब्दो दृष्टो यथा गच्छन्तमनुगच्छन्तीति प्राज्ञेऽभिधीयते, प्राज्ञो भवितुमर्हति, कुतः ? अनुकृतेः । अनुकरणमनुकृतिस्तमेव भान्तमनुभाति सर्वमिति भान्तं विज्ञप्तिरूपेण प्रकाशमानमनुभाति सर्वं स्वयमपि प्रकाशते यथाग्निं भान्तमयः-पिण्डोऽनुभात्यनुकरोति सर्वं च तेजोधातवस्तस्मिन् प्रतिषिद्धा ये प्रसिद्धास्तस्य भौतिकतेजोव्यतिरिक्तं ब्रह्म निर्दिष्टमनुगम्यते । समत्वे चानुभानं नोपपद्यते । न हि प्रदीपः प्रदीपमनुभाति । न चानुकरणं समानजातीयविषयमेव भौमं रजो वायुं वहन्तमनुवहतीति । तस्य चेति श्लोकस्य चतुर्थः पादो निर्दिश्यते । तस्य भासेति तृतीयपादहेत्वपदेशात् प्राज्ञो गम्यते । प्राज्ञस्यैवात्मनः सूर्यादिप्रकाशननि-मित्तत्वं तेषां च तत्राप्रवृत्तिः स्मर्यते । "यदादित्यगतं तेजो जगद्भासयतेऽखिलमि"ति ।

(७) श्रीमद्वल्लभाचार्यमतेऽयमभिप्रायः—ननु दहरवाक्ये, "यावान् वा अयमाकाशस्तावानेषोऽन्त-र्हृदय आकाश उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते उभावग्निश्च वायुश्च सूर्याचन्द्रमसावुभौ विद्युन्नक्ष-त्राणि यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन् समाहित"मिति सूर्यादीनां दहरान्तर्धारितत्वं श्रूयते । तद्विरुद्धं च मुण्डकादिष्वभासनवाक्यम् । तेषां ब्रह्मपरत्वं सिद्धम्, अतस्तद्विरुद्धवाक्यमाशङ्क्य परि-हरति—अनुकृतेरित्यादि । कठवल्ल्यां मुण्डके च श्रूयते । "न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः । तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाती"ति । तत्र कठवल्ल्यां, "य एष सुप्तेषु जागर्तीति" यच्छब्दं पठित्वा मन्त्रान्तरे "तस्मिंल्लोकाः श्रिताः सर्वे," "तमेव भान्तमनुभाति" च तच्छब्दः पठ्यते । मुण्डकेऽपि "यत्र देवः क्रतुभिर्भूतिभावन" इति, "न तत्र सूर्यो भाती"ति । एवमुभयत्रापि यत्तच्छब्दानामेकार्थत्वं ब्रह्मस्वरूपं च यद्यपि प्रकरणादवगतम्, तथापि मुण्ड-कश्रुतौ "यस्मिन् द्यौ"रित्यत्र द्युलोकादीनां भगवदाधारत्वकथनात् सूर्यादीनां भगवत्येव स्थितिः प्रतीयते । एतन्मन्त्रपूर्वार्धे च तत्र तेषां भानं निषिध्यते । तच्च भासनस्वभावानां स्वाधारे भावाभावकथनाद्भ्रान्त्यार्थं सत् सन्देहमुत्पादयति । यदि चोत्तरार्धे, तमेवेत्यादिकथनात् । तदपेक्षयाऽधिकभाननिषेध एव तात्पर्यम्, न सामान्यनिषेधे, अतो न बाधितार्थत्वमिति विभाव्यते, तदाप्यकर्मकस्य धातोः कर्मबोधिका द्वितीया तु बाधितमेव वक्ति । ब्रह्मणः स्वतो भानकथनेन व्यवधारणकल्पनायाः कर्तुमशक्यत्वात् । अतः सन्देहः ।

पूर्वपक्षस्तु । श्रुतौ तमेवेत्यधिकरणसाम्या कुतोऽयमग्निरिति वचनाच्च, "गजा यत्र न गण्यन्ते मशकानां तु का कथे"तिवत् कैमुतिकन्यायः पूर्वार्धे दोषः । उत्तरार्धे तु "तमेव भान्त"मिति कथ-नाद् भानस्य च तेजोधर्मत्वात्सत्यलोके स्थितः कश्चित् तेजोविशेष एव वक्तव्यः । तच्च कर्मत्वांशे

बाधितार्थत्वम् । अनोःकर्मप्रवचनीयत्वेन तद्योगे जाताया द्वितीयाया उपपदविभक्तित्वेनार्थशून्यत्वात् । अतः स एवाबाधितो वाक्यार्थ इति प्राप्ते, उच्यते—

अनुकृतेस्तस्येति । तस्य भगवतोऽनुकारार्थमेवात्र पूर्वार्धे भाननिषेधवचनम्, न तु सर्वथा तन्निषेधार्थम् । उत्तरार्धे अनुभातीति कथनात् । तच्च तेषां स्वतोऽभाने पर्यवस्यति । नच तेजोविशेषकल्पनं युक्तम् । तमित्यनेन प्रकारेण परामर्शात् कल्प्यमानस्याप्रसिद्धत्वेन यच्छब्दानपेक्षताया वक्तुमशक्यत्वात् । किञ्च, "तस्य भासा सर्वमिदं विभाती"ति कथनात् सूर्यादीनां स्वतः प्रकाशो नास्त्येव, घटादिवत्, किन्तु, भगवत्प्रकाशेनैव प्रकाशवत्त्वमिति चकारेण सूच्यते । अतो ब्रह्मपरत्वे बाधकस्याभावान्नान्यार्थकल्पनं युक्तम् ।

उक्तेऽर्थे सम्मतिमाह अपीत्यादि । अपिः समुच्चये । "न तद्भासयते सूर्यो न शशाङ्को न पावक" इति । "यदादित्यगतं तेजो जगद्भासयतेऽखिलम्, यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामक"मिति च । तस्माद्भगवानेव सर्वावभासकः, तमेव सर्वमनुकरोतीति सिद्धम् । एवमभासनाशङ्कितविरोधपरिहारेण दहरवाक्यानुगुण्यमस्य साधितम् ॥ २२ ॥ ६ ॥



## ७ शब्दादेव प्रमिताधिकरणम् ।

( अङ्गुष्ठमात्रतायां प्रमाणम् )

### शब्दादेव प्रमितः ॥ १।३।२४ ॥

प्रसङ्गात्पुनर्बाधकान्तरमाशङ्क्य परिहरति "अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति । ईशानो भूतभव्यस्य न ततो विजुगुप्सति" (का. २।४।१२), तथा "अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः" (का. २।४।१३) इति तत्रैव श्रूयते । "यावान्वा अयमाकाशः" इति व्यापकत्वमन्तःस्थितस्य प्रतीतम् । अङ्गुष्ठमात्रता चात्र प्रतीयते । अतो विरोधाज्जीवस्यैव लोकान्तरगन्तृदेहवत् उपासनार्थमीशानत्वादिधर्माः । "अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलात्" (म. भा. ३।२९७।१७) इति तन्निवृत्त्यर्थम् । तस्मादङ्गुष्ठमात्रो न भगवानेवं प्राप्तम् । अत उत्तरमाह—

शब्दादेव प्रमितः । अत्र सन्देह एव न कर्तव्यः । शब्दादेव प्रकर्षेण विमानात् । यथा दहरवाक्ये सूक्ष्मस्यैव व्यापकत्वं तथाङ्गुष्ठमात्रस्यैवेशानत्वम् । यदि भगवाँस्तादृशो न स्यादन्यस्य तादृशत्वं नोपपद्येत । तस्माद् भगवतः सर्वतःपाणिपादान्तत्वाद् यत्र यावानपेक्ष्यते, तत्र तावन्तं श्रुतिर्निरूपयतीति अङ्गुष्ठमात्रः परमात्मेति सिद्धम् ॥ १।३।२४ ॥

( यत्र यावदपेक्ष्यते, तत्र तावद्वचनम् )

### हृद्यपेक्षया तु मनुष्याधिकारत्वात् ॥ १।३।२५ ॥

नन्वनेकरूपत्वं विरुद्धधर्मवत्त्वं माहात्म्यार्थं स्वरूपे निरूपयति । प्रादेशमात्रत्वं च ध्यानार्थम् । अङ्गुष्ठमात्रत्वस्य कोपयोग[1] इति चेत्तत्राह । तुशब्देन निष्प्रयोजनत्वं निराक्रियते । अस्ति प्रयोजनम् । तदाह, हृद्यङ्गुष्ठमात्रं निरूप्यते । केन हेतुना ? अपेक्षया, ईश्वरकार्यापेक्षया । "ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति" (भ. गी. १८।६१) इति स्मृतेः । रक्षार्थमङ्गुष्ठमात्र इत्यर्थः । ननु प्रमाणान्तरत्वे किमेतन्न सम्भवति ? तत्राह—मनुष्याधिकारत्वात् । मनुष्यानधिकृत्येदं मृत्यूपाख्यानं प्रवृत्तम् । अतो मनुष्याणां हृदयस्याङ्गुष्ठमात्रत्वात् । यद्यपि हृदयं स्थूलं तथापि

---

प्रमिताधिकरणमाहुः—शब्दादेव प्रमितः । बाधकान्तरमिति । यथा दहराकाशे स्वल्पपरिमाणं बाधकं एवं अङ्गुष्ठपरिमाणं बाधकान्तरमित्यर्थः । श्रूयते । चतुर्थवल्ली समाप्तौ श्रूयते । सन्देहबीजमाहुः—यावानिति । अङ्गुष्ठेति । तथा च संशय इत्यर्थः । पूर्वपक्षमाहुः—अत इत्यादि । सावित्र्युपाख्यानस्थं वाक्यमाहुः—अङ्गुष्ठमात्रमिति ।

सिद्धान्तं व्याकुर्वन्ति—अत्रेति । शब्दादेव । पूर्वार्द्धे अङ्गुष्ठमात्रबोधकात् उत्तरार्द्धे तस्यैवेशानत्वबोधकाच्छब्दादेव प्रमितः विरुद्धधर्माश्रयतया बोधितः ।

हृद्यपेक्षया तु मनुष्याधिकारत्वात् । अवदानश्रवणादिति । तैत्तरीये षष्ठाष्टके ।

---

[1] कोपयोग इत्यपि पाठः ।

धर्मरूपं तावदेव। तावन्मात्रस्यैवावदानश्रवणात्। तस्मादङ्गुष्ठमात्रस्यैव सर्वधर्मरक्षकत्वादङ्गुष्ठमात्रो भगवानेवेति सिद्धम्॥ १।३।२५॥ ७॥

---

"हृदयस्याग्रेऽवद्यत्यथ जिह्वाया अथ वक्षस" इत्यत्र अङ्गुष्ठमात्रमवद्यतीति विधिना प्रथमं हृदयावदानप्रतिपादनादित्यर्थः। अन्यत् स्पष्टम्। इति सप्तमाधिकरणम्॥

---

१ अत्रेत्थं व्याख्यानान्तराणि—

(१) तत्र शाङ्कराः—पूर्वमनुमानादिना लिङ्गेन तत्रेति विषयसप्तमीं कृत्वा न भातीत्यादौ णिजध्याहारेण न भासयतीत्यर्थो वर्णितप्रायः। तथेहापि "अङ्गुष्ठमात्रः" इति परिमाणलिङ्गाज्जीवमादाय ईशानोऽस्मीति भावयेदिति विध्यध्याहारेणोपास्तिपरमङ्गुष्ठवाक्यमस्त्विति दृष्टान्तसङ्गत्येदमाह—अत्र पूर्वपक्षे जीवोपास्तिः, सिद्धान्ते तस्यैव परमात्मतया धीरिति फलभेदः। कठवल्लीषु श्रूयते—"अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः। ईशानो भूतभव्यस्य···" इति। तत्र किमयमङ्गुष्ठवाक्यप्रतिपाद्यो जीवः, उत ब्रह्मेति सन्देहे, जीव इति पूर्वपक्षः। सिद्धान्तस्तु—प्रमितः वाक्यप्रतिपाद्यः प्रत्यगभिन्नपरमात्मैव। कुतः, शब्दादेव "ईशानो भूतभव्यस्य···" इत्यत्र ईशानशब्दात्। न चाङ्गुष्ठमात्रजीवलिङ्गविरोधः, लिङ्गश्रुत्योर्विरोधे श्रुतेरेव प्रबलत्वात्। न च परमात्मनोऽङ्गुष्ठमात्रत्वानुपपत्तिः, अङ्गुष्ठमात्रजीवानुवादेन ब्रह्माभेदबोधनादिति समञ्जसम्। ननु जीवस्य परमार्थतः सर्वगतब्रह्मत्वे कथमङ्गुष्ठमात्रत्वमित्यत आह—तुशब्दः शङ्कानिरासार्थः। मनुष्याधिकारत्वाच्छास्त्रस्य, मनुष्याणां हृदयस्याङ्गुष्ठमात्रत्वात्तदपेक्षया सर्वगतस्यात्मनोऽङ्गुष्ठमात्रत्वमविरुद्धम्। अतोऽङ्गुष्ठवाक्ये प्रतिपाद्यः परमात्मैवेति सिद्धम्॥

(२) श्रीरामानुजीये—कठवल्लीषु श्रूयते। "अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति, ईशानो भूतभव्यस्य न ततो विजुगुप्सते। एतद्वै तत्। अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः, ईशानो भूतभव्यस्य स एवाद्य स उ श्वः। एतद्वै तत्। अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः, तं स्वाच्छरीरात्प्रवृहेन्मुञ्जादिवेषीकां धैर्येण तं विद्याच्छुक्रममृतम्"। इति। तत्र सन्दिह्यते। किमयमङ्गुष्ठमात्रप्रमितः प्रत्यगात्मोत परमात्मेति? किं युक्तम्? प्रत्यगात्मेति। कुतः?। जीवस्यान्यत्राङ्गुष्ठमात्रत्वश्रुतेः। "प्राणाधिपः सञ्चरति स्वकर्मभिः, अङ्गुष्ठमात्रो रवितुल्यरूपः, सङ्कल्पाहङ्कारसमन्वितो यः"। इति। न चान्यत्रोपासनार्थतयापि परमात्मनोऽङ्गुष्ठमात्रत्वं श्रूयते। एवं निश्चिते जीवस्य ईशानत्वं शरीरेन्द्रियभोग्यभोगोपकरणापेक्षया भविष्यतीति प्राप्ते, ब्रूमः। शब्दादेव प्रमितः। अङ्गुष्ठमात्रप्रमितः परमात्मा। कुतः? ईशानो भूतभव्यस्येति शब्दादेव। न च भूतभव्यस्य सर्वस्येशितृत्वं कर्मपरवशस्य जीवस्योपपद्यते। कथं तर्हि परमात्मनोऽङ्गुष्ठमात्रत्वमित्यत्राह परमात्मन उपासनार्थमुपासकहृदये वर्तमानत्वादुपासकहृदयस्याङ्गुष्ठप्रमाणत्वात्तदपेक्षयेदमङ्गुष्ठप्रमितत्वमुपपद्यते। जीवस्याप्यङ्गुष्ठप्रमितत्वं हृदयान्तवं हृदयान्तर्वर्तित्वात्तदपेक्षमेव। तस्याराग्रमात्रत्वश्रुतेः। मनुष्याणामेवोपासकत्वसम्भावनया शास्त्रस्य मनुष्याधिकारत्वान्मनुष्यहृदयस्य च तदङ्गुष्ठप्रमितत्वात्खरतुरगभुजगादीनामनङ्गुष्ठप्रमितत्वेऽपि न कश्चिद्दोषः। स्थितं तावदुत्तरत्र समापयिष्यते॥

(३) माध्वे—विष्णुरेव जिज्ञास्य इत्युक्तम्। "ऊर्ध्वं प्राणमुन्नयत्यपानं प्रत्यगस्यति। मध्ये वामनमासीनं विश्वे देवा उपासते" इति सर्वदेवोपास्यः कश्चित् प्रतीयते। स च "एवमेवैष प्राण इतरान् प्राणान् पृथगेव सन्निधत्ते। योऽयं मध्यमः प्राणः कुविदङ्ग"त्यादिना प्राणव्यवस्थापकत्वान्मध्यमत्वात्

सर्वदेवोपास्यत्वाद्य वायुरेवेति प्रतीयते। अतोऽब्रवीत् वामनशब्दादेव विष्णुरिति प्रमितः। न हि श्रुतेर्लिङ्गं बलवत्। "श्रुतिलिङ्गं समाख्या च वाक्यप्रकरणं तथा। पूर्वं पूर्वं बलीयः स्यादेवमागमनिर्णय" इति स्कान्दे। तच्च लिङ्गं विष्णोरेव। तस्यैव प्राणत्वोक्तेस्तद्देवत्यप्राणोऽभय इति। सर्वगतस्यापि तस्याङ्गुष्ठमात्रत्वं हृदाकाशापेक्षया युज्यते। इतरप्राणिनामङ्गुष्ठाभावेऽपि मनुष्याधिकारत्वान्न विरोधः॥

(४) निम्बार्कः—प्रमितोऽङ्गुष्ठपरिमाणकः पुरुषोत्तम एव, "ईशानो भूतभव्यस्ये"तिशब्दात्। उपासकहृदपेक्षयाऽङ्गुष्ठमात्रत्वमुपपद्यते। ननु जन्तुशरीरेषु हृदयस्यानियतपरिमाणत्वात्तदपेक्षयाऽपि तथात्वं कथमत आह मनुष्याधिकारत्वात्।

(५) भैक्षवे—किं बहुना परमात्माऽप्यल्प इति शब्दादेव श्रुत्यन्तरादेव प्रमितः स्पष्टमवगतः। अथ वा परमात्मा शब्दादेव प्रकर्षेण मितोऽस्वल्पः "अणोरणीयान् महतो महीयानि"त्यादिनेत्यर्थः। तस्मादल्पश्रुतिर्न परमात्मत्वबाधिकेति सिद्धम्। केचित्तु, अनुकृतेरित्यादिसूत्रैरधिकरणान्तरं "तमेव भान्तमनुभाति सर्वमि"ति विषयवाक्यं प्रदर्शयन्तः कल्पयन्ति, तत्तु अधिकरणान्तरेषु सर्वत्र दृष्टस्य प्रथमान्तविशेष्यपदस्यात्रादर्शनादुपेक्षितमस्माभिः। इदमिदानीं चिन्त्यते, यदिदं हृदयस्थे पुण्डरीकाकारमांसपिण्डे अन्तर्दहराख्यब्रह्मोपासनं विहितं श्रुत्या "स वा एष आत्मा हृदी"त्यन्तया तत्र किं मनुष्याणामेवाधिकार उत देवादीनामपीति? नन्वयं विद्याधिकारिविचारः सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषादित्यादिविद्यापाद यथोचित इति सत्यम्, तथापि दहरोपासाप्रसङ्गेनात्राधिकारिविचार इति मन्तव्यम्। तत्रादौ जैमिनिमतमाह—हृदि तु यदुक्तमुपासनां तन्मनुष्यानधिकारिणोऽपेक्ष्यैव बोध्यम्, कुतः? मनुष्याधिकारत्वान्मनुष्यस्य। हृदयपुण्डरीकं हि मनुष्यानधिकृत्य लक्षीकृत्यैवास्ति न तु स्थूलशरीरवत्त्वान्यान्देवादीनित्यर्थः। यद्यप्यत्र सूत्रे उपासनशब्दो नास्ति नाप्युपासना पूर्वं प्रक्रान्ता तथापि मध्वादिष्वसम्भवादनधिकारं जैमिनिरित्यागामिसूत्रस्वरसाल्लभ्यते।

(६) भास्करीये—"अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति" तथा "अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमक ईशानो भूतभव्यस्य स एवाद्य स उ श्वः एतद्वैतदि"ति च श्रूयते। तत्र सन्देहः, किं विज्ञानात्मा उत परमात्मेति? किं तावत् प्राप्तम्? विज्ञानात्मेति। परमात्मश्रुतेर्न ह्यनन्तस्यापारस्य परिमाणश्रुतिरुपपद्यते जीवस्यापीशानत्वं स्वगोचराभिप्रायमवकल्पते। सावित्र्युपाख्याने वा "अथ सत्यवतः कायात् पाशबद्धं वशं गतम् अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलात्" इति स्मृतेर्जीवो निश्चीयते। तत्र ब्रूमः। प्रमितः परमात्मा, कुतः? शब्दादेवेशानो भूतभव्यस्येति। सर्वेशित्वमप्रतिहतं श्रूयमाणमीश्वरं गमयति। न हि लक्षणया श्रुतिर्भक्तुं शक्यते। श्रुतिलक्षणाविषये हि श्रुतिर्बलीयसी। ननु वाङ्गुष्ठश्रुतिरपि भक्तुं न शक्यते। तत्र ब्रूमः। अङ्गुष्ठमात्रपरिमाणेन हृदयकमलमुकुलेनोपलभ्यत्वात् तत्परिमाणापेक्षया व्यपदेशो न विरुध्यते। ननु को विशेषोऽङ्गुष्ठश्रुतिर्गौणी ईशानश्रुतिर्मुख्येति? तदुच्यते। एतद्वै तदिति सर्वनामश्रुतेः प्रकृतपरामर्शात्। एतद्वै तत् यत् पृष्टम्। प्रश्नोक्तमित्यर्थः। "अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात् कृताकृतादन्यत्र भूतभव्याच्च यत्तत् पश्यसि तद्वदे"ति। ननु हृदयानामनवस्थितत्वात् तदपेक्षयाऽङ्गुष्ठश्रुतिर्न शक्या नेतुम्। अत्रोच्यते—मनुष्याधिकारत्वात् मनुष्यहृदयापेक्षयोपपत्तेः। तेषां हि श्रौतस्मार्तेषु कर्मस्वधिकार इति षष्ठेऽधिकारलक्षणे स्थापितम्। अथ सत्यवतः कायादिति यदुक्तं, जीवाभिप्रायं तत्, परलोकव्यवहारस्य पूजाप्रतिपादनायेत्यविरुद्धम्॥

(७) श्रीमद्वल्लभाचार्यमतेऽयमभिप्रायः—प्रसङ्गात् परिमाणविरोधरूपं बाधकान्तरमाशङ्क्य परिहरति—शब्दादित्यादि। कठवल्ल्यां श्रूयते। "अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति, ईशानो

भूतभव्यस्य ततो न विजुगुप्सत" इति । तथा । "अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमक" इति । अत्र जीवो वा, ब्रह्म वेति संशयः ।

तत्र, "यावान् वा अयमाकाश" इति व्यापकत्वमन्तःस्थितस्य प्रतीतम् । अत्र चान्तःस्थितस्यैवाङ्गुष्ठमात्रता प्रतीयते । सा च व्यापकताविरुद्धा । अतो जीव एवात्र वक्तव्यः । अङ्गुष्ठमात्रं, "अङ्गुष्ठमात्रो रवितुल्यरूपः सङ्कल्पाहङ्कारसमन्वितो य" इति श्रुत्यन्तरे तस्याङ्गुष्ठमात्रतायाः प्रसिद्धत्वात्, तस्य च "अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बला"दिति पुराणवाक्यादीनत्वमतस्तद्व्यतिरिक्तमुक्तमत्रोपास्यत्वेन बोधयितुमुपासनार्थमीशानत्वादिधर्मा उच्यन्ते—अतो न भगवानिति प्राप्ते, अभिधीयते,

शब्दादेव प्रमित इति । उक्तवाक्ये पूर्वार्धेनाङ्गुष्ठमात्रत्वमुक्त्वोत्तरार्धे तावन्मात्रस्यैव भूतभव्येशानत्वं वक्तीति वाक्यरूपाच्छब्दादेव प्रकरेण विरुद्धधर्माश्रयत्वरूपेण मितो ज्ञातः । तथा च यथा दहरवाक्ये सूक्ष्मस्यैव व्यापकत्वं शब्दात्प्रमीयते, एवमत्राङ्गुष्ठमात्रस्यैव भूतभव्येशानत्वम्, अतः शब्दादेवास्य प्रमितत्वादत्र सन्देह एव न कार्य इत्यर्थः । किञ्च, पूर्वाधिकरणविषयवाक्ये सर्वस्य भगवदनुकारकत्वसिद्धेरत्र राजादीनां स्वल्पानामप्यनेकजनपदेशनशीलत्वात् प्रत्यक्षमप्यनुकूलीभवति । तथा तर्कोऽपि । यदि भगवानेवं न स्यात्, राजादिरपि तथा न स्यादिति । तस्माद्भगवतः सर्वतः पाणिपादान्तत्वेन यत्र यावानपेक्ष्यते, तत्र तावन्तं श्रुतिर्निरूपयतीत्यङ्गुष्ठमात्रः परमात्मैवेति सिद्धम् ॥

नन्वनेकरूपविरुद्धधर्माश्रयत्वं च माहात्म्यार्थं स्वरूपे निरूपयति । प्रादेशमात्रं च ध्यानार्थम् । अङ्गुष्ठमात्रत्वस्यात्रोपयोगादर्शनात् किमर्थं तन्निरूपणमित्याशङ्कायामाह—हृदीत्यादि । तुशब्दो निष्प्रयोजनशङ्कानिवृत्त्यर्थः । अस्ति प्रयोजनम् ? तदाह-हृदि यदङ्गुष्ठमात्रं निरूपयति, तद् अपेक्षया, "ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठती"ति स्मृतेरीश्वरकार्यापेक्षया निरूपयति । तच्च कार्यं धर्मरक्षा । ननु कथमेतदवगम्यते ? इत्यत आह—मनुष्याधिकारत्वादिति । मनुष्यानधिकृत्येदं मृत्युव्याख्यानं प्रवृत्तम् । मनुष्याणां च हृदयं स्थूलमपि सत् धर्मात्मकमङ्गुष्ठमात्रमेव । अङ्गुष्ठमात्रस्यैवावदानश्रवणात् । अतः, परिमाणान्तरमनुक्त्वाङ्गुष्ठमात्रः सर्वधर्मरक्षार्थं निरूप्यत इत्यङ्गुष्ठमात्रो भगवानेवेति सिद्धम् ॥ २५ ॥ ७ ॥



## ८ तदुपर्यपीत्यधिकरणम् ।

( देवादीनामधिकारनिरूपणम् )

**तदुपर्यपि च बादरायणः सम्भवात् ॥ १।३।२६ ॥**

अङ्गुष्ठमात्रनिरूपणार्थं मनुष्याधिकारे निरूपिते कस्यचिद् भ्रमो भवेत्सर्वत्र ब्रह्मविद्यायां मनुष्याणामेवाधिकार इति। तन्निराकरणार्थं देवादीनामधिकारमाह—

तदुपर्यपि । मनुष्यापेक्षयार्वाक्तनानामधिकारो नास्ति। तत्रापि वैदिकधर्महेतोस्त्रैवर्णिकानां धर्मयुक्तानामागतम्। ततोऽपि ये साध्यादयो धर्मयुक्तास्तेषामप्यधिकारः। तत्र जैमिनिप्रभृतीनां न सम्मतिरिति स्वनामग्रहणम्। विशिष्टत्रैवर्णिकानारभ्य प्रजापतिपर्यन्तं शतानन्दिनामधिकारं मन्यते बादरायणः। कुतः? सम्भवात्। सम्भवति तेषां ज्ञानाधिकारः। धर्मज्ञानाभ्यां सातिशयाभ्यां हि तादृशजन्मसम्भवात्। न हि तेषां पूर्वसंस्कारो लुप्यते। अक्षरपर्यन्तं शतोत्कर्षश्रवणादुपर्यपेक्षा। अतोऽक्षरप्राप्तेः, शुद्धब्रह्मविद्याहेतुकत्वादुत्तरोत्तरमुपदेष्टॄणां विद्यमानत्वात्प्रजापतिपर्यन्तं सर्वेषामधिकारः सम्भवति। सम्भववचनाद् दुर्लभाधिकारस्तत्रेति सूचितम्। "यो यो देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणां तथा मनुष्याणाम्" (बृ. १।४।१०) इति। तदुपर्यप्यधिकारः सिद्धः ॥ १।३।२६ ॥

( तत्र विरोधनिराकरणम् )

**विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् ॥ १।३।२७ ॥**

नन्वेवमुपरितनानां ज्ञानाधिकारे स्वीक्रियमाणे तत्पूर्वभाविष्वप्यधिकारो वक्तव्यः। कर्मणि वेदाध्ययन उपनयनादिषु च। ततश्च तेषां ब्राह्मण्याद्यभावाद् देशद्रव्याद्यभावाच्च पौराणिकेन मतेन देवान्तराभावाच्च तदभावेपि क्रियमाणे कर्मणि श्रुतिविरोध इति चेन्न।

---

बादरायणाधिकरणमाहुः—तदुपर्यपि बादरायणः सम्भवात्। प्रसङ्गसङ्गतिं सूचयितुं सूत्रमवतारयन्ति। अङ्गुष्ठेति। कस्यचिदिति। पूर्वमीमांसकस्येत्यर्थः। जैमिनिमते मन्त्रार्थवादानां विधिशेषत्वेन शरीरप्रतिपादने तात्पर्याभावात्। देवादीनां शरीराभावः, ततश्चाधिकाराभाव इति बोध्यम्।

मनुष्यादर्वाक्तनानां योग्यताभावादाह—तदुपरीति। शतानन्दिनामिति। "ते ये शतं मानुषा आनन्दाः स एको मनुष्यगन्धर्वाणामानन्दः" एतदारभ्य प्रजापतिपर्यन्ताः शतानन्दिनः भृगुप्रपाठके स्पष्टाः। तत्र कर्तृत्वं श्रोत्रियत्वम्। तच्च श्रोत्रियस्य चाकामहतस्येति लिङ्गात् "कालेन नष्टा प्रलये वाणीयं वेदसञ्ज्ञिता। मयादौ ब्रह्मणे प्रोक्ते"तिवचनाच्च प्रजापतिपर्यन्तानां सिद्धम्। सत्त्वादित्यनुक्तौ बीजमाहुः—सम्भवेति ॥

विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात्। तत्पूर्वभाविष्विति। कर्मस्विति शेषः ॥ विशेषरूपेणाहुः—वेदाध्ययनेति। ततश्च। चोवधारणे। अङ्गीक्रियमाणाधिकारादेव विरोध इत्यग्रेणान्वयः। ब्राह्मण्याभावादिति। अधिकारस्य विवादग्रस्ततया तेन ब्राह्मण्याक्षेपासम्भवादिति भावः। श्रोत्रियत्वान्यथानुपपत्याक्षेपसम्भवादाहुः—देशद्रव्येति। पृथिवीव्रीह्यादिः। आदिपदेन सूर्यादिगत्यभावप्रयुक्तकालाभावः ॥

अनेकप्रतिपत्तेर्दर्शनात् । बहूनां प्रतिपत्तिर्दृश्यते । बह्वोऽत्र कर्मणि प्रवर्तमाना दृश्यन्ते । "साध्या वै देवाः सुवर्गकामा एतत्षड्रात्रमपश्यत् तमाहरत् तेनाऽयजन्त । सोऽग्निष्टोमेन वसूनयाजयत् । स उक्थेन रुद्रानयाजयत् । सोऽतिरात्रेणादित्यानयाजयत् (तै. सं. ७।२।१) इत्यादि । "यथैकशतं वर्षाणि प्रजापताविन्द्रो ब्रह्मचर्यमुवास" (छां. ८।११।३) इति । भूमावागत्य ऋषीन् वृत्वा यज्ञकरणं च श्रूयते,—देवा वै सत्रमासत (तै. सं. २।३।३) इत्यादौ । दर्शनवचनात्तस्यापि ऋत्विक्त्वं कर्मकरणं च द्योतयति ।

अथवा सर्वपदार्थानामनेका प्रतिपत्तिर्बह्वुधोपयोगो वेदे दृश्यते । यथा चतुर्धाकरणादि, परिधिप्रहरणादि, तुषोपवापादि, तद्विद्यमाने क्रियते, नाविद्यमाने । तथा यत्र ये पदार्था न सन्ति, तत्र कर्म तदभावेऽपि भवति । तथाहि दृश्यते । पर्वते सोमवाहकाऽनोऽभाववत् । "यज्ञेन यज्ञमयजन्त देवाः" (ऋ. सं. १०।९१।१६) "इति सम्भृतसम्भारः पुरुषावयवैरहम् । तमेव पुरुषं यज्ञं तेनैवाऽयजमीश्वरम्" । (भा. २।६।२७) इत्यादिवाक्यैः सर्वसम्भृत्युपपत्तिश्च । आधुनिकान्प्रति वेदविभागाज्जैमिनेस्तथा निर्णयः । तस्मात्कर्माधिकारः कर्मकरणे चोपर्यपि सिद्धम् ॥ १।३।२७ ॥

( शब्देऽपि विरोधाभावः प्रतिपादनम् )

**शब्द इति चेन्नातः प्रभवात्प्रत्यक्षानुमानाभ्याम् ॥ १।३।२८ ॥**

ननु मास्तु कर्मकरणे विरोधः । शब्दे तु भविष्यति । अर्थज्ञानानन्तरं हि कर्मकरणम् । वेदाद्यार्थज्ञानम् । तत्र साध्यादीनां वेद एव कर्मकरणं श्रूयते । तत्र ज्ञाने

---

सिद्धान्तमाहुः—बहूनामिति । अत्रार्थे तैत्तरीये सप्तमाष्टके द्वितीयप्रपाठकारम्भे प्रमाणमाहुः—साध्येति । अन्यं हेतुमाहुः—अथवेति नाविद्यमान इत्यन्तम् । अयम्भावः—आग्नेयं पुरोडाशं चतुर्धा करोतीति विधिना आग्नेयस्यैव चतुर्धाकरणं प्राप्तम् । तथा च यत्राग्नेयः पुरोडाशो नास्ति तत्र चतुर्धा करणस्य लोपः । तथा "अवहन्ती"तिविधिनाऽवहननं प्राप्तम् । तथा तुषोपवापोऽपि प्राप्तः । तत्र "प्राजापत्यान् शतकृष्णलान्निर्वपेदि"त्यादियागे किञ्चित्सुवर्णभागस्य कृष्णलस्य तुषाया अभावात् द्वाराभावात् तद्धर्मस्य लोपः विद्यमानेनैव कर्मकरणादिति प्रकारान्तरमाहुः—तथेति । सोमवाहकाऽनोऽभाववदिति ॥ सोमवाहकं यदनः शकटं तदभाववत् । तथा च सोमवाहकस्य शकटस्य विहितत्वात्, सोमग्रहणार्थं पर्वते शकटस्य मार्गाभावात्, तस्य लोपः यत्किञ्चित्पदार्थाविद्यमानेऽपि कर्मकरणसम्भवादिति भावः । यज्ञेनेति । यज्ञ एव पदार्थसम्भारः यज्ञ एव देवता एतेन बोधिता । ननु प्रथमं इन्द्राग्न्यादीनां देवतानामभावात्कथं याग इति चेन्न ? प्राथमिकयागे भगवानेव तत्तद्देवतास्थानापन्नो ग्राह्यः । "एकं सद्विप्रा बहुधा वदन्ती"ति श्रुतेः । नन्वेवं चेत् जैमिनिस्मृतिविरोध इत्यत आहुः—आधुनिकेति । अधुनिकान् । असर्वज्ञान् । तथा चैकवेदज्ञं मनुष्यं प्रति जैमिनिस्मृतिप्रवृत्तिरिति न कोऽपि दोषः । अत एव "जैमिनीयेऽपि वैय्यासे न विरोधोऽस्तिकश्चने"तिकारिकायां प्रमाणमुक्तमिति दिक् ॥

**शब्द इति चेन्नातः प्रभवात्प्रत्यक्षानुमानाभ्याम्** ॥ सूत्रस्याशङ्काशमवतारयन्ति नन्विति । शब्दे तु । वेदे तु । वेदे विरोधं व्युत्पादयन्ति । अर्थज्ञानेति । "साध्या वै देवाःऽसुवर्गकामा" इति तैत्तरीयसप्तमाष्टके पठितम् । तत्र चैतादृशवेदस्यार्थज्ञानानन्तरं कर्मकरणे साध्यादीनामधिकारः । तादृशार्थ-

कर्मकर्तृविरोधः । अन्यकल्पनायां त्वनवस्था । व्यवस्थापकाभावात् । तस्माद् वेदो वसूनां वृत्तान्तं वदन्, वसूनामधिकारं वदेत् । वदन्वा कथमनित्यो न भवेदिति चेन्न ।

अतः प्रभवात् । अतः शब्दात्प्रभवः शब्दोक्तपदार्थानां वेदोक्ताः सर्व एव पदार्था आधिदैविका एव पुरुषावयवभूताः, सर्वानुकारित्वाद् भगवतः । अतो नामप्रपञ्चो वेदात्मको भिन्न एवाङ्गीकर्तव्यः । स केवलं शब्दैकसमधिगम्यः । "वेदैश्च सर्वैरहमेव वेद्यः" ( भ. गी. १५।१५ ) इति । अतस्तस्य प्रपञ्चस्य भिन्नत्वान्न विरोधः शब्दे । कथमेवमत आह–प्रत्यक्षानुमानाभ्याम् । प्रत्यक्षं तावदिदानीमपि यजमानो यजमानकृत्यमृत्विजश्च स्वकृत्यं वेदादेवावगच्छन्ति । न चाकृतिमात्र-

---

ज्ञानं च साध्यदेवसाध्यकर्मविषयकम् । एवं च कर्तुः कर्मणि ज्ञानानन्तरं प्रवृत्तेर्विहितत्वात्, ज्ञानकाले कर्तृकर्मणोः सहानवस्थानरूपविरोध इत्यर्थः । ननु पूर्वकल्पे साध्यैर्यज्ञः कृत इति स एव वेदो वक्तीति न विरोध इत्यत आहुः—अन्यकल्पनायामिति । पूर्वसाध्यदेवसाध्यकर्मविषयकवेदार्थज्ञानानन्तरमेतत्कल्पे साध्याः प्रवर्तन्ते इति पूर्वकर्मापेक्षयैतत्कल्पीयं कर्मान्यदिति कल्पनायामित्यर्थः । अनवस्थेति । पूर्वकल्पीयवसूनामर्थज्ञाने तत्पूर्वकल्पीयवसुविषयकत्वं वक्तव्यमित्यनवस्थेत्यर्थः । व्यवस्थापकाभावादिति । संसारस्यानादित्वादिति शेषः । ननु भाविवसुवृत्तान्तं वेदो वक्तीति न विरोध इत्यत आहुः—तस्मादिति । न भवेदिति । इदानीन्तनवसुसम्बन्धे स्वीक्रियमाणे वेदस्य पाश्चात्यत्वं स्यात्ततश्च कथमनित्यो न भवेदित्यर्थः ।

समाधानांशं व्याकुर्वन्ति—अत इति । सौत्रातःशब्दस्य विवरणं शब्दादिति । प्रभवः उत्पत्तिः प्राकट्यम् । तथाच लोके उत्पत्तिश्चेदनित्यत्वम् । वेदोक्तानां नित्यत्वमेवेति भावः । तदेवाहुः—वेदोक्ता इति । सर्वानुकारित्वादिति । सर्वेषामनुकारित्वादित्यर्थः । अतः लौकिकविलक्षणत्वात् । भिन्न एवेति । रूपप्रपञ्चापेक्षयेति शेषः । शब्दैकसमधिगम्यः वेदवेद्यः, न तु लौकिकप्रमाणवेद्य इत्यर्थः । तस्य प्रपञ्चस्य पुरुषावयवरूपत्वादाहुः—वेदैरिति । न विरोध इति । तथाच साध्यादिभिर्देवैर्वेदोक्तप्रपञ्चज्ञानान्तरं कर्मकरणान्न कर्मकर्तृविरोधः, तादृशप्रपञ्चस्य नित्यत्वात्तत्सम्बन्धेन न वेदस्यानित्यत्वमिति भावः । भौतिकप्रपञ्चापेक्षया वैदिकप्रपञ्चस्य भिन्नत्वे तस्य नित्यत्वे च सूत्रोक्तं प्रमाणमाहुः—प्रत्यक्षेति । आदौ प्रत्यक्षं योजयन्ति—प्रत्यक्षमिति । अवगच्छन्तीति । वृद्धपरम्परयेति शेषः । तथाच वेदोक्ताः पदार्थाः कर्माणि च नित्यानीत्यवगन्तव्यमिति भावः । जात्याकृतिव्यक्तव्यः पदार्थ इति न्यायसूत्रम् । पूर्वतन्त्रे जैमिनिमते जातौ शक्तिः व्यक्तेराक्षेपलभ्यत्वम् । आकृतौ शक्तिः व्यक्तेराक्षेपलभ्यत्वमित्येकदेशिमतम् । एवंचातिरिक्तप्रपञ्चाङ्गीकारापेक्षया जातौ वाऽऽकृतौ वा शक्तिस्वीकारे तयोर्नित्यत्वेन विरोधो नास्तीत्याशयेन शङ्कते–न चेति । पीनो देवदत्तो दिवा न भुङ्क्ते इत्यत्र पीनत्वान्यथानु-

---

१ तथा च यथा कर्म वेदैकगम्यं तथा वैदिकाः पदार्था अपि, आधिदैविकादिभेदस्य शास्त्रसिद्धत्वाच्चान प्रत्यक्षं प्रयोजकम्, यतः, जीवबुद्ध्या शतशोऽपि विचारितं मिथ्या भवति, जीवानां मायया मोहितत्वाच्च । एवं च वेदैकसमधिगम्यत्वेन पदार्था आधिदैविकाः, यजमानदौ स्वाधिभौतिकत्वे तदावाहनम् । तदुक्तं आचार्यपादभाष्ये "लौकिके च तदावाहनादतीन्द्रियत्वमेवे"ति । संस्कारादिभिरावाहनमतिरिक्तमित्याधिदैविकम् । ननु पदार्थसम्बन्धनित्यत्वार्थमतिरिक्तप्रपञ्चाङ्गीकारोऽनर्थकः, जैमिनीयोक्तरीत्या आकृतिवाचित्वेऽपि तत्सिद्धेः । तथाहि—प्रथमस्य तृतीये दशमाधिकरणे श्रीमन्तः पार्थसारथिमिश्रा आहुः, इदानीं वाचकत्वसन्नादाच्यविशेषश्चिन्त्यते, किमाकृतिरुत व्यक्तिरिति । तत्र यदि लोकवेदयोः शब्दार्थाना-

मन्यत्व भवेत्तत इदमनादरणीयम् । तथाहि लौकिकशब्दविषयं तावदिदमधिकरणमनर्थकं, वैदिकविषयं तु भवत्यर्थवत् । न तु तत्र व्यवहारानुपातिनां शब्दानामर्थनिर्णयः शक्यते कर्तुमुपायाभावात् । तेनोभयस्मिन्नपि विषयेऽनारम्भणमेवाधिकरणस्यान्यत्वपक्षे स्यात् । एकत्वपक्षे तु लोके वृद्धव्यवहारानुसारेण शब्दार्थनिर्णयः कृतस्तत्रानुपयुक्तोऽपि वेदे फलिष्यति । तेनाकृत्यधिकरणोपोद्घाततया लोकवेदयोः पदपदार्थानामन्यानन्यत्वे विचार्येते । तत्र सत्यपि वर्णभेदे केषाञ्चित्स्वरच्छान्दसवर्णागमलोपविकारविपर्ययाध्यायानध्यायादिधर्मभेदेन जराराजादिपदयोरिव क्रमभेदेन व्यपदेशभेदात्स्पष्टो भेदः, स्वरूपादिशब्दसाहचर्याच्च लोकवेदयोः पादानामन्यत्वं, अर्थोऽपि च पदान्यत्वादेव, "उत्ताना वै देवगवा वहन्ती"ति दर्शनाच्च । अश्ववातादिशब्दानां च स्पष्टार्थान्तरदर्शनादन्य इति प्राप्तेऽभिधीयते—"प्रत्यक्षप्रत्यभिज्ञानाद्वर्णैकत्वं प्रतिष्ठितम् । वर्णात्मकं पदं तच्च तदभेदान्न भिद्यते ॥" ननु वर्णभेदेऽपि स्वरादिभेदात्पदभेदो वाक्याधिकरणे दर्शितः, "पदावधारणोपायान्बहूनिच्छन्ति सूरयः । क्रमन्यूनातिरिक्तत्वस्वरवाक्यश्रुतिस्मृती"रिति । सत्यम्, योऽर्थप्रतीत्यौपयिको धर्मस्तद्भेदे भिद्यत एव पदम् । यथा पूर्वपदप्रकृतिस्वरत्वे बहुव्रीह्यर्थत्वं, अन्तोदात्तत्वे स्वार्थवृत्तितास्मरणादवगम्यते । ब्रह्मनाह्मणादिषु तु न्यूनातिरेकवशादर्थभेदो लोकत एवावगतः । जराराजादिषु क्रमभेदादर्थान्यत्वाध्यवसायः । नैवं लोकवेदयोरर्थौपयिकधर्मभेदोऽस्ति । यदि ह्यनियतस्वराणामन्योऽर्थो नियतस्वराणामन्योऽर्थ इति स्मृतितो लोकतो वाऽवगतं स्यात्ततो नियतानियतस्वरतया लोकवेदयोः पदभेदो भवेत् । नचैवमतो नास्ति पदभेदः । पद्यते गम्यते अनेनेति पदम् । अतो गमकस्वरूपस्य कियताऽपि रूपेण सति भेदे भिन्नं पदं तदभावे तु धर्ममात्रभेदान्न तद्भिद्यते । एवं त्मनेत्यादिषु लौकिकेभ्यो न्यूनातिरेककृतस्वरूपभेदे सत्यपि तद्रूपस्यार्थान्तरानवगमात्किञ्चिद्रूपभेदेऽपि लौकिकपदप्रत्यभिज्ञानात्, सत्यपि च केषाञ्चिद्भेदे सर्वेषां भेदस्याप्रामाणिकत्वात्, पदैक्ये च तदर्थावगमादुत्तानादिवचनस्यान्यपरत्वादश्ववालाद्यर्थभेदेऽपि केषाञ्चिद्भेदे सर्वेषां तदभावात्सिद्धमेकत्वं लोकवेदयोः पदपदार्थानाम् । एवं सिद्धे विचार्यते । किमाकृतिशब्दार्थं उत व्यक्तिरुताकृतिविशिष्टा व्यक्तिरिति त्रयः पक्षाः प्राधान्यतश्चिन्त्यन्ते । अन्ये तु विकल्पसमुच्चयसम्बन्धसमुदायादयः सर्वे पक्षा आकृतिविशिष्टव्यक्तिपक्षनिराकरणेनैव निराकृता भवन्तीति न पृथग्विचार्यन्ते । तत्र—"प्रयोगचोदनाभावाद्व्यक्तेरेवाभिधेयता । न ह्याकृतिरयोग्यत्वाद्व्यवहारोपयोगिनी । लिङ्गकारकसङ्ख्याभिः सम्बन्धोऽस्या न कल्प्यते । सामानाधिकरण्यं च न जातिगुणशब्दयोः । व्यक्तिवाचित्वपक्षे तु सर्वमेतत्समञ्जसम् । तेन शुद्धा विशिष्टा वा व्यक्तिः शब्दस्य गोचरः" इति, "व्रीहीनवहन्ति" "पशुमालभेत" "गामानय" "ब्राह्मणो न हन्तव्य" इति, यावन्त एवमादयो विनाशिमूर्तद्रव्यगोचराः प्रयोगविषयः प्रतिषेधा वा ते सर्वे व्यक्तावेव सम्भवन्ति नाकृतौ । न ह्याकृतिरवहन्तुमालब्धुमानेतुं हन्तु वा शक्यते, नित्यत्वादमूर्तत्वाच्च । तेनानर्थकं तद्विधानं प्रतिषेधश्च प्राप्त्यभावात् । व्यक्तिपक्षे तूपपद्यते । तस्माद्व्यक्तिः शब्दार्थः । एवं च वृक्षौ वृक्षाभ्यामिति व्यक्तौ प्रातिपदिकार्थे प्रत्ययाभिहितानि लिङ्गसङ्ख्याकारकाणि तया सम्बध्यन्ते । जातेरलिङ्गत्वादसङ्ख्यत्वादमूर्तत्वेनाकारकत्वाच्चासम्बन्धः स्यात् । सामानाधिकरण्यं च गौः शुक्ल इति शुद्धव्यक्तिवचनयोरेकार्थवृत्तित्वादुपपद्यते । जातिगुणविशिष्टद्रव्यवचनत्वेऽपि विशेषणभेदे सत्यपि विशेष्याभेदादुपपन्नम् । त्वत्पक्षे तु जातिगुणमात्रवृत्तित्वादर्थभेदे दुर्लभं सामानाधिकरण्यं स्यात् । एवं पुरुषो देवदत्त इति जातिद्रव्यवचनयोर्दर्शयितव्यम् । तस्माद्व्यक्तिरेवार्थः । कथं तर्हि व्यक्त्यन्तरे प्रयोगो यत्र न दृष्टः शब्दस्तत्र सामान्यस्योपलक्षणत्वाददोषः । यैवमाकृतिका सा गौरिति सामान्यमुपलक्षणीकृत्य शब्दार्थशिक्षा, योऽयं शुक्लवासाः स देवदत्त इतिवत् । यथा च तत्रोपलक्षणभूतं वासोऽनभिधाय देवदत्त एवाभिधीयते, तथेहाप्युपलक्षणमात्रत्वात्सामान्यस्यानभिधाने व्यक्तय एव शुद्धा अभिधीयन्ते । एकोपलक्षणत्वादेव नानेकशक्तिकल्पनापत्तेः । आकृतिविशिष्टव्यक्त्यभिधाने तु न कश्चिद्दोषः । तस्माद्व्यक्तिरेव शुद्धा विशिष्टा वा शब्दार्थ इति । नैतद्युक्तम् । कुतः ? "आनन्त्यव्यभिचाराभ्यां शक्त्यनेकत्वदोषतः । सन्देहाच्चरमज्ञानाच्छिन्नबुद्धेरभावतः । अन्वयव्यतिरेकाभ्यामेकरूपप्रतीतितः । आकृतेः प्रथमज्ञानात्तस्या एवाभिधेयता । व्यक्त्याकृत्योरभेदाच्च व्यवहारोपयोगिता । लिङ्गसङ्ख्यादिसम्बन्धः सामानाधिकरण्यधीः । सर्वं समञ्जसं ह्येतद्वस्त्वनेकान्तवादिनः । लक्षणा वाऽभ्युपेतव्या जातेस्तेनाभिधेयता" ॥ न ह्यनन्तासु व्यक्तिषु सङ्गतित्वं शक्यतेऽवगन्तुम् । व्यभिचाराच्च व्यक्तीनामशब्दार्थत्वं नियमलक्षणत्वात्सम्बन्धस्यानियमे तदयोगात् । अनन्ताश्च शब्दव्यक्तयोऽनन्तासु व्यक्तिषु कल्प्याः । जात्युपलक्षणत्वेऽप्यभिधेयानामानन्त्याच्छक्त्यानन्त्यमस्त्येव । व्युत्पत्तिकाले हि जातिरुपलक्षणं नाभिधानसमये । अभिधानं हि प्रातिस्विकेनैव रूपेण व्यक्तिगतम् । तद्यथाऽक्षत्रयमेकापवरकस्थमेकापवरकस्थित्यैवोपलक्ष्य कश्चित्कञ्चिदाह—"य एतस्मिन्नपवरकेऽधुना स्थितास्तेऽक्षशब्दाभिधेया" इति । तत्र यद्यव्युत्पत्तिसमयेऽपवरकस्थितिर्नामैकमुपलक्षणं लभ्यते, तथापि शब्दस्तदनादरेण व्यक्तिमात्रमेव स्वरूपेणाभिधत्ते इति भवति शक्तित्रयम् । एवमिहापि । यद्यपि व्युत्पत्तिसमये जातिरेकोपलक्षणमासीत्तथापि शब्दस्तामस्पृशन्नेव नानारूपा व्यक्तीः स्वेनैव रूपेणाभिधत्त इति स्यादेव शक्त्यानन्त्यम् । अपि च यद्यव्यपदेश्यं धर्मिस्वरूपमभिधेयं, ततो गोशब्दोच्चारणाद्गोव्यक्तिः प्रतीयमानापि नाश्वादिव्यक्तिभ्यो व्यवच्छिन्ना प्रतीता स्यात् । न ह्यसाधारणमाकारमन्तरेण द्रव्यं द्रव्यान्तरव्यवच्छिन्नं प्रतीयते । ततश्च गौरित्युक्ते सर्वत्राविशिष्टा प्रतीतिः स्यात् । यथाह—"अव्यपदेश्यत्वेन सर्वत्राविशेषादि"ति । अथाभिधानसमयेऽपि जातिरुपलक्षणमित्यभिदध-

वाचकत्वेनाविरोधः। सर्वत्र लक्षणाप्रसङ्गात्। "यः सिक्तरेताः स्यात्" (तै.सं.५।५।४)

---

पपत्त्या रात्रिभोजनमाक्षिप्यते एवं जलाहरणान्यथानुपपत्त्या आकृत्या घटरूपा व्यक्तिराक्षिप्यते तत्राक्षेपोऽर्थापत्तिः प्रमाणान्तरमिति पूर्वमीमांसकाः। व्यतिरेक्यनुमानगतार्थत्वमिति नैयायिकाः। एवंच प्रमाणान्तरकल्पने गौरवम्। अनुमानगतार्थत्वे शब्दस्य प्रमाणान्तरत्वभङ्गः। अतः परिशेषादाक्षेपस्य लक्षणायां पर्यवसानं वक्तव्यम्, तच्च न सम्भवतीत्याशयेनोत्तरमाहुः—सर्वत्रेति। तथाच शक्त्युच्छेद

---

देव हि व्यक्तिं शब्दो जातिमुपलक्षणमुपादाय तज्जातीयरूपेणाभिधत्ते गोजातीयमिति। ततः प्रथमं जातिरभिधातव्या। नह्यनभिधाय जातिं तज्जातीयत्वेन रूपेण व्यक्तिरभिधातुं शक्यते। ततश्च विशिष्टाभिधानमेव वाचोयुक्त्यन्तरेणापन्नं, न शुद्धाभिधानम्। विशिष्टाभिधाने च पूर्वतर विशेषणमभिधातव्यम्। तदभिधाने च तत एवात्यन्ताविनाभूतव्यक्तिप्रतिपत्तिसिद्धेर्न तत्राभिधानशक्तिकल्पनावसरः। किञ्च, गोशब्द उच्चरिते व्यक्तिषु संशयो भवति न कस्यचिन्निर्णयः। यत्र च संशयो न तस्य शब्दाभिधेयता, शब्दस्य निश्चयजनकत्वात्। सामान्यं तु निर्णीयत इति भवत्यभिधेयम्। नन्वसत्यपि व्यक्तिनिर्णये व्यक्तिमात्रं निर्णीयत एव। किमिदं व्यक्तिमात्रं, सामान्यं विशेषो वा। द्व्याकारैव हि वस्तुषु बुद्धिर्व्यावृत्त्यनुगतरूपा। तत्र विलक्षणबुद्ध्यालम्बनं व्यक्तिः सामान्यबुद्ध्यालम्बनं च सामान्यं न तदुभयातिरिक्तं व्यक्तिमात्रं नाम किञ्चिदस्ति वस्तुनो रूपम्। सामान्यमेव त्वनेन मात्रशब्देनाभिधीयत इति तदेवाभिधेयम्। प्रथमं च सामान्यमेव शब्दाद्गम्यते पश्चाद्व्यक्तिष्वाकाङ्क्षामात्रं जायते, ततस्तदेवाभिधेयं न व्यक्तिविशेषः। विचित्राश्च खण्डमुण्डादिरूपा व्यक्तय इति विचित्रा गोशब्दोच्चारणे बुद्धिः स्यात्। एकाकारा तूत्पद्यतेऽतोऽभिधेया जातिः। अन्वयव्यतिरेकाभ्यां चैवमेव युक्तम्। व्यवहाराङ्गता च जातेर्व्यक्त्यनतिरेकादुपपद्यते, अतोऽभिधेया जातिः। नहि जातिर्नाम व्यक्तेरर्थान्तरभूतं किमपि तत्त्वम्, अपि तु वस्त्वेव ह्येकमुभयात्मकं व्यावृत्त्यनुगतरूपतया बुद्ध्या गृह्यते, तत्र सामान्यं शब्दार्थ इति। अयमर्थः सामान्यात्मना वस्तु शब्दाद्गम्यते न विशेषात्मनेति। यत्र सामान्यात्मना शब्देन बोधितं तस्य क्रियासम्बन्धश्चोद्यते शक्नोति च क्रिया साधितुम्। अतस्तदेव क्रियाश्रयं विशेषरूपमपि लिङ्गसङ्ख्याकारकसम्बन्धः सामानाधिकरण्यं च सर्वमनेकान्ताश्रयणेनोपपद्यते। यत्र तु "पशुना यजेत" "अरुणया क्रीणाति" इत्यादौ करणत्वश्रवणं, तत्र जातिगुणयोश्चामूर्तयोरपि द्रव्यावच्छेदेन मुख्यमेव करणत्वमुपपन्नम्। अधिकरणसम्प्रदानादिरूपं त्वमूर्तस्यासम्भवादभेदं लक्षणां वाऽऽश्रित्य समर्थनीयम्। आह च—"तेन तल्लक्षितव्यक्तेः क्रियासम्बन्धचोदना। जातिव्यक्त्योरभेदो वा वाक्यार्थेषु विवक्षितः" इति तत्सामान्यमेवाभिधेयं न व्यक्तिरिति सिद्धम्॥

१ घटत्वादीनां घटत्वादिविशिष्टे लक्षणा, धन्यसम्बन्धस्तु समवायादिः। जैमिनीयेऽप्यस्मिन्नंशे आदरात्। प्राचीनवृत्तिकारैरैकशास्त्र्यस्यैवादृतत्वाच्च। अयमर्थः—न हि सर्वत्र वेदे शक्ता एव शब्दाः प्रयुज्यन्ते, किन्तु, यौगिका अपि। यथा, यः सिक्तरेताः स्यात् प्रथमाया तस्य जिलामुपदध्यादिति सिक्तरेत:पदम्। न हि तत्राकृतिः काचित्सम्भवति, या व्यक्तिरूपं सिक्तरेतसमाक्षिपेत्। किन्तु, सिक्तरेतस्त्वं तत्रोपाधिः। स च रेत:सेकानन्तरभावित्वादनित्य इति। अवयवशक्त्या बोधनेऽपि सिक्तत्वं सेकानन्तरभावित्वादनित्यमतस्तत्र पदसम्बन्धाङ्गीकारे शब्दानित्यत्वस्यापरिहाराद्दोषतादवस्थ्यमिति भावः। भाट्टभास्करे तु, यथैव गवादिशब्दानां जातौ शक्तिमाश्रित्याविनाभावेन व्यक्तौ लक्षणाऽऽकृत्यधिकरणन्यायसिद्धा, तथाऽऽख्यातानां कृतौ शक्तिमाश्रित्य तद्वति कर्तरि लक्षणेति शाणक इति प्रोक्तमतो शाणकमतमपाकर्तुं मिश्रमतमपाकर्तुं चानूदितो लक्षणापक्ष इति ज्ञेयम्। यदि चाक्षेपस्तर्क इत्युच्यते, तदापि तर्कस्य मीमांसापेक्षत्वाद्गौरवम्। "तर्को मीमांसया युत" इति वाक्यात्। एवं च सिक्तरेताः पुरुष इत्यत्र पुरुषत्वमाकृतिः, सिक्तरेतस्त्वमुपाधिः, व्यक्तेरभेदस्य जातिबाधकस्य सत्त्वात्। व्यक्तेरभेदस्तुल्यत्वं सङ्करोऽथानवस्थितिः। रूपहानिरसम्बन्धो जातिबाधकसङ्ग्रहः" इति नैयायिककारिकाश्रवणात्। किञ्च, "स्वार्थादन्येन रूपेण ज्ञाते भवति लक्षणा" यथा तीरत्वेनोपस्थितेर्गङ्गापदस्य। इह तु गोत्वादन्येन रूपेण व्यक्तेर्नोपस्थितिरपि तु गोत्वेनैव। व्यक्तित्वेन साक्षादिमत्त्वेन नोपलक्ष्यत्वे गोपदाद्व्यक्तित्वादिधीः स्यात्। नच गोत्वसम्बन्धिनि गोत्वविशिष्टे लक्षणेति वाच्यम्, गोत्वेन साक्षादानयनानन्वय इति व्यक्तेरवच्छेदकतयाऽन्वये मुख्यत्वेन लक्षणयाऽपि गोत्वावच्छिन्नैव व्यक्तिः क्रियार्थान्वयिनी न केवला व्यक्तिरिति गोत्वविशिष्टस्य लक्ष्यत्वे युगपद्वृत्तिद्वयविरोधप्रसङ्गाद्गोत्वेऽपि लक्षणाप्रसङ्गाद्वा। किञ्च, जातिमात्रे न शक्तिः, न वा व्यक्तौ लक्षणा, जातौ मुख्यप्रयोगाभावात्, शक्तिलक्षणयोस्तन्मूलकत्वात्। प्रयोगो हि व्यवहारहेतुज्ञानार्थः। न च जातिमात्रे निर्विकल्पाद्व्यक्तिमनादायैव केवलजातिव्यवहारस्तस्या विशिष्टज्ञानसाध्यत्वात्, गां पश्य, घटो नश्यति इत्यादौ गोत्वादिविशिष्टस्यैव ज्ञानं व्यवहारश्चातः एकवित्तिवेद्यत्वाज्जातिविशिष्टं शक्यम्। किञ्च, तृतीयायाः करणकत्वे इव गोगोत्वे शक्ये इति वाच्यम्, गोत्वव्यक्तिप्रसिद्धिप्रसङ्गात्, भवति तु गौरित्यादिनैयायिकोक्तदूषणानि ज्ञेयानि।

२ नचानुमानस्य, गोत्वं व्यक्त्याश्रितं जातित्वादित्येवंरूपस्य सहकारित्वमिति वाच्यम्, नियामकाभावात्। शब्दस्यानु-

इत्यादिषु विरोधश्च। न च प्रवृत्तिनिमित्तस्यैव वाच्यत्वम्, प्रवृत्तिवैयर्थ्यापत्तेः। सङ्केत-

---

इति भावः। ननु वृत्तिकारैः पूर्वोत्तरतन्त्रयोर्लक्षणांशे ऐक्यस्वीकारादस्तु सेत्यत आहुः—यद्वेति। अस्तु रूढिस्थले निर्वाहः यौगिकस्थलेऽनुपपत्तिमाहुः—सिक्तरेता इति। सिक्तं रेतः येनेत्यनेन सिक्तरेतस्त्वमुपाधिः। सा च सेकानन्तरमुत्पद्यत इत्यनित्यत्वमिति विरोध इत्यर्थः। घटपदप्रवृत्तिनिमित्तमुपाधिरूपं वा जातिरूपं वाऽस्तु उभयथाऽपि नित्यत्वात्तदेव वाच्यमस्त्वित्याशयेनाशङ्कते—नचेति। उत्तरमाहुः—प्रवृत्तीति। वैय्यर्थ्यापत्तेरिति। प्रवृत्तिनिमित्ते घटत्वे शक्तिस्वीकारे तेन जलाहरणासम्भवात्प्रवृत्तिवैय्यर्थ्यापत्तेरित्यर्थः। दूषणान्तरमाहुः—सङ्केतेति। व्यवहारात्सङ्केतग्रहस्तु व्यक्तौ, शक्तिस्तु घटत्वे

---

मानविधया बोधकत्वे प्रमाणान्तरत्वभङ्गप्रसङ्गाच्च। शब्दसहकृतानुमानस्यैव लाघवात्। ननु न लाघवं शब्दसहकृतत्वमनुमाने, यथा, तथाऽनुमानसहकृतत्वं शब्द इति प्रामाणिकमिति चेत्, न; प्रथमतः शब्देन घटत्वाद्यभिहिते पश्चादनुमानम्। एवं चानुमानसहकृतत्वे शब्देऽङ्गीक्रियमाणे नियामकाभाव एव। अनुमानपक्षस्त्वतिशिथिल एवेति भाष्ये नोट्टङ्कितः। सच भाट्टमते चिन्तामणावेवं दूषितः—न हि जातित्वं व्यक्त्याश्रितत्वसाधकं पदानुपस्थितत्वात्तस्य। उपस्थितत्वे वा जातिविशिष्टैव व्यक्तिः। किंचानुमानाद्व्यक्त्याश्रितं गोत्वमिति धीर्नतु गौरिति अतोऽतिशिथिलत्वान्नोट्टङ्कित इति॥

१ ननु नास्माभिर्जातावुपाधौ वा शक्तिराद्रियते, अपि तु पदप्रवृत्तिनिमित्ते, स कोऽप्यस्तु, तस्य नित्यत्वान्न कोऽपि दोषः इत्यत आहुर्भाष्ये नचेत्यादि। तथा च प्रवृत्तिनिमित्तस्य धर्मस्य सर्वत्र नित्यतैवेति नियमाभावान्नित्यसम्बन्धाभावे च तेन व्यक्त्यनाक्षेपात्, तां विना कार्यासम्भवे पदप्रवृत्तिवैयर्थ्यापत्तेरित्यर्थः॥

२ अथ तादृशस्याप्यर्थबलादाक्षेपकत्वमाक्षेपश्चोपनय इति विभाव्यते, तदा दूषणान्तरमिदम्। तादृशस्थले हि सङ्केतग्रहो व्यवहारादिना वाच्यः। तत्र व्यवहारादिस्तु व्यक्तावेव पर्यवस्यन्नानुपस्थिते प्रवृत्तिनिमित्ते सङ्केतं ग्राहयिष्यति। सङ्केतश्च, अस्मात्पदादयमर्थो बोद्धव्य इतीश्वरेच्छानुरूपः। स एव शक्तिः, अभिधा च, तस्य ग्रहो व्यवहारादिभिः। तथाचोक्तम्-"शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च। वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः" इति। तथाच यदि सङ्केते, नागृहीतविशेषणन्यायेनोपस्थितिरङ्गीक्रियते, तदापि समानसम्वित्सम्वेद्यत्वाभावेन विशिष्ट एव शक्तेः पर्यवसानमनित्यतानुद्धार इति तद्विरोधादित्यर्थः। ननु मास्त्वेकदेशिमतं, तथापि वैदिकसृष्टेरतिरिक्तत्वाङ्गीकारे तस्या अगोचरत्वेनानुपस्थितत्वात्तत्र सङ्केतग्रहो दुर्लभ इत्यत आहुर्भाष्ये **सर्वस्येत्यादि**। तथाच पूर्वंपा ब्रह्मादीनां भगवद्दर्शनेनोपस्थितेः सुकरत्वाददोषः। एवंच भगवद्दर्शनेन प्रतिपाद्यप्रतिपादकत्वरूपसम्बन्धग्रहस्ततो भगवान् भगवत्पदवाच्योऽस्तीत्यत्र भगवत्पदवाच्याभिन्नभगवन्निष्ठा सत्तेति शाब्दबोधः। उपमितौ तु भगवत्पदवाच्योऽयमिति प्रतीतिः। भाट्टास्तु, याऽसौ पूर्वमस्माभिर्दृष्टा गौः सा नेतरावयवेन सदृशीप्रतीतिमाहुरुपमितेः। अतो भगवान् भगवत्पदवाच्य इति शाब्दबोधः। दृष्ट एव श्रेह इत्युपपत्तिरिति भाष्यात्स्नेहे जाते तत्स्वाभाव्यात् "वेदाक्षराणि यावन्ति पठितानि द्विजातिभिः। तावन्ति हरिनामानि कीर्तितानि न संशयः" इति वाक्यविस्रष्टायाः "तमुस्तोतारः पूर्व्यं यथाविद ऋतस्य गर्भं जनुषापिपर्तन आस्य जानन्तो नामचिद्विवक्तन महस्ते विष्णोः सुमतिं भजामहे" इति श्रुत्या ऋषित्वेन भगवदिच्छया दर्शनात्तेन भगवन्नामसु शक्तिग्रहो भगवतः। "आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे। कुर्वन्त्यहैतुकीं भक्तिमित्थम्भूतगुणो हरिः" इति वाक्यात्, "भगवान्ब्रह्म कार्त्स्न्येन निरन्वीक्ष्य मनीषया। तदध्यवस्यत्कूटस्थो रतिरात्मन्यतो भवेत्" इति वाक्यात्, मनीषया पदपदार्थसम्बन्धरूपायाः शक्तेर्ग्रहः। ननु भगवद्दर्शनं पदार्थो यस्मिन्निति रूपं, तत्र कानि पदानीति चेत्, न; मनीषायाः पदपदार्थसम्बन्धग्रहे कारणत्वात्। ननु पदानि तदानीं न सन्तीति चेन्न, "तेने ब्रह्म हृदा य आदिकवये मुह्यन्ति यत्सूरयः" इति वाक्यात्, मनीषायां वेदरूपपदसत्त्वात्। तथाच श्रुतिः "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै। तं ह देवमात्मबुद्धिप्रकाशं" इति ब्रह्मणो भगवद्दर्शनं गोपालतापिनीयेऽस्ति। "यो विद्यास्तस्मै गोपायति कृष्ण. यस्तं ह देवमात्मबुद्धिप्रकाशमि"ति पूर्वपादमन्तरं पादद्वयं गोपालतापिनीये। अत्रात्मवृत्तिरात्मनो मनसो वर्तनमेकादशधा "एकादशामी मनसो हि वृत्तयः" इति वाक्याद्यद्यपि वक्तुं शक्यते, तथापि वेदप्रसङ्गादात्मनां वैदिकपुरुषशरीराणां वृत्तिर्वर्तनं हरिनाम्ना ग्रहणमिति यावत्। तस्य प्रकाशरूपं "मुमुक्षुर्वै शरणमनुव्रजेत्" इति श्रुत्यंशेनान्वयः। एवं वेदा नामसु शक्ताः क्रियाया वेति सङ्कटे "यावानर्थ उदपाने" इति गीतारूपवाक्यशेषादितिहासशरणाना पूर्वोक्तोऽर्थो, वैदिकाना क्रियारूपोर्थ इति। यद्वा, भगवद्दर्शनेनोपस्थितेरित्यस्यायमर्थः, भगवद्दर्शनाभिन्नोपस्थितेरिति। अभेदके, "प्रकृत्यादिभ्य उपसङ्ख्यानम्" इति वार्तिकेन तृतीया। तदुक्तं प्रस्थानरत्नाकरे—अथ प्रसङ्गादिदं विचार्यते वैदिकपदपदार्थानां मिथस्त्वात्कथं तत्र सम्बन्धग्रहः कस्य वा सम्बन्धस्य ग्रह इति। तत्र भगवदृयया वृद्धव्यवहारादिनेति ब्रूमः। अत्रादिपदेन उपमानाप्तवाक्ये ग्रहीतव्ये कथमितिचेदुच्यते, यो वै ब्रह्माणमिति श्रुतौ ब्रह्मणे वेदपाठ-

ग्रहविरोधाच । सर्वस्यापि पदार्थस्य भगवत्त्वान्नानुपस्थितिदोषः सङ्केतग्रहेऽपि । जमदग्नीनां पञ्चावत्तमित्यनुमानम् । न हि स्वयं जामदग्न्य इति प्रत्यक्षोऽनुभ-

---

इति विरोधादित्यर्थः । ननु भवन्मतेऽपि वैदिकसृष्टेरतिरिक्तत्वादगोचरत्वादनुपस्थितिः, तथाच सङ्केतग्रहो न भविष्यतीत्यत आहुः—सर्वस्येति । भगवत्त्वात् । भगवदनुकारित्वात् । तथाच ब्रह्मादीनां भगवद्दर्शनेनेदानीन्तनानां तु लौकिकसादृश्यात्तदुपमानेन सङ्केतग्रह इति नानुपस्थितिदोष इत्यर्थः ॥

वैदिकप्रपञ्चसत्त्वे प्रत्यक्षप्रमाणमुक्त्वाऽनुमानप्रमाणमाहुः—जमदग्नीनां पञ्चावत्तमिति । येषां प्रवरत्रयं ते चतुरवत्तिनः, येषां प्रवरपञ्चकं ते पञ्चावत्तिनः, प्रधानयागकाले पुरोडाशादवदानं चतुर्वारं चतुरवत्तिनाम्, पञ्चवारं पञ्चावत्तिनामिति विशेषः । जामदग्न्यवत्सगोत्रादयः केचन पञ्चप्रवरिणः यजमानास्तेषां पञ्चावत्तं विहितं दर्शपूर्णमासप्रकरणे आपस्तंबसूत्रे । अत्र यजमानः जमदग्निवत्सगोत्रोत्पन्न इति प्रत्यक्षं नास्ति किन्त्वनुमानम् । एतदेवाहुः—नहि स्वयमिति । ननु धूमरूपहेत्वंशे प्रत्यक्षं यन्त्वंशे

---

नस्याभ्युदित्य ब्राह्मणस्य चोक्तेः । अत्रासमान्याच्छक्तिग्रहः । पुरुषसूक्ते तु शक्रस्य वृद्धव्यवहारेण "सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाऽभिवदन् यदास्ते । धाता पुरस्ताद्यमुदाजहार शक्रः प्रविद्वान् प्रदिशश्चतस्रः । तमेवं विद्वानमृत इह भवति नान्यः पन्था अयनाय विद्यते" इति । अत्र यत्तः नाम कर्ता वृद्धः प्रयोजक प्रयोज्यवृद्धो धाता उदाहारकत्वात् । शक्रो बालस्थाने । शक्नु शक्तौ स्फायितव्यीतिरत्र. शक्नोति स्वा. प. अ. । उपमानाच्छक्तिग्रहो यथा पुरुषसूक्ते "सहस्रशीर्षा पुरुष." अन्तस्तद्धर्माधिकरणोक्तः "अत्यतिष्ठद्दशाङ्गुलम्" इति श्रुतेः । एतस्य वैश्वानराधिकरणोक्तविरुद्धधर्माश्रयत्वेनाभिव्यापकरूपे मनोवचसोरविषये साकारे ब्रह्मणि "यतो वाचो निवर्तन्ते" इतिश्रुतिविषये परब्रह्मपदस्य सङ्केतग्रहः । तथाहि विराट्सदृशं परं ब्रह्मेति भाष्यादवगत्य अपि सत्साधने कृते परमत्र पश्यति ततः इदं वस्तु परब्रह्मपदवाच्यमित्युपमितिरियं प्रत्यक्षेऽन्तर्भवतीति प्रस्थानरत्नाकरे । तथाच सर्वस्येति भाष्यस्यायमर्थः—"पदज्ञानं तु करणं द्वारं तत्र पदार्थधीः । शाब्दबोधः फलं तत्र शक्तिधीः सहकारिणी"ति भाषापरिच्छेदेन शक्ताना वर्णसदानां वर्णादिज्ञानसत्त्वेऽपि द्वारभूतस्य पदार्थोपस्थितेर्विषयस्याधिदैविकत्वेनाभावादभावेन शाब्दबोधकारणवैकल्यरूपो दोषः प्राप्तः स न । आधिदैविकानामप्यर्थानां भगवद्रूपत्वात्तेन रूपेणाधिदैविकानामुपस्थितेरिति । सङ्केतग्रहः सहकारी तत्सत्त्वेऽपि वैयाकरणास्तु अर्थसापेक्षशब्दस्वरूपमेव वाचकत्वापरनामकं शक्तिः कारणत्वादित्याहुः । सिद्धान्ते तु साधुत्वापरपर्याया अनादिवाचकत्वरूपा अर्थबोधाविर्भावकत्वाचिरतिरिति । न च गौरवम् । "परास्य शक्तिर्विविधैव"ति श्रुतेः । विस्तरस्तु प्रस्थानरत्नाकरे, भक्तिततिकिरणावल्यां च द्रष्टव्यः । वर्णेषु पदेषु च शक्तिः, वाक्येषु तु बुद्धिपरिकल्पिता । ब्रह्मणोऽर्वाचीनानामिदानीन्तनपर्यन्तानां तु सम्प्रदायपारम्पर्यात्सर्वस्य भगवदनुकारित्वेन लौकिकसादृश्यतयोपमानेन सङ्केतग्रहसौकर्याददोषः । तथया, लौकिको भगवान् विराडात्मा तद्दृष्टभिर्ब्रह्मादिभिर्भूम्यादिसप्तर्षिपर्यन्तैर्देवदानवगुह्यकादिभ्य उक्त वैदिकविराडवयवसदृशा लौकिकविराड्जातवाचकपुरुषसूक्तोक्तपदवाच्या इति पश्चाद्देवदानवगुह्यकादिभिर्यागादिषु ते पदार्था विराड्जाता दृष्टास्तत्र वैदिकविराडवयवसादृश्यज्ञानं प्रजातं तदुपमितिकरणं तदनन्तरं वैदिकविराडवयवसदृशा लौकिकविराड्जातवाचकपुरुषसूक्तोक्तपदवाच्या इत्यतिदेशवाक्यार्थस्मरणं यज्जायते तदेव व्यापारः, तदनन्तरं सर्वे लौकिक विराड्जातवाचकपुरुषसूक्तोक्तपदवाच्या इति ज्ञानं यज्जायते तदुपमितिरिति । तथा च सादृश्यज्ञानेन लौकिकं भगवत्सदृशताप्रकारकेण लौकिकभगवत्सदृशविशेष्यकेनोपमानेन सङ्केतग्रहसौकर्याद्दोषः सङ्केतग्रहाभावरूपः, स न इत्यर्थः । अन्यथाऽज्ञानिनां अनुमानविवेचनकल्पकत्वं वदता त्वज्ञानमेवेति न कोऽपि दोषः । अतो जैमिनिमते वेदाद्धर्मावगतिरिव व्यासमते वैदिकपदार्थानामप्यवगतिरिति कर्मावगतिप्रत्यक्षेण साधितम् ॥

१ अनुमानेन साधयितुं तदाहुः जमदग्नीत्यादि । न च मनुष्यत्ववत् तदपि प्रत्यक्षमिति वाच्यम् । भारते भाष्यविचारे "जातिरत्र महासर्प मनुष्यत्वे महामते । सङ्करात्सर्ववर्णानां दुष्परीक्ष्येति मे मतिः । सर्वे सर्वास्वपत्यानि जनयन्ति सदा नराः" इति कथनात् । "कथपरायात्कर्तुश्च पुत्रदर्शनम्" इति जैमिनीयसूत्रेऽपि पुत्रदर्शनमात्रकथनेन तत्त्वासदर्शनसूचनात् । "तस्य मे अग्निरुपद्रष्टा वायुरुपश्रोताऽऽदित्योऽनुख्याता द्यौः पिता पृथिवी माता प्रजापतिर्बन्धुः य एवास्मि स सन् यजे" इति प्रवरानुमन्त्रणश्रुत्या "यन्मे माता प्रममाद यच्चचारानुव्रतम्" इति श्रुत्या च तथानिश्चयात् । न च बीजायोनिर्बलीयसीति प्रसिद्धेर्मातृगोत्राद्गोत्रनिर्णयः इति वाच्यम्, "माता भस्त्रा पितुः पुत्रो येन जातः स एव सः" इति शास्त्रापेक्षया प्रसिद्धेर्दुर्बलत्वादिति ॥

वोऽस्ति । परोक्षव्यवहारस्यैवानुमानत्वमिति ब्रह्मवादः । तस्मात् प्रत्यक्षानुमानाभ्यामिदानीन्तनभौतिकयज्ञपदार्थेषु भगवदवयवावेशस्तथाऽमुत्रापि देवादिलोके । तस्माद्वैदिकः पदार्थः सर्वोऽप्याधिदैविको भिन्न इति सिद्धम् ॥ १।३।२८ ॥

---

पारोक्ष्यं तत्रैवानुमानप्रसरः, अत्र तु सर्वांशे पारोक्ष्यात्कथमिदमित्यत आहुः—परोक्षेति । ब्रह्मवादे सर्वांशे परोक्षव्यहारस्यैवानुमानत्वं स्वीक्रियते इत्यर्थः । तथाच यजमानेन स्वस्मिन् जामदग्न्यत्वं यथा परोक्षेण गृह्यते, एवं वेदोक्तप्रपञ्चोऽपि गृह्येतेतिभावः । उपसंहरन्ति—तस्मादिति ।

---

१ नन्वत्र जामदग्न्यज्ञाने हेत्वदर्शनात् कथमस्यानुमानत्वमत आहुः परोक्षेत्यादि । तथाच परोक्षेण स्वस्य यथा जामदग्न्यत्वावगतिस्तथा परोक्षेणापि तस्य प्रपञ्चस्यावगतिरित्यर्थः ॥

२ ब्रह्मवादः ब्रह्मैव सर्वमिति वादः सर्वान्तर्गतस्यैकस्यापि प्रसिद्धानुमानिकत्वे [illegible] तस्य पदार्थानुमानगम्यत्वेन "सर्वं खल्विदं ब्रह्म" त्यौपनिषदत्वाभावेन "तं त्वौपनिषदं पुरुषं पृच्छामि" इतिश्रुतिविरोधः । ननु इदानीमपि इत्याद्युक्तभाष्ये वेदादवगच्छन्तीत्युक्त्या यजमानादिकृत्यानां वेदरूपशब्दादवगतिकथनात्कृत्यादिविषयकं शाब्दं ज्ञानं प्रतीयते । तद्विरुद्धं प्रत्यक्षं तावदित्युपक्रमेण प्रत्यक्षज्ञानस्य विवक्षितत्वात् । प्रत्यक्षपदेन शाब्दं प्रत्यक्षं गृह्यते इति चेन्न, परोक्षव्यवहारस्यैवानुमानत्वेनानुमानाभ्यामिति सूत्रशेषापत्तेः । अतः प्रत्यक्षानुमानाभ्यां भगवदवयवानामावेशः । मौढ्याभावाय पुराणोक्तानां जैमिनिसूत्रोक्तप्रकारेण स्वीक्रियते । व्याससूत्रसहकारेण तथामुत्रापि देवलोक इत्यर्थः । तथाच भावार्थपादभाष्यम्—जैमिनिसूत्रोक्तप्रकारे "भावार्थाः कर्मशब्दाः" इति सूत्रस्य । क्रियामात्रं यदि स धर्मो भवेत् तदा न वक्तव्यम् । किन्त्वतीन्द्रियो यागादिः स्थिरो धर्मस्तत्र सामान्यं नित्यमिति नित्यता प्रतिपादिता विशेषस्त्वतीन्द्रियता । द्रव्यदेवतासम्बन्धो हि यागः देवताया अतीन्द्रियत्वात् तत्सम्बन्धोऽप्यतीन्द्रियः । सम्बन्धश्च प्रीतिहेतुत्वेन स्वीकारः । द्रव्यं चालौकिकमित्यनित्यतायां न कोऽपि हेतुः । न हि चेष्टा यागो येन विनाशः कल्प्यते अदृष्टं वा । ये क्षणिकत्वं अदृष्टं वा कल्पयन्ति, न ते यागपदार्थं विदुः भावार्थाः कर्मशब्दा ये इत्यर्थः । दानमपि परस्वत्वापादनमतीन्द्रियम् । लोकास्तु तद्विषयककायिकव्यापारे तत्प्रयोगमाहुः । ननु अवघाताय ऐन्द्रियका आशुतरविनाशिनश्चेति चेन्न मन्त्रेण चावघातो देवपत्न्यश्च कर्त्र्यः लौकिके च तदावाहनादतीन्द्रियत्वमेव । फले सम्पन्ने तस्य तिरोभावः । स एवार्थः । लौकिकस्तु संसारहेतुत्वादनर्थः । अत एव विधीयते पुरुषः प्रत्यवर्त्येत इति । अत्र भौतिकयज्ञपदार्थेषु भगवदवयवावेश उक्त स प्रस्थानरत्नाकरे संस्कारादिनोक्तः । तेषां नित्यपरिच्छिन्नत्वाद्गमागमरूपयोराविर्भावतिरोभावरूपयोस्तत्र सत्त्वात् । व्यापकत्वपक्षे तु विहितकार्यानुकूलत्वरूपसन्निधानस्यैवावेशत्वादिति । [illegible] चातीन्द्रियस्याप्रत्यक्षात् यजमानादीनां लौकिकाना प्रत्यक्षेणातीन्द्रियांशे शाब्दमिति प्रत्यक्षं तावदिति भाष्यविरोधस्तदवस्थ इति शङ्क्यम् । अतीन्द्रियविशिष्टग्रहे लौकिकमानाग्रहात् । न च विशिष्टं शुद्धान्नातिरिच्यते इति दोषतादवस्थ्यं शङ्क्यम्, संस्काराणामावाहनस्य च वैयर्थ्यापातात् । अतः संस्कारादिविशिष्टं शुद्धाद्व्रीह्यादेरतिरिच्यते, तथा च भावार्थपादभाष्यम्—"तस्य च शेषभूतत्वादि"ति सूत्रस्य, संस्कृतं हि द्रव्यमुत्तरत्रोपयुज्यत इति । अतः संस्कृतावाहितयोः प्रत्यक्षं शुद्धप्रत्यक्षादतिरिक्तम् । अतः प्रत्यक्षं तावत् इत्युपक्रमभाष्यम् । अथ नहि स्वयं जामदग्न्य इति भाष्यपाठस्तर्हि जमदग्नेर्गोत्रापत्यं जामदग्न्यः, मधुबभ्र्वोर्ब्राह्मणकौशिकयोरिति सूत्रेण छान्दसो यञ्प्रत्ययः । छन्दसि बहुलमिति । कौशिकगोत्रे जमदग्नेः सत्तायां नवमस्कन्धे षोडशे "इति कौशिकगोत्रं हि विश्वामित्रैः पृथग्विधम् । प्रवरान्तरमापन्नं तद्धि चैवं प्रकल्पितम्" इति वाक्यात् । एवमित्यनेनोक्तप्रकारे पूर्वं कुशकथायां ऋचीकार्थकथासत्त्वात् । ननु कुशस्य कुशाम्बुस्ततो गाधिः, तस्य सत्यवती कन्या ऋचीकर्षेः कलत्रं, ततो जमदग्निस्तस्य परशुरामो जामदग्न्य इति कथं कौशिकगोत्रे जमदग्नेः सत्ता, कथं मधुबभ्र्वोश्चेति सूत्रप्रवृत्तिः, यतो गोत्रे यञ् इति श्रुतिरिति चेन्नवान्यस्मिन्सपिण्डे स्थविरतरे जीवति, भ्रातुरन्यस्मिन्सपिण्डे स्थविरतरे जीवति पौत्रप्रभृतेरपत्यं जीवदेव युवसञ्ज्ञं स्थानेन वयसा चोत्कृष्टे पितृव्ये मातामहे भ्रातरि वा जीवति इति व्याकरणात् । ननु गाधौ जीवति जामदग्न्यस्य युवसञ्ज्ञा न [illegible] गोत्रसञ्ज्ञेति चेन्न, "ऐलस्य चोर्वशीगर्भात्षडासन्नात्मजा नृप" इत्युर्वशीवंश्यसम्बन्धित्वेन "यूनश्च कुत्सायां गोत्रसञ्ज्ञेति वाच्यम्" इति वार्तिकेन यूनो गोत्रसञ्ज्ञासत्त्वात् । श्रुतौ तु जमदग्नीनामित्यत्र जामदग्न्यानां वसुमदादीनां परशुरामान्तानां पर्यायत्तमिति प्राप्ते मगमोश्चेति सूत्रेण यणो लुक् । जमदग्नीनां जमत्, जमु अदने जमत्प्राश्नीनां, तथाच श्रुतिः गोत्रे यञन्तमनन्तं च तदयमपमो रेतयोऽलुक् स्यात् तत्त्वे बहुत्वेन तु स्त्रियामिति यत्र अवत्तं "अच उपसर्गात्तः" अजन्तादुपसर्गात्तरस्य दा इत्यस्य घोः तकारः स्यादिति दा दानार्थकः क्ते प्रत्यये अवदानम् । "अवदानमतिवृत्तं कर्मखण्डनयोरपि" इति विश्वः । तथा च जामदग्न्य इति ज्ञानं अपत्यप्रत्ययाते शास्त्रीयम्, न तु जमदग्निप्रत्यक्षेण जमदग्न्यपत्यप्रत्यक्षेऽपि जामदग्न्यस्य प्रत्यक्षं. प्रत्यक्षः ।

साधिकां विशेषोपपत्तिमाह—

( तस्य नित्यत्वसमर्थनम् )

**अत एव च नित्यत्वम् ॥ १।३।२९ ॥**

अत एवास्मादेव हेतोर्वेदस्य नित्यत्वम् । सर्वप्रपञ्चवैलक्षण्येन । चकाराद् ब्रह्मतुल्यत्वम् । शब्दब्रह्म वेदपुरुष इत्यादिवाच्यत्वम् । अस्यास्तु सृष्टेर्ब्रह्मोपादानस्य सर्वज्ञतया कथनं तन्माहात्म्यनिरूपणार्थम् । बन्धिका ह्येषा । मोचिका तु सा । अत एव ऋषीणामप्यत्र मोहः । निःश्वसितवचनाच्च । तस्याप्ययं प्राणभूतो नित्य इति । अर्थप्राधान्याद् ब्रह्मविद्या परा विद्या । प्रपञ्चभेदादेव लौकिकवैदिकशब्द-

---

**अत एव च नित्यत्वम्** । सूत्रमवतारयन्ति । **साधिकामिति** । **उपपत्तिमाहेति** । सूत्रकार इति शेषः । नित्यत्वे साधकमाहुः—**सर्वेति** ब्रह्मतुल्यत्वे साधकमाहुः—**शब्देति** । **इत्यादिवाच्यत्वम्** । इत्यादिपदवाच्यत्वम् । ननु भौतिकसृष्टेर्ब्रह्मोपादानकत्वं "यतो वा इमानी"त्यादिवाक्येन श्रुतिर्वदति, तन्निरर्थकम् । कुतः ? वैदिकसृष्टेर्भिन्नत्वादित्यत आहुः—**अस्या** इति । यद्वा, शब्दब्रह्म इत्यादिपदवाच्यत्वेन यथा ब्रह्मतुल्यत्वं तथा सर्वज्ञत्वादिमहात्म्यवत्त्वेनापि ब्रह्मतुल्यत्वमित्याहुः—**अस्यास्त्विति** । **कथनमिति** । "यतो वेति" वाक्येन कथनमित्यर्थः । **तन्माहात्म्येति** । वेदपुरुषमाहात्म्येत्यर्थः । ब्रह्मणः यथा मोक्षजनकत्वं तथा वेदपुरुषस्यापीत्याहुः—**बन्धिकेति** । वैदिकी सृष्टिरेव वेदार्थः, तद्द्वारा वेदस्यापि मोचकत्वमिति भावः । ननु अस्याः सृष्टेः कथं बन्धजनकत्वमित्यत आहुः—**अतएवेति** । **मोह इति** । केषाञ्चिन्नैयायिकानां मते परमाणोः सकाशादियं सृष्टिः । केषाञ्चित्साङ्ख्यानां प्रकृतिः कारणं सृष्टेरित्येवं मोह इत्यर्थः । मोहजनकत्वादेव बन्धकत्वमिति भावः । वेदस्य नित्यत्वे अपरां युक्तिमाह—**निःश्वसितेति** । "यस्य निःश्वसितं वेदा" इत्यादिवचनादित्यर्थः । **तस्यापि** । ब्रह्मणोऽपि । नन्वेवं चेद्वेदस्यैकत्वात्परापरविभागः कथमित्यत आहुः—**अर्थप्राधान्यादिति** । ब्रह्मरूपार्थप्राधान्यादुपनिषद्विद्यापरेत्यर्थः । ननु लोकवेदाधिकरणे पूर्वतन्त्रे लोकेऽवगतसामर्थ्यः शब्दो वेदेऽपि बोधक इत्यनेन लौकिकवैदिकशब्दैक्यमुक्तम्, एवं च प्रपञ्चभेदः कथमित्यत आहुः—**प्रपञ्चेति** ।

---

वेदाज्जायमानं श्रौतं ज्ञानम् । ननु जातिशक्तिखण्डनेन जामदग्न्य इत्यत्र व्यक्तावेव शक्तिरुक्ता स्यात् इति चेत्, सत्यम्; प्रस्थानरत्नाकरे तथाप्रतिपादनात् । जातिव्यक्तिविभागोऽयं यथा वस्तुनि कल्पित." इति षष्ठस्कन्धात् । तथापि "स एकधा भवति त्रिधा भवति" इति श्रुतेर्जातिरूपत्वेनाविर्भावे विशिष्टे शक्तिर्यतो जातिव्यक्ति विनाऽनुपपद्यमाना तामाक्षिपति शास्त्रार्थप्रतिपादकद्वितीयस्कन्धस्य सुबोधिन्या पञ्चमश्लोके विशिष्टे शक्त्युक्ते । सूत्रार्थस्तु—आधिदैविकप्रपञ्चः अतः प्रभवात् प्रत्यक्षानुमानाभ्याम्—साध्यतावच्छेदकसम्बन्ध. आश्रयतया हेतुतावच्छेदकसम्बन्धः आश्रयता, हेतुतावच्छेदकसम्बन्धः प्रतिपाद्यता, केवलव्यतिरेकि ॥

१ सर्वयुक्त्यभावाय मोचकत्वमोहकत्वयो. सहावस्थानमिति भाव. ।

२ तथा चेश्वरात्मकत्वरूपं वेदस्य न [illegible] तदुक्तमिति भाव. ।

३ "प्रयोगचोदनाभावादर्थैकत्वमविभागात्स्यात्" इत्यादिषु सूत्रेषु शब्दैक्यस्यानुक्तत्वात् । तथा हि यन्माधवीयजैमिनिन्यायमालाविस्तरे अर्थैकत्वं पदैक्यमन्तरा न सम्भवतीति पदैक्यं तर्कयित्वा अर्थैकत्वं महता सरम्भेण साधितम् । तत्र पदैक्यमन्तराप्यर्थैकत्वं पर्यायेषु दृष्टमिति तन्मन्दमिति अतो लोकवेदाधिकरणस्य कल्पितत्वेनाप्रामाणिकत्वम् । किञ्चाकृत्यधिकरणस्य वर्णकत्वेनोक्तिर्लोकवेदाधिकरणस्य कल्पितत्वं स्फोरयति । अधिकरणान्तरस्य प्रसिद्धस्य वर्णकत्वायोगात् । न चैकस्यैकत्र विधिनिषेधमुखेन द्वेधा निरूपणमत्र भाष्य इव दृष्टमित्येकत्र लोकवेदाधिकरणस्याकृत्यधिकरणस्य वर्णकत्वे न दोष इति शङ्क्यम्, तत्र दहराधिकरणे विषयैक्यादत्र तु लोकवेदयो. पदपदार्थैक्यं लोकवेदाधिकरणे विषय आकृत्यधिकरणे तु जातौ शक्तिनिर्धार इति विषयभेदात्तथा । यदि चैकत्राधिकरणद्वयं नास्ति, किन्तु सर्वेषां सूत्राणां द्वेधा व्याख्यानाद् अधिकरणद्वयमिति विभाव्येत, तदा युगपद्वृत्तिद्वयविरोध , अतो ह्यप्रसिद्धेः कल्पितमतः शब्दभेदः तथा चोक्तं स्वरादिभेदाद्वैदिक-

व्यवहारभेदौ । तस्मादाधिदैविकप्रतिपादकत्वाद्वेदस्य नित्यत्वम् ॥ १।३।२९ ॥

( अनित्यत्वापरिहारः )

समाननामरूपत्वादावृत्तावप्यविरोधो दर्शनात् स्मृतेश्च ॥ १।३।३० ॥

एवं शब्दबलविचारेण वेदप्रामाण्यस्य सिद्धये भिन्न एव प्रपञ्चो ह्याधिदैविकः सर्वत्र सिद्धः । इदानीमर्थबलविचारेणोत्तरकाण्डे किञ्चिदाशङ्क्य परिह्रियते दार्ढ्यार्थम् । नन्वस्य प्रपञ्चस्यानुकारित्वेन वा स्वीक्रियमाणत्वे सृष्टिप्रलययोर्विद्यमानत्वादनित्यसंयोगः प्राप्नोति । तत्राह—

---

व्यवहारभेदाविति । व्यवहारस्य प्रमाणत्वाज्जैमिनिना तथाऽनुक्तत्वाच्च शब्दभेद इत्यर्थः । उपसंहरति—तस्मादिति ॥

समाननामरूपत्वादावृत्तावप्यविरोधो दर्शनात्स्मृतेश्च । यद्यपि भौतिकप्रपञ्चादाधिदैविकप्रपञ्चो भिन्न इत्युक्तेऽपि सन्देहा बहवः सम्भवन्ति । "आदित्यो वा अस्माल्लोकादमुं लोकमैत्सोऽमुं लोकं गत्वा पुनरिमं लोकमभ्यध्यायदि"त्यनेन लोकद्वयसृष्टिर्भौतिकी तैत्तरीयशाखायां प्रथमाष्टके पञ्चमप्रपाठके प्रतिपाद्यते इति । संशयबाहुल्यम्, तथाच भौतिकसृष्टेरुत्पत्तिप्रलयोक्तेरनित्यत्वाद्विरोधः ॥

तथापि निश्चयार्थमपरं सूत्रमवतारयन्ति—एवमिति । उत्तरकाण्डे । उपनिषत्काण्डे । किञ्चिदाशङ्क्यासृष्टिप्रलयोक्तावनित्यत्वमाशङ्कमवतारयन्ति—नन्विति । अस्य । भौतिकस्य । अनुकारित्वेन । वैदिकाधिदैविकानुकारित्वेन । वाच्यत्वेन । प्रपञ्चपदवाच्यत्वेन । सृष्टीति । वारम्वारं सृष्टिप्रलययोः सत्त्वेनानित्यत्वात् ॥

---

शब्दा भिन्ना इति । न च छान्दसप्रक्रियाया नियतस्वरवर्णागमतल्लोपविकरणव्यत्ययादिदर्शनेऽपि न तैस्तयोर्भेदसिद्धिः । अर्थभेदाभावे तदेवेदं गोपदमित्यादिप्रत्यभिज्ञया भेदाभावे च सिद्धे तेषा तदसाधकत्वादितिवाच्यम् । अर्थभेदस्यानधिगतार्थगन्तृत्वेन वाक्येषु सत्त्वात् । न ह्यर्थैकत्वमिति जैमिनिसूत्रांशस्य विरोध इति शङ्क्यम्, पदार्थैकत्वमित्यर्थात् । न हि यागपदार्थो लोकवेदयोर्भिन्नः, किन्तु, "ज्योतिष्टोमेन स्वर्गकामो यजेत" इत्यत्र यागत्वेन स्वर्गत्वेन कार्यकारणभावो लोकेऽनधिगतो वाक्यार्थोऽन्वये निविशते स लोकभिन्नोऽर्थः । किञ्च, लोके रूढिर्योगमपहरति घटादिपदेषु । वेदे तु योगरूढिर्योगश्च । तदुक्तं पूर्वमीमांसाकारिकासु—अतो धर्माववोधाय विचारो योगरूढित " इति वेदे योगरूढि. । "ये धातुशब्दा यत्रार्थे उपदिष्टाः प्रकीर्तिता. । तथैवार्थो वेदार्थे. कर्तव्यो नान्यथा क्वचित्" इति वेदान्ते योग पत्रावलम्बने । वेदे तु योगरूढिर्विशेषवाक्यात् । परिशेषाद्वेदान्ते योगः । तथा च श्रुतिः "प्रयतं पुरुषं त्मना" इति । लोके त्वाकारादित्वेन नियत आत्मशब्द. । ब्राह्मणा इति लोके, वेदे तु ब्राह्मणास पितर. सोम्यासः इति । न च प्रयोक्तॄणां भेदेऽप्येकैकस्य पुरुषस्य यथा बहुकृत्व उच्चारणभेदेऽपि त एवामी वर्णा इति प्रत्यभिज्ञानात् वर्णैक्यम् । तथा यानि लोके गवादिपदानि तान्येव वेदेऽधीयमानानि इत्यबाधितप्रत्यभिज्ञया पदैकत्वमभ्युपेयमिति वाच्यम् । पदभेदे सति प्रत्यभिज्ञाया भाक्तिकत्वात् । व्यवहारस्तु पत्रावलम्बने प्रसिद्धः । "लौकिको वैदिकश्चैव व्यवहारो द्विधा मत । लोकसिद्धं पुरस्कृत्य वैदिको बोध्यते यथा" इत्यादिना ग्रन्थेन । "व्यवहार- सन्निपातो मनोमात्रेन्द्रियासुभि- । सन्निपातस्त्वहमिति ममेत्युद्भवन्त्या मति-" इत्येवं लक्षित । सोऽयं मायाद्वैतसात्त्विकज्ञाने प्रतिवभाति । "कार्यकारणवस्त्वैक्यमर्शनं पटतन्तुवत् । अवस्तुत्वाद्विकल्पस्य भावाद्वैतं तदुच्यते" इति सप्तमस्कन्धे । "सर्वभूतेषु येनैकं भावमव्ययमीक्षते । अविभक्तं विभक्तेषु तज्ज्ञानं सात्त्विकं स्मृतम्", "कैवल्यं सात्त्विकं ज्ञानम्" इति गीता । श्रीमद्भागवतेऽयं वेदान्तव्यवहारः । वैदिकस्तु यजमानविषय मोक्षादिफलक । एताभ्यां मोक्षशास्त्रीयाभ्यां पुरुषस्य मनोमात्रेन्द्रियासुभिः अहम्ममेति या बुद्धि सा निवर्तते, तदनु रजस्तमसोः क्षीयमाणतयाऽप्राबल्येन क्रमेण मिश्रणाभावे कैवल्यसात्त्विकत्वात् औपधाव्यायमानस्य भावस्य सन्निपातनिवर्तकत्वात् । तत्र पृथग्बुद्धेर्विद्यमानत्वेऽपि प्रवत्नेन शास्त्रेण भ्रम्यमानतया तस्याः अकिञ्चित्करत्वात् । लौकिकव्यवहारस्तु वैदिकव्यवहारबोधाय पुरस्कृत आवरणशुक्तिमायाप्रत्युत्पत्त्यर्थ । "अन्नेन प्रत्यूष्मि"ति श्रुतेः । प्रतिकूलं प्रापितं वितर्कितं वा । तदिदं राजसज्ञानविषयम् । मायासामर्थ्या राजसं ज्ञानं नानाकारं भवति "पृथक्त्वेन तु यज्ज्ञानं नानाभावान् पृथग्विधान् । वेत्ति सर्वेषु भूतेषु तज्ज्ञानं विद्धि राजसम्", "रजो वैकल्पिकं स्मृतम्" इति च भगवद्वाक्यात् । इदमेव व्यवहारोपयोगि इमौ भेदौ वेदनित्यत्वगमकौ इत्यर्थः ।

समाननामरूपत्वादावृत्तावप्यविरोधः । वस्तुतस्तु, भगवद्रूपत्वादाविर्भावतिरोभावेच्छयैव तथात्वान्नावृत्तिशङ्काऽपि । तथापि लोकबुद्ध्यनुसारेणावृत्तावपि समाननामरूपत्वात् समुद्रे जलप्रक्षेपवत्, पुनरुपादाने तदेवेति निश्चयाभावेऽपि नामरूपयोस्तुल्यत्वादन्यस्य भेदकस्याभावान्नानित्यसंयोगविरोधः । कुतः? दर्शनात् ।

---

समाधानमाहुः—समाननामरूपत्वादावृत्तावप्यविरोधः । शङ्कायां शैथिल्यमाहुः—वस्तुत इति । भगवदिति । मौतिकप्रपञ्चस्येतिशेषः । तथात्वादिति । तथाचानित्यत्वेन प्रतीयमानत्वं न त्वनित्यत्वमित्यर्थः । नावृत्तिशङ्कापि । वारम्वारं सृष्टिप्रलययोः सत्त्वं तस्य शङ्कापीत्यर्थः । समानेत्यस्य व्याख्यामाहुः—समुद्र इति । नामरूपयोरिति । प्रपञ्चस्य नामरूपत्वेन व्यवह्रीयमाणत्वात् तस्य च सर्वदा सत्त्वान्नित्यत्वम्, यथा समुद्रे जलप्रक्षेपे कृते तस्य पुनरादाने च कृते तदेवं शुक्लं जलमिति निश्चयो नास्ति नामरूपाभ्यामन्यस्य भेदकस्याभावात्, तदन्यमित्यपि निश्चयो नास्तीति तस्य प्रवाहरूपेण नित्यत्वमित्यर्थः । दर्शनादिति । वेदे तथेति पदं पूरयित्वा वेदे तथादर्शनात् स्मृतेश्चेति हेतुद्व-

---

१ सप्तम्यर्थे वतिः । तथाच नित्यप्रलयविचारे शरीरादेः प्रतिक्षणमन्यान्यत्वेऽपि प्रवाहैक्येनैवैकस्मिन् शक्यतामभिमन्यत इति तत्तत्प्रवाह एव पदानां शक्तिः । स चानादिसृष्टिवादिनो "धाता यथापूर्वमकल्पयत्" इति श्रुतेर्मीमांसकस्य मतेऽप्यविच्छिन्नत्वात्, प्रस्थानरत्नाकरे च प्रवाहे शक्त्युपपादनात् विशिष्टपक्षव्यावर्तकः । सुबोधिनी तु परमतभाषा.न विशिष्टशक्तिस्वीकारपरेत्याशयः । पन्नावलम्बने तु धर्मेषु शक्तिपक्षः, स च भाष्ये नास्तीति पन्नावलम्बनमतं न भाष्यमतमिति ध्येयम् । मतद्वयस्य भाष्ये दर्शनाच्छक्तिविषयेऽपि मतद्वयम् । भाष्ययोर्दर्शनाच्च यथा भावार्थपादभाष्ये ईश्वरः प्रवर्तयतीति मतं, दृष्टविरोधीति भाष्ये तु "एष उ एव साधुकर्मकारयति यमेभ्यो लोकेभ्य उन्निनीषती"ति श्रुतेः, "प्रवर्तकत्वं कृष्णस्य" इति च वाक्यात् कृष्णः प्रवर्तकः । त्रेधा हि पुरुषः प्रवर्तते । पुरुषश्च त्रेधा भवति, काममयो, वैदिको, दुःखासहिष्णुश्चेति । तत्र स्वर्गकामपदादाद्यः, विधेर्द्वितीयः, अर्थवादेस्तृतीयः प्रवर्ततेऽतो वैदिककाममययोः पन्नावलम्बनोक्तपक्षः, दुःखासहिष्णोर्भाष्यपक्ष इति विवेकः । अतो यथा "अव्यतिरेकश्चार्थेऽनुपलब्धे" इत्यत्र व्यवहारातिरेकेण प्रवाहनित्यतया धर्मे शब्दसम्बन्धतद्ग्रहौ, तथा वस्त्वन्तरेऽपीति नानित्यसंयोगः । तथा चायमर्थः—औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धस्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत्प्रमाणं बादरायणस्यानपेक्षत्वात्" इति पूर्वमीमांसासूत्रम् । अर्थस्तु, औत्पत्तिकः शब्दस्योत्पत्तिमारभ्यार्थेन सम्बद्धः श्रीविठ्ठलनाथानामुक्तिः "न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते" अनुभवस्तु तथैव; घट इत्युक्ते घटरूपोऽर्थोऽपि मनसा प्रतीयेत, न तु द्रव्यरूपोऽर्थः । तदाहुस्तस्येत्यादिः । तस्य शब्दे अर्थवैशिष्ट्यस्य ज्ञानमुपदेशः उपदेशद्वारा भाक्तप्रयोगस्तु तस्य ज्ञानं उपदेशत्वगुणयोगात् उप समीपे दिश्यते आदिश्यते कथ्यते इति विग्रहात् । अतीन्द्रियपदार्थवाचकः कथं भूतभाविपदार्थवाचकशब्दैरर्थसम्बन्धो भवितुमर्हतीति अर्थाभावादित्यत आहुः अव्यतिरेक इत्यादि । अनुपलब्धे भूते भाविनि चार्थे अव्यतिरेकः शब्दाव्यतिरेकः शब्दमिश्रीभाव एव शब्देषु चार्थाव्यतिरेकः, तत्, तम बादरायणस्य तत्सम्बन्धि तदुक्तमिति यावत् । सूत्रं प्रमाणम् । किं तत्सूत्रम्? "शब्द इति चेन्नातःप्रभवात्प्रत्यक्षानुमानाभ्याम्" इति । कुतस्तदुक्तं प्रमाणम्? अनपेक्षत्वात् । ज्ञानावतारत्वेन तदुक्ते विचिकित्सानुदयात् । अतः शब्द एव मुख्यं प्रमाणम् । ज्ञानात्मकत्वाच्च शब्दस्य प्रमाण्यमक्षुण्णमिति सूत्रार्थः । अत्रानुपलब्धे भाविनि भूते चार्थेऽव्यतिरेकः शब्दमिश्रीभाव एवेति व्यवहारो वर्तमानस्य समीपवर्तिनः अव्यवहारो भूतभाविवस्तुना तन्मिश्रीभावेनेति व्यवहाराव्यवहाराव्यतिरेकेणेत्यस्यार्थः । सूर्येत्याद्युक्तश्रुतिस्मृतिभ्यः प्रवाहः आवृत्तिस्तस्य नित्यतया धर्मे भावार्थपादोक्ते द्रव्यदेवतासम्बन्धरूपयागेऽतीन्द्रिये भाविनि भूतेऽपि यागादिशब्दसम्बन्धः प्रतिपाद्यप्रतिपादकभावरूपः "शक्तिग्रहं व्याकरणे"ति नैयायिककारिकया सम्बन्धग्रहः, तदेतदुक्तं धर्मे शब्दसम्बन्धतद्ग्रहाविति । लोके तु तद्विषयककायिकव्यापारे भूते भाविनि चापि यागादिशब्दसम्बन्धं तद्ग्रहं चाहुः, तत्र, त्रिक्षणावस्थायिव्यापारप्रवाहेऽपि तौ । येऽदृष्टं क्षणिकत्वं वा कल्पयन्ति न ते यागपदार्थं विदुरिति भावार्थपादभाष्यात्, न तत्र ताविति ज्ञेयम् । वस्त्वन्तरप्रपञ्चेऽनुकारित्वे वाच्यत्वे च श्रौतप्रपञ्चपदसम्बन्धतद्ग्रहौ । ननु वेदेषु माभूदनित्यसम्बन्धो लौकिके तु स्यादिति चेन्न, भाष्य एव वस्तुतस्त्वित्यादिना दत्तोत्तरत्वात् । अतः शब्दत्वावच्छेदेन नित्यत्वमिति भावः । ननु वेदोऽनित्यपदार्थान् वदतु, स्वयं तु नित्य इति कल्पने को दोष इति चेन्न, वेदस्य स्वायोग्यपदार्थसम्बन्धे अन्यतुल्यत्वादिहानौ स्वरूपनाशप्रसङ्गात् ।

दृश्यते हि तथा । वेदपितृमातृस्त्रीभर्तृशरीरगङ्गादिषु, तदेवेदमिति व्यवहारस्य सिद्धत्वात् । "सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् । दिवं च पृथिवीं चान्तरिक्षमथो सुवः" ( तै. आ. १०।१।२ ) इति । स्मृतेश्च, "सर्ववेदमयेनेदमात्मनात्मात्मयोनिना । प्रजाः सृज यथापूर्वं याश्च मय्यनुशेरते" । (भा. ३।९।४३) इत्यादिस्मृतेः । सर्वस्मृतेश्च "ऋषीणां पूर्वचरितस्मरणं स्मृतिरुच्यते ।" इति ।
अतोऽर्थबलविचारेऽपि पदार्थानां नित्यत्वान्न वेदस्यानित्यसम्बन्धः ॥१।३।३०॥

अर्थबलविचार एवैकदेशेन पूर्वपक्षमाह—

( मधुविद्यावतारः )

**मध्वादिष्वसम्भवादनधिकारं जैमिनिः ॥ १।३।३१ ॥**

ननु मध्वादिविद्यासु देवानामनधिकारात्सर्वत्रैवानधिकारः । तथाहि, "असौ

---

यम् । दर्शनादितिपदं व्याकुर्वन्ति—**दृश्यते** इति । वेदे इति । क्वचित्पुस्तके वेदे इति पदं नास्ति । तदपि समीचीनमेव । क्वचित्पुस्तके वेदे इति पदं तत्समञ्जसम् । वेदे इत्यारभ्य गङ्गादिष्वित्यन्तमेकं पदं द्वन्द्वश्च । तथा च नित्यप्रलयाङ्गीकर्तृमते वर्णानामनित्यत्वेऽपि शरीरस्य प्रतिदिनं भिन्नत्वेऽपि गङ्गाप्रवाहस्य तथात्वेऽपि स एव वेदः पित्रादीनां तदेव शरीरं सैवेयं गङ्गेति व्यवहारात् तत्तत्पदानां प्रवाहे शक्तिः । तथाच प्रवाहस्य विच्छिन्नत्वान्नित्यत्वमिति मीमांसकानां सिद्धान्त इति भावः । वेदोऽप्यविच्छिन्नत्वमेव वदतीत्याहुः—**सूर्येति** । सर्वस्मृतेरिति हेत्वन्तरकथनस्वारस्यमाहुः—**ऋषीणामिति** । इदं च स्मृतिलक्षणम् । तथाच लक्षणेन प्रवाहाविच्छेदो बोधितः ॥

**मध्वादिष्वसम्भवादनधिकारं जैमिनिः** । सूत्रमवतारयन्ति—**एकदेशेन** । उपासनाविशेषेण । **नन्वित्यादिपूर्वपक्षः** इत्येवं प्राप्त इत्यन्तम् । अनधिकारमेवाहुः—**तथाहीति** । इदं विषयवाक्यं छान्दोग्ये तृतीयप्रपाठकारम्भे ॥ **अथ विषयवाक्यम्**—

ॐ असौ वा आदित्यो देवमधु तस्य द्यौरेव तिरश्चीनवꣳशोन्तरिक्षमपूपो मरीचयः पुत्राः ॥ १ ॥ तस्य ये प्राञ्चो रश्मयस्ता एवास्य प्राच्यो मधुनाड्य ऋच एव ऋग्वेद एव मधुकृत पुष्पं ता अमृता आपस्ता वा एता ऋचः ॥ २ ॥ एतमृग्वेदमभ्यतपꣳस्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यꣳ रसोऽजायत ॥ ३ ॥ तद्व्यक्षरत्तदादित्यमभितोऽश्रयत्तद्वा एतद्यदेतदादित्यस्य रोहितꣳरूपम् ॥ ४ ॥ इति प्रथमः खण्डः ॥ १ ॥

अथ येऽस्य दक्षिणा रश्मयस्ता एवास्य दक्षिणा मधुनाड्यो यजूꣳष्येव मधुकृतो यजुर्वेद एव पुष्पं ता अमृता आपः ॥ १ ॥ तानि वा एतानि यजूꣳष्येतं यजुर्वेदमभ्यतपꣳस्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यꣳरसोऽजायत ॥ २ ॥ तद्व्यक्षरत्तदादित्यमभितोऽश्रयत्तद्वा एतद्यदेतदादित्यस्य शुक्लꣳ रूपम् ॥ ३ ॥ इति द्वितीयः खण्डः ॥ २ ॥

अथ येऽस्य प्रत्यञ्चो रश्मयस्ता एवास्य प्रतीच्यो मधुनाड्यः सामान्येव मधुकृतः सामवेद एव पुष्पं ता अमृता आपः ॥ १ ॥ तानि वा एतानि सामान्येतꣳ सामवेदमभ्यतपꣳस्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यꣳरसोऽजायत ॥ २ ॥ तद्व्यक्षरत्तदादित्यमभितोऽश्रयत्तद्वा एतद्यदेतदादित्यस्य परं कृष्णꣳरूपम् ॥ ३ ॥ इति तृतीयः खण्डः ॥ ४ ॥

अथ येऽस्योदञ्चो रश्मयस्ता एवास्योदीच्यो मधुनाड्योऽथर्वाङ्गिरस एव मधुकृत इतिहासपुराणं

पुष्पं ता अमृता आपः ॥ १ ॥ ते वा एतेऽथर्वाङ्गिरस एतदितिहासपुराणमभ्यतपꣳस्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यꣳरसोऽजायत ॥ २ ॥ तद्व्यक्षरत्तदादित्यमभितोऽश्रयत्तद्वा एतद्यदेतदादित्यस्य परं कृष्णꣳरूपम् ॥ ३ ॥ इति चतुर्थः खण्डः ॥ ४ ॥

अथ येऽस्योर्ध्वा रश्मयस्ता एवास्योर्ध्वा मधुनाड्यो गुह्या एवादेशा मधुकृतो ब्रह्मैव पुष्पं ता अमृता आपः ॥ १ ॥ ते वा एते गुह्या आदेशा एतद्ब्रह्माभ्यतपꣳस्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यꣳ रसोऽजायत ॥ २ ॥ तद्व्यक्षरत्तदादित्यमभितोऽश्रयत्तद्वा एतद्यदेतदादित्यस्य मध्ये क्षोभत इव ॥ ३ ॥ ते वा एते रसानाꣳ रसा वेदा हि रसास्तेषामेते रसास्तानि वा एतान्यमृतानाममृतानि वेदा ह्यमृतास्तेषामेतान्यमृतानि ॥ ४ ॥ इति पञ्चमः खण्डः ॥ ५ ॥

तद्यत्प्रथममृतं तद्वसव उपजीवन्त्यग्निना मुखेन न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति ॥ १ ॥ त एतदेव रूपमभिसंविशन्त्येतस्माद्रूपादुद्यन्ति ॥ २ ॥ स य एतदेवममृतं वेद वसूनामेवैको भूत्वाऽग्निनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स य एतदेव रूपमभिसंविशत्येतस्माद्रूपादुदेति ॥ ३ ॥ स यावदादित्यः पुरस्तादुदेता पश्चादस्तमेता वसूनामेव तावदाधिपत्यꣳ स्वाराज्यं पर्येता ॥ ४ ॥ इति षष्ठः खण्डः ॥ ६ ॥

अथ यद्द्वितीयममृतं तद्रुद्रा उपजीवन्तीन्द्रेण मुखेन न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति ॥ १ ॥ त एतदेव रूपमभिसंविशन्त्येतस्माद्रूपादुद्यन्ति ॥ २ ॥ स य एतदेवममृतं वेद रुद्राणामेवैको भूत्वेन्द्रेणैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स एतदेव रूपमभिसंविशत्येतस्माद्रूपादुदेति ॥ ३ ॥ स यावदादित्यः पुरस्तादुदेता पश्चादस्तमेता द्विस्तावद्दक्षिणत उदेतोत्तरतोऽस्तमेता रुद्राणामेतावदाधिपत्यꣳ स्वाराज्यं पर्येता ॥ ४ ॥ इति सप्तमः खण्डः ॥ ७ ॥

अथ यत्तृतीयममृतं तदादित्या उपजीवन्ति वरुणेन मुखेन न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति ॥ १ ॥ त एतदेव रूपमभिसंविशन्त्येतस्माद्रूपादुद्यन्ति ॥ २ ॥ स य एतदेवममृतं वेदादित्यानामेवैको भूत्वा वरुणेनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स एतदेव रूपमभिसंविशत्येतस्माद्रूपादुदेति ॥ ३ ॥ स यावदादित्यो दक्षिणत उदेतोत्तरतोऽस्तमेता द्विस्तावत्पश्चादुदेता पुरस्तादस्तमेताऽऽदित्यानामेव तावदाधिपत्यꣳस्वाराज्यं पर्येता ॥ ४ ॥ इत्यष्टमः खण्डः ॥ ८ ॥

अथ यच्चतुर्थममृतं तन्मरुत उपजीवन्ति सोमेन मुखेन न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति ॥ १ ॥ त एतदेव रूपमभिसंविशन्त्येतस्माद्रूपादुद्यन्ति ॥ २ ॥ स य एतदेवममृतं वेद मरुतामेवैको भूत्वा सोमेनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स एतदेव रूपमभिसंविशत्येतस्माद्रूपादुदेति ॥ ३ ॥ स यावदादित्यः पश्चादुदेता पुरस्तादस्तमेता द्विस्तावदुत्तरत उदेता दक्षिणतोऽस्तमेता मरुतामेव तावदाधिपत्यꣳ स्वाराज्यं पर्येता ॥ ४ ॥ इति नवमः खण्डः ॥ ९ ॥

अथ यत्पञ्चमममृतं तत्साध्या उपजीवन्ति ब्रह्मणा मुखेन न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति ॥ १ ॥ त एतदेव रूपमभिसंविशन्त्येतस्माद्रूपादुद्यन्ति ॥ २ ॥ स य एतदेवममृतं वेद साध्यानामेवैको भूत्वा ब्रह्मणैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यन्ति स एतदेव रूपमभिसंविशत्येतस्माद्रूपादुदेति ॥ ३ ॥ स यावदादित्य उत्तरत उदेता दक्षिणतोऽस्तमेता द्विस्तावदूर्ध्वमुदेतार्वागस्तमेता साध्यानामेव तावदाधिपत्यꣳस्वाराज्यं पर्येता ॥ ४ ॥ इति दशमः खण्डः ॥ १० ॥

वा आदित्यो देवमधु तस्य द्यौरेव" (छां. ३।१।१) इत्यादिना सूर्यस्य देवमधुत्वं प्रतिपादितम्, रश्मीनां वेदत्वं च। तत्र वसुरुद्रादित्यमरुत्साध्याः पञ्च देवगणाः स्वमुख्येन मुखेनामृतं दृष्ट्वैव तृप्यन्ति। पञ्चविधा एव च देवाः। स्वतः सिद्धं च तेषां तन्मधु। अनुपासकत्वान्न देवान्तरकल्पना। कृतार्थत्वाच्च। ब्रह्मणोऽपि देवत्वम्। आदिशब्देन सर्वा एव देवोपासनविद्या गृहीताः। अतस्तेषामुपास्यत्वात्कृतार्थत्वाच्च नाधिकारः। न हि प्रयोजनव्यतिरेकेण कस्यचित्प्रवृत्तिः सम्भवति। मोक्षस्याप्यधिकारनिवृत्तावुत्तरमार्गवर्तित्वात्स्वत एव सिद्धिः। "यावदधिकारम्" (ब्र. सू. ३।३।३२) इति न्यायात्। "वसूनयाजयदि"त्यत्रापि भाविन्येव सञ्ज्ञा। तस्मान्मनुष्याधिकारकमेव ज्ञानं कर्म चेति न देवानामधिकार इति जैमिनिराचार्यो मन्यते। मनुष्याणामेव ज्ञानकर्मणोस्तरतमभाववतां तत्तद्रूपभोगानन्तरं मोक्षप्राप्तेरिति॥ १।३।३१॥

---

अथ तत उर्ध्व उदेत्य नैवोदेता नास्तमेतैकल एव मध्ये स्थाता तदेष श्लोकः॥ १॥ न वै तत्र न निम्लोच नोदियाय कदाचन॥ देवास्तेनाहꣳ सत्येन मा विराधिषि ब्रह्मणेति॥ २॥ न ह वा अस्मा उदेति न निम्लोचति सकृद्दिवा हैवास्मै भवति य एतामेवं ब्रह्मोपनिषदं वेद॥ ३॥ तद्धैतद्ब्रह्मा प्रजापतय उवाच प्रजापतिर्मनवे मनुः प्रजाभ्यस्तद्धैतदुद्दालकायारुणये ज्येष्ठाय पुत्राय पिता ब्रह्म प्रोवाच॥ ४॥ इदं वाव तज्ज्येष्ठाय पुत्राय पिता ब्रह्म प्रब्रूयात्प्रणाय्याय वान्तेवासिने॥ ५॥ नान्यस्मै कस्मैचन यद्यप्यस्मा इमामद्भिः परिगृहीतां धनस्य पूर्णां दद्यादेतदेव ततो भूय इत्येतदेव ततो भूय इति॥ ६॥ इत्येकादशः खण्डः॥ ११॥

अथ भाष्यम्—स्वमुख्येन मुखेनेति। अग्नीन्द्रवरुणसोमब्रह्मरूपाः ये स्वगणमुख्यास्तद्रूपेण मुखेनेत्यर्थः। पञ्चविधा इति। वस्वादयः पञ्च एवेत्यर्थः। न देवान्तरकल्पनेति। तथाच मधुविद्याविषयः आदित्यः, आदित्य एवोपासको वक्तव्यः, एकस्यैवोपास्योपासकाभावादेवान्तरकल्पना नास्तीति भावः। कृतार्थः उपासनां न करोतीत्याहुः—कृतार्थत्वादिति। ननु ब्रह्मविद्याधिकारप्रस्तावे मास्तु मधुविद्याधिकारः, तावता क्षतिर्नास्तीत्यत आहुः—ब्रह्मणोऽपीति। गृहीता इति। मध्वादीत्यादिपदेन विषयवाक्योक्ताः अग्निः पादो वायुः पाद इत्याद्याः, वायुर्वाव सम्वर्ग इत्याद्याः, आदित्यो ब्रह्मेत्यादेश इत्याद्याः गृहीता इत्यर्थः। अनधिकारमेव प्रकटयन्ति—अत इति। ननु मोक्षस्तु ब्रह्मविद्यामन्तरेण न सम्भवतीत्यत आहुः—मोक्षस्यापीति। अधिकारनिवृत्ताविति। वसुरुद्रादीनामधिकारस्य सावधित्वात्तन्निवृत्त्यनन्तरमित्यर्थः। उत्तरेति। देवयानः पन्था इति गार्हपत्य ऋक् पृथिवीत्यादि तैत्तरीयोपनिषदि अन्तिमप्रपाठकान्तेति श्रुत्युक्तोत्तरमार्गवर्तित्वादित्यर्थः। स्वत एवेति। देवयानत्वेन स्वत एवेत्यर्थः। अत्रार्थे न्यायं प्रमाणमाहुः—यावदिति। भाविनीति। अग्निष्टोमयागे कृते यजमानस्य वसुत्वं स्वर्गे जायते इति भाविनीं सञ्ज्ञामादाय "अग्निष्टोमेन वसूनयाजयदि"ति श्रुतिः प्रवर्तते इत्यर्थः। तरतमभाववतामिति। शताश्वमेधे कृते इन्द्रत्वं तदल्पे च देवत्वमिति तरतम भाव इत्यर्थः॥

( ज्योतिषि भावादपि देवानामनधिकारः )

ज्योतिषि भावाच्च ॥ १।३।३२ ॥

किञ्च, तेषां सर्वेषामनधिकारः प्रत्यक्षत एव दृश्यते। सर्वे हि नक्षत्रादिरूपेण महाभोगवन्तो जगदवभासकत्वेन ज्योतिश्चक्रे दृश्यन्ते। "अग्निः पुच्छस्य प्रथमं काण्डम्" (तै. आ. २।१९) इत्यादिश्रुतेश्च। न हि तादृशां प्राप्तैश्वर्यवतां सर्वोपास्यानां मोक्षदातॄणां ज्ञानकर्मणोः कश्चनोपयोगोऽस्ति ॥ १।३।३२ ॥

तस्मादनधिकार एव देवानामित्येवं प्राप्ते उच्यते—

( बादरायणोऽधिकारमाहेति )

भावं तु बादरायणोऽस्ति हि ॥ १।३।३३ ॥

तु शब्दः पक्षं व्यावर्तयति। भावं देवानामधिकारस्य सद्भावम्। बादरायण आचार्यः। गौणसिद्धान्ताभावाय स्वनामग्रहणम्। किमार्षेण ज्ञानेन? तथा सति तुल्यत्वमत आह—अस्ति हि। अस्ति वेदे, "प्रजापतिरकामयत प्रजायेये"ति। स एतदग्निहोत्रं मिथुनमपश्यत्। "तदुदिते सूर्येऽजुहोत्" (तै. ब्रा. २।१।२) इति। "देवा वै सत्रमासत" (तै. सं. २।३।३।) इत्यादिभिः कर्माधिकारो निश्चितः। "तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्" (बृ. १।४।१०) इत्यादि। तथेन्द्रप्रजापतिसम्वादे "ब्रह्मा देवानाम्"। (तै. सं. ३।४।११) इति च। एवमेवम्विधैर्वाक्यैर्देवानामप्यधिकारोऽस्ति। यत्र च पुनर्देवानां फलभोग एव प्रतीयते, न करणं, तत्रापि तेषामधिकारोऽङ्गीकर्तव्यः। हि युक्तोऽयमर्थः। एते हि वसव आधिदैविकभगवदवयवभूताः। अनशनात्। अन्यथा वसुत्वादिविरोधः। "यद्वसूनां प्रातः सवनम्" (तै. ब्रा. १।५।११) इत्यादिवत्। न हि जीवविशेषा दृष्ट्वा तृप्यन्ति। तस्मादिदं ब्रह्मप्रकरणमेव। योऽपि क्वचिद्देवोपासकवत्प्रतीयते स भगवदंश एवाधिदैविकः।

---

ज्योतिषि भावाच्च। ज्योतिषि। शिशुमारचक्रे। महाभोगवन्तः। स्वर्गभोगवन्तः। प्रत्यक्षप्रमाणमुक्त्वा श्रुतिप्रमाणमाहुः—अग्नीति। तैत्तरीये आरण्यके।

भावं तु बादरायणोऽस्ति हि। अस्ति हीत्यस्यावतरणमाहुः—किमार्षेणेति। तुल्यत्वम्। जैमिनितुल्यत्वम्। प्रजापतिरिति। इदं च तैत्तरीयब्राह्मणे द्वितीयाष्टके। "यो ब्रह्माणं विदधाति पूर्वमि"-तिश्रुत्या प्रजापतेर्भाविसञ्ज्ञाव्यवच्छेदः सर्वकल्पादौ तस्य सत्वादिति। कर्माधिकारसम्पादिकां श्रुतिमुक्त्वा ज्ञानाधिकारे तामाहुः—तद्यो यो देवानामिति। ननु देवानां कर्मजन्यफलभोक्तृत्वमेव श्रुतौ क्वचित्प्रतीयते तत्राहुः—यत्र चेति। सूत्रस्थहिपदस्यार्थमाहुः—हीति। ननु कथं युक्तत्वं वस्वादीनामनुपासकत्वरूपबाधकस्य पूर्वमुक्तत्वादत आहुः—एते हीति। वसुरुद्रादित्यादयः। अत्र हेतुमाहुः—अनशनादिति। दर्शनेन तृप्तिर्न तु भक्षणादिनेति भावः। अन्यथा। अतिरिक्तवस्वाद्यनङ्गीकारे। विरोधः। पूर्वपक्षोक्तन्यायेन वसूनयाजयदित्यत्रैव वसुत्वमेव न स्यादित्यर्थः। यद्वसूनामिति। अधिकारिणो वस्वादयः यजमानाय वासवादिसामगानेन प्रातःसवनं प्रयच्छन्ति। तथात्राप्यमृतदानमेव वदेत् न तु वस्वादिभावः, उपासकस्य वस्वादिभावप्राप्ता अवयवरूपा अतिरिक्ता अङ्गीकार्याः। अन्यदपि साधकमाहुः—नहीति। दृष्ट्वैव तृप्यतीत्याधिदैविकानामेव। योपीति। देवोपासकवदिति पाठः

न वा पूर्वकल्पेन निर्णयः । तथा सति तेषामभावादनुपास्यत्वम् । अनित्यता च वेदस्य स्यात् । तस्माद् देवानामप्यधिकार इति शब्दबलविचार एव युक्त इति सिद्धम् ॥ १।३।३३ ॥ ८ ॥

---

मन्मते । कुत्रचिद्देवोपासनवदिति पाठः । देवोपासने उपास्य वदिति पाठः प्रतिभाति सप्तम्यर्थे वा वतिरिति प्रकाशे गोस्वामिचरणैरुक्तम् । नन्वत्र पूर्वपक्षरीत्या कल्पभेदः कुतो न स्वीक्रियते इत्यत आहुः । न वेति । नन्वेतेषामेवोपास्यत्वमस्त्वित्यत आहुः—अनित्यतेति । अष्टमाधिकरणम् ॥

---

१ अत्रेत्थं व्याख्यानान्तराणि—

(१) तत्र शाङ्कराः—पूर्वं मनुष्याधिकारं शास्त्रमित्युक्ते तर्ह्यमनुष्याणां देवादीनामधिकारो न स्यादित्याक्षिप्य समाधीयत इत्याक्षेपसङ्गत्या प्रसङ्गसङ्गत्या वा इदमाह—अत्र पूर्वपक्षे मन्त्राद्यप्रामाण्यादुपगमनादिवाक्यानामपि स्वार्थे तदयोगात्तत्त्वमस्यादेरपि नैक्यनिष्ठतेति फलम्, सिद्धान्ते तत्सर्वसम्भवादैक्यनिष्ठतेति फलम् । बृहदारण्यके श्रूयते—"तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्" इत्यादि । तत्र किं देवानां ब्रह्मविद्यायामधिकारोऽस्ति न वेति सन्देहे, नास्तीति पूर्वः पक्षः । सिद्धान्तस्तु, तदुपर्यपि तेषां मनुष्याणामुपरिष्टाद् ये देवादयः, तेषामपि ब्रह्मविद्यायामधिकारोऽस्तीति बादरायण आचार्यो मन्यतेस्म । कस्मात्, सम्भवात्, अर्थित्वसामर्थ्याद्यधिकारकारणस्य सम्भवादित्यर्थः । ननु यदीन्द्रादीनां विग्रहवत्त्वेन विद्याधिकारः, तर्हि कर्मणि विरोध इत्याशङ्क्याह—इन्द्रादीनामृत्विगादिवदेकस्य शरीरस्य अनेकत्र कर्मणि युगपत्सन्निधानासम्भवात्कर्मविरोधः प्रसज्येतेति चेत्, न । कस्मात्, अनेकप्रतिपत्तेर्दर्शनात्, एकस्येन्द्रस्य अनेकेषां शरीराणां युगपत्प्राप्तेः । "स एकधा भवति त्रिधा भवति" इत्यादिश्रुतौ दर्शनात् । यद्वा, अनेकत्र कर्मणि एकस्य प्रतिपत्तिः अङ्गभावः तस्य लोके दर्शनात् । यथा बहुभिर्नमस्कुर्वाणैर्युगपदेको ब्राह्मणो नमस्क्रियमाणो दृश्यते तद्वदित्यर्थः ॥ ननु मास्तु कर्मणि विरोधः, शब्दे स्यादित्याशङ्क्याह—शब्दे वेदवाक्ये अनित्यविग्रहवद्देवादेर्नित्यवेदार्थत्वाङ्गीकारे शब्दस्य अर्थेन सह नित्यसम्बन्धाभावेन नित्यानित्यसंयोगविरोध इति चेत्, न, अतः प्रभवात् । अत एव हि वैदिकाच्छब्दात् देवादिजगत्प्रभवात् उत्पत्तेः । कथं तत्प्रभवत्वं देवादेः? प्रत्यक्षानुमानाभ्यां श्रुतिस्मृतिभ्याम्, "एत इति वै प्रजापतिर्देवानसृजत" इत्यादिका श्रुतिः, "वेदशब्देभ्य एवादौ" इत्यादिका स्मृतिः । ताभ्यां नित्यशब्दप्रभवत्वं देवादेरवगम्यते । एवं च देवादिव्यक्त्युत्पत्तावपि तन्निष्ठनित्याकृतेर्वेदार्थत्वात्तत्सम्बन्धो नित्य इत्यविरुद्धम् ॥ नन्वेवमपि "अतःप्रभवात्" इति देवादेर्वेदप्रभवत्वोक्त्या तदुत्पादकवेदस्यापि प्रभवप्रसङ्गादनित्यत्वमाशङ्क्याह—अत एव नियताकृतेर्देवादेर्जगतो वेदशब्दप्रभवत्वादेव वेदस्य नित्यत्वं प्रत्येतव्यम् । कर्त्रस्मरणात्सिद्धमेव वेदनित्यत्वमनेन दृढीकृतमिति बोध्यम् ॥ ननु महाप्रलये आकृतेरप्यनित्यत्वाच्छब्दार्थसम्बन्धस्यानित्यत्वाच्छब्दार्थसम्बन्धस्यानित्यत्वविरोधस्तदवस्थ एवेत्याशङ्क्याह—सुषुप्तिप्रबोधयोरिव सृष्टिप्रलययोरावृत्तावपि प्रलये प्रपञ्चस्य संस्कारात्मना अविद्यायां विद्यमानत्वेन पूर्वकल्पप्रपञ्चसमाननामरूपत्वात् उत्तरकल्पप्रपञ्चस्य आकृतेर्नित्यतया न शब्दार्थसम्बन्धस्यानित्यत्वविरोधः । कथं समाननामरूपत्वम्? दर्शनात् स्मृतेश्च । "धाता यथा पूर्वमकल्पयत्" इति श्रुतौ दर्शनात्; "यथर्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये । दृश्यन्ते तानि तान्येव तथा भावा युगादिषु" इत्यादिस्मृतेश्च । इत्थमभिहितं देवानामधिकारमाक्षिपति । ब्रह्मविद्यायां देवादीनामनधिकारं जैमिनिराचार्यो मन्यते । कस्मात्, मध्वादिष्वसम्भवात् ।

"असौ वा आदित्यो देवमधु" "आदित्यो ब्रह्मेत्यादेशः" इत्यादिषु मधुब्रह्माख्यासेनादित्यदेवतोपासनेषु मनुष्याधिकारकेषु तेषामेवादित्यादीनामधिकारासम्भवात् । न ह्येकस्योपास्योपासकभावः सम्भवति, तस्य भेदनिष्ठत्वात् । तथा चायं प्रयोगः—ब्रह्मविद्या न देवादीनधिकरोति, विद्यात्वान्मधुविद्यावदिति ॥ ननु क्वचिदनधिकाराच्च सर्वत्रानधिकारोऽस्ति, ब्राह्मणस्य राजसूयानधिकारेऽपि बृहस्पतिसवेऽधिकारादित्याशङ्क्याह—लौकिकयोरादित्यशब्दप्रत्यययोर्ज्योतिर्मण्डले भावात्, तेषामसंदादिवदिष्टानिष्टप्राप्तिपरिहाररूपचेष्टाया अदर्शनेनाचेतनत्वावधारणात्, तदतिरिक्तस्याचेतनस्य विग्रहादिमतः प्रत्यक्षाद्यगोचरत्वात्, तद्विग्रहादिप्रतिपादकानां मन्त्राणामन्यपरत्वेन स्वार्थे प्रामाण्याभावाच्च देवानां विद्याधिकार इति सूत्रद्वयस्य तात्पर्यार्थः ॥ इत्थं पूर्वपक्षे, सिद्धान्तयति । तुशब्दो जैमिनिमतनिरासार्थः । बादरायणस्त्वाचार्यो देवादीनां विग्रहवत्त्वेन ब्रह्मविद्यायामधिकारभावं मन्यते । कस्मात्, अस्ति ह्यर्थित्वाद्यधिकारकारणम् । न हि क्वचिदधिकारो नेति सर्वत्र वक्तुं पार्यते, निर्गुणविद्यायां सम्भवाद्बृहस्पतिसवे ब्राह्मणस्येव । न च विग्रहवत्त्वं नेति वाच्यम् । तदप्यस्ति हि, तत्प्रतिपादकमन्त्राणां मानान्तरविरोधसम्वादाभावेन प्रमाणत्वादिति दिक् ॥

(२) रामानुजीये—परस्य ब्रह्मणोऽङ्गुष्ठप्रमितत्वोपपत्तये मनुष्याधिकारं ब्रह्मोपासनशास्त्रमित्युक्तम् । तत्प्रसङ्गेनेदानीं ब्रह्मविद्यायां देवादीनामप्यधिकारोऽस्ति नास्तीति विचार्यते । किं तावद्युक्तम् ? नास्ति देवादीनामधिकार इति ? कुतः ? सामर्थ्याभावात् । न ह्यशरीराणां देवादीनां विवेकविमोकादिसाधनसप्तकानुगृहीतब्रह्मोपासनोपसंहारसामर्थ्यमस्ति । न च देवादीनां सशरीरत्वे प्रमाणमुपलभामहे । यद्यपि परनिष्पन्नेऽपि वस्तुनि व्युत्पत्तिसम्भावनया वेदान्तवाक्यानि परे ब्रह्मणि प्रमाणभावमनुभवन्ति तथापि देवादीनां विग्रहवत्त्वप्रतिपादनपरं न किञ्चिदपि वाक्यमुपलभ्यते । मन्त्रार्थवादास्तु कर्मविधिशेषतयाऽन्यपरत्वाच्च देवादिविग्रहसाधनेन प्रभवन्ति । कर्मविधयश्च स्वापेक्षितोद्देश्यकारकत्वातिरेकि देवतागतं किमपि न साधयन्ति । अत एव तासामर्थित्वमपि न सम्भवति । अतः, सामर्थ्यार्थित्वयोरभावाद्देवादीनामनधिकार इत्येवं प्राप्ते प्रचक्ष्महे । तदुपर्यपि बादरायणः सम्भवात् । तदुपर्यपि तद्ब्रह्मोपासनमुपरि देवादिष्वपि सम्भवतीति भगवान्बादरायणो मन्यते । तेषामर्थित्वसामर्थ्ययोः सम्भवात् । अर्थित्वं तावदाध्यात्मिकादिदुर्विषहदुःखाभितापात्परस्मिन्ब्रह्मणि च निरस्तनिखिलदोषगन्धेऽनवधिकातिशयासङ्ख्येयकल्याणगुणगणे निरतिशयभोग्यत्वादिज्ञानाच्च सम्भवति । सामर्थ्यमपि पटुतरदेहेन्द्रियादिमत्तया सम्भवति । देहेन्द्रियादिमत्त्वं च ब्रह्मादीनां सकलोपनिषत्सु सृष्टिप्रकरणेषूपासनप्रकरणेषु च श्रूयते । तथा हि । "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" । "तदैक्षत बहु स्यां प्रजायेयेति" । "तत्तेजोऽसृजत" इत्यारभ्य सर्वमचेतनं तेजोप्रभृत्यवस्थाविशेषयद्व्याकृत्य "अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति" सङ्कल्प्य ब्रह्मादिस्थावरान्तं चतुर्विधं भूतजातं तत्तत्कर्मोचितशरीरं तदुचितनामभाक्चाकरोदित्युक्तम् । एवं सर्वत्र सृष्टिवाक्येषु देवतिर्यङ्मनुष्यस्थावरात्मना चतुर्विधा सृष्टिराम्नायते । देवादिभेदश्च तत्तत्कर्मानुगुणब्रह्मलोकप्रभृतिचतुर्दशलोकस्थफलभोगयोग्यदेहेन्द्रियादिभोगायत्तः । आत्मनां स्वतो देवादित्वाभावात् । तथा "तद्धोभये देवासुरा अनुबुबुधिरे । ते होचुः ।"…"इन्द्रो हवै देवानामभिप्रवव्राज विरोचनोऽसुराणाम् । तौ हासंविदानावेव समित्पाणी प्रजापतिसकाशमाजग्मतुः । तौ ह द्वात्रिंशद्वर्षाणि ब्रह्मचर्यमूषतुः । तौ ह प्रजापतिरुवाचेत्यादिना विस्पष्टमेव शरीरेन्द्रियवत्त्वं देवादीनां प्रतीयते । कर्मविधिशेषभूतमन्त्रार्थवादेष्वपि "वज्रहस्तः पुरन्दरः ।" "तेनेन्द्रो वज्रमुदयच्छदि"त्यादिभिः प्रतीयमानं विग्रहादिमत्त्वं प्रमाणान्तराविरुद्धं तत्प्रमेयमेव । न चानु-

ष्ठेयार्थप्रकाशनस्तुतिपरत्वाभ्यां प्रतीयमानार्थान्तरपविवक्षा शक्यते वक्तुम् । स्तुत्याद्युपयोगित्वात् । तेन विना स्तुत्याद्यनुपपत्तेश्च । गुणकथनेन हि स्तुतित्वम् । गुणानामसद्भावे स्तुतित्वमपि हीयते । न ह्यसता गुणेन कथितेन प्ररोचना जायते । अतः, कर्म प्ररोचयन्तो गुणसद्भावं बोधयन्त्येवार्थवादा मन्त्राश्च कर्मसु विनियुक्तास्तत्र तत्र किञ्चित्करत्वायानुष्ठेयार्थं प्रकाशयन्तो देवतादिगतविग्रहादिगुण-विशेषमभिदधत एव तत्र किञ्चित्कुर्वन्ति । अन्यथेन्द्रादिस्मृत्यनुपपत्तेः । न च निर्विशेषा देवतापीयं धियमधिरोहति । तत्र प्रमाणान्तराप्राप्तान्गुणान्स्वयमेव बोधयित्वा तैः कर्म प्ररोचयन्ति, गुणविशिष्टं वा प्रकाशयन्ति, देवतादिगतविग्रहादिगुणविशेषमभिदधत एव । तत्र प्राप्तांश्चानूद्य तैः प्ररोचनप्रका-शने कुर्वन्ति । विरुद्धत्वे तु तद्वाचिभिः शब्दैरविरुद्धान्गुणाँल्लक्षयित्वा कुर्वन्ति । कर्मविधेश्च देवतायाः प्रमाणान्तरप्राप्तमैश्वर्यमपेक्षितमेव कामिनः कर्तव्यतया कर्म विधीयमानं स्वयं क्षणप्रध्वंसि कालान्तर-भाविनः फलस्य स्वर्गादेः साधकमपेक्षते । मन्त्रार्थवादयोश्च "वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भाग-धेयेनोपधावति स एवैनं भूतिं गमयति" "यदनेन हविषाशास्ते तदश्यात्तदृध्यात्तदस्मै देवा राधन्ताम्" इत्यादिषु देवतायाः कर्मणाराधितायाः फलदायित्वं तदनुगुणं चैश्वर्यं प्रतीयमानमपेक्षितत्वेन वाक्यार्थे समन्वीयते । देवपूजाभिधायिनो यजिधातोश्च यागाख्यं कर्म स्वाराध्यदेवताप्रधानं प्रतीयते । तदेवं कृत्स्नवाक्यपर्यालोचनया वाक्यादेव विध्यपेक्षितं सर्वमवगतमिति नापूर्वादिकं व्युत्पत्तिसमयानवगतं कर्मविधिष्वभिधेयतया कल्प्यतया वाऽऽश्रयितव्यम् । तथासङ्कीर्णब्राह्मणमन्त्रार्थवादमूलेषु धर्मशास्त्रेति-हासपुराणेषु ब्रह्मादीनां देवासुरप्रभृतीनां देहेन्द्रियादयः स्वभावभेदाः स्थानानि भोगाः कृत्यानि चेत्ये-वमादयः सुव्यक्ताः प्रतिपाद्यन्ते । अतो विग्रहादिमत्त्वाद्देवादीनामप्यधिकारोऽस्त्येव ॥

देवादीनां विग्रहादिमत्त्वाभ्युपगमे कर्मणि विरोधः प्रसज्यते । बहुषु यागेषु युगपदेकस्येन्द्रस्य विग्रहवत्त्वे-ऽग्निमग्न आवह" । "इन्द्र आगच्छ" । "हरिव आगच्छे"त्यादिनाहूतस्य सन्निधानानुपपत्तेः । दर्शयति चाग्न्यादीनां तत्र तत्रागमनं "कस्य वाह देवा यज्ञमागच्छन्ति कस्य वा न" । "बहूनां यजमानानां यो वै देवताः पूर्वं परिगृह्णाति स एनाः श्वोभूते यजते" इति । अतो विग्रहादिमत्त्वे कर्मणि विरोधः प्रसज्यत इति चेन्न । अनेकप्रतिपत्तेर्दर्शनात् । दृश्यते हि सौभरिप्रभृतीनां शक्तिमतां युगपदनेकशरीरप्रतिपत्तिः ॥

विरोध इति वर्तते । मा भूत्कर्मणि विरोधोऽनेकशरीरप्रतिपत्तेः । शब्दे तु वैदिके विरोधः प्रस-ज्यते अनित्यार्थसंयोगात् । विग्रहवत्त्वे हि सावयवत्त्वेनेन्द्रादेरर्थस्यानित्यत्वमनिवार्यम् । ततो देव-दत्तादिशब्दवदिन्द्राद्यर्थजन्मनः प्राग्विनाशादूर्ध्वं चेन्द्रादिशब्दानां वैदिकानामर्थशून्यत्वमनित्यत्वं वा वेदस्य स्यादिति चेत्तन्न । अतः प्रभवात् । अस्मादिन्द्रादिशब्दादेव पुनः पुनरिन्द्राद्यर्थस्य प्रभवात् । एतदुक्तं भवति । न हि देवदत्तादिशब्दवदिन्द्रादिशब्दा वैदिका व्यक्तिविशेषमात्रे सङ्केतपूर्वकाः प्रवृत्ताः । अपितु स्वभावत एव गवादिशब्दवदाकृतिविशेषवाचित्वेन । ततश्चैकस्यामिन्द्रव्यक्तौ विन-ष्टायामत एव वैदिकादिन्द्रशब्दान्मनसि विपरिवर्तमानादवगततद्वाच्यभूतेन्द्राद्यर्थाकारो धाता तदा-कारमेवापरमिन्द्रं सृजति । यथा कुलालो घटशब्दान्मनसि विपरिवर्तमानात्तदाकारमेव घटमिति । कथमिदमवगम्यते ? प्रत्यक्षानुमानाभ्याम् । श्रुतिस्मृतिभ्यामित्यर्थः । श्रुतिस्तावद्वेदेन नामरूपे व्याक-रोत् । "सतासती प्रजापतिरिति" । तथा स भूरिति व्याहरत्स भूमिमसृजत । "स भुव इति व्याह-रत्सोऽन्तरिक्षमसृजते"त्यादिवाचकशब्दपूर्वकं तत्तदर्थसंस्थानं स्मरंस्तत्तत्संस्थानविशिष्टं तंतमर्थं संसृष्ट-वानित्यर्थः । स्मृतिरपि । अनादिनिधना ह्येषा, वागुत्सृष्टा स्वयम्भुवा, । आदौ वेदमयी दिव्या, यतः सर्वाः

प्रसूतयः इति । सर्वेषां तु सनामानि कर्माणि च पृथक् पृथक् । वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे ॥ इति च । संस्थाः संस्थानानि रूपाणीति यावत् । तथा—"नामरूपं च भूतानां कृत्यानां च प्रपञ्चनम् । वेदशब्देभ्य एवादौ देवादीनां चकार सः" इति । अतो देवादीनां विग्रहवत्त्वेऽपि वैदिकशब्दानामानर्थक्यं वेदस्यादिमत्त्वं च न प्रसज्यते ॥

यत्त एवेन्द्रवसिष्ठादिशब्दानां देवर्षिवाचिनां तत्तदाकारस्याचित्वं तत्तच्छब्देन तत्तदर्थस्मृतिपूर्विका च तत्तदर्थसृष्टिस्तत एव मन्त्रकृतो वृणीते । "नम ऋषिभ्यो मन्त्रकृद्भ्योऽयं सोऽग्निरिति विश्वामित्रस्य सूक्तं भवती"त्यादिभिर्वसिष्ठादीनां मन्त्रकृत्त्वकाण्डर्षित्वादौ प्रतीयमानेऽपि वेदस्य नित्यत्वमुपपद्यते । एभिरेव मन्त्रकृतो वृणीत इत्यादिभिर्वेदशब्दैस्तत्तत्काण्डसूक्तमन्त्रकृतामृषीणामाकृतिशक्त्यादिकं परामृश्य तत्तदाकारांस्तत्तच्छक्तियुक्तांश्च सृष्ट्वा प्रजापतिस्तानेव तत्तन्मन्त्रादिस्मरणे नियुङ्क्ते । ते च प्रजापतिनाहितशक्तयस्तत्तदनुगुणं तपस्तप्त्वा वीर्यसिद्धान्पूर्वपूर्ववसिष्ठादिदृष्टान्मन्त्रादीननधीत्यैव स्वरतो वर्णतश्चास्खलितान्पश्यन्ति । अतश्च वेदानां नित्यत्वमेषां च मन्त्रकृत्त्वमुपपद्यते ॥ अथ स्यान्नैमित्तिकप्रलयादिष्विन्द्राद्युत्पत्तौ वेदशब्देभ्यः पूर्वपूर्वेन्द्रादिस्मरणेन प्रजापतिना देवादिसृष्टिरुपपद्यतां नाम । प्राकृतप्रलये तु स्रष्टुः प्रजापतेर्भूताद्यहङ्कारपरिणामशब्दस्य च विनष्टत्वात्कथं प्रजापतेः शब्दपूर्विका सृष्टिरुपपद्यते ? कथन्तरां विनष्टस्य वेदस्य नित्यत्वम् ? । अतो वेदनित्यत्ववादिना देवादीनां विग्रहवत्त्वाभ्युपगमे लोकव्यवहारस्य प्रवाहानादिताश्रयणीयेति । अत उत्तरं पठति—

कृत्स्नोपसंहारे जगदुत्पत्त्यावृत्तावपि पूर्वोक्तात्समाननामरूपत्वादेव न कश्चिद्विरोधः । तथा हि—स भगवान्पुरुषोत्तमः प्रलयावसानसमये पूर्वसंस्थानं जगत्स्मरन् "बहु स्यामिति" सङ्कल्प्य भोग्यभोक्तृजातं स्वस्मिन्छक्तिमात्रावशेषं प्रलीनं विभज्य महदादि ब्रह्माण्डं हिरण्यगर्भपर्यन्तं यथापूर्वं सृष्ट्वा, वेदांश्च पूर्वानुपूर्वीविशेषसंस्थितानाविष्कृत्य, हिरण्यगर्भायोपदिश्य, पूर्ववदेव देवाद्याकारजगत्सर्गे तं नियुज्य, स्वयमपि तदन्तरात्मतयाऽवतस्थे । अतो यथोक्तं सर्वमुपपन्नम् । एतदेव च वेदस्यापौरुषेयत्वं नित्यत्वं च यत्पूर्वपूर्वोच्चारणक्रमजनितसंस्कारेण तमेव क्रमविशेषं स्मृत्वा तेनैव क्रमेणोच्चार्यत्वम् । तदस्मासु सर्वेश्वरेऽपि समानम् । इयांस्तु विशेषः । संस्कारानपेक्षमेव स्वयमेवानुसन्धत्ते पुरुषोत्तमः । कुत इदं यथोक्तमवगम्यत इति चेत्तत्राह दर्शनात्स्मृतेश्च । दर्शनं तावत् । "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" इति । स्मृतिरपि मानवी "आसीदिदं तमोभूतमि"त्यारभ्य "सोऽभिध्याय शरीरात्स्वात्सिसृक्षुर्विविधाः प्रजाः । अप एव ससर्जादौ तासु वीर्यमपासृजत् । तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् । तस्मिञ्जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः" इति । तथा पौराणिकाः—"तत्र सुप्तस्य देवस्य नाभौ पद्ममजायत । तस्मिन्पद्मे महाभाग वेदवेदाङ्गपारगः । ब्रह्मोत्पन्नः स तेनोक्तः प्रजाः सृज महामते । तथा—"एको नारायणो देवस्तस्माज्जातश्चतुर्मुखः" इति । तथा आदिसर्गमहं यस्य" इत्यारभ्योच्यते—"सृष्ट्वा नारं तोयमन्तःस्थितोऽहं येन स्यान्मे नाम नारायणेति । कल्पे कल्पे तत्र शयामि भूयः सुप्तस्य मे नाभिजं स्याद्यथाऽब्जम् । एवं भूतस्य मे देवि नाभिपद्मे चतुर्मुखः । उत्पन्नः स मया प्रोक्तः प्रजाः सृज महामते" इति । अतो देवादीनामप्यर्थित्वसामर्थ्ययोगाद्ब्रह्मविद्यायामधिकारोऽस्तीति सिद्धम् ॥

ब्रह्मविद्यायां देवादीनामप्यधिकारोऽस्तीत्युक्तम् । इदमिदानीं चिन्त्यते "येषूपासनेषु देवता एवोपास्यास्तेषु तासामधिकारोऽस्ति नेति" । किं प्राप्तम् ? नास्त्यधिकारस्तेषु मध्वादिष्विति जैमिनिर्मन्यते । कुतः ? असम्भवात् । "न ह्यादित्यवस्वादिभिरुपास्या आदित्यवस्वादयोऽन्ये सम्भवन्ति ।

न च वस्वादीनां सतां वस्वादित्वं प्राप्यं भवति, प्राप्तत्वात् । मधुविद्यायामृग्वेदादिप्रतिपाद्यकर्मनिष्पाद्यास्य रश्मिद्वारेण प्राप्तस्य रसस्याश्रयतया लब्धमधुव्यपदेशस्यादित्यस्यांशानां वस्वादिभिर्भुज्यमानानामुपास्यत्वं वस्वादित्वं च प्राप्यं श्रूयते "असौ वा आदित्यो देवमध्वि"त्युपक्रम्य, "तद्य त्प्रथममम्मृतं तद्वसव उपजीवन्ती"त्युक्त्वा, "स य एतदेवममृतं वेद वसूनामेवैको भूत्वाऽग्निनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यती"त्यादिना ॥

"तं देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतमि"ति ज्योतिषि परस्मिन्ब्रह्मण्युपासनं देवानां श्रूयते देवमनुष्योभयसाधारणे परब्रह्मोपासने देवानामुपासकत्वकथनं देवानामितरोपासननिवृत्तिं द्योतयति । अत एषु वस्वादीनामनधिकारः इति प्राप्तेऽभिधीयते—

आदित्यवस्वादीनामपि तेष्वधिकारभावं भगवान्बादरायणो मन्यते । अस्ति ह्यादित्यवस्वादीनामपि स्वावस्थब्रह्मोपासनेन वस्वादित्यत्वप्राप्तिपूर्वकब्रह्मप्रेप्सासम्भवः । इदानीं वसूनां सतामपि कल्पान्तरे वस्वादित्वप्राप्तिश्चापेक्षिता भवति । अत्र हि, कार्यकारणोभयावस्थब्रह्मोपासनं विधीयते । "असौ वा आदित्यो देवमध्वि"त्यारभ्य "अथ तत ऊर्ध्वमुदेती"त्यतः प्रागादित्यवस्वादिकार्यविशेषावस्थं ब्रह्मोपास्यमित्युपदिश्यते । तदेवं कार्यकारणोभयावस्थं ब्रह्मोपासीनः कल्पान्तरे वस्वादित्वं प्राप्य तदन्ते कारणं परं ब्रह्मैवाप्नोति । "न ह वा अस्मा उदेति न निम्लोचति सकृद्दिवा हैवास्य भवति य एतामेवं ब्रह्मोपनिषदं वेदे"ति कृत्स्नाया मधुविद्याया ब्रह्मोपनिषत्त्वश्रवणाद्ब्रह्मप्राप्तिपर्यन्तवस्वादित्वफलश्रवणाच्च वस्वादिभोग्यभूतादित्यांशस्य विधीयमानमुपासनं तदवस्थस्यैव ब्रह्मण इत्यवगम्यते । अत एवम्विधमुपासनमादित्यवस्वादीनामपि सम्भवति । एवंच ब्रह्मण एवोपास्यत्वात् "तं देवा ज्योतिषां ज्योतिरि"त्युपपद्यते । तदाह वृत्तिकारः—अस्ति हि मध्वादिषु सम्भवो ब्रह्मण एव सर्वत्र निचाय्यत्वादिति ॥

(३) माध्वे—मनुष्याणामिव वेदविद्यायामधिकार इत्युक्तम् । तिर्यगाद्यपेक्षयैव मनुष्यत्वविशेषणमुक्तं न तु देवाद्यपेक्षयेत्याह—तदुपरि मनुष्याणां सतां देवा इत्यप्युपरि सम्भवति हि तेषां विशिष्टबुद्ध्यादिभावात्तिर्यगादीनां तदभावादभावः । तेषामपि यत्र विशिष्टबुद्ध्यादिभावस्तत्राविरोधः, निषेधाभावात् । दृश्यन्ते हि तरितर्यादयः । मनुष्या एव देवादयो भवन्तीति तदुपरीत्युक्तम् । तत्र यदि मनुष्याः सन्तो देवादयो भवन्ति, तत् पूर्वं देवताभावाद्देवतोद्दिष्टकर्म्मणि विरोध इति चेत्, नः अनेकेषां देवतापदप्राप्तेर्दर्शनात् । "ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवा" इति । वाचा विरूपाणान्तायत्वाद् विश्रुतेरात्मनिश्चयान्नित्यत्वापेक्षत्वाच्च मूलप्रमाणस्य स्वतःप्रामाण्यसिद्धेश्च नित्यत्वाद्वेदस्य । तदुदितानां देवानामनित्यत्वात्पुनरन्यभावनियमाभावाच्च शब्दे विरोध इति चेत् न, "सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्" । "यथैव नियमः काले सुरादिनियमस्तथा । तस्माद्यानीदृशं ह्यपि विश्वमेतद्भविष्यती"त्यादेः । अत एव शब्दात् तेषां प्रभवनियमात् । महतां प्रत्यक्षाद् यथेदानीं तथोपर्य्यपि देवादयो भविष्यन्तीतीतरेषामनुमानाच्च । अत एव शब्दस्य नित्यत्वादेव च देवप्रवाहनित्यत्वं युक्तम् ॥ अतीतानां गतानां देवानां समाननामरूपत्वात् प्राप्तपदानां मुक्तपदप्रवृत्तावप्यविरोधः । यथापूर्वमिति दर्शनात् । "अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा । ऋषीणां नामधेयानि याश्च वेदेषु दृष्टयः । वेदशब्देभ्य एवादौ निर्ममे स महेश्वर" इति स्मृतेश्च ॥ वसूनामेवैको भूत्वेत्यादिना प्राप्यफलत्वात् प्राप्यपदानां मध्वादिविद्यास्वनधिकारं जैमिनिर्मन्यते । ज्योतिषि सर्वसत्त्वेऽभावाच्च । आदित्यप्रकाशोऽन्तर्भावयत् तज्ज्ञाने सर्ववसूनामन्तर्भावात् नित्यसिद्धत्वाद् विद्यानाम् ।

फले विशेषाभावात् प्राप्तपदानामपि देवानां मध्वादिष्वधिकारं बादरायणो मन्यते। अस्ति हि प्रकाशविशेषः। "यावत् सेवा परे तत्त्वे तावत् सुखविशेषता। सम्भवाच्च प्रकाशस्य परमेकमृते हरिम्। तेषां सामर्थ्ययोगाच्च देवानामप्युपासनम्। सर्वं विधीयते नित्यं सर्वयज्ञादि कर्म चे"ति स्कान्दे। उक्तफलानधिकारमात्रं जैमिनिमतमतो न विरोधः। "सर्वज्ञस्यैव कृष्णस्य त्वेकदेशविचिन्तितम्। स्वीकृत्य मुनयो ब्रूयुस्तन्मतं न विरुध्यत" इति च ब्राह्मे। मनुष्याधिकारत्वादित्युक्तेऽविशेषाच्छूद्रस्याप्याह—"हरियो शूद्रेति" पौत्रायणोक्तेरधिकार इति।

(४) निम्बार्कः—तस्मिन्ब्रह्मोपासने मनुष्याणामुपरिष्टादपि ये देवादयो हि तेषामप्यधिकारोऽस्तीति भगवान्बादरायणो मन्यते॥ शरीरं विना ब्रह्मोपासनानुपपत्त्या तेषामवश्यं विग्रहवत्त्वमभ्युपगन्तव्यम्, तथात्वे तु कर्मणि विरोध इति चेत्, नायं दोषः, कुतः? एकस्याप्यनेकेषां देहानां युगपत्प्रतिपत्तेर्दर्शनात्॥ देवादीनां विग्रहवत्त्वपि स्वीकारे तद्वाचिनि वैदिके शब्दे विरोधः स्यात् अर्थोत्पत्तेः प्राग्विनाशानन्तरं च निरर्थकत्वापत्तेरिति चेत्, नायं विरोधः। अतः शब्दादेव नित्याकृतिवाचकात्प्रजापतिबुद्ध्युद्बोधकादर्थस्य प्रभवात्, वेदेन "नामरूपे व्याकरोत्" "अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा" "आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तय" इत्यादिस्मृतिभ्याम्॥ प्रजापतेः सृष्टिः शब्दपूर्विकाऽतो हेतोर्वेदस्य नित्यत्वम्॥ एवं प्राकृतसृष्टिसंहारात्मिकायामावृत्तावपि न विरोधः। कुतः? कल्पादौ सृज्यमानस्य पदार्थस्य कल्पान्तरातीतेन पदार्थेन तुल्यनामरूपादिमत्त्वात् "सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पय"दिति दर्शनात्। "यथर्त्तावृतुलिङ्गानि नानारूपाणि पर्यये। दृश्यन्ते तानि तान्येव तथा भावा युगादिष्वि"ति स्मृतेः॥ उपास्यस्योपासकत्वासम्भवात् मध्वादिषु विद्यासु सूर्यादीनामनधिकार इति जैमिनिर्मन्यते॥ ब्रह्माणि तेषामुपासकत्वेन भावाच्च मध्वादिष्वनधिकार इति पूर्वः पक्षः॥ तत्र सिद्धान्तमाह, मध्वादिष्वपि सूर्यवस्वादीनामधिकारसद्भावं बादरायणो मन्यते। हि यतस्तेषां स्वान्तर्यामिब्रह्मोपासनेन कल्पान्तरेऽपि स्वाधिकारप्राप्तिपूर्वकब्रह्मलिप्सासम्भवोऽस्ति॥

(५) भैक्षवे—बादरायणस्त्वाचार्य्यस्तदुपर्य्यपि मनुष्योपरिदेवादिष्वपि हार्दोपासनं मन्यते। कुतः? सम्भवात्। तेषामपि स्वयं लीलया निर्मितेषु प्रतिनियतस्थूलशरीरेषु हृदयपुण्डरीकादिसम्भवादित्यर्थः। इन्द्रादीनामपि सहस्राक्षादिशरीरश्रवणात् विद्याग्रहणार्थं प्रजापतौ ब्रह्मचर्य्यश्रवणाच्चेति भावः। ननूपनयनाद्यभावात्कथं तेषां विद्यायामधिकार इति चेन्न, देवानामपि वामनादिरूपब्राह्मणशरीरेषूपनयनश्रवणात्। स्वयं प्रस्फुरद्वेदतयोपनयनकृतोपकारानपेक्षणाच्च। वेदान्तश्रवणं विनैव स्मृत्यादिनोत्पन्नज्ञानानां विदुरादिशूद्राणामपि विद्याधिकारस्य वक्ष्यमाणत्वाच्च। अथैवं तेषां यागादिष्वप्यधिकारः स्यात्। स्यादेव प्रयागादौ ब्रह्मादीनां यागादिश्रवणात् तेषां कर्मानधिकारश्च देवादिलोके स्वयागादौ च बोध्यो न तु भारतवर्षे स्वोत्कृष्टदेवतायागे च अर्थित्वशक्तत्वापर्य्युदस्तत्वादिभ्य इति। तथा तेषां देवादिशरीरैर्नास्तिकर्माधिकारो ब्राह्मणादिशरीराणां तत्तत्कर्माङ्गत्वात्, न तु सहस्राक्षादिरूपलीलाविग्रहेण ब्राह्मणरूपेणापीत्यादयो विशेषा बोध्याः। यत्तु तेषां कर्म लोकसङ्ग्रहार्थमेवेति तन्न, तेषां प्रायश्चित्तादिरूपकाम्यकर्मणः फलश्रवणात्। लोकसङ्ग्रहार्थमपि तु कादाचित्कं कर्म तेषां नापलपाम इति ( किञ्च लोकसङ्ग्रहस्यास्वतोऽपुरुषार्थत्वेन पापानुत्पाद एव पर्यवसानं, तथा चोक्तं श्रीकृष्णेन "सङ्करस्य च कर्तास्यामुपहन्यामिमाः प्रजा" इति ) तस्मादस्ति देवादीनामपि हार्दविद्यायां प्रकृतायामधिकारः। ननु देवादीनामपि हृदयपुण्डरीकाद्यङ्गीकारे परिच्छिन्नविग्रहत्वाद्विप्रकृष्टनानादेशीययागादिकर्मस्वधिष्ठानस्य विरोध इति चेन्न, अनेकप्रतिपत्तेर्दर्शनात्, एकत्र स्थितानामपि योगिशरीराणां व्यवहितविप्रकृष्टनाना-

देशीयपदार्थेष्वनेकेषु प्रतिपत्तेरुपलम्भात्', किमु वक्तव्यं देवतावर्गेषु। तच्च ज्ञानं योगजधर्मप्रत्यासत्त्या वा चित्तविभुत्वेन वेत्यन्यदेतत्। विभुत्वपक्षे तु तमःप्रतिबन्धवशादस्मदादिचित्तानां परिच्छिन्नावृत्तिरित्याद्युक्तं शास्त्रयोनित्वादित्यत्र। तथा च शरीरावस्थानामपि देवानां मनसा सर्वत्रैकदाधिष्ठानमुपपन्नम्। तथा चोक्तम् "प्रह्लादीं तां स्थितिं विष्णुर्देवः क्षीरोदकोटरे। विवेद सर्वगतया धिया परमकान्तये"ति॥ इत्थमेव च शुकादीनां सर्वभावो मोक्षधर्मादौ, "शुकः सर्वगतोऽभवदि"त्याद्युक्तः। ईश्वरवच्चित्तद्वारा परिच्छिन्नस्थूलशरीरिणामपि सर्वान्तर्यामितया सर्वभावादिति मन्तव्यम्। वस्तुतस्तु अनेकप्रतिपत्तेर्दर्शनात् स्वेच्छया अनेकदेहलाभस्य योगिषु दर्शनादित्यर्थः। तथा च सूक्ष्मदेहेन सर्वकर्माधिष्ठातृत्वं लीलाविग्रहैश्च प्रतिनियतैश्चतुर्मुखचतुर्भुजत्रिनयनादिरूपैर्हृदयपुण्डरीकादिषूपासनं सम्भवत्येवेति भावः। अत एव देवानां सूक्ष्मस्थूलदेहाभ्यां द्विजन्म श्रूयते पुराणादाविति। ननु माभूत्कर्मणि विरोधः, शब्दे तु स्यात्, तथापि विग्रहवत्त्वे सति देवा अपि जन्ममरणवन्तः स्युः, तथा च नित्यस्यार्थस्य नित्येनेन्द्रादिशब्देन सम्बन्धोऽपि नित्य इत्यभ्युपगमत्यागे सति, वह्वेकशब्दे प्रामाण्यं तस्य विरोधः शरीरस्यानित्यत्वे हि सर्गभेदेन नानाप्रकारता शरीराणां स्यात्ततश्च "इन्द्रः सहस्राक्ष" इत्यादिश्रुतीनां सर्गभेदेनाप्रामाण्यं स्यात्। किञ्च, वैदिकशब्दानां पौरुषेयसङ्केतसापेक्षतापत्तिः, सङ्केतस्य ततश्चागन्तुकत्वेन दोषजन्यत्वशङ्का सम्भवतीति चेन्न, अतः प्रेयान् शब्दादेव देवादीनां शरीरोत्पत्तेर्वेदानां च प्रतिसर्गमेकत्वाच्च वेदाख्याच्छब्दादेव देवशरीरादिव्यक्तीनामुत्पत्तौ प्रमाणमाह प्रत्यक्षानुमानाभ्यामिति। श्रुतिस्मृतिभ्यामित्यर्थः। "सेयं भूरिति व्याहरन् भूमिमसृजते"त्यादिश्रुतेः। "सर्वेषां तु स नामानि कर्माणि च पृथक् पृथक्। वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे" इत्यादिस्मृतेश्चेति। अत एव जगत्कारणत्वादेव वेदात्मके शब्दस्य नित्यत्वमभ्युपगम्यत इत्यर्थः। नन्वधीयमानानां वेदानां पुनः पुनरुत्पत्तिप्रलयदर्शनात्कथं तेषां नित्यत्वमितीमामाशङ्कां परिहरति। आवृत्तौ क्रियमाणायां वेदाख्यशब्दानां पुनः पुनरुत्पत्तावपि न विवक्षितनित्यत्वस्य विरोधो भवति। कुतः? समाननामरूपत्वात्। व्यक्तिभेदेऽपि समाननामरूपतया प्रतिसर्गं प्रवाहात् नाम ऋग्यजुरादिरूपं चानुपूर्वीविशेषादिति। अयं भावः, यदिदानीन्तनकाव्यादिवद्वेदाः केनापि कदाऽप्यपूर्वानुपूर्व्यादिभी रच्यन्ते तदाऽर्थज्ञानपूर्वकतयाऽन्योन्याश्रयाप्रामाण्यशङ्कादयो दोषाः स्युः, अतो वेदाः केनापि हिरण्यगर्भादिना न रच्यन्ते, किं तु अन्तर्यामिसङ्कल्पाद्बुद्धिपूर्वमवगतस्वाप्नपदार्थवत्प्रतिभामात्रात्सर्गादौ हिरण्यगर्भाद्यैरनुभूयन्ते वेदा इत्युपेयम्। तथा चेश्वरस्य सदा सर्वज्ञतया समानानुपूर्वीनिर्माणमुपपद्यते। एवं चैकरूपप्रवाहाविच्छेदरूपं नित्यत्वमविरुद्धमिति। अतश्च श्वासप्रश्वासवत्पुरुषबुद्ध्यजन्यत्वेन वेदेषु नाप्रामाण्यशङ्काऽपि स्यादिति। प्रतिसर्गं समाननामरूपत्वे प्रमाणमाह दर्शनात्स्मृतेश्चेति। "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै। तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये" इत्यादिश्रुतेः। "अनादिनिधना दिव्या वागुत्सृष्टा स्वयम्भुवा। आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः" इत्यादिस्मृतेश्चेत्यर्थः। समाननामरूपप्रवाहानुच्छेद एव नित्यत्वं वेदानामितरव्यावृत्तमिति भावः। न पुनराकाशादिवन्नित्यत्वमभ्युपगन्तुं शक्यते उत्पत्तिप्रलयप्रत्ययादितरवाक्यवत्। न च सूक्ष्मरूपेणावस्थितस्याभिव्यञ्जकोत्पत्त्यादिभिस्तत्क्रमः कल्पनीयः, लौकिकवाक्येऽपि तथा सुवचत्वात्। कथं वा सूक्ष्मरूपेणावस्थानं केवलवेदस्यैवोच्यते समस्तकार्याणामेव सूक्ष्मरूपेण नित्यताया अभ्युपगतत्वादिति। अथ वर्तमानावस्थयैव सदा सत्त्वं, घटादिभ्यः शब्दस्य विशेष इति चेन्न, घटादेरपि सदा वर्तमानता प्रसङ्गाद्दण्डादीनामभिव्यञ्जकत्वसम्भवात् वर्तमानताभिव्यक्त्योर्भेदाभावाच्च। न हीयमभिव्यक्तिः प्रत्यक्षतामात्रं शब्दघटाद्युत्पत्तावपि

प्रत्यक्षतादर्शनात् । प्रत्यक्षयोग्यता च वर्तमानताऽतिरिक्ता न शक्यते वक्तुमिति । दहरविद्याप्रसङ्गेन विद्यान्तरेष्वपि देवादीनामधिकारोऽस्ति न वेति विचार्यं तत्रादौ परमतमाह—दहरविद्यायां परमात्मन एवोपास्यतया देवादीनामप्यधिकारोऽस्तु तथाऽपि न मध्वादिविद्यासु तेषामधिकारः । मधुविद्या हि काण्वचतुर्थाध्याये "अयं वा आदित्यः सर्वेषां भूतानां मध्वि"त्यादिनोक्ता आदित्यादिषु मधुदृष्टिरूपा । न च तस्यामादित्यादीनामधिकारः सम्भवति, उपास्यासम्भवात् । उपास्योपासकभावस्य भेदतन्त्रत्वादित्यर्थः । उपासाफले ज्योतिषि सूर्य्यमण्डलादिरूपे सूर्य्यादीनां पूर्वमेव भावात्तत्त्वात् उपास्यदेवतारूपत्वप्राप्तिरूपस्य फलस्य सिद्धतया तदर्थं स्वोपासनावैफल्यादिति जैमिनिर्मन्यते । अपरे त्वेवमिदं सूत्रं व्याचक्षते, अचेतनत्वात्तु परमार्थतः सर्वविद्यास्वेव देवानामनधिकार इति मुख्यं स्वमतमाह जैमिनिः ज्योतिषि भावाच्चेति । आदित्याद्युपासनावाक्येष्वचेतने ज्योतिश्चक्र एव भावात् उपासनात् चेतनत्वेनोपासनाविधानादिति यावत् । "वाचं धेनुमुपासीतेति" वाक्यवत् । तस्मादादित्यादीनामचेतनतया न विद्याधिकार इति । बादरायणास्त्वाचार्य्यो मध्वादिविद्यास्वपि देवाद्यधिकारस्य भावं वदति, हि यस्मादादित्यादिरूपीभूतपरमात्मैवादित्यादीनामुपास्योऽस्ति "य आदित्ये तिष्ठन्नादित्यादन्तरोऽयमादित्यो न वेद यस्यादित्यः शरीरमि"त्यादिश्रुतेः । येऽप्यन्यदेवताभक्ता जयन्तेऽत्र श्रद्धयान्विताः । तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम् ॥ इत्यादिस्मृतेश्च तथा च परमात्मानमेवादित्यरूपं स्वसंस्थमादित्यादिदेवता मधुविद्ययोपासिष्यत इति नासम्भवः । एवं विद्यान्तरेष्वपि बोध्यम् । न चैवमपि मधुविद्यायां परमात्मोपासनेति कथमवधृतमिति चेत् तदेतद्ब्रह्मापूर्वमनपरमित्यादेरयमात्मा ब्रह्म सर्वानुभूरित्यन्ताद्वाक्यशेषादित्यवेहि । जैमिनेरधिकारप्रतिषेधस्तु छान्दोग्यीयतृतीयप्रपाठकस्थमधुविद्यादिपरः । तस्यां तत्तद्देवताभावफलश्रवणेन ब्रह्मलिङ्गाभावेन ब्रह्मोपासनापरत्वकल्पनानौचित्यात् । अन्यथा देवतामात्रोपासनोच्छेदप्रसङ्गाच्चेति बोध्यम् । पूर्वसूत्रस्य द्वितीयव्याख्यानस्वीकारे यैः क्रियते, तैर्देवतानामचेतनत्वेऽप्येवमिदं सूत्रं योजनीयं चेतनदेवताया भावं सत्तां बादरायणो वदति अस्ति हि तत् "यो यो देवानां प्रत्यबुध्यत स एव तदभवदि"त्यादिश्रुतेरित्यर्थः । जैमिनेरचेतनदेवतावादस्तु ज्योतिर्मण्डलाभिप्रायेण बोध्यः ।

(६) भास्करीये—मनुष्यहृदयापेक्षयाङ्गुष्ठश्रुतिरित्युक्तं तेषां शास्त्रेऽधिकारादिति । तत्प्रसङ्गेन देवानामपि परविद्यायामधिकारप्रतिपादनार्थमिदमधिकरणमारभतेस । तदुपर्यपि मनुष्याणामुपरिष्टाद् ये वर्तन्ते देवादयस्तानप्यधिकरोति शास्त्रमिति बादरायण आचार्यो मन्यतेस । कुतस्तेषामप्यर्थित्वसम्भवति, प्रपञ्चविषयस्यैश्वर्यस्यानित्यत्वदोषपर्यालोचनात् । सामर्थ्यमपि सम्भवति, मन्त्रार्थवादेतिहासपुराणेभ्यो विग्रहवत्त्वाभ्युपगमात् । परिज्ञानं च तेषां सार्वत्रिकमस्ति । तथाच "अग्ने नय सुपथे"ति मन्त्रोऽग्नेः सर्वज्ञत्वं दर्शयति । "विश्वानि देववयुनानि विद्वानि"ति वयुनानि ज्ञानानीति । लिङ्गं च भवति । "एकशतं ह वै वर्षाणि मघवान् प्रजापतौ ब्रह्मचर्यमुवास, भृगुर्ह वै वारुणिर्वरुणं पितरमुपससारे"ति । यत्कर्माधिकारकारणं न देवा देवतान्तराभावादित्यादि तदिह नास्ति । परविद्याया मनोवृत्तिमात्रविषयत्वात् । किं पुनः कारणं, महता यत्नेन देवानामधिकारः प्रतिपाद्यते । अस्ति प्रयोजनं ब्रह्मोपासनसिद्ध्यर्थं तावद्विग्रहवत्त्वादिप्रतिपादनं कर्तव्यं शरीरेन्द्रियमनोभिर्विनोपासनानुपपत्तेस्तदुपासकानां च सायुज्यं सालोक्यं च फलं श्रूयते । ततश्चेन्द्रादिभावप्राप्तानामपि मनुष्याणां कथं नाम ब्रह्मविद्याभ्यासात् तत एव मुक्तिरनायासेन स्यादित्येवमिदं निरूप्यते । तद् यो देवानां

१ श्रद्धयाऽन्विता. इति पाठो मान्यः ।

प्रत्यबुध्यतेति दर्शनात्। विग्रहवत्त्वमसदादिवद्देवानामेवं सत्यभ्युपगन्तव्यं श्रवणमनननिदिध्यासनेषु शरीरेन्द्रियमनोयुक्तस्य प्रवृत्तिसम्भवात्, ततश्च कर्मणि यागे विरोध इति चेन्नायं विरोधः। अनेकप्रतिपत्तेरनेकविग्रहप्रतिपत्तेरित्यर्थः। कथं गम्यते दर्शनात्। "कति देवा इत्युपक्रम्य त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेत्युक्त्वा महिमान एवैषामेते त्रयस्त्रिंशत्त्वेव देवा" इत्येकैकस्यानेकरूपतां दर्शयति योगशास्त्रेषु चानेकशरीरयोगं योगिनां वर्णयन्ति। "प्राप्नुयाद्विषयान् कैश्चित् कैश्चिदुग्रं तपश्चरेत्। संक्षिपेच्च पुनस्तानि सूर्यस्तेजोगणानिव" ततश्च बहुषु यागेषु सन्निधानमदृश्यत्वं चान्तर्धानशक्तियोगादुपपद्यते। अनेकप्रतिपत्तेर्दर्शनादित्यस्यापरा व्याख्या। अनेका नानारूपप्रतिपत्तिः तस्या दर्शनाद् यथैको विप्रो युगपदनेकत्र भोजयितुं न शक्यते, स एव स्वस्थानस्थितो युगपदनेकैर्नमस्क्रियते। तथात्र स्वस्थानस्थितां देवतामुद्दिश्य स्वं स्वं द्रव्यमुत्सृजन्तीत्युपपद्यते। विग्रहवत्त्वेऽस्मदादिवदुत्पत्तिमत्त्वादनित्यत्वं प्रसज्यते। ततश्च वैदिके वस्वादिशब्दे देवतादिवाचिनि विरोधः स्याद्वेदस्यादिमत्त्वप्रसङ्गादिति चेन्नास्ति विरोधः। कस्मादतःशब्दादेव। जगतः प्रभवादुत्पत्तेः प्रलयकालेऽपि हि ब्रह्मणि सूक्ष्मरूपेण वेदराशिरवस्थितः। सृष्टिवेलायां परमेश्वरानुग्रहादाद्यस्य शरीरिणो हिरण्यगर्भस्य यः पूर्वस्मिन् जन्मनि द्वैतैकत्वभावनया प्रजापतिर्भविष्यामीति कर्म कृतवान् स हिरण्यगर्भ उच्यते। तस्य मनसि वेदोऽवस्थान्तरमनापन्नः सुप्तप्रतिबुद्धस्येव प्रादुर्भवति तेन प्रदीपस्थानीयेन सुरनरतिर्यगादिप्रविभक्तं जगदभिधेयभूतं निर्मिमीते। अयमत्र प्रभवोऽभिप्रेतः। जन्माद्यस्य यत इत्युपादानकारणविवक्षयोक्तम्। कथमिदं गम्यते प्रत्यक्षानुमानाभ्यां श्रुतिस्मृतिभ्यामित्यर्थः। प्रत्यक्षं श्रुतिरनपेक्षत्वादनुमानं स्मृतिरनुमीयमानश्रुतिसापेक्षत्वात्। एत इति वै प्रजापतिर्देवानसृजतासृग्रमिति मनुष्यानिन्दव इति पितॄंस्तिरः पवित्रमिति ग्रहानाशव इति स्तोत्रं विश्वानीति शस्त्रमभिसौभगेत्यन्याः प्रजा इति। स्मृतिरपि। "अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा। आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः॥" इति पौराणिकाः। तथा "नामरूपे च भूतानां कर्मणां च प्रवर्तनम्। वेदशब्देभ्य एवादौ निर्ममे स महेश्वरः॥ सर्वेषां च स नामानि कर्माणि च पृथक्पृथक्। वेदशब्देभ्य एवादौ पृथक्संस्थाश्च निर्ममे॥" कः पुनरत्र शब्दोऽभिप्रेतो वर्णात्मको लोकप्रसिद्धेरुपवर्षाचार्यागमाच्च, न वैयाकरणकल्पितः स्फोटः तस्य चानुपपत्तिरुक्ता प्रथमतन्त्र इत्यत्र नोच्यते अबहुश्रुतप्रतिपत्त्यर्थं दिङ्मात्रं प्रदर्श्यते। स्फोटः शब्द इति ज्ञाते स एव चार्थप्रत्यायको वाचकरूपेण स एवावस्थितो व्यवहारहेतुर्वर्णा ध्वानृतरूपा मानसाः परिकल्पिताः। किञ्च, वर्णेभ्योऽर्थप्रतीतिर्नोपपद्यते। कथम्। एकैकवर्णोपलब्धौ प्रतीत्यभावात्। न च युगपदवतिष्ठन्ते क्षणध्वंसित्वात्। न च तदुपलब्धिरर्थप्रतीतिहेतुस्तस्याश्च क्षणिकत्वात् क्रमभावित्वाच्च। अत एव वर्णस्मृतिरपि नार्थप्रतीतिहेतुः। पूर्वपूर्वजनितसंस्कारसहितादन्त्याद्वर्णादर्थप्रतीतिरिति चेत्, न, संस्कारकल्पनायां प्रमाणाभावात्। केन पुनः प्रमाणेन स्फोटो गृह्यते प्रत्यक्षेणेत्याह। तथाहि गौरित्युक्ते अक्रमैकाकारा बुद्धिरुत्पद्यते। तथा चाह—"नादैराहितबीजायामन्त्येन ध्वनिना सह। आवृत्तपरिपाकायां बुद्धौ शब्दोऽवधार्यते॥" अत्र ब्रूमः। गौरित्यत्र गकारौकारविसर्जनीया इति भगवानुपवर्षाचार्य इत्यागमपरम्परायातन्यायोपपन्नं च वर्णानां शब्दत्वम्। कथमश्वदेवदत्तादिशब्देषु श्रोत्रेण वर्णा एव गृह्यन्ते, न वर्णव्यतिरिक्तमवैयाकरणः कश्चित् प्रतिपद्यते। अध्येतारश्चोपाध्यायसकाशादुपश्रुत्य स्वरमात्राक्षरक्रमयुक्तान् वर्णान् मनसाऽवधार्य वर्णयन्तो दृश्यन्ते। एकैकस्य वर्णस्य वा अन्यथाकरणे भर्त्सयित्वा यथारूपप्रतिपादनं कुर्वन्तो दृश्यन्ते। सम्बन्धग्रहणकाले च यावन्तो यादृशीयत्र प्रयुज्यन्ते वर्णास्तेषामेव

सम्बन्धाग्रानापार्श्वस्थाः प्रतिपद्यन्ते न वर्णव्यतिरिक्तस्य स्फोटस्यानुपलक्षितस्य । सम्बन्धात् कालान्तरे च तेभ्य एव च यथावधारितसम्बन्धेभ्योऽर्थं प्रतिपद्यन्ते यावद्विशाणां वर्णानां वाचकशक्तिः व्यासज्य-वृत्तिमानीतामालम्ब्यैवैकाकारा बुद्धिरुपपद्यते । अतश्चैकबुद्धेरन्यथासिद्धत्वात् किंनिमित्ता स्फोट-कल्पना । अथ वर्णेभ्योऽर्थप्रत्ययानुपपत्तेरिति चेद्वर्णानां स्फोटाभिव्यक्तावनुपपत्तिः समाना । न च गकारोच्चारणवेलायां पदस्फोटः प्रतीयते । अथ चेत् कश्चिद् ब्रूयात्, प्रथमवर्णवेलायामप्यभिव्यज्यत इत्यनुभवशून्यं ब्रुवतः किमुत्तरं स्यात्? तत्र पूर्ववर्णजनितसंस्कारसहितेन वर्णेन स्फोटोभिऽव्यज्यत इत्युपगन्तव्यम् । तत्र संस्कारवर्णकल्पना स्फोटकल्पना तस्य वा गृहीतसम्बन्धस्य वाचकशक्तिकल्प-नेति कल्पनात्रयमस्मत्पक्षे संस्कारकल्पनामात्रमिति । विशेषोऽपि सङ्कलनाप्रत्ययसमारूढास्त्रयो वर्णा वाचकास्तेषां सम्बन्धग्रहणात् क्रमोच्चारणानन्तरस्मृत्या प्रत्याययन्तीति सर्वेषां नः प्रत्यक्षम् । तस्मा-द्वर्णा एव शब्दा इति स्थितम् ॥ यदुक्तं विग्रहवत्त्वे सत्यनित्यत्वं वेदस्य प्राप्नोत्यनित्यार्थाभिधानादिति । तत्र ब्रूमोऽत एव शब्दप्रभवत्वात् शब्दपूर्वकत्वात् सृष्टेः । शब्दार्थसम्बन्धानां त्रयाणां नित्यत्वं सम्ब-न्धकर्तुश्चास्मरणादिति च गवादिशब्दानां तावद्वृद्धव्यवहारेऽन्वयव्यतिरेकाभ्यामाकृतेरभिधायकत्वाद् व्यक्तीनामनित्यानां वाच्यत्वमिन्द्रादिशब्दानामप्याकृतियोगो मन्त्रार्थवादेभ्योऽवगम्यते । विश्वकर्म-प्रणीते च शास्त्रे देवानामाकृतिविशेषा उक्ताश्चित्रकर्मप्रसिद्ध्यर्थं यमं दण्डहस्तमालिखन्ति वरुणं पाश-हस्तमित्यभ्यासे चाकृतियोगः सुप्रसिद्धो दृश्यते । अथ नानास्थानसम्बन्धात् तस्य च नित्यत्वाद् यो यस्तत्स्थानमधितिष्ठति स स इन्द्र इत्युच्यते पृथिवीपतियदितरैश्वर्यवचेन्द्रशब्दः वाचकादिवत् तस्मा-न्नित्येनार्थेन नित्यस्य शब्दस्य नित्यः सम्बन्ध उपपद्यते । ननु वृद्धव्यवहारस्यानादित्वे सति वाच्यवा-चकसम्बन्धस्याकृतिमत्त्वोरुपपद्यते वेदप्रामाण्यं, यदा खलु भवतः सकलं जगत् प्रलीयते जायते चाभि-नवं तदा समस्तस्य विच्छेदात् कथं वेदस्य नित्यत्वं कथं च तत्प्रभवत्वं जगतः अतिशायत इत्याश-ङ्क्याह आवृत्तावप्यविरोध इति । चशब्दस्तुशब्दार्थेऽपि शब्दः सम्भावनायाम् । सृष्टिप्रलयात्मिका-यामावृत्तावभ्युपगम्यमानायां न त्वदुक्तो विरोधः । सुप्तप्रतिबुद्धन्यायेन कल्पान्तरवृत्तपदार्थस्मरणो-पपत्तेः कल्पादावीश्वरानुग्रहात् प्रजापतेः । न हि प्रलयोऽस्माभिरत्यन्तविनाशोऽभिप्रेयते । सुषुप्त्यव-स्थायामिव सूक्ष्मतापत्तिमात्रम् । विद्यमानस्य चाभिव्यक्तीकरणमात्रं सृष्टिः । कथं समाननामरूपत्वाद् कल्पान्तरातीतैरिन्द्रादिभिः कल्पादौ सृज्यमानानां नामवाचकः शब्दो रूपमाकृतिः । कथं तुल्यनाम-रूपत्वं गम्यते? दर्शनात्, स्मृतेश्च । "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै, तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये" इति श्रुतेः । तथा "सूर्याचन्द्रमसौ धाता यथापूर्वमकल्प-यत्" यथा पूर्वस्मिन् कल्पे धाता प्रजापतिः सृष्टवांस्तथास्मिन्नपि कल्पे सूर्याचन्द्रमसावकरोदित्यर्थः । तथा "यो ह वा अविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण याजयति वाऽध्यापयति वा स्थाणुं वर्च्छति गर्त्तं वा प्रपद्यत" इत्युपक्रम्य "तस्मादेतानि मन्त्रे मन्त्रे विद्याद्" इति छान्दोग्यश्रुतिः । शौनकादिभिश्च मधु-च्छन्दःप्रभृतयोऽग्निमीळे इत्यादीनामृषयः स्मर्यन्ते । स्मृतिरपि "ऋषीणां नामधेयानि याश्च वेदेषु दृष्टयः । शर्वर्यन्ते प्रसूतानां तान्येवैभ्यो ददात्यजः ॥ यथर्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये । दृश्यन्ते तानि तान्येव तथाभावा युगादिषु ॥ यथाभिमानिनोऽतीताः तुल्यास्ते साम्प्रतैरिह । देवा देवैरती-तैर्हि रूपैर्नामभिरेव च" ॥ अत्र मीमांसकाश्चोदयन्ति—कथं युगादौ कस्यचित् पुरुषस्य सम्प्रदायम-न्तरेण वेदग्रहणमेकस्य च प्रतिभाने वेदस्य कृतकत्वं प्रसज्यते । अत्र वदामः । वेदस्य तावत् प्रामाण्यं प्रथमपादोक्तेन न्यायेन वाच्यवाचकसम्बन्धनित्यत्वादस्मर्यमाणकर्तृकत्वात् प्रयाजादिवदनपेक्षत्वादन-

धिगतार्थगन्तृत्वाद्वयोः समानम् । स्वसिद्धार्थस्वरूपे प्रामाण्यं च पुरस्तात् प्रतिपादितम् । तेन यथा स्वर्गास्तित्वं भवान् प्रतिपद्यते तथाहमपि सृष्टिस्थितिप्रलयकारणं परमात्मानं सर्वज्ञं सर्वशक्तिं प्रतिपद्ये । स च सर्वज्ञः प्राणिनामुपभोगकालं ज्ञात्वा प्रथमं भूतसूक्ष्ममव्याकृताकाशं सृजति तदनन्तरं हिरण्यगर्भं तस्मिन्ननुप्रविश्य तदात्मना स्थित्वाकाशादिक्रमेणाण्डं सृष्ट्वा ततः स्थावरपर्यन्तं सृजति प्राणिनां कर्मानुरूपेण । न च प्रयोजनं तस्यात्मनः किञ्चिदस्याप्तकामत्वात् "अपहतपाप्मा विजरो विमृत्युः सत्यकामः" सत्यसङ्कल्पादिरतिशयानन्दसद्भावः श्रूयन्ते । "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती"ति संसारिणः सर्वे तदीयमानन्दैकदेशमुपजीवन्तीति ब्रुवंस्तस्य प्रयोजनाभावं दर्शयति । स्वभावतस्तु प्रवर्तते, तत्र यथेदं जगदाविर्भवति पुनश्च तस्मिन्नेव प्रलयकालेऽवतिष्ठते । तथा वेदोऽपि तस्मिन् ब्रह्मणि प्रतिष्ठितः सर्गादौ तदनुग्रहात् प्रजापतेर्मनसि प्रादुर्बभूवेति न कश्चिद्दोषः । परमात्मनश्च नित्यत्वात् तदात्मत्वाच्च वेदस्य सुतरां नित्यत्वमुपपद्यते संसारस्य चानादित्वात् । यथा तव सुप्तावस्थायां वेदाः प्रलीना इव प्रतिबोधे चाविर्भवन्ति तथा सृष्टिप्रलययोरिति स्थितम् ॥ असावादित्यो देवमध्वि"त्यादिषूपास्यान्तराभावादादित्यवस्वादीनामनधिकारः सिद्धस्ततश्च विद्यात्वसामान्याद्ब्रह्मविद्यायामनधिकारं जैमिनिर्मन्यते स्म ॥ नन्वसमर्थो हेतुर्विद्यात्वसामान्यादिति न हि क्वचिदनधिकारादन्यत्रानधिकारोऽनुमातुं शक्यते कर्मकाण्डे तथादर्शनादित्याशङ्क्याह—ज्योतिर्मण्डले सवित्रादयः शब्दाः प्रयुज्यन्ते न विग्रहवतीषु देवतासु अविग्रहवतां चेन्द्रादीनां कथमधिकार इति मुख्यहेतूपन्यासः ॥ तु शब्दः पक्षव्यावृत्तौ । अधिकारभावं भगवान् बादरायणो मेने । यस्मादस्ति श्रौतं दर्शनम् । "तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत् तथर्षीणां तथा मनुष्याणामितीन्द्रो ह वै देवानामभिप्रवव्राजे"ति च । यदुक्तं विग्रहवत्त्वं नास्तीति । तदयुक्तम् । उपनिषत्सु देवतोपासनस्य सायुज्यादिप्राप्तेश्चाभिधानात् । देवो भूत्वा देवानप्येतीति । तथा "कति देवा याज्ञवल्क्ये"त्युपक्रम्य त्रयश्च त्री च सहस्रेत्यनेकरूपोपादानमैश्वर्ययोगादुपन्यस्य महिमान एवैषामेते त्रयस्त्रिंशत्त्वेव देवा इति तात्पर्यतो देवतानिरूपणं ब्रह्मणा चोक्तमष्टौ वसव एकादश रुद्रा द्वादशादित्याः प्रजापतिश्च वषट्कारश्चेतीन्द्रो वषट्कारशब्देन तत्रोक्तः । अपि च मन्त्रार्थवादेतिहासपुराणेभ्योऽष्टगुणैश्वर्योपेताः समधिगम्यन्ते । न च मन्त्रार्थवादप्रभवस्य ज्ञानस्य मिथ्यात्वं वदितुं शक्यं करणदोषबाधकप्रत्ययाभावात्, त्रिधा हि मन्त्रार्थवादाः प्रमाणान्तरविरुद्धार्थवाचिनो विरुद्धार्थविषयाः प्रमितार्थाश्चेति । यथा धूम एवाग्नेर्दिवा दर्शनार्चिरिति । "अग्निर्हिमस्य भेषजं पूत एव स तेजस्वी अन्नाद इन्द्रियवाची पशुमान् भवती"ति । तत्र विरुद्धार्थेषु गुणवादोऽवतिष्ठते । तत्रापि पौर्वापर्यान्वयादेव गुणनिष्ठता प्रतीयते । प्रमितार्थाविरुद्धार्थेषु तु श्रूयमाणमेवालम्बनं युक्तं न हि निरालम्बनं विज्ञानमस्तीति स्थितं निरालम्बनवादे । ननु परार्थत्वादर्थवादानां श्रूयमाणार्थत्वं नास्तीति । तदिदमसमीक्षितं वचनम् । न हि परार्थत्वं मिथ्यात्वहेतुः । उभयं हि मिथ्यात्वकारणं करणदोषो बाधकप्रत्ययो वेत्युक्तम् । न हि प्रयाजादीनां स्वरूपाभावः परार्थत्वादभ्युपगम्यते । न च गर्भदासादीनां विद्यमानस्य हि स्वार्थता परार्थता वा नासतः शशविषाणस्योभयं दृश्यते अर्थवादगतेभ्यः पदेभ्यः पदार्थप्रतीतिः ततो वाक्यार्थावगतिः तस्यास्तु क्रत्वर्थपुरुषार्थोपयोगित्वाभावान्निन्दा स्तुतिर्वा प्रयोजनं कल्प्यते, न हि प्रयोजनवशात् सदसत्त्वे । किं तर्हि प्रत्ययवशात् तृणलोष्ठादिवद्वतो विग्रहवत्त्वादि प्रतीयमानं प्रमाणान्तराविरुद्धं च प्रतीतिशरणैर्युक्तमभ्युपगन्तुमिति च विधिभिरेव रूपवत्त्वमपेक्षितमेवं हि श्रूयते । "यस्यै देवतायै हविर्गृहीतं स्यात्तां मनसा ध्यायेद् वषट्करिष्यन्नि"ति नीरूपस्य ध्यानानुपपत्तेर्मन्त्रार्थवादसमर्पितं रूपमाश्रयणीयं न स्वबुद्धि-

कल्पितमित्यलमतिप्रसङ्गेन । यत् पुनर्देवताधिकरणे विग्रहवत्त्वादिनिराकरणं तद्देवतातः फलमिति-
साद्यावयो मन्यन्ते, तदभिनिवेशनिराकरणमात्रपरमिति द्रष्टव्यम् ॥

(७) श्रीमद्वल्लभाचार्यमतेऽयमभिप्रायः—अङ्गुष्ठमात्रनिरूपणार्थं मनुष्याधिकारे निरूपिते जैमि-
नीयदर्शनाभिनिविष्टस्य कस्यचिद् भ्रमः स्यात् सर्वासु ब्रह्मविद्यासु मनुष्याणामेवाधिकार इति ।
तन्निराकरणाय देवानामधिकारं स्थापयितुमिदमधिकरणमनुप्रसङ्गसङ्गत्या आरभते तदुपर्यपीत्यादि ।
मनुष्येष्वपि त्रैवर्णिकानामुपनयनादिधर्मवतामधिकारो, न तु ततोऽर्वाचीनानामिति जैमिनीयदर्शनेऽपि
शूद्राधिकरणे सिद्धम् । तदत्राप्यङ्गीक्रियते । तदनुक्तमधिकं तु बोध्यते इति ज्ञापनार्थमपिशब्दः ।
तदुपरि विशिष्टत्रैवर्णिकेभ्यो मनुष्येभ्यः सकाशादुपरि मनुष्यगन्धर्वादिप्रजापत्यन्तानन्दिनामधिकारं
बादरायण आचार्यो मन्यते । तत्र जैमिनिप्रभृतीनां न सम्मतिरतः स्वनामग्रहणम् । स्वोक्ते हेतुमाह—
सम्भवादिति । जैमिनिर्हि कर्मविधीनां स्वापेक्षितोद्देश्यत्वातिरिक्तदेवतागतधर्मान्तरानाकाङ्क्षित्वमङ्गी-
कृत्य, तच्छेषभूतयोर्मन्त्रार्थवादयोर्देवताविग्रहसाधकत्वं मन्वानो विग्रहाभावादेवार्थित्वसामर्थ्यविद्वत्ता-
नाममावादधिकारासम्भवं मन्यते । सोऽसम्भवोऽत्र नास्ति । विग्रहाभावे तेषां विधीनां व्यापारकौ-
ण्ठ्यप्रसङ्गात् । तथाहि—देवतोद्देशेन विधीयमानं यागादिकं स्वस्योद्देश्यसम्बन्धाय वषट्कारमपेक्षते ।
स च, ध्यानम् । "यस्यै देवतायै हविर्निरुप्तं स्यात्, तां मनसा ध्यायेद्, वषट्करिष्यन्नि"ति विधानात् ।
ध्यानं च विग्रहमन्तरेणासम्भवद्ध्यानविध्यानर्थक्यं प्रसञ्जयति । अशरीराया देवतायाः ध्यातृबुद्ध्यारोहा-
रोहात् । तदनारोहे च ध्यानवषट्काराद्यभावाद्यागसिद्ध्यभावेन तद्विधिवैयर्थ्यं वज्रलेपायत इति कर्म-
विधीनामुद्देश्यगतधर्मान्तरापेक्षा अनुक्तसिद्धा । तांश्च धर्मान् "वज्रहस्तः पुरन्दर" इत्यादयो मन्त्रा
"वायुर्वै क्षेपिष्ठा देवते"त्यादयोऽर्थवादाश्च समर्पयन्तीति मन्त्रार्थवादयोर्विग्रहसाधकत्वं निर्बाधम् । एवं
सिद्धे कर्माधिकारे बाधकानां निरासेन ज्ञानाधिकारोऽपि सम्भवत्येव । धर्मज्ञानाभ्यां सातिशयाभ्यां
तादृशजन्मसम्भवात् । "तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च" इति श्रुतेस्तेषां शरीरारम्भकारण-
त्वात् । नचोपनयनाभावादनधिकारः शङ्क्यः । "यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्ता"दिति
"यो वै वेदांश्च प्रहिणोति तस्मा" इति यज्ञोपवीतवेदाध्यापनादिलिङ्गेन शतानन्दिनां श्रोत्रियत्वलिङ्गेन
च तन्निश्चयात् । अतः सातिशयाभ्यां धर्मज्ञानाभ्यां ब्रह्मविद्यायोग्यजन्मसम्भवाद्ब्रह्मत्वयस्तेषां पूर्वसं-
स्कारालोपाद्ब्रह्मार्थित्वे सिद्धे उत्तरोत्तरमुपदेष्टॄणां विद्यमानत्वात् प्रजापतिपर्यन्तं सर्वेषामधिकारः
सम्भवति । सम्भवोक्त्या तादृशाधिकारस्य दुर्लभत्वं सूचितम् । "यो यो देवानां प्रत्यबुध्यत, स एव
तद्भवत्, तथर्षीणां तथा मनुष्याणा"मिति श्रुतेः । अतस्तदुपरितनानामप्यधिकारः सिद्धः ॥

अधिकार एव किञ्चिदाशङ्क्य परिहरति—विरोध इत्यादि । नन्वेवमुपरितनानां ज्ञानाधिकारेऽङ्गी-
क्रियमाणे तत्पूर्वभाविन्युपनयनवदध्ययनादिरूपे कर्मण्यप्यधिकारोऽवश्यं वक्तव्यः । स च तेषु ब्राह्म-
ण्याद्यभावादशक्यवचनः । नचाधिकारबलेन ब्राह्मण्यादिकं तेषामाक्षेप्यमिति वक्तुं युक्तम् । तस्य
विप्रतिपन्नत्वेन बलाभावात् तस्याक्षेपकताया दूरापास्तत्वात् । यज्ञोपवीतमन्त्राद्युक्तलिङ्गेन तदङ्गीकारे-
ऽपि स्वर्गस्थानां तेषां भूमिरूपस्य देशस्य, व्रीह्यादिरूपस्य द्रव्यस्य, तथा तल्लोके सूर्यगत्यभावेन दर्शा-
दिरूपस्य कालस्य, ऐन्द्रं दध्यमावास्यायामित्यादिपूक्तायाः कर्तृभिन्नाया देवतायाश्चाभावेन तैः क्रिय-
माणे यज्ञादिकर्मणि च श्रुतिविरोध इति चेत्, न; नात्र विरोधः । कुतः ? अनेकप्रतिपत्तेर्दर्शनात् ।
"साध्या वै देवाः सुवर्गकामा एतं षड्रात्रमपश्यन्, तमाहरन्, तेनायजन्त, सोऽग्निष्टोमेन वसूनया-
जयत्, स उक्थेन रुद्रानयाजयत्, सोऽतिरात्रेणादित्यानयाजय"दित्यादिषु अनेकेषां देवानां प्रति-

पत्तेः कर्मणि प्रवृत्तेर्दर्शनात् । तथाचैवं प्रत्यक्षश्रुत्यैव करणे दर्शिते तत एवाधिकारसिद्धौ, "त्वं देवेषु ब्राह्मणोऽसि यानि ह वै देवत्राणि मरुतो वै देवानां विश" इत्यादिश्रुतिबलेन, तेषु वर्णसत्तायाः, "तौ ह द्वात्रिंशतं वर्षाणि ब्रह्मचर्यमूषतु"रित्यादिष्विन्द्रादीनामाश्रमसत्तायाः, "आदित्या वा असाल्लोकादमुं लोकमाय"न्नित्यादिषु भूमावागत्य यज्ञकरणश्रावणेन देशसत्तायाः, तत एव कालद्रव्यसम्पत्तेरग्निर्होता अश्विनावध्वर्यू इत्यादित्यागानां देवानां च श्रावणाद् विनैवाक्षेपं सर्वबाधकनिरास इष्टः । नच जैमिनिस्मृत्यनवकाशः शङ्क्यः । इदानीं वेदविभागादावाधुनिकानां सर्वज्ञानाभावेन मुख्ययज्ञानधिकारे तान् प्रति तस्यावकाशादिति । अतः कर्माधिकारस्तत्करणं चोपर्यपि सिद्धम् ॥

ननु पूर्वोक्तरीत्या देवेष्वधिकारव्यवस्थापनेन कर्तृत्वापादनात् तैः कर्मकरणे माऽस्तु श्रुतिविरोधः, तथापि शब्दे तु विरोधो भविष्यति । कथमिति चेत्? इत्थम् । अर्थज्ञानानन्तरं हि कर्मकरणम् । अर्थज्ञानं च वेदात् । वेदस्तु साध्यादीनां कर्मकरणं वदति । तच्च साध्याद्युत्पत्तितत्कृतकर्मणोरनन्तरभावि । अतः कर्मकरणार्थं प्रवृत्तानां साध्यादीनां वेदार्थप्रमितिसमये साध्यादिकार्यस्य कर्मणोऽभावेन तद्बोधकवेदभागस्याप्यभावात्तदनित्यत्वापत्तिः । तदापत्तौ च, "वाचा विरूपनित्यये"त्याद्या, "अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा, शिवाद्या ऋषिपर्यन्ताः स्मर्तारोऽस्य न कारका" इत्यादिश्रुतिस्मृतिविरोधापत्तिः । नच तादृशवेदभागोक्ताः साध्यादयः सा यागव्यक्तिश्चान्यैवेति वाच्यम्, तदन्यत्वव्यवस्थापकप्रमाणाभावात् । अतो देवानां कर्मकरणाङ्गीकारे वेदनित्यत्वबोधकश्रुतिविरोध इतिचेत्, न; नात्र श्रुतिविरोधः । कुतः? अतः प्रभवात् । प्रभवः प्राकट्यम्, स च विद्यमानस्य धर्मः । तथाच शब्दोक्तपदार्थानां शब्दादेव प्राकट्येन विद्यमानताऽवधारणान्न पूर्वोक्तो विरोधः । वेदोक्ताः सर्व एव पदार्था आधिदैविकाः पुरुषावयवभूताः । नचैत एव त इति शङ्क्यम् । अनुकृतिसूत्रे विषयवाक्येन भगवतः सर्वानुकार्यत्वनिर्धारात् तेषामनुकारिभ्यो भेदस्य सिद्धत्वात् । अतो लौकिकप्रमाणागोचरो ज्ञानात्मकः प्रपञ्चो भिन्न एव भगवदवयवरूपः । पदानां च वैदिकानां तेनैव सम्बन्ध इति देवैरगम्यमानाः साध्यादयो भिन्ना इति न प्रमाणात्मकाश्रयादिर्न वा शब्दनित्यत्वहानिरिति शब्देऽपि न विरोध इत्यर्थः । ननु लौकिकैरेव द्रव्यादिभिर्यज्ञनिर्वर्तनदर्शनात् कथं वैदिकस्य प्रपञ्चस्यातिरिक्तत्वमुपगन्तुं शक्यमित्याशङ्कायामाह—प्रत्यक्षानुमानाभ्यामिति । तथाचैताभ्यां प्रमाणाभ्यामुपगन्तुं शक्यमित्यर्थः । तत्र प्रत्यक्षं तावदिदानीमपि यजमानो यजमानकृत्यं ऋत्विजश्चर्त्विक्कृत्यं वेदादेवावगच्छन्ति । तथाच यथा तत्कर्म वेदैकसमधिगम्यम्, तथा पदार्था अपि । ननु प्रसिद्धपदसमभिव्याहारादर्मे शक्तौ गृहीतायां पश्चाल्लोकानां वैदिककर्मविषयकं शाब्दं भवति, ततस्तैस्तदनुष्ठीयत इति तत्प्रत्यक्षं भवति । तत्र लौकिकातिरेकश्च वैलक्षण्याद्भासत इति तत्र प्रत्यक्षस्य प्रामाण्यं युक्तम् । पदार्थानां तु सङ्केतग्राहकस्याभावेन सच्छाब्दाभावाद्वैलक्षण्यादर्शनेन तस्यानुपस्थितत्वाच्च कथं तत्प्रत्यक्षमितिचेत्? उच्यते, न ह्यत्र तेषां प्रत्यक्षमुच्यते । किन्तु वेदात् प्रभवस्य । एवं सति यथा कर्मणः प्रभवः, एवं पदार्थानामपि ज्ञेयः । अन्यथा प्रोक्षणादीनां संस्काराणामपार्थत्वमेव स्यात् । किञ्च, पूर्वेषां ब्रह्मादीनां भगवतः साक्षात्कारात्तदवयवरूपाणां पदार्थानामुपस्थितिः सुकरैव स्यात् । ततोऽर्वाचीनानामिदानीन्तनपर्यन्तानां तु सम्प्रदायपारम्पर्यात् सर्वस्य भगवदनुकारित्वज्ञानाच्च भेदे सादृश्ये च ज्ञाते उपमानादेव तेषु शक्तिग्रहः । अप्रत्यक्षत्वेऽपि शाब्दं च भवति । यथा स्वर्गादीनामतीन्द्रियाणाम् । उत्तमानां तु वैलक्षण्यमपि किञ्चिद्भासत एव । यतो जैमिनिमते वेदाद्धर्मावगतिवद् वैयासे मते वेदादेव पदार्थानामप्यवगतिः । किञ्च, जमदग्नीनां पञ्चावत्तमित्यादिकमनुमानम् । मनु-

प्यत्वयज्ञामदग्न्यत्वस्य प्रत्यक्षत्वाभावात् । भारत आजगरे मनुष्यत्वव्याप्यानां ब्राह्मणत्वादीनां दुष्प्रेक्ष्यत्वकथनेन, जैमिनिना रूपपराधाव् कर्तुश्च पुत्रदर्शनमितिसूत्रकरणेन, प्रवरानुमन्त्रणश्रुत्या, "यन्मे माता प्रममादे"ति श्रुत्या च तथा निश्चयात् । ब्रह्मवादे परोक्षज्ञानस्याप्यनुमानत्वेन व्यवहारादिति । तस्मात् कर्मावगतिवत् प्रत्यक्षेण, स्वस्य जामदग्न्यावगतिवत् परोक्षेण च तस्य प्रपञ्चस्यावगतेः शब्देऽपि न विरोध इत्यर्थः ॥

एतदतिदेशेनैव वेदस्यापि नित्यत्वं साधयितुमाह अत एवेत्यादि । अत एव सर्वप्रपञ्चवैलक्षण्यादेव हेतोर्वेदस्य नित्यत्वम् । चकाराद्ब्रह्मतुल्यत्वं, शब्दब्रह्म वेदपुरुष इत्यादिपदवाच्यत्वं च सङ्गृह्यते । एवं सूत्रद्वये शब्दबलविचारेण वेदप्रामाण्यसिद्ध्यर्थं भिन्न एव प्रपञ्च आधिदैविकः सर्वत्र सिद्धः । तेनानुकारिसृष्टेरपि यत् कीर्तनं तत्रापि नानित्यसंयोगः । "सदेव सोम्ये"ति, "हन्ताऽहं मदेव मन्मात्रं द्वितीयमि"ति "विश्वं वै ब्रह्म तन्मात्र"मित्यादिश्रुतिभिर्ब्रह्मोपादानकतया तस्या अपि नित्यत्वावधारणादिति च सिद्धम् ॥

इदानीमुत्तरकाण्डे "तत्तेजोऽसृजते"त्यादिवाक्यानां विचारे तेजःप्रभृतीनां जन्यत्वश्रावणादनित्यत्वे सिद्धे शब्दार्थयोस्तद्वदो अनित्यसंयोगोऽर्थबलेन प्राप्नोतीति तन्निवृत्त्यर्थमाह—समानेत्यादि । वस्तुतस्तु सर्वस्य भगवद्रूपत्वादाविर्भावतिरोभावेच्छयैवानित्यत्वेन भानस्य विष्णुपुराणे, "तदेतदक्षयं नित्यं जगन्मुनिवराखिलम्, आविर्भावतिरोभावजन्मनाशविकल्पवदि"ति जगतो विकल्पचतुष्टयताबोधनेन चोक्तत्वादावृत्तिशङ्कैव नास्ति । यदि पुनर्लोकबुद्धिमनुसृत्य जन्मनाशाङ्गीकारेणानित्यतोपगम्यते, तदापि मृदादीनां पिण्डघटखर्परचूर्णमसपरमाण्ववस्थानां पौनःपुन्यदर्शनाद् व्यक्त्याकृत्योरावृत्तिरङ्गीकार्या । एवमावृत्तावपि, समाननामरूपत्वात्, घटादीनां च पृथुबुध्नोदराविरूपाया आकृतेस्तुल्यत्वाद्, अविरोधः । नित्यानां वैदिकपदार्थानामनित्यपदार्थेन सह सम्बन्धकृतो विरोधो नास्ति । कुतः ? दर्शनात्, स्मृतेश्च । दृश्यते हि लोके कालिकनित्यमल्यशालिषु पितृमातृस्त्रीभर्तृशरीरेषु गङ्गादीपप्रभृतिषु च प्रतिक्षणमन्यान्यत्वेऽपि प्रवाहैक्येनैकतायाः शन्यतायाश्चाभिमानः । दृश्यते च "सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्, दिवं च पृथिवीं चान्तरिक्षमथो सुव"रिति सर्वस्य यथापूर्वत्वबोधिका श्रुतिः । अतो लोकदृष्ट्या पदार्थानित्यत्वे तत्तत्प्रवाहस्य नित्यत्वात् तत्रैव पदानां शक्तिः । इदं चानादिसृष्टिवादिनो मीमांसकस्य मतेऽपि तुल्यम् । अतो यथा अव्यतिरेकश्चार्थेऽनुपलब्ध इत्यत्र व्यवहाराव्यतिरेकेण प्रवाहनित्यतया धर्मे शब्दसम्बन्धस्तद्ग्रहणं च । तथा वस्त्वन्तरेऽपीत्यनित्यसम्बन्धगन्धस्याप्यभावान्न विरोधः । किञ्च, स्मृतेः "सर्ववेदमयेनेदमात्मनात्मात्मयोनिना । प्रजाः सृज यथापूर्वं याश्च मय्यनुशेरत" इति यथापूर्वसृष्टिबोधकस्मृतेः । "ऋषीणां पूर्वचरितस्मरणं स्मृतिरुच्यते" इति स्मृतिसाधारणलक्षणे पूर्वकल्पीयाचारस्मरणस्य बोधनेन सृष्टियथापूर्वतायाः सिद्धेः प्रवाहनित्यत्वस्य सिद्धत्वात् तत्रैव पदानां शक्तेस्तथेत्यर्थः ॥

अर्थबलविचार एव उपासनाविशेषमादाय पूर्वपक्षमाह—मध्वादिष्वित्यादि । ननु छान्दोग्ये "असौ वा आदित्यो देवमधु, तस्य द्यौरेव तिरश्चीनवंशोऽन्तरिक्षमपूपो मरीचयः पुत्रास्तस्य ये प्राञ्चो रश्मयस्ता एव प्राच्यो मधुनाड्य" इत्यादिना मधुविद्यायां सूर्यस्य देवमधुत्वं पञ्चदिक्कानां तद्रश्मीनां पञ्चनाडीत्वं च प्रतिपाद्य अग्रे "तद्यत्प्रथमममृतं तद्वसव उपजीवन्त्यग्निना मुखेने"त्यादिना वसुरुद्रादित्यमरुत्साध्या देवगणाः स्वमुख्येनाग्नीन्द्रवरुणसोमब्रह्मरूपेण मुखेन दृष्ट्वैव तृप्यन्तीति निरूप्य, अग्रे "स एतदेवममृतं वेद वसूनामेवैको भूत्वाग्निनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यती"त्याद्युपासनमुक्तम् । तत्र

देवानां ब्रह्मविद्याधिकारोपगमे विद्यात्वाविशेषान्मधुविद्याविषयत्वाद्धेयवेत्रैक्यापत्त्यानुपपत्तेरादित्यः कथमादित्यमुपासीत । किञ्चाग्रे आदित्याश्रितानि पञ्च रोहितादीन्यमृतान्यनुक्रम्य वस्वादीन् पञ्चदेवगणाँस्तदुपजीवकानुक्त्वा वस्वाद्युपजीव्यान्यमृतानि विजानतो वस्वादिरूपप्राप्त्या स्वगणमुख्यमुखेन तृप्तिरुच्यते । सा चोपासनातः प्रागेव वस्वादिरूपेण वर्तमानानां पुनस्तत्प्राप्तिकथनात् प्राप्यप्राप्त्रोरैक्यापत्त्यानुपपन्ना भवति । नचादित्यवेद्य आदित्यो वस्वादिप्राप्त्या वस्वादयोऽन्य एवेति वक्तुं शक्यम् । प्रमाणाभावात् । अधिकारानङ्गीकारे तु तेषामनुपासकत्वात् प्राप्तफलत्वेन कृतार्थत्वाच्च न देवान्तरकल्पना । नच माऽस्तु मधुविद्यायामधिकारः, तावता ब्रह्मविद्यानधिकारो न वक्तुं शक्यः । तेषां मोक्षार्थित्वात्तत्र बाधकाभावाच्चेति वाच्यम् । ब्रह्मणोऽपि देवत्वात्तस्याप्युपासककोटिप्रवेशेनोपास्यत्वप्राप्यत्वयोर्विघटनादिति । अत्र मध्वादीत्यादिपदेन, "अग्निः पादो वायुः पाद आदित्यः पादो दिशः पाद" इति, "वायुर्वा व सम्वर्ग" इति "आदित्या ब्रह्मे"त्यादेश इत्याद्याः सर्वा एव देवोपासनाविद्या गृहीताः । अतस्तासु पूर्वोक्तरीत्या देवानामुपासकत्वासम्भवात् सर्वास्वेव विद्यासु देवानामनधिकारं जैमिनिराचार्यो मन्यत इत्यर्थः ॥

अधिकारानङ्गीकारे पुनरुपपत्त्यन्तरमाह—ज्योतिषीत्यादि । तेषां सर्वेषामेवानधिकारः प्रत्यक्षत एव दृश्यते । सर्वेऽपि नक्षत्रादिरूपेण महाभोगवन्तो जगदवभासकत्वेन ज्योतिश्चक्रे दृश्यन्ते, तस्मादिति ॥

नच सर्वेषां ज्योतिश्चक्रे स्थित्यभावः शङ्क्यः । तैत्तिरीयारण्यके शिशुमारोपासने "अग्निः पुच्छस्य प्रथमं काण्डं, तत इन्द्रस्ततः प्रजापति"रित्यादिश्रावणात् । न हि तादृशां प्राप्तैश्वर्याणां सर्वोपास्यानामुत्तरमार्गवर्तित्वेनाधिकारसमाप्तौ मोक्षभाजां ज्ञानकर्मणोः कश्चनोपयोगोऽस्ति । तस्मान्न तेषामधिकार इति प्राप्ते, उच्यते—

तुशब्दः पूर्वपक्षं व्यावर्तयति । भावं देवानां ज्ञानकर्माधिकारसद्भावं बादरायण आचार्यो मन्यते । गौणसिद्धान्तो नायमिति बोधनाय स्वनामग्रहणम् । ननु यद्यापेक्षानेनाधिकारोऽङ्गीक्रियते, तदा जैमिनेरपि तथात्वात् तौल्यमित्यतः प्रमाणमाह—अस्ति हीति । नास्माभिरापेक्षानेनाधिकार उच्यते, किन्त्वस्ति प्रत्यक्षं देवानामुभयाधिकारज्ञापकं वचनम् । "प्रजापतिरकामयत प्रजायेयेति, स एतदग्निहोत्रं मिथुनमपश्यत्, तदुदिते सूर्येऽजुहोत्, देवा वै सत्रमासतर्द्धिपरिमितं यशस्कामा" इत्यादि । तथा "यो यो देवानां प्रत्यबुध्यत स एव तदभव"दित्यादि । तथेन्द्रप्रजापतिसम्वादे इन्द्रस्य ब्रह्मविद्याधिकारः । नचैतेषामर्थवादत्वेन स्वार्थे प्रामाण्याभावाच्चैतैरधिकारसिद्धिरिति शङ्क्यम् । अत्र प्रथमवाक्यस्य विद्वद्वाक्यशेषत्वेन स्वार्थे प्रामाण्याभावे तदुक्तार्थस्याप्रामाणिकत्वात्तज्ज्ञानेन "यस्यैवं विदुषोऽग्निहोत्रं जुह्वति प्रैव जायत" इति फलस्याप्यभावापत्तेः । अतस्तदनुरोधेनैव प्रजापतेरग्निहोत्रद्रष्टृत्वं तद्धोतृत्वं चावश्यमभ्युपेयम् । नच प्रजापतिरिति भाविनी सञ्ज्ञेति वक्तुं शक्यम् । "यो ब्रह्माणं विदधाति पूर्व"मिति श्रुतेस्ततः पूर्वस्यान्यस्याभावात् । एवं सिद्ध एकस्मिन् देवेऽधिकारे, देवा वै इत्यादिभिर्यो य इत्यादिभिश्चान्येषामपि कर्मणि ज्ञाने चाधिकारो निश्चेतव्यः । यत्र पुनर्देवानां फलभोग एव तत्रयपमूता उपास्या भिन्ना एव, अनशनात् । न हि जीवा दृष्ट्वा तृप्यन्तीति । तस्माद्वेदनित्यत्वाय शब्दफलविचार एवादरणीय इति देवानामप्यधिकार इति सिद्धम् ॥

## ९ शुगस्येत्यधिकरणम् ।

( अपशूद्राधिकरणारम्भः )

**शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि ॥ १।३।३४ ॥**

इदानीं शूद्रस्याधिकारो निराक्रियते । यथा कर्मणि–"एतया निषादस्थपतिं याजयेत् । सा हि तस्येष्टिः" ( आ. श्रौ. सू. ९।१४।१२ ) इति श्रुतेर्हविष्कृदाधावेति शूद्रस्येति लिङ्गाद् दोहादौ च शूद्रस्याधिकारः । एवमिहापि सम्वर्गविद्यायां शूद्रस्याधिकार इति तन्निराकरणार्थमिदमधिकरणमारभ्यते । एवं श्रूयते "जानश्रुतिर्ह

---

अधिकारिनिरूपणप्रस्तावे शूद्रस्याधिकाराभावार्थं शुगाधिकरणमाहुः—**शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि** । ननूपनयनादि तस्य नास्तीत्यधिकारसम्भावनैव नास्तीति चेन्न, केवलभगवत्तत्त्वज्ञानविचारे उपनयनापेक्षाभावात् । तदुक्तं वैश्वानरविद्यायाम् "तान्हानुपनीयैतदुवाचे"ति । तान् शूद्रान् ह अनुपनीय एतत् उवाचेति तदर्थः । ननु शूद्रस्य शास्त्रीयज्ञानाभावान्नाधिकार इत्यत आहुः—**यथेति** । एवंच निषादस्य विद्वत्ताऽभावेऽपि "निषादस्थपतिं याजयेदि"त्यादिना यथा कर्मण्यधिकारः, एवं शूद्रस्यापि विद्यायामित्यर्थः । ननु निषादे श्रुतिप्रमाणं शूद्रे किमित्यत आहुः—**हविष्कृदाधावेति** । हविष्कृदादावित्यपपाठः । दर्शपूर्णमासप्रकरणे हविःकण्डनपेषणार्थं हविष्कृदेहि त्रिराह्वयतीत्यापस्तम्बसूत्रे हविष्कृदाह्वानं विहितम् । एवं च कण्डने शूद्रस्याधिकारोऽस्तीत्यनेन लिङ्गप्रमाणं शूद्रे दर्शितमिति भावः । साधकान्तरमाह—**दोहादौ चेति** । तथाचानेनापि शूद्राधिकारः स्पष्ट एवेत्यर्थः । **श्रूयते** । छान्दोग्ये षष्ठप्रपाठकारम्भे श्रूयते ॥

**अथविषयवाक्यम्—**

ॐ जानश्रुतिर्ह पौत्रायणः श्रद्धादेयो बहुदायी बहुपाक्य आस स ह सर्वत आवसथान्मापयाञ्चक्रे सर्वत एव मेऽत्स्यन्तीति ॥ १ ॥ अथ ह हꣳसा निशायामतिपेतुस्तद्धैवꣳ हꣳसो हꣳसमभ्युवाद हो होयि भल्लाक्ष भल्लाक्ष जानश्रुतेः पौत्रायणस्य समं दिवा ज्योतिराततं तन्मा प्रसाङ्क्षीस्तत्त्वा मा प्रधाक्षीरिति ॥ २ ॥ तमु ह परः प्रत्युवाच कम्वर एनमेतत्सन्तꣳसयुग्वानमिव रैक्वमात्थेति यो नु कथꣳ सयुग्वा रैक्व इति ॥ ३ ॥ यथा कृतायविजितायाधरेयाः संयन्त्येवमेनꣳ सर्वं तदभिसमेति यत्किञ्च प्रजाः साधु कुर्वन्ति यस्तद्वेद यत्स वेद स मयैतदुक्त इति ॥ ४ ॥ यदु ह जानश्रुतिः पौत्रायण उपशुश्राव स ह सञ्जिहान एव क्षत्तारमुवाचाङ्गारे ह सयुग्वानमिव रैक्वमात्थेति यो नु कथꣳ सयुग्वा रैक्व इति ॥ ५ ॥ यथा कृताय विजितायाधरेयाः संयन्त्येवमेनꣳ सर्वं तदभिसमेति यत्किञ्च प्रजाः साधु कुर्वन्ति यस्तद्वेद यत्स वेद स मयैतदुक्त इति ॥ ६ ॥ स ह क्षत्तान्विष्य नाविदमिति प्रत्येयाय तꣳ होवाच यत्रारे ब्राह्मणस्यान्वेषणा तदेनमार्च्छेति ॥७॥ सोऽधस्ताच्छकटस्य पामानं कषमाणमुपोपविवेश तꣳ हाभ्युवाद त्वं नु भगवः सयुग्वा रैक्व इत्यहꣳ ह्यरा ३ इति ह प्रतिजज्ञे स ह क्षत्ताऽविदमिति प्रत्येयाय ॥ ८ ॥ इति प्रथमः खण्डः ॥ १ ॥

तदु ह जानश्रुतिः पौत्रायणः षट् शतानि गवां निष्कमश्वतरीरथं तदादाय प्रतिचक्रमे तꣳ हाभ्युवाद ॥ १ ॥ रैक्वेमानि षट् शतानि गवामयं निष्कोऽयमश्वतरीरथो नु म एतां भगवो देवताꣳ शाधि यां देवतामुपास्स इति ॥ २ ॥ तमु ह परः प्रत्युवाचाह हारे त्वा शूद्र तवैव सह गोभिरस्त्विति तदु ह पुनरेव जानश्रुतिः पौत्रायणः सहस्रं गवां निष्कमश्वतरीरथं दुहितरं तदादाय प्रति-

पौत्रायणः" (छां. ४।२।३) इत्यत्र हंसवाक्यश्रवणानन्तरं सयुग्वनो रैकस्य समीपं गतो जानश्रुतिः "पौत्रायण रैकेमानि षट्शतानि गवामि"त्यादिना देवतां पृष्टः प्रत्युवाच। "अह हारेत्वा शूद्र तवैव सह गोभिरस्तु" (छां.४।२।३) इत्यादिना जानश्रुतिं शूद्रशब्देन सम्बोध्य, पुनश्च "शूद्रानेन मुखेने"त्युक्त्वा सम्वर्गविद्यामुपदिष्टवान्। अतोऽत्र विद्यायां जातिशूद्रस्याप्यधिकार इत्याशङ्क्य परिहरति। नात्र शूद्रशब्दो जातिशूद्रवाची। किन्तु मत्सरयुक्तस्त्वमत्र नाधिकारीति तथासम्बोधनम्। तदाह, 'शुक् शोकः अस्य जानश्रुतेः समजनि। तत्र हेतुः, तदनादरश्रवणात्। तस्माद्धंसादनादरस्य श्रवणात्। कं वर एनमेतत् सन्तं सयुग्वानमिव रैकमात्थेति स्वापकर्षश्रवणात्। किमतो यद्येवमत आह—

( शूद्रशब्दव्युत्पत्तिः )

तदाद्रवणात्। तत्तदनन्तरमाद्रवणात्। शुचमन्वाद्रवतीति शूद्रः। परोक्षवा-

---

चक्रमे.॥ ३ ॥ तꣳ हाभ्युवाद रैकेदꣳ सहस्रं गवामयं निष्कोऽयमश्वतरीरथ इयं जायाऽयं ग्रामो यस्मिन्नास्सेऽन्वेव मा भगवः शाधीति ॥ ४ ॥ तस्या ह मुखमुपोद्गृह्णन्नुवाचाजहारेमाः शूद्रानेनैव मुखेनालापयिष्यथा इति ते हैते रैक्वपर्णानाम महावृषेषु यत्रास्मा उवास तस्मै होवाच ॥ ५ ॥ इति द्वितीयः खण्डः ॥ २ ॥

वायुर्वाव सम्वर्गो यदा वा अग्निरुद्वायति वायुमेवाप्येति यदा सूर्योऽस्तमेति वायुमेवाप्येति यदा चन्द्रोऽस्तमेति वायुमेवाप्येति ॥ १ ॥ यदाप उच्छुष्यन्ति वायुमेवापियन्ति वायुर्ह्येवैतान्सर्वान्संवृङ्क्त इत्यधिदैवतम् ॥ २ ॥ अथाध्यात्मं प्राणो वाव सम्वर्गः स यदा स्वपिति प्राणमेव वागप्येति प्राणं चक्षुः प्राणꣳश्रोत्रं प्राणं मनः प्राणो ह्येवैतान्सर्वान्संवृङ्क्त इति ॥३॥ तौ वा एतौ द्वौ सम्वर्गौ वायुरेव देवेषु प्राणः प्राणेषु ॥ ४ ॥ अथ ह शौनकं च कापेयमभिप्रतारिणं च काक्षसेनिं परिविष्यमाणौ ब्रह्मचारी बिभिक्षे तस्मा उ ह न ददतुः ॥ ५ ॥ स होवाच महात्मनश्चतुरो देव एकः कः स जगार भुवनस्य गोपास्तं कापेय नाभिपश्यन्ति मर्त्या अभिप्रतारिन्बहुधा वसन्तं यस्मै वा एतदन्नं तस्मा एतन्न दत्तमिति ॥ ६ ॥ तदु ह शौनकः कापेयः प्रतिमन्वानः प्रत्येयायात्मा देवानां जनिता प्रजानाꣳहिरण्यदꣳष्ट्रो बभसोऽनसूरिर्महान्तमस्य महिमानमाहुरनद्यमानो यदनन्नमत्तीति वै वयं ब्रह्मचारिन्नेदमुपास्महे दत्तास्मै भिक्षामिति ॥७॥ तस्मा उ ह ददुस्ते वा एते पञ्चान्ये पञ्चान्ये दश सन्तस्तत्कृतं तस्मात्सर्वासु दिक्ष्वन्नमेव दशकृतꣳ सैषा विराडन्नादी तयेदꣳ सर्वं दृष्टꣳ सर्वमस्येदं दृष्टं भवत्यन्नादो भवति य एवं वेद य एवं वेद ॥ ८ ॥ इति तृतीयः खण्डः ॥ ३ ॥

अथ भाष्यस्थविषयवाक्यस्थविषमपदव्याख्या । स युग्वन इति। युज्यतेति युग्वा शकटः तेन सह वर्तमानः सयुग्वा तस्य। तस्य पङ्गुत्वात्सर्वदा शकटेन सह वर्तते इति। रयिक्व इति तस्य नाम। जनश्रुतेरपत्यं जानश्रुतिः। पौत्रायणः। पुत्रस्य पौत्रः। उपास्यां देवताम्। अरे शूद्र त्वा, त्वां अ ह ह धिक्। गोभिः सह यत् आनीतं तत्सर्वं तव समीप एवाऽस्तु। मुखेन। द्वारेण। सूत्रं व्याकुर्वन्ति—अत इति। कं वर एनमेतदिति। कं उ अरे एनम् एतत् इति पदच्छेदः। कं वराकमित्यर्थः। उ। अरे। शुचमन्विति। अत्र शुचं द्रवतीतिवक्तव्ये आद्रवतीत्युक्तं तत्र दीर्घः पृषोदरादित्वाद्वर्णान्तरस्याप्युपलक्षकः।

दार्थ दीर्घः सर्वज्ञत्वख्यापनाय । रूढिर्योगमपहरतीति न्यायात्कथमेवमत आह—सूच्यते हि । स्वस्य सर्वज्ञत्वं सूच्यते । हंसवाक्याच्छोके जाते त्वमागत इति । अन्यथा प्रपन्नस्य धिकारवचनमनर्थकं स्यात् । युक्तश्चायमर्थो ब्रह्मविदः सर्वज्ञतेति । तस्य मात्सर्यनिराकरणं वा सम्बोधनफलम् । तस्माच्छुचं प्रत्याद्रवणादेव शूद्रपदप्रयोगो न जातिशूद्रवाची ॥ १।३।३४ ॥

( जातिशूद्रवाचित्वे विचारः )

कुत एवमत आह—

'क्षत्रियत्वावगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात् ॥ १।३।३५ ॥

जानश्रुतेः पौत्रायणस्य क्षत्रियत्वमवगम्यते, गोनिष्करथकन्यादानात् । न हि क्षत्तृप्रभृतयो ह्येते क्षत्रियादन्यस्य सम्भवन्ति । राजधर्मत्वात् । न चान्यो ब्राह्मणाय भार्यात्वेन कन्यां दातुं शक्नोति । न च प्रथमंहंसवाक्यं शूद्रे सङ्गच्छते ।

---

योगेन शूद्रेति सम्बोधनं परोक्षवादार्थं । सूत्रे आ इति दीर्घं किमर्थमत आहु—सर्वज्ञत्वेति । ननु जातिशूद्रवाचित्वे मुख्यत्वमित्याशयेनाहुः—रूढिरिति । एवमिति । योगादरणमित्यर्थः । योगादरणस्य प्रयोजनमाहुः—स्वस्येति । अन्यथा । सर्वज्ञत्वख्यापनाभावे । ननु स्वस्य सर्वज्ञत्वख्यापनेन स्वोत्कर्षत्वख्यापनं प्रपन्नस्याधिकारवचनमिति । दोषद्वयं मनसि निधाय पक्षान्तरमाहुः—तस्येति । तस्मादिति । योगादरे एतादृशगमकादित्यर्थः ।

क्षत्रियत्वावगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात् । क्षत्तृप्रभृतय इति । अवगम्यते । अनुमीयते । अनुमानेहेतुमाहुः—गोनिष्केति । निष्कं सुवर्णचतुष्टयम् । क्षत्रियप्रभृतय इत्यपपाठः । क्षत्तृशब्दस्य, क्षत्तृस्थापनमर्थः । नामैकदेशेनामग्रहणम् । बहुवाक्यत्वाच्च सार्थकरणभोजनक्षत्रन्ताः राजधर्माः । ननु बहुवाक्यत्वप्रभृतय इति कुतो नोक्तमिति चेन्न, बहुवाक्यत्वं सधनशूद्रे कदाचित्स्यादिति तन्नोक्तम् । यद्यपि क्षत्रस्थापनमन्ते उक्तम्, तथापि राजधर्माणां समुच्चयेनोक्तत्वात्तस्याप्यादित्वं सम्भवति । क्वचित्पुस्तके क्षत्रप्रभृतय, इतिपदमेव नास्ति । नह्येते क्षत्रियादन्यस्य सम्भवन्ति इत्यपि पाठः । अयं पाठः समीचीनः प्रतिभाति । कुतः ? न ह्येतेत्यत्र एतेत्यनेन पूर्वोक्तहेतुवाक्यस्थगोनिष्कादिराजधर्माणामेव, ग्रहणात् । किञ्चाग्रेऽपि वाक्ये कन्यां दातुं शक्नोतीत्युक्त्या पूर्वोक्तानामेव ग्रहणम् । न तु क्षत्तृप्रभृतीनामिति ॥ ननु "चातुर्वर्ण्यमेके समामनन्ती"त्यादिवाक्यात् ब्राह्मणस्य चातुर्वर्ण्यविवाहस्योक्तत्वात् शूद्रात्कन्याग्रहणमुचितमत आहुः—नचेति । प्रथमहंसवाक्यमिति । हो हो यिमल्लाक्षेत्यादिप्रथमवाक्यमित्यर्थः । सङ्गच्छत इति । तादृशवाक्यप्रतिपादकमाहात्म्यं शूद्रे न सङ्गच्छेतेत्यर्थः । इदं च विषयवाक्ये

---

१ हो होयि मल्लाक्ष जानश्रुते. पौत्रायणस्य समं दिवा ज्योतिराततं तन्मा प्रसाङ्क्षीस्तत्त्वा मा प्रधाक्षीरिति वाक्यं प्रथमं हंसवाक्यम् । तदर्थश्च, हो होयीति भयसूचकं सम्बोधनम् । दिवेति द्युलोकेन दिनेन वा । प्रधाक्षीरिति पुरुषव्यत्ययः । मा प्रदहत्वित्यर्थः । त्वा इत्यत्र सोऽर्थादेशो वा । तथाच, एतादृशमाहात्म्यस्य शूद्रे अश्रुतत्वादस्मृतत्वाच्च न शूद्रे सङ्गच्छते । एवं रयिकक्तृतादुपदेशाद शूद्रे विद्योपदेशस्य काप्यसिद्धत्वादनापि शूद्रश्रोतृकत्वस्याशक्यवचनत्वात्तथेति बोध्यम् । एतेन "यथा कृताय विजितायाधरेया. सयन्त्येवमेतम् सर्वं तदभिमभिसमैति यत्किञ्च प्रजाः साधु कुर्वन्ती"ति रयिकमाहात्म्यबोधकस्याप्यत्र प्रामाण्यम् । हीनान्यवर्णकन्याया प्रथमत- सङ्ग्रहे स्ववर्णहानेर्भलन्दनोपाख्याने सिद्धत्वाद्रयिकप्रथमविवाहस्यान्यत्राप्रसिद्धेरेतत्कन्याग्रहणेन दृष्यताया रयिके तादृश्यमाहात्म्यस्यासङ्गत्यापत्तेरिति । ननु हंसवाक्यस्य धर्मिष्ठत्वादिमात्रबोधकत्वम्, न तु क्षत्रियासाधारण्यमित्याशङ्क्य, सूत्रशेषे चैत्ररथेन क्षत्रियात्वावगतिः समाहिता । तथाच, काक्षसेनिमित्यत्र "कक्षःस्यादन्तरीयस्य पश्चादञ्चलपल्लवे, स्पर्धापदे च दोर्मूले" इति कोशे स्पर्धास्थानं कक्षापदेनोच्यते । एवं हि चित्ररथात्स्पर्धास्थानरूपा

उपदेशाचेति चकारार्थः । तथापि सम्वर्गविद्यायां शूद्रस्यैवाधिकारं मन्वानस्य निराकरणार्थं हेतुमाह—

उत्तरत्र चैत्ररथेन लिङ्गात् । "अथ ह शौनकं च कापेयमभिप्रतारिणं च काक्षसेनिम्" (छां. ४।३।५) इत्युत्तरत्र ब्राह्मणक्षत्रियौ तौ निर्दिष्टौ । कक्षा सेना यस्येति । कक्षसेनस्यापत्यं काक्षसेनिरिति । अस्य व्याख्यानं चैत्ररथ इति । चित्रा रथा यस्य तस्यापत्यं तेन चैत्ररथेन कक्षारूपा रथा इति व्याख्यानम् । "एतेन वै चित्ररथं कापेया अयाजयन्" ( तां. ब्रा. २०।१२।५ ) इति । शौनकश्च कापेयो याजकश्च । याज्यश्च चित्ररथस्य पुत्रः काक्षसेनिरिति । [1]ब्रह्मचारी ब्रह्मवित् । इमौ तु सम्वर्गविद्योपासकौ । प्राणाय हि भिक्षा । तस्मान्न ददतुः । उभावपि श्लोकौ भगवतः । तेन प्रकृतेप्येतौ गुरुशिष्यौ ब्राह्मणक्षत्रियावेवेति गम्यते । तस्मान्न जातिशूद्रः सम्वर्गविद्यायामधिकारी ॥ १।३।३५ ॥

( सर्वथा शूद्रस्यानधिकारः )

संस्कारपरामर्शात्तदभावाभिलापाच्च ॥ १।३।३६ ॥

इदानीं शूद्रस्य क्वचिदपि ब्रह्मविद्यायामधिकारश्चेदत्रापि कल्पेत । तत्तु नास्ति । सर्वत्र संस्कारपरामर्शात् । उपनयनसंस्कारः सर्वत्र परामृश्यते । "तं होपनिन्ये"

---

स्पष्टम् । उपदेशादिति । रयिक्ककर्तृकब्रह्मविद्योपदेशादित्यर्थः । सूत्रशेषमवतारयन्ति तथापीति । उत्तरत्र । उपसंहारवाक्ये । तेन चैत्ररथेनेति । क्षत्रियत्वावगतिरिति शेषः । चित्ररथपदव्याख्यानत्वं काक्षसेनिपदस्याहुः—कक्षारूपा इति । कक्षापदस्य स्पर्द्धावाचकत्वेन कोशे प्रसिद्धिः । एवंच रथस्य चित्रत्वेन स्पर्द्धाश्रयत्वं रथानां सम्भवतीति चित्रपदेन कक्षापदं रथपदेन सेनापदं चोत्पद्यते इति भावः । एवं व्याख्याने बीजमाहुः—एतेनेति । अयाजयन्नित्यन्तं भाष्ये । अग्रेच इति । "एतेन वै चैत्ररथं कापेया अयाजयन् तमेकाकिनमन्नाद्यस्याध्यक्षमकुर्वंस्तस्माच्चैत्ररथो नामैकाक्षत्रपतिर्जायते"ति । इदं वाक्यं सामवेदे द्विरात्रे उक्तम् । शौनकश्चेति । तथा च कापेयसम्बन्धेन काक्षसेनिश्चैत्ररथ इति भावः । ब्रह्मचारीत्यादिविषयवाक्ये स्पष्टम् उपसंहरन्ति—तस्मादिति ।

संस्कारपरामर्शात्तदभावाभिलापाच्च । सर्वथा शूद्रस्याधिकारो नास्तीति सूचयितुं सूत्रमाह—संस्कारेति । सर्वत्रेति । उपनिषत्सु । परामर्शमेवाहुः—तं हेति । छन्दोग्ये सनत्कुमार-

---

रथा इति हेतौ. कक्षापदं चित्रपदव्याख्यानम् । सेनापदं च रथपदव्याख्यानमित्यर्थ. । एव क्लेशेन व्याख्याने किं बीजमित्याकाङ्क्षाया एतेन वै चित्ररथ कापेया अजायन्निति भाष्यम् । तथाच छन्दोगाना द्विरात्रे श्रूयते "एतेन वै चैत्ररथ कापेया अजायंस्तमेकाकिनमन्नाद्यस्याध्यक्षमकुर्वंस्तस्माच्चैत्ररथो नामैक क्षत्रपतिर्जायत" इति । एवं हि समानान्वयाना समानान्वया एव याजका भवन्तीति प्रायेण दृष्टम् । अत. कापेयसम्बन्धात्काक्षसेनिश्चैत्ररथ इति तयेत्यर्थः ।

[1] ब्रह्मचारी ब्रह्मविदित्यस्याभासे इमौ सम्वर्गविद्योपासकाविति । "अथ ह शौनकं च कापेयमभिप्रतारिणं च काक्षसेनिं परिविष्यमाणौ ब्रह्मचारी बिभिक्षे तस्मा उ ह न ददतुरि"ति श्रुतिः सम्वर्गविद्योपदेशानन्तरं वर्तते । सम्वर्गविद्या च "वायुर्वाव सम्वर्गो यदा वा अग्निरुद्वायति वायुमेवाप्येति, यदा सूर्योऽस्तमेति वायुमेवाप्येति । यदा चन्द्रोऽस्तमेति वायुमेवाप्येति यदाप उच्छुष्यन्ति वायुमेवापियन्ति वायुर्ह्येवैतान् सम्वृङ्क्ते इत्यधिदैवतम् । अथाध्यात्मं प्राणो वा व सम्वर्गः स यदा स्वपिति प्राणमेव वागप्येति प्राणं चक्षुः प्राणं श्रोत्रं प्राणं मनः प्राणो ह्येवैतान्सर्वान्सम्वृङ्क्ते इति" । तौ वा एतौ द्वौ सम्वर्गौ वायुरेव देवेषु प्राणः प्राणेष्विति श्रुत्युक्त । सम्वर्ग इत्यस्य सम्वृङ्क्ते इति व्युत्पत्तिः । उद्वायति उद्वासनं करोति शाम्यति । अप्येति अपि एति सम्वृङ्क्ते ग्रसति । देवतेषु अधिदैवतम् । अव्ययीभाव. । आत्मसु अध्यात्मम् ।

( श. ब्रा. ११।५।३।१३ ) "अधीहि भगव इति होपससाद" । (छां. ७।१।१) "तान्हानुपनीय" (छां. ५।११।७) इत्यादिप्रदेशेषूपनयनपूर्वकमेव विद्यादानं प्रतीयते । शूद्रस्य तु तदभावाभिलापात् । "चतुर्थ एकजातिस्तु शूद्र" इति–"न शूद्रे पातकं किञ्चिन्न च संस्कारमर्हति" ( म. स्मृ. १०।१२ ) इति शूद्रस्य संस्कारनिषेधात् । चकारात्– "न शूद्राय मतिं दद्यात्" ( म. स्मृ ४।८० ) इति निषेधात् ॥ १।३।३६ ॥

( सत्यकामोपदेशे विचारः )

**तदभावनिर्धारणे च प्रवृत्तेः ॥ १।३।३७ ॥**

इतश्च न शूद्रस्य सर्वथाधिकारः । तदभावनिर्धारणे शूद्रत्वाभावनिर्धारण एव गुरुशिष्यभावप्रवृत्तेः । "सत्यकामो ह जाबालः" ( छां. ४।४।१ ) इत्यत्र गौतमः सत्यकाममुपनिन्ये । "नैतदब्राह्मणो विवेक्तुमर्हति" ( छां. ४।४।५ ) इति सत्यवचनेन शूद्राभावं ज्ञात्वैव । चकार एवार्थे । चकारेण निर्द्धारणमुभयज्ञानार्थम् । वर्णित्वं शूद्राभावं च । तस्मान्न शूद्रस्याधिकारः ॥ १।३।३७ ॥

( शूद्रस्यश्रवणाध्ययनप्रतिषेधः )

**श्रवणाध्ययनार्थप्रतिषेधात्स्मृतेश्च ॥ १।३।३८ ॥**

दूरे ह्यधिकारचिन्ता । वेदस्य श्रवणमध्ययनमर्थज्ञानं त्रयमपि तस्य प्रतिषिद्धम् । तत्सन्निधावन्यस्य च । "अथास्य वेदमुपशृण्वतस्त्रपुजतुभ्यां श्रोत्रप्रपूरणम्" इति । "पद्यु ह वा एतच्छ्मशानं यच्छूद्रः । तस्माच्छूद्रसामीप्ये नाध्येतव्यम्" इति । "उदाहरणे जिव्हाच्छेदो धारणे शरीरभेदः" (गौ. सू. १२।४) इति दोहादौ शूद्रसम्बन्धे मन्त्राणामभाव एव ।

---

नारदसम्वादस्थं वाक्यमाहुः—अधीहीति । वैश्वानरविद्यास्थं प्रतीकमाहुः—तान्हेति ।

**तदभावनिर्द्धारणे च प्रवृत्तेः** । सत्यकामस्य ब्राह्मणबीजत्वेऽपि व्यभिचारजन्यत्वेन शूद्रत्वमिति कथं तेन गौतमोपदेशः कृत इति शङ्कानिवारणार्थं सूत्रमाह—**तदभावेति** । **प्रवृत्तेरिति** । जाबालगौतमयोरिति शेषः । तदभावनिर्धारणमेव विशदयन्ति–**सत्यकामो हेति** । इत्यत्र । छान्दोग्ये । **सत्यवचनेनेति** । तथाच, वामदेव्यसामोपासकस्य न काञ्चनपरिहरेदिति वचनेन सर्वगत्वाभ्यनुज्ञानेन तस्य व्यभिचारदोषो नास्तीति भावः । ज्ञात्वैव प्रवृत्तेरिति पूर्वेण सम्बन्धः । किं तदुभयमित्यतआहुः—**वर्णित्वमिति** । क्वचिद्वर्णत्वमित्यपि पाठः । अमृते जारजः कुण्डोमृते भर्तरि गोलक इति । तयोर्वर्णित्वाभावशङ्कायां अत्र व्यभिचाराभावाद्वर्णित्वमित्युक्तम् । **शूद्राभावत्वमिति** । तथाच "सकामो हे"तिश्रुतौ सन्देहो नास्तीति भावः ।

**श्रवणाध्ययनार्थप्रतिषेधात् स्मृतेश्च** । **तत्सन्निधाविति** । शूद्रसन्निधौ ब्राह्मणेन श्रवणं कृतं चेत् दोषः । **अथास्येति** । वेदमुपशृण्वतः अस्य शूद्रस्येत्यन्वयः । **त्रपुजतुभ्यामिति** । त्रपुः सीसं जतुर्लाक्षा एताभ्यामग्निवर्णाभ्यां शूद्रस्य श्रोत्रपूरणमित्यर्थः । **पद्यवेति** । पदिव उवेति पदच्छेदः । **उदाहरणे** । उच्चारणे । **धारणे** । अभ्यासेन धारणे । ननु दर्शपूर्णमासेष्वित्यादौ श्रौतकर्मणि गोदोहने शूद्रस्याधिकार उक्त इत्यत आहुः—**दोहादाविति** । सान्नाय्यसम्बन्धिदोहादावित्यर्थः । **अभाव इति** प्रथममध्वर्युणा समन्त्रक यत्किञ्चिद्दोहे कृते तदनन्तरं शूद्रेणामन्त्रकदोह एव क्रियते इति श्रौतसूत्रे स्पष्टम् ।

( तत्र स्मृतिप्रमाणं च )

**स्मृतियुक्त्यापि वेदार्थे न शूद्राधिकार इत्याह-स्मृतेश्च । "वेदाक्षरविचारेण शूद्रः पतति तत्क्षणात्" ( पा. स्मृ. १।७३ ) इति । चकारस्त्वधिकरणसम्पूर्णत्वद्योतकः । स्मार्तपौराणिकज्ञानादौ तु कारणविशेषेण शूद्रयोनिगतानां महतामधिकारः । तत्रापि न कर्मजातिशूद्राणाम् । तस्मान्नास्ति वैदिके क्वचिदपि शूद्राधिकार इति स्थितम् ॥ १।३।३८ ॥ ९ ॥**

---

शूद्राधिकारः स्मृत्याऽपि निषिध्यते इत्याह—**स्मृतीति । कारणविशेषेणेति** । शापादिकारणविशेषेणेत्यर्थः । अत्र क्वचित् श्रवणे शूद्रस्याधिकारः क्वचिन्नेति प्रकाशे श्रीगोस्वामिचरणैः प्रपञ्चितमिति विस्तरभयाद्विरम्यते । इति नवमाधिकरणम्[1] ॥

---

१ अत्रेत्थं व्याख्यानान्तराणि—

(१) तत्र शाङ्कराः—पूर्वं यथा "तद्यो यो देवानाम् ......" इति देवशब्दश्रुत्या मनुष्याधिकारनियमापवादेन देवानामधिकार उक्तः, तथेह शूद्रशब्दश्रुत्या द्विजात्यधिकारनियममपोद्य शूद्रस्याप्यधिकारोऽस्त्विति दृष्टान्तसङ्गत्येदमाह । अथ पूर्वपक्षे जातिशूद्रस्यापि ब्रह्मविद्यायां त्रैवर्णिकादविशेषः फलम्, सिद्धान्ते ततो विशेष इति विवेकः । छान्दोग्ये सम्वर्गविद्यायां श्रूयते—"अहहारे त्वा शूद्र तवैव सह गोभिरस्तु" इति । तत्र श्रूयमाणस्य शूद्रस्य ब्रह्मविद्यायामधिकारोऽस्ति न वेति सन्देहे, अस्तीति पूर्वः पक्षः । सिद्धान्तस्तु—अस्य जानश्रुतेः क्षत्रियस्य तदनादरश्रवणात् तस्य हंसस्यानादरश्रवणाद्या शुगुत्पन्ना, सा शूद्रशब्देन सूच्यते हि रैक्वेण स्वस्य सर्वज्ञत्वज्ञापनार्थम् । योगेनापि शूद्रशब्दस्य क्षत्रियपरत्वमाह—तदाद्रवणात् । तं रैक्वं प्रति जानश्रुतिः विद्याराहित्यजनितया शुचा दुद्रावेति शूद्रो जानश्रुतिरित्युच्यते । अतो न शूद्रस्याधिकार इत्यर्थः ॥ ननु मुख्य एव शूद्रो जानश्रुतिरस्तु, किं जघन्येन योगेनेत्यत आह—जानश्रुतिर्न मुख्यशूद्रः । कुतः? क्षत्रियत्वावगतेः क्षत्रियत्वस्यावगतेः । तत्कस्मात्, उत्तरत्र सम्वर्गविद्यावाक्यशेषे चैत्ररथेन प्रसिद्धक्षत्रियेण अभिप्रतारिणा समभिव्याहारात्मकलिङ्गादित्यर्थः । समानजातीयानामेव हि प्रायेण सहचारो भवतीति भावः । अतो न जातिशूद्रस्याधिकार इति सिद्धम् । ननु तस्माभाधिकार इत्यत आह । "त होपनिन्ये" "अधीहि भगव इति होपससाद" इत्यादिविद्याप्रदेशेषूपनयनादिसंस्कारपरामर्शात् । तर्हि शूद्रस्याप्युपनयनं कल्प्यतामित्यत आह—तदभावाभिलापाच्च । "न शूद्रे पातकं किञ्चिन्न च संस्कारमर्हति" इत्यादिना उपनयनादिसंस्काराभावाभिधानादित्यर्थः ॥ किञ्च, तस्य जाबालस्य सत्यवचनेन शूद्रत्वाभावनिर्धारेण सत्येव गौतमस्य विद्योपदेशे प्रवृत्तिदर्शनात् । अतो न शूद्रस्याधिकार इत्यर्थः ॥ अपि च । स्मृतेः "अथास्य वेदमुपशृण्वतस्त्रपुजतुभ्या श्रोत्रप्रतिपूरणम्" "तस्माच्छूद्रसमीपे नाध्येतव्यम्" "न शूद्राय मतिं दद्यात्" "द्विजातीनामध्ययनमिज्या दानम्" इत्यादिस्मृतितो वेदश्रवणस्य तदध्ययनस्य तदर्थयोस्तत्प्रयोजनयोरर्थज्ञानानुष्ठानयोश्च प्रतिषेधात् । अतः कथञ्चिदपि न शूद्रस्य ब्रह्मविद्यायां विधिपूर्वकाधिकार इति सिद्धम् ॥

(२) रामानुजीये—ब्रह्मविद्यायां शूद्रस्याप्यधिकारोऽस्ति न वेति विचार्यते । किं युक्तम्? अस्तीति । कुतः? अर्थित्वसामर्थ्यप्रयुक्तत्वादधिकारस्य । शूद्रस्यापि तत्सम्भवात् । यद्यप्यग्निविद्यासाध्येषु कर्मस्वनग्निविद्यत्वाच्छूद्रस्यानधिकारस्तथापि मनोवृत्तिमात्रत्वाद्ब्रह्मोपासनस्य तत्राधिकारोऽस्त्येव । द्राविडीये

क्रियापेक्षत्वेऽप्युपासनस्य तत्तद्वर्णार्थमोचितक्रियाया एवापेक्षितत्वात् । शूद्रस्यापि स्ववर्णोचितपूर्ववर्ण-शुश्रूषैव क्रिया भविष्यति । "तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः" इत्यप्यग्निविद्यासाध्ययज्ञादिकर्मानधिकार एव न्यायसिद्धोऽनूद्यते । नन्वनधीतवेदस्याश्रुतवेदान्तस्य ब्रह्मस्वरूपतदुपासनप्रकारानभिज्ञस्य कथं ब्रह्मो-पासनं सम्भवति ? उच्यते—अनधीतवेदस्याश्रुतवेदान्तवाक्यस्यापीतिहासपुराणश्रवणेनापि ब्रह्मस्वरूप-तदुपासनज्ञानं सम्भवति । अस्ति च शूद्रस्यापीतिहासपुराणश्रवणानुज्ञा "श्रावयेच्चतुरो वर्णान्कृत्वा ब्राह्मणमग्रतः ।" इत्यादौ दृश्यन्ते चेतिहासपुराणेषु विदुरादयो ब्रह्मनिष्ठाः । तथोपनिषत्स्वपि सम्वर्ग-विद्यायां शूद्रस्यापि ब्रह्मविद्याधिकारः प्रतीयते । शुश्रूषुं हि जानश्रुतिमाचार्यो रैक्वः शूद्रेत्यामन्त्र्य तस्मै ब्रह्मविद्यामुपदिशति । "आजहारेमाः शूद्रानेनैव मुखेनालापयिष्यथाः" इत्यादिना । अतः शूद्रस्याप्य-धिकारः सम्भवतीति प्राप्त उच्यते । न शूद्रस्याधिकारः सम्भवति । कुतः ? । सामर्थ्याभावात् । "न हि ब्रह्मस्वरूपतदुपासनप्रकारमजानतस्तदङ्गभूतवेदानुवचनयज्ञादिष्वनधिकृतस्योपासनोपसंहारसामर्थ्यं सम्भवति" । असमर्थस्य चार्थित्वसद्भावेऽप्यधिकारो न सम्भवति । असामर्थ्यं च वेदाध्ययनाभावात् । यथैव हि त्रैवर्णिकविषयाध्ययनविधिसिद्धस्वाध्यायसम्पाद्यज्ञानलाभेन कर्मविधयो ज्ञानतदुपायादीनपराप्र स्वीकुर्वन्ति तथा ब्रह्मोपासनविधयोऽपि । अतोऽध्ययनविधिसिद्धस्वाध्यायाधिगतज्ञानस्यैव ब्रह्मो-पासनोपायत्वाच्छूद्रस्य ब्रह्मोपासनसामर्थ्यासम्भवः । इतिहासपुराणेऽपि वेदोपबृंहणं कुर्वत एवो-पायभावमनुभवतो न स्वातन्त्र्येण । शूद्रस्येतिहासपुराणश्रवणानुज्ञानं पापक्षयादिफलार्थं नोपासना-र्थम् । विदुरादयस्तु भवान्तराधिगतज्ञानाप्रमोपाज्ज्ञानवन्तः प्रारब्धकर्मवशाच्चेदृशजन्मयोगिन इति तेषां ब्रह्मनिष्ठत्वम् । यत्तु सम्वर्गविद्यायां शुश्रूषोः शूद्रेति सम्बोधनं शूद्रस्याधिकारं सूचयतीति तत्रेत्याह । शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि । शुश्रूषोर्जानश्रुतेः पौत्रायणस्य ब्रह्मज्ञानवैकल्येन हंसोक्तानादरवाक्यश्रवणात्तदैव ब्रह्मविदो रैक्वस्य सकाशं प्रत्याद्रवणाच्छुगस्य सञ्जातेति हि सूच्यते । अतः स शूद्रेत्यामन्त्र्यते न चतुर्थवर्णत्वेन । शोचतीति हि शूद्रः । "शुचेर्दश्च"ेति रप्रत्यये धातोश्च दीर्घे चकारस्य दकारे शूद्र इति भवति । अतः शोचितृत्वमेवास्य शूद्रशब्दप्रयोगेण सूच्यते न जाति-योगः । जानश्रुतिः किल पौत्रायणो बहुद्रव्यप्रदो बह्वन्नप्रदश्च बभूव । तस्य धार्मिकाग्रेसरस्य धर्मेण प्रीतयोः कयोश्चिन्महात्मनोरस्य ब्रह्मजिज्ञासामुत्पिपादयिषतोर्हंसरूपेण निशायामस्याविदूरे गच्छतो-रन्यतर इतरमुवाच । भो भो भल्लाक्ष भल्लाक्ष जानश्रुतेः पौत्रायणस्य समं दिवा ज्योतिराततं तन्मा प्रसाङ्क्षीस्तत्त्वा मा प्रधाक्षीदिति । एवं जानश्रुतिप्रशंसारूपं वाक्यमुपश्रुत्यापरो हंसः प्रत्युवाच । "कं वरं एनमेतत्सन्तं सयुग्वानमिव रैक्वमात्थेति" । "कं सन्तमेनं जानश्रुतिं सयुग्वानं रैक्वं ब्रह्मज्ञ-मिव गुणश्रेष्ठमेतदात्थ" ? स ब्रह्मज्ञो रैक्व एव लोके गुणवत्तरः । महता धर्मेण संयुक्तस्याप्यस्य जानश्रुतेरब्रह्मज्ञस्य को गुणो यद्गुणजनितं तेजो रैक्वतेज इव मां दहेदित्यर्थः । एवमुक्तेन परेण कोऽसौ रैक्व इति पृष्टो लोके यत्किञ्चित्साध्वनुष्ठितं कर्म यच्च सर्वचेतनगतं विज्ञानं तदुभयं यदीयज्ञानकर्मा-न्तर्भूतं स रैक्व इत्याह । तदेतद्धंसवाक्यं ब्रह्मज्ञानविधुरतयात्मनिन्दागर्भं तद्वत्तया च रैक्वप्रशंसारूपं जानश्रुतिरुपश्रुत्य तत्क्षणादेव क्षत्तारं रैक्वान्वेषणाय प्रेष्य तस्मिन्विदित्वागते स्वयमपि रैक्वमुपसद्य गवां षट्शतं निष्कमश्वतरीरथं च रैक्वायोपहृत्य रैक्वं प्रार्थयामासानु म एतां भगवो देवतां शाधि यां देवता-मुपास्से इति" । त्वदुपास्यां परां देवतां मामनुशाधीत्यर्थः । स च रैक्वः स्वयोगमहिमविदितलोकत्रयो जानश्रुतेर्ब्रह्मज्ञानविधुरतानिमित्तानादरगर्भहंसवाक्यश्रवणेन शोकाविष्टतां तदनन्तरमेव ब्रह्मजिज्ञा-सयोद्योगं च विदित्वाऽस्य ब्रह्मविद्यायोग्यतामभिज्ञाय चिरकालसेवां विना द्रव्यप्रदानेन शुश्रूषमाणस्यास्य

यावच्छक्तिप्रदानेन ब्रह्मविद्या प्रतिष्ठिता भवतीति मत्वा तमनुगृह्णन्नस्य शोकाविष्टतामुपदेशयोग्यता ख्यापिकां शूद्रशब्देनामन्त्रणेन ज्ञापयन्निदमाह । "अपाहर त्वं शूद्र तवैव सह गोभिरस्त्विति" । सह गोभिरयं रथस्तवैवास्तु नैतावता मह्यं दत्तेन ब्रह्मजिज्ञासया शोकाविष्टस्य तव ब्रह्मविद्या प्रतिष्ठिता भवतीत्यर्थः । स च जानश्रुतिर्भूयोऽपि स्वशक्त्यनुगुणमेव गवादिकं धनं कन्यां च प्रदायोपससाद । स रैक्वः पुनरपि तस्य योग्यतामेव ख्यापयञ्छूद्रशब्देनामन्त्र्याह । "आजहारेमाः शूद्रानेनैव मुखेनालापयिष्यथा" इति । "इमानि धनानि शक्त्यनुगुणान्याजहर्थ" । अनेनैव द्वारेण चिरसेवया विनापि मां त्वदभिलषितब्रह्मोपदेशरूपवाक्यमालापयिष्यसीत्युक्त्वा तस्मा उपदिदेश । अतः, शूद्रशब्देन विद्योपदेशयोग्यताख्यापनार्थं शोक एवास्य सूचितो न चतुर्थवर्णत्वम् ॥ "बहुदायीति दानपतित्वेन बहुपाक्य इत्यादिना सर्वत एव मेत्स्यन्ति" इत्यन्तेन "बहुतरपक्वान्नप्रदायित्वप्रतीतेः सह संजिहान एव क्षत्तारमुवाचे"ति क्षत्तृप्रेषणाद्बहुग्रामप्रदानावगतजनपदाधिपत्याच्चास्य जानश्रुतेः क्षत्रियत्वप्रतीतेश्च न चतुर्थवर्णत्वात् ॥ तदेवमुपक्रमगताख्यायिकायां क्षत्रियत्वप्रतीतिरुक्ता । उपसंहारगताख्यायिकायामपि क्षत्रियत्वमस्य प्रतीयत इत्याह । अस्य जानश्रुतेरुपदिश्यमानायामस्यामेव सम्वर्गविद्यायामुत्तरत्र कीर्त्यमानेनाभिप्रतारिनाम्ना चैत्ररथेन क्षत्रियेणास्य क्षत्रियत्वं गम्यते । कथम् ? । "अथ ह शौनकं च कापेयमभिप्रतारिणं च काक्षसेनिं परिविष्यमाणौ ब्रह्मचारी बिभिक्षे" इत्यादिना "ब्रह्मचारिन्नेदमुपास्महे" इत्यन्तेन कापेयाभिप्रतारिणोर्भिक्षमाणस्य ब्रह्मचारिणश्च सम्वर्गविद्यासम्बन्धित्वं प्रतीयते । तेषु चाभिप्रतारी क्षत्रिय इतरौ ब्राह्मणौ अतोऽस्यां विद्यायां ब्राह्मणस्य तदितरेषु च क्षत्रियस्यैवान्वयो दृश्यते न शूद्रस्य । अतोऽस्यां विद्यायामन्वितादृैक्वाद्ब्राह्मणादन्यस्य जानश्रुतेरपि क्षत्रियत्वमेव युक्तं न चतुर्थवर्णत्वम् । नन्वस्मिन्प्रकरणेऽभिप्रतारिणश्चैत्ररथत्वं क्षत्रियत्वं च न श्रुतम् । तत्कथमस्याभिप्रतारिणश्चैत्ररथत्वं ? कथं वा क्षत्रित्वम् ? तत्राह लिङ्गादिति । "अथ ह शौनकं च कापेयमभिप्रतारिणं च काक्षसेनिमित्यभिप्रतारिणः कापेयसाहचर्याल्लिङ्गादस्याभिप्रतारिणः कापेयसम्बन्धः प्रतीयते । "अन्यत्र चैतेन वै चैत्ररथं कापेया अयाजयन्नि"ति कापेयसम्बन्धिनश्चैत्ररथत्वं श्रूयते । तथा चैत्ररथस्य क्षत्रियत्वं तस्माच्चैत्ररथो नामैकः क्षत्रपतिरजायतेति । अतोऽभिप्रतारिणश्चैत्ररथत्वं क्षत्रियत्वं च गम्यते ॥ तदेवं न्यायविरोधिनी शूद्रस्याधिकारे लिङ्गं नोपलभ्यत इत्युक्तम् । इदानीं न्यायसिद्धः शूद्रस्यानधिकारः श्रुतिस्मृतिभिरनुगृह्यत इत्याह । "ब्रह्मविद्योपदेशप्रदेशेषूपनयनसंस्कारः परामृश्यत उप त्वानेष्ये" "तं होपनिन्ये" इत्यादिषु शूद्रस्य चोपनयनादिसंस्काराभावोऽभिलप्यते । "न शूद्रे पातकं किंचिन्न च संस्कारमर्हती"ति "चतुर्थो वर्ण एकजातिर्न च संस्कारमर्हतीत्यादिषु" ॥ "नैतदब्राह्मणो विवक्तुमर्हति समिधं सोम्याहर" इति शुश्रूषोर्जाबालस्य शूद्रत्वाभावनिर्धारणे सत्येव विद्योपदेशप्रवृत्तेश्च न शूद्रस्याधिकारः ॥ शूद्रस्य वेदश्रवणतदध्ययनतदर्थानुष्ठानानि प्रतिषिध्यन्ते । "पद्यु ह वा एतच्छ्मशानं यच्छूद्रस्तस्माच्छूद्रसमीपे नाध्येतव्यम्" तस्माच्छूद्रो बहुपशुरयज्ञीय इति । बहुपशुः पशुसदृश इत्यर्थः । अनुपशृण्वतोऽध्ययनतदर्थज्ञानतदर्थानुष्ठानानि न सम्भवन्ति । अतस्तान्यपि प्रतिषिद्धान्येव । स्मर्यते च श्रवणादिनिषेधः । अथ हास्य वेदमुपशृण्वतस्त्रपुजतुभ्यां श्रोत्रप्रपूरणमुदाहरणे जिह्वाच्छेदो धारणे शरीरभेद" इति । "न चास्योपदिशेद्धर्मं न चास्य व्रतमादिशेदिति" च । अतः शूद्रस्यानधिकार इति सिद्धम् । ये तु निर्विशेषचिन्मात्रं ब्रह्मैव परमार्थः । अन्यत्सर्वं मिथ्याभूतम् । बन्धश्चापारमार्थिकः । स च वाक्यजन्यवस्तुयाथात्म्यज्ञानमात्रनिवर्त्यः । तन्निवृत्तिरेव मोक्ष इति वदन्ति । तैर्ब्रह्मज्ञाने शूद्रादेरनधिकारो वक्तुं न शक्यते । अनुपनीतस्यानधीतवेदस्याश्रुतवेदान्तवाक्यस्यापि यस्मात्कस्मादपि निर्विशेषचिन्मात्रं ब्रह्मैव

परमार्थोऽन्यत्सर्वं तस्मिन्परिकल्पितं मिथ्याभूतमिति वाक्याद्वस्तुयाथात्म्यज्ञानोत्पत्तेस्तावतैव बन्धनिवृत्तेश्च । न च तत्त्वमस्यादिवाक्येनैव ज्ञानोत्पत्तिः कार्या न वाक्यान्तरेणेति नियन्तुं शक्यम्? ज्ञानस्यापुरुषतन्त्रत्वात् । सत्यां सामग्र्यामनिच्छतोऽपि ज्ञानोत्पत्तेः । न च वेदवाक्यादेव वस्तुयाथात्म्यज्ञाने सति बन्धनिवृत्तिर्भवतीति वक्तुं शक्यम् । येन केनापि वस्तुयाथात्म्यज्ञाने सति भ्रान्तिनिवृत्तेः। पौरुषेयादपि निर्विशेषचिन्मात्रं ब्रह्म परमार्थोऽन्यत्सर्वं मिथ्याभूतमिति वाक्याज्ज्ञानोत्पत्तेः । तावतैव भ्रमनिवृत्तेश्च । यथा पौरुषेयादप्याप्तवाक्याच्छुक्तिकारजतादि भ्रान्तिर्ब्राह्मणस्य शूद्रादेरपि निवर्तते तद्वदेव शूद्रस्यापि वेदवित्सम्प्रदायावगतवाक्याद्वस्तुयाथात्म्यज्ञानेन जगद्भ्रमनिवृत्तिरपि भविष्यति । "न चास्योपदिशेद्धर्मम्"इत्यादिना वेदविदः शूद्रादिभ्यो न वदन्तीति च न शक्यं वक्तुम् । तत्त्वमस्यादिवाक्यावगतब्रह्मात्मभावानां वेदशिरसि वर्तमानतया दग्धाखिलाधिकारत्वेन निषेधशास्त्रस्याकिञ्चित्करत्वात् । अतिक्रान्तनिषेधैर्वा कैश्चिदुक्ताद्वाक्याच्छूद्रादेर्ज्ञानमुत्पद्यत एव । न च वाच्यं शुक्तिकादौ रजतादिभ्रमनिवृत्तिवत्पौरुषेयवाक्यजन्यतत्त्वज्ञानसमनन्तरं शूद्रस्य जगद्भ्रमो न निवर्तत इति । "तत्त्वमसी"त्यादिवाक्यश्रवणसमनन्तरं ब्राह्मणस्यापि जगद्भ्रमानिवृत्तेः । निदिध्यासननेन द्वैतवासनायां निरस्तायामेव तत्त्वमस्यादिवाक्यं निवर्तकज्ञानमुत्पादयतीति चेत्पौरुषेयवाक्यमपि शूद्रादेस्तथैवेति न कश्चिद्विशेषः । निदिध्यासनं हि नाम, ब्रह्मात्मभावाभिधायिवाक्यं यदर्थप्रतिपादनयोग्यं तदर्थभावना । सैव विपरीतवासनां निवर्तयतीति दृष्टार्थत्वं निदिध्यासनविधेर्ब्रूषे । वेदानुवचनादीन्यपि विविदिषोत्पत्तावेवोपयुज्यन्त इति शूद्रस्यापि विविदिषायां जातायां पौरुषेयवाक्यान्निदिध्यासनादिभिर्विपरीतवासनायां निरस्तायां ज्ञानमुत्पत्स्यते । तेनैवापारमार्थिको बन्धो निवर्तिष्यते । अथ वा तर्कानुगृहीतात्प्रत्यक्षादनुमानाच्च निर्विशेषस्वप्रकाशचिन्मात्रप्रत्यग्वस्तुन्यज्ञानसाक्षित्वं तत्कृतविविधविचित्रज्ञातृज्ञेयविकल्परूपं कृत्स्नं जगच्चाध्यस्तमिति निश्चित्यैवंभूतपरिशुद्धप्रत्यग्वस्तुन्यनवरत भावनया विपरीतवासनां निरस्य तदेव प्रत्यग्वस्तु साक्षात्कृत्य शूद्रादयोऽपि विमोक्ष्यन्त इति मिथ्याभूतविचित्रैश्वर्यविचित्ररूपाद्यलौकिकानन्तविशेषावलम्बिना वेदान्तवाक्येन न किञ्चित्प्रयोजनमिह दृश्यत इति शूद्रादीनामेव ब्रह्मविद्याधिकारः सुशोभनः । अनेनैव न्यायेन ब्राह्मणादीनामपि ब्रह्मवेदनसिद्धेरुपनिषच्च तपस्विनी दत्तजलाञ्जलिः स्यात् । न च वाच्यं नैसर्गिकलोकव्यवहारे भ्राम्यतोऽस्य केनचिदयं लोकव्यवहारो भ्रमः परमार्थस्त्वेवमेवमिति समर्थिते सत्येव प्रत्यक्षानुमानवृत्तबुभुत्सा जायत इति तत्समर्पिका श्रुतिरप्यास्थेयेति । यतो भवभयभीतानां साङ्ख्यादय एव प्रत्यक्षानुमानाभ्यां वस्तुनिरूपणं कुर्वन्तः प्रत्यक्षानुमानवृत्तबुभुत्सां जनयन्ति । बुभुत्सायां च जातायां प्रत्यक्षानुमानाभ्यामेव विविक्तस्वभावाभ्यां नित्यशुद्धस्वप्रकाशाद्वितीयकूटस्थचैतन्यमेव सदन्यत्सर्वं तस्मिन्नध्यस्तमिति सुविवेचम् । एवम्भूते स्वप्रकाशे, वस्तुनि श्रुतिसमधिगम्यविशेषान्तरं च नाभ्युपगम्यते । अध्यस्तातद्रूपनिवर्तनी हि श्रुतिरपि त्वन्मते । न च सत आत्मन आनन्दरूपताज्ञानायोपनिषदास्थेया । चिद्रूपताया एव सकलेतरव्यावृत्ततया तद्रूपत्वात् । यस्य तु मोक्षसाधनतया वेदान्तवाक्यैर्विहितं ज्ञानमुपासनरूपं तच्च परब्रह्मभूतपरमपुरुषप्रीणनं तच्च शास्त्रैकसमधिगम्यम् । उपासनाशास्त्रं चोपनयनादिसंस्कारसंस्कृताधीतस्वाध्यायजनितं ज्ञानं विवेकविमोकादिसाधनानुगृहीतमेव स्वोपायतया स्वीकरोति । एवं रूपोपासनाप्रीतः पुरुषोत्तम उपासकं स्वाभाविकात्मयाथात्म्यज्ञानदानेन कर्मजनिताज्ञानं नाशयन्बन्धान्मोचयतीति पक्षस्तस्य यथोक्तरीत्या शूद्रादेरनधिकार उपपद्यते ॥

(३) माध्वे—नासौ पौत्रायणः शूद्रः शुचाद्रवणमेव शूद्रत्वं कमूचरएनमेतमन्तमित्यनादर-श्रवणात् । सह सञ्जिहान एव क्षत्तारमुवाचेति सूच्यते हि । अयमश्वतरीरथ इति चित्ररथ-सम्बन्धित्वेन लिङ्गेन पौत्रायणस्य क्षत्रियत्वावगतेश्च । रथस्त्वश्वतरीयुक्तश्चित्र इत्यभिधीयते इति ब्राह्मे । यत्र त्वदीस्तत्र न वेदो यत्र नो रथ इति च ब्रह्मवैवर्ते । अष्टवर्षे ब्राह्मणमुपनयीत तमध्यापयी-तेत्यध्ययनार्थं संस्कारपरामर्शात् । नाग्निर्न यज्ञो न क्रियासंस्कारो न व्रतानि शूद्रस्येति पैङ्गिश्रुतौ संस्काराभावाभिलापाच्च । उत्तमस्त्रीणान्तु न शूद्रवत् । सपत्नीं मेऽपराधमर्पति म इत्यादिष्वधिकार-दर्शनात् । संस्काराभावेनाभावस्तु सामान्येन । अस्ति च तासां संस्कारः, "स्त्रीणां प्रदानकर्म्मैव यथो-पनयनं तथैव स्मृतेः" । नाहमेतद्वेद भो यद्गोत्रेऽहमस्मीति सत्यवचनेन सत्यकामस्य शूद्रत्वाभावनिर्धा-रणे हारिद्रुमतस्य नैतद्ब्राह्मणो विवक्तुमर्हतीति तत्संस्कारे प्रवृत्तेश्च । श्रवणे त्रपुजतुभ्यां श्रोत्रपरि-पूरणम् । अध्ययने जिह्वाच्छेदः । अथ विधारणे हृदयविदारणमिति प्रतिषेधात् । "नाग्निर्न यज्ञं शूद्रस्य तथैवाध्ययनं कुतः ? केवलैव तु शुश्रूषा त्रिवर्णानां विधीयते" इति स्मृतेश्च । विदुरादीनां तूत्पन्न-ज्ञानत्वान्न कश्चिद्विशेषः ।

निम्बार्कः—छान्दोग्ये मुमुक्षौ गुरुप्रयुक्तं शूद्रपदमालोच्य शूद्रोऽपि ब्रह्मविद्यायामधिक्रियते इति नाशङ्कनीयम्, अस्य मुमुक्षोर्जानश्रुतेर्हंसप्रयुक्तानादरवाक्यश्रवणात् । तदैव गुरुं प्रत्याद्रवणात् शुक् सञ्जाता इति शूद्रेति सम्बोधनेन सूच्यते ॥ "अथ ह शौनकञ्च कापेयमभिप्रतारिणं च काक्षिसेनिं परिविष्यमाणौ ब्रह्मचारी बिभिक्षे" इत्युत्तरत्र चैत्ररथेनाभिप्रतारिणा क्षत्रियेण सह समभिव्याहाररूप-लिङ्गाज्जानश्रुतेः क्षत्रियत्वस्यावगतेर्न जानश्रुतिः शूद्रः ॥ विद्याप्रदेशे "तं होपनिन्ये" इत्यादिनोपनयन-संस्कारपरामर्शात् "शूद्रश्चतुर्थो वर्ण एकजातिर्न च संस्कारमर्हतीति" तदभावाभिलापाच्च विद्यायां शूद्रो नाधिक्रियते ॥ किञ्च, गौतमस्य जाबालेः शूद्रत्वाभावनिर्णये सति तमुपनेतुमनुशासितं प्रवृत्तेः शूद्रस्यानधिकार एवात्र ॥ शूद्रो नाधिक्रियते "शूद्रसमीपे नाध्येतव्यमि"त्यादिना तस्य वेदश्रवणादि-प्रतिषेधात् ॥ "न चास्योपदिशेद्धर्ममि"त्यादिस्मृतेश्च ॥

(५) भैक्षवे—ननु यदि देवादीनामुपनयनाद्यभावेऽपि ब्रह्मविद्यायामधिकारोऽप्रतिषेधात् । तदा शूद्रस्यापि तत्राधिकारः स्यात् । शूद्रो यज्ञेऽनवक्लृप्त इतिवद्ब्रह्मविद्यायामनवक्लृप्त इत्यश्रवणात् । किञ्च, "अहहारे त्वा शूद्रे"ति ब्रह्मविद्याशिष्यस्य शूद्रत्वेन सम्बोधनादपि शूद्रस्य तत्राधिकारो लभ्यते इत्याशङ्कां शूद्रसम्बोधनोपपादनमुखेनापाकरोति । छान्दोग्यचतुर्थे सम्वर्गविद्यायां जानश्रुतिं शिष्यं यो रथहिरण्यादिदक्षिणामादाय विद्याग्रहणायोपस्थितं शूद्रशब्देन रैक्वो गुरुः परामृषति अहहारेत्वा शूद्रतवैव सह गोभिरस्त्विति अस्यार्थ अरे शूद्र शूद्राचार त्वां अहहाधिगस्तु किं च स त्वया आनीतो रथादिर्हे गोभिर्यदिष्टस्तवैवास्तु नानेन मम प्रयोजनमिति, अत्र संशयः किमत्र शूद्रशब्द उपचरितः उत मुख्य इति । यदि मुख्यस्तदा तस्यैव पश्चादुपदेष्टव्यत्वात् शूद्रस्याप्यधिकारः स्याद्विद्यायामित्येतदर्थमत्र निर्णयः क्रियते शूद्रशब्दोऽत्र शूद्रजातिपरो न भवति किन्तु, शूद्रकार्यकारित्वादुपचरित इति । सूत्र-योजना त्वेवं कार्य्या, हि शब्दोऽत्रावधारणे, या शूद्राधिकारशङ्का कृता सा नास्ति । कुतः स्यात् अस्या-धिकारिणो जानश्रुतेः सस्यानादरश्रवणात् या शुक् शोक उत्पन्नः स एव रैक्वेन सूच्यते अर्थाच्छूद्र-शब्देन शूद्रस्यैव मानापमानयोर्हर्षविषादौ जायेते न ब्राह्मणस्य समदर्शेरिति अनादरश्रवणं च कं वर-मेनमेतत्सन्तं सयुग्वानमिव रैक्वमात्थेति हंसवाक्यात् । अयमर्थः, जानश्रुतेः राज्ञः प्रासादोपरिस्थित-मेकहंस आह अयं राजा बहुप्रदाता अस्य प्रासादोपरि मेहनादिना नंक्ष्यसीति तत्र स प्रत्याह कम्वर-

मित्यादि अरे एनं कं निकृष्टं,उ अपि एतदीदृशमात्थ सन्तं उत्कृष्टं सयुग्वानं रैक्वमिव स एवैतादृश-सम्भावना योग्यो नायमल्प पुण्य इत्यर्थः। सयुजा शकटेन सह वर्तत इति सयुग्वा। शोके प्रमाणमाह तदा द्रवणात् तदा अनादरश्रवणक्षण एव ब्रह्मचर्य्यादिनैरपेक्ष्येण रैक्वमभिद्रवणाद्विद्याग्रहणार्थमित्यर्थः। यदि हि जानश्रुतिर्विशुद्धचित्तः स्यात् तदा ब्रह्मचर्य्यादिना गुरुमाराध्य विद्यां प्रार्थयेत् न तु गोरथादि-धनमात्रेण द्रुतमेवेति रैक्वस्याभिप्रायः। ननु शूद्रशब्दस्य मुख्यार्थः कथं त्याज्य इति तत्राह ॥ उत्तरत्र सम्वर्गविद्याशेषे चैत्ररथेन क्षत्रियेण समभिव्याहारात्लिङ्गाज्जानश्रुतेः क्षत्रियत्वावगमादित्यर्थः। चैत्ररथे-नेति विशेषणे तृतीया चैत्ररथेन समभिव्याहृतस्यास्येत्यर्थः उत्तरत्र हि अथ ह शौनकं च कापेयमभि-प्रतारिणं च काक्षसेनिमिति जानश्रुतेः समभिव्याहारोऽस्ति तत्र बहुहस्त्याचार्यवचनात् शौनकाभिप्रता-रिणोरन्यतरश्चैत्ररथः क्षत्रिय इत्यनुमेयम्। ननु लिङ्गाच्छ्रुतेर्बलीयस्त्वान्नैतद्युक्तं तत्राह—श्रुत्यन्तरे तं ह्योपनिन्य इत्यादिना ब्रह्मविद्याशिष्यस्य संस्कारपरामर्षाच्च न शूद्रशब्दोऽत्र मुख्यः संस्कारोऽपि शूद्रस्य स्यादित्याशङ्क्याह–तदभावाभिलापादिति। न शूद्रे पातकं किंचिन्न च संस्कारमर्हतीत्यादिस्मृतिभिरिति शेषः। इतश्च विद्यासंस्कारयोरुभयोरेवानधिकारी शूद्रः। श्रुत्यन्तरे च शिष्यस्य शूद्रत्वाभावावधारणे सत्येवोपदेशार्थं गुरोः प्रवृत्तिदर्शनाच्चेत्यर्थः। यथा "नैतद्ब्राह्मणो विवक्तुमर्हति समिधं सोम्याहर उपत्वा नेष्ये न सत्यादगा" इति श्रुतौ जाबालस्य सत्यवचनेन शूद्रत्वाभावावधारणानन्तरमेवोपनयनार्थं गौत-मस्य प्रवृत्तिरिति। इतश्च वेदश्रवणस्य तदध्ययनस्य तदर्थस्य च यज्ञविद्यादेः शूद्रे प्रतिषेधश्रुतेः तत्र च एतत् श्मशानं यत् शूद्रस्तस्माच्छूद्रस्य समीपेनाध्येतव्यमिति श्रवणप्रतिषेधः श्रवणप्रतिषेधादेवा-ध्ययनप्रतिषेधोऽपि सिद्धः श्रवणं विना अध्ययनानुपपत्तेस्तयोश्च प्रतिषेधात्तदर्थस्य यज्ञस्य विद्यायाश्च प्रतिषेधोऽप्यर्थाक्षिप्तः अन्यथा वेदश्रवणप्रतिषेधस्यादृष्टार्थकतापत्तेः। स्मृतेश्चेति। न शूद्राय मतिं दद्यात् द्विजातीनामिज्याध्ययनदानमित्यादि स्मृतेश्च शूद्राणामनधिकार इत्यर्थः। येषां तु पूर्वसंस्कारव-शाद्विदुरप्रभृतीनां ज्ञानोत्पत्तिस्तेषां न मोक्षाख्यफलप्रतिबन्धो ज्ञानस्यैकान्तिकफलत्वात् ब्राह्मणशरीरस्य साक्षान्मोक्षं प्रत्यकारणत्वाच्च। अपिच, "श्रावयेच्चतुरो वर्णान् कृत्वा ब्राह्मणमग्रत" इत्यादिवाक्येभ्य इतिहासपुराणेषु चातुर्वर्ण्याधिकाराद्वेदजन्यब्रह्मविद्यायामेव शूद्रस्याधिकारोऽत्राचार्य्येण प्रतिषिद्धः। अन्यथा "सर्वे वर्णा स्त्रियः सर्वाः कृत्वा पापानि भस्मसात्। ध्यानाग्निनाऽमलाः सन्तो लभन्ते परमां गतिम्" ॥ इति गारुडादिवाक्यैः साधारण्येन ब्रह्मविद्याप्रतिपादनं नोपपद्येत। अतो विदुरादीनां पुराणादेर्ब्रह्मज्ञानमैहिकाध्ययनसाध्यमपि स्वीकर्तुं शक्यते वेदश्रवणनिषेधस्तु शूद्राणां मन्दबुद्धितया विपरीतार्थबाधदोषाशङ्कया तदर्थयज्ञाद्यनुष्ठानानधिकारितयाऽदृष्टार्थकतया चेति मन्तव्यम्।

(६) भास्करीये—मनोवृत्तिमात्रसाध्यत्वाद्विद्यायाः शूद्रस्याप्यधिकारमाशङ्क्य निराक्रियते लिङ्ग-दर्शनाच्च। सम्वर्गविद्यायां जानश्रुतिं पौत्रायणं शूद्रशब्देन परामृशति। अह हा रे त्वा शूद्र तवैव सह गोभिरस्त्विति। सिद्धान्तस्तु न तस्य वैद्यत्वात् कर्मणीव ब्रह्मविद्यायामनधिकार उपनयनाध्यय-नार्थाधिगमाभावार्थलिङ्गयुक्तं न तत्समर्थम्। यौगिकस्तत्र शूद्रशब्दः प्रयुक्तः। कथम्। हंसवचना-दस्य जानश्रुतेः शुगुत्पन्ना शोको जातः। कं वर एनमेतत् सन्तं सयुग्वानमिव रैक्वमात्थेत्यनादरश्रव-णात्। तदाभवत्तपोपासूणपरिघण्डितहृदययोरैक्यमृषिद्रुद्रावाजगामैतसाद्धेतोः शूद्र इत्युक्तिः। किं पुनः कारणं शूद्रशब्देन जानश्रुतिमभाषीत् सूच्यते हि रैक्वेण राज्ञः शुगुत्पन्ना आत्मनः परोक्षज्ञानो-त्थापनायाह कृपणो धनार्थी सर्वज्ञोऽसीति प्रकटयितुम् ॥ इतश्च जानश्रुतेः क्षत्रियत्वं कथं सम्वर्ग-विद्यायामुत्तरत्र वाक्यशेषे चैत्ररथेनाभिप्रतारिणा सह समुच्चारणाल्लिङ्गादवगम्यते समानजातीयाना-

मेवैकस्या विद्यायां सङ्कीर्तनं युक्तम् । किं पुनस्तल्लिङ्गम् । अथ ह शौनकं च कापेयमभिप्रतारिणं च काक्षसेनिं परिवीक्ष्यमाणो ब्रह्मचारी बिभिक्ष इति । कथं पुनरभिप्रतारिणश्चैत्ररथत्वं कापेयेन शौनकेन योगादेतेन वै चैत्ररथं कापेया अयाजयंस्तमेकाकिनमन्नाद्यस्याध्यक्षमकुर्वंत । तस्माच्चैत्ररथिर्नामैकः क्षत्रपतिरजायत इति छन्दोगानां द्विरात्रे श्रूयते ॥ इतश्च विद्यायामनधिकारः । संस्कारस्य चोपनयनस्य परामर्शात् तत्सङ्कीर्तनात् । विद्याप्रदेशे त होपनिन्ये अधीहि भगव इति तस्य भावाभिलापादभिधानात् । शूद्रश्चतुर्थो वर्ण एकजातिर्न च संस्कारमर्हतीति श्रुतेः । शूद्रत्वाभावनिर्धारणे निर्णये सति जाबालमुपनेतुमनुशासितुं च गौतमस्य प्रवृत्तेः । समिधं सौम्याहरोपत्वा नेष्ये न सत्यादगा इति । श्रवणाध्ययनतदर्थपरिज्ञानतदनुष्ठानानां प्रतिषेधाच्च स्मरणात् । अथास्य वेदमुपशृण्वतस्त्रपुजतुभ्यां श्रोत्रपरिपूरणम् । तस्माच्छूद्रसमीपेनाध्येतव्यमिति ॥

(७) श्रीमद्वल्लभाचार्यमतेऽयमभिप्रायः—अथानुप्रसङ्गसङ्गत्या शूद्रस्याधिकारो ब्रह्मविद्यायामस्ति, न वेति विचार्यते । एवं हि छान्दोग्ये पञ्चमप्रपाठकारम्भे श्रूयते । जानश्रुतिर्ह पौत्रायण इत्यत्र, श्रद्धादेयो बहुदायी बहुपाक्य आस । स ह सर्वत आवसथान्मापयाञ्चक्रे सर्वत एव मेऽत्स्यन्तीत्यथ ह हंसा निशायामतिपेतुस्तद्धैव हंसो हंसमभ्युवाद हो होऽयि भल्लाक्ष भल्लाक्ष जानश्रुतेः पौत्रायणस्य समं दिवा ज्योतिराततं तन्मा प्रसाङ्क्षीत्, तत्त्वा मा प्रधाक्षीरिति । तमु ह परः प्रत्युवाच कं वर एनमेतत्सन्तं सयुग्वानमिव रयिकमात्थेति । ततो, योऽनु रयिकमित्यादिना रयिकप्रशंसामुक्त्वा, ततो जानश्रुतिस्तच्छ्रुत्वा रयिकमन्विष्य तत्र गत्वा रयिकेमानि षट् शतानि गवामयं निष्कोऽयमश्वतरीरथोनु म एतां भगवो देवतां शाधि यां देवतामुपास्स इति । तमु ह परः प्रत्युवाच अह हारेत्वा शूद्र तवैव सह गोभिरस्त्विति । तथा शूद्रानेन मुखेनालापयिष्यथा इत्युक्त्वा, स होवाचेत्यादिना सम्वर्गविद्यामुपदिष्टवानिति । एतदर्थस्तु । जनश्रुतेरपत्यं जानश्रुतिः । पुत्रस्य पौत्रः पौत्रायणः । श्रद्धया देयं यस्यासौ श्रद्धादेयः । बहुपाक्यो बहुपाककारयिता । स हेतिभिन्नं पदम् । मापयाञ्चक्र इति कारयामास । मेऽत्स्यन्तीति । मत्सम्बन्ध्यन्नं भक्षयिष्यन्ति । हो हो इति भये द्विरुक्तिः सम्बोधनस्य । अयीति कोमलालापे । दिवेति द्युलोकेन दिनेन वा । तन्मा प्रधाक्षीरिति । तस्माज्ज्योतिषः, त्वाशादेहा । त्वां मा प्रदहतु । कं वरे इति । कम् उ अरे एतत्सन्तमेतावत्कारिणं सन्तं सयुग्वानमिव रयिकमात्थेति । युज्यते इति युग्वा शकटं तेन सह वर्तमानः सयुग्वा । रयिक इति नाम । सयुग्वानं रयिकमिवात्थेति पदसम्बन्धः । अह हारे इति । अह हाऽरे । अरे । स ह गोभिरिति । स एव. ह गोभिरिति । सहयुक्ते तृतीया । मुखेनेति द्वारेण । अत्र शूद्रेति सम्बोधनात् सन्दिह्यते । यथा, "एतया निषादस्थपतिं याजयेत्, सा हि तस्येष्टि"रिति श्रुतेः कर्मविशेषे शूद्रस्याधिकारो, यथा वा, हविष्कृदाधावेति शूद्रस्येति लिङ्गाद् दोहादौ च शूद्रजातेरधिकारः, तथा ब्रह्मविद्यास्वप्यस्ति न वेति । तत्र शूद्रेति सम्बोध्य पश्चाद्, विद्योपदेशश्रावणात्, निषादस्थपतिमितिवद्विशेषानुल्लेखाज्जातिशूद्रस्याधिकार सर्वब्रह्मविद्यासु सम्वर्गविद्याया वेत्याशङ्क्य परिहरति । शुगस्येत्यादि । अत्र शूद्रेति पदाज्जातिशूद्रस्याधिकारो न शक्यवचनः । तत्र हेतुः । तदनादरश्रवणात् । तस्माद्धंसादनादरश्रवणात् । क वर एनमेतत्सन्तं संयुग्वानमिव रयिकमात्थेति स्वापकर्षश्रवणात् तदनन्तरम् आद्रवणात् । शुचमनु आद्रवतीति शूद्रः । पृषोदरादित्वाच्चकारस्य लोप उकारस्य दीर्घश्च परोक्षवादत्वात् । ननु पूर्वतन्त्र आधानप्रकरणे, वर्षासु रथकार इत्यत्र रूढिरेवादृता । रूढिर्योगमपहरतीतिन्यायात्सा रूढिर्योगापेक्षया प्रबला । अत. कथ तदनादर इत्यत आह । सूच्यते हीति । अत्र हि शूद्रेति सम्बोधनेन

स्वस्य सर्वज्ञत्वं रयिकेन सूच्यते । हंसवाक्यश्रवणाच्छोके जाते त्वमत्रागत इति । न चात्र तथा सूचने मानाभावः शङ्क्यः । प्रसिद्धकारणाभावेऽपि प्रपन्नाधिकारवचनानामन्यथानुपपत्तेरेव मानत्वात् । एतद्बोधनायैव युक्तत्वबोधकस्य हिशब्दस्य प्रयोगः । नच स्वस्य सर्वज्ञत्वख्यापनार्थमेवस्वचनमपि ब्रह्मविदो न युक्तमिति शङ्क्यम् । तन्मात्सर्यनिवारणेन तस्य योग्यतासम्पादनार्थत्वेन युक्तत्वात् । अतो रथकारस्थले तथोपाख्यानाभावेन तन्न्यायस्यात्र वक्तुमयुक्तत्वात् तत्र तथार्थयुक्तेर्योगादेवात्र शूद्रपदप्रयोगो, न जातिशूद्रवाचीति न तस्याधिकारसमर्थनायालमित्यर्थः ॥

ननु मास्त्वत्र रूढः शूद्रशब्दः, तथापि जानश्रुतिजातेरत्रानुक्तत्वाच्छूद्रस्य शब्दत्वयोगं बोधयन्नेवानुपूर्वीसाम्याज्जातिमपि बोधयिष्यतीत्याशङ्कायां जात्यन्तरगमकमाह—क्षत्रियत्वेत्यादि । बहुपाक्यत्वावसथकरणक्षत्तृस्थापनान्तानां गोनिष्करथयुक्तस्वकन्याया भार्यात्वेन दानाच्च पौत्रायणस्य क्षत्रियत्वावगतेः । चकारेणोपदेशादपि तदवगतेः । तथा चैवं पूर्वग्रन्थपर्यालोचने तज्जातेर्युद्धावारोहात्कुण्ठः शूद्रशब्दो नानुपूर्वीसाम्यादपि तां बोधयितुं शक्ष्यतीत्यर्थः । न च धनवति धार्मिके शूद्रेऽपि बहुपाक्यत्वादीनां कथञ्चन वक्तुं शक्यत्वाच्छूद्रादारोपसङ्ग्रहस्य मन्वादिभिरुक्तत्वेन तस्य च कन्यादानहेतुकत्वेन तस्मिन् कन्यादातृत्वस्यापि शक्यवचनत्वान्नैतैः क्षत्रियत्वनिश्चय इति शङ्क्यम् । समं द्वियेत्यादिप्रथमहंसवाक्योक्तमाहात्म्यस्य क्वापि शूद्रे अश्रयणादस्मरणाच्च तदसङ्गस्यापत्तेः । रयिकप्रथमविवाहस्य क्वाप्यदर्शनादेतद्विवाहस्यैव प्राथमिकतया वक्तव्यत्वे रयिकस्यापि शूद्रताप्रसक्तौ दुष्टतायां "यथा कृतायविजितायाधेरयाः संयन्त्येवमेतꣳ सर्वं तदभिसमेति यत्किञ्च प्रजाः साधु कुर्वन्ति यस्तद् वेद यत् स वेदे"ति द्वितीयहंसोक्तस्य रयिकमाहात्म्यस्यापि तथात्वापत्तेश्च । वाक्यार्थस्तु यथा लोके कृतायविजिताय कृतो य आयो द्यूतसमयप्रसिद्धो ग्लहः । तं यो विशेषेण जयति स कृतायविजितस्तस्मै जेत्रे, तादर्थ्ये चतुर्थी, तादृशजेत्रर्थम्, अधरेयाः संयन्ति स्वल्पजेतारस्तत्रान्तर्भवन्ति । एवमेतत्प्रायेण एतं रयिकं तदभिसमेत्य अन्तर्भवति । तत् किमित्यत आह—यत्किञ्च प्रजाः साधु कुर्वन्तीति । किञ्च, यत् स रयिको वेद तस्मिन्नपि तादृग्माहात्म्यं भवतीति । ननु हंसवाक्यस्य धर्मिप्रतामात्रबोधकत्वं ब्रह्मविन्माहात्म्यबोधकत्वं च, न तु क्षत्रियासाधारणतद्बोधकत्वम् । अतो न तेन क्षत्रियत्वावगतिरिति ग्रहिलवादनिराकरणाय हेत्वन्तरमाह—उत्तरत्र चैत्ररथेन लिङ्गादिति । अथ ह शौनकं च कापेयमभिप्रतारिणं च काक्षसेनिं परिविष्यमाणौ ब्रह्मचारी बिभिक्ष इत्यादिरूपे उपसंहारगते वाक्यशेषे । कक्षा सेना यस्येति कक्षसेनस्तस्यापत्यं काक्षसेनिरित्यत्र । "कक्षा स्यादन्तरीयस्य पश्चादञ्चलपल्लवे, स्पर्धापदे च दोर्मूल" इति कोशेन कक्षापदस्य स्पर्धास्थानबोधकत्वात्, स्पर्धायाश्च चित्रत्व एव सम्भवात्, कक्षापदस्य चित्रत्वे पर्यवसितत्वात्, सेनापदस्य च रथेषु पर्यवसितत्वात्, काक्षसेनिपदेन चित्ररथपुत्रो लक्ष्यते । तेन चैत्ररथेन अत्र क्षत्रियत्वावगतेः । नन्वेवं क्लेशेन कथं क्षत्रियत्वं गम्यत इत्यत आह—लिङ्गादिति । छन्दोगानां द्विरात्रे श्रूयते । "एतेन चैत्ररथं कापेया अयाजयꣳस्तमेकाकिनमन्नाद्यस्याध्यक्षमकुर्वꣳस्तस्माच्चैत्ररथो नाम क्षत्रपतिर्जायत इति" । "समानान्वयानां समानान्वया एव याजकाः प्रायेण दृष्टा" इति कापेयसम्बन्धः काक्षसेनेश्चैत्ररथत्वे लिङ्गम् । अतस्तद्बलात्तस्य क्षत्रियत्वावगतिः । ब्रह्मचारी ब्रह्मवित् । तस्य तथात्वं परीक्षितुमेतौ सम्वर्गविद्योपासकौ सम्वर्गरूपाय प्राणाय पूर्वं भिक्षां न ददतुः, ततस्तदुक्तश्लोकेन तं तद्विदमवगत्य पश्चाद्ददतुः । अतस्तस्यां विद्यायामुपक्रमसन्दिग्धत्वेऽप्युपसंहारे गुरुशिष्यौ ब्राह्मणक्षत्रियौ सिद्धावतस्तस्य निःसन्दिग्धत्वात् प्रकृतेऽपि तावेवावगन्तव्यौ । तस्मान्न जातिशूद्रः सम्वर्गविद्यायामधिकारी ॥

ननु "श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षा"दिति जैमिनीय-

सूत्रात्, "प्रत्यक्षे चानुमाने च यथा लोके बलाबलम्, शीघ्रमन्थरगामित्वात् तथेह श्रुतिलिङ्गयो"रित्यभियुक्तोक्तेश्च श्रुत्यपेक्षया लिङ्गस्य दौर्बल्यात्तत्र क्लेशतस्तल्लाभेन सुतरां दौर्बल्यात् श्रुतिबलादेव शूद्रस्याधिकारोऽस्त्विति शङ्कायामाह—संस्कारेत्यादि। शूद्रस्य क्वचिदपि ब्रह्मविद्यायामधिकारश्चेदत्रापि कल्प्येत। तत्तु नास्ति। कुतः? संस्कारपरामर्शात्। तं होपनिन्ये। सनत्कुमारनारदसम्वादेऽपि, ऋग्वेदं भगवोऽध्येमि, यजुर्वेदं सामवेदमित्यध्ययनलिङ्गात्। एवमन्यत्र सर्वत्र वैदिके अर्थे ज्ञातव्ये उपनयनसंस्कारः परामृश्यते, तस्मात्। किञ्च, वैश्वानरविद्यायां तान् हानुपनीयेत्यत्रापि प्राचीनशालादीनां महाश्रोत्रियत्वलिङ्गेन ब्राह्मणतयोपनयनस्य सिद्धत्वाद्वैशेषिकतन्निषेधस्यैवानुवादात् सर्वत्र तत्परामर्शो निर्बाधः। तदभावाभिलापाच्च। शूद्रस्य तु चतुर्थ एकजातिस्तु शूद्र इति। "न शूद्रे पातकं किञ्चिन्न च संस्कारमर्हती"ति संस्काराभावकथनात्। चकारो, "न शूद्राय मतिं दद्या"दिति निषेधस्य सङ्ग्रहाय। तथा चात्र शूद्रस्याधिकारकल्पनेऽनेकश्रुतिस्मृतिविरोध इति, "आनर्थक्ये प्रमाणानां विपरीतं बलाबल"मिति न्यायात् श्रुतेरेव दौर्बल्यमिति न शूद्रस्य श्रुत्याधिकारसिद्धिरित्यर्थः॥

इतश्च न सर्वथाधिकारः। तदभावस्य शूद्रत्वाभावस्य निर्धारण एव प्रवृत्तेः। गुरुशिष्यभावस्य प्रवर्तमानत्वात्। छान्दोग्येषु (षष्ठ) प्रपाठके सत्यकामो जाबालो जबालां मातरं मन्त्रयाञ्चक्र इत्यत्र अपृच्छं मातरम्, सा मा प्रत्यब्रवीत्, बह्वहं चरन्ती परिचारिणी यौवने त्वामलभे, साहमेतन्न वेद यद्गोत्रस्त्वमसि, जबाला तु नामाहम्, सत्यकामो नाम त्वमसीति सत्यकामवाक्यश्रवणोत्तरं गौतमो "नैतदब्राह्मणो विवक्तुमर्हती"ति तत्सत्यवचनेनोत्तमवर्णत्वं च निश्चित्यैव "सत्यकाममुपनिन्य" इति श्रावणात्। न च निश्चिते ब्राह्मणबीजजत्वे शूद्राभावनिश्चयोक्तिवैयर्थ्यं शङ्क्यम्। व्यभिचारजन्ये शूद्रत्वस्य स्मृतिसिद्धत्वेन वामदेव्यसामोपासकस्य "न काञ्चन परिहरे"दिति श्रुत्या सर्वगामिनः समीपे तस्या गमने तद्योगाज्जातस्य व्यभिचारदोषानाक्रान्तत्वबोधनाय शूद्रत्वाभावनिश्चयकथनस्यावश्यकत्वादिति। तस्मान्न शूद्रस्याधिकारः॥

अधिकारचिन्ता तदा स्यात्, यदि केनचित्प्रमाणेनात्र स सम्भाव्येत। यथा पतिताग्निहोत्रप्रतिपत्तिस्थले शूद्रस्य श्रवणमध्ययनमर्थज्ञानं चेति त्रयाणां निषेधात्। सूत्रे ज्ञानपदानुक्तिस्तु शूद्रसन्निधायनस्याप्यध्ययनतिषेधबोधनार्थम्। तयाच अर्थपदमध्ययनसमभिव्याहारेण तद्वस्तु बोधयदेव समभिव्याहारमहिम्नाऽभिधेयरूपार्थज्ञानमपि वृत्त्यन्तरेण बोधयतीत्येतदर्थमित्यर्थः। शूद्रप्रतिषेधस्तु 'अथास्य वेदमुपशृण्वतस्त्रपुजतुभ्यां श्रोत्रप्रतिपूरणमिति।"पद्यु वा एतच्छ्मशानं यच्छूद्रस्तस्माच्छूद्रसामीप्ये नाध्येयमिति। उदाहरणे जिह्वाच्छेदो धारणे शरीरभेद" इति श्रुतिषु द्रष्टव्यः। पद्यु वेत्यत्र यदि उ वेति पदच्छेदः। किञ्चार्थपदेनेदमपि ज्ञाप्यते। वेदादौ शूद्रास्यदेवतासम्बन्धे मन्त्राणां तत्राभाव एवेति। नचात्र विप्रतिपत्तव्यम्। "छन्दांस्येनं प्रजहन्ति काले नीडं शकुन्ता इव जातपक्षा" इति महाभारते तत्तत्त्यागबोधनात्। पद्मपुराणीये गीतामाहात्म्ये विभूतिविश्वरूपाध्याययोः पक्षिरूपेणोपनयनस्मरणाच्च। किञ्च,"वेदाक्षरविचारेण शूद्रः पतति तत्क्षणात्","वेदाक्षरविचारेण ब्राह्मणीगमनेन च, कपिलाक्षीरपानेन शूद्रश्चाण्डालतां व्रजे"दित्यादिस्मृतेरपि न शूद्रस्याधिकारः। अतः स्मृतेरिति शब्दरूपस्य षष्ठ्यन्तस्यादिदं बोध्यते। यत् स्मार्तपौराणज्ञानकर्मणोरपि न शूद्रजातिजनकेन दुष्कर्मणा जातिशूद्रस्याधिकारः। किन्तु शापादिना कारणविशेषेण जातानामेवाधिकार इति। तेन पुराणादिपाठोऽपि सङ्कोचादेवायगन्तव्यः। तस्मात् क्वचिदपि वैदिके शूद्रस्य नाधिकार इति स्थितम्॥

## १० कम्पनाधिकरणम् ।

( जगत्कपनात्पुरुषोत्तमः )

**कम्पनात् ॥ १।३।३९ ॥**

कठवल्लीविचारेण निश्चिता ह्यधिकारिणः ।
वाक्यान्तरं च तत्रत्यं चिन्त्यते प्रलयावधि ॥ २१ ॥

यदिदं किञ्च जगत्सर्वं प्राण एजति निःसृतम् । महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ति ( कठ. २।६।२ ) इति । अत्र प्राणवज्रोद्यमनशब्दाभ्यां सन्देहः । किं प्राणोपासना इन्द्रोपासना वा ब्रह्मवाक्यं वेति । बाधकशब्दस्य श्रुतित्वान्न प्रकरणेन निर्णयः । "अमृतं वै प्राणाः" (तै.सं. २।६।८) इति श्रुतेः । प्राणोपासकस्याप्यमृतत्वप्राप्तिर्युज्यते । इन्द्रस्याप्यमरत्वात् । वज्रमुद्यतमिति प्राणपक्षे वियोजने मरणजनकत्वाद्भयरूपत्वम् । इन्द्रपक्षे बलाधिष्ठातृत्वात्प्राणत्वम् । तस्मात्प्राण इन्द्रो वा वाक्यार्थ इत्येवम्प्राप्ते । उच्यते—

कम्पनात् । कम्पनमत्र प्रथमवाक्यार्थः[1]। स च भयहेतुकः । अविशेषेण सर्वजगत्कम्पनं भगवद्धेतुकमेव भवति । नचैकान्ततो वज्रं इन्द्रस्यैवायुधं भवति । अग्निहृदयत्वात् । तस्य "तान्तस्य हृदयमाच्छिदत् साशनिरभवत्" (तै.ब्रा.१।१।३) इति श्रुतेः । तस्मान्मारकरूपमेवेदं भगवतः । प्राणशब्दवाच्यत्वं तु पूर्वमेव सिद्धम् । तस्मात्सर्वजगत्कम्पनं भगवत्कृतमिति भगवानेव वाक्यार्थः ॥१।३।३९॥१०

---

**शब्दादेव प्रमित** इत्यधिकरणविचारप्रसङ्गेनाधिकारिनिरूपणं प्रसङ्गतः कृतमिदानीं पुनः सिंहावलोकनन्यायेन षष्ठवल्लीस्थवाक्यान्तरविचारं कर्तुं कम्पनाधिकरणमाहुः—**कम्पनादि**ति । तत्रत्यं षष्ठवल्लीस्थम् । कीदृशं वाक्यान्तरमित्यत आहुः—**प्रलयावधी**ति । तद्वाक्यप्रतिपाद्यं रूपम् । प्रलयस्यावधिभूतमित्यर्थः ॥ विषयवाक्यमाहुः—**यदिदमि**ति । पादत्रयमेकं वाक्यम् । य एतदिति द्वितीयं वाक्यम् । सन्देहबीजमाहुः—**अत्रे**ति । **न प्रकरणेने**ति । श्रुत्यपेक्षया प्रकरणस्य दुर्बलत्वादिति भावः । पूर्वपक्षमाहुः—**अमृतमि**ति । प्राणविधैवेयमित्यपि निश्चयो वक्तुं न शक्यते इत्याह—**इन्द्रस्यापी**ति । अमरत्वादयं हेतुस्तदुपासकस्याप्यमृतप्राप्तिर्युज्यते इति पूर्वान्वयी । इन्द्रस्यात्र प्राप्तौ बीजमाहुः—**वज्रमि**ति । सिद्धान्तमाहुः—**उच्यत** इति । **प्रथमवाक्यार्थ** इति । पादत्रयवाक्यार्थ इत्यर्थः । भये सति कम्पनं जायते इति भयजनको भगवानेवेति भावः । अत्र श्रुतिः "भीषास्माद्वातः पवते भीषोदेति सूर्य" इत्यादि । प्राणस्तु वाक्यार्थो न भवति । तस्य वियोगे एव भयजनकत्वात् । इन्द्रस्य भयजनकत्वं वारयन्ति—**नचे**ति । नहीत्यर्थः । अग्निहृदयं वज्रं इन्द्रायुधं न भवतीत्यर्थे श्रुतिप्रमाणमाहुः—**तस्ये**ति । इयं च श्रुतिः प्रथमाष्टके तैत्तिरीये ब्राह्मणे प्रथमाध्याये पठिता । **पूर्वमेवे**ति । अत एव प्राण इत्यधिकरण इत्यर्थः । इतिदशमाधिकरणम् ॥

---

१ अत्रेत्थं व्याख्यानान्तराणि—

(१) तत्र शाङ्कराः—समाप्तः प्रासङ्गिकोऽधिकारविचारः । अधुना प्रकृतवाक्यार्थविचारं प्रवर्तयिष्यामः । प्रासङ्गिकत्वाच्चाव्यवहितेनास्य सङ्गत्यपेक्षा । पूर्वम् "शब्दादेव प्रमितः" इत्यत्र ब्रह्मवाक्ये जीवानुवादो ब्रह्मज्ञानायेत्युक्तम् । न तथेह "यदिदम्" इति वाक्ये प्राणानुवादो युक्तः, तस्य स्वरू-

पतः कल्पितस्य ब्रह्मैक्यायोगादिति प्रत्युदाहरणसङ्गत्येदमाह।[1]अत्र पूर्वपक्षे प्राणोपास्तिः, सिद्धान्ते निर्विशेषब्रह्मधीरिति फलभेदः। कठवल्लीषु श्रूयते—"यदिदं किञ्च जगत्सर्वं प्राण एजति निःसृतम्" इत्यादि। तत्र "एजृ कम्पने" इति धातोः कम्पनार्थकत्वात्सर्वजगत्कम्पनहेतुः प्राणः प्रतीयते। स किं वायुविकारः, उत परमात्मेति सन्देहे, वायुविकार इति पूर्वः पक्षः। सिद्धान्तस्तु—"प्राणस्य प्राणम्....." इति प्राणशब्दस्य परमात्मनि प्रसिद्धेः, इह प्राणशब्दवाच्यः परमात्मैव। कुतः, कम्पनात् सर्वस्य सवायुकस्य जगतो जीवनादिचेष्टाहेतुत्वात्। तद्धेतुत्वं च "न प्राणेन नापानेन....." इत्यादि-श्रुतिप्रसिद्धम्॥

(२) रामानुजीये—तदेवं प्रसक्तानुप्रसक्ताधिकारकथां परिसमाप्य प्रकृतस्याङ्गुष्ठप्रमितस्य भूतभव्येशितृत्वावगतपरब्रह्मभावोत्तम्भनं हेत्वन्तरमाह। "अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति" "अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मे"त्यनयोर्वाक्ययोर्मध्ये—"यदिदं किञ्च जगत्सर्वं प्राण एजति निःसृतम्। महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ति। भयादस्याग्निस्तपति भयात्तपति सूर्यः। भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः। इति कृत्स्नस्य जगतोऽग्निसूर्यादीनां चास्मिन्नङ्गुष्ठमात्रे पुरुषे प्राणशब्दनिर्दिष्टे स्थितानां सर्वेषां ततो निःसृतानां तस्मात्सञ्जातमहाभयनिमित्तमेजनं कम्पनं श्रूयते। तच्छासनातिवृत्तौ किं भविष्यतीति महतो भयाद्वज्रादिवोद्यतात्कृत्स्नं जगत्कम्पत इत्यर्थः। भयादस्याग्निस्तपतीत्यनेनैकार्थ्यात्। महद्भयं वज्रमुद्यतमिति पञ्चम्यर्थे प्रथमा। अयं च परस्य ब्रह्मणः स्वभावः। "एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः" "भीषास्माद्वातः पवते। भीषोदेति सूर्यः। भीषास्मादग्निश्चेन्द्रश्च। मृत्युर्धावति पञ्चमः" इति परस्य ब्रह्मणः पुरुषोत्तमस्यैवंविधैश्वर्यावगतेः॥

(३) माध्वे—"यदिदं किञ्च जगत् सर्वं प्राण एजतिनिःसृतम्। महद्भयं वज्रमुद्यतं यत्र तद्विदुरमृतास्ते भवन्ती"त्युद्यतवज्रज्ञानान्मोक्षः प्रतीयत इति अतोऽब्रवीत् एजतीति कम्पनवचनादुद्यतवज्रो भगवान्। "को ह्येवान्यात् कः प्राण्याद् यदेष आकाश आनन्दो न स्यादि"ति हि श्रुतिः। "प्राणस्य प्राणमुत चक्षुषश्चक्षुरि"ति च। "नभस्वतोऽपि सर्वाः स्युश्चेष्टा भगवतो हरेः। "किमुतान्यस्य जगतो यस्य चेष्टा नभस्वत" इति स्कान्दे। "चक्रश्चङ्क्रमणादेष वर्जनाद्वज्र उच्यते। खण्डनात् खड्ग एवैष हेति नामा हरिः स्वयमि"ति ब्रह्मवैवर्त्ते॥

(४) नैम्बार्के—प्रमितः परः पुरुषः प्रतिपत्तव्यः सर्वजगत्कम्पकत्वान्महदादिभ्यश्च॥

(५) भैक्षवे—अवसितः प्रासङ्गिकोऽधिकारिविचारः इदानीमवशिष्टो ब्रह्मवाक्ये विचारः पुनः प्रवर्तते। ननु यत्र प्राणाद्युपाधिना तत्तद्रूपेण ब्रह्मोपासनं विवक्षितं तादृशवाक्येषु प्राणादिशब्दा जीवे मनुष्यादिशब्दवन्निरूढलक्षणया ब्रह्मण्युपपद्यन्ते, येषु च "प्राणस्य प्राण" इत्यादिवाक्येषु तथा विवक्षा नास्ति तथाविधवाक्येषु प्राणादिशब्दाः कथं ब्रह्मण्युपपद्येरन्नित्येतामाशङ्कामपाकरोति सूत्रत्रयेण। ब्रह्म प्राणः प्राणशब्दवाच्यं भवति कम्पकत्वगुणयोगादित्यर्थः। ब्रह्म हि सर्वजगद्विकारपरम्पराभिः प्रतिक्षणं चालयतीति प्राणतुल्यता प्राण उच्यत इति। अयं च प्राणशब्दो रूपको मुखं चन्द्र इति वत्। कम्पनादित्येव सूत्रं क्वचिद्वर्तते स च पाठो लेखकप्रमाद एवेत्यनुमीयते साध्यानिर्देशानौचित्यात्। उत्तरसूत्रयोः साध्यनिर्देशेन अत्रापि तदौचित्याच्च। तस्मिन्नपि च पाठेऽयमेवार्थः, यद्वा तस्मिन् पाठे सूत्रमिदं शूद्रानधिकारे हेतुतया पूर्वाधिकरणशेषत्वेन व्याख्येयं शूद्रस्य श्रवणादिप्रतिषेधे युक्तिमप्याह कम्पनात् चलचित्तत्वादपि शूद्राणामेकाग्रतासाध्यब्रह्मविद्यादावनधिकार इत्यर्थः॥

(६) भास्करीये—कठवल्लीषु पठ्यते। "यदिदं किञ्च जगत् सर्वं प्राण एजति निःसृतं महद्भयं

[1] एतन्मते प्राणकम्पनादिति सूत्रम्।

वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्तीति । तत्र संशयः, किं पञ्चवृत्तिर्वायुः प्राणः किं वा ब्रह्मेति । किं तावद्युक्तं प्रसिद्धेर्वायुः प्राणः समष्टिव्यष्टिभावेनावस्थितः । यद्यपीदं ब्रह्मप्रकरणं तथापि श्रुतिर्बलीयसीति पूर्वः पक्षस्तत्र जगत्परिवर्तमानमेजति कम्पते वज्रमशनिः प्रसिद्धेः । एवं प्राप्ते ब्रूमो ब्रह्मैव प्रतिपत्तव्यं, कस्मात्, पूर्वापरपर्यालोचनात् प्रतीतेः । "तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते" इति पुरस्तादुपक्रमादुत्तरत्रापि "भयादस्याग्निस्तपति भयात्तपति सूर्यः भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चम" इति । तन्मध्यपतितेऽस्मिन् वाक्ये ब्रह्मैव निर्दिष्टं गम्यते न वायुः । कस्माज्जगतः कम्पनात् । ब्रह्मणो हि निखिलं जगद् बिभ्यत् कम्पते स्वव्यापारे नियमेन प्रवर्तत इत्यर्थः ॥

(७) श्रीमद्वल्लभाचार्यमतेऽयमभिप्रायः—एवं प्रसङ्गाद् ब्रह्मविद्याधिकारं विचार्य, पुनः कठवल्लीस्थमेव वाक्यान्तरं विचारयति । "यदिदं किञ्च जगत् सर्वं प्राण एजति निःसृतं महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ती"ति । अर्थस्तु, यदिदं किञ्च, परिदृश्यमानमपरिदृश्यमानं च सर्वं जगत्, प्राणे विद्यमाने निःसृतं बहिरागतं सदेजति कम्पते । तत्र हेतुः, महद्भयं महतां भयं यस्मात् तादृशं, वज्रमुद्यतम् । आयुधमुल्लासितमिति पदसमन्वयात् स्फुटयति । चतुर्थपादस्त्वेतज्ज्ञानफलबोधकं वाक्यान्तरम् । तत्र सन्देहः । किमत्र प्राणोपासनोच्यते, इन्द्रोपासना वा, ब्रह्मवाक्यं वेदमिति । तत्र बीजं तु प्राणः, वज्रोद्यमनरूपमिन्द्रलिङ्गं, ब्रह्मप्रकरणं च यथायथम् । पूर्वपक्षस्तु, प्रकरणापेक्षया श्रुतेर्बलिष्ठत्वाद् "अमृतं वै प्राण" इति श्रुत्या प्राणोपासकस्याप्यमृतत्वप्राप्तेर्युक्तत्वादिहप्राणवियोगे मरणसम्भवेन भयरूपत्वस्यापि सम्भवाच्च प्राणोपासनेवात्र युक्ता । लिङ्गविचारे त्विन्द्रस्याप्यमरत्वात्तदुपासकस्याप्यमृतत्वं युज्यते । बलाधिष्ठातृत्वात् प्राणत्वं चेन्द्रस्य । अतः प्राण इन्द्रो वा वाक्यार्थ इत्येवं प्राप्तम् । तत्रोच्यते—कम्पनादिति । आयुधोद्यमनजभयहेतुकं कम्पनमत्र प्रथमवाक्यार्थः । तत्रापि "यदिदं किञ्चे"त्यनेन सर्वपदे सङ्कोचवारणात् तत् सर्वसम्बन्धि, तच्च भगवद्धेतुकमेवेति तदसाधारणम् । अतो न प्राणधर्मः । इन्द्रस्य तु लिङ्गमपि शिथिलम् । वज्रस्याग्निहृदयत्वात् । "तस्य तान्तस्य हृदयमाच्छिदत् साऽशनिरभव"दिति श्रुतेः । नच प्राणश्रुतिविरोधः । प्राणशब्दवाच्यत्वस्य "अत एव प्राण" इत्यत्रैव साधितत्वात् । नचाधिकरणव्यर्थता । भगवत एतादृशमारकत्वस्य प्रागसाधितत्वेन तत्साधनार्थत्वात् । नच पक्षानुल्लेखदोषः । एतादृशस्य हेतोर्वाक्यान्तरे अदर्शनाद्धेतुरेव पक्षमाक्षेप्स्यतीत्याशयेन विमृश्यनिष्ठविशेषान्तरविमर्शस्यात्र करणेन च तत एव तस्य स्फूर्तौ न्यूनताया अभावादिति ॥

## ११ ज्योतिर्दर्शनाधिकरणम् ॥

( ज्योतिर्ब्रह्मैव )

ज्योतिर्दर्शनात् ॥ १।३।४० ॥

स एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरभिसम्पद्य स्वेन रूपेणाभिनिष्पद्यते (छां. ८।१२।३) इति । तत्र संशयः । परं ज्योतिर्महाभूतरूपं ब्रह्म वेति—

ब्रह्मधर्माश्च ये केचित् सिद्धा युक्त्याऽपि साधिताः ।
निर्णायकास्ततोऽप्यन्ये चत्वारोऽत्र निरूपिताः ॥ २२ ॥

तत्र रूढ्योपपत्त्या च महाभूतमेव ज्योतिरित्येवं प्राप्ते । उच्यते—

ज्योतिर्ब्रह्मैव । कुतः ? दर्शनात् । दर्शनं सर्वत्र दर्शनं न्याय इति यावत् । सुषुप्तौ सर्वत्र—"सता सोम्य तदा सम्पन्नो भवति । सति सम्पद्य न विदुः । सति सम्पद्यामहे" ( छां. ६।९।२ ) इति । अहरहर्ब्रह्मलोकं गच्छन्तीत्यादिप्रदेशेषु ब्रह्मसम्पत्तिरेवोक्ता। अत्रापि सम्प्रसादवचनात्परं ज्योतिर्ब्रह्मैव। तस्माद्यः कश्चन शब्दो ब्रह्मस्थाने पठितस्तद्वाचक एवेति ॥ १।३।४०॥११ ॥

---

ज्योतिश्चरणाधिकरणभिन्नज्योतिर्दर्शनाधिकरणमाहुः—ज्योतिर्दर्शनात् । छान्दोग्ये दशमप्रपाठके दहरविद्यास्थमिन्द्रप्रजापतिसम्वादस्थं विषयवाक्यमाहुः—य एष इति। महाभूतरूपमिति। पञ्चसु महाभूतेषु मध्ये तृतीयं तेजोरूपमादित्यमित्यर्थः । ज्योतिश्चरणाधिकरणापेक्षया विशेषं कारिकयाहुः—ब्रह्मधर्मा इति । सिद्धाः साधिताश्च केचित् । अत्र तु चत्वारः निर्णायका निरूपिताः । ते के इत्याकाङ्क्षायां पूर्ववाक्यगतं उपसम्पत्तव्यत्वं उपसम्पन्नस्वरूपाभिनिष्पादकत्वम् । उत्तरवाक्यगतं च हृदयत्वं सत्यपदोक्त मर्त्यामृतनियामकत्वं च । इदं च विषवाक्ये स्पष्टम् ।

पूर्वपक्षमाहुः—तत्रेति । रूढ्येति । ज्योतिःपदस्य रूढिस्तेजसि । उपपत्तिस्तु अस्माच्छरीरात्समुत्थायेत्यादिना बोधितापरं ज्योतिरादित्य इति ।

सिद्धान्तमाहुः—उच्यत इति । दर्शनमिति । ब्रह्मपदस्थाने ज्योतिःपददर्शनमस्ति, तस्मात् ब्रह्मैवेत्यर्थः । तदेव विशदयन्ति—सुषुप्ताविति । तथाच तत्र सच्छब्देन यथा ब्रह्म बोध्यते एवमत्रापि सुषुप्तिबोधकेन सम्प्रसादवचनेन परं ज्योतिर्ब्रह्मैवेति भावः । इत्येकादशमधिकरणम् ॥

---

१ अत्रेतरं व्याख्यानान्तराणि—

(१) तत्र शाङ्कराः—पूर्वं सर्वशब्दश्रुतिसङ्कोचानुपपत्त्या प्रकरणात्प्राणशब्दं ब्रह्मेत्युक्तम् । न तथेह सम्प्रसादवाक्ये प्रकरणानुग्राहकं किञ्चिदस्ति, येन प्रकरणाज्ज्योतिः शब्दितं ब्रह्म स्यादिति प्रत्युदाहरणसङ्गत्येदमाह । अत्र पूर्वपक्षे आदित्योपास्त्या क्रममुक्तिः; सिद्धान्ते ब्रह्मज्ञानान्मुक्तिरिति फलभेदः । छान्दोग्ये प्रजापतिविद्यायां श्रूयते—"य एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य·····" इत्यादि । तत्र किं ज्योतिःशब्दितमादित्यादितेजः, उत ब्रह्मेति विशये, आदित्यादितेज इति पूर्वः पक्षः । सिद्धान्तस्तु—ज्योतिरत्र परब्रह्मैव । कुतः ? दर्शनात् "य आत्माऽपहतपाप्मा" इत्युपक्रमालोचनया ब्रह्मण एव प्रतिपाद्यतयाऽनुवृत्तिदर्शनादित्यर्थः ॥

(२) रामानुजीये—इतश्चाङ्गुष्ठप्रमितः पुरुषोत्तमः । तयोर्द्वयोरेवाङ्गुष्ठप्रमितविषययोर्वाक्ययोर्मध्ये परब्रह्मासाधारणं सर्वतेजसां छादकं, सर्वतेजसां कारणभूतमनुग्राहकं चाङ्गुष्ठप्रमितस्य ज्योतिर्दृश्यते । "न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः । तमेव भान्तमनुभाति सर्वं, तस्य भासा सर्वमिदं विभाति" इति अयमेव श्लोक आथर्वणे परब्रह्माधिकृत्य श्रूयते । परज्योतिष्ट्वं च सर्वत्र परस्य ब्रह्मणः श्रूयते "यथा परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" "तं देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतमि"ति । अथ, "यदतः परो दिवो ज्योतिर्दीप्यते" इत्यादिषु । अतोऽङ्गुष्ठ-प्रमितः परं ब्रह्म ॥

(३) माध्वे—हृदय आहितं ज्योतिः परमात्मेत्युक्तं तत्र योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुष इत्यत्रोभौ लोकावनुसञ्चरतीति वचनाद् जीव इति प्रतीयत इति । अत उच्यते । विष्णुरेव ज्योतिर्विष्णुरेवात्मा विष्णुरेव ब्रह्म विष्णुरेव बलं विष्णुरेव यशो विष्णुरेवानन्द इति दर्शनाच्चतुर्वेदशिखायां ज्योतिर्विष्णुरेव प्राज्ञेनात्मा अन्वारूढ उत्सर्जनाद् यातीति वचनात्तस्यापि लोकसञ्चरणमस्त्येव ॥

(४) निम्बार्कः—"तस्य भासे"तिज्योतिर्दर्शनात् प्रमितः पुरुषः परः ॥

(५) भैक्षवे—पूर्ववदाशङ्कामाह "तच्छुभ्रं ज्योतिषो ज्योतिरि"त्येवम्विधवाक्येषु ब्रह्म ज्योतिःशब्द-वाच्यं भवति दर्शनात् ब्रह्मणो ज्ञानस्वरूपतया प्रकाशत्वगुणयोगादित्यर्थः ॥

(६) भास्करीये—"एष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभि-निष्पद्यत" इति । तत्र सन्देहः, किं तमोपहं तेजः किं वा ब्रह्मेति । किं तावद्युक्तम् ? तमोपहं तेजः प्रसिद्धेः "अथ यदतः परो दिवो ज्योतिरि"ति परप्रत्यभिज्ञानात् परं ज्योतिरित्यव्यवसितमिह तच्चास्तीति पूर्वः पक्षः । सिद्धान्तस्तु तद्ब्रह्मप्रतिपादनाय प्रकरणं समुत्थाय आत्माऽपहतपाप्मेत्युपक्रमादेतं त्वेव ते भूयोऽनुव्याख्यास्यामीत्यनुसन्धानात् "अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशत" इत्यवधारणादशरीरो वायुरिति च दृष्टान्तोत्पादनात् परमकारणं ज्योतिर्जीवस्योपसम्पत्तव्यमथ यदत इति परस्मिन्नपि ज्योतिःशब्ददर्शनायेति स्थितम् ॥

(७) श्रीमद्वल्लभाचार्यमतेऽयमभिप्रायः—छान्दोग्ये दशमप्रपाठके दहरविद्यायां श्रूयते । "य एष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते स आत्मे"ति । इन्द्रप्रजापतिसम्वादे तु, स आत्मेत्यस्य स्थाने "स उत्तमः पुरुषः स तत्र पर्येति जक्षन् क्रीड"न्नि-त्यादि पठ्यते । तत्र यत्तदोर्नित्यसम्बन्धाद्विभक्तिसामानाधिकरण्याच्च जीवो ग्रहीतुं शक्यते, तथापि गीताया"मुत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृत" इत्युत्तमपुरुषत्वेन परमात्मनो बोधनस्यात्र प्रत्यभि-ज्ञानात् तत्र सन्निधि विभक्तिसामानाधिकरण्यं चानादृत्य व्यवहितं व्यधिकरणविभक्तिबोधितमपि ब्रह्मैव वाक्यार्थत्वेन निश्चीयते । अतो दहरविद्यास्थमेव वाक्यं विषयः । संशयस्तु, परं ज्योतिर्महाभूतं, ब्रह्म वेति । तत्र, राजर्षिचिराणि नदीतीरात् समुत्थितानीत्यादौ लोके समुत्थानस्योद्गमने प्रयोगदर्श-नादस्माच्छरीरात् समुत्थायेत्युक्तस्य शरीरात् समुत्थानस्य तत उद्गमनार्थत्वे निश्चिते तदुत्तरमुपस-म्पत्तव्यस्य ज्योतिषोऽर्चिरादिरूपस्यैव युक्तया जीवस्यार्चिरादिमार्गेण गमनेऽर्चिराद्यपेक्षया आदित्यादेः परत्वस्यापि सम्भवेन रूढेस्त्यागायोगाद्भौतिकं भूतरूपं वा ज्योतिरत्रोच्यते इति प्राप्तम् । तत्राभिधी-यते । ज्योतिरत्र परं ब्रह्मैव । कुतः ? दर्शनात् । समानप्रकरणे, "सता सौम्य तदा सम्पन्नो भवति

सति सम्पद्य न विदुः सति सम्पद्यामह" इति। "अहरहर्ब्रह्मलोकं गच्छन्ती"त्यादिप्रदेशेषु सम्पत्त्यत्वेन ब्रह्मण एव दर्शनादत्रापि सम्प्रसादवचनेन सुषुप्तेरेव बोधनाद् ब्रह्मस्थाने प्रयुक्तस्य ज्योतिःपदस्य ब्रह्मवाचकताया एव न्याय्यत्वादित्यर्थः। नच श्रुत्यपेक्षया स्थानस्य नैर्बल्यान्नेदं युक्तमिति शङ्क्यम्। वाग्ज्योतिरित्यत्र वाच्यपि तत्प्रयोगेण श्रुतेः सन्दिग्धत्वादिति। तस्माद् ब्रह्मस्थाने यः शब्दः प्रयुज्यते स ब्रह्मवाचक एवेति निश्चयः। नच ज्योतिश्चरणाधिकरणे ब्रह्मणो ज्योतिःशब्दवाच्यतायाः सिद्धत्वात् किमेतत्प्रणयनेनेति शङ्क्यम्। ये धर्माः पूर्वं ब्रह्मासाधारणतया सिद्धाः, ये च युक्त्या साधितास्तेभ्योऽतिरिक्ता ये धर्मास्तेषां ब्रह्मासाधारण्यबोधनार्थत्वात्। ते च, उपसम्पत्तव्यत्वम्, उपसम्पन्नस्वरूपाभिनिष्पादकत्वम्, पूर्ववाक्यगतं हृदयत्वम्, उत्तरवाक्यगतसत्यपदोक्तमर्त्यामृतनियामकत्वं चेति चत्वारो बोध्याः। अतो न प्रयोजनशून्यत्वदोषः॥



## १२ अर्थान्तरव्यपदेशाधिकरणम् ।

### ( छान्दोग्यश्रुतौ नामरूपनिर्वाहकतया आकाशो ब्रह्मैव )

### आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॥ १।३।४१ ॥

"आकाशो वै नाम नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म" ( छां. ८।१४।१ ) इति श्रूयते । तत्राकाशशब्दे सन्देहः । भूताकाशः परमात्मा वेति । नामरूपनिर्वाहमात्रत्वमवकाशदानाद् भूताकाशस्यापि भवतीति न ब्रह्मपरत्वम् । अन्यस्य च नियामकस्याभावादित्येवम्प्राप्ते—

उच्यते । आकाशः परमात्मा । अर्थान्तरत्वादिव्यपदेशात् । यद् भूताकाशस्य प्रयोजनं श्रुतिसिद्धं तस्मादन्यस्य व्यपदेशः कार्यान्तरादिव्यपदेशश्च । यत्रैव हि सिद्धवत्कारेणोत्कृष्टधर्मा अतदीयास्तदेव ब्रह्मेति । नापि नामरूपनिर्वाह आकाशस्य माहात्म्यहेतुर्भवति । वै निश्चयेनेति सिद्धवत्काराञ्चोपासनापरत्वम् । निर्वाहस्य ब्रह्मधर्मत्वं न श्रुत्यन्तरसिद्धमिति विचारः । अर्थापत्तिसूचकस्त्वयमेव न्याय इति । तस्माद् यत्रैवातद्धर्मकथनमन्यवाच्यस्य तत्रैव ब्रह्मपरत्वमिति सिद्धम् ॥ १।३।४१॥१२

---

पूर्वमाकाशपदस्य चिदाकाशपरत्वं व्यवस्थापितम्, इदानीं छान्दोग्यसमाप्तौ "आकाशो वै नामे"ति-
वाक्यं श्रूयते, तत्र सन्देहनिवारणार्थमाकाशार्थान्तराधिकरणमाहुः—**आकाशोऽर्थान्तरत्वादिव्य-**
**पदेशात्** । संशयमाहुः—**भूताकाश** इति । पूर्वपक्षमाहुः—**नामेति** । **निर्वाहमात्रत्वमिति** ।
प्रतीयत इति शेषः । सिद्धान्तमाहु—**उच्यत** इति । **प्रयोजनमिति** । वायुजननरूपं प्रयोजनमि-
त्यर्थः । **अन्यस्येति** । ते यदन्तरे इत्यनेनोक्तस्य समन्तात् तदन्तःस्थापनरूपस्येत्यर्थः । **व्यपदेशः** ।
कथनम् । **कार्यान्तरेति** । वायुजनकत्वादिरूपाकाशकार्यातिरिक्तकार्यकर्तृत्वव्यपदेशश्चेत्यर्थः । **सिद्ध-**
**वत्कारेणेति** । वैपदेन सिद्धवत्कारो बोध्यते । तेन पदेनातदीयाः भूताकाशसम्बधिन उत्कृष्टधर्मा यत्र
बोध्यन्ते तदेवेत्यर्थः । ननु महात्म्यहेतुकं नियमनत्वं नभस्त्वमिति नामनिर्वाहकत्वमाकाशस्य स्यादत
आहुः—**नापीति** । "अदो ददाति श्वसतां पदं यन्नियमान्नभः" इत्यादिवचनादिदमपि भगवदधीनत्व-
मिति तस्यैव माहात्म्यमिति भावः । ननु निर्वाहो ब्रह्मधर्म एव भवतु, उपासनार्थमाकाशे प्रयुज्यते, इत्या-
काशवाक्यमेवेत्यत आहुः—**वै** इति । उपासनापरत्वाभावे निर्वाहः ब्रह्मधर्म इति ब्रह्मवाक्यमित्यर्थः ।
नन्वेवं चेत्तर्हि तद्धर्माधिकरणेन गतार्थत्वान्नेदं सूत्रमारम्भणीयमित्यत आहुः—**निर्वाहस्येति** । **विचार**
इति । पृथगधिकरणविचार इत्यर्थः । **अर्थापत्तीति** । आकाशो वै इति ब्रह्मवाक्यं न स्यात्तर्हि निर्वा-
हस्य ब्रह्मधर्मत्वं न स्यात्, निर्वाहस्य ब्रह्मधर्मत्वं तु न्यायसिद्धं तदन्यथानुपपत्त्या "आकाशो वै" इति
ब्रह्मवाक्यमेवेति । **तस्मादिति** । ब्रह्मणः अन्यं च तत् वाच्यं चेति समासः । अथवा अन्यवाचकपद-
वाच्यस्य तथाच ब्रह्मान्यो भूताकाशः तस्य यः धर्मो निर्वाहरूपः न भवतीत्यतद्धर्मः तस्य यत्र कथनं तत्रे-
त्यर्थः । इति द्वादशाधिकरणम् ॥

---

१ अत्रेत्थं व्याख्यानान्तराणि—

(१) तत्र शाङ्कराः—यथा पूर्वमुपक्रमवशादर्थान्तरे प्रसिद्धोऽपि ज्योतिःशब्दः स्वार्थात्प्रच्यावितः, तथाकाशोपक्रमवशाद्ब्रह्मादिशब्दोऽपि स्वार्थात्प्रच्याव्यतामिति दृष्टान्तसङ्गत्येदमाह । अत्र पूर्वपक्षे

भूताकाशात्मकब्रह्मोपास्त्या क्रममुक्तिः, सिद्धान्ते ब्रह्मधिया मुक्तिरिति फलभेदः। छान्दोग्ये श्रूयते—"आकाशो वै नाम नामरूपयोर्निर्वहिता....." इत्यादि। तत्र किमाकाशशब्दितो भूताकाशः, उत परमात्मेति विशये, भूताकाश इति पूर्वः पक्षः। सिद्धान्तस्तु—परमात्मैव आकाशशब्दितः। कस्मात्, अर्थान्तरत्वादिव्यपदेशात् "ते यदन्तरा" इत्याकाशस्य नामरूपाभ्यामर्थान्तरत्वेन व्यपदेशात्। आदिशब्देन "तद्ब्रह्म तदमृतं स आत्मा" इति ब्रह्मत्वादिव्यपदेशो द्रष्टव्यः॥

(२) रामानुजीये—छान्दोग्ये श्रूयते। "आकाशो ह वै नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म तदमृतं स आत्मे"ति। तत्र संशयः। किमयमाकाशशब्दनिर्दिष्टो मुक्तात्मोत परमात्मेति?। किं युक्तम्?। मुक्तात्मेति। कुतः? "अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात्प्रमुच्य धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवामी"ति मुक्तस्यानन्तरप्रकृतत्वात्। ते यदन्तरेति च नामरूपविमुक्तस्य तस्याभिधानात् "नामरूपयोर्निर्वहिता" इति च स एव पूर्वावस्थयोपलिलक्षयिषितः। स एव हि देवादिरूपाणि नामानि च पूर्वमन्वभवत्। तस्यैव नामरूपविनिर्मुक्ता साम्प्रतिक्यवस्था "तद्ब्रह्म तदमृतमि"त्युच्यते। आकाशशब्दश्च तस्मिन्नप्यसङ्कुचितप्रकाशयोगादुपपद्यते। ननु दहरवाक्यशेषत्वादस्य स एव दहराकाशोऽयमिति प्रतीयते। तस्य च परमात्मत्वं निर्णीतम्। नैवम्। प्रजापतिवाक्यव्यवधानात्। प्रजापतिवाक्ये च प्रत्यगात्मनो मुक्त्यवस्थान्तं रूपमभिहितम्। "अनन्तरं च विधूय पापम्" इति स एव मुक्तावस्थः प्रस्तुतः। अतोऽत्राकाशो मुक्तात्मेति प्राप्त उच्यते आकाशोऽर्थान्तरत्वादिव्यपदेशात्। आकाशः परं ब्रह्म। कुतः? अर्थान्तरत्वादिव्यपदेशात्। अर्थान्तरत्वव्यपदेशस्तावत्। "आकाशो ह वै नामरूपयोर्निर्वहिता" इति नामरूपयोर्निर्वोढृत्वं बद्धमुक्तोभयावस्थात्प्रत्यगात्मनोऽर्थान्तरत्वमाकाशस्योपपादयति। बद्धावस्थः स्वयं कर्मवशान्नामरूपे भजमानो न नामरूपे निर्वोढुं शक्नुयात्। मुक्तावस्थस्य जगद्व्यापारसम्भवान्न नितरां नामरूपनिर्वोढृत्वम्। ईश्वरस्य तु निखिलजगन्निर्माणधुरन्धरस्य नामरूपयोर्निर्वोढृत्वं श्रुत्यैव प्रतिपन्नम्। "अनेन जीवेनात्मनानुप्रविश्य, नामरूपे व्याकरवाणि", "यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः, तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते", "सर्वाणि रूपाणि विचित्य धीरः, नामानि कृत्वाभिवदन्यदास्ते" इत्यादिषु। अतो, निर्वाह्यनामरूपात्प्रत्यगात्मनो नामरूपयोर्निर्वोढाऽयमाकाशोऽर्थान्तरभूतः परमेव ब्रह्म। "तदेवोपपादयति ते यदन्तरे"ति। यस्मादेवायमाकाशो नामरूपे अन्तरा ताभ्यामस्पृष्टोऽर्थान्तरभूतस्तस्मात्तयोर्निर्वोढा। अपहतपाप्मत्वात्सत्यसङ्कल्पत्वाच्च निर्वहितेत्यर्थः। आदिशब्देन ब्रह्मत्वात्मत्वामृतत्वादीनि गृह्यन्ते। निरुपाधिकबृहत्त्वादयो हि परमात्मन एव सम्भवन्ति। तेनात्राकाशः परमेव ब्रह्म। यत्पुनरुक्तं "धूत्वा शरीरम्" इति मुक्तोऽनन्तरः प्रकृत इति तन्न, "ब्रह्मलोकमभिसम्भवानि" इति परस्यैव ब्रह्मणोऽनन्तरप्रकृतत्वात्। यद्यप्यभिसम्भवितुर्मुक्तस्याभिसम्भाव्यतया परब्रह्म निर्दिष्टं तथाप्यभिसम्भवितुर्मुक्तस्य नामरूपनिर्वोढृत्वाद्यसम्भवादभिसम्भाव्यं परमेव ब्रह्मात्र प्रत्येतव्यम्। किञ्चाकाशशब्देन प्रकृतस्य दहराकाशस्यात्र प्रत्यभिज्ञानात्प्रजापतिवाक्यस्याप्युपासकस्वरूपकथनार्थत्वादुपास्य एव दहराकाशः प्राप्यतयोपसंह्रियत इति युक्तम्। आकाशशब्दस्य प्रत्यगात्मनि न क्वचिद्दृष्टचरः। अतोऽत्राकाशः परं ब्रह्म॥

(३) माध्वे—सर्वाधारत्वं विष्णोरुक्तं तथाकाशो वै नाम नामरूपयोर्निर्वहितेत्याकाशस्य प्रतीयते। वै नामेति प्रसिद्धोपदेशात् प्रसिद्धाकाशस्याङ्गीकर्तव्य इति। अत उच्यते। ते यदन्तरा तद्ब्रह्मेत्यर्था-

न्तरत्वादिव्यपदेशादाकाशो हरिरेव । अवर्णम् । "यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह" इत्यादिश्रुतेः, तस्य हि तल्लक्षणम् । "अनामा सोऽप्रसिद्धत्वादरूपो भूतवर्जनादि"ति च ब्राह्मे ॥

(४) निम्बार्कः—"आकाशो ह वै नामरूपयोर्निर्वहिते"त्यत्राकाशशब्दवाच्यः पुरुषोत्तमः । कुतः ? मुक्तात्मनः जीवात्परमात्मनो नामरूपोपलक्षितनिखिलनामरूपवद्वस्तुनिर्वोढृतयाऽर्थान्तरत्वेन व्यपदेशात्, ब्रह्मत्वामृतत्वादिव्यपदेशाच्च ॥

(५) भैक्षवे—"यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः आकाशो वै नामरूपयोर्निर्वहिता परमे व्योमन् प्रतिष्ठिते"त्येवंविधवाक्यजातेषु ब्रह्म आकाशशब्दवाच्यं भवति अर्थान्तरत्वादिव्यपदेशात्, उभयोरेवाकाशब्रह्मणोः सर्वेषु पदार्थेषु अन्तरत्वव्यपदेशात्, "आकाशवत्सर्वगतश्च नित्य" इत्यादिवाक्यैरित्यर्थः । तथा च सर्वानुगतत्वरूपविभुत्वगुणयोगेनाकाशशब्देन ब्रह्मोच्यत इति भावः । आदिशब्देन नित्यत्वासङ्गत्वसूक्ष्मत्वादयो गुणा ग्राह्याः अनया दिशा प्रजापतीन्द्राद्यादिशब्दा अपि ब्रह्मणि व्याख्येयाः । केचित्तु अनेन सूत्रत्रयेण प्राणस्तथानुगमादित्यादाविव विषयवाक्यानि प्रदर्श्याधिकरणत्रयं रचयन्ति, तन्मन्दम्, पूर्वोक्तप्राणाद्यधिकरणैरेव गतार्थत्वात्, तत्सहपाठौचित्याच्च । तथा कम्पनदर्शनादीनां वाय्वादिसाधारण्येन ब्रह्मपरताया असाधकत्वाच्चेति दिक् । तदेवं ब्रह्मवाक्यानि पादत्रयेण विचारितानि तत्रेदमाशङ्क्य कथं प्रत्यधिकरणं जीवब्रह्मणोर्भेद उक्त उपपद्यतां यतः प्रतिवेदान्तं सुषुप्त्युत्क्रान्तौ मोक्षे च तयोरेकतैव श्रूयते यथा बृहदारण्यकषष्ठे ज्योतिर्ब्राह्मणस्य सुषुप्तिप्रकरणे "सलिल एको द्रष्टाऽद्वैतो भवत्येष ब्रह्मलोकः सम्राडिति" । उत्क्रान्तिप्रकरणे च एकीभवति न विजानातीत्याहुरिति तदनन्तरं च कामयमानस्य पुनरावृत्तिमुक्त्वाह "अथ कामयमानो योऽकामो निष्काम आप्तकाम आत्मकामेन तस्य प्राण उत्क्रामति ब्रह्मैव स न ब्रह्माप्येती"ति अत्र सुषुप्त्युत्क्रान्तिमोक्षेष्वेकलैवावगम्यत इति एवं वेदान्तरेष्वप्युदाहार्य्यम् । तानि च सुषुप्त्यादावभेदवाक्यानि शक्तिशक्तिमद्भेदपरत्वेन नोपपद्यन्ते तादृशाऽभेदस्य जाग्रदादिसाधारण्येन सुषुप्त्यादिविशेषवचनवैयर्थ्यादिति तत्कथं प्रत्यधिकरणं जीवब्रह्मणोर्भेद उक्त इत्याशङ्कां सर्वावाक्यान्तेऽपाकरोति ।

(६) भास्करीये—"आकाशो वै नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म तदमृतं स आत्मे"ति श्रूयते । तत्र सन्देहः किं भूताकाशः किं वा पर इति । भूताकाशमिति प्राप्तम् । अवकाशादिदानेन तस्य नामरूपनिर्वहनं सम्भवतीति प्राप्ते, उच्यते, पर एवाकाश कस्मादन्तरत्वेन व्यपदेशादाकाशस्य ते यदन्तरेत्याकाशस्यापि नामरूपत्वात् तद्व्यतिरेकेणाभिधानादादिशब्देन ब्रह्मत्वामृतत्वात्मत्वसङ्कीर्तनं युज्यते आकाशस्तल्लिङ्गादिति स्पष्टलिङ्गनामरूपनिर्वहणमन्यत्रापि स्यादित्याशङ्कातिरेकः ॥

(७) श्रीमद्वल्लभाचार्यमतेऽयमभिप्रायः—छान्दोग्यसमाप्तौ श्रूयते "आकाशो वै नामरूपयोर्निर्वहिता ते यदन्तरा तद् ब्रह्मे"ति । अत्राकाशशब्दे सन्देहः । श्रुतौ वैशब्दात् प्रसिद्ध्यनुग्रहेण ब्रह्मशब्दप्रयोगेण चोभयत्र युक्तेस्तौल्याद् भूताकाशवाची, ब्रह्मवाची वेति । तत्र नामरूपनिर्वाहो नाम तयोरविच्छेदेन चालनम् । तत्कर्तृत्वमात्रमत्र प्रतीयते, न त्वन्यः कोऽपि धर्मः । तन्मात्रं त्वाकाशस्याप्यवकाशदानात् सम्भवति । नच धर्मसामान्यत्वेन प्रकरणबलाद् ब्रह्म ग्रहीतुं शक्यम् । प्रजापतिश्याचेत्यस्य द्विरुक्त्या श्यामाच्छबलमिति प्रकरणान्तरव्यवधानेन च ब्रह्मप्रकरणस्यात्राभावात् । नापि द्वितीयप्रकरणशेषत्वम् । अभिसम्भवानीत्यस्य द्विरुक्त्या तस्यापि समाप्त्यवगमात् । अत एव न जीवपरत्वम् । आकाशपदस्य जीवपरतायाः क्वाप्यसिद्धत्वात् । नचोपसंहारगतानां ब्रह्मामृतात्मशब्दानामसङ्गतिः शङ्क्या । तेषामवकाशदानकृतबृंहणनित्यत्वव्यापकत्वगुणयोगेनोपासनार्थं प्रशंसानिबन्धनया

गौण्यापि नेतुं शक्यत्वात् । नापि ते यदन्तरेत्यस्य व्यापकतया आकाशेऽपि तत्सम्भवात् । अत उपक्रमगतस्याकाशपदस्योच्चारणमात्रतो भूताकाशावगमात् स एव ग्राह्य इत्येवं प्राप्ते, उच्यते । आकाशः परमात्मैव । कुतः ? अर्थान्तरत्वादिव्यपदेशात् । अर्थः प्रयोजनं यद् भूताकाशस्य श्रुतिसिद्धं वायुजननरूपं तस्मादन्यद् अर्थान्तरं, ते यदन्तरेत्यादिनोक्तम् । आसमन्तान्नामरूपयोरन्तःस्थापनम् । आदिपदेन तद्ब्रह्मेत्यादिना बोधितं तत्पोषकत्वं तयोरानन्दकत्वं तदात्मत्वं च बोध्यम् । तेन अन्तरः अर्थो यस्मादित्यर्थान्तरम्, वाहिताग्न्यादिष्विति परनिपातः । तस्य भावोऽर्थान्तरत्वम् । तदादयः पूर्वोक्ता धर्मा ब्रह्मादिश्रुतयश्च तेषां व्यपदेशात् कथनादिति सौत्रपदस्यार्थः । न चेदमसङ्कुचितं नामरूपनिर्वोढृत्वं निरह्यस्य रूपान्तर्गतस्याकाशस्य सम्भवति, न वा क्वापि श्रुतावाकाशमाहात्म्यहेतुत्वेनोक्तमस्ति । नाप्यसङ्कुचितं तयोरन्तःस्थापनं बृंहणं वा तथा । अत आकाशकार्यातिरिक्तकार्यकर्तृत्वादेरत्रोक्तत्वाद् ब्रह्मादिश्रुतीनां चानुकूल्याद् ब्रह्मैवाकाशः । स्वारसिकं च शब्दानां ब्रह्मवाचकत्वम्, अतो न लक्षणादोषः । यदपि लोकदृष्टस्याकाशस्यावकाशदानान्नामरूपनिर्वाहकत्वं तदपि भगवदधीनम् । "अहो ददाति श्वसतां पदं यन्नियमाद्धम" इति श्रीभागवतवाक्यात् । नचैतेषामुपासनार्थत्वं वक्तुं शक्यम् । वैपदविरोधात् । तस्माद् ब्रह्मधर्म एवायम् । एतस्य ब्रह्मधर्मत्वं न श्रुत्यन्तरसिद्धमत इह विचारितम् । अत एव तद्धर्माधिकरणेन तल्लिङ्गाधिकरणेन वा नास्य गतार्थता । तेनेदं सिद्धम् । यत्रैव सिद्धवत्कारेणोत्कृष्टधर्मा अतदीया अन्यवाचकपदवाच्यस्योच्यन्ते, तत्रार्थापत्त्या ब्रह्मैव बोध्यमिति ॥



## १३ सुपुप्त्युत्क्रान्त्योरित्यधिकरणम् ।

### ( सुपुप्त्युत्क्रान्तिभेदप्रतिपादनम् )

### सुपुप्त्युत्क्रान्त्योर्भेदेन ॥ १।३।४२ ॥

बृहदारण्यके ज्योतिर्ब्राह्मणे–याज्ञवल्क्य किंज्योतिरयं पुरुषः ( बृ. ४।३।२ ) इत्यारभ्य–अभयं ह वै ब्रह्म भवति य एवं वेद इत्यन्ते—

---

अस्मिन् समन्वयाध्याये सर्वेषामुपनिषद्वाक्यानां ब्रह्मणि समन्वयः प्रतिपादनीयः । तत्र बृहदारण्ये षष्ठे प्रपाठके ज्योतिर्ब्राह्मणे प्रायशः जीवान्वाख्यानपरवाक्यानि दृश्यन्ते इत्यतः सुपुप्त्युत्क्रान्त्यधिकरणमारचयाञ्चक्रुः—सुपुप्त्युत्क्रान्त्योर्भेदेन । य एवं वेदेत्यन्ते इति । ब्राह्मणद्वयस्य विषयत्वेन ज्योतिर्ब्राह्मणशारीरब्राह्मणान्तेत्यर्थः । अथ विषयवाक्यम्—

जनकꣳ ह वैदेहं याज्ञवल्क्यो जगाम स मेने न वदिष्य इत्यथ ह यज्जनकश्च वैदेहो याज्ञवल्क्यश्चाग्निहोत्रे समूदाते तस्मै ह याज्ञवल्क्यो वरं ददौ स ह कामप्रश्नमेव वव्रे तꣳहास्मै ददौ तꣳ सम्राडेव पूर्वं पप्रच्छ ॥ १ ॥ याज्ञवल्क्य किंज्योतिरयं पुरुष इति आदित्यज्योतिः सम्राडिति होवाचादित्येनैवायं ज्योतिषास्ते पल्ययते कर्म कुरुते विपल्येतीत्येवमेवैतद्याज्ञवल्क्य ॥ २ ॥ अस्तमित आदित्ये याज्ञवल्क्य किंज्योतिरेवायं पुरुष इति चन्द्रमा एवास्य ज्योतिर्भवतीति चन्द्रमसैवायं ज्योतिषास्ते पल्ययते कर्म कुरुते विपल्येतीत्येवमेवैतद्याज्ञवल्क्य ॥३॥ अस्तमित आदित्ये याज्ञवल्क्य चन्द्रमस्यस्तमिते किंज्योतिरेवायं पुरुष इत्यग्निरेवास्य ज्योतिर्भवतीत्यग्निनैवायं ज्योतिषास्ते पल्ययते कर्म कुरुते विपल्येतीत्येवमेवैतद्याज्ञवल्क्य ॥ ४ ॥ अस्तमित आदित्ये याज्ञवल्क्य चन्द्रमस्यस्तमिते शान्तेऽग्नौ किंज्योरेवायं पुरुष इति वागेवास्य ज्योतिर्भवतीति वाचैवायं ज्योतिषास्ते पल्ययते कर्म कुरुते विपल्येतीति तस्माद्वै सम्राडपि यत्र स्वः पाणिर्न विनिर्ज्ञायतेऽथ यत्र वागुच्चारयत्युपैव तत्र न्येतीत्येवमेवैतद्याज्ञल्क्य ॥ ५ ॥ अस्तमित आदित्ये याज्ञवल्क्य चन्द्रमस्यस्तमिते शान्तेऽग्नौ शान्तायां वाचि किंज्योतिरेवायं पुरुष इत्यात्मैवास्य ज्योतिर्भवतीत्यात्मनैवायं ज्योतिषास्ते पल्ययते कर्म कुरुते विपल्येतीति ॥ ६ ॥ कतम आत्मेति योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः स समानः सन्नुभौ लोकावनुसञ्चरति ध्यायतीव लेलायतीव स हि स्वप्नो भूत्वेमं लोकमतिक्रामति मृत्यो रूपाणि ॥ ७ ॥ स वा अयं पुरुषो जायमानः शरीरमभिसम्पद्यमानः पाप्मभिः सꣳसृज्यते स उत्क्रामन् म्रियमाणः पाप्मनो विजहाति ॥ ८ ॥ तस्य वा एतस्य पुरुषस्य द्वे एव स्थाने भवत इदं च परलोकस्थानं च सन्ध्यं तृतीयꣳ स्वप्नस्थानं तस्मिन्सन्ध्ये स्थाने तिष्ठन्नेते उभे स्थाने पश्यतीदं च परलोकस्थानं च । अथ यथाक्रमोऽयं परलोकस्थाने भवति तमाक्रम्याक्रम्योभयान् पाप्मन आनन्दाꣳश्च पश्यति स यत्र प्रस्वपित्यस्य लोकस्य सर्वावतो मात्रामुपादाय स्वयं विहत्य स्वयं निर्माय स्वेन भासा स्वेन ज्योतिषा प्रस्वपित्यत्रायं पुरुषः स्वयंज्योतिर्भवति ॥ ९ ॥ न तत्र रथा न रथ योगा न पन्थानो भवन्त्यथ रथान्रथयोगान्पथः सृजते न तत्रानन्दा मुदः प्रमुदो भवन्त्यथानन्दान् मुदः प्रमुदः सृजते न तत्र वेशान्ताः पुष्करिण्यः स्रवन्त्यो भवन्त्यथ वेशान्तान् पुष्करिणीः स्रवन्तीः सृजते स हि कर्ता ॥ १० ॥ तदेते श्लोका भवन्ति ॥ स्वप्नेन शारीरमभिप्रहत्याऽसुप्तः सुप्तानभिचाकशीति ॥ शुक्रमादाय पुनरेति स्थानꣳ हिरण्मयः पुरुष एकहꣳसः ॥ ११ ॥ प्राणेन रक्षन्नवरं कुलायं बहिष्कुलायादमृतश्चरित्वा । स

ईयतेऽमृतो यत्र कामꣳ हिरण्मयः पुरुष एकहꣳसः ॥ १२ ॥ स्वप्नान्त उच्चावचमीयमानो रूपाणि देवः कुरुते बहूनि । उतेव स्त्रीभिः सह मोदमानो जक्षदुतेवापि भयानि पश्यन् ॥ १३ ॥ आराममस्य पश्यन्ति न तं पश्यति कश्चनेति तं नायतं बोधयेदित्याहुः ॥ दुर्भिषज्यꣳहास्मै भवति यमेष न प्रतिपद्यतेऽथो खल्वाहुर्जागरितदेश एवास्यैष इति यानि ह्येव जाग्रत्पश्यति तानि सुप्त इत्यत्रायं पुरुषः स्वयंज्योतिर्भवति सोऽहं भगवते सहस्रं ददाम्यत ऊर्ध्वं विमोक्षाय ब्रूहीति ॥ १४ ॥ स वा एष एतस्मिन्सम्प्रसादे रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च पुनः प्रतिन्यायं प्रतियोन्याद्रवति स्वप्नायैव स यदत्र किंचित्पश्यत्यनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुष इत्येवमेवैतद्याज्ञवल्क्य सोऽहं भगवते सहस्रं ददाम्यत ऊर्ध्वं विमोक्षायैव ब्रूहीति ॥ १५ ॥ स वा एष एतस्मिन्स्वप्ने रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च पुनः प्रतिन्यायं प्रतियोन्याद्रवति बुद्धान्तायैव स यत्तत्र किंचित्पश्यत्यनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुष इत्येवमेवैतद्याज्ञवल्क्य सोऽहं भगवते सहस्रं ददाम्यत ऊर्ध्वं विमोक्षायैव ब्रूहीति ॥ १६ ॥ स वा एष एतस्मिन्बुद्धान्ते रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च पुनः प्रतिन्यायं प्रतियोन्याद्रवति स्वप्नान्तायैव ॥ १७ ॥ तद्यथा महामत्स्य उभे कूलेऽनुसञ्चरति पूर्वं चापरं चैवमेवायं पुरुष एतावुभावन्तावनुसञ्चरति स्वप्नान्तं च बुद्धान्तं च ॥ १८ ॥ तद्यथास्मिन्नाकाशे श्येनो वा सुपर्णो वा विपरित्य श्रान्तः संहत्य पक्षौ संलयायैव ध्रियत एवमेवायं पुरुष एतस्मा अन्ताय धावति यत्र सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यति ॥ १९ ॥ ता वा अस्यैता हिता नाम नाड्यो यथा केशः सहस्रधा भिन्नस्तावताणिम्ना तिष्ठन्ति शुक्लस्य नीलस्य पिङ्गलस्य हरितस्य लोहितस्य पूर्णा अथ यत्रैनं घ्नन्तीव जिनन्तीव हस्तीव विच्छाययति गर्तमिव पतति यदेव जाग्रद्भयं पश्यति तदत्राविद्यया मन्यतेऽथ यत्र देव इव राजेवाहमेवेदꣳ सर्वोऽस्मीति मन्यते सोऽस्य परमो लोकः ॥ २० ॥ तद्वा अस्यैतदतिच्छन्दा अपहतपाप्माऽभयꣳ रूपं तद्यथा प्रियया स्त्रिया सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरमेवमेवायं पुरुषः प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरं तद्वा अस्यैतदाप्तकाममात्मकाममकामꣳ रूपꣳ शोकान्तरम् ॥ २१ ॥ अत्र पिताऽपिता भवति माताऽमाता लोका अलोका देवा अदेवा वेदा अवेदा अत्र स्तेनोऽस्तेनो भवति भ्रूणहाऽभ्रूणहा चाण्डालोऽचाण्डालः पौल्कसोऽपौल्कसः श्रमणोऽश्रमणस्तापसोऽतापसो नन्वागतं पुण्येनानन्वागतं पापेन तीर्णो हि तदा सर्वाञ्छोकान्हृदयस्य भवति ॥ २२ ॥ यद्वै तन्न पश्यति पश्यन्वै तन्न पश्यति न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येत् ॥ २३ ॥ यद्वै तन्न जिघ्रति जिघ्रन्वै तन्न जिघ्रति न हि घ्रातुर्घ्रातेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यज्जिघ्रेत् ॥ २४ ॥ यद्वै तन्न रसयते रसयन्वै तन्न रसयते नहि रसयितु रसयतेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यद्रसयेत् ॥ २५ ॥ यद्वै तन्न वदति वदन्वै तन्न वदति न हि वक्तुर्वक्तेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यद्वदेत् ॥ २६ ॥ यद्वै तन्न शृणोति शृण्वन्वै तन्न शृणोति न हि श्रोतुः श्रुतेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यच्छृणुयात् ॥ २७ ॥ यद्वै तन्न मनुते मन्वानो वै तन्न मनुते न हि मन्तुर्मतेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यन्मन्वीत ॥ २८ ॥ यद्वै तन्न स्पृशति स्पृशन्वै तन्न स्पृशति न हि स्प्रष्टुः स्प्रष्टुः स्पृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्स्पृशेत् ॥ २९ ॥ यद्वै तन्न विजानाति विजानन्वै तन्न

विजानाति न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्वि-भक्तं यद्विजानीयात् ॥ ३० ॥ यत्र वान्यदिव स्यात्तत्रान्योऽन्यत्पश्येदन्योऽन्यज्जिघ्रेदन्योऽन्यद्र-सयेदन्योऽन्यद्वदेदन्योऽन्यच्छृणुयादन्योऽन्यन्मन्वीतान्योऽन्यत्स्पृशेदन्योऽन्यद्विजानीयात् ॥ ३१ ॥ सलिल एको द्रष्टाऽद्वैतो भवत्येष ब्रह्मलोकः सम्राडिति हैनमनुशशास याज्ञवल्क्य एषास्य परमा गतिरेषास्य परमा सम्पदेषोऽस्य परमो लोक एषोऽस्य परम आनन्द एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति ॥ ३२ ॥ स यो मनुष्याणाꣳ राद्धः समृद्धो भवत्यन्येषामधिपतिः सर्वैर्मानुष्य-कैर्भोगैः सम्पन्नतमः स मनुष्याणां परम आनन्दोऽथ ये शतं मनुष्याणामानन्दाः स एकः पितॄणां जितलोकानामानन्दोऽथ ये शतं पितॄणां जितलोकानामानन्दाः स एको गन्धर्वलोक आनन्दोऽथ ये शतं गन्धर्वलोक आनन्दाः स एकः कर्मदेवानामानन्दो ये कर्मणा देवत्वमभिसम्पद्यन्तेऽथ ये शतं कर्मदेवानामानन्दाः स एक आजानदेवानामानन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतोऽथ ये शतमाजानदेवानामानन्दाः स एकः प्रजापतिलोक आनन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतोऽथ ये शतं प्रजापतिलोक आनन्दाः स एको ब्रह्मलोक आनन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतोऽथैष एव परम आनन्द एष ब्रह्मलोकः सम्राडिति होवाच याज्ञवल्क्यः सोऽहं भगवते सहस्रं ददाम्यत ऊर्ध्वं विमोक्षायैव ब्रूहीत्यत्र ह याज्ञवल्क्यो बिभयाञ्चकार मेधावी राजा सर्वेभ्यो मान्तेभ्य उदरौ-त्सीति ॥ ३३ ॥ स वा एष एतस्मिन्स्वप्नान्ते रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च पुनः प्रति-न्यायं प्रतियोन्याद्रवति बुद्धान्तायैव ॥ ३४ ॥ तद्यथाऽनः सुसमाहितमुत्सर्जद्यायादेवमेवायꣳ शारीर आत्मा प्राज्ञेनात्मनान्वारूढमुत्सर्जन्याति यत्रैतदूर्ध्वोच्छ्वासी भवति ॥ ३५ ॥ स यत्राय-मणिमानं न्येति जरया वोपतपता वाणिमानं निगच्छति तद्यथाम्रं वोदुम्बरं वा पिप्पलं वा बन्धना-त्प्रमुच्यत एवमेवायं पुरुष एभ्योऽङ्गेभ्यः सम्प्रमुच्य पुनः प्रतिन्यायं प्रतियोन्याद्रवति प्राणायैव ॥ ३६ ॥ तद्यथा राजानमायान्तमुग्राः प्रत्येनसः सूतग्रामण्योऽन्नैः पानैरावसथैः प्रति-कल्पन्तेऽयमायात्ययमागच्छतीत्येवꣳ हैवंविदꣳ सर्वाणि भूतानि प्रतिकल्पन्त इदं ब्रह्मायातीद-मागच्छतीति ॥ ३७ ॥ तद्यथा राजानं प्रयियासन्तमुग्राः प्रत्येनसः सूतग्रामण्योऽभिसमायन्त्ये-वमेवेममात्मानमन्तकाले सर्वे प्राणा अभिसमायन्ति यत्रैतदूर्ध्वोच्छ्वासी भवति ॥ ३८ ॥ इति तृतीयं ब्राह्मणम् ॥ ३ ॥

स यत्रायमात्माऽबल्यं न्येत्यसम्मोहमिव न्येत्यथैनमेते प्राणा अभिसमायन्ति स एतास्तेजो-मात्राः समभ्याददानो हृदयमेवान्ववक्रामति स यत्रैष चाक्षुषः पुरुषः पराङ् पर्यावर्ततेऽथारूपज्ञो भवति ॥ १ ॥ एकीभवति न पश्यतीत्याहुरेकीभवति न जिघ्रतीत्याहुरेकीभवति न रसयत इत्याहुरेकीभवति न वदतीत्याहुरेकीभवति न शृणोतीत्याहुरेकीभवति न मनुत इत्याहुरेकीभवति न स्पृशतीत्याहुरेकीभवति न विजानातीत्याहुस्तस्य हैतस्य हृदयस्याग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुष्टो वा मूर्ध्नो वान्येभ्यो वा शरीरदेशेभ्यस्तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तꣳ सर्वे प्राणा अनूत्क्रामन्ति स विज्ञानो भवति स विज्ञातमेवान्ववक्रामति तं विद्या-कर्मणी समन्वारभेते पूर्वप्रज्ञा च ॥ २ ॥ तद्यथा तृणजलायुका तृणस्यान्तं गत्वाऽन्यमाक्रममाक्र-म्यात्मानमुपसꣳहरत्येवमेवायमात्मेदꣳ शरीरं निहत्याऽविद्यां गमयित्वाऽन्यमाक्रममाक्रम्यात्मा-नमुपसꣳहरति ॥ ३ ॥ तद्यथा पेशस्कारी पेशसो मात्रामुपादायान्यन्नवतरं कल्याणतरꣳ रूपं तनुत एवमेवायमात्मेदꣳ शरीरं निहत्याऽविद्यां गमयित्वाऽन्यन्नवतरं कल्याणतरꣳ रूपं कुरुते पित्र्यं वा

गान्धर्वं वा दैवं वा प्राजापत्यं वा ब्राह्मं वाऽन्येषां वा भूतानाम् ॥४॥ स वा अयमात्मा ब्रह्म विज्ञानमयो मनोमयः प्राणमयश्चक्षुर्मयः श्रोत्रमयः पृथिवीमय आपोमयो वायुमय आकाशमयस्तेजोमयोऽतेजोमयः काममयोऽकाममयः क्रोधमयोऽक्रोधमयो धर्ममयोऽधर्ममयः सर्वमयस्तद्यदेतदिदंमयोऽदोमय इति यथाकारी यथाचारी तथा भवति साधुकारी साधुर्भवति पापकारी पापो भवति पुण्यः पुण्येन कर्मणा भवति पापः पापेन ॥ अथो खल्वाहुः काममय एवायं पुरुष इति स यथाकामो भवति तत्क्रतुर्भवति यत्क्रतुर्भवति तत्कर्म कुरुते यत्कर्म कुरुते तदभिसम्पद्यते ॥ ५ ॥ तदेष श्लोको भवति ॥ तदेव सक्तः सह कर्मणैति लिङ्गं मनो यत्र निषक्तमस्य ॥ प्राप्यान्तं कर्मणस्तस्य यत्किञ्चेह करोत्ययम् ॥ तस्माल्लोकात्पुनरैत्यस्मै लोकाय कर्मण इति नु कामयमानोऽथाकामयमानो योऽकामो निष्काम आप्तकाम आत्मकामो न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन्ब्रह्माप्येति ॥ ६ ॥ तदेष श्लोको भवति । यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः ॥ अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुत इति ॥ तद्यथाऽहिनिर्ल्वयनी वल्मीके मृता प्रत्यस्ता शयीतैवमेवेदꣳ शरीरꣳ शेतेऽथायमशरीरोऽमृतः प्राणो ब्रह्मैव तेज एव सोऽहं भगवते सहस्रं ददामीति होवाच जनको वैदेहः ॥ ७ ॥ तदेते श्लोका भवन्ति ॥ अणुः पन्था विततः पुराणो माꣳ स्पृष्टोऽनुवित्तो मयैव ॥ तेन धीरा अपियन्ति ब्रह्मविदः स्वर्गं लोकमित ऊर्ध्वं विमुक्ताः ॥ ८ ॥ तस्मिञ्छुक्लमुत नीलमाहुः पिङ्गलꣳ हरितं लोहितं च ॥ एष पन्था ब्रह्मणा हानुवित्तस्तेनैति ब्रह्मवित्पुण्यकृत्तैजसश्च ॥ ९ ॥ अन्धं तमः प्रविशन्ति येऽविद्यामुपासते ॥ ततो भूय इव ते तमो य उ विद्यायाꣳ रताः ॥ १० ॥ अनन्दा नाम ते लोका अन्धेन तमसाऽऽवृताः ॥ ताꣳस्ते प्रेत्याभिगच्छन्त्यविद्वाꣳसोऽबुधो जनाः ॥ ११ ॥ आत्मानं चेद्विजानीयादयमस्मीति पूरुषः ॥ किमिच्छन्कस्य कामाय शरीरमनुसंज्वरेत् ॥ १२ ॥ यस्यानुवित्तः प्रतिबुद्ध आत्माऽस्मिन्सन्देह्ये गहने प्रविष्टः ॥ स विश्वकृत्स हि सर्वस्य कर्ता तस्य लोकाः स उ लोक एव ॥ १३ ॥ इहैव सन्तोऽथ विद्मस्तद्वयं न चेदवेदीर्महती विनष्टिः ॥ ये तद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवापियन्ति ॥ १४ ॥ यदैतमनुपश्यत्यात्मानं देवमञ्जसा ॥ ईशानं भूतभव्यस्य न ततो विजुगुप्सते ॥१५॥ यस्मादर्वाक्संवत्सरोऽहोभिः परिवर्तते ॥ तद्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम् ॥ १६ ॥ यस्मिन्पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः ॥ तमेव मन्य आत्मानं विद्वान्ब्रह्मामृतोऽमृतम् ॥ १७ ॥ प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रं मनसो ये मनो विदुः ॥ निचिक्युर्ब्रह्म पुराणमग्र्यम् ॥ १८ ॥ मनसैवानुद्रष्टव्यं नेह नानास्ति किञ्चन ॥ मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ॥ १९ ॥ एकधैवानुद्रष्टव्यमेतदप्रमयं ध्रुवम् ॥ विरजः पर आकाशादज आत्मा महान्ध्रुवः ॥ २० ॥ तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः ॥ नानुध्यायाद्बहूञ्छब्दान्वाचो विग्लापनꣳ हि तदिति ॥ २१ ॥ स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः स न साधुना कर्मणा भूयान्नो एवासाधुना कनीयानेष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसम्भेदाय तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेनैतमेव विदित्वा मुनिर्भवति एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति एतद्ध स्म वैतत्पूर्वे विद्वाꣳसः प्रजां न कामयन्ते किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोक इति ते ह स्म पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति, या ह्येव पुत्रैषणा सा वित्तैषणा या वित्तैषणा सा लोकैषणोभे ह्येते एषणे एव भवतः ॥ स एष नेति नेत्यात्माऽगृह्यो

सन्देहः । किं ब्रह्मवाक्यमेतद् उत जीवस्येति । जीवस्य ब्रह्मत्वप्रतिपादने जीववाक्यत्वम् । स्वातन्त्र्येण ब्रह्मण एव ज्ञानकर्मत्वे ब्रह्मवाक्यत्वमिति ।

यद्यप्यर्थज्ञाने न सन्देहस्तथापि नियामकं हेतुमाह—भेदेनेति । तस्यायमर्थः । किञ्ज्योतिरयं जीवः (बृ. ४।३।२) इति प्रश्ने सूर्यचन्द्राग्निवाङ्निराकरणानन्तरमात्म-

---

नहि गृह्यतेऽशीर्यो नहि शीर्यतेऽसङ्गो नहि सज्यतेऽसितो न व्यथते न रिष्यत्येतमु हैवैते न तरत इत्यतः पापमकरवमित्यतः कल्याणमकरवमित्युभे उ हैवैष एते तरति नैनं कृताकृते तपतः ॥२२॥ तदेतदृचाऽभ्युक्तम् । एष नित्यो महिमा ब्राह्मणस्य न वर्धते कर्मणा नो कनीयान् ॥ तस्यैव स्यात्पदवित्तं विदित्वा न लिप्यते कर्मणा पापकेनेति तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्यति सर्वमात्मानं पश्यति नैनं पाप्मा तरति सर्वं पाप्मानं तरति नैनं पाप्मा तपति सर्वं पाप्मानं तपति विपापो विरजो विचिकित्सो ब्राह्मणो भवत्येष ब्रह्मलोकः सम्राडेनं प्रापितोऽसीति होवाच याज्ञवल्क्यः सोऽहं भगवते विदेहान् ददामि मां चापि सह दास्यायेति ॥ २३ ॥ स वा एष महानज आत्माऽन्नादो वसुदानो विन्दते वसु य एवं वेद ॥२४॥ स वा एष महानज आत्माऽजरोऽमरोऽमृतोऽभयो ब्रह्माभयं वै ब्रह्माभयꣳ हि वै ब्रह्म भवति य एवं वेद ॥ २५ ॥ इति चतुर्थे चतुर्थं ब्राह्मणम् ॥ ४ ॥

**अथ भाष्यम्—सन्देह** इति । तथाच सम्पूर्णविषयवाक्ये सन्देहः, न तु तदन्तर्गतयत्किञ्चित्पदे इत्यर्थः । नन्वेवं चेत्किमाकारकः सन्देह इत्यत आहुः—**किं ब्रह्मेति** । इदं च जीववाक्यस्याप्युपलक्षकम् । तथाचैतत्किं जीववाक्यं ब्रह्मवाक्यमिति द्विकोटिकोऽयं संशय इत्यर्थः । तत्र प्रथमकोटौ संशयबीजमाहुः—**उत जीवस्येति** । **प्रतिपादने** इति सति सप्तमी । अपरकोटौ बीजमाहुः—**स्वातन्त्र्येणेति** । **ज्ञानकर्मत्वे** इति । ज्ञाधातुनिरूपितकर्मत्वे इत्यर्थः । ज्ञानविषयत्वे इतियावत् । तथाच मुख्यत्वेन ब्रह्मण एवं ज्ञानविषयत्वे प्रतिपाद्ये ब्रह्मप्रतिपादकब्रह्मवाक्यत्वमित्यर्थः ॥

नन्वेवं चेत्तर्हि वाक्यादेवोभयपरार्थप्रतीतौ सन्देहनिवृत्तिरेव न स्यादतो वास्तविकार्थे श्रुतेस्तात्पर्यं वक्तव्यम्, तच्चास्मिन्नर्थे श्रुतेस्तात्पर्यमस्मिन्नर्थे नास्तीति नियामकहेतुज्ञानं विना तज्ज्ञानं न जायते इत्यतोऽसौत्रं हेतुमवतारयन्ति—**यद्यपीति** । **अर्थज्ञान** इति । वास्तविकार्थज्ञाने जाते सतीत्यर्थः । **न सन्देह** इति । तथाच साधारणधर्मवद्धर्मिज्ञानं संशयजनकम् । एवंच प्रकृते विषयवाक्ये संशयजनकजीवब्रह्मोभयसाधारणपदानां सत्त्वेऽपि तात्पर्यज्ञानेन वास्तविकार्थज्ञाने जाते न सन्देह इत्यर्थः । ननु सन्देहनिवृत्तौ सूत्रं किमर्थमत आहुः—**नियामकमिति** । अत्रैव श्रुतेस्तात्पर्यमिति नियामकमित्यर्थः । **हेतुमाहेति** । सूत्रकार इति शेषः । एतावता सन्देहनिवृत्त्यर्थं शास्त्रप्रवृत्तिर्दर्शिता । सूत्रार्थस्तु सिद्धान्तेऽनुपदमेव वक्ष्यन्ति । इतः परं विषयवाक्ये कानिचित्पदानि उभयसाधारणानि कानिचिदेकतरबोधकानीत्यतस्तात्पर्यविषयीभूतार्थबोधनार्थं ब्राह्मणद्वयार्थं विशदयन्ति—**एतस्यायमर्थ** इति । एतस्य विषयवाक्यस्य । क्वचित्तस्येति पाठः । अतिसन्निकृष्टत्वादेतस्येति पाठः समीचीनः । तदुक्तम् "इदमस्तु सन्निकृष्टं समीपतरवर्ति चैतदो रूपम् । अदसस्तु विप्रकृष्टं तदिति परोक्षे विजानीयादि"ति । **किञ्ज्योरिति** । किञ्ज्योतिरित्यारभ्य वाक्यभेदप्रसङ्गादित्येतदन्तं भाष्यं "जनकꣳ ह वैदेहमि"त्यारभ्य "यत्रैतदूर्ध्वोच्छ्वासी भवती"त्येतदन्तस्य ज्योतिर्ब्राह्मणस्यार्थबोधकम् । अथ च स यत्रेति जीवेत्यारभ्य क्वचित्पाठभेदेऽप्ययमेवार्थ इत्येतदन्तं भाष्यं "स यत्रायमात्मेत्यारभ्य" "ब्रह्म भवति य एवं वेदे"त्यन्तस्य शारीरब्राह्मणस्यार्थबोधकं बोध्यम् । **जीव** इति प्रश्नेति । राज्ञा किञ्ज्योतिरयं पुरुष इति वाक्येन जीवविषयके प्रश्ने कृते सतीत्यर्थः । **निराकरणा-**

ज्योतिः। आत्मा भगवानेवास्य ज्योतिरिति उत्तरानन्तरं—"कतम आत्मा" (बृ. ४।३।७) इति प्रश्ने "योऽयं विज्ञानमयो ज्ञानरूप इन्द्रियेषु हृदि च प्रकाशमान" इत्युत्तरे जीवोऽप्येतादृश इति तन्निराकरणार्थं स समानः सन् जीवतुल्यः सन् क्रीडतीत्याह। तस्योभयधर्मा अप्युच्यन्ते क्रियामात्रस्य तन्मूलत्वाय। तत्र हि चत्वारि स्थानानि। अयं लोकः परलोकः स्वप्न इति त्रयं जीवसमानतयाऽनुभवति। तत्र स्वप्नस्य मिथ्यात्वाद् द्वयमेव। सुषुप्तं च चतुर्थम्। जीवस्य तु मोक्षोऽपि। तत्रास्मिँल्लोके जीवस्यानीशित्वं प्रत्यक्षसिद्धम्। मोक्षे त्वैक्यम्। स्वप्नस्तु माया। अतः परं द्वयमवशिष्यते। तत्र श्रुत्यैव भेदः प्रतिपादितः। तत्र भगवतो जीवसाम्येऽन्तःकरणेन्द्रियधर्माः प्राप्नुवन्तीति तत्रानुकरणमाह "ध्यायतीव लेलायतीव" (बृ.४।३।७)

---

नन्तरमिति। "अस्तमित आदित्ये" इत्यादिवाक्येनेति शेषः। भगवानिति। एतेन जीवो नास्तीति याज्ञवल्क्याशयो वर्णितः। प्रश्न इति। आत्मपदस्य उभयत्रापि प्रयोगात् प्रश्ने कृते इत्यर्थः। जीवोऽपीति। तथाच प्रकाशमानत्वमन्तर्यामित्वेनाभिमानित्वेनोभयसाधारणमिति भावः। इत्याहेति। "स समानः सन्नि"त्यादिना "मृत्यो रूपाणी"त्यन्तेन श्रुतिराहेत्यर्थः। नन्वेवं चेज्जीवधर्मकथनं किमर्थमत आहुः—तस्योभयेति। तस्य ब्रह्मणः। क्रियामात्रस्य। जीवव्यापारमात्रस्य। तन्मूलत्वाय। ब्रह्ममूलत्वार्थम्। उच्यन्ते इत्यन्वयः। तथाच न केवलमत्राप्युच्यन्ते, किन्तु जीवमुख्यप्राणलिङ्गसूत्रेऽप्युक्ता इत्यर्थः। तथाच ब्रह्मवाचकत्वमेवास्य वाक्यस्येति भावः। क्रीडतीत्याहेत्युक्तं, सा च कुत्र का वा क्रीडेत्यत आहुः—तत्रेत्यादिना। क्रीडास्थानान्याहुः। अयं लोकः परलोकः स्वप्न इतीति। त्रयाणां सत्त्वे उभौ लोकाविति श्रुतौ कथमुक्तमतस्तत्तात्पर्यमाहुः—तत्र स्वप्नस्येति। चतुर्थमिति। "स एष सम्प्रसादे रत्वा चरित्वे"ति श्रुतेः रत्वा मित्रादिदर्शनेन रतिमनुभूय, चरित्वा विहारं कृत्वेत्यर्थः। मोक्षोऽपीति। अपिना जीवस्येदं पञ्चमं स्थानम्। नच मोक्षस्य स्थानत्वं कथमिति वाच्यम्। "एषोऽस्य परमो लोक"इति वक्ष्यमाणश्रुतेस्तस्यापि स्थानत्वात्। इदानीं सुषुप्त्युत्क्रान्त्योर्भेदेनेति सूत्रेण भेदस्य विवक्षितार्थे नियामकत्वं वक्तुं भूमिकामारचयति—तत्रास्मिन्नित्यादिना। ननु स समान इत्यत्र समानत्वं तद्भिन्नत्वे सति तद्गतधर्मवत्त्वं, तथाच पञ्चसु स्थानेषु जीवभेदस्य वेदेनाप्रतिपादनाद्भेदघटितसादृश्याभावात्कथं स समानः सन् क्रीडतीत्यत आहुः—प्रत्यक्षसिद्धमिति। तथाच भेदस्य सिद्धत्वाद्वेदेन नोक्त इति भावः। मोक्षे त्विति। "ब्रह्मैव सन् ब्रह्माप्येति य एवं वेदे"ति श्रुत्यैवाभेदप्रतिपादनात्तत्र भेदकथने प्रयोजनाभाव इत्यर्थः। स्वप्नेति। मायिकत्वमेव कथनाभावे प्रयोजकम्। तेषु स्थानेषु भेदप्रतिपादने प्रयोजनाभावमुक्त्वा अवशिष्टस्थानद्वये भेदः श्रुत्या प्रतिपाद्यते इत्याहुः—अतः परमिति। श्रुत्यैवेति। "अयं शारीर आत्मा प्राज्ञेनात्मना सम्परिष्वक्त" इत्यनेन सुषुप्तौ अयं शारीर आत्मा प्राज्ञेनात्मना चारूढ इत्यनेन परलोके भेदः प्रतिपादित इत्यर्थः। तथाच स्थानद्वये भेदस्यासिद्धत्वात्तत्र भेदश्च श्रुत्या प्रतिपाद्यते इति कृत्वेदं वाक्यं ब्रह्मपरं न तु जीवपरमिति विवक्षितार्थे भेदस्य नियामकत्वं वक्तुं बादरायणाः सुषुप्त्युत्क्रान्त्योर्भेदेनेति सूत्रं कृतवन्त इति भावः। एतावता स समानः सन्नित्यस्य तात्पर्यार्थोपवर्णितः। इदानीं "उभौ लोकावनुसञ्चरती"त्यनेन भगवतः जाग्रत्स्वप्नक्रीडाप्रकारं वक्तुं प्रथमतः जाग्रत्क्रीडाप्रकारमाहुः—तत्रेति। ध्यायतीवेति। ध्यानव्यापारं करोतीव। इव शब्दोऽनुकरणार्थः। तथाच वास्तविकध्यानं नास्तीति भावः। लेलायतीवेति। लोलायतीवेति तदर्थः। ओकारस्थाने एकार इति प्रकाशकृतः।

इति बुद्धिसहितः स्वयमेव स्वप्नो भूत्वा जागरणानुसन्धानं न करोति । एवं जाग्रत्स्वापौ ब्रह्मणो लोकद्वयं जीवस्य स्थानत्रयमाह "स वा अयमि"ति कण्डिकाद्वयेन । स इति पूर्वप्रक्रान्तो जीवः । जीवस्य शरीरेन्द्रियाणां दुःखदातृत्वमेव । अथेति भगवच्चरित्रम् । स तु स्वस्यानन्दं जीवस्य दुःखं च पश्यति । भेदोऽथशब्दात् । जीवस्यानीशित्वाद्येन प्रकारेणायं जीवः परलोके गच्छति तमुपायं भगवानेव करोति । अथो खल्वित्ति भगवतो न जागरितस्वप्नभेदोस्तीति पक्षः । परं, स्वयंज्योतिष्ट्वं तत्र स्पष्टम् । एतावद्दूरे भगवच्चरित्रमङ्गीकृत्य जीवविमोक्षार्थं प्रश्नः । स वा एप इति जीववाक्यम् । तस्य सहजः सङ्गो नास्तीति स्वप्नसङ्गभावं प्रत्यक्षतः प्रदर्शयन्नसङ्गत्वमाह । तावतापि जागरणावस्थायामसङ्गत्वज्ञानाय पुनः प्रश्नः । तत्र

---

अथवा श्रौतत्वात्तस्यैव चलतीवेत्यर्थः । तथाचेह लोके जीवानुकरणेन क्रीडा अवतारदशायां पुराणप्रसिद्धा "चेरतुः प्राकृतो यथे"त्यादिनेत्यर्थः । स्वप्ने तामाहुः—बुद्धिसहित इति । स्वयमेवेति । तथाच मायिकीं जीववत्क्रीडां करोतीत्यर्थः । जीवक्रीडाप्रकारमाहुः—जीवस्येति । कण्डिकाद्वयेन । अष्टमनवमकण्डिकाद्वयेन । पूर्वप्रक्रान्त इति । "किंज्योतिरयं पुरुष" इति प्रश्ने प्रक्रान्त इत्यर्थः । जीव इति । पुरुषपदवाच्यः । इदंशब्देन तस्यैव सन्निकृष्टस्य निर्देशात् । कण्डिकाद्वयसिद्धार्थमाहुः—जीवस्येति । दुःखदातृत्वमेवेति । श्रुतिस्थपाप्मपदाद्बोद्धव्यम् । एतेन काण्डिकाद्वयेन जीवस्यानीशितत्वं बोधितम् । अथ यथाक्रमोऽयमित्यस्याः श्रुतेरर्थमाहुः—अथेति । चरित्रमाहुः—स त्विति । "अथ यथाक्रमोऽयमि"त्यारभ्य "आनन्दांश्च पश्यति स" इत्यन्तं विषयवाक्ये स्पष्टम् । सः भगवान् । पश्यतीति परलोके जीववत्क्रीडा भगवतो बोध्या । अस्यां कण्डिकायां क्रीडा बोध्यते इत्यत्र गमकमाहुः—भेद इति । अस्यां कण्डिकायां तमाक्रममाक्रम्येत्यस्यार्थमाहुः—जीवस्येति । इयमपरा परलोकक्रीडा । अत्र यत्र प्रस्वपितीत्यारभ्य यमेप न प्रतिपद्यते इत्यन्तं विषयवाक्यं भगवतः स्वप्नक्रीडावर्णनपरम् । तेन स्वयंज्योतिष्ट्वं साधितम् । अस्य व्याख्यानं तु प्रकाशेऽनुसन्धेयम् । श्रुतौ मतान्तररीत्या भगवतः स्वप्नमङ्गीकृत्य स्वयं ज्योतिष्ट्वं साधितं तद्व्याख्यातुमाहुः—अथो खल्विति । अस्मिन्पक्षे यज्जागरितं तदेव स्वप्नमित्यभेदः । अथो खल्विति पक्षे अक्षरसमाहुः—परमिति । परन्त्वित्यर्थः । तत्र स्पष्टमिति । तत्र पूर्वस्मिन्पक्षे । तथाच पूर्वं केवलस्वप्नस्यैवोक्तत्वादन्यज्ज्योतिरभावात् स्वयं ज्योतिष्ट्वं स्पष्टम् । अस्मिन् पक्षे तु जागरितस्वप्नयोरैक्यप्रतिपादनाज्जागरिते च पूर्वमादित्यादीनामुक्तत्वात्स्वयं ज्योतिष्ट्वमस्पष्टमित्यस्वरस इति भावः । अत ऊर्ध्वं विमोक्षाय ब्रूहीति प्रश्नमवतारयन्ति—एतावद्दूरेति । एतावत्पर्यन्तमित्यर्थः । भगवच्चरित्रमिति । स समानः सन्नित्यारभ्य स्वयं ज्योतिर्भवतीत्येतावत्पर्यन्तं चरित्रं बाधकमङ्गीकृत्येत्यर्थः । जीवविमोक्षं वक्तुं स वा एप इत्यस्य जीववाक्यत्वं बोधयन्ति—जीववाक्यमिति । तस्य जीवस्य । प्रत्यक्षत इति । स्वाप्निकराज्येऽनासक्तिरनुभवसिद्धेति भावः । आहेति । वाक्यमाहेत्यर्थः । ननु पुनः प्रश्नः किमर्थमत आहुः—तावतापीति । स्वाप्निके पदार्थे अनासक्तिः जग्रत्यासक्तिर्दृश्यतेत्यनुभवेऽपीत्यर्थः । श्रुतौ उत्तरे मत्स्यदृष्टान्तस्य तात्पर्यमाहुः—तत्रेति । तत्र उत्तरे । क्रियाज्ञानप्रधान इतिप्रथमान्तम् । क्रियायाः ज्ञानं मुख्यं यस्मिन् ॥ इति दृष्टान्तविशेषणम् । एवं च नदीमत्स्ययोः क्रियावैलक्षण्यात् नदीभिन्नत्वज्ञानं मत्स्ये यथा जायते, एवं जीवस्य उभयत्र सञ्चारक्रियया जाग्रत्स्वप्नावस्थाद्वयभिन्नत्वज्ञानं जायते । एवं उभयकूलसञ्चरणात्, तत्र तत्र, स्वाभा-

मत्स्यदृष्टान्तोवस्थाभेदज्ञानाय क्रियाज्ञानप्रधानः। श्येनसुपर्णदृष्टान्तस्तु सुषुप्तौ भगवत्स्वरूपप्राप्तयेऽवस्थान्तः। यत्रेति च भगवान्। पञ्चवर्णनाडीकृत एवास्य क्लेशो भगवत्कृत एवानन्द इति स्वप्नानन्दो भगवद्रूपः परमो लोकः। सुषुप्तिस्त्वकामरूपो भगवान्। अत्र ज्ञानाभावादुभयोः स्पष्टतया भेदनिर्देशः शारीरः प्राज्ञ इति। नाड्याच्छादनाभावोतिच्छन्दः। तत्र भगवत्स्वरूपं गतस्य बाह्येन्द्रियधर्माभावमाह विजानीयादित्यन्तेन। बाह्येन्द्रियाणां सलिलत्वमिति पूर्वोपपत्तिः। एष ब्रह्मलोक इत्यारभ्य अनुशशासैतदमृतमित्यन्तेनानन्दरूपो भगवान् प्रतिपादितः फलत्वाय। एतावतोभयासङ्गः प्रतिपादितः।

तस्यानुभवारूढत्वाय पुनः प्रश्नः। दर्शनादर्शनावापोद्वापाभ्यां सिद्धम्। "असङ्गो ह्ययं पुरुषः" (बृ. ४।३।१५) इति। एवं जीवं सुषुप्तौ भगवन्तं च ज्ञात्वा

---

विकी आसक्तिर्मत्स्यस्य यथा नास्ति तथा जीवस्याप्युभयत्र सञ्चारादवस्थाद्वयेऽप्यासक्तिराहित्येन दृष्टान्तस्वारस्यं बोध्यम्। स एव सम्प्रसाद इत्यनेनोक्ता या सुषुप्त्यवस्था तस्या दृष्टान्तमाह—श्येनेति। श्येनः महाकायः मन्दवेगः, सुपर्णः स्वल्पकायः तीव्रवेगः, श्येनो यथा आकाशे अत्यन्तं भ्रमणं कृत्वा नीडे आगत्य सुखं स्थीयते एवमय पुरुषः जाग्रति स्वप्ने च श्रान्तः सन् सुषुप्तौ सुखमनुभूयते। ननु तत्र भगवत्प्राप्तिः कथं ज्ञायते इत्यत आहुः—अवस्थान्त इति। "एतस्मा अन्ताय धावती"ति श्रुतौ एतस्मै अन्ताय भगवते इत्यर्थकेन अवस्थान्तपदेन भगवान्। "अथच यत्र सुप्तो न कञ्चन कामयते" इतिश्रुतौ यत्र भगवतीत्यर्थकेन यत्र चेतिपदेन भगवान् ज्ञायते इत्यर्थः। ननु अवस्थान्तो भगवानित्युक्तं तत्र स्वप्नावस्थायां दुःखदर्शनात्कथमिदमित्यत आहुः—पञ्चवर्णेति। एकः केशः सहस्रधा भिन्न इत्येतादृशसूक्ष्माः नाड्यः शुक्लनीलपीतलहरितलोहितवर्णैः रसैः पूर्णास्ताः पञ्चवर्णा भवन्तीति तत एवास्य क्लेश इत्यर्थः। तथा चोक्तं सुश्रुते—"पिङ्गाः शिरा वातवहा नीलाः पित्तवहाः स्मृताः। असृग्वहास्तु रोहिण्यो गौर्यश्श्लेष्मवहाः शिरा" इति। इतरेतरसंयोगान्नीलाः। पद्ये नीलशब्देन हरिताः बोध्याः। तथाच शुक्लवर्णनाडीमनःसम्बन्धे राज्यानुभवः नीलवर्णादिसम्बन्धे गर्तपात इत्युपाधिवशात् क्लेश इति भावः। भगवद्रूप इति। अक्षरात्मको लोक इत्यर्थः। सुषुप्तिमाह—परम इति। अत्र। सुषुप्तौ। यत्रेति वा पाठः। शारीर इति। जीवस्य ज्ञानाभावात् शारीरः, प्राज्ञस्तु भगवान् इति भेदनिर्देश इत्यर्थः। नाड्येति। तत्र नाडीकृतक्लेशो नास्तीत्यर्थः। तत्रेति। सुषुप्तौ। विजानीयादिति। तद्यथा प्रिययेत्यारभ्य अन्योन्यं स्पृशेदन्योन्यद्विजानीयादित्यन्तेनेत्यर्थः। सलिलत्वं, शुद्धब्रह्मणः सलिलत्वं जलतुल्यत्वं तत्र प्राप्तस्य बाह्येन्द्रियाणामपि सलिलत्वमित्यर्थः। पूर्वोपपत्तिरिति। एषोऽस्य परमो लोक इति यत्पूर्वमुक्तं तस्योपपत्तिरित्यर्थः। तथा चात्राप्युक्तमित्यतो न पुनरुक्तिरिति भावः। एष ब्रह्मेति। एतदग्रिमग्रन्थेन प्रतिपादित इत्यर्थः। एतावतेति। सुषुप्तिमाहात्म्यकथनेनेत्यर्थः।

अनुभवारूढत्वायेति। सुषुप्तेरीश्वरस्य च भेद इत्यनुभवार्थमित्यर्थः। उत्तरतात्पर्यं वदति—दर्शनेति। मोक्षे सुखस्य सर्वदा सत्त्वादावापः सङ्ग्रहः। सुषुप्तौ सुखमहमस्वाप्समित्यनेन स्मरणेनोद्वापस्त्यागः। सिद्धमिति। तथाच सुषुप्तिसुखस्यापि साक्षित्वेन भिन्नत्वात्सिद्धमित्यर्थः। पुनः प्रश्नतात्पर्यमाहुः—एवमिति। जीवमिति। मोक्षे योग्यं जीवमित्यर्थः—भगवन्तं मोक्षदातारम्। प्रश्नानन्तरं जीवब्रह्म-

मोक्षोपायं पृच्छति । तत्र याज्ञवल्क्यस्य भयं जातं सुबुद्धिरियं निर्बन्धेनापि सर्वं ज्ञास्यतीति जीवब्रह्मधर्मानेकीकृत्य जीवोपक्रमेण ब्रह्मोपसंहारेणाह । तत्र स यत्रेति जीवस्य मूर्च्छोपतापावस्था । तद्यथा अन इति मरणावस्था । तत्र भगवानेवैनं लोकान्तरे नयति । तद्यथा राजानमिति भगवत्सम्माननम् । एवम्विदमिति वचनात् । जीवस्तु नैवम्वित् । सिद्धवद्वचनान्न ज्ञानविधिः । वाक्यभेदप्रसङ्गाच्च । स यत्रेति जीवे मोहोऽधिकः । अथैनमेते प्राणा इति भगवच्चरित्रं सम्पद्यत इत्यन्तेन । श्लोके तद्ब्रह्मास्य जीवस्याकामयमानस्य भगवतः स्वरूपं पूर्वमेवोक्तमनुवदति ।

---

धर्मानेकीकृत्योत्तरस्य तात्पर्यमाहुः—तत्रेति । निर्बन्धेन । कामप्रश्नमिषेण । तथाच याज्ञवल्क्यः व्याख्यानसामर्थ्याभावान्न भीतवान्, किन्तु व्याजेन सर्वं मदीयं ज्ञानं गृहीतुं वारम्वारमवरोधं करोतीति । तेन च राज्ञः बुद्धिस्तवने पर्यवसानमिति भावः । उत्तरं वक्तुं श्रुतिः वृतमनुवदति—स वा एषेति । स यत्रेतीति । "स यत्रायमणिमानमि"ति वाक्येन मूर्च्छोपतापावस्था कथितेत्यर्थः । तद्यथेति । "तद्यथा नः सुसमाहितमि"त्यादिना मरणावस्था कथिता । इदं वाक्यं काण्वपाठे पूर्वं बोध्यम् । अग्रिमकण्डिकयोरर्थमाहुः—तद्यथेति । सम्माननमिति । क्वचित्पुस्तके सन्मानमित्यपपाठः । न जीवस्येत्यर्थः । कुतः राजपदोक्तेः । ननु राजपदं दृष्टान्तेऽस्ति न तेन जीवनिराकरणमत आहुः—एवम्विदमिति । "एवꣳ हैवं विदꣳ सर्वाणि भूतानीति" वाक्ये इति शेषः । नैवम्विदिति । कर्मफलविन्न भवतीत्यर्थः । नन्वेवम्विविदमिति श्रुत्वा ज्ञानं विधीयते इत्यतआहुः—सिद्धवदिति । एवम्विदमिति सिद्धवत्प्रयोयोगान्न विधिरित्यर्थः । नन्वेवम्विद्भवेदिति विधिवाक्यं कल्पयित्वा योजनीयमित्यतआहुः—वाक्यभेद इति । विधेयभेदे वाक्यभेदात्, "एवंꣳ हैवं विदमि"तिवाक्यं "अथचेदं ब्रह्मायाती"ति वाक्यं भिन्नं स्यादित्यर्थः । चतुर्थशारीरब्राह्मणस्यार्थमाहुः—स यत्रेतीति । अत्र ब्राह्मणे मरणावस्थाप्रतिपाद्यते काण्डिकापञ्चकेन तत्र स यत्रेति वाक्येन सम्मोह उच्यते इत्याहुः—मोह इति । विवेकाभाव इत्यर्थः । सम्पद्यत इति । यत्कर्म कुरुते तदभिसम्पद्यते इतिपञ्चमकाण्डिकान्तेन चरित्रमुच्यते इत्यर्थः । भगवच्चरित्रमिति । जीवेनोत्क्रमणस्य कर्तुमशक्यत्वात्प्राणानां च जडत्वाद्भगवत्प्रेरणयैव सर्वमिति भावः । अस्य काण्डिकापञ्चकस्य भगवच्चरित्रत्वे गमकमाहुः—श्लोकेनेति । तदप्येष श्लोको भवतीत्येतदनन्तरं तदेव स हेति सार्द्धश्लोकेनेत्यर्थः । तथाच पूर्वं भगवदन्वारूढ इत्युक्तम् । श्लोकेषु च तत्सहेत्युक्तम् । तेन कृत्वा किं जायते पूर्वं चरित्रमेवोक्तमिति भावः । पूर्वं सकामस्यावस्था चरित्रत्वेनोक्ता, इदानीं निष्कामस्य जीवन्मुक्तावस्थां वर्णयितुं तत्समानत्वेन सुषुप्त्यवस्थामाहुः—श्रुतौ अथाकामयमानेत्यादिना । ननु सुषुप्त्यवस्था पूर्वमेवोक्ता, इदानीं किमर्थमुच्यते इति चेन्न; याज्ञवल्क्येन भयेन श्लिष्टतया सुषुप्तिवर्णनं, वास्तविकं [illegible] जीवन्मुक्तावस्थावर्णनमेवेति न पौनरुक्त्यम् । सुषुप्त्यवस्थावर्णनं "तद्वा असै तदाप्तकाममात्मकाममकाम स्वरूपमि"ति वाक्येन यत्पूर्वमुक्तं तदेवाथाकामयमानस्येत्यादिना उच्यते, तदेकवाक्यत्वाय पूर्ववाक्यस्यार्थमाहुः—तद्ब्रह्मेत्यादिना पूर्वमेवोक्तमित्यन्तेन । तद्वा असेत्यत्र तत् ब्रह्म अस्य जीवस्येति पदद्वयस्यार्थः । अन्यत् पूर्वोत्तरवाक्ययोरानुपूर्वी समानैव । भगवतः स्वरूपमिति । षष्ठ्यर्थः सम्बन्धः । तथाच भगवत्सम्बन्धिस्वरूपमित्यर्थः । पूर्वमेवेति । ज्योतिर्ब्राह्मणे एकविंशतिकाण्डिकान्ते इत्यर्थः । अनुवदतीति । यत्पूर्ववाक्ये उक्तं तदपि चानुवदतीत्यर्थः । तथाच श्रुतौ न पौनरुक्त्यमिति भावः । तथाच प्राणधारणार्थं सप्राण एव ब्रह्मीभूतः विहरतीति भावः । अत एवोक्तं श्रीभागवते "देहोऽपि दैववशग"इत्यादिना ।

भगवन्निर्गमे हि प्राणानां निर्गमनात्तस्य चेच्छाधीनत्वात्तदभाव इन्द्रियाणि सुषुप्तौ तत्रैव समवलीयन्ते । ब्रह्मैव सन् कूटस्थः सन् । अपिः समुच्चये । सह स्थिते जीवे ब्रह्माविर्भवतीत्यर्थः । जीवे ब्रह्माविर्भावो न सङ्गत इति तत्प्रतिपादनार्थं श्लोकः । जीवोपदेशप्रकरणाभावेन सिद्धवद्वचनान्न जीवन्मुक्तावस्था । नाप्यसम्प्रज्ञातसमाधिः । मतान्तरत्वात् । ब्रह्मप्रकरणान्न सद्योमुक्तिः फलम् । उत्क्रमण एव ब्राह्मणस्याप्युक्तत्वात् । तद्यथेति सुषुप्तिशरीरम् । अनस्थिक इत्यादि सम्राडित्यन्तमुपसंहारः ।

श्लोका अत्र त्रयोदश सर्वनिर्द्धारकाः । आद्यो ब्रह्मविद्गतेः । एष इति सुषुप्तौ

---

"न तस्य प्राणा उत्क्रमन्ती"त्यस्यार्थमाहुः—**भगवन्निर्गमे** हीति । भगवतः सकाशाज्जीवस्य निर्गमने इति प्रकाशे उक्तम् । भगवत्स्वरूपस्य तस्य निर्गमने इति यथाश्रुत एवार्थो वा । तस्य । सप्राणनिर्गमनस्य । इच्छाधीनत्वादिति । तथाचोक्तं श्रीभागवते द्वितीयस्कन्धे । "यदि प्रयास्यं नृपपारमेष्ठ्य"मित्यादिना क्रममुक्तिः । **तदभावे** । वैहायसविहारेच्छाभावे । न तस्येत्यस्य तात्पर्यार्थमाहुः—**इन्द्रियाणीति** । समवलीयन्त इति श्रुत्यन्तरे समवनीयन्त इति पठितं तस्यायमर्थो बोध्यः । इच्छाभावपक्षे ब्रह्मैव सन्नित्यस्यार्थमाहुः—**ब्रह्मैवेति** । ब्रह्म एति जीवे आविर्भवतीत्यर्थः । **श्लोक** इति । "यदा सर्वे प्रमुच्यन्त" इति श्लोक इत्यर्थः । जीवन्मुक्तावस्थां कदाचिज्जानीयाद्राजा इति तां साङ्क्षेपयितुं सुषुप्त्यवस्थां दृढीकर्तुमाहुः—**जीवोपदेश** इति । तथाच श्रीभागवते काठके च प्रथमसुपदेशः तदनन्तरं जीवन्मुक्तावस्थानिरूपणं तथात्र नास्तीति भावः । **मतान्तरत्वादिति** । योगमते इय, न तु वेदान्तिमते इत्यर्थः । ननु मास्तु समाधिः स्वस्वरूपावस्थितिरूपा सद्योमुक्तिरेवास्त्वित्यत आहुः—**ब्रह्मेति** । **फलमिति** । इदं च देहलीदीपन्यायेनोभयत्र योज्यम् । तथा च ब्रह्मप्रकरणत्वात् ब्रह्मभावरूपं फलं जीवस्य न तु सद्योमुक्तिः फलं तच्च उत्क्रमणे एव भवतीत्यर्थः । ननूत्क्रमणानन्तरमेव फलं जायते इत्यत्र किं प्रमाणमत आहुः—**ब्राह्मणस्यापीति** । उर्ध्वोच्छ्वासी भवतीत्युपक्रमे शारीरब्राह्मणस्याप्युक्तत्वादित्यर्थः । तथाचोत्क्रान्तिरहिता सद्योमुक्तिरपि नास्तीत्यर्थः । तथाच सुषुप्तिप्रकरणाभावेऽपि सुषुप्तिलिङ्गेन सुषुप्तिज्ञानमस्य भवत्वित्याशयेन श्रुतिराह—**तद्यथेति** । तद्यथाऽहिर्निर्ल्वयनीवल्मीकेत्यादिना यथानिर्ल्वयनी सर्पकञ्चुकी वल्मीके सर्पेण परित्यक्ता शेते एवमेवेदं शरीरं शेते इति शेते इत्युभयलिङ्गकेन पदेन सुषुप्तिज्ञानमस्य भवत्वित्यर्थः । शेते इत्यनन्तरमथाऽयमनस्थिकोऽशरीरः प्राज्ञ आत्मा ब्रह्मैव लोक एवेति श्रुतितात्पर्यमाहुः—**अनस्थिकेति** । अस्थियुक्तस्थूलशरीररहितः । इदं च सुषुप्तौ जीवन्मुक्तावस्थायां चाभिमानाभावात्समानं सम्राडित्यन्तमिति । एष ब्रह्मलोकः सम्राडिति होवाच याज्ञवल्क्य इत्युपसंहार इत्यर्थः । भाष्ये तु अथायमनस्थिकेति काण्वः पाठः । माध्यन्दिनपाठे तु अथायं मे शरीरो मृतः प्राणो ब्रह्मैव तेज एवेति । तात्पर्यं तु भयानुरोधात्सुषुप्तिपरत्वेन व्याख्यानं कृतम् । एतदग्रे च सोऽहं भगवते सहस्रं ददामीति वरदानानुरोधात् श्लिष्टतयोक्तेऽपि साधारणलिङ्गात् व्यामोक्षप्रकरणाच्च मोक्षावस्था ज्ञानं भविष्यतीत्युच्यम् । सञ्ज्ञानार्थं ये मन्त्ररूपा श्लोकाः याज्ञवल्क्यः आह तान् विवृण्वन्ति—**श्लोका** इति । **त्रयोदशेति** । तदेते श्लोका इत्यारभ्य वाचोविग्लापनं हि तदित्यन्तं त्रयोदशेत्यर्थः । **आद्यो ब्रह्मविद्गतेरिति** । अणुः पन्था इति श्लोकः ब्रह्मविदः क्रममुक्तेर्बोधकः । एष इति ।

नाडीत्वात् पञ्च वर्णाः । "अन्धं तमः" (ई.१२) इति द्वाभ्यामनेवम्विदो निन्दा । तदेव सन्त इति बुद्धिमतां वचनम् । आत्मानमिति वैराग्यम् । यस्यानुवित्तिरिति नवभिर्ब्रह्मस्तुतिः । तद्विज्ञानं च । पुनरेतदेव स्पष्टतयोपदिशति "स वा अयमात्मा" (बृ.२।८।१५) इत्यादि "अभयं वै जनक प्राप्तोऽसि" (बृ.४।२।४) इत्यन्तम् । काण्वानां क्वचित्पाठभेदेऽप्ययमेवार्थः । अत्र प्रकरणे जीवो वाच्य इति प्राप्ते अभिधीयते । ब्रह्मैव प्रकरणार्थः । सुषुप्तावुत्क्रमणे च जीवब्रह्मणोर्भेदेन व्यपदेशात् । आकाशवद् ब्रह्मनिर्धार एव युक्तः ॥ १।३।४२ ॥

पत्यादिशब्देभ्यः ॥ १।३।४३ ॥

---

तस्मिन् शुक्लमिति श्लोके एष पन्था इत्यनेन निष्क्रमणमार्गबोधकः द्वितीयः । **पञ्चवर्णा** इति । मार्गे पञ्चवर्णवत्त्वं सुषुम्नानाडीकृतमित्यर्थः । **अनेवम्विद** इति । ब्रह्मज्ञानरहितस्येत्यर्थः । **बुद्धिमतामिति**। सद्योमुक्तिभाजां ज्ञानवतामित्यर्थः । **वैराग्यमिति**। "आत्मानं चेद्विजानीयादि"ति श्लोकेन वैराग्यमित्यर्थः । **यस्यानुवित्तिरिति** । यस्यानुवित्तः प्रतिबुद्ध आत्मेत्यादिनवभिः श्लोकैरित्यर्थः । **तद्विज्ञानं चेति** । भगवद्विज्ञानमित्यर्थः । एतावता त्रयोदशश्लोकानां तात्पर्यमुक्त्वाऽवशिष्टश्रुतेस्तात्पर्यमाहुः—**पुनरिति** । **स वा अयमिति** । "स वा एष महानज आत्मे"त्यादिनेत्यर्थः । तथाच यस्यानुवित्तिरिति नवभिरित्युक्तं तत्र यस्यानुवित्तिरिति श्लोकस्य यदुत्तरार्द्धं सविश्वकृदित्यादि तस्यैवार्थकथनं स वा एष महानज इत्यादिना स सेतुर्विधरण इत्यन्तेन, अथच यस्यानुवित्तिरिति पूर्वार्द्धं अवशिष्टश्लोकाश्च तदर्थकथनं "तमेतं वेदानुवचनेने"त्यादिना कृतमिति भावः । **काण्वानामिति** । माध्यन्दिनकाण्वानामित्यर्थः । एतावता एतस्यायमर्थ इत्यारभ्य, विषयवाक्यार्थो वर्णितः । इतः परं पूर्वपक्षमाहुः—**तत्रेति** । **जीवो वाच्य इति** । उपक्रमे प्राणेषु हृद्यन्तर्ज्योतिः पुरुष इत्यत्र जीववाचकपुरुषपदमुक्तं, उपसंहारे च "योऽयं विज्ञानमय"इत्युक्तं, अथच "स वा एष महानजे"त्यादिना भगवदात्मकत्वमप्युक्तं तेन कृत्वा किं ज्ञायते ब्रह्माभिन्नो जीवो वाच्य इत्यर्थः । सिद्धान्तमाहुः—**ब्रह्मैवेति** । सूत्रार्थमाहुः—**सुषुप्ताविति** । व्यपदेशादिति पूर्वसूत्रादनुवर्तते । तथाच सुषुप्तौ अयं शारीर आत्मा प्राज्ञेनात्मना सम्परिष्वक्तः अथचोत्क्रान्तौ अयं शारीर आत्मा प्राज्ञेनात्मनाऽन्वारूढ इतिवाक्यद्वयेन स्पष्टम् । जीवे ब्रह्मभेदस्य प्रतिपादनान्न ब्रह्माभिन्नो जीवो वाच्य इतिपूर्वपक्षावसर इति भावः । तस्मात् किंज्योतिरयमितिप्रश्ने ब्रह्मज्योतिषैवायं व्यवहरतीत्युत्तरम् ! अथच मोक्षदशायामस्य ब्रह्मभाव इतिकथनेन सर्वं वाक्यं ब्रह्मपरमेव बोध्यमित्यन्यत्र विस्तरः । **आकाशवदिति** । अकाशस्तल्लिङ्गाधिकरणे अन्यथाऽनुपपत्याऽऽकाशवाक्यस्य यथाब्रह्मपरत्वं निर्धारितमेवमत्रापीत्यर्थः । एवंचास्मिन् समन्वयाध्याये ज्योतिर्ब्राह्मणशारीरब्राह्मणयोर्ब्रह्मणि समन्वयः प्रतिपादितो बोध्यः ।

**पत्यादिशब्देभ्यः** । ननु ब्रह्माभिन्नजीव एव वाच्यः सुषुप्त्युत्क्रान्त्योर्भेदबोधकं यद्वाक्यं तत्संसारदशायां भेदबोधनार्थमिति चेन्न, संसारावस्थायां तु जीवस्य जाग्रत्स्वप्नदशयोः किञ्चिज्ज्ञत्वात् भेदस्तु प्रत्यक्षसिद्ध एव, सुषुप्तिदशायां सुखमहमस्वाप्समिति स्मरणेन भेदः सिद्धः मरणानन्तरं भूतादिभावदर्शनादुत्क्रान्तावपि भेदानुमानमतस्तत्र तत्कथने प्रयोजनाभावादिदं ब्रह्मवाक्यमेवेति । अत एव च पूर्वहेतुना

**किञ्च, "सर्वस्य वशी" ( बृ. ४।४।२२ ) इत्यादिशब्देभ्यः स्पष्टमेव ब्रह्मप्रकरणमिति ॥ १।३।४३॥१३ ॥**

इति श्रीवेदव्यासमतवर्तिश्रीवल्लभाचार्यविरचिते ब्रह्मसूत्राणुभाष्ये प्रथमाध्यायस्य तृतीयः पादः ॥ १।३ ॥

---

साधनं क्लिष्टमिति ऋजूनामस्य प्रकरणस्य ब्रह्मत्वसाधनार्थमन्यं हेतुं वदतीत्याशयेनाहुः—किञ्चेति । सूत्रार्थमाहुः—सर्वस्येति । शारीरब्राह्मणन्तर्गतैकविंशतिकाण्डिकास्थ"सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिरि"तिशब्देभ्य इत्यर्थः । बहुवचनकथनेनोपासनापरत्वमस्य वाक्यस्य निवारितम् । सकृदुक्तानामेवोपसनापरत्वादिति दिक् । इति त्रयोदशाधिकरणम् ॥

इति श्रीमन्मुकुन्दरायसहजमाधुरीपरमानिर्वचनीयसरसवदनतामरसरसःसुधाह्रदाऽवगाहिश्रीमदाचार्यपदाब्जकृपापारसारश्रीमत्प्रभुचरणात्मजमहाराजयदुनाथकुलोद्भवगोस्वामिश्रीगोपालात्मजगिरिधरविरचितेऽणुभाष्यविवरणे प्रथमाध्यायस्य तृतीयः पादः समाप्तिमफाणीत् ॥

---

१ अत्रेत्थं व्याख्यानान्तराणि—

(१) तत्र शाङ्कराः—पूर्वं नामरूपाभ्यां भेदोक्तेराकाशो ब्रह्मेत्युक्तम्, तत्र; "प्राज्ञेनात्मना सम्परिष्वक्तः……" इत्यत्राभिन्नेऽपि जीवे भेदोपचारादित्याक्षिप्य समाधानादाक्षेपसङ्गत्येदमाह । अत्र पूर्वपक्षे जीवानुवादेन कर्मशेषकर्तृस्तुतिः, सिद्धान्ते तदनुवादेन तत्तादात्म्यधीरिति फलभेदः । बृहदारण्यके श्रूयते–"योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः" इत्यादि । तत्किं जीवानुवादकम्, उत तदनुवादेनासंसारिब्रह्मस्वरूपप्रतिपादकमिति सन्देहे, जीवानुवादकमिति पूर्वः पक्षः । सिद्धान्तस्तु–विज्ञानमयसुषुप्त्याद्यवस्थावज्जीवानुवादेन ब्रह्माभेदप्रतिपादकमिदं वाक्यम् । कस्मात्, "प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्" "प्राज्ञेनात्मनान्वारूढ उत्सर्जन्याति" इति सुषुप्त्युत्क्रान्त्योरवस्थयोः शारीराद्भेदेन परमात्मनः प्राज्ञशब्देन व्यपदेशादित्यर्थः ॥ इतश्च ब्रह्माभेदप्रतिपादकमिदं वाक्यमित्याह । "सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः" इति पत्यादिशब्दा असंसारित्वप्रतिपादकाः, "स न साधुना कर्मणा भूयान्" इत्याद्याः संसारित्वनिषेधकाः एतद्वाक्यगताः, तेभ्योऽसंसारिब्रह्मात्मप्रतिपादकमिदं वाक्यमिति समञ्जसम् ॥

(२) रामानुजीये—अथ स्यात्प्रत्यगात्मनोऽर्थान्तरभूतमात्मान्तरमेव नास्ति । ऐक्योपदेशाद्द्वैतप्रतिषेधाच्च । शुद्धावस्थ एव हि प्रत्यगात्मा परमात्मा परं ब्रह्म परमेश्वर इति व्यपदिश्यते । अतः प्रशान्मुक्तात्मनोऽभिसम्भवितुर्नार्थान्तरमभिसम्भाव्यो ब्रह्मलोकः । अतो नामरूपयोर्निर्वहिताकाशोऽपि स एव भवितुमर्हतीति । अत उत्तरं पठति । व्यपदेशादिति वर्तते । सुषुप्त्युत्क्रान्त्योः प्रत्यगात्मनोऽर्थान्तरत्वेन परमात्मनो व्यपदेशात्प्रत्यगात्मनोऽर्थान्तरभूतः परमात्मास्त्येव । "तथा हि वाजसनेयके एतम आत्मा योऽयं विज्ञानमयः प्राणेषु" इति प्रकृत्य तस्य प्रत्यगात्मनः सुषुप्त्यवस्थायामकिञ्चिज्ज्ञस्य सर्वज्ञेन परमात्मना परिष्वङ्ग आम्नायते । "प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरमि"ति । "तथोत्क्रान्तावपि प्राज्ञेनात्मनान्वारूढ उत्सृजन्याती"ति । न च स्वपत उत्क्रामतो वाप्यकिञ्चिज्ज्ञस्य तदानीमेव स्वेनैव सर्वज्ञेन सता परिष्वङ्गान्वारोहौ सम्भवतः । न च क्षेत्रज्ञान्तरेण ।

तस्यापि सर्वज्ञत्वासम्भवात्। इतश्च प्रत्यगात्मनोऽर्थान्तरभूतः परमात्मेत्याह, अयं परिष्वञ्जकः परमात्मोत्तरत्र पत्यादिशब्दैर्व्यपदिश्यते। "सर्वस्याधिपतिः सर्वस्य वशी सर्वस्येशानः", "स न साधुना कर्मणा भूयान्नो एवासाधुना कर्मणा कनीयानेष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसम्भेदाय", "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति। ..................एतमेव विदित्वा मुनिर्भवति। एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति"। "स वा एष महानज आत्मान्नादो वसुदानः। अजरोऽमृतोऽभय आनन्दो ब्रह्म" इति। एते च जगत्पतित्वजगद्विधरणसर्वेश्वरत्वादयः प्रत्यगात्मनि मुक्तावस्थेऽपि न कथञ्चित्सम्भवन्ति। अतो मुक्तात्मनोऽर्थान्तरभूतो नामरूपयोर्निर्वहिताकाशः। ऐक्योपदेशस्तु सर्वस्य चिदचिदात्मकस्य ब्रह्मकार्यत्वेन तदात्मकत्वायत्त इति "सर्वं खल्विदं ब्रह्म तज्जलान्" इत्यादिभिर्वाक्यैः प्रतिपाद्यत इति पूर्वमेव समर्थितम्। द्वैतप्रतिषेधश्च तत एवेत्यनवद्यम्॥

(३) माध्वे—असङ्गत्वं परमात्मन उक्तं, तथ स यत्तत्र किञ्चित् पश्यत्यनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुष इति स्वप्नादि द्रष्टुः प्रतीयते। स च जीवः प्रसिद्धेरिति अतो वक्ति "प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेदनान्तरम्" प्राज्ञेनात्मनाऽन्वारूढ उत्सर्जनाद् यातीति भेदव्यपदेशाच्च जीवः परश्च वा सङ्गः स्वप्नादिद्रष्टृत्वं च सर्वज्ञत्वात्तस्यैव युज्यते "एष नित्यो महिमा ब्राह्मणस्ये"ति ब्राह्मणस्यापि नित्यमहिमा प्रतीयते। स च ब्राह्मणः "स वा एष महाजन आत्मे"त्यजशब्दाद्विरिञ्चिरिति प्राप्तं, देवानाञ्च विद्याकर्म्मणोः पदप्राप्तिः सूचिता तदुपर्य्यपीति अतो ब्रवीति "सर्वस्याधिपतिः सर्वस्येशानः" "स वा एष नेति नेती"त्यादिशब्देभ्यो नित्यमहिमो विष्णुरेव "उतामृतत्वस्येशानो यदन्नेनातिरोहति" "सप्तार्द्धगर्भा भुवनस्य रेतो विष्णोस्तिष्ठन्ति प्रदेशाविधर्म्मणि स योऽतोऽश्रुत" इत्यादिश्रुतिभ्यस्तस्यैव हि ते शब्दाः॥

(४) निम्बार्कः—अज्ञासर्वज्ञस्य सुषुप्त्युत्क्रान्त्योर्भेदेन व्यपदेशाच्च। "सर्वस्याधिपतिः, सर्वस्येशानः" इत्यादिशब्देभ्यो जीवाद्भेदेन परमात्मनो व्यपदेशात्स एवाकाश इति स्थितम्॥

(५) भैक्षवे—व्यपदेशादिति छेदेनानुवर्त्तते सुषुप्त्युत्क्रान्त्योरवस्थयोरपि। अर्थात् जीवाद्भेदेनैव ब्रह्म ज्ञेयमित्यर्थः। कुतः? व्यपदेशात् तदाप्यन्योन्याभावलक्षणस्य भेदस्य श्रुत्यैव व्यपदेशादित्यर्थः। यथा तस्मिन्नेव बृहदारण्यीयप्रकरणे सुषुप्त्यधिकारे तद्यथा "प्रियया स्त्रिया सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरमेवमेवायं पुरुषः प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेदनान्तरमिति" उत्क्रान्त्यधिकारे च "तद्यथा अतः सुसमाहितमुत्सर्जयद्यायां देवतामेवायं शारीर आत्मा प्राज्ञेनात्मना अन्वारूढ उत्सर्जयद्याती"ति अनयोर्वाक्ययोः सुषुप्त्युत्क्रान्तौ च जीवब्रह्मणोः स्फुटं रूपभेद उच्यत इति। अत्र चोत्क्रान्तिशब्दो जीवस्य देहत्यागमात्रपरतया मोक्षादीनामपि ग्राहकः मोक्षावस्थायामपि "निरञ्जनः परमं साम्यमुपैतीति"श्रुतौ, साम्यान्तर्गतस्य भेदव्यपदेशात् ब्रह्मैव सन् ब्रह्माप्येतीत्युक्तवाक्येप्यप्यस्य भेदतन्त्रत्वाच्च ब्रह्मैव सन्निति च त्यक्तदेहाद्यभिमान इति प्राप्तगौणब्रह्मभाव इति अर्थः। अपौनरुक्त्याय विशेषणपदस्यैव गौणतौचित्यादिति। प्रलयावस्थायां च "यत्प्रयन्त्यभिसम्विशन्ती"त्यादिश्रुतौ कोषखड्गयोरिव प्रवेष्टृप्रवेष्ट्योर्भेदोऽवगम्यत इति। नन्वेवमपि सुषुप्तावेकीभावस्तुरीये च ब्रह्मचिन्मात्रावशेषो माण्डूक्यादिसकलश्रुत्यन्तरेभ्यः सेत्स्यतीति चेत् उदाहृतयोर्बृहदारण्यकवाक्ययोरविभागपरत्वस्यागत्या वक्तव्यतया तदेकवाक्यत्वेनेतरश्रुतेरपि तत्परत्वमवधार्यते। तथा हि सुषुप्तौ तावत्स्त्रीपुरुषयोरिव मिथुनीभूय भुञ्जतोः स्पष्टविभागाभावेन जीवेश्वरयोरविभागलक्षण एकीभावः श्रुत्योच्यते सुषुप्तौ जीवस्य भोगश्रव-

णेन चित्तवृत्तिसम्बन्धतः सूक्ष्मविभागस्यैव सत्त्वात्, तुरीये चित्तस्यात्यन्तं विलयेन जीवस्याप्यत्यन्तविलयादीश्वरोपाधेश्च नित्यवृत्तिमतोऽपि व्यापाराभावेन प्रसुप्तत्वात्, ब्रह्मचैतन्ये च सर्वविषयावभासनलक्षणव्यापारस्य तुरीयाख्यमहाप्रलयावस्थायामप्यप्रच्यवाद्ब्रह्मचिन्मात्रावशेषता श्रुत्योच्यते । सुषुप्ततुरीययोरयमवान्तरः सूक्ष्मभेदश्च शिष्यैर्न विसरणीयः । तदेतत्त्वयमाचार्यो वक्ष्यत्यविभागो वचनादिति सूत्रेण । अस्माभिरपि पञ्चसूत्र्यां जीवब्रह्मणोरविभागलक्षण एवाभेदो नाखण्डत्वमिति विस्तरेण प्रतिपादितम् । एतेन सुषुप्तिप्रलयमोक्षेष्वपि जीवब्रह्मणोराचार्य्येण भेदवचनादनौपाधिकः स्वाभाविक एव तयोर्भेद आचार्य्यसिद्धान्तोऽवधार्य्यते । भेदस्यौपाधिकत्वे सत्युपाधिविलयदशायां भेदप्रतिपादनानुपपत्तेः । न हि घटविलये तदौपाधिक आकाशे भेदो वक्तुं केनापि शक्यते, युज्यते वा, भेदस्यापारमार्थिकत्वे सति तदानीमननुभूयमानभेदस्यानुवादानुपपत्तेः, अभेदस्यैव प्रतिपादनार्हत्वादिति तस्मादेतत्सूत्राज्जीवब्रह्माखण्डतावादोऽपसिद्धान्त एवाधुनिकानामिति ज्ञातव्यम् । आधुनिकास्तु अत्राधिकरणे बृहदारण्यकस्थज्योतिर्ब्राह्मणस्य जीवपरत्वशङ्कायां ब्रह्मपरत्वमवधार्य्यते सुषुप्त्युत्क्रान्त्योर्जीवाद्भेदेन ब्रह्मणो व्यपदेशाद्धेतोरित्याहुः, तन्न ज्योतिर्ब्राह्मणे जीवस्यैव महाप्रकरणित्वात्, सुषुप्त्युत्क्रान्तिप्रकारकथनप्रसङ्गेनैव प्राज्ञस्य कीर्तनात् ब्रह्मैव सन् ब्रह्माप्येतीत्याद्यवान्तरवाक्यशेषस्यैव गन्तव्यब्रह्मप्रकरणत्वात्, तत्र च सुषुप्त्युत्क्रान्त्यश्रवणादिति । सुषुप्त्युत्क्रान्त्योरपि भेदेनैव ब्रह्म प्रतिपत्तव्यमित्यन्वयः । पत्यादिशब्दाश्च "एष भूताधिपतिरेष भूतपालः प्रधानक्षेत्रज्ञपतिर्गुणेशः" "परेऽव्यये सर्व एकीभवन्ति" "य आत्मानमन्तरोऽयमती"-त्याद्याः शतशः । न ह्यत्यन्तमभेदेन पतित्वादिकं सम्भवति स्वस्वामिभावैकीभावयमनादेर्भेदतन्त्रत्वात् । न च सुषुप्त्युत्क्रान्त्योरभेदेऽपि जाग्रदाद्यौपाधिकभेदेन पतित्वादिकं सम्भवतीति वाच्यम्, औपाधिकभेदेन पतित्वादेरप्यौपाधिकत्वात्, पतित्वादीनां कल्पितत्वापत्तेः, तच्च सत्यामुपपत्तौ न युक्तमिति । आधुनिकास्तु अनेन सूत्रेण पत्यादिशब्दवतीषु श्रुतिषु ब्रह्मपरता निर्णायकतया पृथगधिकरणं रचयन्तः सूत्रं चकारशून्यं पठन्ति, तथा च पत्यादिकं ब्रह्मश्रुतिभ्य इत्यर्थमाहुस्तन्न, स्पष्टशब्दे सति संशयस्यैवाभावात् तदभावे च हेत्वसिद्धिरिति ॥

(६) भास्करीये—व्यपदेशादित्यनुवर्तते । बृहदारण्यके षष्ठप्रपाठके "कतम आत्मेति योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुष" इत्युपक्रम्यात्मविषयं निरूपणं क्रियमाणं, किं संसारिस्वरूपपरं, किं वा परमात्मस्वरूपपरमिति संशये, विज्ञानमयः प्राणेष्विति लिङ्गात् संसारिस्वरूपप्रधानमन्वाख्यानमिति प्राप्ते, ब्रूमः, पररूपपरमिति । कुतः ? सुषुप्तावुत्क्रान्तौ च शारीराद्भेदेन परस्य व्यपदेशात् । प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेदेति प्रकृष्टया सर्वज्ञलक्षणया प्रज्ञया युक्तः प्राज्ञः परमेश्वरस्तेन सम्परिष्वक्तो जीवः । तथोत्क्रान्तावप्ययं शारीर आत्मा प्राज्ञेनात्मनान्वारूढ उत्सर्जन् यातीति यः पुनरुपक्रमे प्राणसम्बन्धः सोऽनुवादः प्रमाणान्तरसिद्धेः । सर्वोपाधिरहितचैतन्यानन्दस्वरूपप्रतिपादनाय । तथाहि "स वा एष महानज आत्मेत्युपसंहरत्यसङ्गो ह्ययं पुरुषोऽनन्वागतं पुण्येनानन्वागतं पापेन तीर्णो हि तदा सर्वान् शोकान् हृदयस्य भवती"ति पुण्यपापाभ्यामसम्पृक्तं समस्तशोकातीतं विज्ञानात्मनः परं रूपं परमात्मसञ्ज्ञं दर्शयति ॥ इतश्च सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिरिति पत्यादिशब्देभ्यः परमात्मा निश्चीयते ॥

(७) श्रीमद्वल्लभाचार्यमतेऽयमभिप्रायः—बृहदारण्यके ज्योतिर्ब्राह्मणं चात्र विषयः । अत्र, "किंज्योतिरयं पुरुष" इत्युपक्रमे, समाप्तौ च "अभयं ह वै ब्रह्म भवति य एवं वेदे"तिवेत्तृत्वेन जीवस्यैव परामर्शान्मध्ये च ब्रह्मधर्माणां सर्वेशितृत्वादीनां श्रवणात् सन्देहः । किमिदं जीवस्य ब्रह्मत्वप्रतिपादनपरं

जीववाक्यम्, उत स्वातन्त्र्येणैव ज्ञानकर्मत्वप्रतिपादनपरं ब्रह्मवाक्यमिति । विचारप्रयोजनं त्वानन्दमयाधिकरणमारभ्य दहराधिकरणपर्यन्तं "नेतरोऽनुपपत्ते"रित्यादीनां जीवनिषेधकानां सूत्राणां वैयर्थ्यस्य परिहारः। अन्यथा तु जीवस्य वस्तुतो ब्रह्मत्वे जीवभावस्याविद्यासंसर्गकृतावस्थान्तररूपत्वात् तत्सत्वेपि ब्रह्मत्वस्यानपेतत्वेन संसारावस्थावस्थितस्य च जगत्कर्तृत्वादिधर्माणां प्रत्यक्षबाधितत्वेन दर्शनान्तराद्य बाधितत्वेन शङ्काया एवानुदयात्तद्वैयर्थ्यं वज्रलेपायेत । आचार्यस्य प्रहिलत्वादित्वं बर्बरत्वं चापद्येत। विचारे तु श्रुत्यैव तत्सिद्धेर्न भ्रयमपीत्युपोद्घातेनेदं विचार्यते । तत्रोपक्रमोपसंहारयोर्जीवपरामर्शान्मध्य उक्तानां धर्माणां चावस्थान्तरेऽपि वस्तुतो ब्रह्मतया तदीयत्वाद् "ब्रह्मैव सन् ब्रह्माप्येती"त्यत्र विद्यानिर्मुक्त्या स्वस्वरूपानुसन्धानेन "ब्रह्मैव सन्" विभेदरहितो भवतीत्यर्थेन वस्तुतो ब्रह्मत्वाद् जीवस्य ब्रह्मत्वप्रतिपादनपरमेवेदं वाक्यमिति प्राप्ते, अभिधीयते-सुषुप्तीत्यादि। अस्मिन् प्रकरणे ब्रह्मैव वाक्यार्थः। कुतः? सुषुप्त्युत्क्रान्त्योर्भेदेन व्यपदेशादिति पूर्वसूत्रतोऽनुवर्तते। सुषुप्तौ "अयमात्मा प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तर"मिति। उपक्रमे च "अयमात्मा प्राज्ञेनात्मनाऽन्वारूढ" इति जीवात्मनः सकाशात् प्राज्ञस्य परमात्मनो भेदेन कथनात्। न ह्यवस्थाभेद एको भेदेन व्यपदिश्यते। न हि पण्डितो देवदत्तः कर्मादिवशात् पतितो, देवदत्ताद्भिद्यते । अतः पूर्वाधिकरणे यथा अन्यथानुपपत्तिबलादाकाशवाक्यस्य ब्रह्मपरत्वनिर्धारः, तथात्रान्यथानुपपत्तिबलात् प्रकरणस्य तथात्वनिर्धारो युक्त इत्यर्थः ॥

किञ्च, "सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ती"ति पत्यादिशब्दाः सर्वस्येत्यादयस्तेभ्य इदं प्रकरणं स्पष्टमेव ब्राह्मत्वेन गम्यते। न हि निरङ्कुशं सर्वाधिपत्यं जीवस्य सम्भवति। न वा जीवस्यावस्थाविशेषत्वे ब्रह्मानतिरेकात् सर्वत्वमसम्भवदधिपतित्वं समर्थयितुं शक्नोति । अतः सर्वस्याधिपतिरित्यादिश्रुतिबलादप्यस्य ब्रह्मप्रकरणत्वमित्यर्थः ॥



## मतान्तरपाठसमेतः सूत्रपाठः ।

प्रथमाध्याये तृतीयप्रकरणः ।

॥ प्रथमं सप्तसूत्रं द्युभ्वाद्यधिकरणम् ॥ १ ॥

१. द्युभ्वाद्यायतनं स्वशब्दात् ॥ १ ॥
२. मुक्तोपसृप्यव्यपदेशात्[1] ॥ २ ॥
३. नानुमानमतच्छब्दात् ॥ ३ ॥
४. प्राणभृच्च[2] ॥ ४ ॥
५. भेदव्यपदेशात्[3] ॥ ५ ॥
६. प्रकरणात्[4] ॥ ६ ॥
७. स्थित्यदनाभ्यां च ॥ ७ ॥

॥ द्वितीयं द्विसूत्रं भूमाधिकरणम् ॥ २ ॥

८. भूमा सम्प्रसादादध्युपदेशात् ॥ १ ॥
९. धर्मोपपत्तेश्च ॥ २ ॥

॥ तृतीयं त्रिसूत्रमक्षराधिकरणम् ॥ ३ ॥

१०. अक्षरमम्बरान्तधृतेः ॥ १ ॥
११. सा च प्रशासनात् ॥ २ ॥
१२. अन्यभावव्यावृत्तेश्च ॥ ३ ॥

॥ चतुर्थमेकसूत्रमीक्षतिकर्माधिकरणम् ॥ ४ ॥

१३. ईक्षतिकर्मव्यपदेशात्[5] सः ॥ १ ॥

॥ पञ्चममष्टसूत्रं दहराधिकरणम् ॥ ५ ॥

१४. दहर उत्तरेभ्यः ॥ १ ॥
१५. गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गं च ॥ २ ॥
१६. धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ॥ ३ ॥
१७. प्रसिद्धेश्च ॥ ४ ॥
१८. इतरपरामर्शात् स इति चेन्न सम्भवात् ॥ ५ ॥
१९. उत्तराच्चेदाविर्भूतस्वरूपस्तु ॥ ६ ॥
२०. अन्यार्थश्च परामर्शः[6] ॥ ७ ॥
२१. अल्पश्रुतेरिति चेत्तदुक्तम् ॥ ८ ॥

॥ षष्ठं द्विसूत्रमनुकृत्यधिकरणम् ॥ ६ ॥

२२. अनुकृतेस्तस्य च ॥ १ ॥
२३. अपि स्मर्यते[7] ॥ २ ॥

---

१ 'मुक्तोपसृप्यव्यपदेशाच्च' इति पाठो रामानुजशैवयोः । २ 'प्राणभृच्च' इति सूत्रं रामानुजशैवौ तृतीयेऽन्तर्भावयतः । ३ "भेदव्यपदेशाच्च" इति निम्बार्कपाठः । ४ 'प्रकरणाच्च' इति भास्करपाठः । ५ 'ईक्षतिकर्मव्यपदेशात् [illegible]" इति रामानुजपाठः । ६ "परामर्श" इति भैक्षवपाठः । ७ 'अपि च स्मर्यते' इति पाठः कगघङपुस्तकयोः शाङ्करभास्करशैवभैक्षवाद्यः ।

॥ सप्तमं द्विसूत्रं शब्दादेव प्रमित इत्यधिकरणम् ॥ ७ ॥

२४. शब्दादेव प्रमितः ॥ १ ॥

२५. हृद्यपेक्षया तु मनुष्याधिकारत्वात् ॥ २ ॥

॥ अष्टममष्टसूत्रं तदुपर्यपीत्यधिकरणम् ॥ ८ ॥

२६. तदुपर्यपि बादरायणः सम्भवात् ॥ १ ॥

२७. विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् ॥ २ ॥

२८. शब्द इति चेन्नातःप्रभवात् प्रत्यक्षानुमानाभ्याम् ॥ ३ ॥

२९. अत एव च नित्यत्वम् ॥ ४ ॥

३०. समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात् स्मृतेश्च ॥ ५ ॥

३१. मध्वादिष्वसम्भवादनधिकारं जैमिनिः ॥ ६ ॥

३२. ज्योतिषि भावाच्च ॥ ७ ॥

३३. भावं तु बादरायणोऽस्ति हि ॥ ८ ॥

॥ नवमं पञ्चसूत्रं शुगस्येत्यधिकरणम् ॥ ९ ॥

३४. शुगस्य तदनादरश्रवणात् तदाद्रवणात् सूच्यते हि ॥ १ ॥

३५. क्षत्रियत्वावगतेश्चोत्तरत्र चैत्ररथेनलिङ्गात् ॥ २ ॥

३६. संस्कारपरामर्शात् तदभावाभिलापाच्च ॥ ३ ॥

३७. तदभावनिर्धारणे च प्रवृत्तेः ॥ ४ ॥

३८. श्रवणाध्ययनार्थप्रतिषेधात् स्मृतेश्च ॥ ५ ॥

॥ दशममेकसूत्रं कम्पनाधिकरणम् ॥ १० ॥

३९. कम्पनात् ॥ १ ॥

॥ एकादशमेकसूत्रं ज्योतिर्दर्शनाधिकरणम् ॥ ११ ॥

४०. ज्योतिर्दर्शनात् ॥ १ ॥

॥ द्वादशमेकसूत्रमर्थान्तरव्यपदेशाधिकरणम् ॥ १२ ॥

४१. आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॥ १ ॥

॥ त्रयोदशं द्विसूत्रं सुषुप्त्युत्क्रान्त्योरित्यधिकरणम् ॥ १३ ॥

४२. सुषुप्त्युत्क्रान्त्योर्भेदेन ॥ १ ॥

४३. पत्यादिशब्देभ्यः ॥ २ ॥

इति श्रीमत्कृष्णद्वैपायनविरचिततत्त्वसूत्रेषु समन्वयाख्ये प्रथमाध्यायेऽन्तर्यामिस्वरूप-
विचारो नामधेयस्वरूपसन्देहनिवारको तृतीयश्चरणः ॥ ३ ॥

---

१ "शब्दादेव च प्रमितः" इति पाठः प्रदीपे । २ "अत एव नित्यत्वम्" इति निम्बार्के पाठः । ३ "समाननामरूप-
त्वाच्च" इति सर्वेषामप्येकदेशिनां पाठः । "समानरूपनामत्वाच्च" इति कचित्पुस्तके भास्करपाठश्च । ४ "ज्योतिषा भावाच्च"
इति पाठः प्रदीपकारसम्मतः प्रतिभाति । ५ "भावात्तु" इति कचिद्भास्करपाठः । ६ "शूद्रस्य" इति भास्करपाठः ।
७ "क्षत्रियत्वगतेश्च" इति शाङ्करभास्करभैक्षवनैम्बार्करामानुजशैवानां पाठः । तत्रापि रामानुजशैवौ "उत्तरत्र" इति सूत्र-
विभागं पृथक् पठतः । ८ "संस्कारपरामर्षात्" इति भैक्षवः पाठः । ९ "स्मृतेश्च" इतिसूत्रं योगविभागेन पृथक् पठन्ति
निम्बार्करामानुजशैवाः । १० "प्राणः कम्पनात्" इति भैक्षवः पाठः । ११ "पत्यादिशब्देभ्यश्च" इति भैक्षवः पाठः ।

इतोऽपि निवेदयतां सहृदयाः

परमपुरुषार्थस्य निगमकल्पतरोः फलं श्रीभागवतस्य सरसरसास्वादचतुरैः कथमास्वाद्यते ?

प्रकारत्रयेणेतिः—

तत्र

(१) परमपुरुषार्थप्रतिपादिका—

## वृत्रासुरचतुःश्लोकी—

सा हि पण्डितपुरन्दराणां गोस्वामिश्रीपुरुषोत्तमानां प्रकाशेन समलङ्कृता

देवर्षिश्रीरसालाचार्यकृतव्रजभाषया च समुपबृंहिता

चतुर्भिरेवाणकैर्लभ्यते।

(२) भगवता कपिलेन मात्रे देवहूत्या उपदिष्टः साङ्ख्ययोगात्मकस्तृतीयस्कन्धः—

तदर्थश्च श्रीमदाचार्यचरणप्रोक्तेन निबन्धेन विना दुर्बोध एव, अत.—

## तृतीयस्कन्धार्थः—

भागवतार्थनिबन्धान्तर्गत, आचार्यचरणानां प्रकाशेन कल्याणरायाणां टिप्पण्या च समेत । .

अयं हि अष्टभिरेवाणकैः प्राप्यते।

(३) श्रीमद्भागवतस्य प्रत्यध्यायतात्पर्यं, तस्य हि शास्त्रार्थाधर्थसप्तकेन च समन्वय कुत्र प्रदर्शित. ?

गोकुलरायभट्टकृते,

## निबन्धान्तर्गते-भागवताध्यायार्थ एव।

सोऽपि नवभिराणकैः क्रेय ।

एतेषां प्राप्तिस्थानं ज्ञायते नु भवता ?

"शेठ नारायणदास तथा जेठानन्द आसनमल्ल चेरिटि ट्रस्ट ऑफिस,

२३६ कालबादेवीरोड, मुंबई २."

श्रीकृष्णाय नमः ।
श्रीगोपीजनवल्लभाय नमः ।
श्रीमदाचार्यचरणकमलेभ्यो नमः ।

# श्रीमद्ब्रह्मसूत्राणुभाष्ये

## गोस्वामिश्रीगिरिधरजित्कृतविवरणसमेते

### प्रथमाऽध्याये चतुर्थः पादः ।

### १ आनुमानिकाधिकरणम् ।

( चतुर्थपादारम्भप्रस्तावना )

**आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ॥ १।४।१ ॥**

एवं सर्वेषां वेदान्तानां ब्रह्मपरत्वे निर्णीते, केचिद्वेदार्थाज्ञानात् क्वचिद्वेदभागे कापिलमतानुसारिपदार्थदर्शनेन तस्यापि वेदमूलकत्वं वदन्ति, तन्निराकरणाय चतुर्थः पाद आरभ्यते । तत्र–ईक्षतेर्नाशब्दम् ( ब्र. सू. १।१।५ ) इति साङ्ख्यमतमशब्दत्वादिति निवारितम्, वेदेन प्रतिपादितमिति, तत्राशङ्कते—

---

अस्मिन् समन्वयाध्याये सर्वेषां वेदातवाक्यानां ब्रह्मणि समन्वयो वक्तव्यः, स च पादत्रयेण साक्षात्परम्परया चोक्तः । इदानीं केषुचित् महदव्यक्तपदघटितेषु वेदान्तवाक्येषु मतान्तरसिद्धप्रधानादिपरत्वभ्रमनिवारणेन तन्मतं श्रौतं न भवतीति विचारं कर्तुं चतुर्थं पादमुपोद्घातसङ्गत्याऽऽरभ्यते । तत्र साङ्ख्यमतं वेदप्रतिपाद्यं अव्यक्तादिपदघटितोपनिषद्वाक्यप्रतिपाद्यार्थप्रतिपादकत्वात् वेन्दातमतवदित्यनुमानस्य भ्रमात्मकत्वेन, तन्मतस्य वेदमूलकत्वं निवारयितुमानुमानिकाधिकरणमारचयन्ति—**आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च** । उपोद्घातसङ्गतिं सूचयन्तः पूर्वपादत्रयार्थमनुद्यैतत्पदार्थमाहुः—**एवमिति** । वेदभागे काठके । नन्वदृश्यत्वाधिकरणे एतादृशवाक्यविचारः कृतः परन्तु साङ्ख्यमतं सर्वथा अश्रौतमेवेति विचारो न कृत इत्येतदर्थं शङ्कांशमवतारयन्ति—**तत्रेति** । ननु ईक्षतेर्नाशब्दमिति सूत्रे ब्रह्मणः उपनिषच्छब्दजन्यशाब्दबोधविषयत्वमेव प्रतिपादितं न तु साङ्ख्यमतनिराकरणमित्यत आहुः—**अशब्दत्वादिति** । उपनिषच्छब्दजन्यशाब्दबोधाविषयत्वादित्यर्थः । ननु ईक्षतेर्नाशब्दमिति सूत्रं शङ्कराचार्यैः साङ्ख्यमतनिराकरणपरत्वेन व्यवस्थापितं, प्रभुचरणैस्तु ब्रह्मणः शब्दागोचरत्वेऽपि उपनिषच्छब्दजन्यशाब्दबोधविषयत्वमस्तीत्येतादृशार्थपरत्वेन व्यवस्थापितं ननु साङ्ख्यनिराणपरत्वेन; अत्र तु ईक्षतेर्नाशब्दमिति साङ्ख्यमतमशब्दत्वादिति निवारितमित्युक्तमिति पूर्वापरभाष्यविरोध इति चेन्न; अत्रत्यभाष्यस्यायमर्थः—ईक्षतेर्नाशब्दमिति सूत्रेण साङ्ख्यमतं उपनिषच्छब्दजन्यशाब्दबोधाविषयत्वान्निवारितमिति । तथाच ईक्षतेर्नाशब्दमिति सूत्रेण ब्रह्मण एव वैदिकशब्दजन्यशाब्दबोधविषयत्वे प्रतिपादिते, अर्थादेव साङ्ख्यमतस्य तादृशशाब्दबोधाविषयत्वेन निवारणमिति; अत एव अशब्दत्वादिति आर्थिकहेतुप्रयोगः कृतः, ननु ईक्षतेर्नाशब्दमिति सूत्रे साङ्ख्यमतं निवारितमित्युक्तं प्रभुचरणैरिति न पूर्वापरभाष्यविरोध इतिसूक्ष्मदर्शिभिरवगन्तव्यमित्यलं पल्लवितेन । नन्वेवं सति किमर्थमियमाशङ्केत्यत आहुः—**वेदेनेति** । काठकशाखास्थवेदवाक्येनेत्यर्थः । सूत्रापेक्षया वेदस्य प्राबल्यात् शङ्कावसर इति भावः ।

आनुमानिकमप्येकेषाम् । एकेषां शाखिनां शाखासु साङ्ख्यपरिकल्पितप्रकृत्यादि श्रूयते—

"इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः ।
मनस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः ॥
महतः परमव्यक्तमव्यक्तात्पुरुषः परः ।
पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः ॥"
(कठ. १।३।१०।११)

इति काठके श्रूयते । तत्र बुद्धेरात्माहङ्कारः, ततो महान्महत्तत्वम्, ततोऽव्यक्तं प्रकृतिः, ततः पुरुष इति । न ह्यहङ्कारादयः पदार्था ब्रह्मवादे सम्भवन्ति ।

---

शङ्कासूत्रं व्याकुर्वन्ति—एकेषामिति । आनुमानिकमित्यस्यार्थमाहुः—साङ्ख्येति । प्रकृत्यादीत्यादिपदेन पुरुषस्यापि सङ्ग्रहः । श्रूयते इति । एतस्माद्धेतोः कापिलमतं वेदमूलमित्यर्थः । कुत्र श्रूयते इत्यत आहुः—इन्द्रियेति ।

अथ विषयवाक्यम्—

ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे ॥ छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः ॥ १ ॥ यः सेतुरीजानानामक्षरं ब्रह्म यत्परम् ॥ अभयं तितीर्षतां पारं नाचिकेतꣳ शकेमहि ॥ २ ॥ आत्मानं रथिनं विद्धि शरीरं रथमेव तु ॥ बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च ॥ ३ ॥ इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान् ॥ आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः ॥ ४ ॥ यस्त्वविज्ञानवान्भवत्ययुक्तेन मनसा सदा ॥ तस्येन्द्रियाण्यवश्यानि दुष्टाश्वा इव सारथेः ॥ ५ ॥ यस्तु विज्ञानवान्भवति युक्तेन मनसा सदा ॥ तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथेः ॥ ६ ॥ यस्त्वविज्ञानवान्भवत्यमनस्कः सदाऽशुचिः ॥ न स तत्पदमाप्नोति सꣳसारं चाधिगच्छति ॥ ७ ॥ यस्तु विज्ञानवान्भवति समनस्कः सदा शुचिः ॥ स तु तत्पदमाप्नोति यस्माद्भूयो न जायते ॥ ८ ॥ विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः ॥ सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम् ॥ ९ ॥ इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः ॥ मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः ॥ १० ॥ महतः परमव्यक्तमव्यक्तात्पुरुषः परः ॥ पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः ॥ ११ ॥ एष सर्वेषु भूतेषु गूढात्मा न प्रकाशते ॥ दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः ॥ १२ ॥ यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनि ॥ ज्ञानमात्मनि महति नियच्छेत्तद्यच्छेच्छान्त आत्मनि ॥ १३ ॥ उत्तिष्ठत जाग्रत प्राप्य वरान्निबोधत ॥ क्षुरस्य धारा निशिता दुरत्यया दुर्गं पथस्तत्कवयो वदन्ति ॥१४॥ अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत् ॥ अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तन्मृत्युमुखात्प्रमुच्यते ॥ १५ ॥ नाचिकेतमुपाख्यानं मृत्युप्रोक्तꣳ सनातनम् ॥ उक्त्वा श्रुत्वा च मेधावी ब्रह्मलोके महीयते ॥१६॥ य इमं परमं गुह्यं श्रावयेद्ब्रह्मसंसदि ॥ प्रयतः श्राद्धकाले वा तदानन्त्याय कल्पते तदानन्त्याय कल्पत इति ॥ १७ ॥ इति प्रथमाध्याये तृतीया वल्ली ॥ ३ ॥

अथ भाष्यम् । विषयवाक्ये साङ्ख्यमतसिद्धपदार्थान्विवेचयन्ति—तत्र बुद्धेरिति । आत्मशब्दार्थमाहुः—अहङ्कार इति । पर इत्यंशानुपङ्गः । अहङ्कारस्य गिरित्वरूपत्वादात्मत्वं सर्वात्मनोन्तःकरणं

तस्मादेवञ्जातीयकेषु तन्मतपदार्थानां श्रवणान्मायाप्रकृत्यविद्यावादा अपि श्रौता इति चेन्न; शब्दसाम्यमात्रेण तन्मतं न सिध्यति।

सन्दिग्धानां पदार्थानां पौर्वापर्येण निर्णयः।
न तु सन्दिग्धवाक्येन सर्वव्याकुलतोचिता॥ २३॥

अत्र हि पूर्वम्—

आत्मानं रथिनं विद्धि शरीरं रथमेव तु।
बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च॥
इन्द्रियाणि हयानाहुर्विषयाँस्तेषु गोचरान्।
आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः॥ (कठ. १।३।३-४)

तदनु चत्वारि वाक्यानि। यस्त्वविज्ञानवानित्यादि। तदन्विन्द्रियेभ्यः परा इति। तत्र पूर्वसम्बन्ध एवार्थ उचितः। तमाह—

शरीररूपकविन्यस्तगृहीतेः। शरीरेण रूप्यन्ते ये शरीरेन्द्रियादयस्ते विन्यस्ता यत्र रूपकभावेन रथादिषु तेषामेवात्र गृहीतिर्ग्रहणम्। अन्यथा प्रकृतहानाप्रकृतपरिग्रहापत्तिः।

---

गिरित्रमिल्यादिवचनप्रमाण्यात्। एवञ्जातीयकेष्विति। "अजामेकां लोहिते"त्यादिष्वित्यर्थः। श्रौतमपि शब्दं विशदयन्ति—मायेति। समाधानं वक्तुं प्रथमतः चेदित्यत्र नञर्थमाहुः—शब्देति। सिध्यतीति। तन्मतं अहङ्कारमहत्तत्त्वप्रकृतिपुरुषाणामुत्तरोत्तरं परत्वबोधकत्वान्न सिध्यतीत्यर्थः॥ अत्र हेतुं पद्येनाहुः—सन्दिग्धानामिति। सन्देहविषयीभूतानां पौर्वापर्येण पूर्वापरसन्दर्भेण निर्णय इति महावाक्यस्य उचितेति शेषः। सन्दिग्धवाक्येन। सन्दिग्धावान्तरवाक्येनेत्यर्थः। उचितेति। महावाक्यस्येति शेषः।

पद्यार्थं विशदयन्ति—अत्र हीति। अत्र अस्मिन्प्रकरणे पूर्वं प्रथमं आत्मानमिति, तदनु तदन्तरं चत्वारि वाक्यानि। कानि तानीत्यत आहुः—यस्त्विति। तदनु इन्द्रियेभ्य इतिवाक्यानि पठितानीत्येवं सन्दर्भ इत्यर्थः। अस्मिन्सन्दर्भे योऽर्थः स एव सूत्रे हेतुवाक्येन वदतीत्याहुः—तत्रेत्यादिना। "इन्द्रियेभ्यः परा" इत्यादिना वाक्ये आत्मानं रथिनं विद्धीत्यादिपूर्ववाक्यार्थसम्बन्ध एवात्रार्थो वर्णनीय इत्यर्थः। तमाहेति। तादृशार्थं सूत्रकार आहेत्यर्थः॥

हेतुसूत्रार्थमाहुः—शरीरेति। शरीररूपकविन्यस्तगृहीतेः। अस्यार्थः। शरीरेण रूप्यन्ते ज्ञायन्ते ते शरीररूपाः इन्द्रियादयः, ते यत्र रूपकेन रथादिसादृश्यबोधकताद्रूप्यरूपकालङ्कारेण, विन्यस्ताः स्थापिताः, शरीररूपकविन्यस्ताः, तेषां गृहीतिर्ग्रहणं तस्याः शरीररूपकविन्यस्तगृहीतेरिति। अत्र शाकपार्थिवत्वात् रूपपदस्य लोपः तथाच "आत्मानं रथिनं विद्धी"त्यादिवाक्यरूपकभावेनात्मरूपाहङ्कारादीनां ग्रहणं, न तु साङ्ख्यमतसिद्धाहङ्कारत्वेनेति न तन्मतस्य वेदबोध्यत्वमिति भावः। नन्विदं किमर्थमुच्यते इत्यत आहुः—अन्यथेति। अन्यथा एतादृशार्थाभावे। प्रकृतहानेति। भगवत्प्राप्तिरूपफलसाधनमार्गसाधनशरीरस्य रथादिरूपकत्वकथनं प्रकृतं, तस्य हानं, साङ्ख्यमतसिद्धपदार्थानां विवेकरूपं साधनं, स्वरूपावस्थानरूपं फलं चाप्रकृतं तस्य परिग्रहापत्तिः। तथाचैतादृशापत्तिमिया सर्वव्याकुलता नोचितेति भावः

जीवप्रकरणं ह्येतन्मुक्त्युपायोऽस्य रूप्यते ।
योग्यं शरीरमारुह्य गच्छेदिति हरेः पदम् ॥ २४ ॥

तत्र जीवस्य ब्रह्मप्राप्तौ मुख्यं साधनं शरीरम् । स रथः । सर्वसामग्रीसहितापराधीनयानत्वात् । रथस्तु हयाधीनः । हयाश्च स्वबुद्ध्यधीनाः । सा च प्रग्रहाधीना । स च सारथ्यधीनः । स च स्वबुद्ध्यधीनः । सा च मार्गाधीना । स च प्राप्याधीन इति । एवं ज्ञात्वा युक्तसामग्रीकस्तद्देशं प्राप्नोति । तत्रेन्द्रियाणामात्मा विषयाः । ते च मनसा सम्पृक्तत्वेन भावितास्तथा भवन्ति । विरक्तेन्द्रियाणामतथात्वात् । बुद्धेरात्मा विज्ञानम् । तद्ब्रह्मविषयकं महद् भवति । ततः परमव्यक्तं न प्रकटं भगवत्कृपैव । सा तु भगवदधीना न साधनान्तराधीना । स च भगवान् स्वाधीन इति । एवमेवार्थस्तस्योचितः । किञ्च, । दर्शयति स्वयमेवेममर्थम् ।

एष सर्वेषु भूतेषु गूढात्मा न प्रकाशते ।
दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः ॥ (कठ. १।३।१२) इति

सूक्ष्मयोपनिषदनुसारिण्या बुद्ध्या । भगवज्ज्ञाने हि तत्प्राप्तिरिति । चकारात् "ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्" ( भ. गी. १८।५५ ) इति स्मृतिर्गृहीता । तस्मात्साधनोपदेशान्न साङ्ख्यमतमिह विवक्षितमिति ॥ १।४।१ ॥

---

साङ्ख्यमतसिद्धपदार्थबोधकं प्रकरणमपि नास्तीत्याहुः—**जीवेति** । विज्ञानसारथिमन्त्रेणेति शेषः । **योग्यमित्यादि** । तेन मन्त्रेण मुक्त्युपायोऽस्य जीवस्य रूप्यते इत्यन्वयः । रूप्यते रूपकालङ्कारेण बोध्यते इत्यर्थः । तथाच तन्मते स्वरूपावस्थानं मोक्षः, न तु भगवत्पदप्राप्तिरितीन्द्रियेभ्य इति वाक्ये साङ्ख्यमतपदार्थबोधकत्वं नास्तीति भावः ।

कथमिदं जीवप्रकरणं कथं वा रथादिरूपकमित्यत आहुः—**तत्रेत्यादिना** । **सर्वेति** । इन्द्रियादिरूपा सामग्री । **अपराधीनेति** । शरीररूपरथे आत्मरूपरथिन एव सत्ता नान्यस्येत्यर्थः । **प्राप्याधीन इति** । इदं सर्वं तत्तद्विषयवाक्ये रूपकस्य तात्पर्यं बोध्यम् । विषयेषु देशरूपकस्य तात्पर्यं वक्तुं इन्द्रियेभ्यः परा इत्यादीनां तात्पर्यं वदन्ति—**तत्रेति** । **आत्मेति** । नियामका इत्यर्थः । इदमेव परत्वं बोध्यम् । अत्र विषयाः अलौकिका इत्याहुः—**ते चेति** । **सम्पृक्तेन** भगवदीयत्वेन भाविताः अम्बरीषचरितोक्त"स वै मनः कृष्णपदारविन्दयोरि"ति श्लोकत्रयोक्तरीत्या भाविता इत्यर्थः । **तथा भवन्ति** इन्द्रियाकर्षका भवन्ति । ननु ब्रह्मज्ञाने जाते इन्द्रियाकर्षकत्वं विषयाणां नास्त्येवेत्यत आहुः—**विरक्तेन्द्रियाणामिति** । भगवद्रसरहितानां शुष्कज्ञानिनामिन्द्रियाणामित्यर्थः । **अतथात्वात्** । विषयानाकृष्टत्वात् । तथाचास्मिन्मोक्षशास्त्रे लौकिकविषयाणां चर्चैव नास्ति । शुष्कज्ञानीन्द्रियविषययोः लौकिकसम्बन्ध एव नास्तीति भगवदीयविषयाणामेवात्र परत्वं बोध्यमिति भावः । अर्थेभ्यश्च परं मन इत्यत्राप्येव रीतिर्बोध्या । इतः परं बुद्धेरात्मेत्यस्यार्थमाहुः—**बुद्धेरिति** । आत्मा परः नियामक इत्यर्थः । विज्ञानं तत्कीदृशमित्यत आहुः—**ब्रह्मेति** । अत एव विज्ञानस्य बुद्धिनियामकत्वं महत्त्वं च तस्यैव बुद्ध्या जायमानत्वम् । साङ्ख्यमते अव्यक्तं प्रकृतिः सात्र न विवक्षितेत्याहुः—**भगवत्कृपैवेति** । इतः परं सौत्रस्य दर्शयतिचेति पदस्यार्थमाहुः—**किञ्चेति** । कुत्र दर्शयति—**एष्विति** । **बुद्ध्येति** । एतेन बुद्धिकार्यत्वं विज्ञानस्य दर्शितम् । **सूक्ष्मयेति** । उपनिषदुक्तप्रकारेणेत्यर्थः । तथाचात्र श्रुतिस्मृत्योरेकवाक्यतायै स्मृत्युक्तदृशिधातोः प्राप्त्यर्थकत्वमेव वक्तव्यम् । अत एवोक्तं "विशते तदनन्तरमि"ति । भगवतेति भावः ।

( सूक्ष्मं ब्रह्म, धर्मधर्मिणोरभेदात्, अव्यक्तं, कृपा चेति )

**सूक्ष्मं तु तदर्हत्वात् ॥ १।४।२ ॥**

नन्वव्यक्तशब्देन न भगवत्कृपा वक्तुं शक्या। धर्मिप्रवाहादित्याशङ्क्य परि-
हरति तुशब्दः। सूक्ष्मं तद् ब्रह्मैव। धर्मधर्मिणोरभेदात्। अव्यक्तशब्देन हि
सूक्ष्ममुच्यते। तदेव हि सर्वप्रकारेण न व्यज्यते। अर्हत्वात्। तदेवार्हं योग्यम्।
उभयत्राप्ययं हेतुः। तस्माद्धर्मधर्मिणोरभेदाद् भगवानेव सूक्ष्ममिति तत्कृपैवा-
व्यक्तवाच्या ॥ १।४।२ ॥

( धर्मधर्मिणोरभेदेऽपि कृपाया भगवदधीनत्वात्तस्य परत्वम् )

**तदधीनत्वादर्थवत् ॥ १।४।३ ॥**

ननु धर्मित्वे परत्वमनुपपन्नम्। अन्यथा पूर्वोक्तो दोष इत्यत आह। अभेदेऽपि
कृपायास्तदधीनत्वात्परत्वम्। तत्र दृष्टान्तः। अर्थवत्। अर्थः पुरुषार्थः फलं
तद्वत्। "ब्रह्मविदाप्नोति परम्" ( तै. २।१ ) इत्यत्रैकस्यैव ब्रह्मणः सच्चिद्रूपेण विप-
यत्वमानन्दरूपेण फलत्वमिति। तथैवाक्षरपुरुषोत्तमविभागोऽपि। स्वधर्मा अपि
स्वाधीनाः। स्वयमपि स्वाधीन इति। तथा कृपाविष्टः साधनमानन्दरूपः फलमिति।

---

**सूक्ष्मं तु तदर्हत्वात्।** सूक्ष्मं तु अव्यक्तं तु तत् ब्रह्मैव अर्हत्वादित्यर्थः। **धर्मिप्रवाहादिति।**
धर्मिणः ब्रह्मणः प्रवाहात् सर्वोत्रोपनिषदि कथनात्। क्वचिद्धर्मप्रवाहादित्यपपाठः। तुशब्दः परिहरती-
त्यन्वयः। **सूक्ष्ममिति।** सूक्ष्मं अव्यक्तं तत् ब्रह्मैवेत्यर्थः। ननु कथमभेद इत्यत आहुः—**धर्मध-
र्मिणोरिति।** तथाच घटकलशयोरिव सूक्ष्माव्यक्तयोरपि परस्परवाच्यवाचकभावेन सूक्ष्मपदेनाव्यक्तं
कृपारूपं ब्रह्म बोध्यते धर्मधर्मिणोरभेदादित्यर्थः। तदेवाहुः—**अव्यक्तेति।** न व्यक्तं अव्यक्तमिति
यौगिकशब्देनेत्यर्थः। **तदेवेति।** तदेव हि सर्वप्रकारेण व्यज्यते इति पाठः। **तदेव हि इति।** कृपा-
विशिष्टमित्यर्थः। **सर्वप्रकारेण** आनन्दमयत्वादिसर्वप्रकारेण। **व्यज्यते** आनन्दमयादितत्तदधिकरणेषु
सर्वत्र उपनित्सु व्यञ्जनया बोध्यते; शक्त्या तु ब्रह्मत्वेनेति। तदेव सर्वप्रकारेण न व्यज्यते इत्यपि पाठः।
तदर्थस्तु तदेवेति ब्रह्मैवेत्यर्थः। केवलं सूक्ष्मपदेन न व्यज्यते, किन्तु कृपापि इत्यर्थः। नन्वत्र योग्य-
निरूपणमेवाभिप्रेतमत आहुः—**तदेवेति।** कृपाविशिष्टं ब्रह्मैवेत्यर्थः। नन्वेवं चेत्तर्हि अर्हत्वस्य कृपायाम-
सत्त्वात् कथमव्यक्तपदेन तद्बोध्यते इत्यत आहुः—**उभयत्रेति।** कृपायां ब्रह्मणि चेत्यर्थः।
**नन्विति।** धर्मधर्मिणोरभेदं स्वीकृत्य यत्समाधानमुक्तं तत्राशङ्कते—**नन्विति।**

**तदधीनत्वादर्थवत्।** धर्मधर्मिणोरभेदं स्वीकृत्य यत्समाधानमुक्तं तत्राशङ्कते— "अव्यक्तात्पुरुषः पर" इत्युक्तं परत्वस्य ब्रह्म-
**धर्मित्वेति।** कृपाया इति शेषः। **अनुपपन्नमिति।** धर्मिप्रवाहपाठविरोधरूप इत्यर्थः। धर्म-
ण्यसम्भवादिति भावः। **अन्यथा।** धर्मत्वे। **पूर्वोक्त इति।** **अभेदेऽपीति।** **परत्वमिति।** ब्रह्मणि परत्वं
स्यायोग्यत्वादुपनिषदि मुख्यत्वेनानिरूपणादिति भावः। अभेदेऽपि नियामकत्वं ब्रह्मणः सम्भवतीत्यत्र दृष्टान्तमाहुः—**तत्रेति।** अत्र फलान्तं
नानुपपन्नमित्यर्थः। अभेदेऽपि नियामकत्वं ब्रह्मणः सम्भवतीत्यत्र दृष्टान्तमाहुः—**तत्रेति।** अत्र फलान्तं
भाष्यं स्पष्टम्। ननु कृपायाः उपनिषत्प्रतिपाद्यत्वरूप ब्रह्मत्वं कथमिति चेन्न; बुद्धेरात्मा महान्पर इत्यत्र
बुद्धेर्नियामकं ब्रह्मविषयकं ज्ञानं तदेव महच्छब्दवाच्यमिति पूर्वमेवोक्तं तस्यैव परत्वम्। "अथ परा
यया तदक्षरमधिगम्यते" इतिश्रुतेः। परयाऽपरप्राप्तिः। "ब्रह्मविदाप्नोति परमिति" श्रुतेः। तथाचाव्य-
क्तरूपा या कृपा तया वरणद्वारेण ब्रह्मज्ञानं महच्छब्दवाच्यं जायते "यमेवैष वृणुते" इति श्रुतेर्वरणस्य

अथवाऽव्यक्तं सचिद्रूपमक्षरमेवास्तु । तस्मिन्सति विज्ञानस्य विषयाधीनत्वमर्थः । एतेनान्येऽपि सर्वविप्लववादिनो निराकृता वेदितव्याः । असम्बद्धाभिलापाच्च ।

अनेकरूढिशब्दानां वाच्यं ब्रह्मैव नापरम् ।
शाक्तास्तांश्चेत्तथा ब्रूयुस्ते सन्मार्गाद्बहिष्कृताः ॥ २९ ॥

तस्मादिन्द्रियेभ्यः परवाक्ये नानुमानिकं किञ्चिदस्ति ॥ १।४।३ ॥

( ज्ञेयत्वेन वैलक्षण्यात्साङ्ख्यमतं न श्रौतम् )

ज्ञेयत्वावचनाच्च ॥ १।४।४ ॥

पूर्वापरसम्बन्धेनार्थः प्रतिपादितः । केवलैतद्वाक्यविचारेऽपि न तदभीष्टं प्रकृतिरूपमव्यक्तं सिध्यतीत्याह । अत्र हि वाक्येऽव्यक्तं ज्ञेयत्वेन नोक्तं, तेषां तु प्रकृतिपुरुषान्तरं ज्ञातव्यम् । न हि सिद्धवन्मात्रनिर्देशे तेषां मते पुरुषार्थः सिध्यति । अपुरुषार्थसाधनत्वे वासम्बद्धार्थवाक्यत्वमेव स्यात् । परत्ववचनं चासङ्गतम् । श्लिष्टत्वादुभयोरिति चकारार्थः । अयं हेतुः पूर्वमुक्तोऽप्यवसरे स्मारितः । तस्मादव्यक्तं न प्रकृतिः ॥ १।४।४ ॥

---

द्वारत्वम् । एतत्सर्वं कृपाधीनमिति तस्याः परत्वं ब्रह्माभिन्नत्वं च बोध्यमित्यवधेयम् ।

प्रकृतमनुसरामः, श्रुत्यनुसार्यव्यक्तार्थमुक्त्वा स्मृत्यनुसार्यर्थमाहुः—**अथवेति** । **अस्त्विति** । "अव्यक्तोऽक्षर उच्यते" इति गीतावचनादस्त्वित्यर्थः । नन्वस्मिन्पक्षे अर्थवदिति दृष्टान्तसूत्रं कथं सङ्गच्छत इत्यत आहुः—**तस्मिन् सतीति** । अव्यक्ते स्फुरिते सति । ननु यथा पूर्वं फलं दृष्टान्तः, तथाऽत्र कोऽर्थो दृष्टान्त इत्यत आहुः—**विज्ञानस्येति** । विज्ञानस्य अक्षरविषयाधीनत्वं अक्षरब्रह्मरूपत्वं यथा, तथा अव्यक्तमपि पराधीनं तस्माद्भिन्नं पररूपमित्यर्थः । एवंचाव्यक्तस्य ब्रह्माभिन्नत्वेन ब्रह्मणि परत्वानुपपत्तिः, तस्य ब्रह्मरूपत्वेन धर्मिप्रवाहविरोधोऽपि नास्तीत्यर्थः । **एतेनेति** । त्रिसूत्र्याः एतादृशार्थकव्याख्यानेन । **अन्येऽपि** । व्याख्यातारः मायावादिनः । तेषां मते अव्यक्तपदवाच्या बीजभूता अविद्या मायेति । **निराकृता** इति । "अव्यक्तोऽक्षर उच्यते" इतिगीतावाक्यान्निराकृता इत्यर्थः । **असम्बद्धेति** । "बीजं मां सर्वभूतानामि"तिगीतावाक्यात्र बीजभूतेत्यसम्बद्धाभिलापादित्यर्थः ।

ननु बीजमित्यस्य नपुंसकलिङ्गत्वात्कथं मामित्यस्य विशेषणत्वमित्यत आहुः—**अनेकेति** । स्त्रीनपुंसकलिङ्गमायाव्यक्तादिरूढिशब्दानामित्यर्थः । "त्वं स्त्री त्वं पुमानसी"त्यादिश्रुत्या ।

सर्वरूपत्वं तस्येत्यवगन्तव्यमिति शाक्तमतं निराकुर्वन्ति—**शाक्ता** इति । **सन्मार्गात्** । वेदमार्गात् उपसंहरन्ति—**तस्मादिति** ।

**ज्ञेयत्वावचनाच्च** । सूत्रमवतारयन्ति—**पूर्वेति** । **प्रतिपादित** इति । अव्यक्तपदवाच्यः, कृपा वा अक्षरो, वाऽर्थः प्रतिपादित इत्यर्थः । ननु मास्तु पूर्वापरवाक्यविचारः, केवलेन्द्रियेभ्यः परा इत्यादिवाक्यविचार एवास्त्वित्यत आहुः—**केवलेति** । सूत्रार्थमाहुः—**अत्र हीति** । **ज्ञातव्यमिति** । गुणपुरुषान्तरज्ञानात्कैवल्यमिति साङ्ख्यसूत्रात् विध्यर्थे तव्यप्रत्यय इत्यर्थः । ननु अज्ञानदशायां मास्त्वन्तरज्ञानं तावता अव्यक्तपदस्य प्रकृतिवाचकत्वे का क्षतिरित्यत आहुः—**परत्वेति** । ब्रह्मणीति शेषः । **उभयोरिति** । अज्ञानदशायां प्रकृतिपुरुषयोरित्यर्थः । **पूर्वमिति** । अदृश्यत्वाधिकरणे ।

( प्राज्ञस्य परमात्मन एव प्रकरणाज्ज्ञेयत्वम् )

वदतीति चेन्न प्राज्ञो हि प्रकरणात् ॥ १।४।५ ॥

ननु ज्ञेयत्ववचनमसिद्धम्। पूर्वं निर्देशमात्रमुक्त्वाग्रे ज्ञेयत्ववचनात्

"अशब्दमस्पर्शमरूपमव्ययं तथारसं नित्यमगन्धवच्च यत्।
अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात्प्रमुच्यते ॥"
( कठ. २।३।१५ )

इत्युत्तरवाक्ये वदतीति चेन्न, प्रकरणस्य नियामकत्वेनैकवाक्यत्वे द्वयोः सर्वै-कवाक्यत्वेन प्राज्ञः परमात्मैव निचाय्यः। न तु द्वयोरेकवाक्यत्वं वक्तुं शक्यम्। तस्मात्प्रकरणस्य नियामकत्वे शब्दवाक्यमपि भगवत्परमेव ॥ १।४।५ ॥

( कठवल्ल्यां त्रयाणामग्निजीवब्रह्मणां कथनं प्रश्नश्चेति ब्रह्मण एव निरूपणम् )

त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ॥ १।४।६ ॥

ननु न वयं सर्वमेकं प्रकरणमिति वदामः। किन्तु-"इन्द्रियेभ्यः पराः" ( कठ. १।३।१०) इत्यारभ्य "नाचिकेतमुपाख्यानम्" ( कठ. १।३।१६ ) इत्यन्तं भिन्नं प्रकर-णम्। तत्र प्रथमं पदार्थनिर्देशः। तदनु "एष सर्वेषु भूतेषु" ( कठ. १।३।१२ ) इति पुरुषज्ञानम्। अत्राशब्दमिति तु प्रकृतिज्ञानम्। तस्मादेतत्प्रकरणे साङ्ख्यमतनि-रूपणादशब्दत्वमसिद्धमित्याशङ्क्य परिहरति—

त्रयाणामेवमुपन्यासः प्रश्नश्च। अस्मदुक्तव्याख्याने त्रिप्रकरणत्वमन्यथा चतु-ष्प्रकरणत्वं स्यात्। तृतीया चैषा वल्ली। "स त्वमग्निं स्वर्ग्यमध्येषि मृत्यो प्रब्रूहि तं श्रद्दधानाय मह्यम्" (कठ. १।१।१३) इति प्रथमः प्रश्नः। "प्र ते ब्रवीमि तदु मे नि-बोध स्वर्ग्यमग्निं नाचिकेत प्रजानन्" ( कठ. १।१।१४ ) इत्याद्युत्तरम्। "येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैके" ( कठ. १।१।२० ) इति द्वितीयः प्रश्नः। "देवैरत्रापि" (कठ.१।१।२२) इत्यत्र उत्तरम्। "अन्यत्र धर्मादन्यत्राधर्माद्" ( कठ.१।२।१४ ) इति तृतीयः प्रश्नः। "सर्वे वेदा यत्पदमामनन्ति" (कठ.१।२।१५)

---

वदतीति चेन्न प्राज्ञो हि प्रकरणात्। सौत्रं पूर्वपक्षं विशदयन्ति—नन्विति। महतः परमिति। अनेन महतः परमव्यक्तमिति स्वरूपकीर्तनरूपनिर्देशः। निचाय्येति। अनेन ज्ञेयत्ववचनम्। उत्तरवाक्येति। इन्द्रियेभ्य इत्यस्योत्तरे अशब्दमिति वाक्ये वदतीत्यर्थः। समाधानं विशदयन्ति—प्रकरणस्येति। एकवाक्यतायां प्रकरणमेव नियामकं नतु वाक्यद्वयम्। प्रकरणं च "ऋतं पिबन्तावि"त्या-रभ्य नाचिकेतोपाख्यानान्तम्। वाक्यद्वयं च "महतः परमव्यक्त", "अशब्दमस्पर्शमि"ति। तथाच द्वयोर्वा-क्ययोः सर्वप्रकारैकवाक्यतायां सत्यां जीवब्रह्मणोः रथित्वप्राप्यत्वनिरूपणं ब्रह्मणश्च ज्ञानेन मृत्युमुखप्रमो-क्षरूपं फलमप्युच्यते। एवंच महतः परं ध्रुवमित्यत्र परशब्देन नाव्यक्तरूपं प्रधानं साङ्ख्यमते प्रधान-ज्ञानान्मोक्षाभावादिति भावः। निचाय्यः ज्ञेयः।

त्रयाणामेव चैवमुपन्यासः प्रश्नश्च। सूत्रमवतारयन्ति—नन्विति। विषयवाक्ये इदं स्पष्टम्। त्रयाणामिति। अग्निजीवब्रह्मणाम्। अत्र भाष्ये विषयवाक्यपर्यालोचनया स्पष्टम्। साङ्ख्य-

इत्यादिनोत्तरम् । एवमग्निजीवब्रह्मणां प्रश्नोत्तराणि । तत्र यदि साङ्ख्यमतनिरूपणीयम् "इन्द्रियेभ्यः" (कठ. १।३।१०) इत्यादि स्यात्, तदा चतुर्थस्याप्युपन्यासः स्यात्। उपन्यासे हेतुः प्रश्नः। अत एव पश्चाद्वचनम् । तस्य प्रकृतेऽभावादसद्दुक्तरीत्या त्रीण्येव प्रकरणानीति सिद्धम्। उत्तरप्रश्नभावार्थं चकारः ॥ १।४।६ ॥

( महच्छब्दो यौगिकोऽपि ब्रह्मवाचकः )

महद्वच ॥ १।४।७ ॥

ननु तथापि मतान्तरेऽन्यत्र सङ्केतिताः कथं ब्रह्मवादे ब्रह्मपरतया योज्यन्त इत्याशङ्क्य परिहरति–महद्वत्। यथा महच्छब्दः। "महान्तं विभुमात्मानं" (कठ. १।२।२२) "वेदाहमेतं पुरुषं महान्तम्" (श्वे. ३।८) इत्यादौ महच्छब्दो ब्रह्मपरो योगेन। एवमव्यक्तशब्दोऽप्यक्षरवाचक इति। न हि साङ्ख्यमत इव वेदान्तेऽपि महच्छब्दः प्रथमकार्ये वक्तुं शक्यते। तस्मादिन्द्रियादिवाक्ये साङ्ख्यपरिकल्पितानां पदार्थानां नामापि नास्तीति सिद्धम्। चकारोऽधिकरणसम्पूर्णत्वद्योतकः ॥१।४।७॥१॥

---

मताभिलापक चतुर्थं प्रकरण नास्तीत्याहुः—तत्रेति। उपन्यास इति। उपन्यासकारणीभूतः प्रश्नश्च स्यादित्यर्थः। अत एव साङ्ख्यमताभावादेव। पश्चाद्वचनं वल्लीत्रयान्ते निरूपणम्। तस्य चतुर्थप्रकरणस्य। उत्तरप्रश्नेति। उत्तरप्रश्ननिष्ठो भावो धर्मः नित्यं तदर्थमित्यर्थः।

महद्वच। सूत्रमवतारयन्ति—नन्विति। प्रथमकार्ये। प्रकृतेः प्रथमकार्ये महत्तत्त्वे। "मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त"तिवचनात्॥ चतुर्थपादे प्रथमाधिकरणम्॥

---

१ अत्रेत्थं व्याख्यानान्तराणि—

(१) तत्र शाङ्कराः—पूर्वमीक्षत्यधिकरणे गतिसामान्यमशब्दत्वं च प्रतिज्ञाय तत्र वेदान्तानां ब्रह्मणि गतिसामान्य पादत्रयेण प्रत्यपादि। अधुना प्रधानस्याशब्दत्वमाक्षिप्य समाधीयत इत्याक्षेपसङ्गत्या चतुर्थपादोऽयमारभ्यते। पूर्वम् "सुषुप्त्युत्क्रान्त्योर्भेदेन" इत्यत्र प्रसिद्धजीवोक्तिभङ्गेनाप्रसिद्धब्रह्मोक्तिवद-प्रसिद्धप्रधानोक्तिपरमेव काठकवाक्यमस्त्विति दृष्टान्तसङ्गत्येदमधिकरणमारभ्यते। अत्र पूर्वपक्षे ब्रह्मण्येव वेदान्तानां समन्वय इति नियमाभावः फलम्, सिद्धान्ते तादृङ्नियम इति विवेकः। कठवल्लीषु श्रूयते—"महतः परमव्यक्तमव्यक्तात्पुरुषः परः" इति। तत्र किमव्यक्तशब्देन प्रधानमुच्यते, उत पूर्वप्रकृतं शरीरमिति संशये, साङ्ख्यस्मृतौ महदव्यक्तपुरुषशब्दाना तत्तत्प्रत्यये प्रसिद्धत्वात् आनुमानिकम् अनुमानगम्यं प्रधानमप्येकेषां शाखिनां प्रत्यक्षमव्यक्तशब्देन पठ्यत इति अशब्दत्वमसिद्धमिति चेदिति पूर्वः पक्षः। सिद्धान्तस्तु न प्रधानम्। कुतः शरीररूपकविन्यस्तगृहीतेः "शरीरं रथमेव तु" इत्यस्मिन्पूर्ववाक्ये शरीरस्य रथरूपकेण विन्यस्तस्य कल्पितस्याव्यक्तशब्देन गृहीतेः ग्रहणात्। कथं तच्छब्दग्राह्यं शरीरमित्यत आह—दर्शयति च। पूर्वापरवाक्यसन्दर्भः पर्यालोच्यमान औचित्येन प्रकृतं शरीरमेवाव्यक्तशब्दग्राह्यं दर्शयतीत्यर्थः। ननु स्थूलशरीरस्य व्यक्तशब्दार्हस्य कथमव्यक्तशब्दार्हत्वमित्यत आह—दर्शयतीत्यनुषङ्गः। तुशब्दः शङ्कानिरासार्थः। स्थूलशरीरारम्भक भूतसूक्ष्मं कारणमव्यक्तशब्देन दर्शयति। कुतः, तदर्हत्वात् अव्यक्तशब्दार्हत्वादित्यर्थः। "गोभिः श्रीणीत मत्सरम्" इत्यादिवत्प्रकृतिवाचकशब्देन विकारो लक्ष्यत इति भावः॥ ननु भूतसूक्ष्माव्यक्ताङ्गीकारे तस्यैव प्रधानत्वेन साङ्ख्यै-

रङ्गीकृतत्वात्तद्वादः मास इत्यत आह । न स्वतन्त्रप्रधानवादोऽस्माभिरङ्गीकृतः । कस्मात्, तदधीन-
त्वात् ईश्वराधीनत्वादव्यक्तस्य । तर्हि ईश्वरादेवास्तु जगदुत्पत्तिः, किं तेन; अत आह—अर्थवत् ।
"मायिनं तु महेश्वरम्" इति श्रुतावव्यक्तस्येश्वरसहकारित्वावगमात्प्रयोजनवदव्यक्तमित्यर्थः । अव्यक्तं
न प्रधानमित्यत्र हेत्वन्तरमाह—प्रधानपुरुषविवेकात्कैवल्यं वदद्भिः साङ्ख्यैर्ज्ञेयत्वेन प्रधानमभिधीयते ।
न चात्राव्यक्तशब्दमात्रमन्तरेण ज्ञातव्यमव्यक्तमिति वचः समस्ति । अतो ज्ञेयत्वस्य अवचनात् अन-
भिधानात् नाव्यक्तं प्रधानमित्यर्थः । ननु ज्ञेयत्वावचनमसङ्गतमित्याशङ्क्याह—"महतः परं ध्रुवं
निचाय्य" इत्युत्तरवाक्यमव्यक्तशब्दितं प्रधानं ज्ञेयत्वेन वदतीति चेत्, न; प्राज्ञो हि परमात्मा हि
निचाय्यत्वेन निर्दिष्टः, न प्रधानम् । कस्मात्, "पुरुषान्न परं किञ्चित्" इत्याद्यात्मप्रकरणादित्यर्थः ॥
इतश्च न प्रधानमत्र ग्राह्यमित्याह—त्रयाणामेव अग्निजीवपरमात्मनामेव । एवम् उत्तरवाक्यपर्यालोच-
नया वक्तव्यत्वेनोपन्यासः । तद्विषय एव प्रश्नोऽपि दृश्यते कठवल्ल्याम्—"स त्वमग्निम्' इत्याद्यग्निप्रश्नः;
'येयं प्रेते विचिकित्सा" इति जीवप्रश्नः; "अन्यत्र धर्मात्" इत्यादि परमात्मप्रश्नः । अतो नाव्यक्तं
प्रधानमित्यर्थः । श्रौतोऽव्यक्तशब्दो न साङ्ख्यसाधारणतत्त्वगोचरः, वैदिकशब्दत्वात् महच्छब्दवदित्याह—
"बुद्धेरात्मा महान्परः" इति श्रुतो महच्छब्दो यथा न साङ्ख्याभिमतद्वितीयसत्तामात्रतत्त्ववाची, आत्म-
शब्दप्रयोगात्, तद्वत्, वैदिकाव्यक्तशब्दोऽपि प्रधानवाची । अतः शरीरमेवाव्यक्तशब्दितमिति सिद्धम् ॥

(२) रामानुजीये—उक्तं परमपुरुषार्थलक्षणमोक्षसाधनतया जिज्ञास्यं जगज्जन्मादिकारणं ब्रह्म-
चिद्वस्तुनः प्रधानाच्चेतनाच्च बद्धमुक्तोभयावस्थाद्विलक्षणं निरस्तसमस्तहेयगन्धं सर्वज्ञं सर्वशक्ति सत्य-
सङ्कल्पं समस्तकल्याणगुणात्मकं सर्वान्तरात्मभूतं निरङ्कुशैश्वर्यमिति । इदानीं कापिलतन्त्रसिद्धाब्रह्मा-
त्मकप्रधानपुरुषादिप्रतिपादनमुखेन प्रधानकारणत्वप्रतिपादनच्छायानुसारीण्यपि कानिचिद्वाक्यानि
कासुचिच्छाखासु सन्तीत्याशङ्क्य ब्रह्मैककारणत्वस्थेम्ने तन्निराक्रियते । कठवल्लीष्वाम्नायते, "इन्द्रियेभ्यः
परा ह्यर्था अर्थेभ्यश्च परं मनः । मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः । महतः परमव्यक्तमव्य-
क्तात्पुरुषः परः । पुरुषान्न परं किञ्चित्सा काष्ठा सा परागतिः" इति । तत्र सन्देहः । किं कापिलतन्त्र-
सिद्धमब्रह्मात्मकं प्रधानमिहाव्यक्तशब्देनोच्यत उत नेति । किं युक्तम् ? प्रधानमिति । कुतः ?
"महतः परमव्यक्तमव्यक्तात्पुरुषः परः" इति तत्प्रक्रियाप्रत्यभिज्ञानेन तस्यैव प्रतीतेः । "पुरुषान्न परं
किञ्चित्सा काष्ठा सा परा गतिः" इति पञ्चविंशकपुरुषातिरिक्ततत्त्वनिषेधाच्च । अतोऽव्यक्तं कारण-
मिति प्राप्तम् । तदिदमुक्तमानुमानिकमप्येकेषामिति चेदिति । एकेषां शाखिनां शाखास्वानुमानिकं
प्रधानमपि कारणमाम्नायत इति चेदत्रोत्तरं नेति । नाव्यक्तशब्देनाब्रह्मात्मकं प्रधानमिहाभिधीयते ।
कुतः ? शरीररूपकविन्यस्तगृहीतेः । शरीराख्यरूपकविन्यस्तस्याव्यक्तशब्देन गृहीतेः । आत्मशरीर-
बुद्धिमनइन्द्रियविषयेषु रथिरथादिभावेन रूपितेषु रथरूपणेन विन्यस्तशरीरस्यात्राव्यक्तशब्देन ग्रहणा-
दित्यर्थः । एतदुक्तं भवति । पूर्वत्र हि "आत्मानं रथिनं विद्धि शरीरं रथमेव च । बुद्धिं तु सारथिं
विद्धि मनः प्रग्रहमेव च ॥ इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान्" इत्यादिना, "सोऽध्वनः
पारमाप्नोति तद्विष्णोः परमं पदम्" इत्यन्तेन संसाराध्वनः पारं वैष्णवं पदं प्रेप्सन्तमुपासकं रथित्वेन
तच्छरीरादीनि च रथरथाङ्गत्वेन रूपयित्वा, यस्य ते रथादयो वशे तिष्ठन्ति, स एवाध्वनः पारभूतं वैष्णवं
पदमाप्नोतीत्युक्त्वा, तेषु रथादिरूपितशरीरादिषु यानि येभ्यो वशीकार्यतया प्रधानानि तान्युच्यन्त
"इन्द्रियेभ्यः परा ह्यर्थाः" इत्यादिना । तत्र हयत्वेन रूपितेभ्यो इन्द्रियेभ्यो गोचरत्वेन रूपिता विषयाः
वशीकार्यत्वेन पराः । वश्येन्द्रियस्यापि विषयसन्निधानादिन्द्रियाणां दुर्निग्रहत्वात् । तेभ्योऽपि परं प्रग्रह-

रूपितं मनः । मनसि विषयप्रवणे विपर्यासंनिधानस्याप्यकिञ्चित्करत्वात् । तस्मादपि सारथित्वरूपिता बुद्धिः परा । अध्यवसायाभावे मनसोऽप्यकिञ्चित्करत्वात् । तस्या अपि रथित्वरूपित आत्मा कर्तृत्वेन प्राधान्यात्परः । सर्वस्य चास्यात्मेच्छायत्तत्वादात्मैव महानिति च विशेष्यते । तस्मादपि रथरूपितं शरीरं परम् । तदायत्तत्वाज्जीवात्मनः सकलपुरुषार्थसाधनप्रवृत्तीनाम् । तस्मादपि परः सर्वान्तरात्मभूतोऽन्तर्याम्यध्वनः पारभूतः परमपुरुषः । यथोक्तस्यात्मपर्यन्तस्य समस्तस्य तत्सङ्कल्पायत्तप्रवृत्तित्वात् । स ह्यन्तर्यामितयोपासनस्यापि निर्वर्तकः । "परात्तु तच्छ्रुतेः" इति हि जीवात्मनः कर्तृत्वं परमपुरुषायत्तमिति वक्ष्यते । वशीकार्योपासननिर्वृत्त्युपायकाष्ठाभूतः परमप्राप्यश्च स एव । तदिदमुच्यते । "पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः" इति । तथाचान्तर्यामिब्राह्मणे "य आत्मनि तिष्ठन्" इत्यादिभिः सर्वं साक्षात्कुर्वन्सर्वं नियमयतीत्युक्त्वा "नान्योऽतोऽस्ति द्रष्टा" इत्यादिना नियन्त्रन्तरं निषिध्यते । भगवद्गीतासु च—"अधिष्ठानं तथा कर्ता करणं च पृथग्विधम्, विविधा च पृथक् चेष्टा दैवं चैवात्र पञ्चमम्" इति दैवमत्र पुरुषोत्तम एव । "सर्वस्य चाहं हृदि सन्निविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं च" इति वचनात् । तस्य च वशीकरणं तच्छरणागतिरेव । यथाह—"ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया ॥ तमेव शरणं गच्छ सर्वभावेन भारत" इति । तदेव "आत्मानं रथिनं विद्धि" इत्यादिना रथ्यादिरूपकविन्यस्ता इन्द्रियादय "इन्द्रियेभ्यः परा ह्यर्थाः" इत्यत्र स्वशब्दैरेव प्रत्यभिज्ञायन्ते न रथरूपितं शरीरमिति परिशेषात्तदव्यक्तशब्देनोच्यत इति निश्चीयते । अतः कापिलतन्त्रप्रसिद्धस्य प्रधानस्य प्रसङ्ग एवेह नास्ति । न चात्र तन्त्रसिद्धप्रक्रियाप्रत्यभिज्ञा । "इन्द्रियेभ्यः परा ह्यर्थाः" इतीन्द्रियेभ्यो ह्यर्थानां शब्दादीनां परत्वकीर्तनात् । न हि शब्दादय इन्द्रियाणां कारणभूतास्तद्दर्शने । "अर्थेभ्यश्च परं मनः" इत्यपि न तत्तन्त्रे सङ्गतम् । अकारणत्वादेव । "तथा बुद्धेरात्मा महान्परः" इत्यप्यसङ्गतम् । बुद्धिशब्देन महत्तत्त्वाभ्युपगमात् । न हि महतो महान्पर इति सम्भवति । महत आत्मशब्देन विशेषणं च न सङ्गच्छते । अतो रूपकविन्यस्तानामेवेह ग्रहणम् । दर्शयति च तदेव—"एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते । दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः ॥ यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनि । ज्ञानमात्मनि महति नियच्छेत्तद्यच्छेच्छान्त आत्मनि" ॥ इति । अजितबाह्याभ्यन्तरकरणैरस्य परमपुरुषस्य दुर्दर्शत्वमभिधाय हयादिरूपितानामिन्द्रियाणां वशीकरणप्रकारोऽयमुच्यते "यच्छेद्वाङ्मनसी" इति । वाचं मनसि नियच्छेत्, वाक्पूर्वकाणि कर्मेन्द्रियाणि ज्ञानेन्द्रियाणि च मनसि नियच्छेदित्यर्थः । वाक्शब्दे द्वितीयायाः "सुपां सुलुगि"ति लुक् । मनसी इति सप्तम्याश्छान्दसो दीर्घः । "तद्यच्छेज्ज्ञान आत्मनि" तन्मनो बुद्धौ नियच्छेत् । ज्ञानशब्देनात्र पूर्वोक्ता बुद्धिरभिधीयते । ज्ञान आत्मनीति व्यधिकरणसप्तम्यौ । आत्मनि वर्तमाने ज्ञाने नियच्छेदित्यर्थः । ज्ञानमात्मनि महति नियच्छेत् । बुद्धिं कर्तरि महत्यात्मनि नियच्छेत् । "तद्यच्छेच्छान्त आत्मनि" । तं कर्तारं परस्मिन्ब्रह्मणि सर्वान्तर्यामिणि नियच्छेत् । व्यत्ययेन तदिति नपुंसकलिङ्गता । एवम्भूतेन रथिना वैष्णवं पदं गन्तव्यमित्यर्थः ॥ अव्यक्तशब्देन कथं व्यक्तस्य शरीरस्याभिधानं तत्राह—भूतसूक्ष्ममव्याकृतं ह्यवस्थाविशेषमापन्नं शरीरं भवति । तदव्याकृतमिह शरीरावस्थमव्यक्तशब्देनोच्यते । तदर्हत्वात् । तस्याव्याकृतस्यैवावस्थान्तरस्य विकारमापन्नस्य रथवत्पुरुषार्थसाधनप्रवृत्त्यर्हत्वात् । यदि भूतसूक्ष्ममव्याकृतमभ्युपगम्यते कापिलतन्त्रसिद्धोपादाने कः प्रद्वेषः? तत्रापि हि भूतकारणमेवाव्यक्तमित्युच्यते । तत्राह—परमकारणभूतपरमपुरुषाधीनत्वात्प्रयोजनवद्भूतसूक्ष्मम् । एतदुक्तं भवति । न हि वयमव्यक्तं तत्परिणामविशेषांश्च स्वरूपेण नाभ्युपगच्छामः । अपि

तु परमपुरुषशरीरतया तदात्मकत्वविरहेण । तदात्मकत्वेनैव हि प्रकृत्यादयः स्वप्रयोजनं साधयन्ति । अन्यथा स्वरूपस्थितिप्रवृत्तिभेदास्तेषां न स्युः । तथानभ्युपगमादेव हि तन्त्रसिद्धप्रक्रियानिरसनमिति । श्रुतिस्मृत्योर्हि जगदुत्पत्तिप्रलयवादेषु परमपुरुषमहिमवादेषु च प्रकृतिविकृतिपुरुषास्तदात्मकाः सङ्कीर्त्यन्ते । यथा पृथिव्यप्सु प्रलीयत इत्यारभ्य तन्मात्राणि भूतादौ लीयन्ते । भूतादिर्महति लीयते । महानव्यक्ते लीयते । अव्यक्तमक्षरे लीयते । अक्षरं तमसि लीयते । तमः परे देव एकीभवति । तथा "यस्य पृथिवी शरीरम् । यस्यापः शरीरम् । यस्य तेजः शरीरम् । यस्य वायुः शरीरम् । यस्याकाशः शरीरम् । यस्याहङ्कारः शरीरम् । यस्य बुद्धिः शरीरम् । यस्याव्यक्तं शरीरम् । यस्याक्षरं शरीरम् । यस्य मृत्युः शरीरम् । एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः" तथा "भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च, अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥ अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम्, जीवभूतां महाबाहो ययेदं धार्यते जगत् ॥ एतद्योनीनि भूतानि सर्वाणीत्युपधारय, अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ॥ मत्तः परतरं नान्यत्किञ्चिदस्ति धनञ्जय ॥ मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव" ॥ "व्यक्तं विष्णुस्तथाव्यक्तं पुरुषः काल एव च" ॥ इति । प्रकृतिर्या मयाऽऽख्याता व्यक्ताव्यक्तस्वरूपिणी, पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि ॥ परमात्मा च सर्वेषामाधारः पुरुषोत्तमः । विष्णुनामा स वेदेषु, वेदान्तेषु च गीयते" इति च । यदि तन्त्रसिद्धमिहाव्यक्तमविवक्षिष्यत्तदास्य ज्ञेयत्वमवक्ष्यत् । व्यक्ताव्यक्तविज्ञानान्मोक्षं वदद्भिस्तान्त्रिकैस्तेषां सर्वेषां ज्ञेयत्वाभ्युपगमात् । न चास्य ज्ञेयत्वमुच्यत इति । अतो न तन्त्रसिद्धस्येह ग्रहणम् । "अशब्दमस्पर्शमरूपमव्ययं, तथारसं नित्यमगन्धवच्च यत्, अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तन्मृत्युमुखात्प्रमुच्यते" ॥ इत्यव्यक्तस्य ज्ञेयत्वमनन्तरमेव यद्दर्शयं श्रुतिरिति चेत्तन्न प्राज्ञः परमपुरुष एव ह्यत्र श्लोके निचाय्यत्वेन प्रतिपाद्यते । "विज्ञानसारथिर्यस्तु मनः प्रग्रहवान्नरः, सोऽध्वनः पारमाप्नोति, तद्विष्णोः परमं पदम्" "एषं सर्वेषु भूतेषु गूढोत्मा न प्रकाशते । दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः" इति प्राज्ञस्यैव प्रकृतत्वात् । "अत एव पुरुषान्न परं किञ्चित्" इति न पञ्चविंशकपुरुषातिरिक्ततत्त्वनिषेधः । "तस्य च परमपुरुषस्याशब्दत्वादयो धर्मा यत्तदद्रेश्यमग्राह्यमि"त्यादिश्रुतिप्रसिद्धाः । "महतः परं ध्रुवम्" इत्यपि "बुद्धेरात्मा महान्परः" इति पूर्वप्रकृताज्जीवात्मनः परत्वमेवोच्यते । अस्मिन्प्रकरणे ह्युपायोपेयोपेतॄणां त्रयाणामेव चैवमुपन्यासो ज्ञेयत्वेनोपन्यासस्तद्विषयश्च प्रश्नो दृश्यते नान्यस्याव्यक्तादेः । तथा हि नचिकेता नाम मुमुक्षुः सन्मृत्युप्रदत्ते वरत्रये प्रथमेन वरेणात्मनः पुरुषार्थयोग्यतापादनीमात्मनि पितुः सुमनस्कतां प्रतिलभ्य द्वितीयेन वरेण मोक्षसाधनभूतां नचिकेता अग्निविद्यां पप्रे । स त्वमग्निं स्वर्ग्यमध्येषि मृत्यो प्रब्रूहि तं श्रद्दधानाय मह्यम् । स्वर्गलोका अमृतत्वं भजन्त एतद्द्वितीयेन वृणे वरेण ॥ इति स्वर्गशब्देनात्र परमपुरुषार्थलक्षणमोक्षोऽभिधीयते । अमृतत्वं भजन्त इति तत्रस्थस्य जननमरणाभावश्रवणात् । उत्तरत्र क्षयिफलकर्मनिन्दादर्शनाच्च । "त्रिणाचिकेतस्त्रिभिरेत्य सन्धिं त्रिकर्मकृत्तरति जन्ममृत्यू" इति च प्रतिवचनात् तृतीयेन वरेण मोक्षस्वरूपप्रश्नद्वारेणोपेयस्वरूपमुपेतृस्वरूपमुपायभूतानुष्ठितकर्मानुगृहीतोपासनस्वरूपं च पृष्टम् । "येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैके, एतद्विद्यामनुशिष्टस्त्वयाऽहं वराणामेष वरस्तृतीयः" इत्येवम्मोक्षे पृष्टे तदुपदेशयोग्यतां परीक्ष्योपदिदेश । "तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम् । अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति" इति तदेवं सामान्येनोपदिष्टे नचिकेताः प्रीतः सन्देवं मत्वेत्युपास्यतया निर्दिष्टस्य प्राप्यभूतस्य देवस्याध्यात्मयोगाधि-

गमेनेति वेदितव्यतया निर्दिष्टस्य प्राप्तुः प्रत्यगात्मनश्च मत्वा धीरो हर्षशोकौ जहातीति निर्दिष्टस्य ब्रह्मोपासनस्य च स्वरूपविशोधनाय पुनः पप्रच्छ। "अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात्। अन्यत्र भूताद्भव्याच्च यत्तत्पश्यसि तद्वद" इति। एवं सकलेतरातीतानागतवर्तमानसाध्यसाधनसाधकविलक्षणे त्रये क्रमेण पृष्टे प्रथमं प्रणवं प्रशस्य तद्वाच्यं प्राप्यस्वरूपं तदन्तर्गतं च प्राप्तृस्वरूपं वाचकस्वरूपं चोपायं पुनरपि सामान्येन ख्यापयन्प्रणवं तावदुपदिदेश। "सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति। यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं सङ्ग्रहेण ब्रवीम्योमित्येतत्" इति। एवमुपदिश्य पुनरपि प्रणवं प्रशस्य प्रथमं तावत्प्राप्तुः प्रत्यगात्मनः स्वरूपमाह "न जायते म्रियते वा विपश्चित्" इत्यादिना। "प्राप्यस्य परस्य ब्रह्मणो विष्णोः स्वरूपमणोरणीयान्" इत्यादिना "क इत्था वेद यत्र सः" इत्यन्तेनोपदिश्यमध्ये "नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन" इत्यादिनोपायभूतस्योपासनस्य भक्तिरूपतामप्याह "ऋतं पिबन्तौ" इति "चोपास्यस्योपासकेन सहावस्थानात्सूपास्यतामुक्त्वा" "आत्मानं रथिनं विद्धि" इत्यादिना "दुर्गं पथस्तत्कवयो वदन्ति" इत्यन्तेनोपासनप्रकारमुपासीनस्य च वैष्णवपरमपदप्राप्तिमभिधाय"अशब्दमस्पर्शम्" इत्यादिनोपसंहृतम्। अतस्त्रयाणामेवात्र ज्ञेयत्वेनोपन्यासः प्रश्नश्च। तस्मान्नेह तान्त्रिकस्याव्यक्तस्य ग्रहणम्॥ यथा "बुद्धेरात्मा महान्परः" इत्यत्रात्मशब्देन सामानाधिकरण्यात्र तन्त्रसिद्धं महत्तत्वं गृह्यत एवमव्यक्तमप्यात्मनः परत्वेनाभिधानान्न कापिलतन्त्रसिद्धं गृह्यत इति स्थितम्॥

( ३ ) माध्वे—श्रुतिलिङ्गादिभिरन्यत्रैव प्रसिद्धानामपि शब्दानां सामस्त्येन विशेषहेतुभिर्विष्णावेव प्रवृत्तिं दर्शयत्यस्मिन्पादे। तत्तु समन्वयादिति सर्वशब्दानां परमे समन्वय उक्तः तन्न युज्यते। "अव्यक्तात् पुरुषः परः" इति साङ्ख्यानुमानकल्पितं प्रधानमप्येकेषां शाखिनामुच्यते इति चेत्, न, तस्यैव पारतन्त्र्याच्छरीररूपकेऽव्यक्ते विन्यस्तस्य परमात्मन एवाव्यक्तशब्देन गृहीतेः। कप्रत्ययः कुत्सने। परमात्मन एवाव्यक्तशब्दस्तत्तन्त्रत्वेन तच्छरीररूपत्वादितरस्याव्यक्तः शब्दः तुच्छेनाभ्यपिहितं तदासीदिति दर्शयति च। "अव्यक्तमचलं शान्तं निष्कलं निष्क्रियं परम्। यो वेद हरिमात्मानं स भयादनुमुच्यत" इति पिप्पलादादिशाखायाम्। "अक्षरं ब्रह्म परममि"त्युक्त्वा "अव्यक्तोऽक्षर इत्युक्त" इति वचनाच्च। सूक्ष्ममेवाव्यक्तशब्देनोच्यते यद् व्यक्ततामर्हति। "यत्तत् सूक्ष्मं परमं वेदितव्यं नित्यं पदं वैष्णवं ह्यामनन्ति। यत् तल्लोकान् विदुर्लोकं सारं विदन्त्येतत् कवयो योगनिष्ठा" इति पिप्पादशाखायाम्। मुख्ये च विद्यमानेनामुख्यं युक्तम्। तदधीनत्वाच्चाव्यक्तत्वादीनां तस्यैवाव्यक्तत्वपरावरत्वादिकमर्थवत्। "यदधीनो गुणो यस्य तद्गुणो सोऽभिधीयते। यथा जीवः परात्मेति यथा राजा जयीत्यपि" इति स्कान्दे। अन्यस्य न वाच्यत्वं युज्यते। "महतः परं ध्रुवं निचाय्य तं मृत्युमुखात् प्रमुच्यते" इति ज्ञेयत्वं वदतीति चेत्, न, प्राज्ञः परमात्मा हि तत्रोच्यते। "अणोरणीयान्महतो महीयानि"ति तस्यैव महतो महत्त्वम्। सर्वस्मात् परस्य महतोऽपि परत्वं युज्यते॥ "सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्" इति तस्य ह्येतत् प्रकरणम्। त्रयाणामेव पितृसौमनस्य स्वर्ग्याग्निपरमात्मनां प्रश्न उपन्यासश्च। "अविज्ञानप्रार्थनश्च प्रश्न इत्यभिधीयते" इति वचनान्न विरोधः। यथा हिमवच्छब्दो महत्तत्त्वे प्रसिद्धोऽपि परमात्मन एव मुख्यः। एवमितरेऽपि॥

(४) निम्बार्कः—ननु "महतः परमव्यक्तमव्यक्तात्पुरुषः परः" इत्यत्र कठशाखायामानुमानिकं प्रधानमपि शब्दवदुपलभ्यते इति चेन्न "आत्मानं रथिनं विद्धि शरीरं रथमेव चे"त्यत्र शरीरस्य रथरूपत्वविन्यस्तस्याव्यक्तशब्देन ग्रहणात्। इन्द्रियादीनां वशीकरणप्रकारं प्रतिपादयन्, रूपकपरि-

कल्पितं ग्रहणमेव दर्शयति च वाक्यशेषे "यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेज्ज्ञानमात्मनि । ज्ञानमात्मनि महति तद्यच्छेच्छान्त आत्मनी"ति । अव्यक्तशब्दः सूक्ष्मवचनश्चेत्तदर्थभूतं शरीरमपि सूक्ष्मस्यैव स्थूलावस्थापन्नत्वात् । औपनिषदे प्रधानं परमकारणाधीनत्वादर्थवदानर्थक्यं पराभिमतस्य तस्येति भेदः । नाव्यक्तशब्दस्तान्त्रिकप्रधानवचनः ज्ञेयत्वावचनाच्च । "अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात्प्रमुच्यते" इतिश्रुतिः प्रधानस्य ज्ञेयत्वं वदतीति चेन्न, ज्ञेयत्वेन प्राज्ञः परमात्मा निर्दिष्टस्तत्प्रकरणात् । अस्यामुपनिषद्युपायोपेयोपगन्तॄणां त्रयाणामुपन्यासः प्रश्नश्च पूर्वापरवाक्यार्थविचारेण लभ्यते, आनुमानिकतत्त्वनिरूपणस्यात्रावकाशो नास्ति । साङ्ख्यैर्महच्छब्दो बुद्ध्याख्यद्वितीये तत्त्वे प्रयुक्तोऽपि ततोऽन्यत्रापि "वेदाहमेतं पुरुषं महान्त"मित्यादिवेदवचनेन यथा दृश्यते तथाऽव्यक्तशब्दः शरीरपरोऽस्तु ॥

(५) भैक्षवे—तदेवं पादत्रयेण जगज्जन्मादिकारणस्य ब्रह्मणः शास्त्रयोनित्वं प्रतिपादितं ब्रह्मपरत्वेन सन्दिह्यमानानां वाक्यानां ब्रह्मपरत्वावधारणेन तत्रतत्रोक्ता ब्रह्मगुणाश्चानन्दमयत्वान्तर्यामित्वादय उपासनोपयोगिनोऽवधृताः, तथा तत्तु समन्वयादित्यनेनोक्तो जगद्ब्रह्मणोरन्योन्यसमन्वयश्चाकाशस्तल्लिङ्गादित्याद्यधिकरणैः प्रसाधितः प्रसङ्गाच्च ब्रह्मविद्याधिकार्य्यादयोऽपि विचारिताः ॥ इदानीं ब्रह्मणो जगज्जन्मादिकारणत्वे श्रुतिविरोधस्य परिहारमुखेन जगज्जन्मादिकारणत्वनिर्वाहिकां ब्रह्मणः शक्तिं प्रधानादिमवधारयति चतुर्थपादेन । ननु ब्रह्मणो जगत्कारणत्वादिकं कथं श्रुत्यर्थः स्यात् यत एकेषां शाखिनां श्वेताश्वतरादीनामानुमानिकं प्रधानमपि जगज्जन्मादिकारणत्वेन श्रूयते "अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाम्" इत्यादिषु । नन्वेवमुभयोरेव कपालद्वयवद्विश्वोपादानत्वमस्त्विति, मैवम्, स्वातन्त्र्येणोभयोः कारणत्वे सति ब्रह्मणो विकारित्वापत्तेरिति पूर्वपक्षदलार्थः । तमिमं पूर्वपक्षं शक्तिशक्तिमद्भावेनोभयोरेव कारणत्वेन समाधत्ते,—न शरीररूपकविन्यस्तगृहीतेरिति । वक्ष्यमाणवाक्ये शरीरेण रूपकेण दृष्टान्तेन विन्यस्तमुपन्यस्तं यन्मायाख्यं प्रधानं तस्यैवाजावाक्ये ग्रहणात्, न तु स्वतन्त्रकारणस्य कस्यचिदित्यर्थः । एतदुक्तं भवति, नाजावाक्ये स्वातन्त्र्येण प्रधानस्य कारणत्वं प्रोक्तं, येन विरोधः स्यात्, किन्तु, यथा अजाख्यछागीयशरीरस्य तज्जीवशक्तिविधया सजातीयबहुप्रजाकारणत्वं तथैव प्रधानस्यापि ब्रह्मशक्तिविधया कारणत्वमुक्तं वक्ष्यमाणदृष्टान्तानुसारात्, रूपकरूप्ययोरसिद्धप्यंशे साम्यस्य विवक्षितत्वात्, तथा चाजादिवाक्यैः शरीरवच्छक्तिविधया प्रधानादीनामुपादानत्वादिकं बोध्यते तद्विना निर्विकारस्य ब्रह्मण उपादानत्वानुपपत्तेः ब्रह्मवाक्यैश्च शरीरिवच्छक्तिमद्विधया शक्तिद्वारा ब्रह्मणोऽधिष्ठानकारणत्वं प्रतिपाद्यत इति श्रुतीनामविरोध इति । ननु भवेदेवं यद्यजानिरूपितप्रधानशक्तिकत्वेनात्र ब्रह्मोक्तं स्यात्, न त्वेवमजाशरीरित्वेन ब्रह्मणः प्रतिपाद्यत्वे अन्यभोगत्यहेयत्ववचनानौचित्यात् । न च "अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्य" इत्युत्तरार्द्धे अजाधिष्ठातृ ब्रह्म कथितमिति वाच्यम्, उत्तरार्धे ज्ञानजीवयोरेव प्रतिपादनात् । न तु ब्रह्मणः "जहात्येनां भुक्तभोगामजोऽन्य" इति भोगत्यागस्य जीवलिङ्गत्वात् । तत्कथमजाया ब्रह्मशरीरदृष्टान्तताऽवधृतेत्याशङ्कायामाह दर्शयति चेति । चो हेतौ ह्यर्थो ब्रह्मशरीरतुल्यत्वं प्रधानस्य श्रुतिः "यस्तन्तुनाभ इव तन्तुभिः प्रधानजैः स्वभावतः देव एकः समावृणोति स नो दधातु ब्रह्माव्ययम् ।" "अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया सन्निरुद्धः । एतज्ज्ञेयं नित्यमेवात्मसंस्थं नातः परं वेदितव्यं हि किञ्चित् । भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्म चैतत् ।" "मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरमि"त्यादिवाक्यशेषैरित्यर्थः । अत्र तन्तुनाभदृष्टान्तादिभिस्तन्तुनाभशरीर-

तुल्यत्वं प्रधानस्य लब्धमिति । न चैवं प्रधानस्यानुमानिकत्वं कथमुच्यते श्रुत्यापि तत्कारणता सिद्धे-रिति वाच्यम्, स्मृतिषु प्राधान्येन विशिष्य च प्रतिपादनतः स्मार्तानुमानिकादिवचनाद्ब्रह्मण औप-निषदत्वं वचनवदिति । इदानीं तस्य प्रधानाख्यशक्तेः स्वरूपं दर्शयन्नपि शरीरवदेव परमात्मनः प्रधानं न स्वतन्त्रमित्याह । तदानुमानिकं प्रधानं जडप्रपञ्चस्य सूक्ष्मं तु सूक्ष्मतामात्रविशेषवज्जडमे-वाभ्युपगन्तव्यम्, कुतः ? अर्हत्वात्। योग्यत्वात्कार्य्यसरूपस्यैव करणस्यौचित्यादित्यर्थः। सृजमानां सरूपा इतिश्रुतेश्चेति भावः। तथा च स्थूलप्रपञ्चस्य देहादेश्चेतनाधिष्ठानेनैव कार्य्यकारित्वदर्शनात्, कारणस्य सूक्ष्मस्यापि जडत्वाद्यविशेषेण चेतनाधिष्ठितत्वमनुमीयते न स्वातन्त्र्यं परेच्छाननुविधायित्वरूपमित्यर्थः। अथ वेदं सूत्रमेवं व्याख्येयम्, ननु प्रधानाङ्गीकारे प्रलयकालीनस्य ब्रह्मचिन्मात्राद्वैतस्य क्षतिरित्या-शङ्कामपाकरोति सूक्ष्मं तु तदर्हत्वात्। तुशब्दः शङ्काभिनिवृत्त्यर्थः। तत्प्रधानसमुद्रविलीनसैन्धववत्सूक्ष्ममर्ह-त्वात् । अप्रत्यक्षत्वाद्युपपत्तये तथौचित्यादित्यर्थः। तथा च विलीनावस्थसैन्धवेन समुद्रस्येव साम्या-वस्थारूपेण प्रधानादिनाऽपि ब्रह्मणो न द्वैतं किन्त्वैक्यमेव समुद्रसैन्धवयोरिवेति भावः। व्युत्पादितं चेदं विस्तरतस्तत्तु समन्वयादित्यधिकरणे, विस्तारयिष्यते च तदनन्यत्वाधिकरण इति । ननु प्रलयाद्वैतानु-रोधेन प्रधानापलाप एव कथं न क्रियते मुख्याद्वैतपरिग्रहस्यैवौचित्यादित्याशङ्कायामाह—सृष्ट्यादीनां प्रधानाधीनत्वात् प्रधानमर्थवत् प्रयोजनवदित्यर्थः । न हि शक्तिं विना केवलादेकस्मादसङ्गचिन्मात्रा-द्ब्रह्मणोऽविकारिणो वैचित्र्यादसङ्ख्यविश्वनिर्माणं कादाचित्कं सम्भवति। अतः प्रकृतिपुरुषादिरूपा ब्रह्म-शक्तिरिष्टेति । अत एव विष्णुपुराणे "निर्गुणस्याप्रमेयस्य शुद्धस्याप्यमलात्मनः । कथं सर्गादिकर्तृत्वं ब्रह्मणो ह्युपपद्यते" इत्याशङ्कायां प्रत्युत्तरम् "शक्तयः सर्वभावानामचिन्त्यज्ञानगोचराः । यतोऽतो ब्रह्मणस्तास्तु सर्गाद्या भावशक्तयः" इति । अस्यायमर्थः, यतः सर्वभावानां शक्तयः सर्वपदार्थेषु प्रकृतिपुरुषादिषु स्वस्वकार्यजननसामर्थ्यानि अचिन्त्यानि योगिप्रत्यक्षाणि च यथायोग्यं तिष्ठन्ति अतस्ताः पूर्वोक्ताः सर्गाद्याः ब्रह्मणो भावशक्तयः ब्रह्मोपकरणभूताखिलपदार्थानां सामर्थ्यानि । न तु केवलब्रह्मण इति । ननु ब्रह्माद्वैतवाक्यानामाञ्जस्येनोपपत्त्यर्थं भवतु प्रपञ्चो विवर्तस्त्वविद्यानिमित्त-ताभ्युपगमेनाविद्यया द्वैतहानितादवस्थ्यात् । न चाविद्यापि प्रलये नासीत्किं तु केवलादेव ब्रह्मणो विवर्त इत्येवाभ्युपगन्तव्यमिति वाच्यम्, एवं चेन्मुक्तस्यापि पुनर्विवर्तरूपसंसारप्रसङ्गात् । चिन्मात्रस्य ब्रह्मणो नित्यत्वात् । अथ बन्धमोक्षादिकमपि कल्पितमेव परमार्थतस्तदपि नास्तीत्येव श्रुतिमहावाक्यार्थो यथा कथञ्चिद्यदि व्यवस्थाप्यते तदा बन्धमोक्षादिकं किमपि नास्तीति वेदान्तैरुच्यत इत्यापातज्ञाना-देव मोक्षार्थं ब्रह्मसाक्षात्कारायाज्ञानां श्रवणादिकं याज्ञवल्क्यादीनां विद्वत्संन्यासादिकं च न स्यात्, फलनिश्चयाभावात् । बहुवित्तव्ययायाससाध्ये हि कर्मणि फलनिश्चयादेव लोकानां प्रवृत्तिरुत्पद्यते । न च भवन्मते महति संन्यासादिकर्मणि मोक्षाख्यफलनिश्चयः सम्भवति, मोक्षावधारणं मोक्षशास्त्राद्वेदान्तादेव भवति नेतरस्मात्, स च वेदान्तो न मोक्षादिपरो भवतोच्यते मोक्षाद्यभावपरत्वाभ्युपगमादिति । ननु प्रलयेऽप्यविद्यां व्यावहारिकीमभ्युपगम्यतया व्यावहारिको बन्धमोक्षादिरभ्युपेयो न च तेन पारमार्थिका-द्वैतक्षतिरिति चेत्प्रधानेऽपीदं तुल्यम्। प्रधानेऽर्थक्रियाकारित्वरूपव्यावहारिकसत्त्वस्यैवास्माकमिष्टत्वात्। ननु नित्यस्य प्रधानस्य कथमपारमार्थिकत्वं स्यात् ? उच्यते, अपारमार्थिकत्वं यद्यनित्यत्वं, यदि वा स्वतः सिद्धत्वाभावो, यदि वा सर्वकालेष्वभावो, सदसिव्यक्त्वभावो यदि वा, यदि वाऽन्यत् तत्सर्वं प्रधान-तत्कार्य्ययोर्नित्यानित्ययोः समानं प्रधानस्य परिणामिनित्यत्वेऽपि घटस्य नित्यत्वाभावात्, स्वतः-सिद्धत्वाभावादीनां च सर्वाचेतनसाधारणत्वात् प्रधानादीनां रूपान्तरेण मध्येऽपि रूपान्तरैरतीताना-

गतेः सदैवाभावाच्च, न चात्यन्तविनाशित्वमेव व्यावहारिकसत्त्वमिति वाच्यम्, अत्यन्तविशेषणवैय-
र्थ्यात्, पञ्चसूत्र्यां प्रदर्शितवाक्यैः परिणामित्वस्यैव व्यावहारिकसत्तात्वेन लक्षितत्वाच्चेति व्यावहारिक-
सत्त्वाभ्युपगमेन शशशृङ्गादिवदत्यन्तासत्त्वं चानित्येष्वपि भवता त्यक्तमिति, यथा च प्रधाननित्यत्वेऽपि
ब्रह्मचिन्मात्राद्वैतं, तथा व्याख्यातं तत्तु समन्वयादित्यत्रेति त्यज्यतां सकलश्रुतिस्मृत्यनुसारिषु प्रधानवा-
दिषु प्रद्वेषेण सूत्राणां कष्टव्याख्यानम्, त्यज्यतां च "प्रधानक्षेत्रज्ञपतिर्गुणेशः क्षरं प्रधानममृताक्षरं हरः"
"क्षरात्मानावीशते देव एकः" "मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरमि"त्यादिश्रुतिषु "कार्य्यकारण-
कर्तृत्वे हेतुः प्रकृतिरुच्यत" इत्यादिसकलस्मृतिषु च प्रधानप्रकृत्यादिशब्देषु रुच्यर्थं चेष्टोपलक्षणादिभिः
शिष्यव्यामोहनमिति दिक् । श्रुतीनां शरीरवच्छक्तिविधया अजास्पृष्टत्वपरत्वे हेत्वन्तरमाह । च शब्दो
दर्शयति । चेत्युक्तहेतुसमुच्चयार्थः । अस्मिन्प्रकरणे प्रधानं ज्ञेयत्वेनोपास्यत्वेन च प्रोक्तम् । न चाकार्य्या-
ज्ञेयानुपास्यस्य प्रतिपादनं श्रुतिषु स्वपरं भवति "आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानामिति"
न्यायात् । किन्त्वन्यशेषमेव "तद्भूतार्थानां क्रियार्थेन समाम्नाय" इति न्यायात् । तथा च ज्ञेयत्वेनोक्तस्य
परमात्मनो जगत्कारणत्वेन प्रकृतस्य तदुपपत्तये प्रधानं कारणत्वशरीरवच्छक्तिविधयैवोच्यते, न स्वात-
न्त्र्येणेत्यवधार्य्यत इत्यर्थः । ननु "एतत् ज्ञेयं नित्यमेवात्मसंस्थं नातः परं वेदितव्यं हि किञ्चित् । भोक्ता
भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत्" इत्यनेनास्मिन्प्रकरणे प्रधानस्य भोग्यशब्द-
वाच्यस्य ज्ञेयत्वं श्रुतिर्वदतीत्याशङ्क्य समाधत्ते यदुक्तं तत्र प्राज्ञ ईश्वर एव ह्यत्र ज्ञेयतयोपदिश्य, तं
तस्यैतच्छब्देन भोक्तादित्रयं परामृश्य, तस्य ज्ञेयत्वमुच्यते, कुतः ? प्रकरणाद्ब्रह्मणः । प्रकरणित्वेन तस्यैवैत-
च्छब्देन परामर्शस्य युक्तत्वादित्यर्थः । भोक्तादित्रयं तु मत्वेत्यनेनैवान्वेति भोक्तेत्यस्य विभक्तिव्यत्ययेन
भोक्तारमित्यर्थः । प्रेरिता देवतावर्गः । किञ्चैवं सति ब्रह्मवत्त्रयाणां भोक्तृभोग्यप्रेरकदेवानामपि वाक्यो-
पक्रमे प्रश्नः प्रतिवचनाख्य उपन्यासश्च प्रसज्येयातां न त्वेवं दृश्यते "किं कारणं ब्रह्म कुतः स्म जाता"
इत्यादिना केवलब्रह्मण एव प्रश्नदर्शनात् "यः कारणानि निखिलानि तानि कालात्मयुक्तान्यधितिष्ठत्येक"
इत्यादिना केवलब्रह्मण एवोपन्यासदर्शनाच्चेत्यर्थः । यच्च "ते ध्यानयोगानुगता अपश्यन्देवात्मशक्तिं
स्वगुणैर्निगूढामि"तिपूर्वार्द्धश्लोकेनादौ शक्तिदर्शनमुक्तं तच्छक्तिमतोऽधिष्ठातृत्वदर्शनोपयोगितयेति
मन्तव्यं स्वतन्त्रज्ञेयत्वे शक्तित्ववचनानुपपत्तेरिति । दृष्टान्ताच्च प्रधानं न स्वतन्त्रं, किन्तु शरीररूपक-
विन्यस्तमेवेत्याह । यथा महत्तत्त्वमन्तःकरणविशेषः, आत्मनः चेष्टाश्रयलक्षणशरीरमेव सचक्षुरादिभिः
संयुज्य स्वकार्यजनने क्षमं भवति, न स्वतन्त्रमिति सर्वैरभ्युपगम्यते, तथैव प्रधानमप्यचेतनत्वाविशेषा-
दुचितमित्यर्थः । ननु महत्तत्त्वे किं प्रमाणमिति चेत् उच्यते "इन्द्रियेभ्यः परा ह्यर्था ह्यर्थेभ्यश्च परं मनः ।
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः । महतः परमव्यक्तमव्यक्तात्पुरुषः परः" इत्याद्याः श्रुतयः
स्मृत्यनुमितेश्च । न चात्र वाक्ये आत्मशब्दश्रवणवन्महच्छब्दो जीवार्थक एवास्त्विति वाच्यम्, अचे-
तनस्यात्मपरत्वानुपपत्तेः । पुरुषशब्देनैवात्मनोऽग्रे निर्देक्ष्यमाणत्वाच्च । तथा अचेतनवर्गमध्ये पाठेन मह-
तोऽप्यचेतनत्वौचित्यात् घटस्यात्मा पिण्ड इतिवत्कारणेऽप्यात्मशब्दोपपत्तेः, महच्छब्दस्य स्मृतिषु
महत्तत्त्वे रूढत्वाच्च स्मृतिषु व्यवहारस्यापि श्रुतिमूलकतया तासु स्वतन्त्रसङ्केतकल्पनाया बाधकं विना-
ऽन्याय्यत्वाच्च । अस्यां च श्रुतावचान्तरभेदेन बुद्धिमहतोर्भेद उक्तो महच्छब्दस्य चित्तवाचितयेति न
स्वस्य स्वपरत्वानुपपत्तिः । तथा चोक्तं "यदाहुर्वासुदेवाख्यं चित्तं तन्महदात्मकमि"ति । प्रायशश्च स्मृतिषु
चित्तबुद्धी एकीकृत्य बुद्धिशब्देन महत्तत्त्वमुच्यते । ननु "अस्य महतो भूतस्य निश्वसितमेतदि"त्यादि-
बहुश्रुतिषु महच्छब्द आत्मन्यप्युच्यत इति चेत्, सत्यं. महत्तत्त्वोपाधिनैव चात्मन्यपि मानुषादिशब्द-

वन्महच्छब्दप्रयोगस्यौचित्यात्, आत्मनः स्वतो विशुद्धचिन्मात्रत्वेनाविशिष्टतया महत्त्वाल्पत्वादिविभागायोगादिति ।

(६) भास्करीये—आनुमानिकमनुमाने भवं प्रधानमप्येकेषां शाखिनां शब्दवदुपलभ्यते । अपिशब्दः सम्भावनायाम् । कठवल्लीषु पठ्यते "महतः परमव्यक्तमव्यक्तात्पुरुषः पर" इति । पुरुषो भोक्ताव्यक्तं प्रधानमिति । तत्र क्रमः साङ्ख्योक्तः प्रत्यभिज्ञायत इति चेन्न, शरीरस्य रथरूपकविन्यस्तस्याव्यक्तशब्देन ग्रहणात् । केनचित् सादृश्येन वस्त्वन्तरे वस्त्वन्तरकल्पनं रूपकम् । यथा भारतामृतं चक्रवाकस्तनीति । "आत्मानं रथिनं विद्धि शरीरं रथमेव तु । बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च । इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान् । आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः ।" रथक्लृप्तिं दर्शयित्वेन्द्रियादिभ्यः परत्वेन "सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदमि"ति दर्शयति । कथम् ? "इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः । मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः । महतः परमव्यक्तमव्यक्तात् पुरुषः परः । पुरुषान्न परं किञ्चित् सा काष्ठा सा परागतिः" इन्द्रियेभ्यो ह्यर्थानां परत्वमिति ग्रहणादुत्कृष्टवचनोऽत्र परशब्दः । पूर्वस्मिन् ग्रन्थे शरीरस्य सन्निधानादव्यक्तं शरीरं प्रतीयते पारिशेष्याच्चेति न शब्दात् सर्वस्मात् परमपदस्य परत्वमिह विवक्षितं दुर्विज्ञेयत्वात्तथा च "एष सर्वेषु भूतेषु गूढात्मा न प्रकाशते । दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः" वैष्णवस्य पदस्य दुर्दर्शत्वमुक्त्वा तत्प्रतीत्युपायं दर्शयति "यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेत् ज्ञान आत्मनि । ज्ञानमात्मनि महति नियच्छेत्तद्यच्छेच्छान्त आत्मनि" । वाचं समस्तवाह्येन्द्रियव्यापारं मनसि संयच्छेदित्यर्थः । तच्च मनो ज्ञानात्मनि बुद्धिस्वरूपे नियमयेत् । मनो नाम सङ्कल्पकामस्मरणादिहेतुः । बुद्धिः पुनरध्यवसायात्मिका । तस्याश्च धर्मोऽहङ्कारः । ते बुद्धिमनसी द्वे अन्तःकरणे वेदान्तवादिन इच्छन्ति । तां बुद्धिं महत्यात्मनि क्षेत्रज्ञे भोक्तरि स्थापयेत् । तं च शान्ते प्रपञ्चातीते सर्वव्यापिन्यमृतरसे संसृजेत् स एवाहमस्मीति भावयेत् । सनकादौ च योगशास्त्रेऽयमेव योगः प्रदर्श्यते । ध्यानं धारणा समाधिरिति । ध्यानमभिप्रेतार्थप्राप्त्यर्थं चित्तैकाग्रतोच्यते । प्राणेन्द्रियबुद्धिमनसां युगपत्सन्धानं धारणा । श्रद्धाप्रयत्नाभ्यां नित्यचिन्ता समाधिः । उक्तं च सनकेन "न योगादुत्तमं ह्यस्ति योग एव परा गतिः । देवा महर्षयश्चैव योगेन श्रेष्ठतां गताः ॥ क्लिश्यमाणोऽपि कुर्वीत निग्रहं मनसः सदा । न निर्वेदं मुनिर्गच्छेत् कुर्यादेवात्मनो हितम् ॥" कथं पुनः शरीरमव्यक्तशब्दार्हमित्याशङ्कानिवृत्त्यर्थस्तुशब्दः । शरीरकारणं भूतसूक्ष्ममव्यक्तीकृतमीश्वरशक्तिराद्यं तत्त्वमचेतनं यतः सर्वोऽयमाकाशादिरचेतनप्रपञ्चो जायते । कारणं मुक्त्वा कार्यं स्थूलमपि शरीरमुक्तम् । कार्यकारणयोरनन्यत्वादित्यभिप्रायः । किं पुनः कारणं स्थूलशरीरे प्रकृतभूतसूक्ष्मं व्यपदिश्यते । तदर्हत्वादव्यक्तशब्दाभावात् ॥ यदव्याकृतमभ्युपगम्यते तदेव प्रधानमित्याशङ्क्याह—तदधीनत्वादीश्वराधीनत्वादव्याकृतावस्थायाः । त्वदभिप्रेतं नित्यमचेतनं प्रधानं न सिध्यति तत्त्वाव्याकृतमर्थवदभ्युपगम्यते प्रयोजनवत् । न हि तेन विना प्रपञ्चोत्पत्तिः सम्भवतीति केचिदेवं व्याचक्षते । अपरा व्याख्या, सूक्ष्मं लिङ्गशरीरं स्थूलशरीरापेक्षया सूक्ष्ममिति व्यपदिश्यते । कस्मात् तदर्हत्वादव्यक्तशब्दस्य । पञ्चानां भूतानां प्रतिपुरुषं सूक्ष्मावस्था काचित् कर्मकारिताऽस्ति । तदन्तरप्रतिपत्तौ वहन्तीत्यत्र प्रसाध्यते । तस्मिन् शरीरे पञ्च वायव एकादशेन्द्रियशक्तयो बुद्धिश्चेति तदिदं लिङ्गशरीरं पुर्यष्टकमिति गीयते । तेन बद्धो बद्ध उच्यते । तेन च मुक्तो मुक्त इत्युच्यते । तदेतदाह—तदधीनत्वादर्थवत् । सूक्ष्मशरीराधीनत्वाद्बन्धमोक्षयोरर्थवदिति दृष्टान्तवचनमिन्द्रियेभ्यः परत्वं यथार्थानां तथा महतो जीवादव्यक्तस्य

परत्वं शरीरं रथमित्यत्रापि लिङ्गशरीरमुपात्तं तेन विना संसरणं रोगयोरभावादतः प्राकृतमेव सूक्ष्म-
शरीरमित्युपपन्नं द्वितीयं व्याख्यानम्। लिङ्गशरीररहितः परमात्मेति ततः परत्वं तस्योपपद्यत इति ॥
ज्ञेयत्वेन साङ्ख्यैः प्रधानं स्मर्यते गुणपुरुषविवेकज्ञानान्मुक्तिरिति । इह तदभावान्न प्रधानमव्यक्तम् ॥
ज्ञेयत्वं वदति श्रुतिरिति चेत् "अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत्। अनाद्यनन्तं
महतः परं ध्रुवं निचाय्य तं मृत्युमुखात् प्रमुच्यते ॥ न प्राज्ञो हि तस्य हीदं प्रकरणं पुरुषान्न परं
किञ्चिदि"त्युपक्रमात् न च प्रधानस्य प्रक्रियाऽस्ति कथं पुनरीश्वरविषयं ज्ञानं जीवस्य मुक्तिकारणम्, न हि
गोविपर्ययेण ज्ञानेन तैमिरिकस्य द्विचन्द्रज्ञानं निवर्तते। वचनसामर्थ्याद्भवतीति चेत्, न; वचनशतेनाप्य-
निवृत्तावित्यस्य मुक्तिरुपपादयितुं शक्यते । ज्ञानमज्ञानस्य निवर्तकं दृष्टत्वात् तच्च प्रकाशकत्वात्
प्रदीपवत् । अत्रोच्यते—न गोपुरुषवदत्यन्तभेदो जीवपरयोर्यदेव पररूपदर्शनं सैवाविद्या सा च
विद्यया निवर्तते । ततश्च स्वरूपं प्रतिपद्यत इति किमत्र चित्रमत इदमुक्तम् "निचाय्य तं मृत्यु-
मुखात् प्रमुच्यत" इति ॥ इतश्च नाव्यक्तं प्रधानम् । एवशब्दोऽवधारणे । त्रयाणामग्निजीवपर-
मात्मनामुपन्यासो व्यक्ततया प्रश्नश्च ज्ञेयतया एवमिति प्रकारनिर्देशो ग्रन्थारूढः प्रकारो निर्दिश्यते ।
"स त्वमग्निं स्वर्ग्यमध्येषि मृत्यो प्रब्रूहि तं श्रद्दधानाय मह्यमि"त्यग्निप्रश्नः । "येयं प्रेते विचिकित्सा
मनुष्येऽस्तीत्येके नायमस्तीति चैके एतद्विद्यामनुशिष्टस्त्वयाहं वराणामेष वरस्तृतीय" इति जीवप्रश्नः ।
सौमनस्यप्रश्नापेक्षयायं तृतीयः । "अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात् कृताकृतात्, अन्यत्र भूताच्च
भव्याच्च यत् तत् पश्यसि तद्वदे"ति परविषयः प्रश्नः । उपन्यासोऽपि । "लोकादिमग्निं तमुवाच तस्मै ।
योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः । स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतम्" जीवविषयं
प्रतिवचनम् । "न जायते म्रियते वा विपश्चिदि"ति परविषयमेव । नास्ति प्रधानस्येति तात्पर्यार्थः ॥
इतश्च महच्छब्दो बुद्धौ साङ्ख्यैः प्रयुक्तस्ततोऽन्यत्रापि वेदे दृश्यते । वेदाहमेतं पुरुषं महान्तम् । तथा-
व्यक्तशब्दः शरीरे भविष्यति ॥

(७) श्रीमद्वल्लभाचार्यमतेऽयमभिप्रायः—अतीतेषु त्रिषु पादेषु प्रथमे शब्दकृतसन्देहनिवारणाय
कार्यनिरूपकाणि वाक्यानि विचार्य, द्वितीयतृतीययोश्च यथायथं जीवजडरूपार्थकृतसन्देहवारणायान्त-
र्याम्युपास्यरूपनिरूपकाणि च वाक्यानि विचार्य, सर्वेषां वेदान्तानां साक्षात्परम्परया च ब्रह्मणि सम-
न्वयः प्रतिपादितः । स तदा दृढीभवति यदा श्रौतत्वेनाभिमन्यमानस्य मतान्तरस्य श्रौतत्वं निरा-
क्रियते । अतस्तदर्थं चतुर्थे पादे जीवजडसमुदायात्मकार्थनिरूपकतया मतान्तरश्रौतत्वभ्रमजनकानि
प्रकीर्णकानि वाक्यानि विचार्यन्ते । अत उपोद्घातोऽत्र पादसङ्गतिः । तत्र ईक्षत्यधिकरणे ब्रह्मलक्षणस्य
प्रकृतावतिव्याप्तिं वारयितुमशब्दमिति पदेन साङ्ख्यमतमशब्दत्वान्निवारितम् । तद्दार्ढ्यार्थमिह सूत्रांशेन
आशङ्क्यांशान्तरेण समाधत्ते आनुमानिकमित्यादि । एकेषां कठानां शाखासु कठवल्ल्याम्, आनुमा-
निकं साङ्ख्यैः, स्थूलभूतानि शब्दादितन्मात्रजन्यानि, मूढत्वात्, यद्यज्जन्यं तत्तत्सदृशम् यथा मार्त्ति-
कादिवाह्याभ्यन्तरकरणानि तन्मात्राणि च अहङ्कारजन्यानि, शान्तघोरविमूढत्वात्। अहङ्कारो महत्त-
त्त्वजन्यः, शान्तादिरूपत्वात्, महत्तत्त्वं प्रकृतिजन्यम्, शान्तादिरूपत्वात् पूर्ववत्, प्रकृत्यादीनि
चतुर्विंशतितत्त्वानि परार्थानि, सङ्घातरूपत्वात्, पर्यङ्कादिवत्, यः परः स पुरुष इत्येवमनुमानक-
ल्पितं मतं श्रूयते "इन्द्रियेभ्यः परा ह्यर्था ह्यर्थेभ्यश्च परं मनः। मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्
परः । महतः परमव्यक्तमव्यक्तात् पुरुषः परः। पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गति"रिति। अत्र
बुद्धेः सकाशात् पर आत्मा अहङ्कारः "चन्द्रो मनो यस्य दृगर्क आत्मा अहं समुद्रो जठरं भुजेन्द्रः"

इत्यहङ्कारेऽप्यात्मपदप्रयोगात् । ततः परो महान् महत्तत्त्वम् । ततः परमव्यक्तं प्रकृतिः । ततः परः पुरुष इति । तथा चैवं साङ्ख्यमतप्रत्यभिज्ञानात् तन्मतं श्रौतम् । अपिशब्दाद् "अजामेका"मित्यादिवाक्ये-पूक्तः प्रकृतिरूपो वादो, "मायां तु प्रकृतिं विद्या"दित्याद्युक्तो मायावादः, "पञ्चारात्रेदां पञ्चपर्वामधीम" इत्याद्युक्तोऽविद्यावादश्च श्रौत इति चेत्, न; कुतः? शरीररूपकविन्यस्तगृहीतेः । शरीरसम्बन्धिरूपकं शरीररूपकम्, तत्र विन्यस्तानां गृहीतिर्ग्रहणं शरीररूपकविन्यस्तगृहीतिस्ततः । अत्र हि पूर्वम्, "आत्मानं रथिनं विद्धि शरीरं रथमेव तु । बुद्धिं तु सारथिं विद्धि मनःप्रग्रहमेव च । इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान् । आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिण" इत्युक्त्वा, ततो "यस्त्वविज्ञानवान् भवती"त्यादीनि पञ्च वाक्यान्युक्त्वा, तदनु "इन्द्रियेभ्यः परा" इत्यादि पठ्यते । अत इन्द्रियवाक्यं प्रकरणावरुद्धमिति तत्र पूर्वसम्बद्ध एवार्थो वक्तव्यः । अन्यथा प्रकृतहान्यप्रकृतपरिग्रहापत्ती स्याताम् । इदं हि जीवप्रकरणम् । "यस्त्वविज्ञानवा"-नित्यादौ तस्यैव परामर्शात् । तत्र जीवस्य मुक्त्युपायो निरूप्यते, "विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः । सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पद"मिति । न ह्येतत् साङ्ख्यमते सम्भवति । स्वरूपावस्थानातिरिक्तस्य भगवत्प्राप्तिरूपस्य मोक्षस्य तन्मतेऽभावात् । अद्यमस्तदग्रिमे "इन्द्रियेभ्य" इति वाक्ये अहङ्कारादितत्त्वरूपो नार्थः, किन्तूक्तविद्वन्मोक्षसाधनानुसार्येवार्थः । तत्र साधको जीवो रथी । तस्य ब्रह्मप्राप्तौ मुख्यं साधनं शरीरम् । स रथः । सर्वसामग्रीसहितस्यायत्तयानत्वात् । तेन शरीरे रथरूपकम् । रथस्तु गमने हयाधीन इतीन्द्रियेषु हयरूपकम् । इन्द्रियाणि मनोऽधीनानि, हयाश्च प्रग्रहाधीना इति मनसि तद्रूपकम् । मनश्च बुद्ध्यधीनं, प्रग्रहश्च सारथ्यधीन इति बुद्धौ सारथिरूपकम् । इन्द्रियाणि तु विषये प्रवर्तन्ते, हयाश्च मार्गरूपे देशे, सारथिश्च मार्ग एव हयान् प्रेरयतीति विषयेषु गोचरपदेन मार्गरूपकम् । ततो रथिस्वरूपनिगमना य "आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिण" इत्यर्धश्लोकः । ततो मार्गस्य प्राप्याधीनत्वात्तद्बोधनाय प्रापकसामग्रीनिगमनपूर्वका "यस्त्वविज्ञानवा"-नित्यादयश्चत्वारः श्लोकाः । तत इष्टस्य प्राप्यस्य निगमनाय विज्ञानसारथिरिति पञ्चमः । तत्रेयमाशङ्कोत्तिष्ठते । एवमत्र मोक्षप्रणाडीनिरूपणे विषयाणां यद्देशत्वमुक्तं तन्न युक्तम्, संसारमार्गत्वस्य प्रत्यभिज्ञादिसिद्धत्वादिति । तन्निवारणाय वदतीन्द्रियेभ्य इत्यादि । तथाचायमर्थः । इन्द्रियेभ्यो हयेभ्योऽर्था विषयाः पराः । मार्गतया नियामकत्वादुत्कृष्टाः । नियामकत्वं चान, "घ्राणं च गन्ध" इतिन्यायेनेन्द्रियाधिदैविकतया भगवदीयत्वेन मनसा सम्यग्भावितत्वया च । न तु विषयतया । मोक्षप्रकरणत्वात् । नापि ज्ञानीन्द्रियतया । विरक्तेन्द्रियाणां विषयेषु सम्यक्त्वेन भावनाभावात् । अतस्तस्यारविन्दनयनस्येत्यादिवद् यत्र भगवदभिप्रायस्तां प्रणाडीं बोधयितुमिन्द्रियेभ्यो विषयाणां परत्वमुक्तम् । तत्तेषां परत्वं मनसा सम्यक्तया भावने भवतीति मनसस्तन्नियामकत्वाद् "अर्थेभ्यश्च परं मन" इत्युक्तम् । मनसस्तु परा बुद्धिरिति तु सारथिभावादेव स्फुटम् । बुद्धेः सकाशात् परो बुद्धिनियामकस्त्वात्मा विज्ञानम् । तस्य बुद्धिजन्यत्वेऽपि भगवद्विषयकत्वान्महत्त्वमिति तथात्वबोधनाय महानित्युक्तम् । विज्ञानस्य बुद्धिजन्यत्वेऽपि "द्रव्यस्फुरणविज्ञान"मित्यत्र बुद्धिस्वरूपस्य विज्ञानसमानाकारतया सिद्धत्वात् तस्य बुद्धिनियामकत्वं युक्तमेव । तादृशं च विज्ञानं भगवत्कृपां विना न भवतीति ततो महतः परमव्यक्तं ज्ञातुमशक्यत्वादप्रकटं भगवत्कृपैव । तस्मादव्यक्तात् परस्तन्नियामकः पुरुषो भगवानेव । यत्पदं प्राप्यत्वेनोक्तं तदेतन्निगमयितुं "सा काष्ठा सा परा गति"रित्युक्तम् । अतः शरीररूपकविन्यस्तानां ग्रहणादत्रायमेवार्थो युक्तो, न तु साङ्ख्यमतग्रहणं युक्तमित्यर्थः । एतेनैव हेतुनात्र मायादिवादा अपि निरस्ता

वेद्यः । हेत्वन्तरमाह । दर्शयति चेति । उक्तमर्थं श्रुतिस्वरूपमेव दर्शयति । "एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते । दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभि"रिति । द्रष्टॄणां बहुत्वकथनेन तद्भिन्नस्यात्मनो दृश्यत्वकथनेन च बुद्धेरुपनिषदनुसारित्वरूपसूक्ष्मत्वकथनात् साङ्ख्यप्रतिपन्नपुरुषा-त्वाद्भिन्नत्वमात्मनो दर्शयति । चकारा"त्ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तर"मिति स्मृति-र्गृहीता । तत्र च ज्ञानानन्तरं सायुज्यं दर्शयति । न हीदृश आत्मा, तत्प्राप्तिश्च साङ्ख्यमते सिध्यति । अतोऽत्र साध्यत्वोपदेशाच्च साङ्ख्यमतप्रत्यभिज्ञानमित्यर्थः ॥

नन्वव्यक्तपदेन भगवत्कृपा न ग्रहीतुं शक्या । धर्मिप्रायपाठविरोधादित्याशङ्क्य तुशब्देन परिहरति । इयमाशङ्का न कार्या । तद् अव्यक्तं कृपारूपधर्मात्मकमपि सूक्ष्मम्, दुर्ज्ञेयं ब्रह्मैव, न ततो भिन्नम् । कुतः ? अर्हत्वात् योग्यत्वात् । अयमर्थः । "बुद्धेरात्मा महान् पर" इत्यत्र "अथ परा यया तदक्षर-मधिगम्यत" इत्यादिश्रुत्युक्तं परोक्तं ज्ञानं योग्यतावलाद्बुद्धिनियामकत्वेन परामृष्टम् । तच्च "नाय-मात्मे"ति, श्रुत्यन्तराद्वरणाधीनम् । वरणं कृपयेति ज्ञानात्परस्य विमर्शे योग्यताबलात् कृपैव ज्ञान-नियामकत्वेन सिध्यति । सा च भगवद्धर्मः । धर्मधर्मिणोश्चाविभागादविनाभावेन स्थित्या चाभेद इति योग्यताबलादेव तस्या अपि ब्रह्मत्वम् । अतो धर्मत्वेऽपि धर्म्यभेदान्न प्रवाहविरोध इत्यर्थः ॥

ननु यदि पूर्वोक्तयुक्त्या कृपाया ब्रह्मत्वं तदा भिन्नत्वमनुपपन्नम् । यदि च कयाचिद् युक्त्या धर्मत्वं तदा प्रायपाठविरोध इत्यत आह तदित्यादि । कृपायाः ब्रह्मभेदेऽपि तदधीनत्वाद् ब्रह्माधीनत्वाद् भिन्न-त्वम् । तथाच यथा अभेदे अविनाभावेनैकरूपयोगग्रहणं युक्तिः, तथा भेदे नियम्यनियामकभावो युक्तिः । अतो द्वयमप्युपपन्नमिति न कश्चिद्दोषः । नन्वेकत्वे नियम्यनियामकभावः एव कथमित्याकाङ्क्षायां तत्साधनाय दृष्टान्तमाह अर्थवदिति । अर्थः पुरुषार्थः फलं तद्वत् । "ब्रह्मविदाप्नोति पर"मित्यत्र यथैकस्य ब्रह्मणः सच्चिद्रूपेण विषयत्वमानन्दरूपेण फलत्वम् । गणितानन्दत्वेनाक्षरत्वमगणितानन्द-त्वेन पुरुषोत्तमत्वं च, तथा कृपाविष्टः साधनमानन्दरूपफलमित्येकस्यापि रूपभेदेनोभयत्वोपपत्त्या सर्वसामञ्जस्यमित्यर्थः । यदि च कृपापक्षे अव्यक्तपदस्य यौगिकत्वाच्छैथिल्यं शङ्क्यते, तदाव्यक्तपदे-नाक्षरमेवात्र ग्राह्यम् । "अव्यक्तोऽक्षर इत्युक्त" इति गीतायां तत्र रूढिबोधनात् । एवमपि सामञ्ज-स्यञ्चेति । तस्मादिन्द्रियेभ्य इति वाक्ये नानुमानिकं किञ्चिदस्ति ॥

प्रकरणविचारेणेन्द्रियेभ्य इति वाक्ये आनुमानिकमतासिद्धिः प्रदर्शिता । तत्र पूर्वतन्त्रमाश्रित्य प्रकरणापेक्षया वाक्यप्राबल्यप्रदर्शनेन चेत्कुर्यात्, तदा पूर्वोक्तं शिथिलं स्यादतो वाक्यविचारेण तन्म-तासिद्धिमाह ज्ञेयेत्यादि । अव्यक्तं ज्ञेयत्वेन नोक्तम् । तेषां मते तु गुणपुरुषान्तरज्ञानात्कैवल्य-मिति प्रवचनसूत्रात् विभूतिविशेषाप्तये प्रधानस्यापि ज्ञेयत्वस्मरणाच्च तत्प्रत्यभिज्ञापकाभावेनात्र वाक्या-दपि न तन्मतसिद्धिरित्यर्थः । चकारोऽनुक्तसमुच्चायकः । तेनात्रोक्तोऽव्यक्तपुरुषयोः परापरभावोऽपि तन्मतविघटक इति सूच्यते । परापरभावो हि पुरुषप्रकृत्योर्विश्लेषेऽवगन्तुं शक्यते । अज्ञानदशायां तु श्लेष एवेत्युदासीनतयोक्तौ पुरुषस्य परत्वानवगम इति सोऽपि तथेत्यर्थः ॥

ननु ज्ञेयत्वावचनमसिद्धम् । इन्द्रियेभ्य इति वाक्ये निर्देशमात्रमुक्त्वा, अग्रे "अशब्दमस्पर्शमरूप-मव्ययं तथारसं नित्यमगन्धवच्च यत्, अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात् प्रमु-च्यत" इति ज्ञेयत्वं वदतीति चेत्, न; कुतः ? प्राज्ञो हि प्रकरणात् । हि यतो हेतोस्तस्मिन् वाक्ये प्राज्ञः परमेश्वर एवोच्यते । तत्र हेतुः प्रकरणादिति । अयमर्थः । अव्यक्तश्रुतेः परत्वलिङ्गस्य तद्वा-क्यस्य च मतद्वयसाधारणत्वादेकतरनिर्धारे प्रकरणस्य नियामकत्वं वक्तव्यम् । प्रकरणं च "ऋतं

पिबन्ता''वित्यारभ्य, नाचिकेतमुपाख्यानमित्यन्तमेकम् । तत्र चात्मानावेव परामृश्य जीवात्मनो रथित्वं तदुपकरणं तत्फलं चोक्त्वा, अग्रे "एष सर्वेषु भूतेष्वि''त्यारभ्य वल्लीसमाप्तिपर्यन्तं परमात्मैव परामृश्यते। मृत्युमुखप्रमोकरूपफलदर्शनात् । प्रधानज्ञानेन साङ्ख्यैस्तदनभ्युपगमनात्। चेतनात्मज्ञानादेव तदुपगमाच्च । अतः प्रकरणस्य विचारे अशब्दवाक्यस्यापि भगवत्परत्वाज्ज्ञेयत्वावचनं नासिद्धमित्यर्थः ॥

ननु न वयं सर्वमेकं प्रकरणमित्युपगच्छामः। किन्त्विन्द्रियेभ्य इत्यारभ्य, नाचिकेतमुपाख्यानमित्यन्तं भिन्नं प्रकरणम्। तत्र प्रथमं पदार्थनिर्देशः, तदन्वेष सर्वेषु भूतेष्विति पुरुषज्ञानम्, अशब्दमस्पर्शमिति प्रकृतिज्ञानं पृथक्पृथगुच्यत इति । तेन तयोरन्तरमेव ज्ञातं भवतीति साङ्ख्यमतस्यात्रैवं सिद्धेस्तस्याशब्दत्वकथनमयुक्तमित्याशङ्क्य परिहरति त्रयाणामित्यादि। एवम् अस्मदुक्तरीत्या त्रिप्रकरणत्वं, त्वद्रीत्या तु चतुष्प्रकरणत्वं स्यात्। नच को दोष इति वाच्यम्, यतस्त्रयाणामग्निजीवब्रह्मणामेवोपन्यास उत्तरं प्रश्नश्चात्र दृश्यते। "स त्वमग्निं स्वर्ग्यमध्येषि मृत्यो प्रब्रूहि तं श्रद्दधानाय मह्य''मिति प्रथमोऽग्निप्रश्नः । "प्र ते ब्रवीमि तदु मे निबोध स्वर्ग्यमग्निं नाचिकेतः प्रजान''न्नित्यादिनोत्तरम्। "येयं प्रेते विचिकित्सा मनुष्ये अस्तीत्येके नायमस्तीति चैक''इति द्वितीयो जीवप्रश्नः।"देवैरत्रापी''त्युपक्षिप्याग्रे "न साम्परायः प्रतिभाति बाल''मित्यादिना परलोकासत्त्वमानिनः पुनः पुनः स्ववशागत्योतया तादृशस्याप्यस्तित्वबोधनमुत्तरम्। "अन्यत्र धर्मा''दिति तृतीयो ब्रह्मप्रश्नः, "सर्वे वेदा यत्पदमामनन्ती''त्यादिनोत्तरमिति तत्रत्प्रकरणविभागविरोधस्यैव दूषणत्वात्। नच पितृसौमनस्येनाग्निजीवप्रश्नाभ्यां च वरत्रयपूर्तेर्ब्रह्मप्रश्नस्य काल्पनिकत्वं निर्हेतुकत्वं वा शङ्क्यम्। "यत्तत् पश्यसि तद्वदे''ति, "नैषा तर्केण मतिरापनेया,'' "श्रोकान्येनैव सुज्ञानाय प्रेष्ठे''ति मन्त्रगतयोर्वदप्रेष्ठपदयोरेव मानत्वात्। नच "यस्साम्पराये महति ब्रूहि नस्त''दितिवद् ब्रह्मप्रश्नस्य जीवप्रश्नानुवादत्वं शङ्क्यम्। विषयभेदनिर्देशविरोधात्। अतस्तं दुर्दर्शमिति वाक्यद्वयान्तसन्दर्भ एव तृतीयवरप्राप्तस्य द्वितीयप्रश्नस्य पूर्तेरन्यत्र धर्मादित्यनेनोक्तस्य प्रश्नस्य तृतीयत्वं प्रसादहेतुकत्वं च मन्तव्यम् । नच यथा वरव्यतिरेकेण प्रश्नकल्पनायामदोषः, एवं प्रश्नव्यतिरेकेण प्रधानोपन्यासकल्पनायामप्यदोषः इति शङ्क्यम्। वदप्रेष्ठपदाभ्यां बोधितत्वेन कल्पनाया अभावेनापर्यवसेयत्वादिति । अतश्चतुर्थस्य प्रकरणान्तरस्यात्र वक्तुमशक्यत्वान्न साङ्ख्यमतसिद्धिरिति तस्याशब्दत्वकथनं नायुक्तमित्यर्थः ॥

ननु तथापि मतान्तरेऽन्यत्र सङ्केतिताः शब्दाः ब्रह्मवादे कथं ब्रह्मपरतया योज्यन्त इत्याशङ्क्य परिहरति महद्वदिति । यथा साङ्ख्यमते प्रथमकार्ये सङ्केतितोऽपि महच्छब्दो "महान्तं विभुमात्मानं,'' "वेदाहमेतं पुरुषं महान्त''मित्यादौ योगेन ब्रह्मपरः पदान्तरसन्निधानादुच्यते, प्रकरणाच्च । अन्यथा तदनन्वयात्। एवमव्यक्तशब्दोऽप्यक्षरवाचकः । सर्वेषां पदानां ब्रह्मवाचकत्वस्यौत्सर्गिकत्वादिति। तस्मा"दिन्द्रियेभ्य'' इति वाक्ये साङ्ख्यपरिकल्पितानां पदार्थानां नामापि नास्तीति सिद्धम्। चकारोऽधिकरणसम्पूर्णत्वद्योतकः ॥



## २ चमसवदित्यधिकरणम् ।

### पुनः श्रुत्यन्तरेण प्रत्यवस्थितं निराकर्तुमधिकरणान्तरमारभते ।

( अविशेपादपि न साङ्ख्यमतम् )

**चमसवदविशेपात् ॥ १।४।८ ॥**

ननु प्रकरणवशात्पूर्वमस्मदुक्तोर्थोऽन्यथा वर्णितः । यत्र प्रकरणापेक्षैव नास्ति
मन्त्रे तदस्माकं मूलम् । "अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां
सरूपाः। अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः" (श्वे. ४।५)
इति । यद्यपीदं श्वेताश्वतरोपनिषदि चतुर्थोऽध्याये विद्यमानत्वात्पूर्वापरसम्बद्धमेव
वक्तव्यम् । तत्र–"ब्रह्मवादिनो वदन्ति किंकारणं ब्रह्म" (श्वे. १।१ ) इत्युपक्रम्य
ब्रह्मविद्यैव निरूपिता । तथापि पूर्वकाण्डे प्रणवादिमन्त्राणां नायं नियम इति प्रकृ-
तेऽपि मतान्तरवाचकत्वस्यैव प्रकृतोपयोग इति शङ्का। "ते ध्यानयोगानुगता अप-
श्यन् देवात्मशक्तिं स्वगुणैर्निगूढाम्" ( श्वे. १।३ ) इति च । तथा "ज्ञाज्ञौ द्वावजा-
वीशानीशावजा ह्येका भोक्तृभोग्यार्थयुक्ता" । ( श्वे. १।९ ) अग्रे च–"यो योनिं
योनिमधितिष्ठत्येको विश्वानि रूपाणि योनीश्च सर्वाः । ऋषिं प्रसूतं कपिलं यस्त-
मग्रे ज्ञानैर्बिभर्ति जायमानं च पश्येत्" ( श्वे. ५।२ ) इत्यादि च वाक्यानि कपिल-
तन्मतवाचकानि वर्तन्त इति साङ्ख्यमतमपि वैदिकमेवेत्येवं प्राप्ते, उच्यते—

चमसवदविशेपात् । "अर्वाग्बिलश्चमस ऊर्ध्वबुध्नस्तस्मिन्यशो निहितं विश्वरू-
पम् । तस्यासत ऋषयः सप्ततीरे वागष्टमी ब्रह्मणा सम्विदाना ( बृ. २।२।३ ) इति
मन्त्रे यथा न विशेषो विधातुं शक्यते । नहि कर्मविशेषं कल्पयित्वा तत्रार्वाग्बि-

---

नास्तीति पूर्वस्मिन्नधिकरणे साङ्ख्यमतसिद्धपदार्थानां वैदिकशब्दप्रतिपाद्यत्वं नास्तीति

ननु प्रकरणाभावात्' पूर्वस्मिन्नधिकरणे साङ्ख्यमतसिद्धपदार्थानां ... ताद्दशार्थप्रतिपादकत्वं नास्तीति प्रतिपादयितुं चमसा-
प्रतिपादितं इदानीं अप्राकरणिककेवलवाक्यस्यापि ताद्दशार्थप्रतिपादकत्वं नास्तीति प्रतिपादयितुं चमसा-
धिकरणमारभन्ते—**चमसवदविशेपात्** । चमसवत् तत्सदृशो अविशेपः चमसवदविशेपः तस्मात् ।
'इदं समाधानसूत्रमवतारयितुं पूर्वपक्षमाहुः—**नन्विति** । श्वेताश्वतरोपनिषस्थं विषयवाक्यमाहुः—
अजामिति । इदं अप्राकरणिकं नास्ति इत्याशङ्कते—**यद्यपीति** । सम्बद्धत्वमेवाहुः—**तत्रेति** । तत्र
चतुर्थाध्याये निरूपिता । "एको बहुधा शक्तियोगादि"त्यादिमन्त्रैर्निरूपिता । समादधते—**तथापीति** ।
यज्ञकाण्डे अर्थान्तरब्रह्मवाचकप्रणवादिमन्त्राणां उपयोगो यथा, तथा साङ्ख्यमतसिद्धपदार्थवाचकमन्त्रस्य
ब्रह्मविद्यायामुपयोग इत्यर्थः । एवंचास्य मन्त्रस्य स्वार्थप्रतिपादने प्रकरणापेक्षा नास्तीति प्रधानस्याशब्दत्वं
नास्तीति शङ्का स्यादिति भावः । शङ्का स्यादित्यस्वरसात्समाधानान्तरं वक्तुं बहूनामनुग्रहो न्याय इत्याशयेन
स्वमतस्थपदार्थबोधकमन्त्राणि दर्शयति—**त इति** । एतानि वाक्यानीति ते ध्यानयोगा इत्येकः । ज्ञाज्ञौ
द्वावजामिति द्वितीयः । यो योनिमिति त्रितीयो मन्त्रः । एतानि वाक्यानीत्यर्थः । तथाच कठव-
ल्ल्यामेक एव मन्त्रः प्रधानवाचकः, अन्ये च मन्त्रा ब्रह्मप्रतिपादका इति बहूनामनुग्रहार्थं एकस्य मन्त्रस्या-
न्यार्थकत्वमस्तु नाम, अत्र तु तथाभावेन वैपरीत्यात्साङ्ख्यमतं वैदिकमेवेति भावः । अस्मिन् पूर्वपक्षे
सौत्रं समाधानमाहुः—**उच्यत इति** ।

**चमसवदविशेपात्** । अविशेपमाहुः—**नहीति** । शक्यते इत्यनेनान्वयः । प्रकृते अजादिमन्त्रे

लचमसं कल्पयित्वा तत्र यशोरूपं सोमं होतारो मन्त्रेण भक्षयेयुरिति कल्पयितुं शक्यते। तथा प्रकृते रोहितशुक्लकृष्णशब्देन रजःसत्त्वतमांसि कल्पयित्वा न तद्वशेन सर्वमेव मतं शक्यते कल्पयितुम् कपिलर्षिवाक्यमपि नित्यत्वानित्यसंयोगभयान्नित्यपरैरेवानुवादकम् । तस्मान्न मन्त्रमात्रेण प्रकरणश्रुत्यन्तरनिरपेक्षेण विशेषः कल्पयितुं शक्यः ॥ १।४।८॥

( उपक्रमादपि न साङ्ख्योक्ता प्रकृतिः )

ज्योतिरुपक्रमात्तु तथा ह्यधीयत एके ॥ १।४।९ ॥

ननु चमसमन्त्रे "अर्वाग्बिल" ( बृ. २।२।३ ) इति मन्त्रव्याख्यानमस्ति। "शिरश्चमसः प्राणा वै यशः" ( बृ. २।२।३ ) "प्राणा वा ऋषयः" ( बृ. २।२।३ ) इति। नात्र तथा व्याख्यानमस्तीतीमां शङ्कां परिहरति तुशब्दः। अजाशब्देन ज्योतिरेवोच्यते। यथा ह्यजाल्पदोग्ध्री तथेयं नश्वरसुखदात्री । अग्निसूर्यसोमविद्युद्रूपाद् ब्रह्मणो हंसोक्तचरणरूपा। भगवत्कार्यांशरूपत्वात्। "तासां त्रिवृतमेकैकां करवाणि" ( छां. ६।३।३ ) इति श्रुतेश्च प्रथमोत्पन्ना देवताजाशब्देनोच्यते। तत्र हेतुः। उपक्रमात्। अत्रैवोपक्रमे—"तदेवाग्निस्तद्वायुस्तदादित्यस्तदु चन्द्रमाः" ( श्वे. ४।२ ) इति। "द्वा सुपर्णा" ( श्वे. ४।६ ) इति चाग्रे। मध्ये चायं मन्त्रः पूर्वोत्तरसम्बद्धमेव

---

कल्पयितुं न शक्यत इत्यन्वयः। एवं चमसमन्त्रे यज्ञाङ्गसाधनवाचकपदानि सन्ति, परन्तु न तद्वाचकत्वं तेषां यथा, तथात्रापि न साङ्ख्यमतपदार्थवाचकत्वमजादिमन्त्रस्येत्यविशेषोऽपि बोध्यः। नित्यानित्येति। नित्यस्य वेदस्य अनित्यस्य कपिलस्य संयोगभयादित्यर्थः । नित्यपरैरिति । भगवदंशरूपाधिदैविकपरैरित्यर्थः।

ज्योतिरुपक्रमात्तु तथा ह्यधीयत एके। सूत्रमवतारयन्ति—नन्विति। इमामिति चमसमन्त्रे व्याख्यानं श्रुतावेव कृतमिति नात्र तत्सादृश्यमिति योगार्थादरेणाजाशब्देन मूलप्रकृतिरेवात्र गृह्यते इति साङ्ख्यानां शङ्केत्यर्थः। ननु यदि भवन्मते प्रकृतिर्नोच्यते चेदत्राजाशब्दवाच्यं किमपि न दृश्यते इत्यत आहुः—अजेति। ननु ज्योतिर्वाचकत्वमजाशब्दस्य कुत्रापि न दृष्टमत आहुः—यथेति। ननूपनिषत्प्रतिपाद्या तादृशी का(?)वा ज्योतिरित्यत आहुः—अग्नीति। रूपादिति। अत्र पाठद्वयम् रूपादिति पञ्चम्यन्तं, रूपेति प्रथमान्तम्। रूपादिति पाठे भावप्रधाननिर्देशं कृत्वा रूपत्वादिति वक्तव्यम्। तथाच ज्योतिः तादृशरूपत्वात् हंसोक्तचरणरूपेत्यन्वयः। प्रथमान्तपाठे ज्योतिः कीदृशमित्याकाङ्क्षायां अग्निसूर्यसोमविद्युद्रूपा इति तस्या एव विशेषणम्। अयं पाठस्तु श्रीहस्ताक्षरेषु सन्दिग्धत्वात् बोध्य इति श्रीगोस्वामिचरणैः प्रकाशे उक्तः। चरणरूपेति। हंसेन सत्यकामाय ऋषये अग्न्यादीनां कलात्वमुक्तं छान्दोग्ये षष्ठे प्रपाठके अग्निकलेत्यादिना चतुःष्कलोपादो ब्रह्मणो ज्योतिष्मान्नामेत्यन्तेनातश्चरणरूपेत्यर्थः। तस्याः ज्योतेः(?) अजाशब्देन व्यवहारे कारणमाहुः—भगवदिति । "तत्तेजोऽसृजत" इति श्रुतेरंशत्वादित्यर्थः। हेत्वन्तरमाहुः—तासामिति। त्रिवृतं तेजोजलान्नात्मकं देवतातेजोरूपा एतावता सौत्रं ज्योतिःपदं व्याख्यातम्। नन्वजामेकामिति मन्त्रे भगवत्कार्यरूपायाः तस्याः कथं प्रत्यभिज्ञानमित्याकाङ्क्षायां सौत्रं हेतुं दर्शयन्ति—तत्रेति। ननु साङ्ख्यमते अजायाः जडत्वं अस्याश्चैतन्याधिष्ठितत्वं कथमित्यत, आहुः—द्वा

वदति । सा मुख्या सृष्टिः । अजद्वयं जीवब्रह्मरूपमिति । अत्र प्रकरणेन स्पष्ट इति निरूपयति । तथाहि श्रुत्यन्तरे स्पष्टमेवाधीयत एके । "यदग्ने रोहितᳫं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्य" (छां. ६।४।१) इति । एवमग्रेऽपि कलाञ्ये । "अनेन जीवेनात्मना" (छां. ६।३।२) इति जीवब्रह्मणोश्चानुप्रवेशः । बीजेऽपि त्रैविध्यमिति सरूपत्वम् । भगवतो भोगे हेतुः । जीवेन भुक्तभोगामिति । तस्मात्प्रकृतेऽपि चमसवच्छ्रुतावेवार्थकथनान्न साङ्ख्यमतप्रतिपादकत्वम् ॥ १।४।९ ॥

( मधुविद्यावदविरोधः कल्पनोपदेशात् )

## कल्पनोपदेशाच्च मध्वादिवदविरोधः ॥ १।४।१० ॥

ननु द्विविधा शब्दप्रवृत्तिः । योगो रूढिर्वा । तत्राजाशब्दश्छागायां रूढः । न जायत इति योगः । अनुभयरूपत्वात्कथं सृष्टिवाचकत्वमित्याशङ्क्य परिहरति । कल्पनोपदेशाच्च । कल्पनात्रोपदिश्यते । आद्या सृष्टिः कल्पनयाऽजाशब्देनोच्यते । यथा छ्यजा बर्करसहिता सवत्सा स्वामिहिता तथेयमित्युपदेशपदात्तथोपासनमभिप्रेतम् । चकारात्परोक्षवादोऽपि देवस्य हिताय । यथा—"आदित्यो वै देवमधु" (छां. ३।१।१) "वाचं धेनुमुपासीत" (बृ. ५।८।१) द्युलोकादीनां चाग्नित्वं पञ्चाग्निवि-

---

इति; मन्त्रः । सा मुख्या बहुप्रजाजननसमर्था सृष्टिर्वदतीत्यर्थः । अजामिति मन्त्रस्योत्तरार्द्धार्थं व्याकरोति सूत्रकार इत्याहुः—अजद्वयमित्यादिना । ननु ज्योतीरूपेयमजा त्रिवृद्रूपेतियदुक्तं तन्न सम्भवति छान्दोग्ये तेजसोत्पत्तिप्रकरणे त्रिवृद्रूपतायाः प्रतिपादनाभावादिति । सूत्रशेषमवतारयन्ति—अत्रेति । निरूपयति । सूत्रकार इति शेषः । तथाहीत्यस्यार्थमाहुः—श्रुत्यन्तरेति । ननु किं तत् श्रुत्यन्तरमित्यतः श्रुतिमाहुः—यदग्नेरिति । एवमग्रेऽपीति । यदादित्यस्य रोहितं स्वरूपमित्यादिसूर्यसोमविद्युद्रूपेत्यर्थः । अत्र चैतन्याधिष्ठितत्वं कुत्रोक्तमित्यत आहुः—अनेनेति । अत्र जीवात्मनोः सहार्थे करणार्थे यथाक्रमं तृतीया बोध्या । जनयन्ती स्वरूपामित्युक्तं तस्य प्रयोजनमाहुः—बीजेऽपीति । अपिना तेजोबन्नात्मकत्वे सच्चिदानन्दस्वरूपं त्रैविध्यमपि प्रजास्वस्तीति सूचितम् ।

कल्पनोपदेशाच्च मध्वादिवदविरोधः । पूर्वपक्षमुक्त्वा समाधानसूत्रमवतारयन्ति—नन्विति । ननूक्तमेव द्विविधा शब्दप्रवृत्तिरिति आद्यसृष्टेः प्रजाशब्दवाच्यत्वं कथमित्यत आहुः—यथेति । यथाजा प्रजोत्पत्तिसम्पादनेन स्वामिहिता तथेयं भगवद्धितेति गौण्या लक्षणयाऽग्निर्माणवक इतिवत् अजाशब्दवाच्याद्या सृष्टिरित्यर्थः । श्रीचरणाः स्वाभिप्रेतमाहुः—परोक्षेति । अजाशब्देनाद्यसृष्टिकथनरूपान्योक्तिरेव परोक्षवादः । "परोक्षं च मम प्रियमि"तिभागवतेऽभिधानादाहुः—देवस्येति । स्तोत्रं मध्वादिवदिति । दृष्टान्तं विशदयन्ति—यथेति । यथाऽस्माकं सारघं मधु तथादेवानामादित्यो मधु तं दृष्ट्वैव तृप्यन्ति वाचः सर्वार्थबोधकत्वात् धेनुत्वं पृथिव्याः सर्वसस्योत्पादकत्ववत् बोध्यं पञ्चाग्निविद्यायां छान्दोग्ये स्पष्टम् ।

**द्यायां तथा प्रकृतेप्यविरोधः। योगरूढिव्यतिरेकेणाप्येषा वेदे शब्दप्रवृत्तिः। तस्मादजामन्त्रेण न साङ्ख्यमतसिद्धिः॥ १।४।१०॥ २॥**

---

**तथा प्रकृतेति।** यथा साङ्ख्यमते आदित्ये चक्षुषोऽधिदैवतत्वं सिद्धमेवेति मधुत्वं वक्तुं न शक्यते इति मधुविद्याश्रुतिविरोधपरिहारार्थं विधाया कल्पनोपदेशो यथा भवद्भिरङ्गीक्रियते तथा प्रकृतेऽपि आद्या सृष्टिः कल्पनयाऽजाशब्देनोच्यते इत्यर्थः। इतिद्वितीयाधिकरणम्॥

---

१ अत्रेत्थं व्याख्यानान्तराणि—

(१) तत्र शाङ्कराः—पूर्वमव्यक्तशब्दमात्रेण प्रधानस्याप्रत्यभिज्ञायामप्यत्र त्रिगुणत्वादिलिङ्गोपेताद्‌जाशब्दात्प्रत्यभिज्ञा अस्त्विति प्रत्युदाहरणसङ्गत्येदमाह। अत्र पूर्वपक्षे ब्रह्मणि समन्वयासिद्धिः, सिद्धान्ते तत्सिद्धिरिति फलभेदः। श्वेताश्वतरोपनिषदि श्रूयते—अजामेकां लोहितशुक्लकृष्णाम्,...' इत्यादि। तत्र किमजाशब्देन प्रधानमुच्यते, उत तेजोबन्नात्मिकाऽवान्तरप्रकृतिरिति संशये, न जायत इत्यजा साङ्ख्यसिद्धा प्रकृतिरिति पूर्वः पक्षः। सिद्धान्तस्तु—न प्रधानस्यासाधारण्येनात्र प्रत्यभिज्ञापकं किञ्चित्समस्ति, लोहितादिशब्दानां वर्णविशेष एव रूढत्वात् न रजआदौ। न जायते इत्यजेत्यन्यत्रापि साधारण्यादत्र निर्धारणाभावे दृष्टान्तः चमसवत्। यथा "अर्वाग्बिलश्चमसः" इत्यादावयं चमस इत्यवधारणं न सम्भवति, कथञ्चिदर्वाग्बिलत्वादेः अन्यत्राप्यविशेषात्, एवमजामन्त्रेऽप्यजात्वादेरविशेषाच्च प्रधाननिर्णय इति अशाब्दं प्रधानमित्यर्थः॥ ननु केयमजा प्रतिपत्तव्येत्यत्राह। ज्योतिस्तेज उपक्रमे यस्याः तेजोबन्नलक्षणायाः सा ज्योतिरुपक्रमा। तुशब्दोऽवधारणे। सैवेह निर्धारणीया, न प्रधानम्। कस्मात्, तथा ह्यधीयत एके। हि यस्मात् एके छन्दोगाः तेजोबन्नात्मिकायाः प्रकृतेः "यदग्ने रोहितं रूपम्" इत्यादिना रोहितादिरूपवत्तामधीयत, समामनन्ति, तथेह लोहितादिशब्दसाम्यात्तान्येव तेजोबन्नानि प्रत्यभिज्ञायन्त इति समञ्जसम्॥ 'नन्वजाशब्दस्य छागे रूढत्वात्कथं तेजोबन्नात्मकप्रकृतिपरत्वमित्यत आह'। चशब्दः शङ्कानिरासार्थः। तेजोबन्नात्मकप्रकृतौ नाजात्वानुपपत्तिः। कुतः? कल्पनोपदेशात् यथा लोके प्रसिद्धामजां भुक्तभोगामेकोऽजस्त्यजति अन्यस्तामनुवर्तते, एवं त्यागभोगयोः कार्यकारणसङ्घाताद्युपादानतेजोबन्नात्मकप्रकृतेः साम्यद्योतनार्थं कल्पनया अजात्वस्योपदेशात्। यथा मधुभिन्नादित्यस्य "असौ वादित्यो देवमधु" इति मधुत्वोपदेशः, तद्वदजाभिन्नायाः प्रकृतेः अजात्वोपदेशे न कश्चिद्विरोधः। तस्मान्नात्र प्रधानस्यावकाश इत्यशब्दं प्रधानमिति सिद्धम्॥

(२) रामानुजीये—अत्रापि कापिलतन्त्रसिद्धप्रक्रिया निरस्यते। नाब्रह्मात्मकानां प्रकृतिमहदहङ्कारादीनां स्वरूपम्। श्रुतिस्मृतिभ्यां ब्रह्मात्मकानां तेषां प्रतिपादनात्। यथाथर्वणिका अधीयते—"विकारजननीमज्ञामष्टरूपामजां ध्रुवाम्, ध्यायते ध्यासिता तेन तन्यते प्रेर्यते पुनः। सूयते पुरुषार्थं च तेनैवाधिष्ठिता जगत्, गौरनाद्यन्तवती सा, जनित्री भूतभाविनी। सितासिता च रक्ता च सर्वकामदुघा विभोः, पिबन्त्येनामविषमामविज्ञाताः कुमारकाः। एकस्तु पिबते देवः स्वच्छन्दोऽत्र वशानुगाम्, ध्यानक्रियाभ्यां भगवान् भुङ्क्तेऽसौ प्रसभं विभुः। "सर्वसाधारणीं दोग्ध्रीं, पीड्यमानां तु यज्वभिः, चतुर्विंशति सङ्ख्याकमव्यक्तं व्यक्तमुच्यते" इत्यत्र प्रकृत्यादीनां

स्वरूपमभिहितम् । यदात्मकाश्चैते प्रकृत्यादयः स परमपुरुषोऽपि तं पञ्चविंशकमित्याहुः "सप्तविंशम-
थापरे पुरुषं निर्गुणं साङ्ख्यमथर्वशिरसो विदुः" । इति प्रतिपाद्यते अपरे चाथर्वणिका "अष्टौ
प्रकृतयः षोडश विकारा" इत्यधीयते । श्वेताश्वतराश्चैवं प्रकृतिपुरुषेश्वरस्वरूपमामनन्ति । "संयुक्त-
मेतत्क्षरमक्षरं च व्यक्ताव्यक्तं भरते विश्वमीशः, अनीशश्चात्मा बध्यते भोक्तृभावाज्ज्ञात्वा देवं मुच्यते
सर्वपाशैः ज्ञाज्ञौ द्वावजावीशानीशावजा ह्येका भोक्तृभोगार्थयुक्ता, अनन्तश्चात्मा विश्वरूपो ह्यकर्ता
त्रयं यदा विन्दते ब्रह्म चैतत् । क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः,
तस्याभिध्यानाद्योजनात्तत्त्वभावाद्भूयश्चान्ते विश्वमायानिवृत्तिः" इति । तथा—"छन्दांसि यज्ञाः क्रतवो
व्रतानि भूतं भव्यं यच्च वेदा वदन्ति । अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया सन्निरुद्धः ।
मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् । तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत्" इति । तथो-
त्तरत्रापि "प्रधानक्षेत्रज्ञपतिर्गुणेशः संसारमोक्षस्थितिबन्धहेतुः" इति । स्मृतिरपि—"प्रकृतिं पुरुषं चैव
विद्ध्यनादी उभावपि, विकारांश्चैव गुणांश्चैव विद्धि प्रकृतिसम्भवान् । कार्यकारणकर्तृत्वे हेतुः प्रकृति-
रुच्यते, पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते । पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान्गुणान्, कारणं
गुणसङ्गोऽस्य सदसद्योनिजन्मसु । सत्त्वं रजस्तम इति गुणाः प्रकृतिसम्भवाः, निबध्नन्ति महाबाहो देहे
देहिनमव्ययम् । सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिकाम् । कल्पक्षये पुनस्तानि, कल्पादौ विसृ-
जाम्यहम् । "प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः । भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात् ।
मयाध्यक्षेण प्रकृतिः सूयते सचराचरम्, हेतुनाऽनेन कौन्तेय जगद्विपरिवर्तते" इति । तस्माद्ब्रह्मात्मकत्वेन
कापिलतन्त्रसिद्धाः प्रकृत्यादयो निरस्यन्ते । श्वेताश्वतरोपनिषदि श्रूयते । "अजामेकां लोहितशुक्ल-
कृष्णां बह्वीः प्रजाः सृजमानां सरूपाः । अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः"
इति । तत्र सन्देहः, किमस्मिन्मन्त्रे केवला तन्त्रसिद्धा प्रकृतिरभिधीयत उत ब्रह्मात्मिकेति ? किं युक्तम् ?
केवलेति । कुतः ? अजामेकामित्यस्याः प्रकृतेरकार्यत्वश्रवणात् । बह्वीः प्रजाः सृजमानां सरूपा इति
स्वातन्त्र्येण सरूपाणां बह्वीनां प्रजानां स्रष्टृत्वश्रवणाच्च । इत्येवम्प्राप्तेऽभिधीयते—चमसवदविशेषा-
दिति । नात्र तन्त्रसिद्धा प्रकृतिरभिधीयते । कुतः ? न जायत इत्यजेत्यजात्वमात्रप्रतिपादनात् । तन्त्र-
सिद्धाब्रह्मात्मकाजाग्रहणे विशेषाप्रतीतेः । चमसवत् । "यथार्वाग्बिलश्चमस ऊर्ध्वबुध्नः" इत्यस्मिन्मन्त्रे
चमसस्य भक्षणसाधनत्वमात्रं चमसशब्देन प्रतीयत इति न तावन्मात्रेण चमसविशेषप्रतीतिः ।
यौगिकशब्दानामर्थप्रकरणादिभिर्विनार्थविशेषनिश्चयायोगात् । तत्र च "यथेदं तच्छिर एष ह्यर्वाग्बिल-
श्चमस ऊर्ध्वबुध्नः" इत्यादिना वाक्यशेषेण शिरसश्चमसत्वनिश्चयस्तथात्राप्यर्थप्रकरणादिभिरेवाजा
निर्णेतव्या । न चात्र तन्त्रसिद्धाजाग्रहणहेतवोऽर्थप्रकरणादयो दृश्यन्ते । न चास्या विशेषग्रहे स्वात-
न्त्र्येण स्रष्टृत्वं प्रतीयते । बह्वीः प्रजाः सृजमाना इति स्रष्टृत्वमात्रप्रतीतेः । अतोऽनेन मन्त्रेण नाब्रह्मा-
त्मिकाजाभिधीयते ॥ ब्रह्मात्मकाजाग्रहण एव विशेषहेतुरस्तीत्याह—तु शब्दोऽवधारणार्थः । ज्योति-
रुपक्रमैवैषाजा । ज्योतिर्ब्रह्म । "तं देवा ज्योतिषां ज्योतिः", "अथ यदतः परो दिवो ज्योतिर्दीप्यते"
इत्यादिश्रुतिप्रसिद्धेः । ज्योतिरुपक्रमा ब्रह्मकारणिकेत्यर्थः । तथा ह्यधीयत एके । हि हेतौ । यस्मादस्या
अजाया ब्रह्मकारणकत्वमेके शाखिनस्तैत्तिरीया अधीयते । "अणोरणीयान्महतो महीयानात्मा गुहायां
निहितोऽस्य जन्तोः" इति निहितं गुहायामिति हृदयगुहायामुपास्यत्वेन सन्निहितं ब्रह्माभिधाय "सप्त
प्राणाः प्रभवन्ति तस्मात्सप्तार्चिषः" इत्यादिना सर्वेषां लोकानां ब्रह्मादीनां च तत उत्पत्तिमभिधाय सर्व-
कारणीभूताऽजा तत उत्पन्नाऽभिधीयते । "अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं सरूपाम् ।

अजो ह्येको जुषमाणोऽनुशेते, जहात्येनां भुक्तभोगामजोऽन्यः" इति सर्वस्य तद्व्यतिरिक्तस्य वस्तुजातस्य तत उत्पत्त्या तदात्मकत्वोपदेशे क्रियमाणेऽभिधीयमानत्वात्प्राणसमुद्रपर्वतादिवदेषाप्यजा वह्वीनां सरूपाणां प्रजानां स्रष्ट्री कर्मवश्येनात्मना भुज्यमानान्येन विदुषात्मना त्यज्यमाना ब्रह्मण उत्पन्ना ब्रह्मात्मिकाऽवगन्तव्येत्यर्थः । अतो वाक्यशेषाच्चमसविशेषवच्छाखान्तरीयादेतत्सरूपात्प्रत्यभिज्ञायमानार्थाद्वाक्यान्नियमिताजा ब्रह्मात्मिकेति निश्चीयते । इहापि प्रकरणोपक्रमे किंकारणं ब्रह्म इत्यारभ्य, "ते ध्यानयोगानुगता अपश्यन्देवात्मशक्तिं स्वगुणैर्निगूढाम्" इति परब्रह्मशक्तिरूपायां अजाया अवगतेः। उपरिष्टाच्च "अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया सन्निरुद्धः। "मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्" "यो योनिं योनिमधितिष्ठत्येकः" इति च तस्या एव प्रतीतेर्नास्मिन्मन्त्रे तन्त्रसिद्धस्वतन्त्रप्रकृतिप्रतिपत्तिगन्धः। कथं तर्हि ज्योतिरुपक्रमाया लोहितकृष्णरूपाया अस्याः प्रकृतेरजात्वमजाया वा कथं ज्योतिरुपक्रमत्वम्, इत्यत आह–प्रसक्ताशङ्कानिवृत्त्यर्थश्चशब्दः । अस्याः प्रकृतेरजात्वं ज्योतिरुपक्रमात्वं च न विरुध्यते। कुतः ? कल्पनोपदेशात्। कल्पनं क्लृप्तिः सृष्टिः। जगत्सृष्ट्युपदेशादित्यर्थः। यथा "सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्" इति कल्पनं सृष्टिः । अत्रापि "अस्मान्मायी सृजते विश्वमेतत्" इति जगत्सृष्टिरुपदिश्यते । स्वेनाविभक्तादस्मात्सूक्ष्मावस्थात्कारणान्मायी सर्वेश्वरः सर्वं जगत्सृजतीत्यर्थः । अनेन कल्पनोपदेशेनास्याः प्रकृतेः कार्यकारणरूपेणावस्थाद्वयान्वयोऽवगम्यते। सा हि प्रलयवेलायां ब्रह्मतापन्नाविभक्तनामरूपाव्यक्तादिशब्दवाच्या सूक्ष्मरूपेणावतिष्ठते । सृष्टिवेलायां तूद्भूतसत्त्वादिगुणा विभक्तनामरूपा व्यक्तादिशब्दवाच्या तेजोबन्नरूपेण च परिणता लोहितशुक्लकृष्णाकारा चावतिष्ठते । अतः, कारणावस्थाजा कार्यावस्था च ज्योतिरुपक्रमेति न विरोधः । मध्वादिवत् । यथेश्वरेणादित्यस्य कारणावस्थायामेकस्यैवावस्थितस्य कार्यावस्थायामृग्यजुःसामाथर्वप्रतिपाद्यकर्मनिष्पाद्यरसाश्रयतया वस्वादिदेवताभोग्यत्वाय मधुत्वकल्पनमुदयास्तमयकल्पनं च न विरुध्यते। तदुक्तं "मधुविद्यायामसौ वा आदित्यो देवमधु" इत्यारभ्याथ "तत ऊर्ध्वमुदेत्य नैवोदेता नास्तमेतैकल एव मध्ये स्थाता" इत्यन्तेन। एकल एकस्वभावः । अतोऽनेन मन्त्रेण ब्रह्मात्मिकैवाजाभिधीयते, न कापिलतन्त्रसिद्धेति सिद्धम् । अन्ये त्वस्मिन्मन्त्रे तेजोबन्नलक्षणाऽजैकाभिधीयत इति ब्रुवते। ते प्रष्टव्याः, किं तेजोबन्नान्येव तेजोबन्नात्मिकाजैकोत तेजोबन्नरूपं ब्रह्मैव ? किं वा तेजोबन्नकारणभूता काचिदिति ? प्रथमे कल्पे तेजोबन्नानामनेकत्वादजामेकामेकामिति विरुध्यते । न च वाच्यं तेजोबन्नानामनेकत्वेऽपि त्रिवृत्करणेनैकतापत्तिरिति । त्रिवृत्करणेऽपि बहुत्वानपगमात् "इमास्तिस्रो देवताः" "तासां त्रिवृतं त्रिवृतमेकैकां करवाणि" इति प्रत्येकं त्रिवृत्करणोपदेशात्। द्वितीयः कल्पो विकल्प्यः। किं तेजोबन्नरूपेण विकृतं ब्रह्मैवाजैका किं वा स्वरूपेणावस्थितमविकृतमिति। प्रथमः कल्पो बहुत्वानपायादेव निरस्तः । द्वितीयेऽपि लोहितशुक्लकृष्णामिति विरुध्यते । स्वरूपेणावस्थितं ब्रह्म तेजोबन्नलक्षणमिति वक्तुमपि न शक्यते । तृतीये कल्पेऽप्यजाशब्देन तेजोबन्नानि निर्दिश्य तैस्तत्कारणावस्थोपस्थापनीयेत्यास्थेयम् । ततो वरमजाशब्देन तेजोबन्नकारणावस्थायाः श्रुतिप्रसिद्धाया एवाभिधानम्। यत्पुनरस्याः प्रकृतेरजाशब्देन च्छागत्वपरिकल्पनमुपदिश्यते इति तदप्यसङ्गतम् । निष्प्रयोजनत्वात् । यथात्मानं रथिनं विद्धि इत्यादिषु ब्रह्मप्राप्त्युपायताख्यापनाय शरीरादिषु रथादिरूपणं क्रियते तद्वदस्यां प्रकृतौ छागत्वपरिकल्पनं कोपयुज्यते ? न केवलमुपयोगाभाव एव विरोधश्च । कृत्स्नजगत्कारणभूतायाः स्वसिन्नानादिकालसम्बन्धानां सर्वेषामेव चेतनानां निखिलसुखदुःखोपभोगापवर्गसाधनभूताया अचेतनाया अत्यल्पप्रजासर्गकरागन्तुकसङ्गमचेतन-

विशेषैकरूपात्यल्पप्रयोजनसाधनस्वपरित्यागहेतुभूतस्वसम्बन्धपरित्यागसमर्थचेतनविशेषरूपच्छागस्वभा-
वख्यापनाय तद्रूपत्वकल्पनं विरुद्धमेव । "अजामेकाम्........अजो ह्येक..........अजोऽन्यः" इत्यत्राज-
शब्दस्य विरूपार्थपरिकल्पनं च न शोभनम् । सर्वत्र च्छागत्वं परिकल्प्यत इति चेत्, "जहात्येनां
भुक्तभोगामजोऽन्यः" इति विदुष आत्यन्तिकप्रकृतिपरित्यागं कुर्वतोऽनेन वाऽन्येन वा पुनरपि सम्बन्ध-
योग्यच्छागत्वपरिकल्पनमत्यन्तविरुद्धम् ॥

(३) माध्वे—यथा चमसशब्दोऽन्यत्र प्रसिद्धो"ऽपीदं तच्छिरः" एष "ह्यर्वाग्बिलश्चमस ऊर्द्ध्वबुध्न"
इति श्रुतेः शिरोवाचकः । एवमव्यक्तादिशब्दाः सर्वेऽन्यत्र प्रसिद्धा अपि "नामानि सर्वाणि यमावि-
शन्ति । तं वै विष्णुं परममुदाहरन्ती"त्यादिश्रुतेः । परमात्माभिधायका एव अविशेषात् श्रुतेः ।
"वसन्ते वसन्ते ज्योतिषा यजेते"त्यादिकर्माभिधायकस्य कर्मक्रमादिविरोधाच्च युज्यत इत्यत
आह—ज्योतिरित्यादि । कर्मवाचकत्वेन प्रसिद्धाभिधेयोऽपि स एव । एष इमं लोकमभ्यार्चदि-
त्युपक्रम्य "ता वा एताः सर्वा ऋचः सर्वे वेदाः सर्वे एकैव व्यवहृतिः प्राण एव प्राण ऋच इत्येव
विद्यादिति ह्यधीयत एके" । मधुविद्यादिवत् सर्वशब्दार्थत्वेन परस्य कल्पनोपदेशाच्च न कर्मक्रमा-
दिविरोधः ॥

(४) निम्बार्कः—"अजामेकामि"त्यादिमन्त्रोक्ता प्रकृतिः स्मृतिसिद्धा भवतु इति पूर्वपक्षे
दृष्टान्तं दर्शयति । मन्त्रोक्ताऽजा ब्रह्मात्मिकाऽस्तु पूर्वपक्षनिर्द्धारणे विशेषाभावात् "अर्वाग्बिलश्चमस"
इतिमन्त्रोक्तचमसवत् । ननु चमसमन्त्रे "इदं तच्छिर" इति वाक्यशेषाच्छिरश्चमस इति गम्यते,
अजामन्त्रे किं गमकं विशेषार्थग्रहणे इति, अत्रोच्यते । ज्योतिर्ब्रह्मलक्षणमुपक्रमः कारणं यस्याः साऽ-
जाऽप्यजामन्त्रेणोच्यते यतस्तथैव "तस्मादेतद्ब्रह्म नामरूपमन्नं च जायते" इत्येकेऽधीयते । ब्रह्मोपादा-
नकत्वाजात्वयोरेकस्मिन्धर्मिणि न विरोधः, सूक्ष्मशक्तिमतो जगत्कारणात् ब्रह्मणो विश्वस्रष्ट्युपदेशाद्द्वयं
सङ्गच्छते, मध्वादिवत् ॥

(५) भैक्षवे—परशेषतया प्रधानकारणताप्रतिपादने श्रौतदृष्टान्तमाह—यथा "अर्वाग्बिलश्चमस
ऊर्द्ध्वबुध्न" इत्यस्मिन्मन्त्रे चमसो यागशरीरत्वेनैव प्रतिपादनं, न स्वातन्त्र्येण, तथाप्रधानमपि जग-
त्कारणब्रह्मशरीरत्वेनैवात्र प्रतिपादितं न स्वातन्त्र्येण । कुतः ? अविशेषात् पत्प्रकरणे स्वातन्त्र्येण प्रति-
पादनस्यानर्थकत्वाविशेषादित्यर्थः । औपनिषदमेव दृष्टान्तान्तरमाह । तुशब्दः पुनरर्थे ज्योतिरुपक्रमास्तेज
आद्या तेजोबन्नरूपा शक्तिः पुनस्तथा चेतनशरीरविषयैव सृष्टौ हेतुः, हि यस्मात् एके कौथुमा अधी-
यते "तत्तेज ऐक्षत बहु स्यां प्रजायेय तदपोऽसृजते"त्यादि । अनेक्षितृचेतनस्य शरीरविषयैव तेज
आदीनां स्रष्टृत्वं पठ्यत इत्यर्थः । अतस्तद्दृष्टान्तेनाजास्रष्टृत्वमपि चेतनब्रह्मशरीरविषयैव ग्राह्यमिति । न
चाजाख्यप्रधानाभिमानिदेवताशरीरविषयाऽजायाः सकलस्रष्टृत्वं सम्भवति देवानां बुद्ध्युपाधिकतया
बुद्धिपूर्वकमहत्तत्वस्रष्टावकारणत्वादिति । आधुनिकास्तु आनुमानिकमप्येकेषामित्यारभ्य सर्वाणि
सूत्राणि साङ्ख्ययोगसिद्धानां प्रधानमहदादिपदार्थानां स्वरूपप्रतिषेधपरतया यथाकथञ्चिद्व्याचक्षते,
तत्तु श्रुतिस्मृतिन्यायादिविरोधादुपेक्षणीयं मुमुक्षुभिः । यच्च तेषामजाशब्दस्य भूतत्रयपरतया व्याख्यानं
तदपि हेयम् । "अशक्यः सोऽन्यथा द्रष्टुं ध्यायमानः कुमारकाः । विकारजननीमायामष्टरूपामजां ध्रुवामि"-
तिचुलिकोपनिषदादौ प्रधान एवाजात्ववचनात् "मायां तु प्रकृतिं विद्यादि"त्याद्यव्यवहितवाक्यशेषतो
"देवात्मशक्तिं स्वगुणैर्निगूढामि"ति वाक्योपक्रमतश्चाजामेकामित्यादिवाक्येऽप्यजाशब्दस्य मूलकारण-
वाचित्वावधारणाच्च, तथानादित्वस्रष्ट्युपपादकतया अजाशब्दे यौगिकार्थस्यापि प्रकृते विवक्षितत्वाच्चेति ।

ननु कथमुच्यतेऽनादिरीश्वरशक्तिरजाख्ये निर्दिष्टेति तस्याः लोहितशुक्लकृष्णरूपत्वासम्भवात्, प्रकृतौ रूपाद्यभावाविद्याशङ्कामपाकरोति । चशब्दः पुनरर्थे रूपादिवचनाविरोधः पुनरत्र मध्वादिविद्यायामिव कल्पनयोपदेशादित्यर्थः। यथा हि आदित्यस्यामधुनोऽपि मधुत्वं वाचश्चाधेनोरपि धेनुत्वं भोग्यप्रदत्वादिगुणलाभार्थं रूपकल्पनयोपदिश्यते श्रुतिभिः "असौ वा आदित्यो देवमधु" "वाचं धेनुमुपासीते"त्यादिभिः। तथैव प्रधानशब्दवाच्यानां सत्त्वादिगुणानां नीरूपाणामपि लोहितादिरूपाणि रागप्रकाशावरणरूपतालाभार्थं रूपकल्पनयोपदिष्टानीति विरोधान्तरं प्रतिषेधति॥

(६) भास्करीये—श्वेताश्वतराणां मन्त्रोपनिषदि श्रूयते "अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः। अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः"। तैत्तिरीयाणामपि नारायणोपनिषदि श्रूयते। अस्मिन् मन्त्रे त्रिगुणात्मिका प्रकृतिः। साङ्ख्यस्मृतिप्रसिद्धा प्रत्यभिज्ञायते। अतः प्रधानं प्रतिगम्यमेवेत्याशङ्कां निराकरोति। न प्रधानमनेन मन्त्रेण निर्दिश्यते कस्माद्विशेषात्। लोहितादिशब्दानां रक्तशुक्लकृष्णवर्णवाचिनां सर्वत्राविशेषाच्चमसवत् "अर्वाग्बिलश्चमस ऊर्ध्वबुध्न" इत्यस्मिन् मन्त्रे चमसक्रियायोगाच्चमसशब्दो यथाविशिष्टस्तथेहापि। ननु तत्र "इदं तच्छिर" इति वाक्यशेषाच्छिरश्चमसो गम्यतेऽत्र कथं विशेषप्रतीतिरत आह। तुरवधारणे। ज्योतिरुपक्रमो यस्याः प्रकृतेः सा ज्योतिरुपक्रमा तथा तेन प्रकारेणैके शाखिनः छन्दोगा अधीयते। हीति हेतौ। "यदग्ने रोहितं रूपं तेजसस्तद्रूपं यत् शुक्लं तदपां यत् कृष्णं तदन्नस्ये"ति शाखान्तरे विशेषदर्शनात्। अविशेषश्रुतिर्निर्णीयते। यथा "आग्नेयं चतुर्धा करोती"ति विशेषश्रुत्या "पुरोडाशं चतुर्धा करोती"ति सामान्यश्रुतिर्निर्णीयते तद्वत्। चशब्दः सम्भावनायाम्। ईश्वरादुत्पन्नायामपि चराचरप्रकृतावजासादृश्यकल्पनयोपदेशादविरोधः। यथा काञ्चिदजां बहुबर्करां यदृच्छया कश्चिदजोऽनुशेते अपरो जहाति तथेमां प्रकृतिमविद्वाननुशेते व्यपगताविद्यातिमिरो जहातीति जीवानां परस्परं भेद एव परमात्मना चाभेदः। फेनतरङ्गादीनामिव सत्येवमेकस्मिन् मुक्ते परो न मुच्येत इत्युपपद्यते बन्धमोक्षव्यवस्था मध्वादिवदादित्यस्य। मधुनो मधुत्वं वाचश्च धेन्वा धेनुत्वं सादृश्यात् कल्प्यते॥

(७) श्रीमद्वल्लभाचार्यमतेऽयमभिप्रायः—ननु मास्त्वस्मिन् वाक्ये साङ्ख्यमतसिद्धिः, तथापि श्वेताश्वतरे तैत्तिरीये चाजामन्त्रः पठ्यते "अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः। अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्य" इति। नचात्रापि "किं कारणं ब्रह्मे"त्यादिना ब्रह्मविद्यामुपक्रम्य पठितत्वाद् ब्रह्मविद्यैव केनचित्प्रकारेण निरूप्यत इति शङ्क्यम्। पूर्वकाण्डीयप्रणवादिमन्त्राणामन्यत्र विनियुक्तानामपि प्रकृतोपयोगः, एवमत्रापि मतान्तरवाचकस्यैव प्रकृतोपयोग इति शक्यवचनत्वात्। किञ्चात्र यद्येक एव मन्त्र एतादृशोऽन्ये चान्यादृशा इति स्यात्, तदा बहूनामनुग्रहस्य न्याय्यत्वादेतस्यार्थोऽन्यथा कल्प्येतापि। यथा कठवल्लीस्थेन्द्रियमन्त्रस्य। इह तु "ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढा"मिति, "ज्ञाज्ञौ द्वावजावीशानीशावजा ह्येका भोक्तृभोग्यार्थयुक्ते"ति, "यो योनिं योनिमधितिष्ठत्येको विश्वानि रूपाणि योनीश्च सर्वा" इति, "ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्बिभर्ति जायमानं च पश्ये"दित्यादीनि बहूनि वाक्यानि सन्ति। तेषु यथायथम्, अजाया जुष्टत्वादिकं, स्वगुणैर्निगूढत्वं, मुक्तामुक्तजीवसद्भावो भोक्तृभिर्भोग्यार्थैः मात्रादिकार्यैर्युक्ता प्रकृतिः, योन्यधिष्ठातृत्वं, कपिलस्य नाम तद्धर्माश्च प्रत्यभिज्ञायन्ते। एतावान् परं विशेषो यत् कापिलैः प्रकृतिः स्वतन्त्रोच्यते, अत्र तु परमेश्वरशक्तित्वेनेति । न तावता तस्य अजात्वहानिः। शक्तेर्नित्यत्वात्। अतः शक्तित्वमात्रेण विशेषेण कपिलमतप्रत्यभिज्ञापकनानापदानादरणस्यानुचितत्वात्

साङ्ख्यमतस्यानुमानिकत्वोक्तिः प्रधानस्याशब्दत्वोक्तिश्चानुपपन्नेति प्राप्ते, उच्यते चमसवदित्यादि ।
एकपदमिदं सूत्रम् । चमसेन तुल्यः अविशेषश्चमसवदविशेषस्तस्मात् । यथा "अर्वाग्बिलश्चमस ऊर्ध्व-
बुध्नस्तस्मिन् यशो निहितं विश्वरूपम् । तस्यासते ऋषयः सप्त तीरे वागष्टमी ब्रह्मणा सम्विदाने"ति
मन्त्रे कर्मविशेषं कल्पयित्वा तत्रार्वाग्बिलं चमसं कल्पयित्वा, तत्र यशोरूपं सोमं सप्त होतारो मन्त्रेण
भक्षयेयुरिति कल्पयितुं न शक्यते, तथात्र लोहितशुक्लकृष्णशब्देन सत्त्वरजस्तमांसि कल्पयित्वा, तद्व-
शेन सर्वमेव साङ्ख्यमतं न कल्पयितुं शक्यते । शक्तित्वेन शक्तिमदधीनोदयतया पारतन्त्र्येणैव सिद्ध-
त्वात् । नच स्वगुणैर्निगूढामिति तद्भ्रमकम् । तत्र स्वपदेन ब्रह्मण एव ग्रहीतुं शक्यतया तद्गुणानामेव
ग्राह्यत्वात् । उत्तरार्धे "यः कारणानि निखिलानि तानि कालात्मयुक्तान्यधितिष्ठत्येक" इत्यनेन
तस्यैव परामृष्टत्वाच्च । नापि भोक्तृभोग्यार्थयोगस्तत्त्वकल्पकः । जन्यायामपि शक्तौ तथात्वस्य
पुराणसिद्धत्वात् । नापि योनिमित्यस्य तथात्वम् । वीप्साया बहुत्वस्य च बाधकत्वात् । अंशभेदात्
समाधानेऽपि शक्तिसाधारण्यानपायाच्च । नापि कपिलादिपदस्य । नित्ये वेदे अनित्यसंयोगविरोधात् ।
नचापौरुषेयत्वेऽपि वेदस्य जन्यत्वं युक्तम् । "वाचा विरूपनित्यये"त्यादिश्रुतिविरोधात् । वेदप्रामा-
ण्यस्य कपिलाचार्यैरप्यङ्गीकारात् । अतश्चमसवाक्यवदत्रापि विशेषस्य कल्पयितुमशक्यत्वान्न साङ्ख्य-
मतसिद्धिरिति पूर्वाधिकरणोक्तमक्षुण्णमित्यर्थः । अत्राप्यानुमानिकं नेति पक्षसाध्ये बोध्ये ॥

ननु चमसमन्त्रे "शिरो वै अर्वाग्बिलश्चमसः प्राणा वै यशः प्राणा वै ऋषयः" इति व्याख्यानं
श्रौतमस्तीति तत्र विशेषः कल्पयितुं न शक्यते । प्रकृते तु श्रौतव्याख्यानाभावात् सुखेन तन्मतमत्र
ग्रहीतुं शक्यमित्याशङ्कां तुना परिहृत्यात्रापि श्रौतं व्याख्यानं तत्तुल्यतयाह ज्योतिरित्यादि ।
अजाशब्देनात्र श्रुत्यन्तरोक्ता ज्योतीरूपा देवतोच्यते । नचैवं सत्यजापदस्य कुतः प्रयोग इति
शङ्क्यम् । पूर्वत्र रूपकविन्यस्तगृहीतिवदत्र रूपकातिशयोक्त्या अजावदल्पनश्वरफलदत्वं तस्या
बोधयितुं तदुक्तेः । तेनात्र किं गमकमत आह उपक्रमादिति । "तदेवाग्निस्तद्वायुस्तदादित्यस्तदु
चन्द्रमा" इति पूर्वमन्त्रे ज्योतिष उपक्रमात् । तथाचोपक्रम एवाजाया ज्योतिष्ट्वगमक इत्यर्थः ।
नच चतूरूपत्वाभावे कथं तदिति शङ्क्यम्; अग्निसूर्यचन्द्रविद्युद्भेदेन श्रुत्यन्तरे चतूरूपत्वस्य
तत्रोक्तत्वात् । नचात्रोत्तरार्धे अजद्वयकथनात्तयोरभावे कथं मन्त्रार्थनिर्धार इति शङ्क्यम्;
एतदग्रिमे "द्वा सुपर्णे"ति मन्त्रे तयोरभावेऽपि कथनात् । ननु तथाप्यजद्वयस्यात्र जीवबहुत्वेना-
निर्धारात् कथं मन्त्रार्थनिर्धार इति शङ्कायां सर्वनिर्धाराय सम्मत्यन्तरमाह तथा ह्यधीयत एके
इति । यथास्माभिर्व्याख्यायते ज्योतीरूपत्वं, तथा तेन प्रकारेण हि यतो हेतोः, एके
शाखिनश्छन्दोगा अधीयते श्रुतिं पठन्ति । पूर्वं "तत्तेजोऽसृजते"ति प्रथमं कार्यमुक्त्वा, ततः "तत्
तेज ऐक्षत बहु स्यां प्रजायेये"त्यादिना तत्कृतां सृष्टिं वदति, अग्रे च त्रिवृत्करणोत्तरं "यदग्ने रोहितं
रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्ये"ति । एतदग्रे "यदादित्यस्य रोहितं रूपं यच्चन्द्र-
मसो यद् विद्युत" इत्यादिना तस्य त्रिरूपत्वं वदति । तथा "अनेन जीवेनानुप्रविश्य नामरूपे व्याक-
रवाणि, तासां त्रिवृतं त्रिवृतमेकैकां करवाणी"ति त्रैविध्याज्जीवब्रह्मणोः प्रवेशं, बीजे भगवत्यपि सच्चि-
दानन्दभेदात् त्रैविध्यं, जन्येऽपि बीजे अण्डजमुद्भिज्जं जीवजमिति सद्बशात्त्रैविध्यम् । तेन "सृजमानां
सरूपा" इति प्रजानां सरूपत्वं वक्ति । भुक्तामनश्नन्निति यदनशनमुक्तं तत्र हेतुर्जीवेन भुक्तभोगामिति ।
तेनात्रोक्ताया देवताया छान्दोग्ये सत्यकामाय हंसेन "अग्निः कला सूर्यः कला चन्द्रः कला विद्यु-
त्कलैष वै सौम्य चतुष्कलः पादो ब्रह्मणो ज्योतिष्मान्नामे"त्युपदिष्टो यः पादस्तद्रूपत्वं प्रथमकार्यरूपत्वं

च विवृतं भवति । अतः प्रकृतेऽपि चमसवच्छ्रुतावेवार्थप्रतिपादनान्न साङ्ख्यमतप्रतिपादकत्वमित्यर्थः ॥

ननु द्विविधा पदशक्तिर्योगो रूढिर्वा । तत्राजाशब्दश्छाग्यां रूढः । न जायत इत्यजेति योगः । अत्रोभयं विहाय कया वृत्त्या सृष्टिवाचकत्वमङ्गीक्रियत इत्याशङ्क्य परिहरति कल्पनोपदेशादिति । कल्पनाया उपदेशः कल्पनोपदेशस्तस्मात् । यथाजा वर्करसहिता सवत्सा स्वामिहिता, तथेयमाद्या सृष्टिरपि भगवत्सहिता कार्यसहिता चोपायसहितेत्युपासनार्थं कल्पनयाऽजापदेनोच्यते चकाराद् । परोक्षवादोऽपि देवहितायेति बोध्यते । तथाच "तत्तेषां न प्रियं यन्मनुष्या विदु"रिति श्रुतेर्मनुष्याणां ज्ञानं देवहिताय न भवतीति तद्धिताय यथेन्धे इन्द्र इति परोक्षवादः, तथात्र चतुर्मुखराजन्यायेनासदादिसाधारणजन्माभावाज्ज्योतीरूपे प्रथमकार्येऽप्यजेति भगवत्प्रियत्वाय परोक्षवाद इत्यर्थः । नन्वेवं किमिदानीमेवं वादिनिग्रहायोपगम्यते? उतान्यत्र सिद्धमतिदिश्यत इत्याशङ्कायां समाधत्ते । मध्वादिवदविरोधः इति । यथा "असौ वा आदित्यो देवमधु" "वाचं धेनुमुपासीते"त्यादौ कल्पनया मधुत्वाद्युपदेशस्तथात्राप्यविरोधः । तथाचान्यत्र सिद्धैव वैदिकपदानां गौण्येव वृत्तिरत्रातिदिश्यते । तत्त्वादीनां कल्प्यत इत्यर्थः । अयं च दृष्टान्तो वादिबोधनार्थः । साङ्ख्यसमासरूपसूत्राणां पञ्चशिखप्रणीतवृत्तौ सूर्यस्य चक्षुरधिदैवतत्वेन सिद्धत्वान्मधुत्वस्य तस्मिन् साङ्ख्यवादिनापि कल्पनयैवादरणीयत्वादिति । तस्मादजाशब्देन न साङ्ख्यमतस्यात्र प्रत्याशेति सिद्धम् ॥



## ३ सङ्ख्योपसङ्ग्रहाधिकरणम् ।

( सङ्ख्याया उक्तत्वादपि न साङ्ख्यमतं श्रौतम् )

**न सङ्ख्योपसङ्ग्रहादपि नानाभावादतिरेकाच ॥ १।४।११ ॥**

मन्त्रान्तरेण पुनराशङ्क्य परिहरति । बृहदारण्यकषष्ठे श्रूयते । "यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः । तमेव मन्य आत्मानं विद्वान् ब्रह्मामृतोऽमृतम्" ( बृ. ४।४।१७ ) इति । यद्यप्यत्र पञ्चजनाः पञ्चोच्यन्ते न पञ्चानां पञ्चगुणत्वम् । समासानुपपत्तेः । तथाहि । आद्यः पञ्चशब्दः सङ्ख्यावाची सङ्ख्येयवाची वा । आद्ये पञ्चसङ्ख्याया एकत्वान्न षष्ठीसमासः । सङ्ख्यायां सङ्ख्याभावाच । सङ्ख्येयपरत्वे द्वितीयस्य सङ्ख्यात्वे पञ्चत्वमेव पूर्ववद्येदनन्वयः ।

---

**न सङ्ख्योपसङ्ग्रहादपि नानाभावादतिरेकाच** । मन्त्रान्तरे साङ्ख्यशङ्कापरिहारार्थं सङ्ख्योपस-
ङ्ग्रहाधिकरणमाहुः—**न सङ्ख्योपसङ्ग्रहादिति** । पुनरित्युक्त्या पूर्वाधिकरणाक्षेपो वा । अस्यैव पञ्चजनाधि-
करणत्वं सञ्ज्ञान्तरं बोध्यम् । सूत्रावतरणमाहुः—**मन्त्रान्तरेणेति** । विषयवाक्यं दर्शयन्ति—**यस्मि-
न्निति** । यस्मिन् ब्रह्मणि एते प्रतिष्ठिताः तं आत्मानं एवं ब्रह्मामृतं विद्वान् अन्यः जीवः अमृतः । भव-
तीति शेषः । अस्मिन्मन्त्रे पञ्च पञ्चशब्दश्रवणेन पञ्चविंशतितत्त्वबोधनात् मन्मतस्य श्रौतत्वमिति मूढग्राह-
रूपां साङ्ख्यानामाशङ्कां विशदयन्ति—**यद्यपीति** । अत्र अस्मिन्मन्त्रे । **उच्यन्ते इति** । पञ्च पञ्चजना
इति वाक्येनेति शेषः । ननु पञ्चद्वयघटितमेकं वाक्यमित्याह—**न पञ्चानामिति** । पञ्चपञ्चेत्यत्र पञ्चानां
पञ्चेति षष्ठीसमासश्चेत्साधुत्वं स्याद्वाक्यस्य स एव तु न सम्भवतीति विशदयन्ति—**तथा हीत्यादिना** ।
एकत्वादिति । सङ्ख्यावाचकपञ्चशब्दस्य एकवचनान्तत्वमवश्यं वक्तव्यमिति न पञ्चानामिति षष्ठी-
समास इत्यर्थः । ननु पञ्चशब्दस्य साङ्ख्यवाचकत्वमेवासिद्धम्, "आदशतः साङ्ख्याः सङ्ख्येये"ति वार्ति-
कात् अष्टादशपर्यन्तसङ्ख्यायाः सङ्ख्येयवाचकत्वादाद्येत्यसङ्गतमिति चेन्न, धर्मप्रधाननिर्देशपरत्वेन एकादि-
शब्दानामेकत्वादिसङ्ख्यावाचकत्वं तत्रैव व्यवस्थापितम् । इयान् परं "विशेषो विंशत्याद्याः सदैकत्वे सर्वाः
सङ्ख्येयसङ्ख्ययोरि"त्यनेन वचनेन एकोनविंशत्यादिशब्दानां सङ्ख्यासङ्ख्येयोभयपरत्वं सर्वदा एकवचना-
न्तत्वं चाष्टादशपर्यन्तैकादिशब्दानां तु सङ्ख्येयघटादिपरत्वमेव सर्वदैकवचनान्तत्वमपि न भवतीति
एको घटः द्वौ घटौ त्रयो घटाः इति विशेष्यसमानवचनकत्वं बोध्यम् । एवं च सामान्यतः सङ्ख्यायाः
एकत्वात् तद्वाचकपञ्चशब्दस्य नित्यैकवचनान्तत्वात् पञ्चपञ्चेत्यत्र पञ्चानां पञ्चेति न षष्ठीसमास इति
भावः । ननु दारा इत्यत्र बहुत्वमविवक्षितं यथा, तथात्राप्यविवक्षया पञ्चसु पञ्चेति सप्तमी समास एवा-
स्त्वित्यत आहुः—**सङ्ख्यायामिति** । गुणे गुणानङ्गीकारादित्यपि बोध्यम् । द्वितीयदूषणमाहुः—
सङ्ख्येयेति । **पञ्चत्वमेवेति** । पञ्चसु सङ्ख्येयेषु घटादिषु पञ्चसङ्ख्या इत्यर्थलाभेन पञ्चत्वसङ्ख्याया
एव लाभः, न तु पञ्चविंशतिसङ्ख्यायाः साङ्ख्यमताभिप्रेतायाः इत्यर्थः । ननु पूर्वकल्पे आद्यस्य सङ्ख्याप-
रत्वे द्वितीयस्य सङ्ख्येयपरत्वमेवोच्यते तदाप्याह—**पूर्ववदिति** । पूर्ववत् षष्ठीसमासः सप्तमीसमासश्चे-
दित्यर्थः । **अनन्वय इति** । षष्ठीसमासे पञ्चसङ्ख्यासम्बन्धी सङ्ख्येयमित्यर्थः । सम्बन्धश्च समवायः । एवं च
सङ्ख्येयवाचकपञ्चपदस्य सङ्ख्याविशिष्टे सङ्ख्येये शक्तिस्वीकारेण तत एव सङ्ख्याबोधे जाते पुनः सङ्ख्या-
वाचकपूर्वपदस्य प्रयोजनाभावाकाङ्क्षाभावेनादनन्वयः । सप्तमीसमासे तु सङ्ख्यायां सङ्ख्येयाभावादुत्तरपद-
स्यानन्वय इत्यर्थः । ऋजवस्तु उभयपदस्य सङ्ख्येयपरत्वेऽप्याहुः—**पूर्ववदिति** । यथा पूर्वपदस्य सङ्ख्ये-
यपरत्वं तथोत्तरपदस्यापि सङ्ख्येयपरत्वं चेदित्यर्थः । **अनन्वय इति** । उभयपदस्य सङ्ख्येयपरत्वे घटे

विधायकाभावाच्च । अतो वीप्सा । पञ्चजनसञ्ज्ञाविशिष्टानां वा पञ्चत्वमिति यथासम्भवमर्थः । तथापि मूढग्राहेण सङ्ख्योपसङ्ग्रहादपि लक्षणार्थं केनचिद्धर्मेण पञ्चसङ्ग्राहकेण भाव्यम् । स च तेषां मते न सम्भवति । तथा सति पञ्चैव तत्त्वानि स्युः । अतस्ते नानाभावादेव स्वीकर्तव्याः । यद्यपि भूततन्मात्राकृतिचित्यन्तःस्थितत्वधर्मा वक्तुं शक्यन्ते । तथापि न ते तथोक्तवन्तः ।

मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त ।
षोडशकश्च विकारो न प्रकृतिर्न विकृतिः पुरुषः ॥ ( सां. का. ३ )

---

घट इतिवत् आकाङ्क्षाभावात् अनन्वय इत्याहुः । नन्वत्रासूर्यम्पश्या राजदारा इतिवदसमर्थसमासाश्रयणे, को दोष इत्यत आहुः विधायकेति । तत्र तु "असूर्यललाटयोर्दृशितपोरि"ति सूत्रमेव विधायकम्, अत्र तदभावादिति ध्येयम् । नन्वेतावता साङ्ख्यमतावसर एव नास्ति, सूत्रे सङ्ख्योपसङ्ग्रहादिति हेतुप्रयोगो व्यर्थः स्यादित्यतः प्रकारान्तरेण तन्मतमाहुः—अत इति । वीप्सेति पञ्चपञ्चेति पदद्वयेन एकार्थवाचकत्वरूपा द्विरुक्तिरित्यर्थः । वीप्सया यस्मिन् जना पञ्चशः पञ्चेत्यर्थे जाते पञ्चविंशतिसङ्ख्यालाभो भविष्यतीत्यर्थः । अस्मिन्नर्थे तत्त्वानां पञ्चविंशतित्वलाभो न जायते किन्तु जनानामित्यस्वरसादाह—पञ्चजनेति । पञ्चजना इति । सञ्ज्ञा निषादपञ्चमानां चतुर्णां वर्णानां वेदे प्रसिद्धा तेषु पञ्चत्वे बोधिते पञ्चविंशतिसङ्ख्यालाभो न जायते इत्यस्वरसादाहुः—यथासम्भवमिति । श्रीचरणैर्यथासम्भवोक्त्या इदं सूचितं, केनापि प्रकारेण साङ्ख्यमतसिद्धिर्न जायते, परन्तु सङ्ख्योपसङ्ग्रहादिति हेतुप्रयोगः सूत्रे बादरायणैः कृत इति तदर्थं कश्चन प्रकारो गवेषणीय इति । स चेत्थं पञ्चपञ्चजनाः इत्येकं पदं, जनयतीति जनाः तत्त्वानि, तथाच पञ्च च ते जनाश्च पञ्चजनाः पञ्च च ते पञ्चजनाश्च पञ्चपञ्चजना इति कर्मधारयः । अथवा पञ्चानां जनानां समाहारः पञ्चजनाः पञ्चानां पञ्चजनानां समाहारः पञ्चपञ्चजना इतिसमाहारगर्भितः समाहारः । एवंच पञ्चविंशतितत्त्वानि श्रौतानीति गूढस्य साङ्ख्यस्याग्रह इति भावः । तथाच न सङ्ख्योपसङ्ग्रहादिति सूत्रस्यायमर्थः । एवं रीत्या पञ्चविंशतिसङ्ख्यायाः सङ्ग्रहं कृत्वा, स्मार्तानां तत्त्वानां श्रौतत्वकल्पनरूपं साङ्ख्यमतं न सम्भवति । कुतः? नानाभावात् । अमुमेव हेतुं विशदयन्ति—तथापीत्यादिना । मूढग्राहेण मूर्खहठरूपग्राहेण दुराग्रहेणेति यावत् । सङ्ख्योपसङ्ग्रहेऽपि पूर्वोक्तरीत्या यथाकथञ्चिदिति शेषः । लक्षणार्थं लक्षणसम्पादनार्थं यथा नैयायिकमते लक्षणार्थं नवद्रव्यसाधारणः द्रव्यत्वरूपो धर्मः स्वीक्रियते, तथा तत्त्वपञ्चकनिष्ठो धर्मः स्वीकर्तव्यः, स च तन्मते अप्रसिद्धत्वात् न सम्भवतीत्यर्थः । अथवा लक्षणार्थं प्रत्यभिज्ञानार्थं यथा रूपत्वधर्मं विना रसापेक्षया पृथक्त्वप्रत्यभिज्ञानं न जायते, तथात्रापि तत्पञ्चकनिष्ठासाधारणधर्मं विना अयममुक इति प्रत्यभिज्ञानं न जायते इति केनचिद्धर्मेण भाव्यमित्यर्थः । ननु मास्तु धर्मः इत्यत आहुः—तथासतीति । तादृशधर्मासम्भवे सतीत्यर्थः । पञ्चैवेति । पञ्चत्वसङ्ग्राहकतावच्छेदकतत्तद्धर्माभावे केवलपञ्चत्वसङ्ख्यायास्तत्र सत्त्वात्पञ्चैव तत्त्वानि स्युरित्यर्थः । अतः । अतःकारणात् । ते इति । तत्त्वपञ्चकाः । नानाभावाः । नाना अनेकाः प्रकृतित्वापेक्षया भिन्ना भावा धर्मा एषां एतादृशास्तत्त्वपञ्चकाः स्वीकर्तव्या इत्यर्थः । नन्वस्त्येव भूतत्वादय इत्याशङ्क्य परिहरन्ति—यद्यपीति । भूतेति । भूतत्वं पञ्चभूतनिष्ठो धर्मः एवं तन्मात्रात्वं, आकृतित्वं, कर्मेन्द्रियधर्माचितित्वं, ज्ञानेन्द्रियधर्मः, अन्तःस्थितत्वं, प्रकृतिपुरुषमहदहङ्कारमनसां धर्मः । एते धर्माः वक्तुं शक्यन्ते इत्यर्थः । न वक्तुं शक्यन्ते इति निषेधयन्ति—तथापीति । तर्हि ते कथमुक्तवन्त इत्यत आहुः—मूलेति । प्रकृतित्वं, प्रकृतिविकृतित्वं, विकारत्वं, पुरुषत्वं, एते चत्वार

इत्यन्यथोपगमात् । पुरुषे वैलक्षण्याभावप्रसङ्गश्च । किञ्च नायं श्रुत्यर्थ इति श्रुता-
देव प्रतीयते । अतिरेकादाकाशश्चेति । चकारादात्मा यस्मिन्नित्यधिकरणत्वेनोक्तः।
तस्मान्नानेनापि मन्त्रेण तन्मतसिद्धिः ॥ १।४।११ ॥

( वाक्यशेषादपि न तन्मतं श्रौतम् )

प्राणादयो वाक्यशेषात् ॥ १।४।१२ ॥

नन्ववश्यं मन्त्रस्यार्थो वक्तव्यः । तदनुरोधेन लक्षणयाऽपि ज्योतिःशास्त्रवत्पञ्च-
पञ्चशब्दः पञ्चविंशतिवाचकतया परिकल्प्यः । स्पष्टमाहात्म्यार्थमात्माकाशयो-
राधाराधेयभावः प्रदर्शितस्तत्रत्ययोरेव । अतो मन्त्रे तन्मतसिद्धिरित्याशङ्क्य परि-
हरति । प्राणादयः पञ्चजनाः । वाक्यशेषस्य मन्त्रार्थनियामकत्वात् । "प्राणस्य
प्राणमुत चक्षुषश्चक्षुः श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो मनः" ( बृ. ४।४।१८ ) इति ।

ननु कथमस्य वाक्यशेषत्वम् । उच्यते । प्राणादयः सञ्ज्ञाशब्दाः करणवाचकाः ।
ते ज्ञानरूपं वा क्रियारूपं वा कार्यं जनयन्ति स्वव्यापारेण । तेन तेषां करणान्त-
रापेक्षाभावात् प्राणादीनां पुनः प्राणादिमत्त्वं बाधितं स्यात् । भगवतो माहात्म्य-
विरोधश्च । अतः स्वार्थनिर्वाहार्थमन्यार्थो वर्तते पञ्चजनवाक्यस्य च । अतो बुद्धेः

---

एव तैरुपगमात् । अथच चतुर्णां मध्ये द्वौ एकनिष्ठौ, एकः सप्तनिष्ठः, एकः षोडशनिष्ठः, पञ्चनिष्ठः
कोऽपि न भवतीत्यन्यथैवोपगमात् इत्यर्थः । जनयन्तीति । योगेन जनशब्दस्य तत्त्ववाचकत्वे
पुरुषेऽपि जनकत्वे सिद्धे निर्लेपत्वं न स्यादित्याशयेन दूषणान्तरमाहुः—पुरुषेऽपीति । तन्मते प्रकृतिः
कर्त्री पुरुषस्य निर्लेपत्वं प्रकृतिविकृत्यपेक्षया विलक्षणत्वमिति तस्यापि जनशब्दे वाच्यत्वे वैलक्षण्यं न
स्यादित्यर्थः । सौत्रं हेत्वन्तरं विशदयन्ति—किञ्चेति । कथं प्रीतीयत इत्यत आहुः—अतिरेका-
दिति । त्वदीयतत्त्वापेक्षया श्रुतौ आत्माकाशयोराधिक्यं श्रूयते इत्यर्थः ॥

प्राणादयो वाक्यशेषात् । सूत्रप्रयोजनमाहुः—नन्विति । तदनुरोधेनेति । अन्वयानु-
पपत्त्या लक्षणाश्रयणं प्रकृते मन्त्रार्थान्वयानुपपत्त्या ज्योतिःशास्त्रे यथा गणे लक्षणा तथा पञ्चपञ्चेतिवाक्यस्य
पञ्चविंशतिसङ्ख्यायां लक्षणया वाक्यार्थः कल्प्य इत्यर्थः । ननु तथापि आत्माकाशयोरतिरेकदूषणं तद-
वस्थमत आह—स्पष्टेति । आत्मन इति शेषः । तत्र ते इति । तत्रत्ययोरात्माकाशयोराधाराधेय-
भावः महात्म्यार्थमित्यर्थः । परिहारप्रकारमाहुः—प्राणादय इति । निश्चिता इति शेषः । वाक्यशेष-
माहुः—प्राणस्येति । अस्य वाक्यशेषत्वांशे साङ्ख्यः शङ्कते—नन्विति । कथमिति । पूर्वोत्तरवा-
क्ययोरेकवाक्यतायाः अभावात्कथमित्यर्थः । एकवाक्यतां सम्पाद्याशङ्कां निराकुर्वन्ति—उच्यत इति ।
पुनः प्राणादिमत्त्वमिति । "प्राणस्य प्राणमि"त्यादिनेति विशेषः । विरोधश्चेति । भगवदपेक्षाया
अभावे उत्तरार्धे ते निचिक्युरित्यादिना भगवन्महात्म्यनिरूपणमस्तीति विरोधः । तव मते ईश्वरानङ्गीकारा-
त्सुतरामित्यर्थः । तथाच विरोधपरिहारार्थं काचिदपायभूता एकवाक्यताऽस्तीत्याहुः—अत इति । अतः
कारणादित्यर्थः । स्वार्थमिति । कार्यरूपार्थमित्यर्थः । अन्यार्थ इति । अन्यश्चासावर्थश्चान्यार्थः ।
क्वचिदन्योऽर्थ इति पाठः । अन्येऽर्थे इति पाठे तु वाक्यस्येति षष्ठी प्रथमार्थे बोध्येत्यस्वरसः । पञ्चज-
नवाक्यस्य चेति । चकारात् वाक्यशेषस्याप्यन्योऽर्थो वर्तत इत्यर्थः । पञ्चजनवाक्यस्यार्थमाहुः—
अतो बुद्धेरिति । प्राणादयः पञ्च, बुद्धेः पञ्चवृत्तीर्जनयन्तीति पञ्चजना इत्यर्थः । का वा बुद्धेः पञ्चवृ-

पञ्च वृत्तीर्जनयन्तीति प्राणादयः पञ्चजनाः। "संशयोऽथ विपर्यासो निश्चयः स्मृतिरेव च। स्वाप इत्युच्यते बुद्धेर्लक्षणं वृत्तितः पृथक्" ( भा. ३।२६।३० ) इति तेषां तत्तत्प्रकारकं स्वकार्यजननं न स्वतः, किन्तु भगवत इति द्वयोरेकार्थत्वे सर्वं सङ्गतं स्यात्। खण्डत्वाच्च शेषत्वम्। सर्वप्रवृत्तिकत्वाद्भगवतो न माहात्म्यविरोधः। तत्र प्राणशब्देन त्वग्घ्राणप्राणा गृहीताः। रसना चान्ने प्रतिष्ठिता इत्यन्नं गृहीतम्। वाग्वा तेजसि। अत्ता चान्नं चैकत्र भवतः। सहभावित्वात्। क्वचिदेकग्रहणं क्वचिदुभयग्रहणमिति। तेन ते सर्वे पञ्चैव भवन्त्यतिरिच्यते परमाकाशः। तस्मात्प्राणादय एव पञ्चजना इति न तन्मतसिद्धिः ॥ १।४।१२ ॥

( काण्वपाठे ज्योतिषा सङ्ख्यापूर्तेरसिद्धं साङ्ख्यमतम् )

ज्योतिषैकेषामसत्यन्ने ॥ १।४।१३ ॥

काण्वपाठे–अन्नस्यान्नमिति नास्ति तदा कथं पञ्च। तत्राह। ज्योतिषा सङ्ख्यापूर्तिस्तेषाम्। यस्मादर्वाक् सम्वत्सर इति पूर्वं पठितो मन्त्रः। तत्र–"तद्देवा ज्योतिषां ज्योतिः" ( बृ. ४।४।१६ ) इत्यन्नस्थाने ज्योतिर्ग्राह्यम्। व्याख्यातं पूर्वमेव। तस्मादसिद्धं तन्मतस्य श्रुतिमूलत्वम् ॥ १।४।१३ ॥ ३ ॥

---

तीरित्यत आहुः—संशयेति। "प्राणस्य प्राणमि"ति वाक्यशेषस्य प्राणादिरूपाधिदैविकार्थभगवत्परत्वमाहुः—तेषामिति। एकार्थत्वे एकब्रह्मज्ञानरूपप्रयोजनकत्वे सर्वं सङ्गतमिति शेषप्राणादिवाक्येन कर्ता पञ्चजनवाक्येन च करणं बोध्यते इति "अर्थैक्यादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यादि"ति जैमिनिसूत्रेण कर्तुं करणाकाङ्क्षा करणस्य च कर्त्राकाङ्क्षेति तयोः साकाङ्क्षत्वेन बुद्धिवृत्तिजनको भगवानित्येक एवार्थे बोधिते ब्रह्मज्ञान भगवन्माहात्म्यज्ञानं च जायते इति सर्वं सङ्गतं स्यादित्यर्थः। ननु कर्तृबोधकत्वेन प्राणादिवाक्यस्य,मुख्यत्वाच्छेषत्वं कथमित्यत आहुः—खण्डत्वादिति। साकाङ्क्षत्वेन पूर्ववाक्यात्पृथक् प्रयोगादित्यर्थः। ननु योगशास्त्रे येन प्राणायामादिसाधनं क्रियते चेत् तस्यैव सिद्धिर्दृश्यते इति जीवस्यैव प्रवर्तकत्वमिति माहात्म्यविरोधः स्यादित्यत आहुः—सर्वेति। प्राणायामादिसाधने जीवप्रवर्तकत्वं भगवत एव बोध्यमिति न काऽप्यनुपपत्तिः। अथवा क्वचित् सर्वेनेति पाठः। सर्वत्र प्राणस्य प्राणं चक्षुषश्चक्षुरित्यादिना भगवत एव सर्वत्र प्रवर्तकत्वोक्तेः। ननु पञ्चप्रवर्तकत्वमस्तु सर्वप्रवर्तकत्वं कथमित्यतः पञ्चसु सर्वनिवेशमाहुः—तत्रेति। त्वगिति। प्राणस्य वायुरूपत्वेन तद्ग्राहकत्वचः तत्सहचरितप्राणस्य प्राणशब्दवाच्यानामपानादीनामपि प्राणशब्देन ग्रहणमित्यर्थः। गृहीतमिति। तेन रसनापि गृहीतेत्यर्थः। वाग्वेति। वानाम पाठान्तरे अत्र स्थाने ज्योतिः पठित ज्योतिः शब्देन तेजः, वाक् तेजोमयीति वाक् तेजसि प्रतिष्ठितेति तेज.पदेन वाक्सङ्ग्रह इत्यर्थः। उभयग्रहणमिति त्वक्प्राणोभयोर्ग्रहणम्। तेनेति। पूर्वोक्तानां प्राणवाक्यसङ्ग्रहीतत्वेन चक्षुःश्रोत्रादीनां कण्ठतः उक्तत्वेनेत्यर्थः। आकाश इति। स च भूतानां तद्गुणानां चोपलक्षकः। तथाचैतेषां ब्रह्मणि प्रतिष्ठितत्वोक्त्या प्राणवाक्ये प्रवर्तकत्वोक्त्या च जीवो न सिध्यतीति भावः। उपसंहरन्ति—तस्मादिति। पञ्चजना इति। योगेनेति शेषः ॥

ज्योतिषैकेषामसत्यन्ने एकेषां काण्वानां पाठे असत्ये असति ज्योतिषा सङ्ख्यापूर्तिरिति सूत्रार्थः। अन्यत् स्पष्टम्। इति तृतीयाधिकरणम् ॥

---

१ अत्रेत्थं व्याख्यानान्तराणि—

(१) तत्र शाङ्कराः—पूर्वमाध्यात्मिकाधिकारे प्रसिद्धच्छागग्रहणायोगात् अजा तेजआदिकेत्युक्तम्।

तथा "यस्मिन्पञ्च पञ्चजनाः" इति मन्त्रे पञ्चजनशब्देन प्रसिद्धमनुष्यग्रहणायोगात्साङ्ख्याभिमतपञ्च-विंशतितत्त्वग्रहणमस्त्विति दृष्टान्तसङ्गत्येदमाह । अत्र फलं पूर्ववद्द्रष्टव्यम् । बृहदारण्यके श्रूयते—"यस्मिन्पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः" इत्यादि । तत्र किं पञ्चजनशब्देन मूलप्रकृत्यादीनि पञ्चविंशतितत्त्वान्युच्यन्ते, उत वाक्यशेषगताः प्राणादय इति संशये, तत्त्वानीति पूर्वः पक्षः । सिद्धान्तस्तु—अस्मिन्मन्त्रे श्रूयमाणया पञ्चविंशतिसङ्ख्यया स्मृतिसिद्धपञ्चविंशतितत्त्वानामुपसङ्ग्रहादपि न प्रधानस्य शब्दवत्त्वम् । कुतः ? नानाभावात् । तेषां पञ्चानां पञ्चकानामेकपञ्चकपर्याप्तान्यपञ्चकव्यावृत्तधर्मवत्त्वाभावेन नानात्वात् । नानात्वेऽपि कथञ्चित्पञ्चविंशतिसङ्ख्याङ्गीकारे बाधकान्तरमाह—अतिरेकाच्च । अस्मिन्मन्त्रे श्रूयमाणयोरात्माकाशयोः पञ्चविंशतितत्त्वातिरिक्तत्वात्सप्तविंशतितत्त्वप्राप्तावपसिद्धान्तापातः । तस्मान्नात्र प्रधानादितत्त्वग्रहणमुचितम् ॥ ननु ते पञ्चत्वसङ्ख्याकाः पञ्चजनाः क इत्यपेक्षायामाह—प्राण एव आदिर्येषां प्राणचक्षुःश्रोत्रान्नमनसां ते प्राणादयः पञ्चजनशब्देनोच्यन्ते । कस्मात् ? वाक्यशेषात् । "प्राणस्य प्राणमुत चक्षुषश्चक्षुः" इत्यादिवाक्यशेषस्थत्वादित्यर्थः ॥ नन्वस्तु माध्यन्दिनानां प्राणादिष्वन्नस्याम्नानात्पञ्चसङ्ख्या । काण्वानां तु तदनाम्नानात्कथं पञ्चसङ्ख्येत्यत आह—एकेषां काण्वानामसत्यन्ने "तद्देवा ज्योतिषां ज्योतिः" इत्यादिपूर्ववाक्यस्थज्योतिषा पञ्चत्वं पूरणीयम् । अतः प्रधानमशब्दमिति सिद्धम् ॥

(२) रामानुजीये—वाजसनेयिनः समामनन्ति "यस्मिन्पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः, तमेव मन्य आत्मानं विद्वान्ब्रह्मामृतोऽमृतम्" इति । किमयं मन्त्रः कापिलतन्त्रसिद्धतत्त्वप्रतिपादनपर उत नेति सन्दिह्यते । किं युक्तम् ? तन्त्रसिद्धतत्त्वप्रतिपादनपर इति । कुतः ? पञ्चशब्दविशेषितात्पञ्चजनशब्दात्पञ्चविंशतितत्त्वप्रतीतेः । एतदुक्तं भवति । पञ्चजना इति समासः समाहारविषयः । पञ्चजनाः । पञ्चानां जनानां समूहाः पञ्चजनाः पञ्चपूल्य इतिवत् । पञ्चजना इति लिङ्गव्यत्ययश्छान्दसः । ते च समूहाः कतीत्यपेक्षायां पञ्चजनशब्दविशेषणेन प्रथमेन पञ्चशब्देन समूहाः पञ्चेति प्रतीयन्ते, यथा पञ्च पञ्चपूल्य इति । अतः, पञ्च पञ्चजना इति पञ्चविंशतिपदार्थाविगतौ ते कतम इत्यपेक्षायां मोक्षाधिकारान्मुमुक्षुभिर्ज्ञातव्यतया स्मृतिप्रसिद्धाः प्रकृत्यादय एव ज्ञायन्ते । "मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त । षोडशकश्च विकारो न प्रकृतिर्न विकृतिः पुरुषः" इति हि कापिलानां प्रसिद्धिः । अतस्तन्त्रसिद्धतत्त्वप्रतिपादनपर इति प्राप्ते प्रचक्ष्महे, न सङ्ख्योपसङ्ग्रहादपीति । पञ्च पञ्चजना इति पञ्चविंशतिसङ्ख्योपसङ्ग्रहादपि न तन्त्रसिद्धतत्त्वप्रतीतिः । कुतः ? नानाभावात् । एषां पञ्चसङ्ख्याविशेषितानां पञ्चजनानां तन्त्रसिद्धेभ्यस्तत्त्वेभ्यः पृथग्भावात् । "यस्मिन्पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः" इत्येषां यच्छब्दनिर्दिष्टब्रह्माश्रयतया ब्रह्मात्मकत्वं हि प्रतीयते । "तमेव मन्य आत्मानं विद्वान्ब्रह्मामृतोऽमृतम्" इत्यत्र तमिति परामर्शेन यच्छब्दनिर्दिष्टं ब्रह्मेत्यवगम्यते । अतस्तेभ्यः पृथग्भूताः पञ्च पञ्चजना इति न तन्त्रसिद्धा एते । अतिरेकाच्च तन्त्रसिद्धेभ्यस्तत्त्वेभ्योऽत्र तत्त्वातिरेकोऽपि भवति । यच्छब्दनिर्दिष्ट आत्माकाशश्चात्रातिरिच्यते । अतः, "तं षड्विंशकमित्याहुः सप्तविंशमथापरे" इति श्रुतिप्रसिद्धसर्वतत्त्वाश्रयभूतः सर्वेश्वरेश्वरः परमपुरुषोऽत्राभिधीयते । न सङ्ख्योपसङ्ग्रहादपीत्यपिशब्दस्य पञ्च पञ्चजना इत्यत्र पञ्चविंशतितत्त्वप्रतीतिरेव न सम्भवतीत्यभिप्रायः । कथम् ? पञ्चभिरारब्धसमूहपञ्चकाभावात् । न हि तन्त्रसिद्धतत्त्वेषु पञ्चसु पञ्चस्वनुगतं तत्तत्सङ्ख्यानिवेशनिमित्तं जात्याद्यस्ति । न च वाच्यं पञ्च कर्मेन्द्रियाणि पञ्च ज्ञानेन्द्रियाणि पञ्चमहाभूतानि पञ्चतन्मात्राण्यवशिष्टानि पञ्चेत्यवान्तरसङ्ख्यानिवेशनिमित्तमस्त्येवेति ।

आकाशस्य पृथङ्निर्देशेन पञ्चभिरारब्धमहाभूतसमूहासिद्धेः। अतः, पञ्चजना इत्ययं समासो न समाहारविषयः। अयं तु "दिक्सङ्ख्ये सञ्ज्ञायाम्" इति सञ्ज्ञाविशेषविषयः। अन्यथा पञ्चजना इति लिङ्गव्यत्ययश्च। पञ्चजना नाम केचित् सन्ति। ते च पञ्चसङ्ख्यया विशेष्यन्ते पञ्च पञ्चजना इति। सप्त सप्तर्षय इतिवत्। के पुनस्ते पञ्च पञ्चजना इत्यत्राह—"प्राणस्य प्राणमुत चक्षुषश्चक्षुः श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो ये मनो विदुः" इति वाक्यशेषोपादानाश्रयाः प्राणादय एव पञ्च पञ्चजना इति विज्ञायन्ते। अथ स्यात्काण्वानां माध्यन्दिनानां च यस्मिन्पञ्च पञ्चजना इत्ययं मन्त्रः समानः। प्राणस्य प्राणमित्यादिवाक्यशेषे काण्वानामन्नस्य पाठो न विद्यते। तेषां पञ्च पञ्चजनाः प्राणादय इति न शक्यते वक्तुमिति। अत्रोत्तरम्। एकेषां काण्वानां पाठे सत्यन्ने ज्योतिषा पञ्चजना इन्द्रियाणीति विज्ञायन्ते। तेषां वाक्यशेषः प्रदर्शनार्थः। एतदुक्तं भवति। यस्मिन्पञ्च पञ्चजना इत्यस्मात्पूर्वस्मिन्मन्त्रे "तं देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम्" इति ज्योतिषां ज्योतिष्ट्वेन ब्रह्मण्यभिधीयमाने ब्रह्माधीनस्वकार्याणि कानिचिज्ज्योतींषि प्रतिपन्नानि। तानि च विषयाणां प्रकाशकानीन्द्रियाणीति। यस्मिन्पञ्च पञ्चजना इत्यनिर्धारितविशेषनिर्देशेनावगम्यन्त इति। प्राणस्येति प्राणशब्देन स्पर्शेन्द्रियं गृह्यते। वायुसम्बन्धित्वात्स्पर्शेन्द्रियस्य मुख्यप्राणस्य ज्योतिःशब्देन प्रदर्शनायोगात्। चक्षुष इति चक्षुरिन्द्रियम्। श्रोत्रस्येति श्रोत्रेन्द्रियम्। अन्नस्येति घ्राणरसनयोस्तन्त्रेणोपादानम्। अन्नशब्दोदितपृथिवीसम्बन्धित्वाद् घ्राणेन्द्रियमनेन गृह्यते। अद्यतेऽनेनेत्यन्नमिति रसनेन्द्रियमपि गृह्यते। मनस इति मनः। घ्राणरसनयोस्तन्त्रेणोपादानमिति पञ्चत्वमप्यविरुद्धम्। प्रकाशकानि मनःपर्यन्तानीन्द्रियाणि पञ्चजनशब्दनिर्दिष्टानि। तदविरोधाय घ्राणरसनयोस्तन्त्रेणोपादानम्। तदेवम्। "यस्मिन्पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः" इति पञ्चजनशब्दनिर्दिष्टानीन्द्रियाण्याकाशशब्दप्रदर्शितानि महाभूतानि च ब्रह्मणि प्रतिष्ठितानीति सर्वतत्त्वानां ब्रह्माश्रयत्वप्रतिपादनान्न तन्त्रसिद्धपञ्चविंशतितत्त्वप्रसङ्गः। अतः, सर्वत्र वेदान्ते सङ्ख्योपसङ्ग्रहे तदभावे वा न कापिलतन्त्रसिद्धतत्त्वप्रतीतिरस्तीति स्थितम्॥

(३) माध्वे—"यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठित" इत्यादिषु बहुसङ्ख्योपसङ्ग्रहेऽपि न विरोधः। तस्यैवाकाशादिषु नानाभावात्तदतिरिक्तस्वरूपत्वाच्च। पञ्च पञ्चजनानाह "प्राणस्य प्राणमुत चक्षुषश्चक्षुः श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो मन" इति वाक्यशेषात्। तद्देवा ज्योतिषां ज्योतिरित्यनेन कारणानां पञ्चकम्।

(४) निम्बार्के—न च "यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः" इति सङ्ख्योपसङ्ग्रहादपि प्रधानादीनां पञ्चविंशतिपदार्थानां श्रुतिमूलकत्वमस्ति, प्रधानस्यैकस्य श्रुतिवेद्यत्वे को विवाद इति वक्तव्यम्। कुतः? नानाभावात्। यस्मिन्निति श्रुतिसिद्धे ब्रह्मणि प्रतिष्ठितानां पदार्थानां ब्रह्मात्मकत्वप्रतीत्या तान्त्रिकेभ्यः पृथक्त्वात्। आधारस्य ब्रह्मणो हि तथाकाशस्य चातिरेकत्वाच्च॥ "प्राणस्य प्राणमुत चक्षुषश्चक्षुः श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो ये मनो विदुरि"ति वाक्यशेषाच्च पञ्चजनाः प्राणादयो बोध्याः॥ काण्वानां वाक्यशेषे त्वसत्यन्ने उपक्रमगतेन ज्योतिषा पञ्चत्वपूरणीम्॥

(५) भैक्षवे—विरोध इति च्छेदेनानुवर्तते। अथ वा पूर्वसूत्रे निषेधार्थकपृथक्पदमेव वा शब्दः। तथाच अजावाक्ये एकत्वसङ्ख्याग्रहणाद्यो विरोधः प्रसज्यते सोऽपि नेत्यर्थः। अत्र हेतुस्त्वतिविस्तरभयात्पृथक्सूत्रैर्वक्ष्यते। नन्वजामेकामित्येकत्वस्य कुतो विरोधः प्रसक्त इति तत्राह नानाभावादिति। काण्वादिशाखान्तरे "यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः तमेवमन्य आत्मानं विद्वान् ब्रह्मामृतोऽमृतमित्या"दिना प्रधानकेनानात्वावगमादित्यर्थः। अत्र हि पञ्च पञ्चजना इत्यादिना शक्तिनिरो-

पाणां प्रलयकालीनानामेव ग्रहणं वाच्यं कार्य्यशक्तिपरत्वे तासामनन्तत्वेन पञ्चपञ्चेत्याकाशश्चेति विशेषवचनासामञ्जस्यात्तत्कथमुच्यते एकामजां बह्वीः प्रजाः सृजमानामिति । ननु साङ्ख्योक्तिं पञ्चविं- शतितत्त्वपरतया अत्र वाक्ये मुख्यकार्यमादायावान्तरभेदेनैकस्या एवाजायाश्चतुर्विंशतिसङ्ख्योपपादनी- येति शङ्कायां दूषणान्तरमाह अतिरेकाच्चेति । पञ्चविंशत्यतिरिक्तस्याकाशस्य शक्तिमध्ये पाठाच्चेत्यर्थः । पूर्वसूत्रेण प्रतिज्ञाते विरोधाभावे हेतुमाह । यद्यप्यत्र सूत्रे हेतुतावाचकः शब्दो नास्ति, तथापि "वासस्ते मलिनं राजकुलं मागा" इत्यादाविव हेतुता लभ्यते, तृतीयसूत्रपर्य्यालोचनयेति बोध्यम् । तथाचायं सूत्रार्थः—यस्मिन् पञ्च पञ्चजना इत्युदाहृतवाक्ये प्राणादयः पञ्चैव पुरुषभेदेन व्यक्तिभेदात् पञ्चपञ्चेति वीप्सयोक्ताः, ते च कार्य्यभूता एव शक्तय इति । तथा च तेषां नानात्वेऽपि न मूलशक्तेरजाया एकत्वं विरुध्यत इति तृतीयसूत्रेण वक्ष्यति । हेतुमाह वाक्यशेषादिति । "प्राणस्य प्राणमुत चक्षुषश्च- क्षुरुत श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो ये मनो विदुरि"ति अव्यवहितवाक्यशेषाच्चप्रोक्ताः षष्ठ्यन्तप्रा- णादिशब्दार्था एव प्राणादयः पञ्च प्रतिपुरुषव्यक्तिभेदेन वीप्सया पूर्ववाक्यप्रयुक्ता इत्यर्थः । अत्र वाक्ये प्राणस्य प्राणमित्यादिवचनात्पूर्ववाक्येऽपि शक्तिमति ब्रह्मणि प्रतिष्ठितत्वं प्राणादेर्लभ्यते शेषस्य प्राणादिशब्दपञ्चकस्य प्रेरकस्य प्रेरकतामात्रार्थकत्वात् । केनेषितोपनिषदि "केनेषितं पतति प्रेषितं मन" इत्यादिप्रश्नस्यान्तैव "श्रोत्रस्य श्रोत्रं मनसो मनो यदि"त्यादिप्रत्युत्तरदर्शनात्प्राणः कम्पनादित्यादिगतसूत्रे- ष्वश्चेति । ननु भवत्वेवं माध्यन्दिनशाखायां, काण्वे तु, चतुर्णामेव प्राणचक्षुःश्रोत्रमनसां च वाक्यशेषे पाठात्, पञ्चत्वानुपपत्तिरित्याशङ्क्य, काण्वेऽपि ज्योतिषां पञ्चत्वमुपपादयति । एकेषां काण्वानामन्ने- ऽसति ज्योतिषा पञ्चसङ्ख्या पूरणीया "तद्देवा ज्योतिषां ज्योतिरि"ति पूर्वमुक्तत्वादित्यर्थः । माध्यन्दिने तु पञ्चसङ्ख्यायाः प्राणादिवाक्येनैव पूरणादत्र ज्योतिर्वाक्यस्य सत्त्वसाम्येऽपि तदाऽऽकाङ्क्षेति भावः । पतेन यस्मिन् पञ्च पञ्चजना इति वाक्यस्य कार्य्यशक्तिपरतया प्रधानातिरिक्तस्याकाशस्य शक्तिमध्य- पाठेऽपि न प्रधानमात्रस्य मूलशक्तेरेकत्वविरोध इत्यप्युक्तप्रायं वेदितव्यम् ॥

(६) भास्करीये—यस्मिन् "पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः तमेवमन्य आत्मानं विद्वान् ब्रह्मामृतोऽमृतमि"ति । अस्मिन् मन्त्रे पञ्चसङ्ख्याविषया अपरा पञ्चसङ्ख्या श्रूयते । ततश्च पञ्चपञ्चकाः पञ्चविंशतिपदार्थाः सम्पद्यन्ते । अर्थतश्च सर्यन्ते साङ्ख्यैः "मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिवि- कृतयः सप्त । षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः" ॥ अत्रोच्यते, न सङ्ख्योपसङ्ग्रहादपि प्रधानादीनां श्रुतिमत्त्वम् । अपिशब्दः सम्भावनायाम् । कुतः ? नानाभावात् । साङ्ख्यकल्पितानां पञ्च- विंशतितत्त्वानां पृथग्भावात् । अन्तरार्थे पञ्चसङ्ख्यानिबन्धनं नास्ति, यत्रावान्तरसङ्ख्यानिवेशतः । सङ्ख्या- शब्दो हि प्रयुज्यमानो जातिगुणक्रियां चोपादाय प्रयुज्यते । न चात्रान्तराले पञ्चसङ्ख्यानिवेशनिमि- त्तमन्यतमं यत्पश्यामः । तस्माद् "दिक्सङ्ख्ये सञ्ज्ञायामि"ति समासोऽनुसर्तव्यः । पञ्चजना नाम केचित् ते पञ्चेतिसङ्ख्यया विशिष्यन्ते । यथा सप्तर्षयः सप्तेत्येकैकोऽपि सप्तर्षिः । जनशब्दोऽपि न तत्त्वे प्रसिद्ध- स्तस्मादप्रत्यभिज्ञानम् । अतिरेकाच्च । यस्मिन्निति सप्तम्यात्मा निर्दिश्यते । तथाकाशश्च प्रतिष्ठित इत्याकाशोऽतिरिच्यते । ततश्च सप्तविंशतितत्त्वानि सम्पद्यन्ते ॥ के पुनस्ते पञ्चजनाः प्राणादयः । कथम् ? वाक्यशेषात् । "प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो ये मनो विदुरि"ति ॥

माध्यन्दिनानां मन्त्रे अन्नेन प्रपूरणं असत्यन्ने ज्योतिषा पूरणमेकेषां काण्वानां न तेऽन्नं प्राणादिषु पठन्ति पञ्च पञ्चजना इत्यस्मात् पूर्वस्मिन् मन्त्रे तद्देवा ज्योतिषां ज्योतिरिति पठन्ति ॥

(७) श्रीमद्वल्लभाचार्यमतेऽयमभिप्रायः—ननु बृहदारण्यके चतुर्थप्रपाठके श्रूयते "यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः, तमेवमन्य आत्मानं विद्वान् ब्रह्मामृतोऽमृतमि"ति । अर्थस्तु यस्मिन्नेते पञ्चादय आकाशान्ताः प्रतिष्ठिताः, तमात्मानमेवं ब्रह्मामृतं विद्वानन्यो जीवः अमृतो मुक्तो भवतीति शेषः । अत्र पञ्चगुणिताः पञ्च पञ्चपञ्च जनयन्तीति जनास्तत्त्वानि । पुरुषस्यापि छत्रिन्यायेन जनत्वात् तत्सङ्ख्यापूर्तेः । तथा चैवं पञ्चविंशतितत्त्वानां सङ्ख्योपसङ्ग्रहादस्मिन् मन्त्रेऽस्ति साङ्ख्यमतसिद्धिरित्याशङ्क्याह । न सङ्ख्येत्यादि । उक्तरीत्या सङ्ख्योपसङ्ग्रहादपि न साङ्ख्यमतस्यात्र प्रत्याशा । कुतः ? नानाभावात् । पञ्चविंशतिसङ्ख्यासङ्ग्राहकधर्माणां तन्मते पञ्चपञ्चकनिष्ठत्वाभावेन तेभ्यो भिन्नत्वात् । यदि ह्येवं पञ्च पञ्चपदेन तेषां सा सङ्ख्या सङ्ग्राह्या स्यात्तदा ते भूतत्वतन्मात्रत्वाकृतित्वचित्त्वान्तःस्थत्वरूपानेकैकपञ्चकनिष्ठान् पञ्च धर्मान् ब्रूयुर्न तु "मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त । षोडशकश्च विकारो न प्रकृतिर्न विकृतिः पुरुष" इति मूलप्रकृतित्वप्रकृतिविकृतित्वपुरुषत्वाख्यांश्चतुरोऽन्यथा ब्रूयुः । अतो नैवं तन्मतप्रत्याशा । किञ्च, नायं श्रुत्यर्थ इति श्रुतावेव प्रतीयते । कुतः ? अतिरेकाच्चेति । पञ्च पञ्चजनेभ्य आकाशश्च प्रतिष्ठित इत्याकाशस्य यस्मिन्नित्यनेनोक्तस्यात्मनश्चाधिक्यात् । तथाच नानेनापि मन्त्रेण तन्मतसिद्धिरित्यर्थः ॥

ननु पञ्चविंशतिसङ्ख्योपसङ्ग्रहे मन्त्रवर्णविरोधो दोषत्वेनोक्तः । स तु नास्माकमस्ति । यथाच, "पञ्च सप्त च वर्षाणि न ववर्ष शतक्रतु"रित्यत्र द्वादशसङ्ख्याघटकतया पञ्च सप्तेति पदद्वयेऽवयवद्वारा समुदायलक्षणा । यथा वा, "त्रिणवेनौजस्कामं याजयेत्, युद्धं त्रिणवरात्रं तदभूत्तुमुलमुल्बणम्" इत्यत्र त्रयो नव यत्रेति बहुव्रीहिणा सुब्लुका च गणलक्षणा, तथात्रापि पदद्वये लक्षणया बहुव्रीहिघटित एकपदे लक्षणया वा पञ्चविंशसङ्ख्यां ज्योतिःशास्त्रवत् परिकल्प्य, यस्मिन्नात्मनि पञ्चविंशति तत्त्वान्याकाशश्च परार्थत्वेन ज्ञेयत्वरूपां प्रतिष्ठां प्राप्तस्तमात्मानमेव ब्रह्मामृतं विद्वानमृतो भवतीति मन्य इत्यर्थात् । नच तत्त्वेष्वात्माकाशयोः प्रविष्टत्वात् पुनस्तत्कथनमतिरेकापादकमिति शङ्क्यम्, कामात्ममाहात्म्यस्य स्फुटीकरणाय तयोः पुनरुक्तेः । नच विनिगमकाभावात्तुल्यत्वं शङ्क्यम् । भवन्मतसिद्धपञ्चसङ्ख्या वा पञ्चविंशतिसङ्ख्याका वा जना पञ्चसङ्ख्या वा पञ्चजना इति त्रिष्वर्थेष्वेकतरस्य निश्चेतुमशक्यत्वेनास्माकं च निश्चितत्वेनास्मन्मतस्य ज्यायस्त्वादित्याशङ्कायामाह, प्राणादय इत्यादि । प्राणादयः पञ्चजनाः । कुतः ? वाक्यशेषात् । पञ्चजनवाक्योत्तरं "प्राणस्य प्राणमुत चक्षुषश्चक्षुः श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो ये मनो विदु"रिति वाक्यशेषोऽस्ति । तत्र षष्ठ्यन्ताः प्राणादय उक्ताः, ते च संशयाद्याः पञ्च बुद्धिवृत्तीर्जनयन्तीति पञ्चजनाः । अतस्त एव ग्राह्याः । वृत्तयस्तु "संशयोऽथ विपर्यासो निश्चयः स्मृतिरेव च । स्वाप इत्युच्यते बुद्धेर्लक्षणं वृत्तितः पृथक्" इति तृतीयस्कन्धे कपिलवाक्यादवगन्तव्याः । नन्वैकार्थ्ये सति विभागे साकाङ्क्षत्वस्यैकवाक्यतावीजत्वादत्र च साकाङ्क्षत्वस्याप्रतीयमानत्वात् कथं वाक्यशेषत्वावगतिरिति चेत्, इत्थम् ; प्राणादिपदानां क्रियाकरणवाचकत्वेन प्राणादीनां च तद्वाच्यानां स्वव्यापारे करणान्तरानपेक्षत्वेन पुनः प्राणादिमत्त्वं

बाधितं भवदुक्तस्य वाक्यस्यार्थान्तरं बोधयति । पञ्चजनवाक्ये पञ्चपञ्चजनपदमपि साङ्ख्यरीत्या पञ्चपञ्चकनिष्ठधर्मपञ्चकानुपलम्भेन बाधितं सत्तस्य वाक्यस्यार्थान्तरं बोधयति, तच्च ब्रह्ममाहात्म्यरूपम्, उभयत्रापि ब्रह्मपदात् । अत उभयोरैकार्थ्यम् । किञ्च, प्राणवाक्यं प्राणादीनां करणत्वं बोधयत् पञ्चजनवाक्यानूदितं कार्यमाकाङ्क्षते । पञ्चजनवाक्यं च तेषां पञ्चजनानां स्वस्वकार्यक्षमत्वाय तन्निराकाङ्क्षात्मकं प्राणवाक्योक्तं ब्रह्माकाङ्क्षत इत्युभयोरपि विभागे साकाङ्क्षत्वम् । एवमुभयोरेकवाक्यत्वे सत्यन्यस्य तत्खण्डत्वात् सुरेनैवास्य वाक्यदोषत्वावगतिं जानीहि । तस्मात् प्राणादय एव पञ्चजना इति नात्र साङ्ख्यमतसिद्धिरिति सिद्धम् ॥

ननु काण्वपाठे अन्नस्यान्नमिति नास्ति । तत्र कथं पञ्चसङ्ख्यापूर्तिरित्याकाङ्क्षायामाह । ज्योतिषेत्यादि । तेषामपि पाठे "यस्मादर्वाक्सम्वत्सर" इति मन्त्रोऽस्ति । तत्र "द्वे वा ज्योतिषां ज्योतिरायुर्होपासतेऽमृत"मिति ज्योतिः पठ्यते । तेन तत्रपूर्तिरित्यर्थः । तस्मान्न साङ्ख्यमतस्य श्रुतिमूलकत्वमिति सिद्धम् ॥



## ४ यथाऽव्यपदिष्टाधिकरणम् ।

( यथाव्यपदेशात्साङ्ख्यस्मृतिर्नादर्तव्या )

**कारणत्वेन चाकाशादिषु यथाऽव्यपदिष्टोक्तेः ॥ १।४।१४ ॥**

श्रुतिविप्रतिषेधात्स्मृतिरेव ग्राह्येति मतं दूरीकर्तुं श्रुतिविप्रतिषेधो नास्तीत्यधिकरणमारभते । तत्र श्रुतौ सृष्टिभेदा बहवः । क्वचिदाकाशादिका "आत्मन आकाशः सम्भूतः" (तै. २।१) इति । क्वचित्तेजःप्रभृतिका "तत्तेजोऽसृजत" (छां. ६।२।३) इति । क्वचिदन्यथैव "एतस्माज्जायते प्राणः" (मुं. ५।१।३) इति । "इदꣳ सर्वमसृजत" (बृ. १।२।५) इति च । एवं क्रमव्युत्क्रमानेकविधसृष्टिप्रतिपादकत्वाद् वस्तुनो द्वैरूप्यासम्भवाद्–"ब्रह्म त्वा अनु प्रजापशवः प्रजायन्त" इतिवत्सृष्टिवाक्यानामर्थवादत्वेन ब्रह्मस्वरूपज्ञानार्थत्वादध्यारोपापवादन्यायेन न वेदान्तब्रह्मकारणत्वं सिद्ध्यति । अतः परिदृश्यमानजगतः कारणान्वेषणे क्रियमाणे वेद बाह्याबाह्यमतभेदेषु सत्सु कपिलस्य भगवज्ज्ञानांशावतारत्वात् तन्मतप्रकारेणैव जगद्व्यवस्थोचितेत्येवं प्राप्ते, उच्यते—

न सृष्टिभेदेषु ब्रह्मणः कारणत्वे विप्रतिपत्तिः । सर्वप्रकारेषु तस्यैव कारणत्वोक्तेः । आकाशादिषु कारणत्वेन ब्रह्म यथाव्यपदिष्टमेवैकत्र । अन्यत्रापि तदेव कारणत्वेनोक्तम् । "न तस्य कार्यं करणं च विद्यते" (श्वे. ६।८) इत्यादिनिराकरणं तु लौकिककर्तृत्वनिषेधपरम् । तस्यैव प्रतीतेः । सर्ववैलक्षण्यार्थं वैदिकानामबाधितार्थैकवाक्यत्वस्याभिप्रेतत्वादिति चकारार्थः । कार्यप्रकारे भेदस्तु माहात्म्यज्ञापको न तु बाधकः । बहुधा कृतिसामर्थ्यं लोकेऽपि माहात्म्यसूचकमिति । तस्मान्न श्रुतिविप्रतिषेधात्स्मृतिपरिग्रह इति सिद्धम् ॥ १।४।१४ ॥

---

**कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः** । अधिकरणप्रयोजनमाहुः—**श्रुतेरिति** । **विप्रतिषेधादिति** । परस्परविरोधादित्यर्थः । **मतं** साङ्ख्यं नास्तीति बोधनायेति शेषः । **अधिकरणमिति** । यथाव्यपदिष्टाधिकरणं विप्रतिषेधबोधकम् । विषयवाक्यमाहुः—**आत्मन इति** । **अन्यथैव** । साक्षात् एकदैव साक्षादाहुः—**एतस्मादिति** । युगपदाहुः—**इदमिति** । संशयस्तु विप्रतिषेधे जगत्कारणत्वबोधिका स्मृतिर्वा स्मृतिकारणीभूता श्रुतिर्वेत्येवं बोध्यः । पूर्वपक्षमाहुः—**एवमिति** । **ब्रह्मान्वेति** । इदं च तैत्तिरीये षष्ठाष्टके प्रपाठके वाक्यं ज्ञेयम् । सोमब्रह्मात् अनु पश्चात् प्रजाः पशवश्च प्रजायन्ते इदमर्थवादवाक्यं यथा ब्रह्मस्वरूपबोधनार्थं, न तु प्रजादिकारणत्वबोधनार्थं तथा सृष्टिवाक्यान्यपि ब्रह्मस्वरूपज्ञानार्थानीत्यर्थः । **अध्यारोपेति** । कर्तृत्वबोधकान्यकर्तृत्वबोधकान्यपि वाक्यानि सन्ति । तत्र परमते कर्तृत्वमध्यारोपापवादः । तद्वत् विप्रतिषेधान्न कारणत्वमित्यर्थः । **वेदबाह्याबाह्येति** । वेदबाह्यं गौतमकाणादमत तेषां मते परमाणूनामेव जगत्कारणत्वेन प्रतिपादनात्, अबाह्यं वेदमूलकं स्मार्तं साङ्ख्यम् ।

समाधानमाहुः—**उच्यत इति** । **यथाव्यपदिष्टमिति** । सच्चिदानन्दरूपवत्त्वेन सर्वेश्वरत्वेन यत्र यथाव्यपदिष्टं आकाशादिषु तदेव कारणत्वेनोक्तमित्यर्थः । अध्यारोपापवादस्तु न सम्यगित्याहुः—**न तस्येत्यादि** । इति चतुर्थाधिकरणम् ॥

---

१ अत्रेत्थं व्याख्यानान्तराणि—

(१) तत्र शाङ्कराः—इत्थमधिकरणत्रयेण प्रधानस्याशब्दत्वसाधनेन ब्रह्मणि वेदान्तानां सम-

न्वयः साधितः । अधुना तेषामेव परस्परविरुद्धार्थप्रतिपादके त्वनिध्यायकत्वादनुमानसिद्धप्र-
धानपर एवोक्तसमन्वयोऽस्त्वित्याक्षेपसङ्गत्या, पूर्वं पञ्चत्वसङ्ख्यापूरणमन्त्रे ज्योतिषा चेति विकल्पस्या-
विरोधेऽपि प्रकृते कारणे वस्तुनि विकल्पायोगाद्विरोधे सत्यप्रामाण्यं -वाक्यानामिति प्रत्युदाहरण-
लक्षणावान्तरसङ्गत्या चेदमाह । अत्र पूर्वोत्तरयोः पक्षयोः समन्वयासिद्धिः, तत्सिद्धिरिति फलभेदः ।
अत्र जगत्कारणत्वादिवाक्यानि ब्रह्मणि मानं न वेति विशये, तेषां परस्परविरोधदर्शनान्न मानमिति
पूर्वः पक्षः । सिद्धान्तस्तु—चशब्दः शङ्कानिरासार्थः । ब्रह्मणः कारणत्वे विरोधो नास्ति । कुतः ?
आकाशादिषु यथाव्यदिष्टोक्तेः । यथाभूत ईश्वरः कारणत्वेन व्यपदिष्ट एकस्मिन्वेदान्तवाक्ये तथा-
भूतस्यैवापरस्मिन्वाक्येऽप्युक्तेरभिधानादित्यर्थः ॥

(२) रामानुजीये—पुनः प्रधानकारणवादी प्रत्यवतिष्ठते । न वेदान्तेष्वेकस्मात् सृष्टिराम्ना-
यत इति जगतो ब्रह्मैककारणत्वं न युज्यते वक्तुम् । तथाहि—"सदेव सोम्येदमग्र आसीत्"
इति सत्पूर्विका सृष्टिराम्नायते । "असद्वा इदमग्र आसीत्" इत्यसत्पूर्विका च । अन्यत्र
"सदेवेदमग्र आसीत्तत्सदासीत्ततसमभवत्" इति च । अतो वेदान्तेषु स्रष्टुरव्यवस्थितेर्ज-
गतो ब्रह्मैककारणत्वं न निश्चेतुं शक्यम् । प्रत्युत प्रधानकारणत्वमेव निश्चेतुं शक्यते । "तद्धेदं
तर्ह्यव्याकृतमासीत्" इत्यव्याकृते प्रधाने जगतः प्रलयमभिधाय तन्नामरूपाभ्यां व्याक्रियत"
इत्यव्याकृतादेव जगतः सृष्टिश्चाभिधीयते अव्याकृतं ह्यव्यक्तम् । नामरूपाभ्यां न व्याक्रियते न व्यज्यत
इत्यर्थः । अव्यक्तं प्रधानमेव । अस्य च स्वरूपनित्यत्वेन परिणामाश्रयत्वेन च जगत्कारणवादिवाक्य-
गतौ सदसच्छब्दौ ब्रह्मणीवास्मिन्न विरोत्स्येते एवमव्याकृतकारणत्वे निश्चिते सतीक्षणादयः कारणगताः
सृष्ट्यौन्मुख्याभिप्रायेण योजयितव्याः । ब्रह्मात्मशब्दावपि बृहत्त्वव्यापित्वाभ्यां प्रधान एव वर्तेते ।
अतः, स्मृतिन्यायप्रसिद्धं प्रधानमेव जगत्कारणं वेदान्तवाक्यैः प्रतिपाद्यत इति प्राप्ते प्रचक्ष्महे
कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः । चशब्दस्तु शब्दार्थे । सर्वज्ञात्सर्वेश्वरात्सत्यसङ्कल्पा-
न्निरस्तनिखिलदोषगन्धात्परस्माद्ब्रह्मण एव जगदुत्पद्यत इति निश्चेतुं शक्यते । कुतः ? आकाशादिषु
कारणत्वेन यथाव्यपदिष्टस्योक्तेः । सर्वज्ञत्वादिविशिष्टत्वेन जन्माद्यस्य यतः इत्येवमादिषु प्रतिपादितं ब्रह्म
यथाव्यपदिष्टमित्युच्यते । तस्यैकस्यैवाकाशादिषु कारणत्वेनोक्तेः । "तस्माद्वा एतस्मादात्मन आकाशः
सम्भूतः" "तत्तेजोऽसृजत" इत्यादिषु सर्वज्ञं ब्रह्मैव कारणत्वेनोच्यते । तथा हि "सत्यं ज्ञानमनन्तं
ब्रह्म", "सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिता" इति प्रकृतं विपश्चिदेव ब्रह्म तस्माद्वा एतस्मा-
दिति परामृश्यते । तथा "तदैक्षत बहु स्याम्" इति निर्दिष्टं सर्वज्ञं ब्रह्मैव "तत्तेजोऽसृजत" इति
परामृश्यन्ते । एवं सर्वत्र सृष्टिवाक्येषु द्रष्टव्यम् । अतो ब्रह्मैककारणं जगदिति निश्चीयते ॥

(३) माध्वे—अवान्तरकारणत्वेनापि ■ एवोच्यते इति वक्ति आकाशादिष्ववान्तरकारणत्वेन
स एव स्थितः । यथाव्यपदिष्टस्यैव परस्य य आकाशे तिष्ठन्नित्यादिना आकाशादिषूक्तेः ।

(४) निम्बार्कः—सर्वज्ञं सर्वशक्ति ब्रह्मैव सर्वत्राकाशादिसृष्टिविषयकवाक्येषु ग्राह्यं, लक्षणसूत्रा-
दिषु यत्प्रकारकं ब्रह्म व्यपदिष्टं तत्प्रकारकस्यैवाकाशादिकारणत्वेन प्रतिपादितत्वात् ॥

(५) भैक्षवे—ननु तथापि एकशब्दस्याद्वितीयार्थकतया प्रधानमानशक्तित्वविरोध एव विष्णु-

पुराणादिषु जीवकालयोरपि शक्तित्वावगमादिति तत्राह । आकाशादिषु सङ्कल्पकार्य्येषु कारणत्वेन मूलप्रकृतित्वेन हेतुना यथा व्यपदिष्टस्याजामेकामितिवाक्यस्य प्रयोगादित्यर्थः । सृजमानाया उपादानकारणस्यैवाजाया एकत्वमुक्तं जीवकालौ च नाकाशाद्युपादानमतो नोपादानशक्तेरेकत्वविरोध इति भावः । ननु तथापि अजाख्यप्रकृतेः सत्त्वादिगुणत्रयरूपतयैकत्वसङ्ख्याविरोध इति चेन्न, एकस्मिन्नीश्वरस्य सत्त्वे अपरेषां गुणानां प्रलयेनैकत्वोपपत्तेः । तदुक्तं मोक्षधर्मे "तदैका प्रकृतिर्भवेदि"ति । अथवा सर्गभेदेन पुरुषभेदेन च भेदाभाव एवाजायाः एकत्वमिह विवक्षितमजाश्रुतिस्वरसात्, "इन्द्रो मायाभिः पुरुरूप ईयत" इति श्रुत्यविरोधाय चेति ब्रह्मणोऽद्वितीया मूलप्रकृतिरजाशक्तिरिति प्रसाधितम् । इदानीं यदुक्तं "यस्मिन् पञ्च पञ्चजना" इतिवाक्यस्य कार्य्यपरत्वे "पञ्चपञ्चेत्याकारा" इति च विशेषवचनप्रयुक्तमितरेषामपि ब्रह्मादिरूपकार्य्याणां ब्रह्मशक्तित्वात् ब्रह्मप्रतिष्ठितत्वाच्चेति तत्समाधीयते ।

(६) भास्करीये—क्वचिदाकाशादिका सृष्टिरुच्यते । "आत्मनः आकाशः सम्भूत" इति । क्वचित्तेजः प्रमुखा "तत्तेजोऽसृजते"ति । क्वचित् प्राणादिका स प्राणमसृजतेति । क्वचिदक्रमा लोकसृष्टिः "स इमाँल्लोकानसृजताम्भो मरीचीर्मरमाप" इति । क्वचिदसत्पूर्विका सृष्टिः "असद्वा इदमग्र आसीत्ततो वै सदजायते"ति । क्वचिदसन्निराकरणे सत्पूर्विका सृष्टिः "कथमसतः सज्जायेते"ति, "सदेव सौम्येदमग्र आसीदि"ति सृष्टिक्रमविप्रतिपत्तेः । तथाप्यनेको नैकं ब्रह्म जगत् कारणमित्याशङ्क्य निराक्रियते । चशब्दस्तुशब्दार्थो यथाशब्दः प्रकारवचनो यत्प्रकारं सर्ववित्त्वादिगुणयुक्तं ब्रह्मकारणत्वेन व्यपदिष्टमेकस्मिन् वेदान्ते तत्प्रकारस्य सर्ववेदान्तेष्वेकेन कारणविज्ञानमाकाशादिषु सृज्यमाने सत्यर्थप्रत्यभिज्ञानात् "सत्यं ज्ञानमनन्तं ब्रह्मे"ति यदेकत्रोक्तं तदेवैत "बहु स्यां प्रजायेये"ति । तथा "आत्मा वा इदमेक एवाग्र आसीन्नान्यत् किञ्चन मिषत् स ऐक्षत लोकान्नुसृजा" इति । यथा कुम्भकारो मत्रजातं निर्मिमाणः कदाचिद्घटपूर्विकां सृष्टिं करोति कदाचिच्छरावपूर्विकां तथापि कर्ता न भिद्यते ॥

(७) श्रीमद्वल्लभाचार्यमतेऽयमभिप्रायः—आनुमानिकसूत्रमारभ्यैतदन्तैः सूत्रैः साङ्ख्यमतस्य श्रौतत्वं निराकृत्येदानीं श्रुतेर्विप्रतिषेधेन निश्चयासम्भवाद्विप्रतिषेधरहिता स्मृतिरेव ग्राह्येति मतं निराकर्तुं विप्रतिषेधो नास्तीति बोधनायाधिकरणान्तरमारभते । तत्र नानाविधसृष्टिबोधकानि वाक्यानि विषयाः । तानि भगवतो जगत्कारणत्वबोधने तात्पर्यवन्ति, न वेति संशयः । तत्र श्रुतौ क्वचिदाकाशादिका सृष्टिः । यथा "तस्माद्वा एतस्मादात्मन आकाशः सम्भूत" इति । क्वचित्तेजआदिका । यथा "तत्तेजोऽसृजते"ति । क्वचिदन्यथैव यथा "एतस्माज्जायते प्राण" इत्यादि । क्वचित्, "इदꣳ सर्वमसृजते"ति । एवमन्येऽपि बहवः प्रकाराः सन्ति नानाविधक्रमनानाविधव्युत्क्रमाणां प्रतिपादकाः । ते सर्वे यथाकथञ्चिद्ब्रह्मप्रतिपत्त्यर्थमर्थवादरूपाः । यथा पूर्वकाण्डे "प्रजापतिरात्मनो वपामुदखिदत्" ... "ब्रह्मान्वा अनुप्रजा पशवः प्रजायन्त" इति । न हि तत्र ब्रह्माणां प्रजादिकारणत्वे तात्पर्यम्; अपि तु ब्रह्मप्रशंसामात्रे, तथैतेषामपि न ब्रह्मणो जगत्कारणतायां तात्पर्यम्, किन्तु यथाकथञ्चन तत्प्रतिपत्तौ । अन्यथा "न तस्य कार्यं करणं च विद्यते" इत्यादा "वकर्तोऽभोक्ते"त्यादौ च तन्निषेधो न स्यात् । एकस्य वस्तुनो द्वैरूप्यासम्भवादेवं विप्रतिपिद्धनानाप्रकारेण सृष्टिनिरूपणं च न स्यात् । अतोऽध्यारोपापवादन्यायसिद्धया वेदान्त ब्रह्मणः कारणत्वसिद्धिः । नच जगन्नास्तीति वक्तुं शक्यम् । आगोपालपण्डितं प्रसिद्धत्वात् परिदृश्यमानत्वाच्च । अतस्तस्य कारणेऽन्विष्यमाणे बाह्याबाह्यभेदेन नानास्मृतिषु सतीष्वपि कपिलस्य भगवतोऽवतारत्वात् तन्मतप्रकारेणैव जगद्व्यवस्थोचितेति प्राप्ते, उच्यते, कारणत्वेनेत्यादि ।

एवं सृष्टिप्रभेदेष्वपि न ब्रह्मणः कारणत्वे विप्रतिपत्तिः । कुतः ? आकाशतेजःप्रभृतिषु क्रमिकेषु प्राणादिषु च क्रमिकेषु कार्येषु कारणत्वेन ब्रह्म यथाव्यपदिष्टं, येन सर्वज्ञत्वसर्वेश्वरत्वसर्वात्मत्वैकत्वाद्वयत्वसच्चिदानन्दधर्मवत्त्वप्रकारेणोक्तमेवमन्यत्राप्युक्तेः कथनात्। नच निषेधव्याकोपः । तस्य लौकिककर्तृत्वनिषेधपरत्वात् । नच मानाभावः । न तस्य कार्यमिति निषेधवाक्योत्तरार्द्ध एव "स्वाभाविकी ज्ञानबलक्रिया चे"ति क्रियासद्भावप्रतिपादनात् । द्वितीयपादे समाभ्यधिकनिषेधेन कार्यकरणसापेक्षलौकिककर्तृत्वनिषेधस्यैव प्रतीतेश्च । सृष्टेर्नानाप्रकारेण निरूपणं तु लोकेऽपि कर्तृमाहात्म्यबोधकम् । नानाकालेष्वेककर्तृकस्य नानाविधकार्यस्य लोके दर्शनादिति । चकारस्तु भगवतः सर्ववैलक्षण्यार्थवैदिकपदवाक्यानामबाधितार्थकवाक्यत्वस्याभिप्रेतत्वसमुच्चायकः । अतः श्रुतिविप्रतिषेधाभावाच्च स्मृतिपरिग्रह इति सिद्धम् ॥



## ५ समाकर्षाधिकरणम्।

( समाकर्षान्नासतः कारणता )

**समाकर्षात्॥ १।४।१९॥**

पुनरन्यथाशङ्क्य परिहरति। ननु कचिद्–"असद्वा इदमग्र आसीत्" (तै. २।७) इति। कचित्–"सदेव सोम्येदमग्र आसीत्। तद्धैक आहुरसदेवेदमग्र आसीत्।" (छां. ६।२।१) "अव्याकृतमासीत्। नासदासीन्नो सदासीत्। तम आसीत्" (तै. ब्रा.) इत्यादिवाक्येषु ब्रह्मणोऽपि विगानं श्रूयते। "तद्धैक आहुः" इति कर्मवत्पक्षान्तरं सम्भवति। न ह्यसत्तमः शब्दैर्ब्रह्म प्रतिपादयितुं शक्यते। "असन्नेव स भवति" (तै. २।६) इति बाधात्। "आदित्यवर्णं तमसः परस्तात्" (श्वे. ३।८) इति च। तस्मात्कारणत्वेनापि श्रुतिविप्रतिषेधाद् ब्रह्म कारणं नेत्येवं प्राप्ते,

उच्यते, समाकर्षात्। आकृष्यते स्वस्थानाद्व्याख्यत इत्याकर्षः। सर्वेष्वेतेषु वाक्येष्वसदादिपदानां न निरात्मकत्वाद्यर्था उच्यन्ते। किन्तु वैलक्षण्येन। सर्वशब्दवाच्यत्वं च सिद्धं ब्रह्मणः। यथा–"को अद्धा वेद। क इह प्रवोचेत्"। (तै. ब्रा.) "सर्वे वेदा यत्पदमामनन्ति" (कठ. १।२।१५) "यतो वाचो निवर्तन्ते" (तै. २।९) "मनसैवानुद्रष्टव्यः" (बृ. ४।४।१९) इत्यादि सर्वे विरुद्धधर्मा भगवत्युच्यन्ते। एवमनेकविरुद्धशब्दवाच्यत्वं लोकप्रसिद्धतादृशार्थात्समाकर्षादवगम्यते। "तं यथा यथोपासते तथा भवती"ति फलज्ञापनार्थम्। "असन्नेव स भवति"

---

पुनः श्रुतिविरोधाद्याशङ्कानिवारणार्थं समाकर्षाधिकरणमाहुः—**समाकर्षात्**। सूत्रमवतारयन्ति—**नन्विति**। पूर्ववदेवात्र संशयो बोध्यः। पूर्वपक्षमाहुः—**नन्विति**। **क्वचिदिति**। तैत्तरीयके क्वचित् छान्दोग्ये नासदासीदिति, तैत्तिरीयके ब्राह्मणे। **विगानमिति**। वेदानां वन्दिजनत्वं वेदस्तुतौ प्रसिद्धत्वेन तन्मुखात् विरुद्धं गानं श्रूयते इत्यर्थः। यत्र कर्मणि पक्षान्तरं बोधव्यम्। तत्र श्रुत्या "तद्धैक आहुरि"त्युच्यते कर्मकाण्डे यथा, तथात्रापि "प्रधानमव्याकृतमासीदि"ति श्रुत्या पक्षान्तरं बोद्धव्यमित्याशयेनाहुः—**तद्धैक इति**। किमर्थं पक्षान्तरमित्यत आहुः—**न हीति**। प्रथमे दूषणमाहुः—**असन्नेवेति**। "यः असत् वेद सः असन् भवतीत्यर्थः। द्वितीये दूषणमाहुः—**आदित्येति**।

समाधानमाहुः—**उच्यत इति**। समाकर्षात्। अर्थमाहुः—**आकृष्यते इति**। **स्वस्थानात्** स्वार्थात्। नन्वत्रासदादिपदानां स्वार्थो विवक्षितो न चेदन्य एव केचन अर्थाः स्युरित्यत आहुः—**न निरात्मकत्वादीति**। न आत्मभिन्ना इत्यर्थः। तर्हि कोऽर्थ इत्यत आहुः—**किन्त्विति**। सद्विलक्षणत्वेनासद्विलक्षणत्वेन च, सदसद्विलक्षणं सदादिपदैः सद्ब्रह्मैवाभिधीयते इत्यर्थः। नन्वेवं चेत्तत्पदानां सद्विलक्षणे ब्रह्मणि लक्षणा स्यादित्यत आहुः—**सर्वेति**। शब्दा इति शेषः (?)। तल्लिङ्गाद्यधिकरणे सिद्धमित्यर्थः। ननु अनेकविरुद्धशब्दवाच्यत्वं किमर्थमत आहुः—**यथेति**। **को अद्धेति**। इदं तैत्तिरीये ब्राह्मणे द्वितीयाष्टके अष्टमप्रपाठके वाक्यं कः अद्धा साक्षात् वेद न कोऽपीत्यर्थः। वेदा जानन्ति "अप्राप्य मनसा सह" "मनसैवानुद्रष्टव्यः" एते विरुद्धा इत्यर्थः। **लोकेति**। सच्छब्दस सत्वविशिष्टोऽर्थः। तस्मात्प्रच्यावनादित्यर्थः। नन्विदं किमर्थमुच्यते इत्यत आहुः—**तमिति**। तं भगवन्तं यः असन् वेद सः असन् भवतीति फलज्ञापनार्थं श्रुत्या उच्यत इत्यर्थः। दृष्टान्तमाहुः—**यथेति**। नन्वेवं चेत्तर्हि श्रुत्या असदादिशब्दैर्ब्रह्मणो विगानं कृतं तस्य का

**(तै. २।६) इति। यथा कंसादीनां मारकः। तद्धैक आहुरित्यत्र सर्वप्रपञ्चवैलक्षण्यम्। प्रपञ्चरूपोऽपि स इति प्रथमः पक्षः। अव्याकृतमसत्पक्षेण तुल्यम्। नासदासीदिति मनस्तदपि ब्रह्म तम आसीदित्यनभिव्यक्तम्। कर्मणोऽपि भगवत्त्वात्। पूर्वकाण्डेऽपि तस्मादेव सृष्टिः। न हि तमस्तः स्वेन गूढत्वं लोके सम्भवति। अतः क्वचिद्विलक्षणात् क्वचिदविलक्षणाद् ब्रह्मणो जगत्। भगवत्त्वादेव स्वयंकर्तृकता च। सम्भवति चैकवाक्यत्वे ज्ञानान्निराकरणं चायुक्तम्। तस्माच्छन्दवैलक्षण्येन श्रुतिविप्रतिषेधो वक्तुं न शक्य इति सिद्धम्॥ १।४।१५।५॥**

---

वा गतिरित्यत आहुः—**तद्धैक** इति। अधिकरणप्रारम्भे वाक्यपञ्चकेन विगानमित्युच्यते। तद्विगानं न सम्भवतीत्याह—**सर्वेति**। तथाचायमर्थः—असद्वेति प्रथमवाक्येन ब्रह्मणः सर्वप्रपञ्चवैलक्षण्यं बोध्यते सदेवेति द्वितीयवाक्येन सर्वप्रपञ्चरूपत्वं बोध्यते इति सदसत्पक्षद्वय तद्धैक आहुरिति तृतीयवाक्ये तत् सदेवासदासीदित्यर्थके सर्वप्रपञ्चवैलक्षण्य बोध्यम्। अथ च सदेवेदमिति वाक्योक्तः प्रपञ्चरूपोऽपि स भगवान् इति प्रथमः सत्पक्षो बोध्यः। **अव्याकृतमिति**। चतुर्थवाक्ये सत् असत्पक्षेण तुल्य, वैलक्षण्येन नासदासीदिति। इदं पञ्चमं वाक्य तैत्तिरीयद्वितीयाष्टके ब्राह्मणे कर्मकाण्डे उक्तम्, तत्र तमःशब्दवाच्यं कर्माभिधीयते इत्यर्थः। ननु ब्रह्मकाण्डे तस्य किं प्रयोजनमित्यत आहुः—**तदपीति**। तत्रत्यपष्ठवाक्यतात्पर्यमाहुः—**तम आसीदिति**। पूर्वमप्रगटम्। अत्र हेतुमाहुः—**कर्मणोऽपीति**। पूर्वमनभिव्यक्तस्तमःशब्दवाच्यः अन्धकारो न भवतीति कर्म एव वक्तव्यमित्याहुः—**नहीति**। लोक इत्युपलक्षणम्। "तम आसीत्तमसा गूढमग्रे प्रकेतुमि"ति तत्रत्या श्रुतिरपि प्रमाणमित्यर्थः। तथा चैतावता श्रुत्या सदसद्विलक्षणः अविलक्षणः भगवान् जगत्कर्तेत्येवंरूपं गानमेव कृत, न तु विगानमिति भावः। **स्वयमिति**। असहाय इत्यर्थः। श्रुत्यैकवाक्यतावर्णन श्लाघ्यमित्याहुः—**सम्भवतीति**। इति पञ्चमाधिकरणम्॥

---

१ अनेत्थं व्याख्यानान्तराणि—

(१) तत्र शाङ्कराः—ननु क्वचिदसतः क्वचित्सत उत्पत्तिश्रवणाद्विरोध इत्याशङ्क्याह। "असदेवेदमग्र आसीत्" इत्यनभिव्यक्तनामरूपवाचिना असच्छब्देन सत एव समाकर्षात् नासतः कारणत्वशङ्कावकाशः। अतो जगत्कारणत्ववादिवाक्यसमन्वयो ब्रह्मण्येवेति सिद्धम्॥

(२) रामानुजीये—ननु "असद्वा इदमग्र आसीत्" इत्यसदेव कारणत्वेन व्यपदिश्यते। तत्कथमिव सर्वज्ञस्य सत्यसङ्कल्पस्य ब्रह्मण एव कारणत्वं निश्चीयते इत्यत्राह "असद्वा इदमग्र आसीत्" इत्यत्रापि विपश्चिदानन्दमयं सत्यसङ्कल्पं ब्रह्मैव समाकृष्यते। कथम्? "तस्माद्वा एतस्माद्विज्ञानमयात् अन्योन्तर आत्मानन्दमयः" "सोऽकामयत बहु स्यां प्रजायेयेति" "इद सर्वमसृजत यदिदं किञ्च तत्सृष्ट्वा तदेवानुप्राविशत् तदनुप्रविश्य सच्च त्यच्चाभवत्" इत्यादिना "ब्राह्मणेनानन्दमयं ब्रह्म सत्यसङ्कल्पं सर्वस्य स्रष्टृ सर्वानुप्रवेशेन सर्वात्मभूतमभिधाय "तदप्येष श्लोको भवति" इत्युक्तस्यार्थस्य सर्वस्य साक्षित्वेन ह्युदाहृतोऽयं श्लोको "असद्वा इदमग्र आसीत्" इति। तथोत्तरत्र "भीषास्माद्वातः पवते" इत्यादिना तदेव ब्रह्म समाकृष्य सर्वस्य प्रशासितृत्वनिरतिशयानन्दत्वादयोऽभिधीयन्ते। अतोऽयं मन्त्रस्तद्विषय एव। तदानीं नामरूपविभागाभावेन तत्सम्बन्धितयाऽस्तित्वाभावाद्ब्रह्मैवासच्छब्देनोच्यते। "असदेवेदमग्र आसीत्" इत्यत्राप्ययमेव निर्वाहः। यदुक्तं तद्धेद तर्ह्यव्याकृतमासीत् इत्यत्र प्रधानमेव जगत्कारणत्वेना-

भिधीयत इति । नेत्युच्यते । अत्राप्यव्याकृतशब्देनाव्याकृतशरीरं ब्रह्मैवाभिधीयते । "स एष इह प्रविष्ट आनखाग्रेभ्यः । पश्यंश्चक्षुः शृण्वञ्छ्रोत्रं मन्वानो मनः" । "आत्मेत्येवोपासीत" इत्यत्र स एष इति तच्छब्देनाव्याकृत शब्दनिर्दिष्टस्यान्तःप्रविश्य प्रशासितृत्वेनानुकर्षात् । "तत्सृष्ट्वा तदेवानुप्राविशत्" "अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि" इति स्रष्टुः सर्वज्ञस्य परस्य ब्रह्मणः कार्यानुप्रवेशेन नामरूपव्याकरणप्रसिद्धेश्च । "अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा" इति नियमनार्थत्वादनुप्रवेशस्य प्रधानस्याचेतनस्यैवंरूपोऽनुप्रवेशो न सम्भवति । अतोऽव्याकृतमव्याकृतशरीरं ब्रह्म तन्नामरूपाभ्यां व्याक्रियत इति तदेवाविभक्तनामरूपं ब्रह्म सर्वज्ञं सत्यसङ्कल्पं स्वेनैव विभक्तनामरूपं स्वयमेव व्याक्रियत इत्युच्यते । एवञ्च सतीक्षणादयो मुख्या एव भवन्ति । ब्रह्मात्मशब्दावपि निरतिशयबृहत्त्वनियमनार्थव्यापित्वाभावेन प्रधाने न कथञ्चिदुपपद्येते । अतो ब्रह्मैककारणं जगदिति स्थितम् ॥

(३) माध्वे—सर्वशब्दानां परमात्मवाचकत्वे कथमन्यत्र व्यवहार इति ? अतोऽब्रवीत् । परमात्मवाचिनः शब्दा अन्यत्र समाकृष्य व्यवह्रियन्ते । "परस्य वाचकाः शब्दाः समाकृष्येतरेष्वपि । व्यवह्रियन्ते सततं लोकवेदानुसारतः" इति पाद्मे ॥

(४) निम्बार्कः—"सोऽकामयत" इति प्रकृतस्य सत एव ब्रह्मणः "असद्वा इदम्" इत्यत्र समाकर्षात्, "आदित्यो ब्रह्म" इति प्रकृतस्य ब्रह्मणः "असदेवेदम्" इत्यत्र समाकर्षात्, असच्छब्देन सृष्टेः पूर्वं नामरूपाविभागात्तत्सम्बन्धितयाऽस्तित्वाभावेन सद्रूपं ब्रह्मैवाभिधीयते । "तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यामेव व्याक्रियते" इत्यव्याकृतशब्दोदितस्योत्तरवाक्ये "स एष इह प्रविष्ट आनखाग्रेभ्यः" इत्यादौ समाकर्षादचेतनस्य प्रधानस्यान्तःप्रविश्य प्रशासितृत्वाद्यसम्भवात्, तदन्तरात्मभूतमव्याकृतब्रह्मेत्युच्यते । जगत्कारणप्रतिपादकेषु वाक्येषु लक्षणसूत्रादिना निर्णीतं ब्रह्मैव ग्राह्यं, न प्रधानशङ्कागन्धोऽपीति भावः ॥

(५) भैक्षवे—मुख्याभ्यां प्राणादिपञ्चकाशाभ्यामितरकार्याणामप्युपलक्षणतया समाकर्षात् ब्रह्मणादुक्तार्थोपपत्तिरित्यर्थः ॥

(६) भास्करीये—यदुक्तम् "असद्वा इदमग्र आसीदि"ति असत्पूर्विका सृष्टिरुच्यत इति, तत्रोत्तरम्, "सोऽकामयते"ति प्रकृतसमाकर्षात् "असद्वा इदमग्र आसीदि"त्यनेन श्लोकेन पूर्वोक्तमेवात्मानमालम्ब्य विपर्यीकृत्योत्तरवाक्यप्रवृत्तेरित्यर्थो यदिदमभिव्यक्तं जगदुपलभ्यते तदसदिवासीदस्पष्टमिवाभूदित्यर्थः । न निरात्मकमवस्तुकारणत्वेन कथ्यते । "असदेवेदमग्र आसीदि"त्यत्रापीयमेव योजना । "तत् सदासीदि"ति समाकर्षणात् "तद्धेदं तर्ह्यव्याकृतमासीदि"त्यत्रापि ईश्वरे व्याकर्तरि सत्येव कर्मकर्तृनिर्देशो द्रष्टव्यः । तस्मादेवमेव चेतनं जगत्कारणमिति सिद्धम् । यदुक्तं गतिसामान्यादिति न तार्किकाणामिव जगत्कारणे विगानमिति विप्रतिपत्तिरित्यभिप्रायः । न वियदश्रुतेरित्यारभ्याकाशादिविषयामपि विप्रतिपत्तिं निराकरिष्यति ॥

(७) श्रीमद्वल्लभाचार्यमतेऽयमभिप्रायः—एवमेकः श्रुतिविप्रतिषेधः परिहृतः, पुनः प्रकारान्तरेण श्रुतिविप्रतिषेधमाशङ्क्य परिहरति । ननु श्रुतौ क्वचित् "असद्वा इदमग्र आसीत्ततो वै सदजायते"ति, क्वचित् "सदेव सोम्येदमग्र आसीदि"त्युपक्रम्य, "तद्धैक आहुरसदेवेदमग्र आसीदि"त्युक्त्वा, कुतस्तु खलु सोम्यैवं स्यात्, कथमसतः सज्जायेतेति निषिध्यते । क्वचिच्च "नासदासीन्नो सदासीत्तदानीं नासीद्रजो नो व्योमापरो यदि"ति सदसती निषिध्य "तम आसीत्, तमसा गूढमग्र" इत्युच्यते । क्वचिच्च तद्धेदं तर्ह्यव्याकृतमासीदि"ति, क्वचिच्च "किं तदानीम्

सन्नासच्च सदसदि"ति । एवमादिषु पुरावृत्तवाक्येषु सत्यवाच्यस्य ब्रह्मणो विरुद्धं गानं श्रूयते । नचा- सत्तमःप्रभृतिभिः शब्दैर्ब्रह्मैवोच्यत इति शङ्क्यम् । "असन्नेव स भवति असद् ब्रह्मेति वेद चे"दिति निन्दाश्रवणाद्, "आदित्यवर्णं तमसः परस्ता"दिति तमोविरुद्धरूपत्वस्य तमःपरत्वस्य श्रवणाच्च । अतः कारणत्वेनापि श्रुतिप्रतिषेधाद् ब्रह्म कारणं नेति प्राप्ते, उच्यते, समाकर्षात् । कारणत्वेनेति पूर्वसूत्रादनुवर्तते । कारणत्वेन ब्रह्मैव ज्ञेयम् । नात्रोक्तश्रुतिविप्रतिषेधः । कुतः ? समाकर्षात् । आकृ- ष्यते स्वस्थानाच्याव्यत इत्याकर्षः । समीचीनो वस्तुनिश्चायनार्थं आकर्षः समाकर्षस्तस्मात् । सर्वेष्वेतेषु वाक्येष्वसदादिपदानां न निरात्मत्वादिरूपा अर्था उच्यन्ते, किन्त्वेकश्रुत्युक्तरूपविलक्षणं रूपान्तर- मभिप्रेत्य श्रुत्यन्तरे तस्य तस्य शब्दस्य प्रसिद्धात्स्वार्थात् प्रच्यावनं, तत्कृत्वा तत्तद्रूपविशिष्टं ब्रह्मैवो- च्यते । नच लक्षणापत्तिः । ब्रह्मणः सर्वशब्दवाच्यत्वस्य प्रागेव तल्लिङ्गाद्यधिकरणेषु व्युत्पादितत्वात् । नच सर्वत्र ब्रह्मण एव कारणत्वे वक्तव्ये विरुद्धशब्दप्रयोगे किं प्रयोजनमिति शङ्क्यम् । यथा "को अद्धा वेद क इह प्रावोच"दित्यत्र सृष्टिकर्तृविषयकमज्ञानं, "सर्वे वेदा" इत्यत्र साधनैस्तज्ज्ञानं, "यतो वाचो निवर्तन्त" इत्यत्र वागाद्यप्राप्यत्वं, "मनसैवानुद्रष्टव्य" इत्यत्र तत्प्राप्यत्वमित्यादयो भगवति विरुद्धधर्मा उच्यन्ते माहात्म्यबोधनार्थं श्रुतिषु, तथा "तं यथायथोपासते तथाभवती"ति फलज्ञापनार्थं तानि तानि विरुद्धरूपाण्यपि ब्रह्मणि बोध्यन्त इत्यपि, तेषां तेषां प्रसिद्धार्थतः समाकर्ष- फलदवगम्यते । अत्रोदाहरणं तु यथा कंसादिभिर्मारकत्वभावनात् तेषां मृत्युः, एवमसत्त्वेन भावनाद- सत्त्वमिति । अत एतदर्थमेवं प्रयोगस्यावश्यकत्वादिति । तस्माच्छब्दवैलक्षण्येन श्रुतिविप्रतिषेधो न वक्तुं शक्य इति सिद्धम् ॥



## ६ जगद्वाचित्वाधिकरणम् ॥

( जगद्वाचित्वादपि ब्रह्मैव कारणम्, न जीवाधिष्ठिता प्रकृतिः )

जगद्वाचित्वात् ॥ १।४।१३ ॥

एवं शब्दविप्रतिषेधं परिहृत्यार्थविप्रतिषेधं परिहरति। कौषीतकिब्राह्मणे बालाक्य-जातशत्रुसम्वादे बालाकिरजातशत्रवे ब्रह्मोपदेष्टुमागतः । आदित्यादिदक्षिणेक्षि-

---

जगद्वाचित्वात् । जगद्वाचित्वाधिकरणस्य प्रयोजनमाहुः—एवमिति । विषयवाक्यमाहुः—कौषीतकिब्राह्मणेति । सर्वोऽपि षष्ठाध्यायो विषयः । अथ विषयवाक्यम्—

अथ गार्ग्यो ह वै बालाकिरनूचानः संस्पष्ट आस सोऽयमुशीनरेषु सम्वसन्मत्स्येषु कुरुपञ्चालेषु काशीविदेहेष्विति स हाजातशत्रुं काश्यमेत्योवाच ब्रह्म ते ब्रवाणीति तं होवाचाजातशत्रुः सहस्रं दद्मस्त एतस्यां वाचि जनको जनक इति वा उ जना धावन्तीति ॥ १ ॥ स होवाच बालाकिर्य एवैष आदित्ये पुरुषस्तमेवाहमुपास इति तं होवाचाजातशत्रुर्मामैतस्मिन्समवादयिष्ठा बृहत्पाण्डरवासा अतिष्ठाः सर्वेषां भूतानां मूर्धेति वा अहमेतमुपास इति स यो हैतमेवमुपास्तेऽतिष्ठाः सर्वेषां भूतानां मूर्धा भवति ॥ २ ॥ स एवैष बालाकिर्य एवैष चन्द्रमसि पुरुषस्तमेवाहं ब्रह्मोपास इति तं होवाचाजातशत्रुर्मामैतस्मिन्समवादयिष्ठाः सोमो राजान्नस्यात्मेति वा अहमेतमुपास इति स यो हैतमेवमुपास्तेऽन्नस्यात्मा भवति ॥ ३ ॥ स होवाच बालाकिर्य एवैष विद्युति पुरुष एतमेवाहं ब्रह्मोपास इति तं होवाचाजातशत्रुर्मामैतस्मिन्समवादयिष्ठास्तेजसस्यात्मेति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते तेजसस्यात्मा भवति ॥ ४ ॥ स होवाच बालाकिर्य एवैष स्तनयित्नौ पुरुष एतमेवाहं ब्रह्मोपास इति तं होवाचाजातशत्रुर्मामैतस्मिन्समवादयिष्ठाः शब्दस्यात्मेति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते शब्दस्यात्मा भवति ॥ ५ ॥ स होवाच बालाकिर्य एवैष आकाशे पुरुषस्तमेवाहमुपास इति तं होवाचाजातशत्रुर्मामैतस्मिन्समवादयिष्ठाः पूर्णमप्रवर्ति ब्रह्मेति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते पूर्यते प्रजया पशुभिर्नो एव स्वयं नास्य प्रजा पुराकालात्प्रवर्तते ॥ ६ ॥ स होवाच बालाकिर्य एवैष वायौ पुरुषस्तमेवाहमुपास इति तं होवाचाजातशत्रुर्मामैतस्मिन्समवादयिष्ठा इन्द्रो वैकुण्ठोऽपराजिता सेनेति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते जिष्णुर्ह वा पराजिष्णुरन्यतरस्य ज्यायान्भवति ॥ ७ ॥ स होवाच बालाकिर्य एवैषोऽग्नौ पुरुषस्तमेवाहमुपास इति तं होवाचाजातशत्रुर्मामैतस्मिन्समवादयिष्ठा विषासहिरिति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते विषासहिर्वा एष भवति ॥ ८ ॥ स होवाच बालाकिर्य एवैषोऽप्सु पुरुषस्तमेवाहमुपास इति तं होवाचाजातशत्रुर्मामैतस्मिन्समवादयिष्ठा नाम्यस्यात्मेति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते नाम्यस्यात्मा भवतीत्यधिदैवतमथाध्यात्मम् ॥ ९ ॥ स होवाच बालाकिर्य एवैष आदर्शे पुरुषस्तमेवाहमुपास इति तं होवाचाजातशत्रुर्मामैतस्मिन्समवादयिष्ठाः प्रतिरूप इति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते प्रतिरूपो हैवास्य प्रजायामाजायते नाप्रतिरूपः ॥ १० ॥ स होवाच बालाकिर्य एवैष प्रतिश्रुत्कायाः पुरुषस्तमेवाहमुपास इति तं होवाचाजातशत्रुर्मामैतस्मिन्समवादयिष्ठा द्वितीयोऽनपग इति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते विन्दते द्वितीयाद्द्वितीयवान्भवति ॥ ११ ॥ स होवाच बालाकिर्य एवैष शब्दः पुरुषमन्वेति तमेवाहमुपास इति तं होवाचाजातशत्रुर्मामैतस्मिन्समवादयिष्ठा असुरिति वा अहमेतमुपास इति स यो

हैतमेवमुपास्ते नो एव स्वयं नास्य प्रजा पुराकालात्सम्मोहमेति ॥ १२ ॥ स होवाच बालाकिर्य एवैष च्छायायां पुरुषस्तमेवाहमुपास इति तं होवाचाजातशत्रुर्मामैतस्मिन्समवादयिष्ठामृत्युरिति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते नो एव स्वयं नास्य प्रजा पुरा कालात्प्रमीयते ॥१३॥ स होवाच बालाकिर्य एवैष शारीरः पुरुषस्तमेवाहमुपास इति तं होवाचाजातशत्रुर्मामैतस्मिन्संमवादयिष्ठाः प्रजापतिरिति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते प्रजायते प्रजया पशुभिः ॥ १४ ॥ स होवाच बालाकिर्य एवैष प्राज्ञ आत्मा येनैवत्सुप्तः स्वप्नमाचरति तमेवाहमुपास इति तं होवाचाजातशत्रुर्मामैतस्मिन्समवादयिष्ठा यमो राजेति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते सर्वं हास्मा इदं श्रैष्ठ्याय यम्यते ॥ १५ ॥ स होवाच बालाकिर्य एवैष दक्षिणेऽक्षन्पुरुषस्तमेवाहमुपास इति तं होवाचाजातशत्रुर्मामैतस्मिन्समवादयिष्ठा नाम्न आत्माग्निरात्मा ज्योतिष आत्मेति वा अहमेतमुपास इति स यो हैतमेवमुपास्त एतेषां सर्वेषामात्मा भवति ॥ १६ ॥ स होवाच बालाकिर्य एवैष सव्येऽक्षन्पुरुषस्तमेवाहमुपास इति तं होवाचाजातशत्रुर्मामैतस्मिन्समवादयिष्ठाः सत्यस्यात्मा विद्युत आत्मा तेजस आत्मेति वा अहमेतमुपास इति स यो हैतमेवमुपास्त एतेषां सर्वेषामात्मा भवतीति ॥ १७ ॥ तत उ ह बालाकिस्तूष्णीमास तं होवाचाजातशत्रुरेतावन्नु बालाकीति एतावद्धीति होवाच बालाकिस्तं होवाचाजातशत्रुर्मृषा वै किल मा सम्वदिष्ठा ब्रह्म ते ब्रवाणीति होवाच यो वै बालाक एतेषां पुरुषाणां कर्ता यस्य वैतत्कर्म स वेदितव्य इति तत उ ह बालाकिः समित्पाणिः प्रतिचक्रामोपायानीति तं होवाचाजातशत्रुः प्रतिलोमरूपमेव स्याद्यत्क्षत्रियो ब्राह्मणमुपनयीतैहि व्येव त्वा ज्ञपयिष्यामीति तं ह पाणावभिपद्य प्रवव्राज तौ ह सुप्तं पुरुषमीयतुस्तं हाजातशत्रुरामन्त्रयाञ्चक्रे बृहत्पाण्डरवासः सोमराजन्निति स उ ह तूष्णीमेव शिश्ये तत उ हैनं यष्ट्या विचिक्षेप स तत एव समुत्तस्थौ तं होवाचाजातशत्रुः क्वैष एतद्बालाके पुरुषोऽशयिष्ट क्वैतदभूत्कुत एतदागादिति तदु ह बालाकिर्न विजज्ञौ ॥ १८ ॥ तं होवाचाजातशत्रुर्यत्रैष एतद्बालाके पुरुषोऽशयिष्ट यत्रैतदभूद्यत एतदागाद्धिता नाम हृदयस्य नाड्यो हृदयात्पुरीततमभिप्रतन्वन्ति यथा सहस्रधा केशो विपाटितस्तावदण्व्यः पिङ्गलस्याणिम्ना तिष्ठन्ते शुक्लस्य कृष्णस्य पीतस्य लोहितस्येति तासु तदा भवति यदा सुप्तः स्वप्नं न कञ्चन पश्यत्यथास्मिन्प्राण एकैकधा भवति तथैनं वाक्सर्वैर्नामभिः सहाप्येति चक्षुः सर्वै रूपैः सहाप्येति श्रोत्रं सर्वैः शब्दैः सहाप्येति मनः सर्वैर्ध्यानैः सहाप्येति स यदा प्रतिबुध्यते यथाग्नेर्ज्वलतो विस्फुलिङ्गा विप्रतिष्ठेरन्नेवमेवैतस्मादात्मनः प्राणा यथायतनं विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोकास्तद्यथा क्षुरः क्षुरधाने हितः स्याद्विश्वम्भरो वा विश्वम्भरकुलाय एवमेवैष प्राज्ञ आत्मेदं शरीरमनुप्रविष्ट आ लोमभ्य आ नखेभ्यः ॥ १९ ॥ तमेतमात्मानमेतमात्मनोऽन्ववस्यति यथा श्रेष्ठिनं स्वास्तद्यथा श्रेष्ठी स्वैर्भुङ्क्ते यथा वा श्रेष्ठिनं स्वा भुञ्जन्त एवमेवैष प्राज्ञ आत्मैतैरात्मभिर्भुङ्क्ते । यथा श्रेष्ठी स्वैरेवं वैतमात्मानमेत आत्मनोऽन्वभवन्ति यथा श्रेष्ठिनं स्वाः स यावद्ध वा इन्द्र एतमात्मानं न विजज्ञौ तावदेनमसुरा अभिबभूवुः स यदा विजज्ञावथ हत्वाऽसुरान्विजित्य सर्वेषां भूतानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं पर्येति तथो एवैवंविद्वान्सर्वेषां भूतानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं पर्येति य एवं वेद य एवं वेद ॥ २० ॥ इति चतुर्थोऽध्यायः ॥ ४ ॥

अथ भाष्यम्—बालाक्यजातशत्रुसम्वादे इत्यारभ्यानुप्रवेशश्चेत्यन्तं भाष्योक्तमाख्यानकं विषय-

पुरुषपर्यन्तपरिच्छिन्नब्रह्मोपासनान्युक्त्वा तथा निराकृते तमेव ज्ञानार्थमुपससाद। ततः सप्तपुरुषसमीपमुभावागत्य ब्रह्मवार्यं चक्रतुः। तत्र—"क्वैष एतद्बालाके पुरुषोऽशयिष्ट" ( कौ. ४।१९ ) इत्यादौ जीवः प्रक्रान्तः। तस्मादेवं सर्वोत्पत्तिरुक्ता। ब्रह्मणोऽप्यनुप्रवेशश्च। तत्र सन्देहः। जीव एव ब्रह्मसहितः कर्ता, ब्रह्मैव वेति। तत्र जीव एव कर्ता। सर्वस्य जगतो ब्रह्मत्वादयस्तस्य धर्माः। राजत्ववद् यजमानत्ववद्वा। अस्मिन्प्रकरणे ब्रह्मोपक्रमेण जीवपर्यवसानोक्तेः सर्वत्रैव ब्रह्मत्वेनोक्तो जीव एव कर्ता। तथा सति लोकेऽपि जीवकर्तृत्वं सहजं भवेत्। बन्धमोक्षव्यवस्था च। एवं सत्यर्थात्प्रकृतेरेव फलिष्यतीत्येवं प्राप्ते, उच्यते—

जगद्वाचित्वात्। एतेषां पुरुषाणां कर्ता यस्य चैतत्कर्मेत्युपक्रम एतच्छब्देन जगदुच्यते। पुरुषशब्देन च जीवः। तज्जडजीवात्मकं जगद् ब्रह्मकर्तृकमिति हि पूर्वसिद्धम्। तदनुरोधेनात्रापि ब्रह्मपरत्वमेवोचितं, न तु सर्वविप्लवोऽश्रुतकल्पना च। अतः सुषुप्तावपि ब्रह्मण्येव लयस्तस्मादेव सर्वमिति ज्ञातव्यम्। प्राणात्मशब्दवाच्यत्वं तु पूर्वमेव सिद्धम्। तस्मान्न जीवाधिष्ठिता प्रकृतिः कारणम् ॥ १।४।१६ ॥

( उभयलिङ्गत्वाभावान्न प्रकृतिः कारणं, किन्तु, ब्रह्मैव )

जीवमुख्यप्राणलिङ्गादिति चेत्तद् व्याख्यातम् ॥ १।४।१७ ॥

किञ्चिदाशङ्क्य परिहरति। नन्वत्र जीव एव प्रक्रान्तः। "क्वैष एतद्बालाके पुरुषोऽशयिष्ट" ( कौ. ४।१९ ) इति। ब्रह्म त्वयापि न सिद्धम्—एतादृशं नैतादृशमिति। अतः शयनोत्थानलक्षणजीवधर्मदर्शनात्तस्यैव ब्रह्मत्वं जगत्कर्तृत्वं च। तत्स्वतोऽनुपपन्नं प्रकृतौ फलिष्यति। अथवा मुख्यप्राणलिङ्गमप्यत्रास्ति। प्राण एवैकधा भवतीति

---

वाक्ये स्पष्टम्। सन्देहमाहुः—तत्रेति। पूर्वपक्षमाहुः—तत्रेति। जीव एव। ब्रह्मसहितः। ननूपक्रमे ब्रह्मत्वमुक्तमत आहुः—ब्रह्मत्वादय इति। आदिशब्देन बृहदादीनां सङ्ग्रहः। राजत्ववदिति। एकस्मिन्नेव जीवे नियोजकत्वे राजत्वं कर्मकरणे यजमानत्वं तथात्रापीत्यर्थः। ननूपक्रमस्य प्राबल्यमत आहुः—अस्मिन्निति। उपसंहारभेदे उपक्रमस्य प्राबल्यं नास्तीति भावः। सर्वत्रैवेति। यत्रैतादृशोपक्रमोपसंहारस्तत्र सर्वत्रेत्यर्थः। तथासतीति। देहविशिष्टस्याभिमानिनः वेदे कर्तृत्वे बोधिते सतीत्यर्थः। सहजमिति। देहसहभावीत्यर्थः। व्यवस्था चेति। भवेदित्यनेनान्वयः। येन देहेन सहभानेन तत्तत्कर्मकरणे बन्धमोक्षयोर्व्यवस्थेत्यर्थः। एवं सतीति। अभिमानिनः कर्तृत्वे सिद्धे सतीत्यर्थः। अर्थात्। जीवस्य प्रकृत्यभिमानेन कर्तृत्वमित्यर्थादेव प्रकृतौ कर्तृत्वमित्यर्थः। समाधानमाहुः—उच्यत इति।

जगद्वाचित्वात्। सूत्रार्थमाहुः—एतेषामिति। उपक्रमे। एवरीत्या सिद्धान्तकथनोपक्रमे। पूर्वसिद्धमिति। पूर्वस्मिन्नध्याये इन्द्रप्रतर्दनसम्वादे सिद्धम्। विप्लवः। श्रुतिविप्लवः। अश्रुतकल्पनेति। अश्रुतस्याभिमानिनः कल्पना श्रुतस्य ब्रह्मणस्त्याग इति दोष इत्यर्थः। अतः। ब्रह्मणः कर्तृत्वात्। लय इति। प्राणादीनामिति शेषः। सर्वमिति। "यथायतनं प्रतितिष्ठते"ति ज्ञातव्यमित्यर्थः। ननु प्राणादीनां कथं ब्रह्मणि लयः "प्राण एव प्रज्ञात्मे"ति वाक्यविरोधादित्यत आहुः—प्राणेति। वाक्यस्थप्राणशब्दवाच्यत्वं ब्रह्मणः पूर्वस्मिन्नध्याये इन्द्रप्रतर्दनसम्वादे सिद्धमित्यर्थः ॥

जीवमुख्यप्राणलिङ्गादितिचेत्तद्व्याख्यातम्। अत्र भाष्यं स्पष्टमेव।

सुषुप्तौ तस्यैव प्रवृत्तिरुपलभ्यते । विद्यमानादेव सर्वोत्पत्तिप्रलयौ । स च प्रकृत्यं-
शोऽतो जडादेव प्रधानात्सृष्टावपि सर्वोत्पत्तिः । अतोऽस्मात्प्रकरणाज्जीवद्वारा
साक्षाद्वा प्रकृतेः कारणत्वमित्येवं प्राप्ते, उच्यते—

तद्व्याख्यातम् । एतयोरुभयलिङ्गत्वमेव नास्तीत्याश्रयत्वादिह तद्योगादित्यत्र
सर्वमेव कार्यं भगवत एव नान्यस्मादिति । अतोऽस्माद् ब्रह्मवाद एव सिध्यति । न
प्रकृतिवादः ॥ १।४।१७ ॥

( जैमिनेरपि न सम्मतः प्रकृतिवादः )

अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ॥ १।४।१८ ॥

स्वमतेन परिहारमुक्त्वा नियतधर्मवादेनापि परिहारमाह । स्वापप्रतिबोधौ
जीवधर्मावेव । चक्षुरादिलयाधारत्वं प्राणस्येति । तस्मिन्नपि पक्षेऽन्यार्थं तद्धर्मकीर्त-
नम् । भेदे हि तन्निराकरणमवश्यं कर्तव्यमिति तुशब्दः । ब्रह्मप्रतिपत्त्यर्थमेव जीव-
लयोद्गमौ मृतिवैलक्षण्येन । प्राणकीर्तनमाश्रयब्रह्मबोधाय । कुत एतदवगम्यते ।
तत्राह । उपक्रमोपसंहाराभ्यामेवावगम्यते "यो वै बालाक एतेषां पुरुषाणा-
मि"त्युपक्रमे मुख्यं ब्रह्मैव निर्दिष्टम् । तज्ज्ञानेनासुरजयः । सर्वेषां भूतानां
श्रैष्ठ्यं स्वाराज्यमाधिपत्यं[१] चेति फलम् । न ह्येतद् द्वयममुख्ये सम्भवति ।
अपि च । प्रश्नव्याख्यानाभ्याम् । "क्वैष एतद्बालाके पुरुषोऽशयिष्टे"ति प्रश्नः ।
तत्र जीवस्य ज्ञातत्वादधिकरणमेव न ज्ञातम् । "यत्रैष एतद्बालाके पुरुषोऽशयिष्ट"
( कौ. ४।१९ ) इति व्याख्यानम् । न हि नाडीर्ज्ञापयितुं व्याख्याति, किन्तु
प्रतिज्ञातं ब्रह्म । कथमेतदवगम्यते नाडीव्यतिरिक्त आत्मा ज्ञाप्यत इति ।
तत्राह "एवमेके" एके शाखिनो वाजसनेयिनः । तत्रापि दृप्तबालाकिब्राह्मणे—"स
होवाचाजातशत्रुर्यत्रैष एतत्सुप्तोऽभूद् य एष विज्ञानमयः पुरुषस्तदेषां प्राणानां
विज्ञानेन विज्ञानमादाय य एषोऽन्तर्हृदय आकाशस्तस्मिञ् शेते" ( बृ. २।१।१७ )
इत्यत्र—आकाशशब्दं ब्रह्म "सता सौम्य तदा सम्पन्नो भवति" ( छां. ६।८।१ )
इति च । "स्वं ह्यपीतो भवति" ( छां. ६।८।१ ) इति च । तस्मादाधारभूतब्रह्मज्ञाप-
नार्थत्वाज्जीवमुख्यप्राणलिङ्गात् प्रकृतिवाद इत्यसङ्गतम् ॥ १।४।१८॥६ ॥

---

अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैके । स्वशिष्याणामन्येषां च साङ्ख्यमतं
सम्मतं न भवतीति कथनार्थं सूत्रप्रयोजनमाहुः—स्वमते इति । नियतधर्मेति । जीवधर्मः स्वापप्रबो-
धरूपः । परिहारं विवृण्वन्ति—तस्मिन्नित्यादि । पक्षे इति । स्वापप्रबोधयोर्जीवलिङ्गत्वपक्षे ।
अन्यार्थम् । ब्रह्मणः आश्रयत्वात् तत्परिचायकत्वेन ब्रह्मबोधार्थम् । तुशब्दस्य प्रयोजनमाहुः—भेदे हीति ।
वेदान्तमतापेक्षया भेदे हीत्यर्थः । अन्यार्थत्वं विवृण्वन्ति—ब्रह्मेति । लयोद्गमौ मृतिविलक्षणौ स्वापप्रबोधौ ।
ब्रह्मवाचकत्वं प्राणपदस्येति सूचयितुमाहुः—प्राणेति । हेतुसूत्रे अपि चेति यदुक्तं तेन यत् हेत्वन्तरं
ज्ञायते तदाहुः—उपक्रमेति । उपसंहारे यत्फलं निर्दिष्टं तमाहुः—तज्ज्ञानेनेति । उपक्रमोपसं-
हारस्तूक्तः, सूत्रस्थहेत्वन्तरं वक्तुमाहुः—अपि चेति । एके एवमाहुर्यदुक्तं तदाहुः—तत्रापीति ।
शेषं सुगमम् ॥ इति षष्ठमधिकरणम् ॥

---

१ अत्रेत्थं व्याख्यानान्तराणि—

(१) तत्र शाङ्कराः—पूर्वमेकवाक्यस्थसच्छब्दबलादसच्छब्दो नीतः । इह तु वाक्यभेदात् "ब्रह्म

ते ब्रवाणि'' इति बालाकिवाक्यस्थब्रह्मशब्देन प्राणादिशब्दो ब्रह्मपरत्वेन नेतुमशक्य इति प्रत्युदाहरण-सङ्गत्येदमाह । अत्र पूर्वपक्षे वाक्यस्य प्राणाद्युपासनापरत्वाद्ब्रह्मणि समन्वयासिद्धिः, सिद्धान्ते तत्सि-द्धिरिति फलभेदः । कौषीतकिब्राह्मणे श्रूयते—"यो वै बालाक एतेषां पुरुषाणां कर्ता यस्य वैतत्कर्म स वै वेदितव्यः'' इति । तत्र वेदितव्यः कर्ता किं प्राणः, उत जीवः, आहोस्वित्परमात्मेति विशये, "यस्य वैतत्कर्म'' इति चलनात्मककर्मणः प्राणस्यैव सम्भवात् "एवमेवैष प्रज्ञात्मैतैरात्मभिर्भुङ्क्ते'' इति जीवलिङ्गाच्च प्राणजीवाविति पूर्वः पक्षः । सिद्धान्तस्तु पुरुषाणां कर्ता परमात्मैव । कुतः, "ब्रह्म ते ब्रवाणि'' इति ब्रह्मण एवोपक्रमात् । क्रियत इति व्युत्पत्त्या कर्मशब्दस्य प्रत्यक्षाद्युपस्थापितजगद्वा-चित्वात् । ननु पुरुषाणां जगदन्तर्भावात्तत्कर्तृत्वं किमिति पृथगुच्यत इति चेत्, न; बालाकिना ब्रह्मत्वेनोक्तपुरुषाणामब्रह्मत्वद्योतनाय गोबलीवर्दन्यायेन पृथगुच्यत इति ध्येयम् ॥ जीवमुख्यप्राणलि-ङ्गाच्च न ब्रह्मपरत्वावधारणमिति चेत्, तद्व्याख्यातं प्रतर्दनाधिकरणे "नोपासात्रैविध्यादाश्रितत्वा-दिह तद्योगात्'' इति प्रतर्दनविचारे कर्मपदस्याविचारादगतार्थता द्रष्टव्या । किञ्च, जैमिनिरा-चार्योऽस्मिन्प्रकरणे जीवपरामर्शमन्यार्थं ब्रह्मप्रतिपत्त्यर्थं यतो मन्यतेऽतो ब्रह्मपरमेवेदं वाक्यम् । कुतो मन्यते? प्रश्नव्याख्यानाभ्याम् । "क्वैष एतद्बालाके पुरुषोऽशयिष्ट क्व वा एतदभूत्'' इत्यादिप्रश्नः, "यदा सुप्तः स्वप्नं न कञ्चन पश्यत्यथास्मिन्प्राण एवैकधा भवति'' इत्युत्तरं व्याख्यानम् । ताभ्यां यस्मिञ्जीवस्य स्वापागमने भवतः, स एवात्र परमात्मा वेदितव्यतयोपदिष्टः । अपि चैके वाज-सनेयिनो बालाक्यजातशत्रुसम्वादे "य एष विज्ञानमयः पुरुषः क्वैष तदाभूत्कुत एतदागात्'' "य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते'' इति प्रश्नोत्तराभ्यां स्पष्टं विज्ञानमयातिरिक्तं परमात्मानमाम-नन्ति । अत एतत्कौषीतकीवाक्यं जगत्कर्तरि ब्रह्मणि समन्वितमिति सिद्धम् ॥

(२) रामानुजीये—पुनरपि साङ्ख्यः प्रत्यवतिष्ठते । यद्यपि वेदान्तवाक्यानि चेतनं जगत्कारणत्वेन प्रतिपादयन्ति, तथापि तन्त्रसिद्धप्रधानपुरुषातिरिक्तं वस्तु जगत्कारणं वेद्यतया न तेभ्यः प्रतीयते । तथा हि । भोक्तारमेव पुरुषं कारणं वेद्यतयाऽधीयते कौषीतकिनो बालाक्यजातशत्रुसम्वादे । "ब्रह्म ते ब्रवाणि'' इत्युपक्रम्य "यो वै बालाक एतेषां पुरुषाणां कर्ता यस्य वैतत्कर्म स वै वेदितव्यः'' इत्यु-पक्रमे वक्तव्यतया बालाकिनोपक्षिप्तं ब्रह्माजानते तस्मा एवाजातशत्रुणा स वै वेदितव्य इति ब्रह्मो-पदिश्यते । यस्य वैतत्कर्मेति कर्मसम्बन्धात्प्रकृत्यध्यक्षो भोक्ता पुरुषो वेदितव्यतयोपदिष्टं ब्रह्मेति निश्चीयते नार्थान्तरम् । तस्य कर्मसम्बन्धानभ्युपगमात् । कर्म च पुण्यापुण्यलक्षणं क्षेत्रज्ञस्यैव सम्भ-वति । न च वाच्यं क्रियत इति कर्मेति व्युत्पत्त्या प्रत्यक्षादिप्रमाणोपस्थापितं जगदेतत्कर्मेति निर्दि-श्यते । यस्यैतत्सर्वं, जगत्कर्म स वै वेदितव्य इति क्षेत्रज्ञादर्थान्तरमेव प्रतीयत इति । "यो वै बालाक एतेषां पुरुषाणां कर्ता यस्य वैतत्कर्म'' इति पृथङ्निर्देशवैयर्थ्यात् । कर्मशब्दस्य च लोकवेदयोः पुण्यापुण्यरूप एव कर्मणि प्रसिद्धेः । तत्तद्भोक्तृकर्मनिमित्तत्वाज्जगदुत्पत्तेः । एतेषां पुरुषाणां कर्तेति च भोक्तुरेवोपपद्यते । तदयमर्थः । एतेषामादित्यमण्डलाद्यधिकरणानां क्षेत्रज्ञभोग्यभोगोपकरणभूतानां पुरुषाणां यः कारणभूत एतत्कारणभावहेतुभूतं पुण्यापुण्यलक्षणं च कर्म यस्य स वै वेदितव्यः । तत्स्वरूपं प्रकृतेर्वियुक्तं वेदितव्यमिति । तथोत्तरत्र "तौ ह सुप्तं पुरुषमाजग्मतुः तं यष्टिना चिक्षेप'' इति सुप्तपुरुषगमनयष्टिघातोत्थापनादीनि च भोक्तृत्वप्रतिपादन एव लिङ्गानीति । तथोपरिष्टादपि भोक्तैव प्रतिपाद्यते । "तद्यथा श्रेष्ठी स्वैर्भुङ्क्ते यथा वा स्वाः श्रेष्ठिनं भुञ्जन्त्येवमेवैष प्रज्ञात्मैतैरात्मभिर्भुङ्क्ते एवमेवैत आत्मान एतमात्मानं भुञ्जन्ति'' इति । तथा "क्वैष एतद्बालाके पुरुषोऽशयिष्ट क्व वा एतदभूत्कुत

एतदागात्" इति पृष्टमर्थमजानते तस्मै स्वयमेवाजातशत्रुरुवाच "हिता नाम नाड्यः"...."तासु तदा
भवति यदा सुप्तः स्वप्नं न कथञ्चन पश्यत्यथास्मिन्प्राण एवैकधा भवति, तदैनं वाक्सर्वैर्नामभिः सहा-
प्येति, मनः सर्वैर्ध्यानैः सहाप्येति, स यदा प्रतिबुध्यते, यथाग्नेर्ज्वलतः सर्वा दिशो विस्फुलिङ्गा विप्र-
तिष्ठेरन्नेवमेवैतस्मादात्मनः प्राणा यथायतनं विप्रतिष्ठन्ते, प्राणेभ्यो देवा, देवेभ्यो लोकाः" इति सुषु-
प्त्याधारतया स्वप्नसुषुप्तिजागरितावस्थासु वर्तमानं वागादिकरणाप्ययोद्गमनस्थानमेनमेव जीवात्मान-
मथास्मिन्प्राण एवैकधा भवतीत्युक्तवान् । अस्मिञ्जीवात्मनि प्राणभृत्त्वनिबन्धनोऽयं प्राणशब्दः । स यदा
प्रतिबुध्यत इति प्राणशब्दनिर्दिष्टस्य प्रबोधश्रवणान्मुख्यप्राणस्येश्वरस्य च सुषुप्तिप्रबोधयोरसम्भवात् ।
अथवाऽस्मिन्प्राण इति व्यधिकरणसप्तम्यौ । अस्मिन्नात्मनि वर्तमाने प्राण एकधा भवति वागादिकर-
णग्राम इति । प्राणशब्दस्य मुख्यप्राणपरत्वेऽपि जीव एवास्मिन्प्रकरणे प्रतिपाद्यते । स्वतः प्राणस्य
जीवोपकरणत्वात् । अतो वक्तव्यतयोपक्रान्तं ब्रह्म पुरुष एवेति तद्व्यतिरिक्तेश्वरासिद्धिः । कारणगता-
श्चेक्षणादयश्चेतनधर्मा अस्मिन्नेवोपपद्यन्त इत्येतदधिष्ठितं प्रधानमेव जगत्कारणमिति प्राप्ते प्रचक्ष्महे,
जगद्वाचित्वात् । अत्र पुण्यापुण्यपरवशः क्षुद्रः क्षेत्रज्ञः स्वस्मिन्प्रकृतिधर्माध्यासेन तत्परिणामदे-
हभूतः पुरुषो नाभिधीयते । अपि तु निरस्तसमस्ताविद्यादिदोषगन्धो नवधिकातिशयासङ्ख्येय-
कल्याणगुणगणनिधिर्निखिलजगदेककारणभूतः पुरुषोत्तमोऽभिधीयते । कुतः ? यस्य चैतत्कर्मे-
त्यनेनैतच्छब्दान्वितस्य कर्मशब्दस्य परमपुरुषकार्यभूतजगद्वाचित्वात् । एतच्छब्दो ह्यर्थप्रकरणादिभि-
रसङ्कुचितवृत्तिरविशेषेण प्रत्यक्षादिप्रमाणोपस्थापित निखिलचिदचिन्मिश्रजगद्विषयः । न च पुण्या-
पुण्यलक्षणं कर्मात्र कर्मशब्दाभिधेयम् । "ब्रह्म ते ब्रवाणि" इत्युपक्रम्य ब्रह्मत्वेन बालाकिना
निर्दिष्टानामादित्यमण्डलाद्यधिकरणानां पुरुषाणामब्रह्मत्वेन "मृषा वै खलु मा समवदिष्ठाः"
इति तमब्रह्मवादिनमपोद्य तेनाविदितब्रह्मज्ञापनायाजातशत्रुणेदं वाक्यमवतारितं "यो वै बालाके"
इत्यादि । पुण्यापुण्यलक्षणकर्मसम्बन्धिन आदित्याद्यधिकरणास्तत्सजातीयाश्च पुरुषास्तेनैव
विदिता इति तदविदितपुरुषविशेषज्ञापनपरोऽयं कर्मशब्दो न पुण्यापुण्यमात्रवाची क्रियामात्रवाची
वा । अपि तु कृत्स्नस्य जगतः कार्यत्ववाची । एवमेव ह्यविदितोऽर्थ उपदिष्टो भवति ।
पुरुषस्य कर्मसम्बन्धोपलक्षितस्वाभाविकस्वरूपस्याज्ञातस्य वेदितव्यत्वोपदेशे च लक्षणा । कर्मसम्बन्ध-
मात्रस्यैव वेदितव्यस्वरूपलक्षणत्वाद्यस्य कर्म स वेदितव्य इत्येतावतैव तत्सिद्धेर्यस्य चैतत्कर्मेत्ये-
तच्छब्दवैयर्थ्यं च । य एतेषां कर्ता यस्य चैतत्कर्मेति पृथङ्निर्देशस्य चायमभिप्रायः । ये त्वया ब्रह्मत्वेन
निर्दिष्टाः पुरुषास्तेषां यः कर्ता, ते यत्कार्यभूताः, किं विशिष्याभिधीयते ? कृत्स्नं जगद्यस्य कार्यं-
मुत्कृष्टा अपकृष्टाश्चेतना अचेतनाश्च सर्वे पदार्था यत्कार्यत्वेन तुल्याः स परमकारणभूतः पुरुषोत्तमो
वेदितव्य इति । जगदुत्पत्तेर्जीवकर्मनिबन्धनत्वेऽपि न जीवः स्वभोग्यभोगोपकरणादेः स्वयमुत्पादकः ।
अपि तु स्वकर्मानुगुण्येनेश्वरसृष्टं सर्वं भुङ्क्ते । अतो न तस्य पुरुषान्प्रति कर्तृत्वमुपपद्यते । अतः, सर्व-
वेदान्तेषु परमकारणतया प्रसिद्धं परं ब्रह्मैवात्र वेदितव्यतयोपदिश्यते । अथ यदुक्तं जीवलिङ्गान्मुख्य-
प्राणसङ्कीर्तनाच्च लिङ्गाज्जीवैवास्मिन्प्रकरणे प्रतिपाद्यते न परमात्मेति तद्व्याख्यातम् । तस्य निर्वाहः
प्रतर्दनविद्यायामभिहितः । एतदुक्तं भवति । यत्रोपक्रमोपसंहारपर्यालोचनया ब्रह्मपरं वाक्यमिति
निश्चितं तत्रान्यलिङ्गानि तदनुरोधेन वर्णनीयानीति तत्र प्रतिपादितम् । "अत्राप्युपक्रमे ब्रह्म ते ब्रवाणि"
इति ब्रह्मोपक्षिप्तम् । मध्ये च "यस्य चैतत्कर्म" इति निर्दिष्टं न पुरुषमात्रमपि तु निखिलजगदेक-
कारणं ब्रह्मैवेत्युक्तम् । उपसंहारे च "सर्वान्पाप्मनोऽपहत्य सर्वेषां च भूतानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं

पर्येति य एवं वेद" इति ब्रह्मोपासनैकान्तं सर्वपापापहतिपूर्वकं स्वाराज्यं च फलं श्रुतम् । अतोऽस्य वाक्यस्य ब्रह्मपरत्वनिश्चयेन जीवमुख्यप्राणलिङ्गान्यपि तत्परतया वर्णनीयानीति । प्रातर्दने ह्युपासा त्रैविध्येन जीवमुख्यप्राणलिङ्गानां ब्रह्मपरत्वमुक्तम् । अत्रापि "अथास्मिन्प्राण एवैकधा भवति" इति सामानाधिकरण्यसम्भवे वैयधिकरण्यसंश्रयणायोगाद्ब्रह्मण्येव प्राणशब्दप्रयोगनिश्चयेन च प्राणशरीर-ब्रह्मोपासनार्थं प्राणसङ्कीर्तनं लिङ्गं युज्यते ॥ जीवलिङ्गानां ब्रह्मपरत्वं पुनः कथमित्यत्राह–तु शब्दो जीवसङ्कीर्तनेन वाक्यस्य तत्परत्वसम्भावनाव्यावृत्त्यर्थः । अन्यार्थं जीवसङ्कीर्तनं जीवातिरिक्तब्रह्मस्वरूप-प्रतिबोधनार्थमिति जैमिनिराचार्यो मन्यते स्म। कुतः ? प्रश्न व्याख्यानाभ्याम् । प्रश्नस्तावत् "तौ ह सुप्तं पुरुषमाजग्मतुः" इत्यादिना सुप्तस्य प्रबुद्धप्राणस्यैव प्राणनामभिरामन्त्रणाश्रवणयष्टिघातोत्थापनाभ्यां प्राणादिव्यतिरिक्तं जीवं प्रतिबोध्य पुनर्जीवव्यतिरिक्तब्रह्मप्रतिबोधनपरो दृश्यते । "क्वैष एतद्बालाके पुरुषोऽशयिष्ट क्व वा एतदभूत्कुत एतदागात्" इति । व्याख्यानमपि यदा सुप्तः स्वप्नं न कथञ्चन पश्यत्यथास्मिन्प्राण एवैकधा भवति ।......"एतस्मादात्मनः प्राणा यथायतनं विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोका" इति जीवादर्थान्तरभूतपरमात्मपरमेव । सुप्तस्य हि जीवस्य यत्प्रोषितस्य जाग-रितस्वप्नदशासम्बन्धिविचित्रसुखदुःखानुभवकालुष्यविरहेण सम्प्रसन्नस्य स्वस्थतापत्तिः पुनरप्यस्य यस्माद्भोगाय निष्क्रमणं सोऽयं परमात्मा । "तथा हि सता सोम्य तदा सम्पन्नो भवति" "प्राज्ञेना-त्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरमि"ति सुषुप्त्याधारतया प्रसिद्धो जीवादर्थान्तरभूतः प्राज्ञः परमात्मा । अतः, प्रश्नप्रतिवचनाभ्यां जीवसङ्कीर्तनं जीवादर्थान्तरभूतपरमात्मप्रतिपादनार्थमिति निश्चीयते । यदुक्तं प्रश्नव्याख्याने जीवपरे । सुषुप्तिस्थानं च नाड्य एव करणग्रामश्च प्राणशब्दनिर्दिष्टे जीव एवैकधा भवतीति । तदयुक्तम् । नाडीनां स्वप्नस्थानत्वाद्दुकरीत्या ब्रह्मण एव सुषुप्तिस्थानत्वाच्च । प्राणशब्दनिर्दिष्टे ब्रह्मण्येव जीवस्य तदुपकरणभूतवागादिकरणग्रामस्य चैकतापत्तिविभागवचनाच्च । "अपि चैवमेके" वाजसनेयिनोऽस्मिन्नेव बालाक्यजातशत्रुसंवादे सुषुप्ताद्विज्ञानमयाद्भेदेन तदाश्रयभूतं परमात्मानमामनन्ति य एष विज्ञानमयः पुरुषः "क्वैष तदाभूत्कुत एतदागात् ।......यत्रैष सुप्तो-ऽभूत्" । य एष विज्ञानमयः पुरुषस्तदैषां प्राणानां विज्ञानेन विज्ञानमादाय "य एषोऽन्तर्हृदय आकाश-स्तस्मिञ्छेते" इति । आकाशशब्दश्च परमात्मनि प्रसिद्धो "दहरोऽस्मिन्नन्तर आकाशः" इति । अतोऽत्र जीवसङ्कीर्तनम्, तस्मादर्थान्तरभूतस्य प्राज्ञस्य परस्य ब्रह्मणः प्रतिबोधनार्थमित्यवगम्यते । तस्मादस्मि-न्वाक्ये पुरुषादर्थान्तरभूतस्य निखिलजगत्कारणस्य परस्यैव ब्रह्मणो वेदितव्यतयाभिधानान्न तन्नसिद्धस्य पुरुषस्य तदधिष्ठितस्य वा प्रधानस्य कारणत्वं क्वचिदपि वेदान्ते प्रतीयत इति स्थितम् ॥

(३) माध्वे—तर्हि कथं तेषां शब्दानां जगति प्रसिद्धिः । जगति व्यवहारो लोकस्य न तु परमात्मनि तथा । अतो जगति प्रसिद्धिः शब्दानाम् । तदधीनत्वात्तच्छब्दवाच्यमित्युक्तम् । तज्जी-वमुख्यप्राणयोर्लिङ्गम् । "अस्य यदैकाशाम्यां जीवो जहात्यथ सा शुष्यति वायुना हि सर्वे लोका नेनीयन्ते" इत्यादि श्रुतिभ्य इति चेन्न उपासनात्रैविध्यादिति व्याख्यातत्वात् । परमात्मज्ञानार्थं कर्मादिकमपि वदतीति जैमिनिः । "कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवतीति तस्मै होवाच द्वेविद्ये वेदितव्ये कथन्नु भगव स आदेशो भवतीति यथा सौम्यैकेन मृत्पिण्डेने"त्यादिना प्रश्नव्याख्या-नाभ्याम् । एवमपि चैके पठन्ति वेदे "किमृचा करिष्यती"ति ? ।

(४) निम्बार्के—"यो वै बालाके एतेषां पुरुषाणां कर्ता यस्यैतत्कर्म" इति वाक्ये धर्माधर्म-कर्मफलभोक्ता तन्नोक्तपुरुषो वेदितव्य. इति न शङ्क्यम् । परमात्मैवात्र वेदितव्यत्वेन निर्दिष्ट ।

कुतः? "ब्रह्म ते ब्रवाणि" इति ब्रह्मप्रकरणात् । क्रियते यत्तत्कर्मेति कर्मशब्दस्य जगद्वाचित्वात्, "एतदि"त्यनेन सर्वनाम्ना प्रत्यक्षादिप्रमाणसिद्धस्य जगत उपस्थितत्वाच्च, तत्रोक्तपुरुषप्रकरणाम- "एष प्रज्ञात्मा एतैरात्मभिर्भुङ्क्ते" इति जीवलिङ्गात् "अथास्मिन्प्राणे एवैकधा भवति" इति मुख्यप्राणलिङ्गाच्च तदन्यतरो ग्राह्यो, न ब्रह्मेति चेत् । तद्व्याख्यातं प्रतर्दनाधिकारे । जीवादिलि- ङ्गानि तत्र ब्रह्मपरत्वेन व्याख्यातानि तद्वदिहापि ज्ञेयानीत्यर्थः । अस्मिन्प्रकरणे जीवग्रहणमन्यार्थं जीवव्यतिरिक्तब्रह्मबोधार्थमिति जैमिनिर्मन्यते । "क्वैष एतद्बालाके पुरुषोऽशयिष्ट क्व वा एतदभूत्, कुत एतदागादिति" प्रश्नात्, "यदा सुप्तः स्वप्नं न कञ्चन पश्यति अथास्मिन्प्राणे एवैकधा भवति" इत्यादिप्रतिवचनाच्च । वाजसनेयिनोऽपि च एवमेव जीवव्यतिरिक्तपरमात्मानमामनन्ति । तत्रापि प्रश्नप्रतिवचने भवतः "क्वैष तदाभूत् कुत एतदागात्" इति प्रश्नः । "य एषोऽन्तर्हृदये आकाशस्तस्मिन् शेते" इति प्रतिवचनम् ॥

(५) भैक्षवे—कथं समाकर्षणं तत्राह—पञ्चम्यन्तानां वाक्यशेषस्य प्राणादिशब्दानामुपलक्षकतया जग- द्वाचित्वात् समस्तकार्यवाचित्वादित्यर्थः । एतेन परमात्मनः कार्य्यशक्तयोऽपि मीमांसीता इति मन्त- व्यम् । ननु यदुक्तमजावाक्ये ब्रह्मशक्तिविषया प्रधानप्रतिपादनं यथोक्तं प्राणस्य माण इति वाक्यं ब्रह्मशक्तितया प्राणादिप्रतिपादनं तदुभयमपि न । कुतो, जीवमुख्यप्राणलिङ्गात् । अयमर्थः, भवेदेवं यद्यजाप्राणवाक्ययोर्ब्रह्मप्रकरणस्थत्वं सिध्येत्, तदेवं तु न, अजावाक्यवति श्वेताश्वतरे जीवलिङ्गं हि दृश्यते "रुद्र यत्ते दक्षिणं मुखं तेन मां पाहि नित्यमि"त्यादिवाक्यशेषेषु । मन्त्रेयं विधवाक्येभ्य एव रुद्रः परमेश्वर एव भवत्विति चेन्न, ईश्वरवादिभिः श्रुत्यन्तरेभ्यः स्मृतिभ्यश्च ब्रह्मादिदेवताश्रयादतिरिक्ततयैवेश्वराभ्युपगमात् । एवं प्राणवाक्यस्याप्यव्यवधानेनादौ प्राणलिङ्गं दृश्यते "तद्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतमि"त्यादिना प्राणस्य वायुत्वं श्रुत्यन्तरे दृष्टम् । "प्राणो हि भूता- नामायुस्तस्मात्सर्वायुषमुच्यत" इति । तस्मादजाख्या प्रकृतिः सर्गाद्युत्पन्नस्य महापुरुषस्यैव शक्तिः, न परमेश्वरस्य, तस्याश्च कर्मवशादेवाद्या प्रवृत्तिर्नाधिष्ठातारमपेक्षते, अतः स्वतन्त्रैव प्रकृतिः, दृष्ट्यादिका- रणम् । एवं प्राणादयोऽपि मुख्यप्राणस्यैव शक्तिरिति । न च प्राणस्य प्राणत्वं कथं मुख्यप्राणे स्यादिति वाच्यम्, प्राणस्येत्यर्थः सम्भवात् प्राणशब्दस्य घ्राणवाचकतायाः श्रुत्यन्तरे दृष्टत्वादिति । तदित्थं पूर्वपक्षे, सिद्धान्तमाह, इति चेत्तद्व्याख्यातमिति । तल्लिङ्गद्वयं ब्रह्मण्यपि व्याख्यातमुपपादितं प्रथमपादे उपा- साम्नैविध्यादाश्रितत्वादिह तद्योगादिति सूत्रार्धेनेत्यर्थः । अयं भावः, श्वेताश्वतरे परमात्मैव महाप्रकरणी "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" । "क्षरं प्रधानममृताक्षरं हरः क्षरात्मा नावीशते देव एक" इत्यादिवाक्येभ्यो ब्रह्मरुद्रव्यतिरिक्तस्तस्मात्तदन्तर्यामिण एव प्रकरणित्वात् अतो अजाप्रकरणे यज्जीवलिङ्गमस्ति तत्प्रकरणानुरोधेन शक्तिशक्तिमदभेदेनोपासनार्थं ब्रह्मण्येव बोध्यम् । "अनेन जीवेनाऽनुप्रविश्ये"ति श्रुत्या ब्रह्मणो जीवरूपित्वसिद्धेः । "स एव जीवः सुखदुःखभोक्ते"त्यादिषु स्फुटम् । तथा वचनाच्च । अन्यथा हि प्रकृतहान्यप्रकृतप्रक्रिये प्रसज्येयातामिति । एवं प्राणवाक्येऽपि यन्मुख्यप्राण- लिङ्गमस्ति, तदपि प्रकरणानुरोधेन प्राणशक्तिद्वारा ब्रह्मण्येव, बोध्यम् । "नृप मूर्तान्यमूर्तानि यान्यत्रा- न्यत्र वा क्वचित् । सन्ति वै वस्तुजातानि तानि सर्वाणि तद्वपुः" इत्यादिवाक्येषु ब्रह्मणः प्राणादि- रूपित्वसिद्धेरिति ॥ अस्मिन्सूत्रे पूर्वपक्षनिराकरणमुखेनैव जीवस्यापि ब्रह्मशक्तित्वमुक्तमतो न शक्ति- मीमांसा न्यूनेति । जैमिनिस्त्वाचार्य उपासनार्थं न मन्यते, किन्तु, परमसूक्ष्मत्वेन स्वतो दुष्प्रतिपा- द्यतया क्रमेण ब्रह्मस्वरूपप्रतिपादनार्थं शाखाचन्द्रन्यायतो जीवमुख्यप्राणादिशक्तिरूपेणादौ सर्वान्तर्यामि-

ब्रह्म प्रतिपादयितुं ब्रह्मप्रकरणेषु जीवमुख्यप्राणादिकमिति प्रतिपाद्यत इति मन्यते । कुतः? प्रश्नप्रतिवचनाभ्यां प्रश्नप्रत्युत्तराभ्यां ब्रह्मणः प्रकरणित्वादित्यर्थः । अपि चेत्यादि, अपि च एके शाखिनः काण्वादयः एवं अन्यार्थमेवातिस्पष्टं जीवादिकं ब्रह्मप्रकरणे पठन्ति । यथा काण्वे चतुर्थे "सहोवाचाजातशत्रुर्यत्रैष एतत्सुप्तोऽभूद्य एष विज्ञानमयः पुरुषस्तदेषां प्राणानां विज्ञानेन विज्ञानमादाये"त्यादिना जीवतदवस्थादिपठनं तत्स्वापाधारब्रह्मप्रतिपादनार्थमिति । "स एष इह प्रविष्ट आनखाग्रेभ्यस्तं न पश्यत्यकृत्स्नो हि स" इति । "द्वे वाव ब्रह्मणो रूपे मूर्तं चामूर्तं च" "अथात आदेशो नेतिनेती"ति ॥

(६) भास्करीये—कौषीतकिब्राह्मणे बालाक्यजातशत्रुसम्वादे श्रूयते, "यो वै बालाक एतेषां पुरुषाणां कर्ता यस्य चैतत् कर्म स वै वेदितव्य" इति । अत्र सन्देहः, किमत्र प्राणो वेदितव्यत्वेनोपदिश्यते किं वा जीवः, परमात्मेति । प्राणस्यैतत् कर्मेति तावत् प्राप्तम् । कर्मशब्दः क्रियावचनः, सर्वा च क्रिया चलनात्मिका परिस्पन्दलक्षणश्च वायुः तेन प्राणो गम्यते धूमेनेवाग्निः, येन बालाकिना निर्दिष्टाः पुरुषाः "य एष आदित्ये पुरुषश्चन्द्रमसि पुरुष" इति । तेषामपि वायुः कर्तोपपद्यते । सूत्रात्मनः प्राणस्य महिमानोऽपि सर्वे देवताप्रभेदा इति जीवो वा वेदितव्यो यस्य चैतत् कर्मेति धर्माधर्मलक्षणं कर्म प्रसिद्धं तद्भोगार्थं जगदुत्पद्यत इति बालाकिना निर्दिष्टानां पुरुषाणामपि जीवः कर्ता कथञ्चिदुपपद्यते । तस्माद्विज्ञानात्यो वेदितव्य इति प्राप्तेऽभिधीयते । पर एवात्र वेदितव्यतयाऽवगम्यते । कथमुपक्रमे ब्रह्म ते ब्रवाणीति बालाकिना ब्रह्मोपक्षिप्तं तदेवात्र बुद्धौ विपरिवर्तमानं यस्य चैतत् कर्मेत्यत्र स मुच्यते, न प्राणो जीवो वा प्रकरणाभावात्, कर्मशब्दश्चैतच्छब्देन सम्बध्यमानप्रत्यक्षादिप्रमाणसिद्धं जगत् प्रत्याययति क्रियत इति कर्मेतिव्युत्पत्तेः स भगवानेतेषां पुरुषाणां कर्ता ईश्वरः कर्तोपपद्यते, नान्यः । चशब्दस्य चायमर्थः, किं विशिष्याभिधीयते यस्य चेदं कृत्स्नं कर्म सामान्येन स वै वेदितव्य इति किञ्च, अजातशत्रुणा बालाक्युपदिष्टं ब्रह्म प्रत्याख्याय तदधिकविवक्षयेदं वाक्यमवतारितम् । तस्मात् परविषयमिदम् । उपसंहारे च सर्वान् पाप्मनोपहत्य सर्वेषां भूतानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं पर्येति य एवं वेदेति सर्वेषामुपासनमित्युक्तम् ॥ अन्यार्थं ब्रह्मोपलक्षणार्थमस्मिन् प्रकरणे जीवप्राणग्रहणमिति जैमिनिराचार्यो मन्यते स्म । प्रश्नव्याख्यानाभ्याम्, प्रश्नस्तावत् "क्वैष बालाके पुरुषोऽशयिष्ट क्व वा एतदभूत कुत एतदागादि"ति । व्याख्यानमपि "यदा सुप्तः स्वप्नं न कञ्चन पश्यति, अथास्मिन् प्राण एवैकधा भवति एतस्मादात्मनः प्राणा यथायतनं विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोका" इति सुषुप्तिकाले समस्तं करणग्रामं मनसा संहृत्यायं जीवोऽन्यं विज्ञानात्मानमनुप्रविश्य स्वस्थः सम्प्रसन्नः पुनर्भोगायागच्छति । सोऽयमीश्वरोऽत्र वेदितव्यो न जीवः । अपि चैवमेके वाजसनेयिनः एवमेवाधीयते । तत्रापि बालाक्यजातशत्रुसम्वादरूपामाख्यायिकामवतार्य प्रश्नप्रतिवचने भवतः । य एष विज्ञानमयः पुरुषः क्वैष एतद्बालाके पुरुषोऽशयिष्ट क्व वा एतदभूत् कुत एतदागादिति प्रश्नः प्रतिवचनमपि य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेत इत्याकाशशब्दो ब्रह्मणि प्रयुक्तम्, इत्युक्तं दहरोऽस्मिन्नन्तराकाश इत्यत्र । ननु पुनरुक्तमिवाभाति । न दोषः । प्रतर्दने जीवमुख्यप्राणलिङ्गयोर्ब्रह्मोपलक्षणार्थत्वं व्याख्यातमुपक्रमोपसंहारपर्यालोचनया त्रिविधमुपासनं तत्राभिप्रेतं इह तूपलक्षणार्थमिति केचित् । अथवास्तु तत्राप्युपलक्षणार्थत्वं, तथापि विशेषाशङ्का शक्यते दर्शयितुं, युक्तं तत्र वक्तुरात्मोपदेशः वामदेववत्परमात्मोपासनमेव विजानातीति वक्तुं तदेकवाक्यत्वाद्योत्तरमपि ब्रह्मविषयं वाक्यजातमिह पुनरेवमाम्नायतेति दोषाच्च अजातशत्रुः क्वैष एतद्बालाके पुरुषोऽशयिष्ट क्व वा एतदभूत् कुत एतदागादिति बालाकेरप्रतिपत्त्या स्वयमेवाजातशत्रुरुत्तरमुक्तवान् । हितानामहितानां प्रस्तासु तदा भवति । यथा

सुषुप्तः स्वप्नं न कञ्चन पश्यत्यथास्मिन् प्राण एवैकधा भवति । तथा "तदैव वाक् सर्वैर्नामभिः सहाप्येति मनः सर्वैर्ध्यानैः सहाप्येति स यदा प्रतिबुध्यते यथाग्नेर्ज्वलतः सर्वा दिशो विस्फुलिङ्गा विप्रतिष्ठेरन्नेवमेतस्मादात्मनः प्राणा यथायतनं विप्रतिष्ठन्ते प्राणेभ्यो लोका इति । नात्र परमात्मलिङ्गं विस्पष्टं कीर्त्यते ततो जीवमुख्यप्राणलिङ्गयोर्मुख्यत्वमेव युक्तं यस्य चैतत् कर्मेति च कर्मशब्दः क्रियावचनः प्रसिद्ध इति । समाधानं तु जगद्वाचित्वात् कर्मशब्दस्य तदनुसारित्वाच्चोत्तरवाक्यप्रवृत्तेः प्राणशब्दः परमात्मपरो निश्चीयते । य एतस्मादात्मन इति च आत्मशब्दादुपसंहारे चाधिपत्यकीर्तनात् शाखान्तरे क्वैष तदाभूत कुत एतदागादिति क्वेत्यधिकरणवाचिनः परमात्मवाचित्वेन प्रयोगादाकाशे शेत इति च परमात्मनि स्वापसङ्कीर्तनात् । "सता सौम्य तदा सम्पन्नो भवती"ति चात एव पूर्वत्रापरिलोपात् परिहारान्तरं वक्तुमाहान्यार्थं तु जैमिनिरिति ॥

(७) श्रीमद्वल्लभाचार्यमतेऽयमभिप्रायः—एवं शब्दविप्रतिषेधं परिहृत्यार्थकृतं विप्रतिषेधं परिहर्तुमधिकरणान्तरं प्रणयति ।

अत्र कौषीतकिब्राह्मणे षष्ठोऽध्यायः सर्वोऽपि विषयः । तत्र गार्ग्यो नाम्ना बालाकिरजातशत्रवे काशिराजाय स्वकीर्त्यर्थं स्वत एव ब्रह्मोपदेष्टुं समागत आदित्यचन्द्रविद्युत्स्तनयित्नुवाय्वाकाशाप्सुयथाकार्यादर्शच्छायाप्रतिश्रुत्काशब्दस्वप्नशरीरदक्षिणाक्षिवामाक्षिपुरुषपर्यन्तान्युपासनान्युक्तवान् । तदा तेष्वजातशत्रुणा परिच्छिन्नानि फलानि प्रदर्श्य तेषां परिच्छिन्नब्रह्मोपासनत्वेन तज्ज्ञानस्य मुख्यत्वे निराकृते बालाकिः पूर्णब्रह्मज्ञानार्थं तमेवोपससाद । ततो राजा स्नेहेन तं हस्ते गृहीत्वा सभात उत्थाय क्वचिदेकान्ते सुषुप्तपुरुषसमीपमागत्य, बृहत्पाण्डरवासः सोमराजन्नित्यादिभिर्नामभिः प्रोचैर्धर्मैस्तं सम्बोधयाञ्चक्रे । तदापि तं सुप्तं दृष्ट्वा राजा यष्ट्याक्षिप्तवान् । ततः स पुरुष उत्तस्थौ । तदा राजबालाकी वक्ष्यमाणप्रश्नोत्तराभ्यां ब्रह्मवादं चक्रतुः । तत्र "क्वैष एतद् बालाके पुरुषोऽशयिष्ट"-त्यादिना बालाकिं प्रति राजा पुरुषस्य स्वप्नस्थानं, स्वप्नावस्थां तत आगमनं चेति त्रयं पृष्टवान् । तत्र राजप्रश्नेषु पुरुषपदेन जीवः प्रक्रान्तः । यदा च बालाकिस्तं न ज्ञातवाँस्तदा "राजैव यत्रैष एतद् बालाके पुरुषोऽशयिष्ट"इत्यादिनोत्तरं जगाद । तत्र हिताख्यासु हृदयनिकटस्थासु नाडीषु जीवस्य शयनं, तत्र स्वप्नसुषुप्तिरूपमवस्थाद्वयं, ततः पुनरागमनं च यदता राज्ञा तत एवाग्निविस्फुलिङ्गन्यायेन सर्वोत्पत्तिरुक्ता । ततः "स एष प्राण एव प्रज्ञात्मेदं शरीरमात्मानमनुप्रविष्ट आलोमभ्य आनखेभ्यस्तद्यथा क्षुरः क्षुरधानेऽवहितो विश्वम्भरो वा विश्वम्भरकुलाय" इति दृष्टान्तद्वयेन प्रज्ञात्मप्राणाख्यस्य ब्रह्मणः प्रवेश उक्तः । तत्र सन्देहः । जीव एव ब्रह्मसहितः कर्ता, ब्रह्मैव वेति । पूर्वपक्षस्तु सर्वस्य जगतो जीव एव कर्ता, यो वै बालाके एतेषां पुरुषाणां कर्ता यस्य वैतत्कर्मेति कर्तारं वेदितव्यत्वेनोपक्षिप्य सुप्तपुरुषनिकटगमनाद्युत्तरं तस्मादेव प्राणानां देवानां लोकानां चोत्पत्तिकथनात् । नच ब्रह्मणोऽपि कर्तृत्वम् । तदनुप्रवेशमात्रस्यैव बोधनात् । अतः साहित्यमात्रं भवतु । नच जीवस्य कर्तृत्वे उपक्रमोक्तस्य ब्रह्मत्वस्य बृहदादीनां धर्माणां च विरोधः शङ्कनीयः । यथा तुल्येऽपि सर्वेषु जीवत्वे क्वचिदेव देहेऽन्यनियोजकत्वोपाधिना राजत्वं, कर्मकरणे मुख्यत्वोपाधिना यजमानत्वं, तथा प्रकृत्यभिमन्तृत्वोपाधिना तेषामप्यागन्तुकानां वक्तुं शक्यत्वात् । नचोपक्रमस्यासञ्जातविरोधित्वेन प्रबलत्वाद् ब्रह्मण एव कर्तृत्वमिति शङ्क्यम् । उपसंहारस्यात्र विवरणरूपत्वेन पूर्वोक्तार्थनिर्णायकत्वादत्र ब्रह्मोपक्रमेण जीवपर्यवसानोक्तेर्ब्रह्मत्वेनोक्तस्य जीवस्यैव कर्तृत्वौचित्यात् । नचोपक्रमोपसंहारभेदस्य निष्प्रयोजनकत्वम् । सर्वत्रैवैतन्न्यायज्ञापनार्थत्वात् । एवमत्र विशिष्टस्याभिमानिनो देहात्

प्रति कर्तृत्वे सिद्धे सति लोकेऽपि जीवस्य कर्तृत्वं सद्भाव्येव भवेत्। तत्तत्कर्मणां बन्धमोक्षव्यवस्था च सुखेनोपपद्येत। एवमभिमानिनः कर्तृत्वे सिद्धे यो यादृगभिमानी तेन तादृक् कर्म कर्तव्यमिति नियमात् सर्वकर्तृत्वं प्रकृत्यभिमानिनः सिध्येत्, प्रकृतावेव फलिष्यतीति प्राप्तम्। तत्रोच्यते। जगद्वाचित्वात्। अत्रापि कारणत्वेनेत्यनुवर्तते। ब्रह्मैव कारणत्वेन विवक्षितम्। नात्र प्रकृत्यभिमानी जीवः कर्तृत्वेन विवक्षितः। कुतः? जगद्वाचित्वात्। अत्र हि बालाकिप्रोक्तानादित्यादीन्निराकृत्य अजातशत्रुणा "यो वै बालाके एतेषां पुरुषाणां कर्ता यस्य वैतत् कर्म स वेदितव्य" इति सिद्धान्तकथनोपक्रमे एतदित्येतच्छब्देनादित्यमण्डलाद्युल्लेखादुपलक्षणविधया जगदुच्यते। पुरुषपदेन च जीवरूपम्। तच्च जडजीवात्मकं जगद् ब्रह्मकर्तृकमिति पूर्वं "यतो वे"त्यादिश्रुतिविचारे सिद्धम्। अत्रापीतः पूर्वमिन्द्रप्रतर्दनसम्वादे एवमेव सिद्धम्, अतस्तदनुरोधेनात्रापि एतच्छब्दस्य जगद्वाचित्वं कर्तृत्वं ब्रह्मण एव। नचोपसंहारे विवरणरूपत्वम्। तथात्राप्रतीयमानत्वात्। नच "न जायते न म्रियते वे"ति श्रुतेर्जीवोत्पत्तिः सिद्धान्तेऽप्यनिष्टेति जडजीवात्मकजगत्कर्तृत्वकथनमसङ्गतमिति शङ्क्यम्। "सर्वं एवात्मनो व्युच्चरन्ती"ति श्रुत्यन्तरेण रूपाया उत्पत्तेर्जीवेऽप्यङ्गीकारात्। अतो जडवत् स्वरूपान्यथाभावाभावादेव न जायत इत्युपपत्तेर्न सिद्धान्ते दोषः। नच सिद्धान्ते उपलक्षणविधवत्पूर्वपक्षे सङ्कोच इति दोषतौल्यमिति शङ्क्यम्। ब्रह्मण उपक्रमे श्रुतत्वेन तदादरस्य उक्ततया उपलक्षणविधाया अदुष्टत्वात्। प्रकृत्यभिमानिनस्त्वश्रुतत्वेन तत्कल्पने श्रुतत्यागाश्रुतकल्पनयोरापत्तेराधिक्याच्च। नच ब्रह्मपदमत्र साङ्ख्याभिमतप्रधानपरमिति शङ्क्यम्। स्वरूपलक्षणविरोधप्रसङ्गात्। अतः, सर्वश्रुत्येकवाक्यत्वायात्रापि ब्रह्मण एव कर्तृत्वस्य मन्तव्यत्वात्, सुषुप्तावपि ब्रह्मण्येवात्रोक्तानां वाय्वादीनां लयः, तस्मादेव सर्वेषां यथायतनं विप्रतिष्ठेति ज्ञातव्यम्। नच प्राण एव प्रज्ञात्मेत्यस्य विरोधः। इन्द्रप्रतर्दनसम्वाद एव प्राणात्मशब्दवाच्यत्वस्य ब्रह्मणि सिद्धत्वात्। तस्मादत्र प्रकृत्यभिमानी जीवो न कर्तृत्वेन सिध्यतीति न तदधिष्ठिता प्रकृतिः कारणमिति सिद्धम्॥

ननु जीव एवात्र प्रक्रान्तः। क्वैष एतद् बालाके पुरुषोऽशयिष्टेति। अतः शयनोत्थानलक्षणजीवधर्मदर्शनात् तस्यैव ब्रह्मत्वं जगत्कर्तृत्वं च। तत् स्वतोऽनुपपद्यमानं प्रकृतौ फलिष्यति। अथवा मुख्यप्राणलिङ्गमप्यत्रास्ति। प्राण एवैकधा भवतीति। सुषुप्तौ च तस्यैव वृत्तिरुपलभ्यते इति विद्यमानत्वात् तस्मादेवोत्पत्तिप्रलयौ। स च प्रकृत्यंशोऽतो जडादेव प्रधानात् सृष्टावपि सर्वोत्पत्तिः। अतः प्रकरणाज्जीवद्वारा साक्षाद्वा प्रकृतेरेव कारणत्वमिति जीवेत्यादिसूत्रांशेनाशङ्क्य परिहरति तद् व्याख्यातमिति। एतयोर्जीवमुख्यप्राणलिङ्गत्वमेव नास्तीति "आश्रितत्वादिह तद्योगा"दित्यत्रैव व्याख्यातं निर्णीतम्। सर्वमेव कार्यं भगवत एव, नान्यस्मादिति। अतोऽस्मादपि ब्रह्मवाद एव सिध्यति, न प्रकृतिवाद इत्यर्थः॥

स्वमतेन परिहारमुक्त्वा अत्र साङ्ख्यमतमन्येषामप्यनुमतं न भवतीति। स्वापप्रबोधौ जीवधर्मावेव। चक्षुरादित्याधारत्वं च मुख्यप्राणस्यैवेति नियतधर्मवादेनापि परिहारमाह। अन्यार्थमित्यादि। इदं जीवमुख्यप्राणलिङ्गकीर्तनं अन्यार्थं ब्रह्मप्रतिपत्त्यर्थमेव जीवलयोद्गमौ। आश्रयभूतब्रह्मबोधाय च मूर्तिधैर्यलक्षण्येन प्राणकीर्तनम्। तुशब्दस्तु जैमिनिमतस्य भिन्नत्वात् तस्यापि साङ्ख्यमतनिराकरणापरत्वज्ञापनार्थः। ननु कुत एतदवगम्यते, तत्राह प्रश्नव्याख्यानाभ्यामपीति। अपिशब्द उपक्रमोपसंहारात्मकं हेत्वन्तरं समुच्चिनोति। तथाच "यो वै बालाक एतेषां पुरुषाणां कर्ते"त्यत्र यच्छब्द उपक्रमगतं मुख्यं ब्रह्म परामृशति। उपसंहारे च तज्ज्ञानेनासुरजयः सर्वेषां भूतानां श्रैष्ठ्यं स्वाराज्य-

माधिपत्यं च फलं निर्दिशति । न ह्येतद् द्वयममुख्ये सम्भवति । तेषां प्रागेव निरस्तत्वात् । किञ्च,
प्रश्नव्याख्यानाभ्याम् । क्वैष एतद् बालाके पुरुषोऽशयिष्टेति प्रश्नः । यत्रैष एतद्बालाके पुरुषोऽशयिष्टेति
व्याख्यानम् । ताभ्याम् । तत्र प्रश्ने एष इति पदेन बालाकिज्ञातपदार्थस्यैव निर्देशेन जीवस्य ज्ञातत्वात्
स्वापाधिकरणमेव ज्ञातम्, व्याख्यानं च न नाडीर्ज्ञापयितुं करोति, किन्तूपक्रान्तब्रह्मैव ज्ञापयितुम् ।
अतस्ताभ्यां ब्रह्मण एव मुख्यत्वावगमात् तदर्थमेव जीवप्राणलिङ्गकीर्तनमिति ज्ञायते । ननु नाडी-
व्यतिरिक्त आत्माऽत्र ज्ञाप्यते इत्यत्र किं मानम्, अत आह । एवमेक इति । एके शाखिनो वाजसने-
यिन एवमामनन्ति । इसबालाकिब्राह्मणे, "स होवाचाजातशत्रुर्यत्रैष एतत् सुप्तोऽभूद्, य एष विज्ञान-
मयः पुरुषस्तदेषां प्राणानां विज्ञानेन विज्ञानमादाय य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेत" इति ।
अत्र आकाशशब्दं ब्रह्म "सता सोम्य तदा सम्पन्नो भवती"ति च, "स्वं ह्यपीतो भवती"ति च ब्रह्मैव
निर्दिशन्ति । तस्मादाधारभूतब्रह्मज्ञापनार्थत्वाज्जीवप्राणलिङ्गस्य न तेन प्रकृतिवादसिद्धिरित्यर्थः ॥



## ७ वाक्यान्वयाधिकरणम् ।

( जीवब्रह्मवादनिराकरणम् )

वाक्यान्वयात् ॥ १।४।१९ ॥

पुनर्जीवब्रह्मवादेन प्रकृतिकारणवादमाशङ्क्य निराकरोति । बृहदारण्यके चतुर्थे

---

वाक्यान्वयात् । पुनः साङ्ख्यमतनिराकरणार्थं वाक्यान्वयाधिकरणमाहुः—पुनरिति । विषयवाक्यमाहुः—येनाहुरिति । अथ विषयवाक्यम्—

अथ याज्ञवल्क्यस्य द्वे भार्ये बभूवतुर्मैत्रेयी च कात्यायनी च तयोर्ह मैत्रेयी ब्रह्मवादिनी बभूव स्त्री प्रज्ञैव तर्हि कात्यायन्यथ ह याज्ञवल्क्योऽन्यद्व्रतमुपाकरिष्यन् ॥ १ ॥ मैत्रेयीति होवाच याज्ञवल्क्य उद्यास्यन्वा अरेऽहमस्मात्स्थानादस्मि हन्त तेऽनया कात्यायन्याऽन्तं करवाणीति ॥ २ ॥ सा होवाच मैत्रेयी यन्नु म इयं भगोः सर्वा पृथिवी वित्तेन पूर्णा स्यात्कथं तेनामृता स्यामिति नेति होवाच याज्ञवल्क्यो यथैवोपकरणवतां जीवितं तथैव ते जीवित८ स्यादमृतत्वस्य तु नाशास्ति वित्तेनेति ॥ ३ ॥ सा होवाच मैत्रेयी येनाहं नामृता स्यां किमहं तेन कुर्यां यदेव भगवान्वेद तदेव मे ब्रूहीति ॥ ४ ॥ स होवाच याज्ञवल्क्यः प्रिया बतारे नः सती प्रियं भाषस एह्यास्स्व व्याख्यास्यामि ते व्याचक्षाणस्य तु मे निदिध्यासस्वेति ॥ ५ ॥ स होवाच न वा अरे पत्युः कामाय पतिः प्रियो भवत्यात्मनस्तु कामाय पतिः प्रियो भवति न वा अरे जायायै कामाय जाया प्रिया भवत्यात्मनस्तु कामाय जाया प्रिया भवति न वा अरे पुत्राणां कामाय पुत्राः प्रिया भवन्त्यात्मनस्तु कामाय पुत्राः प्रिया भवन्ति न वा अरे वित्तस्य कामाय वित्तं प्रियं भवत्यात्मनस्तु कामाय वित्तं प्रियं भवति न वा अरे ब्रह्मणः कामाय ब्रह्म प्रियं भवत्यात्मनस्तु कामाय ब्रह्म प्रियं भवति न वा अरे क्षत्रस्य कामाय क्षत्रं प्रियं भवत्यात्मनस्तु कामाय क्षत्रं प्रियं भवति न वा अरे लोकानां कामाय लोकाः प्रिया भवन्त्यात्मनस्तु कामाय लोकाः प्रिया भवन्ति न वा अरे देवानां कामाय देवाः प्रिया भवन्त्यात्मनस्तु कामाय देवाः प्रिया भवन्ति न वा अरे भूतानां कामाय भूतानि प्रियाणि भवन्त्यात्मनस्तु कामाय भूतानि प्रियाणि भवन्ति न वा अरे सर्वस्य कामाय सर्वं प्रियं भवत्यात्मनस्तु कामाय सर्वं प्रियं भवत्यात्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मैत्रेय्यात्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेद८ सर्वं विदितम् ॥ ६ ॥ ब्रह्म तं परादाद्योऽन्यत्रात्मनो ब्रह्म वेद क्षत्रं तं परादाद्योऽन्यत्रात्मनः क्षत्रं वेद लोकास्तं परादुर्योऽन्यत्रात्मनो लोकान्वेद देवास्तं परादुर्योऽन्यत्रात्मनो देवान्वेद भूतानि तं परादुर्योऽन्यत्रात्मनो भूतानि वेद सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेदेदं ब्रह्मेदं क्षत्रमिमे लोका इमे देवा इमानि भूतानीद८ सर्वं यदयमात्मा ॥ ७ ॥ स यथा दुन्दुभेर्हन्यमानस्य न बाह्याञ्छब्दाञ्छक्नुयाद्ग्रहणाय दुन्दुभेस्तु ग्रहणेन दुन्दुभ्याघातस्य वा शब्दो गृहीतः ॥ ८ ॥ स यथा शङ्खस्य ध्मायमानस्य न बाह्याञ्छब्दाञ्छक्नुयाद्ग्रहणाय शङ्खस्य तु ग्रहणेन शङ्खध्मस्य वा शब्दो गृहीतः ॥ ९ ॥ स यथा वीणायै वाद्यमानायै न बाह्याञ्छब्दाञ्छक्नुयाद्ग्रहणाय वीणायै तु ग्रहणेन वीणावादस्य वा शब्दो गृहीतः ॥ १० ॥ स यथार्द्रैधाग्नेरभ्याहितात्पृथग्धूमा विनिश्चरन्त्येवं वा अरेऽस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानान्यस्यैवैतानि सर्वाणि निःश्वसितानि ॥ ११ ॥

षष्ठे च याज्ञवल्क्यमैत्रेयीसम्वादे–"येनाहं नामृता स्यां किमहं तेन कुर्याम्" ( बृ. ४।५।४) इति विरक्तिमुक्त्वा–"यदेव भगवान्वेद तदेव मे ब्रूहि" ( बृ. ४।५।४ ) इति पृष्टे तामभिमुखीकृत्य–"न वा अरे पत्युः कामाय" ( ४।५।६ ) इत्यादिनाऽमृतत्वाय ज्ञानमुपदिशति । षष्ठे पुनरुपसंहारेऽपि–"एतावदरे खल्वमृतत्वमिति होक्त्वा याज्ञवल्क्यः प्रवव्राज" ( बृ. ४।५।१५ ) । इति ।

तत्र जीवस्य प्रकरणित्वं ब्रह्मणो वेति संशयः । तत्रात्मनः प्रियत्वं स्वप्रतीत्या पुत्राद्यपेक्षया बोधयञ्जीवमेवोपक्रम आत्मत्वेन वदति । तदनु तत्र दर्शनादि विधत्ते । तेन सर्वं विदितमिति फलमाह । तत्र कथमात्मज्ञानेन सर्वज्ञानमित्याकाङ्क्षायां–"ब्रह्म तं परादात्" ( बृ. ४।५।७ ) इत्यादिना–"इदं सर्वं यदयमात्मा" ( बृ. ४।५।७ ) इत्यन्तेन तस्यैव सर्वत्वमाह ।

---

स यथा सर्वासामपाꣳ समुद्र एकायनमेवꣳ सर्वेषाꣳ स्पर्शानां त्वगेकायनमेवꣳ सर्वेषां गन्धानां नासिके एकायनमेवꣳ सर्वेषाꣳ रसानां जिह्वैकायनमेवꣳ सर्वेषाꣳ रूपाणां चक्षुरेकायनमेवꣳ सर्वेषाꣳ शब्दानाꣳ श्रोत्रमेकायनमेवꣳ सर्वेषाꣳ सङ्कल्पानां मन एकायनमेवꣳ सर्वासां विद्यानाꣳ हृदयमेकायनमेवꣳ सर्वेषां कर्मणाꣳ हस्तावेकायनमेवꣳ सर्वेषामानन्दानामुपस्थ एकायनमेवꣳ सर्वेषां विसर्गाणां पायुरेकायनमेवꣳ सर्वेषामध्वनां पादावेकायनमेवꣳ सर्वेषां वेदानां वागेकायनम् ॥ १२ ॥ स यथा सैन्धवखिल्य उदके प्रास्त उदकमेवानुविलीयेत न हास्योद्ग्रहणायेव स्याद्यतो यतस्त्वाददीत लवणमेवैवं वा अर इदं महद्भूतमनन्तमपारं विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य सञ्ज्ञाऽस्तीत्यरे ब्रवीमीति होवाच याज्ञवल्क्यः ॥ १३ ॥ सा होवाच मैत्रेय्यत्रैव माभगवान्मोहान्तमापीपिपन्न वा अहमिमं विजानामीति स होवाच न वा अरेऽहं मोहं ब्रवीम्यविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मा ॥ १४ ॥ यत्र हि द्वैतमिव भवति तदितर इतरं जिघ्रति तदितर इतरं पश्यति तदितर इतरꣳ शृणोति तदितर इतरमभिवदति तदितर इतरं मनुते तदितर इतरं जानाति यत्र वा अस्य सर्वमात्मैवाभूत्तत्केन कं जिघ्रेत्तत्केन कं पश्येत्तत्केन कꣳ शृणुयात्तत्केन कमभिवदेत्तत् केन कं मन्वीत तत् केन कं विजानीयाद्येनेदꣳ सर्वं विजानाति तं केन विजानीयाद्विज्ञातारमरे केन विजानीयादित्युक्तानुशासनासि मैत्रेय्येतावदरे खल्वमृतत्वमिति होक्त्वा याज्ञवल्क्यो विजहार ॥ १५ ॥ इति चतुर्थं ब्राह्मणम् ॥ ४ ॥

संशयबीजमाहुः—यदेवेति । एतेन ब्रह्मप्रश्ने ब्रह्मप्रकरणम् । पत्युः कामायेत्यादि जीवप्रकरणं बीजं बोध्यम् । संशयमुक्त्वा पूर्वपक्षमाहुः—तत्रेति । वदतीति । अत एव जीवस्यैव प्रकरणित्वं प्रतिभातीत्याशयः । इदमेव विवृणोति—तदन्वित्यादिना । तदनु । आत्मत्वेन जीवबोधानन्तरम् । दर्शनादीति । आत्मविषयकदर्शनादि विधत्ते । "आत्मा वा अरे द्रष्टव्य" इति विध्यर्थकतव्यप्रत्ययेन विधत्ते । फलमाह आत्मज्ञानस्य फलमाह । आत्मनः सर्वत्वं प्रतिपादयन्ति—तत्रेति । विषयवाक्ये स्पष्टम् । इदमिति । इदं सर्वं अनु अयमात्मेति विधीयते । तस्यैव । जीवस्यैव । ननु आत्मज्ञानं दुर्घटमत आह—तदन्विति । नन्वेवं सर्वं तदेव सम्भवति आत्मज्ञानं चेत् तस्यैव दुर्घटत्वादित्याशङ्क्य दृष्टान्तमुखेन कथयति—तदन्विति । आत्ममाहात्म्यश्रवणानन्तरमित्यर्थः । परम्परयेत्यादिना दृष्टान्तत्रयमाहेत्यन्वयः । दुन्दुभ्यादीत्यादिना शङ्खवीणयोः परिग्रहः । तत्र परम्परया दुन्दुभिदृष्टान्तः । बाह्यभेदेन शङ्खदृष्टान्तः । आभ्यन्तरभेदेन वीणादृष्टान्तः । एतादृशं चतुर्थं ब्राह्मणम् ॥

तदनु कथमस्मिन्सङ्घात आत्मज्ञानं भवतीत्याकाङ्क्षायां दुन्दुभ्यादिदृष्टान्तत्रयमाह । परम्परया बाह्याभ्यन्तरभेदेन यथा महाकोलाहले दुन्दुभेर्हन्यमानस्य शब्दो गृहीतो भवति । तत्र करणं दुन्दुभिदर्शनं दुन्दुभ्याघातदर्शनं वा । अनुमानद्वारा चित्ते तत्र निविष्टे तत्साक्षात्कारो भवतीति । तथात्मनो बोधककार्यानुसन्धाने तत्साक्षात्कारो भवतीति । तत्र कथं सर्वत्वमित्याकाङ्क्षायां तत एवोत्पन्नं सर्वं नामरूपं तस्मिन्नेव लीयत इति । स यथेति द्वयेनाह । मध्ये स एव नातिरिक्तं विशतीति स यथा सैन्धवघन इत्यनेनाह । आधेयत्वेन तावन्मात्रतानिराकरणायाह । न प्रेत्य सञ्ज्ञास्तीति । कार्यातिरिक्तरूपं कथयितुं न शक्यत इति

---

दृष्टान्तत्रयेणात्मज्ञानं सुलभमिति बोध्यम् । दुन्दुभिदृष्टान्तं विशदयन्ति—यथेति । भवतीति । इत्थं च दुन्दुभिशब्दः कोलाहलाभिभावक इति भावः । तत्र । तादृशशब्दे । करणम् । कारणमित्यर्थः । ननु तादृशशब्दे दुन्दुभ्याघातस्य कारणत्वं, न तु तद्दर्शनस्येत्यत आहुः—अनुमानद्वारेति । महाकोलाहले दुन्दुभिशब्दश्रवणानन्तरं कस्याऽयं शब्द इति जिज्ञासा जायते तदनन्तरमयं शब्दो दुन्दुभ्याघातजन्यः पूर्वश्रुतशब्दसदृशशब्दत्वात् यत्रैव तत्रैवं यथा घटः, इत्येवमनुमानद्वारेत्यर्थः । पूर्वं दुन्दुभ्याघातदर्शनकाले शब्दो दुन्दुभिशब्दः श्रुतोऽस्तीति ततस्तादृशहेतुज्ञानेन साध्यानुमितिः सुलभेति बोध्यं भवतीति, अनुमानानन्तरमुद्योगे क्रियमाणे दुन्दुभिदर्शनं भवतीत्यर्थः । एवं च दुन्दुभिदर्शनानन्तरं दुन्दुभिस्तादृशशब्दकारणमिति ज्ञानं जायते इतिकृत्वा दुन्दुभिनिष्ठकारणता दुन्दुभिदर्शने उपचर्यते इत्यौपचारिकोऽयं प्रयोगः, करणं, दुन्दुभिदर्शनमिति भावः । एतेनानुमानद्वारा परम्परया दृष्टान्तो बोध्यः । बाह्यभेदेन शङ्खशब्दश्रवणानन्तरं शङ्खस्य शङ्खध्मस्य वा दर्शने शङ्खशब्दे मन्द्रत्वतारत्वज्ञानं जायते । तच्च बाह्यशब्दनिष्ठं भवतीति शङ्खशब्दोऽपि बाह्य इति तद्गतमन्द्रत्वादिभेदकः इति बाह्यभेदज्ञानेन प्राणनिष्ठभेदज्ञानं जायते । प्राणेन यथा शङ्खे वायुः पूर्यते तथा शब्दो भवतीति । आन्तरभेदेन वीणादृष्टान्तो, यथा, वीणाशब्दश्रवणानन्तरं वीणाया वीणावादकस्य वा दर्शने अयं शब्दः केवलाङ्गुलिसंसर्गजन्यो न भवति, किन्तु, आन्तरमनोभेदजन्यः, मनसि यथा रागादिरचना तथैवाङ्गुलिप्रेरणा जायते इत्ययं शब्दोऽपि तथैवोत्पद्यते इति आन्तरमनोभेदज्ञानं जायत इत्येवंरीत्या दृष्टान्तमुक्त्वा दार्ष्टान्तिके योजयन्ति—तथेति । कार्यानुसन्धानेनेति । शरीरसमवेतचेष्टानुसन्धानेनेत्यर्थः । भवतीति । मननादिनेति शेषः । ननु भवत्वेवंरीत्याऽऽत्मज्ञानं तथापि भगवति सर्वत्वं कथमित्यत आहुः—तत्रेति । लीयत इति । यथा घटात्पूर्वं अनन्तरमपि मध्येऽपि मृत् तथाऽत्रापि बोध्यमिति भावः । द्वयेनेति । "स यथार्द्रैन्धनाग्नेरि"ति । "स यथा सर्वासामपामि"ति कण्डिकाद्वयेनेत्यर्थः । विशतीति । नातिरिक्तमाश्रयत्वेन विशतीत्यन्वयः । अत्र दृष्टान्तमाहुः—स यथेति । घनशब्देन जात्यन्तरं न भवतीति सूचितम् । यथा यो घनः । नन्वेवं चेत्तर्हि "एतेभ्यो भूतेभ्य" इतिवाक्येन शरीरसत्तादशायां प्रतीयमानत्वादनन्तरमदर्शनं प्राप्नोतीत्युक्तं, तथा च कालपरिच्छिन्नः स्यादित्यत आहुः—तावन्मात्रतेति । कार्योत्पत्त्यनन्तरं यावद्विनाशपर्यन्तं प्रतीयमानतानिराकरणायेत्यर्थः । प्रेत्येति । प्रेत्य भूतलयोत्तरम्, सञ्ज्ञा भगवत्कृपया अज्ञाननाशे नामरूपात्मकं सम्यक्प्रकारेण ज्ञापकं नास्तीत्यर्थः । तथार्च कार्यं शरीरादिनामरूपात्मकमेव तस्य ज्ञापकं रूपं वक्तुं शक्यते, शरीरलयोत्तरं तु न शक्यत इत्येतावन्मात्रमेव न तु स एव नास्तीति लयोत्तरं विद्यमानत्वात्कालापरिच्छिन्न इति भावः । एतदेवाहुः—न शक्यत इति । न तु स एव

तत्र विशेषाकाङ्क्षायामतिरिक्ताकथने वञ्चकत्वमाशङ्क्य तत्परिहारायाह। स होवा-
चेति। अविनाशीत्यनेन कार्यवैलक्षण्यं सिद्धवत्कारेणोक्त्वा विषयसम्बन्धेन संसार-
माह। मात्रासंसर्गस्त्वस्य भवतीति। विशेषतस्त्वकथने हेतुमाह । यद्वैतमित्यादिना
यावत्समाप्ति । चक्षू रूपमेव पश्यति नात्मानम् । ननु रूपमप्यात्मेति चेत् ।
तत्रापश्यन्वै तद् द्रष्टव्यत्वेन न पश्यति। न हि द्रष्टृस्वरूपं दृश्यज्ञानेन ज्ञातं भवत्य-
तद्रूपत्वात्। एवं द्रष्टृदृश्यव्यवहारे ज्ञानावस्थाया विशेषतस्तज्ज्ञानमशक्यमुक्त्वा
ज्ञानोत्तरं कर्मकर्तृभाव एव नास्तीत्याह । यत्र वा अन्यदिव स्यादित्यादिना । इद-
मेव हि ज्ञानममूर्तत्वमिति । तत्रादिमध्यावसानेषु जीवप्रकरणमित्येव प्रतिभाति ।
तस्य ब्रह्मता जगत्कर्तृत्वमित्युत्कर्षः । न तु तस्मादन्यद् ब्रह्मत्वेन वक्तुं युक्तम् ।
अर्थविरोधाच्च। तस्माद्वेदे सृष्टिवाक्यानामेतन्न्यायेनान्यार्थत्वान्न ब्रह्म जगत्कारण-
मिति प्रकृतिवाद एव युक्त इत्येवं प्राप्ते—

---

नास्तीत्यर्थः । तत्रेति । स कः इति विशेषाकाङ्क्षायामित्यर्थः । अतिरिक्ताकथने । जगदतिरिक्ताकथने ।
वञ्चकत्वमिति। विशेषरूपेण कथनायोग्यो वा, अथवा स एव नास्तीति वा मोहे सम्वृत्ते अकथने वञ्चकत्व-
मित्यर्थः। कार्यवैलक्षण्यमिति। जगदपेक्षया वैलक्षण्यं अविनाशित्वं अनुच्छित्तिधर्मत्वम्। सिद्धवत्का-
रेण। सिद्धवन्निर्देशेन। संसारमाहेति। पुनस्तस्यैव संसारमाहेत्यर्थः। यदि स नित्यो न स्यात्तर्हि पुनस्तस्य
मात्रासंसर्गो न स्यादित्यर्थः। मात्रासंसर्गस्तस्य भवतीति माध्यन्दिनपाठः। तेन प्रचरद्वस्थकाण्वपाठे तादृश-
वाक्याभावान्नेदं मैत्रेयीब्राह्मणवाक्यमिति न भ्रमितव्यम्। ननु पश्यन् (तद्वय ?) मविनाशी चेत्तर्हि विशेषरू-
पेण कुतो न कथ्यत इत्यत आहुः—विशेषतस्त्विति । चक्षुरिति । भेददृष्टौ सत्यां चक्षू रूपमेव
पश्यतीत्यर्थः। ननु "सर्वं खल्विदं ब्रह्मे"ति वाक्यात् रूपदर्शनमेव ब्रह्मदर्शनमित्याशयेन शङ्कते—नन्विति।
निराकुर्वन्ति—तत्रेति। तत् ब्रह्मापश्यन् वै इति निश्चयेन । ननु नहि "द्रष्टुर्दृष्टेर्विपरिलोपो विद्य-
तेऽविनाशित्वादि"ति श्रुत्या द्रष्टुरात्मनः दृष्टेः सकाशात् विपरिलोपो अदर्शनं न विद्यते तस्य नित्यत्वा-
दित्यनेन सर्वदा दृग्विषयत्वं तस्येति कथमेतदित्यत आहुः—तद्द्रष्टव्यत्वेनेति। तत् ब्रह्म द्रष्टव्यत्वेन
ब्रह्मत्वेन पश्यति किन्तु रूपत्वेन सर्वं ब्रह्मेति ज्ञानाभावात् । ननु तथापि रूपं ब्रह्म तद्विषयकं ज्ञानं
जातमेवेत्यत आहुः—नहीति। द्रष्टृस्वरूपं आत्मस्वरूपम्। दृश्यज्ञानेन। रूपज्ञानेन अतद्रूपत्वा-
दिति। रूपत्वस्य ब्रह्मत्वरूपत्वाभावात् रूपं ब्रह्मस्वरूपं भवति, परन्तु रूपत्वं ब्रह्मत्वस्वरूपं न भवतीति
भेददृष्टौ सत्यां ब्रह्मत्वेन रूपज्ञानाभावात् विशेषरूपेण ब्रह्मोपपादनं कर्तुं न शक्यत इति भावः। ज्ञाने
सति भेददृष्टौ विलीनायामपि विशेषरूपेण कथनमशक्यमित्याहुः—एवमिति । यत्र वेति । विष-
यवाक्ये स्पष्टम्। इदमेव हीति । "सर्वमात्मैवाभूदि"त्यादिज्ञानोत्तरं निर्विषयमात्मस्वरूपज्ञानमि-
त्यर्थः। पूर्वपक्षी एतावता प्रबन्धेन विषयवाक्यार्थमुक्त्वा स्वाभिप्रायं वदति—तत्रेति। आदीति।
येनाहं नामृतास्यामित्यादि अमात्रासंसर्गस्त्वस्य भवतीति मध्यं, इदमेव हीत्यनेनात्मज्ञानमवसानं, एतादृश-
स्थलत्रयेष्वित्यर्थः। ननु ब्रह्मवाक्यमपि श्रूयते, जगत्कर्तृत्वमपि श्रूयते इत्यत आहुः—उत्कर्ष इति।
उत्कर्षस्तवनम्। तथाच जीवस्योत्कर्षार्थमिदं द्वयमित्यर्थः । अर्थविरोधादिति। "येनाहं नामृता
स्यामि"ति जीव एवार्थः, उपक्रमे तस्य विरोधादित्यर्थः। यद्वा, ब्रह्म हि अविकारिकार्यरूपेण कथं विकु-
र्यादित्यर्थविरोधादित्यर्थः। प्रकृतिवाद इति। जीवपरत्वे सिद्धे जगत्कारणत्वस्य जीवे अभावाज्जीवाधि-
ष्ठितप्रकृतौ सिद्ध्यतीति प्रकृतिवाद इत्यर्थः।

उच्यते। वाक्यान्वयात्। इदं वाक्यं भगवत्येवान्वेति। नात्र जीवप्राधान्यगन्धोऽपि। सर्वत्र भगवदन्वयेनैव जीवस्यापि प्रियत्वम्। तस्यैव सुखरूपत्वात्। सर्वोपनिषदनुरोधेनैवास्याप्यर्थस्य वक्तुमुचितत्वात्। "तमेव विदित्वा अतिमृत्युमेति (श्वे. ३।८) "आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते" (तै. ३।६) "सर्व एवात्मानो व्युच्चरन्ति", "एष ह्येवानन्दयाति" (तै. २।७) इत्यादिश्रुतिसहस्रैर्निःसन्दिग्धैर्ब्रह्मणः स्वरूपं कार्यमंशाश्च प्रतिपादिता इतीदमपि वाक्यं तत्परमेवोचितम्। सर्वव्यवहारस्य तन्मूलकत्वेन पूर्वमुक्तत्वात्। विषयस्पर्शो विज्ञातृत्वमपि तस्यैव।

एवं सति सर्वमेव सङ्गतं भवेत्। अतो वाक्यान्वयान्न जीवपरत्वं येन प्रकृतिवादः स्यादिति ॥ १।४।१९ ॥

( अत्र पक्षान्तरम् )

**प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ॥ १।४।२० ॥**

नियतधर्मवादिनामपि मतेन प्रकृते सिद्धान्तं वक्तुं पक्षान्तराण्याह। तत्र ब्रह्मवादैकदेशिवादाः सन्ति। तत्र जीवो नाम स्वस्य भोगनिष्पत्त्यर्थं स्वांशो भगवता कृतो विस्फुलिङ्गवदित्याश्मरथ्यो मन्यते। अनादिसिद्ध एव जीवश्चैतन्यमात्रं शरीरादिसङ्घाते प्रविष्ट इति चिति तन्मात्रेण प्रवेशे च मोक्ष इति औडुलोमिराचार्यः। काशकृत्स्नस्त्वासक्त्या विषयभोक्तृरूपं भगवत एव जीव इति तेऽपि स्वमतानुसारेणात्र परिहरन्ति। तत्र पुत्रादिप्रियसहवचनाज्जीवप्रकरणमेवैतदित्याशङ्क्य जीवोपक्रमस्यान्यत्प्रयोजनमित्याह। प्रतिज्ञासिद्धेरिति, षष्ठी, तस्या लिङ्गमंशत्वाज्जीवस्य तदभेदेनोपक्रमः प्रतिज्ञासिद्धेर्लिङ्गं भवति। एकविज्ञानेन सर्वविज्ञानं प्रतिज्ञा।

---

सिद्धान्तमाहुः—**उच्यत** इति। **वाक्यान्वयात्**। वाक्ये अन्वयस्तस्मात्। **इदमिति**। कारणत्वेनेति शेषः। **नात्र जीवेति**। सर्वत्रोपनिषद्वाक्ये ब्रह्मण एव प्राधान्येनान्वयो दृश्यत इत्यत्रापि तस्यैवान्वय इति भावः। ननु "आत्मनस्तु कामाय सर्वं प्रियं भवती"त्यादौ जीवस्य प्रियत्वं कथमित्यत आहुः—**सर्वत्रेति**। नन्वेतस्य वाक्यस्य जीवपरत्वे सामञ्जस्यं प्रतिभातीत्यत आहुः—**सर्वेति**। सर्वोपनिषदो ब्रह्मपरत्वे सिद्धे एकस्यैवास्य वाक्यस्य जीवपरत्वमनुचितमिति भावः। एतदेवाहुः—**तमेवेति**। **पूर्वमिति**। जीवमुख्यप्राणलिङ्गसूत्रे। ननूक्तं मात्रास्पर्शस्त्वस्य भवतीति वाक्येन जीवपरत्वमेव प्रतिभातीत्यत आहुः—**विषयेति**। विषयस्पर्शवत्त्वं जीवधर्मः स च जीवस्य ब्रह्माश्रितत्वात् ब्रह्मण्यप्युच्यते, एवं विज्ञातृत्वं ब्रह्मधर्मः, स च ब्रह्मांशत्वाज्जीवेऽपि भासते, उभयथापि नास्य जीववाक्यत्वम्। एतदेवाहुः—**तस्यैवेति**। ब्रह्मण एवेत्यर्थः। **सर्वमिति**। सर्वोपनिषद्वाक्यमित्यर्थः ॥

**प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः**। अग्रिमसूत्राणां प्रयोजनमाहुः—**नियतधर्मेति**। मैत्रेयीब्राह्मणोक्तं प्रियत्वं जीवधर्म इत्यर्थः। **प्रकृते**। मैत्रेयीब्राह्मणे। **सिद्धान्तम्**। साङ्ख्यनिराकरणेन स्वमतस्थापनरूपं सिद्धान्तम्। के ते वादा इत्यत आहुः—**तत्रेति** जीव इतीत्यन्तेन। **तेऽपीति**। त्रयोपीत्यर्थः। **तत्र**। त्रयाणां मध्ये। **आश्मरथ्यः** आहेत्यन्वयः। **पुत्रादीति**। "न वा अरे पुत्रस्य कामाये"त्यादिना लौकिकप्रियसहवचनादित्यर्थः। **उपक्रम इति**। उपक्रमे ब्रह्माभेदेन कथनं अरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विदितमिति वाक्योक्तसर्वविज्ञानसाधकमित्याखण्डलार्थः।

तस्यैवाग्रे व्युत्पाद्यमानत्वात्तस्या एतत्साधकम् । यथा जीवो भगवानेवं जट इति । एवमाश्मरथ्यो मन्यते । श्रोतव्यादिविषयस्तु भगवानेव । तस्मान्नियतधर्म-जीववादेऽपि न जीवोपक्रमो दोषः ॥ १।४।२० ॥

( मुक्तौ जीवो भगवानेव )

उत्क्रमिष्यत एवम्भावादित्यौडुलोमिः ॥ १।४।२१ ॥

लिङ्गमित्यनुवर्तते । यदत्र जीवोपक्रमेण भगवतः श्रवणादिकमुक्तं तत्संसार-भावादुत्क्रमिष्यतो जीवस्य लिङ्गम् । मुक्तौ जीवो भगवानेव भविष्यतीति ज्ञाप-कम् । अन्यथा सैव कथममृता भवेत् । इतिशब्दो हेतौ । स्त्रिया विश्वासार्थं गौणप्रियं वैराग्यार्थं च जीवोपक्रमः, कर्तव्य एवेत्यौडुलोमिराचार्यो मन्यते तस्माद् भिन्नजीवपक्षेऽपि नात्र दूषणम् ॥ १।४।२१ ॥

( भगवत एवावस्थाविशेषो जीवः )

अवस्थितेरिति काशकृत्स्नः ॥ १।४।२२ ॥

लिङ्गमित्येव । भगवत एवावस्था जीव इति । अतः संसारदशायामपि जीवो ब्रह्मेति नात्रोत्क्रमणमुपचारो वा । अन्यथा कथमात्मनस्तु कामाय सर्वं प्रियं भवतीति । न ह्यन्यस्य सर्वं प्रियं भवति । मोक्षस्तु ज्ञानमेव । उत्तरत्र कर्तव्या-भावात् । अवस्थया व्यवसायात् सिद्धान्ताद्विशेषः । इतिशब्देनैतावदरे खल्व-

---

**श्रोतव्यादीति।** "आत्मा वा अरे द्रष्टव्यः श्रोतव्य" इति वाक्योक्त इत्यर्थः। तथाच सर्वविज्ञानप्रति-ज्ञयैवेदं ब्रह्मप्रकरणं सिद्ध्यतीति भावः ॥

**उत्क्रमिष्यत एवम्भावादित्यौडुलोमिः।** एवम्भावात् संसारभावात् उत्क्रमिष्यतो जीवस्य इति हेतोः। अनया विद्यया सा अमृता जातेति हेतोः। उपक्रमोक्तजीवस्यैव श्रवणादिकथनं लिङ्गं, मोक्षे भगवद्भावज्ञापकं औडुलोमिर्मन्यत इति सूत्रार्थः। अयमेव सूत्रार्थ इत्याहुः—**यदत्रे**त्यादिना। ननु यदीदं ब्रह्मप्रकरणं चेज्जीवोपक्रमः किमर्थमत आहुः—**स्त्रिया** इति। मैत्रेय्याः। कर्तव्य इत्यनेनान्वयः। अनया विद्ययाऽहममृता भविष्यामीति विश्वासार्थम्। पुत्रादिरूपं गौणं प्रियं तद्वैराग्यार्थमित्यर्थः। **उपक्रम** इति। तथाच यथा मञ्जूषास्थं वस्तु ततः निष्कास्य गृहे स्थापितं यदा, तदा तदेव गृहस्थं जातं, तथा, यदा सङ्घाताद्बहिर्भूतो जीवः व्यापकीभूते ब्रह्मणि अन्तरायं विना साक्षात्प्रविशति, तदा मोक्ष इति तस्य मतम्। सङ्घाताद्भिन्नत्वज्ञापनार्थं जीवोपक्रम इत्यर्थः ॥

**अवस्थितेरिति काशकृत्स्नः।** **जीवो ब्रह्मेति।** तथाचेदं ब्रह्मप्रकरणमेवेति भावः। **अन्यथा।** अवस्थाविशेषाभावे। **भवतीति।** उक्तम् इति शेषः। **अन्यस्य।** ब्रह्मातिरिक्तस्य। **सर्वं प्रियं।** सर्वभोक्तृत्वं, जीवस्तु ब्रह्मैव यावत्पर्यन्तमज्ञानं तावत्पर्यन्तं संसारावस्थ इत्याशयेन। तन्मते मोक्षमाहुः—**मोक्षस्त्विति।** **सिद्धान्तादिति।** अंशत्वेन व्यवसाय इति सिद्धान्तादित्यर्थः।

मृतत्वमित्युपसंहारो हेतुरस्य पक्षस्येति काशकृत्स्नो मन्यते । तस्माज्जीवोपक्रमो भगवत एवावस्थाविशेषो जीव इत्यस्य पक्षस्य लिङ्गम् । तस्मान्मैत्रेयीब्राह्मणेनापि जीवद्वारा प्रकृतिकारणवादासिद्धिरिति सिद्धम् ॥ १।४।२२ ॥ ७ ॥

---

हेत्वर्थकस्य सौत्रेति शब्दस्य ज्ञानं मोक्ष इति पक्षे उपसंहारो हेतुरिति बोधयितुमाहुः—इतीति । इति सिद्धमिति ।¹मतान्तरीयरीत्याऽपीदं ब्रह्मप्रकरणमेवेति सिद्धमित्यर्थः ॥ इति सप्तमाधिकरणम् ।

---

१ अत्रेत्थं व्याख्यानान्तराणि—

(१) तत्र शाङ्कराः—पूर्वं ब्रह्मोपक्रमसामर्थ्याद्ब्रह्मपरत्वमुक्तम् । तर्हि तद्वदेव मैत्रेयीब्राह्मणस्य "न वा अरे पत्युः कामाय" इत्यादिजीवोपक्रमसामर्थ्याज्जीवपरत्वमस्त्विति दृष्टान्तसङ्गत्येदमाह । फलं पूर्ववत् । बृहदारण्यके श्रूयते—"आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यः" इत्यादि । तत्र किं जीवो द्रष्टव्यत्वादिरूपेणोपदिश्यते, किं वा परमात्मेति संशये, 'जीव इति पूर्वः पक्षः । सिद्धान्तस्तु, परमात्मैवात्र द्रष्टव्यतयोपदिष्ट आत्मा । कुतः, वाक्यान्वयात् । उपक्रमादिपर्यालोचनया वाक्यस्य ब्रह्मण्येवान्वयादित्यर्थः । ननु पतिजायादिभोग्यजातेन लिङ्गेन जीवोपक्रमः प्रतीयते, स कथमित्याशङ्क्याह जीवब्रह्मणोर्हि कार्यकारणयोर्भेदाभेदौ वर्तेते अत्यन्तभेदे एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाविरोधप्रसङ्गात् । तथा च तत्प्रतिज्ञासिद्धेरिममभेदांशमादाय जीवोपक्रमणं लिङ्गमित्याश्मरथ्य आचार्यो मन्यते । समाधानान्तरमाह । संसारदशायामत्यन्तं ब्रह्मणो भिन्नस्य जीवस्य ब्रह्मात्मत्वसाक्षात्कारात्कार्यकारणसङ्घातादुत्क्रमिष्यत एवम्भावात् परमात्मनैकीभावात्, भविष्यदभेदमादाय जीवोपक्रम इति औडुलोमिराचार्यो मन्यते । नन्विदमप्यसङ्गतम्, सत्यकार्यकारणसङ्घातवतः संसारिणः अत्यन्तं ब्रह्मभिन्नस्य मुक्तिदशायामभेदायोगादित्यरुच्या परमं समाधानमाह । ब्रह्मण एवाविद्याकल्पितभेदेन जीवरूपेणावस्थितेः जीवोपक्रमोऽविरुद्ध इति काशकृत्स्न आचार्यः श्रुतितात्पर्यज्ञो मन्यते । अतो द्रष्टव्ये परब्रह्मणि मैत्रेयीब्राह्मणवाक्यं समन्वितमिति सिद्धम् ॥

(२) रामानुजीये—अत्रापि कापिलतन्त्रसिद्धपुरुषतत्त्वावेदनपरं वाक्यं क्वचिद्दृश्यत इति तदतिरिक्त ईश्वरो नाम न कश्चित्सम्भवतीत्याशङ्क्य निराकरोति । बृहदारण्यके मैत्रेयीब्राह्मणे श्रूयते "न वा अरे पत्युः कामाय पतिः प्रियो भवत्यात्मनस्तु कामाय पतिः प्रियो भवति" इत्यारभ्य "न वा अरे सर्वस्य कामाय सर्वं प्रियं भवत्यात्मनस्तु कामाय सर्वं प्रियं भवति । आत्मा वा अरे द्रष्टव्यः, श्रोतव्यो, मन्तव्यो, निदिध्यासितव्यः । मैत्रेय्यात्मनि खल्वरे दृष्टे श्रुते मते विज्ञात इदं सर्वं विदितम्" इति । तत्र संशयः, किमस्मिन्वाक्ये द्रष्टव्यतयोपदिश्यमानस्तन्त्रसिद्धपुरुष एवायम्, उत सर्वज्ञः, सत्यसङ्कल्पः, सर्वेश्वर इति । किं युक्तम् ? । पुरुष इति । कुतः ? आदिमध्यावसानेषु पुरुषस्यैव प्रतीतेः । उपक्रमे तावत्पतिजायापुत्रवित्तपश्वादिप्रियत्वयोगाज्जीवात्मैव प्रतीयते । मध्येऽपि "विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य सञ्ज्ञास्ति" इत्युत्पत्तिविनाशयोगात्स एवावगम्यते तथान्ते च "विज्ञातारमरे केन विजानीयात्" इति स एव ज्ञाता क्षेत्रज्ञ एव प्रतीयते नेश्वरः । अतस्तन्त्रसिद्धपुरुषप्रतिपादनपरमिदं वाक्यमिति निश्चीयते । नन्वमृतत्वस्य तु नाशास्ति वित्तेन इत्युपक्रमादमृतत्वप्राप्त्युपायोपदेशपरमिदं वाक्यमित्यवगम्यते । तत्कथं पुरुषप्रतिपादनपरत्वमस्य वाक्यस्य ? तदुच्यते—अत एव ह्यत्र पुरुषप्रतिपादनतन्त्रे प्रकृतिधर्माध्यासवियुक्तपुरुषस्वरूपयाथात्म्यविज्ञानमेवामृतत्वहेतुत्वेनोच्यते अतो जीवात्मनः प्रकृतिवियुक्तं

स्वरूपमिदामृतत्वायात्मा वा अरे द्रष्टव्यः" इत्यादिनोपदिश्यते सर्वेषामात्मनां प्रकृतिवियुक्तं स्वरूपमेकरूपमिति प्रकृतिवियुक्तस्यात्मयाथात्म्यविज्ञानेन, सर्वे एवात्मानो विदिता भवन्तीत्यात्मविज्ञानेन सर्वविज्ञानमुपपन्नम् । देवादिस्थावरान्तरेषु सर्वेषु भूतेष्वात्मरूपस्य ह्यनेकप्रकारत्वात् "इदं सर्वं यदयमात्मा" इत्यैकात्म्योपदेशः । देवाद्याकाराणामनात्माकारत्वाच्च "सर्वं तं परादात्" इत्यादिनाऽन्यत्वनिषेधश्च । "यत्र हि द्वैतमिव भवति" इति च नानात्वनिषेधेनैकस्वरूपे ह्यात्मनि देवादिप्रकृतिपरिणामभेदेन नानात्वं मिथ्येत्युच्यते । "तस्य ह वा एतस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदः" इत्याद्यपि प्रकृतेरधिष्ठातृत्वेन पुरुषनिमित्तत्वाज्जगदुत्पत्तेरुपपद्यते । एवमस्मिन्वाक्ये पुरुषपरे निश्चिते सति तदैकार्थ्यात्सर्वे श्वेदान्तास्तत्प्रसिद्धं पुरुषमेवाभिदधतीति 'तदधिष्ठिता प्रकृतिरेव जगदुपादानं नेश्वर इत्येवं प्राप्ते ,प्रचक्ष्महे वाक्यान्वयादिति । सर्वेश्वर एवास्मिन्वाक्ये प्रतीयते । कुतः ? वाक्यान्वयात् । एवमेव हि वाक्यावयवानामन्योऽन्यान्वयः समञ्जसो भवति । "अमृतत्वस्य तु नाशास्ति वित्तेन" इति याज्ञवल्क्येनाभिहिते "येनाहं नामृतास्यां किमहं तेन कुर्यां यदेव भगवान्वेद तदेव मे ब्रूहि" इत्यमृतत्वानुपायतया वित्ताद्यनादरेणामृतत्वप्राप्त्युपायमेव प्रार्थयमानायै मैत्रेय्यै तदुपायतया द्रष्टव्यतयोपदिष्टोऽयमात्मा परमात्मैव । "तमेव विदित्वातिमृत्युमेति", "तमेवं विद्वानमृत इह भवति नान्यः पन्थाः" इत्यादिभिरमृतत्वस्य परमपुरुषवेदनैकोपायतया प्रतिपादनात्परमपुरुषविभूतिभूतस्य प्रातुरात्मनः स्वरूपयाथात्म्यविज्ञानमपवर्गसाधनभूतपरमपुरुषवेदनोपयोगितयाऽवगन्तव्यं, न स्वत एवोपायत्वेन । अतोऽत्र परमात्मैवामृतत्वोपायतया द्रष्टव्य इत्यादिनोपदिश्यते । "तथा तस्य ह वा एतस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदः" इत्यादिना कृत्स्नस्य जगतः कारणत्वमुच्यमानं परमपुरुषादन्यस्य कर्मपरवशस्य मुक्तस्य निर्व्यापारस्य च पुरुषमात्रस्य न सम्भवति । तथात्मनो वा अरे दर्शनेन इत्यादिनैकविज्ञानेन सर्वविज्ञानमभिधीयमानं सर्वात्मभूते परमात्मन्येवावकल्पते । यत्त्वेतदेकरूपत्वादात्मनामेकात्मविज्ञानेन सर्वात्मविज्ञानमुच्यत इति तदयुक्तम्, अचेतनप्रपञ्चज्ञानाभावेन सर्वविज्ञानाभावात् । प्रतिज्ञोपपादनाय, चेदं ब्रह्मेदं क्षत्रम्, इत्युपक्रम्य इदं सर्वं यदयमात्मा इति प्रत्यक्षादिसिद्धं चिदचिन्मिश्रं प्रपञ्चमिदमिति निर्दिश्यैतदयमात्मेत्यैकात्म्योपदेशश्च परमात्मानमेवोपपद्यते । न हीदंशब्दवाच्यं चिदचिन्मिश्रं जगत्पुरुषेणाचित्संसृष्टेन तद्वियुक्तेन वा स्वरूपेणावस्थितेन चैक्यमुपगच्छति । अत एव "सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेद" इति व्यतिरिक्तत्वेन सर्ववेदननिन्दा च । तथा प्रथमे च मैत्रेयीब्राह्मणे "महद्भूतमनन्तमपारम्" इति श्रुता महत्त्वादयो गुणाः परमात्मन एव सम्भवन्ति । अतः स एवात्र प्रतिपाद्यते । यत्तूक्तं पतिजायापुत्रवित्तपश्वादिप्रियान्वयिनो जीवात्मन उपक्रमे त्वन्वेष्टव्यतया प्रतिपादनात्तद्विषयमेवेदं वाक्यमिति, तदयुक्तम्; "आत्मनस्तु कामाय" इत्यात्मशब्देन जीवात्मसंशब्दने "तस्यात्मा वा अरे द्रष्टव्यः" इत्यनेनान्वयप्रसङ्गात् । "आत्मा वा अरे द्रष्टव्य" इत्यात्मनो द्रष्टव्यतोपयोगितया "त्मनस्तु कामाय" इत्युपदिष्टमिति प्रतीयते । आत्मनस्तु कामायात्मनः कामसम्पत्तये । काम्यन्त इति कामाः । आत्मन इष्टसम्पत्तय इति यावत् । न च जीवात्मन इष्टसम्पत्तये पत्यादयः प्रिया भवन्तीत्युक्ते सति तस्य जीवस्य स्वरूपमन्वेष्टव्यं भवति । प्रियमेव ह्यन्वेष्टव्यं न तु प्रियं प्रति शेषिणः प्रियवियुक्तं स्वरूपम् । यस्मादात्मन इष्टसम्पत्तये पत्यादयः प्रिया भवन्ति, तस्मात्पत्यादि प्रियं परित्यज्य तद्वियुक्तमात्मस्वरूपमन्वेष्टव्यमित्यसङ्गतं भवति । प्रत्युत न पत्यादिशेषतया पत्यादीनां प्रियत्वमपि स्वात्मनः शेषतया पत्यादीनां प्रियत्वमित्युक्ते स्वशेषतया तु एवो-

पादेयाः स्युः । "आत्मनस्तु कामाय सर्वं प्रियं भवति" इत्यस्य परेणानन्वये वाक्यभेदः प्रसज्यते । अभ्युपगम्यमानेऽपि वाक्यभेदे पूर्वस्य वाक्यस्य न किञ्चित्प्रयोजनं दृश्यते । अतः, पत्यादि सर्वं प्रियं परित्यज्यात्मन एवान्वेष्टव्यत्वं यथा प्रतीयते, तथा वाक्यार्थो वर्णनीयः । सोऽयमुच्यते, "अमृतत्वस्य तु नाशास्ति वित्तेन" इति वित्तादीनां नित्यनिर्दोषनिरतिशयानन्दरूपामृतत्वप्राप्त्यनुपायत्वमुक्त्वा वित्तपुत्रपतिजायादीनां सातिशयदुःखमिश्रकादाचित्कप्रियत्वमनुभूयमानं न पत्यादिस्वरूपप्रयुक्तमपि तु निरतिशयानन्दस्वभावपरमात्मप्रयुक्तम् । अतो य एवं स्वयं, निरतिशयानन्दः सन्नन्येषामपि प्रियत्वले-शास्पदत्वमापादयति स परमात्मैव द्रष्टव्य इत्युपदिश्यते । तदयमर्थः, "न वा अरे पत्युः कामाय पतिः प्रियो भवति" न हि पतिजायापुत्रवित्तादयो मत्प्रयोजनायाहमस्य प्रियः स्यामिति स्वसङ्कल्पा-त्प्रिया भवन्त्यपि त्वात्मनः कामाय । परमात्मनः स्वाराधकप्रियप्रतिलम्भनरूपेष्टनिर्वृत्तय इत्यर्थः । परमात्मा हि कर्मभिराराधितस्तत्तत्कर्मानुगुणं प्रतिनियतदेशकालस्वरूपपरिमाणमाराधकानां तत्तद्वस्तुगतं प्रियत्वमापादयति । "एष ह्येवानन्दयाति" इति श्रुतेः । न हि तत्तद्वस्तु स्वरूपेण प्रियमप्रियं वा । यथोक्तम् । "तदेव प्रीतये भूत्वा पुनर्दुःखाय जायते । तदेव कोपाय यतः प्रसादाय च जायते । तस्माद्दुःखात्मकं नास्ति न च किञ्चित्सुखात्मकम् ।" इति "आत्मनस्तु कामाय" इत्यस्य "जीवात्म-परत्वेऽप्यात्मा वा अरे द्रष्टव्यः इति तु परमात्मविषयमेव । तत्राप्ययमर्थः, यस्मात्पत्यादीनामिष्ट-सम्पत्तये तत्परवशेन पत्यादयः प्रियत्वेन नोपादीयन्तेऽपि त्वात्मेष्टसम्पत्तये स्वातन्त्र्येण स्वप्रियत्वेनोपा-दीयन्ते । तस्माच्च एवात्मनो निरुपाधिकनिर्दोषनिरवधिकप्रियः परमात्मा स एव हि द्रष्टव्यो न दुःख-मिश्राल्पसुखसुखदुःखोदर्काः परायत्ततत्स्वभावाः पतिजायापुत्रवित्तादयो विषया इति । अस्मिंस्तु प्रकरणे जीवात्मशब्देनापि परमात्मन एवाभिधानादात्मनस्तु कामाय । ... "आत्मा वा अरे द्रष्टव्यः इति पूर्वोक्तप्रक्रियोभयत्रात्मशब्दावेकविषयौ ॥ मतान्तरेणापि जीवशब्देन परमात्माभिधा-नोपपादनायाह—एकविज्ञानेन सर्वविज्ञानप्रतिज्ञासिद्धेरिदं लिङ्गं यज्जीवात्मवाचिशब्दैः परमात्म-नोऽभिधानमित्याश्मरथ्य आचार्यो मन्यतेस्म, यद्यप्य जीवः परमात्मकार्यतया परमात्मैव न भवेत्तदा तद्व्यतिरिक्ततया परमात्मविज्ञानादेतद्विज्ञानं न सेत्स्यति । "आत्मा वा इदमेक एवाग्र आसीत्" इति प्राक्सृष्टेरेकत्वावधारणात् । "यथा सुदीप्तात्पावकाद्विस्फुलिङ्गाः, सहस्रशः प्रभवन्ते सरूपाः । तथाक्षराद्विविधाः सोम्य भावाः प्रजायन्ते तत्र चैवापियन्ति" । इत्यादिभिर्ब्रह्मणो जीवानामुत्पत्तिश्रवणात्तस्मिन्नेवाप्ययश्रवणाच्च जीवानां ब्रह्मकार्यत्वेन ब्रह्मणैक्यमवगम्यते । अतो जीवशब्देन परमात्मन एवाभिधानमिति ॥ यदुक्तं जीवस्य ब्रह्मकार्यतया ब्रह्मणैक्येनैकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपादनार्थं ब्रह्मणो जीवशब्देन प्रतिपादनमिति तदयुक्तम् । "न जायते म्रियते वा विपश्चित्" इत्यादिनाऽजत्वश्रुतेः । जीवानां प्राचीनकर्मफलभोगाय जगत्सृष्ट्य-भ्युपगमाच्च । अन्यथा विषमसृष्ट्यनुपपत्तेश्च । ब्रह्मकार्यस्य जीवस्य ब्रह्मतापत्तिलक्षणो मोक्ष आका-शादिवदवर्जनीय इति तदुपायविधानानुष्ठानानर्थक्याच्च । घटादिवत्कारणप्राप्तेर्विनाशरूपत्वेन मोक्षस्या-पुरुषार्थत्वाच्च । जीवात्मन उत्पत्तिप्रलयवादोपपत्तिरुत्तरत्र प्रपञ्चयिष्यते । अत "एष सम्प्रसा-दोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" । "यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय । तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम् ॥" इत्युत्क्रमिष्यतः परमात्मभावाज्जीवशब्देन परमात्मनोऽभिधानमित्यौडुलोमिराचार्यो मन्यतेस्म ॥ यदुक्त-मुत्क्रमिष्यतो जीवस्य ब्रह्मभावाद्ब्राह्मणस्तच्छब्देनाभिधानमिति तदप्ययुक्तम् । विकल्पासहत्वात् । अस्य जीवात्मन उत्क्रान्तेः पूर्वमनेवम्भावः, किं स्वाभाविक उतौपाधिकस्तत्रापि, पारमार्थिकोऽपारमार्थिको

वेति ? स्वाभाविकत्वे ब्रह्मभावो नोपपद्यते । भेदस्य स्वरूपप्रयुक्तत्वेन स्वरूपे विद्यमाने तदनपायात् ।
अथ भेदेन सह स्वरूपमप्यपैतीति । तथा सति विनष्टत्वादेव तस्य न ब्रह्मभावः । अपुरुषार्थत्वादि-
दोषप्रसङ्गश्च । पारमार्थिकौपाधिकत्वेऽपि प्रागपि ब्रह्मैवेत्युत्क्रमिष्यत एवम्भावादिति विशेषो न युज्यते
वक्तुम् । अस्मिन्पक्षे ह्युपाधिब्रह्मव्यतिरेकेण वस्त्वन्तराभावान्निरवयवस्य ब्रह्मण उपाधिना छेदाद्यसम्भ-
वाच्चोपाधिगत एव भेद इत्युत्क्रान्तेः प्रागपि ब्रह्मैव । औपाधिकस्य भेदस्यापारमार्थिकत्वे कस्यायमुत्क्रान्तौ
ब्रह्मभाव इति वक्तव्यम् । ब्रह्मण एवाविद्योपाधितिरोहितस्वरूपस्येति चेन्न, नित्यमुक्तस्वप्रकाश-
ज्ञानस्वरूपस्याविद्योपाधितिरोधानासम्भवात् । तिरोधानं नाम वस्तुस्वरूपे विद्यमाने तत्प्रकाशनिवृत्तिः ।
प्रकाश एव वस्तुस्वरूपमित्यङ्गीकारे, तिरोधानभावः स्वरूपनाशो वा स्यात् । अतो नित्याविर्भूतस्वस्वरूप-
स्यात्तस्योत्क्रान्तौ ब्रह्मभावे न कश्चिद्विशेष इत्युत्क्रमिष्यत इति विशेषणं व्यर्थमेव । " अस्माच्छरी-
रात्समुत्थाय परं ज्योतिरुपसम्पद्य" इति 'पूर्वमनेवंरूपस्य न तदानीं ब्रह्मतापत्तिमाह—अपि तु, पूर्व-
सिद्धस्वरूपस्याविर्भावम् । "तथा हि वक्ष्यते सम्पद्याविर्भावः स्वेन शब्दात्" इत्यादिभिः । "अतोऽनेन
जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणीति" "य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद
यस्यात्मा शरीरं य आत्मानमन्तरो यमयति स त आत्माऽन्तर्याम्यमृतः", "योऽक्षरमन्तरे सञ्चरन्यस्याक्षरं
शरीरं यमक्षरं न वेदैष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः" "अन्तः प्रविष्टः
शास्ता जनानां सर्वात्मा" इति स्वशरीरभूते जीवात्मन्यात्मतयावस्थिते जीवशब्देन ब्रह्मप्रतिपादनमिति
काशकृत्स्न आचार्यो मन्यते स्म । जीवशब्दश्च जीवस्य परमात्मपर्यन्तस्यैव वाचको न जीवमात्रस्येति
पूर्वमेवोक्तं "नामरूपे व्याकरवाणि" इत्यत्र । एवमात्मशरीरभावेन तादात्म्योपपादने परस्य ब्रह्मणो-
ऽपहतपाप्मत्वसर्वज्ञत्वादिगोचरा जीवस्याविदुषः शोचतो ब्रह्मोपासनान्मोक्षवादिन्यो जगत्सृष्टिप्रलयाभि-
धायिन्यो जगतो ब्रह्मतादात्म्योपदेशपराश्च सर्वाः श्रुतयः सम्यगुपपादिता भवन्तीति काशकृत्स्नीयमेव
मतं सूत्रकारः स्वीकृतवान् ॥ अयमत्र वाक्यार्थः' अमृतत्वोपाये मैत्रेय्या पृष्टे याज्ञवल्क्य "आत्मा वा
अरे द्रष्टव्यः" इत्यादिना परमात्मोपासनममृतत्वोपायमुक्त्वा "आत्मनि खल्वरे दृष्टे" इत्यादिनोपास्यलक्षणं
दुन्दुभ्यादिदृष्टान्तैश्चोपासनोपकरणभूतमनःप्रभृतिकरणग्रामनियमनं च सामान्येनाभिधाय "स यथार्द्रै-
धाग्नेः" इत्यादिना चोपास्यभूतस्य परस्य ब्रह्मणो "स यथा सर्वासामपां समुद्र एकायनम्" इत्यादिना
निखिलजगदेककारणत्वं सकलविषयप्रवृत्तिमूलकरणग्रामनियमनं च विस्तीर्णमुपदिश्य "स यथा सैन्धव-
घनः" इत्यादिनाऽमृतत्वोपायप्रवृत्तिप्रोत्साहनाय जीवात्मस्वरूपेणावस्थितस्य परमात्मनोऽपरिच्छि-
न्नज्ञानैकाकारतामुपपाद्य तस्यैवापरिच्छिन्नज्ञानैकाकारस्य संसारदशायां भूतपरिणामानुवृत्तिं "विज्ञानघन
एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति" इत्यभिधाय "न प्रेत्य सञ्ज्ञाऽस्ति" इति मोक्षदशायां
देवादिरूपज्ञानाभावमुक्त्वा पुन-
स्वाभाविकापरिच्छिन्नज्ञानसङ्कोचाभावेन भूतसङ्घातेनैकीकृत्यात्मनि नानाभूतवस्तुदर्शनमज्ञानकृतमिति निरस्त-
रपि "यत्र हि द्वैतमिव भवति" इत्यादिना "ब्रह्मात्मकत्वेन ब्रह्मव्यतिरिक्तवस्त्वन्तराभावेन भेददर्शनं निरस्य "येनेदं
निखिलाज्ञानस्य ब्रह्मात्मकं कृत्स्नं जगदनुभवतो येन परमात्मनाहित-
सर्वं विजानाति तं केन विजानीयात्" इति च जीवात्मा स्वात्मतयावस्थितेन
ज्ञानः सन्निदं सर्वं येन विजानात्ययं तं केन विजानीयान्न केनापीति परमात्मनो दुरवगत्वमुपपाद्य "स
एष नेति नेति" इत्यादिनायं सर्वेश्वरः स्वेतरसमस्तचिदचिद्वस्तुविलक्षणरूप, एव सर्वशरीरः सन्सर्व-
स्यात्मतयावस्थित इति स्वशरीरभूतचिदचिद्वस्तुगतैर्दोषैर्न संस्पृश्यत इत्यभिधाय "विज्ञातारमरे केन
विजानीयादित्युक्तानुशासनासि मैत्रेय्येतावदरे खल्वमृतत्वम्" इति समस्तवस्तुविसजातीयं निरस्त-

निखिलदोषं निखिलजगदेककारणभूतं सर्वस्य विज्ञातारं पुरुषोत्तममुक्तप्रकारादुपासनादृते केन विजानीयादितीदमेवोपासनममृतत्वोपायो ब्रह्मप्राप्तिरेव चामृतत्वमभिधीयत इत्युक्तवान् । अतः परं ब्रह्मैवास्मिन्वाक्ये प्रतिपाद्यत इति परमेव ब्रह्म जगत्कारणं पुरुषस्त्वदधिष्ठाता च प्रकृतिरिति स्थितम् ॥

(३) माध्वे—वाक्यस्याप्येवमन्वयो युज्यते पृथक् स्थितस्यापि परमात्मनः। "नान्यः पन्था विद्यतेऽयनाये"ति प्रतिज्ञासिद्धेर्लिङ्गत्वेन कर्म्मादिकमुच्यत इत्याश्मरथ्यः । यस्मादेवमनित्यफलमन्यत्तस्मान्नान्यः पन्था इति । उत्क्रमिष्यतो मुमुक्षोः कर्म्मादिना भाव्यं साधनसाधनत्वेन अतस्तद्वक्तीत्यौडुलोमिः मन्यते । सर्वं परमात्मन्यनस्थितमिति वक्तुं तद्वचनमिति काशकृत्स्नः । "कृष्णद्वैपायनमतादेकदेशविदः परे । वदन्ति यथा प्राज्ञं न विरोधः कथञ्चने"ति पाद्मे ॥

(४) निम्बार्कः—"आत्मा वा अरे द्रष्टव्यः" इत्यादिना परमात्मा द्रष्टव्यत्वेन ग्राह्यो वाक्यस्योपक्रमादिपर्य्यालोचनया तत्रैवान्वयात् ॥ कथं तर्हि जीवेनोपक्रमणमत्रोच्यते ? एकविज्ञानेन सर्वविज्ञानप्रतिज्ञासिद्धेर्य्यज्जीवस्य परमात्मकार्यतया परमात्मानन्यत्वात्तद्वाचकशब्देन परमात्माभिधानं गमकमित्याश्मरथ्यो मन्यते स्म ॥ शरीरादुत्क्रमिष्यतो जीवस्य ब्रह्मणा सद्भावात्तच्छब्देन ब्रह्माभिधीयते इत्यौडुलोमिः मन्यते स्म ॥ जीवात्मनि स्वनियम्ये "अन्तः प्रविष्टः शास्ता जनानाम्" इत्यादौ प्रसिद्धस्य परमात्मनो नियन्तृत्वेनावस्थितेर्हेतोर्नियम्यपदेनोपक्रमादौ नियन्तृपरिग्रह इति काशकृत्स्नो मन्यते स्म ॥

(५) भैक्षवे—अपि चैवमेक इत्यत्र हेतुमाह—विधिनिषेधरूपपूर्वापरवाक्यैकवाक्यतया काण्वादिष्वन्यार्थत्वावधारणमित्यर्थः । शब्दाभावाच्च नोपासापरत्वमिति भावः । आश्मरथ्यरूपाचार्य्यो यथोक्तं लिङ्गद्वयं जीवप्राणयोरिव ब्रह्मणोऽपि साधारण्यमेव मन्यते। कुतः ? प्रतिज्ञया ब्रह्मणि लिङ्गद्वयस्य सिद्धत्वात् अजावाक्यस्यादौ तावत् "य एको वर्णो बहुधा शक्तियोगाद्वर्णाननेकान्निहितार्थो दधाति विचैति चान्ते", "विश्वमादौ स देवः स नो बुद्ध्या शुभया संयुनक्तु", "तदेवाग्निस्तदादित्यस्तदु चन्द्रमाः। तदेव शुक्रं तद् ब्रह्म तदापस्तत्प्रजापतिरि"ति प्रतिज्ञया कार्य्यकारणाभेदेन सर्वे जीवादिधर्माः पञ्चमुखत्वादयोऽपि ब्रह्मणि सिद्धाः प्राणवाक्यस्य च शेषे "मनसैवानुद्रष्टव्यं नेह नानास्ति किञ्चन" "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यती"ति प्रतिज्ञया सर्वस्यात्मनि कारणे च ब्रह्मणि सर्वे प्राणादिधर्माः परमायुष्ट्वादयोऽपि सिद्धा इत्यर्थः । व्यासमताच्चास्य मतस्यायं विशेषो यद्व्यासाचार्य्यैः शक्तिशक्तिमद्भेदोपासनापरत्वेन लिङ्गद्वयमुपपादितं ब्रह्मणि, आश्मरथ्याचार्य्यैस्तूपासनां विनापि कार्यकारणाभेदेन कार्यधर्म इति लिङ्गद्वयमुपपादितमिति । औडुलोमिस्त्वाचार्य्यो मन्यते परमात्मन्यपि जीवमुख्यप्राणयोर्लिङ्गमुपपद्यते उत्क्रमणारम्भकाले जीवप्राणयोरेवम्भावात् परमात्मभावात् यथा मैथुनकाले स्त्रीपुंसोरेकीभाव इत्यर्थः । तथा च मरणकाले परमात्माविभागादन्यदापि तदभेदव्यवहारेण जीवप्राणधर्मौ ब्रह्मण्युच्येते लोके, तथा व्यवहारादिति भावः। "अथास्य पुरुषस्य प्रयतो वाङ्मनसि, सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायामि"त्यादिश्रुतयश्च जीवप्राणयोर्ब्रह्मणि सम्पत्त्यास्त्यैक्यं बोधयन्ति । काशकृत्स्नस्त्वाचार्य्यो मन्यते प्रलयकाले जीवादीनां सर्वेषामेव ब्रह्मण्यवस्थितेर्विलयादत्यन्तमेकीभावेनान्यदापि तदभेदस्यैव पारमार्थिकत्वं जीवब्रह्माविभागस्य नैमित्तिकत्वेन स्वाभाविकाविभागापेक्षया वाचारम्भणमात्रत्वात्, अतो यथोक्तलिङ्गद्वयं ब्रह्मण्युपपद्यत इति औडुलोमिमताच्चास्यायं विशेषो यदौडुलोमिना स्त्रीपुरुषयोरिव मिथुनीभावरूपं मरणारम्भकालीनमैक्यमादाय लिङ्गद्वयमुपपादितं काशकृत्स्नेन च नदीसमुद्रयोरिवैकतरस्यात्यन्तविलयतः प्रलयकालीनमैक्यमादाय लिङ्गद्वयमुपपादितमिति, यथा च सुषुप्तिमरणप्रारम्भयोरपिवत् ज्ञानं प्रलयव्यावृत्तं तिष्ठति जीवानामीश्वरे संसृष्टानां तथा वक्ष्यामो

जीवावस्थाप्रकरणे । श्रुती चात्र भवतः "त्रिषु धामसु यद्भोग्यमि"ति "हृदयस्याग्रं प्रद्योतते तेनैव
निष्क्रामती"ति च तस्मादुक्त उभयोर्मतभेद इति । एते च मतभेदाः सर्वं एवाविरुद्धाः श्रुतिसिद्धाश्च
भवन्ति प्रकृतपूर्वपक्षसमाधानाय केवलं मुनिभिः पृथक्पृथगुपन्यस्ता इति बोध्यम् । इदमिदानीं
विचार्यते, यदिदमानुमानिकं प्रधानमीश्वरशक्तिविधया विश्वस्रष्ट्प्रोक्तं किमेतदेव राज्ञो मन्त्रिवज्जी-
वस्यान्तःकरणवच्च परमात्मनः सङ्कल्पाद्याधारभूता स्वमायाख्या प्रकृतिरन्तरङ्गशक्तिः, अथवेदं शरीर-
स्थानीया बहिः शक्तिरेव एतदधिष्ठानार्थं शक्त्यन्तरमस्तीश्वरस्य, किं वा शक्त्यन्तरनैरपेक्षेणैव नैया-
यिकानामिव स्वत एवेश्वरो प्रधानपुरुषादिकमधितिष्ठतीति ॥

(६) भास्करीये—बृहदारण्यके मैत्रेयिब्राह्मणे श्रूयते । "न वा अरे पत्युः कामाये"त्युपक्रम्य "न वा
अरे सर्वस्य कामाय सर्वं प्रियं भवत्यात्मनस्तु कामाय सर्वं प्रियं भवत्यात्मा वा अरे द्रष्टव्यः श्रोतव्यो
मन्तव्यो निदिध्यासितव्यो मैत्रेय्यात्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विदितमि"ति ।
तत्र संशयः, किं विज्ञानात्मप्रतिपादनपर इति, किं वा परमात्मप्रतिपादनपर इति ? तत्र पूर्वपक्षवादी
मन्यते विज्ञानात्मा प्रतिपाद्यते स दर्शनादिक्रियाविषयत्वेनोपदिश्यते जायापुत्रवित्तादिभोग्यजात-
मात्मनः प्रियं भवतीति निर्देशात् । तथा विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति
न प्रेत्यसञ्ज्ञास्तीति समुत्थानवचनात् तथा विज्ञातारमरे केन विजानीयादिति कर्तृवचनेनोपसंहारादेवं
प्राप्तेऽभिधीयते, परमात्मैव दर्शनादिविषयो निर्दिश्यते । कुतो, वाक्यान्वयात् । वाक्यं नामैकार्थप्रति-
पादनपरं विभज्यमानसाकाङ्क्षावयवपदजातमुच्यते । तत्रोपक्रमोपसंहारयोः पर्यालोच्यमानस्य पदजातस्य
परमात्मप्रतिपादनपरतयाऽन्वयावगमात् । "अमृतत्वस्य तु नाशास्ति वित्तेनेति धनेन नामृतत्वप्राप्तिस्तदेव
मे ब्रूही"ति मैत्रेयेण(य्या ?) याज्ञवल्क्यः प्रार्थितः, इदमात्मज्ञानमवतारयति स । तथात्मविज्ञानात् सर्व-
विज्ञानमुच्यमानं परमात्मनोऽन्यत्र नोपपद्यते । तथात्मबाह्यं प्रपञ्चं ब्रुवतो दोषं दर्शयति । "सर्वं तं
परादाद्योऽन्यत्रात्मनः सर्वं वेदे"ति तस्मादात्मनोऽव्यतिरिक्तमिदं जगदित्यवधारणात् प्रपञ्चकारणं ब्रूही-
त्यनात्माविवक्षित इति गम्यते । "इदं सर्वं यदयमात्मे"ति चोपसंहारात् । "अस्य महतो भूतस्य निःश्व-
सितमेतद्यदृग्वेद इत्यादिवचनाच्च ॥ जीवेनोपक्रमणं कथमिति तदुपपादनार्थमारभते । आत्मनि विज्ञाते
सर्वमिदं विज्ञातं भवतीत्यस्याः प्रतिज्ञायाः सिद्धेर्लिङ्गमेकमेतत् । यत्प्रियादिसम्बन्धिना प्रमाणान्तर-
सिद्धेन भोक्ता जीवेन वाक्योपक्रमणमित्याश्मरथ्यो मन्यते स । यद्यत्यन्तभिन्नो जीवः परमात्मनस्ततो
वाक्योपक्रमो जीवेन परमात्मना चोपसंहार इति वाक्यमसम्बद्धं स्यात्, प्रतिज्ञा च न सिद्ध्येत् ।
तस्मादभेदांशेनोपक्रमः । कियानपि जीवपरयोर्भेदोऽस्तीत्यस्याभिप्रायः ॥ जीवः परमात्मनोऽत्यन्तभिन्नः
तस्य पुनर्ज्ञानध्यानसमाधिसम्पन्नस्य शरीरेन्द्रियसङ्घातादुत्क्रमिष्यतो मुक्त्यवस्थायामेवं तावज्जीवोपक्रमे
इत्यौडुलोमिराचार्यो मन्यते स । श्रुतिरपि नदीदृष्टान्तेनेममर्थं ज्ञापयति । "यथा नद्यः स्यन्दमानाः
समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय, तथा विद्वान्नामरूपाद्विमुक्तः परात् परं पुरुषमुपैति दिव्यम्" ॥
पाञ्चरात्रिका अप्येवमाहुः "आमुक्तेर्भेद एव स्याज्जीवस्य च परस्य च । मुक्तस्य तु न भेदोऽस्ति भेदहेतो-
रभावतः" ॥ न प्रकृतिविकारभावो नाप्यत्यन्तभिन्नस्य जीवस्य मुक्त्यवस्थायामभेदापत्तिः किं तर्ह्युत्क्रमणात्
प्रागपि जीवरूपेण परमात्मनोऽवस्थानादभेदेनोपक्रम इति काशकृत्स्नो मन्यते स । तथा च श्रुतिः
"अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणी"ति परस्यैव जीवरूपेणावस्थानं दर्शयति । ननु यदि
पर एव साक्षादयं जीवो नाम स्यात् तत उपदेशोऽनर्थको मैत्रेय्याः । "स वा एष महानज आत्मेति" ।
न हि सर्वज्ञस्योपदेष्टृ प्रयोजनम् । अत्रोच्यते, सम्यगाह भवानस्ति भेदोऽप्यनादिकालप्रवृत्ताविद्या-

कर्मोपाध्यवच्छेदादंशो हि परस्याहं जीवो नाम यथाग्नेर्विस्फुलिङ्गाः यथाकाशस्य पार्थिवाद्यधिष्ठानोपाध्यवच्छिन्नः छिद्रप्रदेशः तदंशशब्दग्रहणशक्त्यपेक्षा यथा च वायोः प्रतिशरीरं पञ्चवृत्तिः प्राणस्तथायं भिन्नाभिन्नस्वभावो जीवः संसारी न कदाचिन्मुक्तपूर्वः । तस्य मुक्त्यर्थं विद्योपदेशोऽर्थवान् संसारावस्थायां विविधवासनायोगात् परं श्रेयः प्रार्थयमानानां जीवानामुपदेशः क्रियमाणोऽर्थवान् । नैयायिका अप्याहुः । ननु मुक्तिप्रार्थना रागो, रागश्च बन्धहेतुः, कथं मुक्तिः । अत्रोच्यते । रागो हि परमात्मविषयो यः स मुक्तिहेतुः, विषयविषयो यः स बन्धहेतुः, शास्त्रादयं विभागो गम्यते । अथाकामयमानो योऽकामो निष्काम आत्मकाम इति । यथा स्वभार्यागमनं, धर्माय परभार्यागमनमधर्मायेति । ननु कर्मसहितं ज्ञानं यदि मुक्तिसाधनं, ततः क्रमेण मुच्यमानेषु संसारस्यान्तवत्त्वं स्यात् । उच्यते । कोऽयं भवतः सम्मोहः । को हि नामानुपहतबुद्धिः प्राप्तममृतमपीत्वा तृषितो मृगतृष्णामनुधावेत् । मातृतुल्या हि श्रुतिः श्रेयः श्रावयति । तदशङ्कितत्वेनोपादेयम् । अनन्तानां च सङ्ख्यारहितानां जीवानामन्तो नास्ति समुद्रोदकवत् । शास्त्रप्रामाण्याच्च मुक्तिरपि गम्यते । जगच्चानुच्छिन्नमद्य दृश्यते तथा कालान्तरे । किञ्च, यो हि जगतः स्रष्टा पालयिता संहर्ता च स एव चिकित्सां वेत्स्यति, किं तवानया चिन्तयाऽतिगम्भीरया चिरस्य मुक्तये प्रयतस्वेति । केचिदत्र मायावादिनो ब्रुवते । स एवेश्वरः साक्षाद्देहेऽप्यनुप्रविश्यावस्थितः स एव संसारी नान्योऽस्ति व्यतिरिक्तो जीवो नामेति । कथं तस्य संसारित्वमिति चेत्, अविद्याकृतनामोपाधिवशादिति । तत्र ब्रूमः । कस्येयमविद्या, न तावज्जीवस्य, वस्तुभूतस्य तस्यानभ्युपगमात् । नापीश्वरस्य, नित्यविज्ञानप्रकाशत्वादज्ञानं विरुध्यते । यदि च तस्य संसारित्वं तदेश्वरत्वं विरुध्यते । सुखदुःखमोहादिरहितत्वं हीश्वरत्वमुच्यते, तद्योगित्वं च संसारित्वं, तदत्र संसारित्वासंसारित्वयोरविद्याविद्यात्वयोर्बन्धमोक्षयोश्चैकस्मिन्नात्मनि समवायविरोधात् । शीतोष्णयोरिवान्यतरपरित्यागो बलात् प्राप्नोतीश्वरश्चेन्न संसारी, संसारी चेन्नेश्वर इति श्रुतिश्चासंसारित्वं दर्शयति । "निष्क्रियं निष्कलं शान्तं निरवद्यं निरञ्जनम्" अवद्यं निन्द्यमुच्यते । अञ्जनमविद्या, सा च जीवाना"मविद्यायामन्तरे वर्तमानानामि"ति श्रुतेः । तस्मादन्य ईश्वरस्तदंशो जीवः संसारीति बलादभ्युपेयम् । भवन्ति चात्र श्लोकाः । "श्रवणं मननं ध्यानं ब्रह्मचर्यं क्षमादि च । अनपेक्ष्याप्यपोहेत साक्षाज्जीवो यदीश्वरः । विश्वरूपो यथा मायां नारदाय व्यदर्शयत् । उपसंहृतवांस्तावत् स्वेच्छया भगवान् प्रभुः । कानुद्दिश्य सृजेन्मायां माया तावानर्थिका । संसारितां कथं कुर्यादात्मनः स्वयमिच्छया । स्वयं निर्मितमायात्मा वेदान्तश्रवणादिना । ज्ञानं प्राप्नोति मुक्त्यर्थं सर्वज्ञ इति कः भ्रमः । सर्वोपाधिविनिर्मोके को लाभः परमात्मनः । देहान्तरेषु दुःखित्वं यदि वाभ्युपगम्यते । एकोपाधिनिवृत्त्यर्थः क्लेशस्ते निःप्रयोजनः । तेषु चेदस्ति दुःखित्वं क्लेशस्ते निःप्रयोजनः । कृमिकीटाद्युपाधीनामनन्तत्वाच्च शक्यते । तस्मात् स्वतन्त्रः सर्वज्ञः सर्वशक्तिर्निरञ्जनः । ईश्वरोऽभ्युपगन्तव्यो जगत्सृष्टित्यश्रुतेः ।" अन्ये तु स्वयमुत्प्रेक्षितदर्शनाः प्राहुः । अपहतरूपपाप्मादिरूपमात्मतत्त्वं कर्तव्यम्, श्रवणमननादिनियोगानुष्ठानेन । स च नियोगः प्रपञ्चप्रविलापनमापादयतीति सुसिद्धार्थमेवेति । तदेतदपेशलमुक्तमस्माभिः । प्रपञ्चप्रविलापनमशक्यं पुरुषमात्रेण कर्तुमिति । यदि चात्मतत्त्वमपहतपाप्मादिरूपं क्रियते अनित्यत्वं प्राप्नोति घटादिवत् । न च प्रपञ्चप्रविलापनेऽन्यस्मिन् कृते वस्त्वन्तरमात्मतत्त्वं भवति । न हि प्रदीपेनान्धकारापनये कृते घटः कृतो भवति । यथा वा घटस्य विनाशे कृते नाघटविनाशः कृतो भवति । अर्थत्वात् । एवमत्रापि । न च नियोगः प्रविलापनमापादयतीति शक्यते वक्तुम् । तस्याकारकत्वात् । न च तस्य प्रविलयोऽश्रुतत्वात् । यदुत्प्रेक्षितमात्मना तत्सर्वं नियोगमस्तकेऽध्यारोप्य व्यवह्रियते । यदि तावन्नियोगः शब्दात्मको लिङादिप्रत्ययः स पुरुष-

द्व्यापारकर्तव्यतामात्रं ज्ञापयति यजेत जुहुयादिति । अथ प्रमेयरूपो नियोगः तस्य का गतिः स्वयं प्रमेयत्वात् प्रमाणरूपता तस्य कल्पयितुमशक्या प्रमाणाभावात् । यदप्युच्यते, प्रपञ्चस्य मिथ्यात्वमागमादवगम्यते, स्वत एव तु प्रत्यक्षादीनां प्रामाण्यमिति । तदप्यसत् । सर्वत्र हि परत एव मिथ्यात्वं गृह्यते, न स्वतः । यथा शुक्तिकाज्ञानेन रजतज्ञानस्य मिथ्यात्वं न तेनैव तस्य गृह्यते । शास्त्रेण चेत् प्रत्यक्षादीनां मिथ्यात्वं परिच्छिद्यते । तस्य नित्यत्वात् प्रपञ्चमिथ्यात्वं सर्वदैव स्यात् । न विद्वदविद्वदपेक्षया सत्यत्वं मिथ्यात्वं वा । न हि पुरुषैर्भावाः क्रियन्ते येन तदवशादवतिष्ठेरन् । इष्टारोहिते सत्यामालोकेन्द्रियसामग्र्यां दर्शनं निष्पद्यन्ते । तदभावे नासीत्यलमिति प्रसङ्गेन । छान्दोग्ये च तत्र तत्रानयोर्मोयाग्रविलयवादिनोर्निराकरणं विस्तरेण कृतमित्युपसंह्रियते । यदुक्तं विज्ञानघन एवैतेभ्यो भूतेभ्य इति विज्ञानैकरसः शरीराकारपरिणतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुभूतानि विनश्यति तत्कृतमौपाधिकं रूपं विजहातीत्यर्थः । प्रेत्य–विशेष–सञ्ज्ञा निवर्तते, मुक्तः परमात्मा भवतीति समुदायार्थः । न हि विज्ञातारमित्यपि सर्वस्य विज्ञातारं परमात्मानं केनाप्यन्तरेण करणेन वा विजानीयादित्यर्थः । न हि मुक्तावस्थायामात्मान्तरं करणान्तरं वास्ति।

(७) श्रीमद्वल्लभाचार्यमतेऽयमभिप्रायः—पुनरपि जीवब्रह्मवादेन प्रकृतिकारणवादमाशङ्क्य परिहरति । बृहदारण्यके चतुर्थे षष्ठे "..." प्रपाठके याज्ञवल्क्यमैत्रेयीसम्वादे "येनाहं नामृतास्यां किमहं तेन कुर्या"मिति सर्वतो विरक्तिमुक्त्वा, "यदेव भगवान् वेद तदेव मे ब्रूही"ति पृष्टे, तामभिमुखीकृत्य, "न वा अरे पत्युः कामाय पतिः प्रियो भवती"त्यादिना अमृतत्वाय ज्ञानमुपदिष्टम् । षष्ठे पुनरुपसंहारे"ऽप्येतावदरे खल्वमृतत्वमिति होक्त्वा याज्ञवल्क्यः प्रवव्राजे"त्युक्तम् । तत्र ज्ञानविषयत्वेनोपदिश्यमानो य आत्मा प्रकरणी, स जीवो वा ब्रह्म वेति, संशयः, तत्रान्यापेक्षयात्मनः प्रियत्वं स्वमतीत्या बोधयन् जीवमेवोपक्रमे आत्मत्वेन वदति । तस्यैव चाग्रे दर्शनादि विधत्ते, तद्दर्शनादिनैव च सर्वज्ञानरूपं फलमाह । तत्रात्मज्ञानेन कथं सर्वं ज्ञातं भवतीत्याकाङ्क्षायाम्, "ब्रह्म तं परादा"दित्यादिना "इदं सर्वं यदयमात्मे"त्यनेनात्मनः सर्वत्वमाह । ततः कथमस्मिन् सङ्घाते आत्मज्ञानं भवतीत्याकाङ्क्षायां दुन्दुभिवीणाशङ्खदृष्टान्तानाह । तत्रेदं तिष्ठति, यथा महाकोलाहले एकस्यां दिशि जायमाना अन्ये शब्दा नावगन्तुं शक्यन्ते, किन्तु हन्यमानस्य दुन्दुभेरेव शब्दोऽनेकशब्दाभिभावको गृहीतो भवति । तस्य तदीयत्वनिश्चये तु करणं दुन्दुभेर्दुन्दुभ्याघातस्य वा दर्शनम् । तथात्र सङ्घाते आत्मबुभुत्सायामात्मबोधकानि यानि चेष्टादिरूपाणि कार्याणि तेषां विचारेणानुमानद्वारा आत्मनि चित्तस्य प्रवेशोऽस्यात्मनोऽप्यस्मिन् सङ्घाते श्रवणादिभिः साक्षात्कारो भवतीति । अत्र प्रथमो दृष्टान्तः परम्परया ज्ञानजनने । द्वितीयो बाह्येन्द्रियेभ्यो भेदज्ञानजनने। तृतीय आन्तरात्भेदज्ञानजनने। एवं सङ्घाताच्छिन्नतया आत्मज्ञानजनने मननात्मक उपाय उक्तः । ततः पूर्वोक्तं आत्मनः सर्वत्वं कथं ज्ञातुं शक्यत इत्यपेक्षायां, तत एवोत्पन्नं सर्वं तत्रैव च लीयत इति घटादेः पश्चाच्च मृदिव सर्वस्य पूर्वं पश्चाच्चात्मैवेति बोधनाय । नैयायिकाद्यभिमतनिमित्तमात्रतानिराकरणाय च, "स यथार्द्रैन्धाऽग्ने"रिति, "स यथा सर्वासामपामि"ति कण्डिकाद्वयमाह । तथापि मध्ये स्थितिदशायां भेददर्शनात् सर्वमुपचार इति मंस्यते, तन्निवारणाय स्थितिदशायामप्यात्मैव, नान्यत्किमप्याधेयत्वेन विशतीति बोधयितुं, "स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एव स्यादेवं वा अरे इदं महद् भूतमनन्तमपारं कृत्स्नः प्रज्ञानघन एवे"त्यन्तर्बहिस्त्वैवानन्तरत्वमबाह्यत्वमेकरूप्यं चाह । तर्हि सर्वदा कुतो न प्रतीयते इत्याह । "एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यती"ति । एतानि शरीरात्मकानि भूतानि कार्यत्वादस्य ज्ञापकानीति तेभ्यः

समुत्थाय तद्द्वारा स्वं ज्ञापयित्वा तानि विनश्यन्ति सन्त्ययमात्माऽप्यनुविनश्यत्यदर्शनं प्राप्नोतीति, तर्हि समुत्थानानुविनाशक्रियादर्शनात्कालपरिच्छिन्नो भविष्यतीति' शङ्कायां तावन्मात्रतानिराकरणायाह "न प्रेत्य सञ्ज्ञाऽस्ती"ति । प्रेत्य भूतलयोत्तरं सञ्ज्ञा सम्यग्ज्ञापकं नास्ति । कार्यमेव तस्य ज्ञापकं रूपम्; अतस्तदभावे तस्य स्वरूपं वक्तुं न शक्यत इति न ज्ञायते । न तु स एव नास्तीति । तथाच तदानीमपि विद्यमानत्वान्न स कालपरिच्छिन्न इत्यर्थः । एवमुक्ते मैत्रेय्या मोहो जातः, तत्र विशेषाकाङ्क्षायामतिरिक्ताकथने वञ्चकत्वमाशङ्क्य तत्परिहारायाह "स होवाचे"त्यादि । "न वा अरे मोहमहं ब्रवीम्यविनाशी वा अरे अयमात्मा अनुच्छित्तिधर्मा मात्रासंसर्गस्त्वस्य भवती"ति ।, अत्र अविनाशीत्यनेन स्वरूपनित्यत्वम्, अनुच्छित्तिधर्मेत्यनेन स्वरूपधर्माणां च नित्यत्वं कार्यवैलक्षण्यज्ञानाय सिद्धवत्कारेणोक्त्वा विषयसम्बन्धेन संसारमाह । मात्रासंसर्गस्त्वस्य भवतीति । तथाच यद्यनित्यः स्याद्विषयसम्बन्धेन संसारः कस्य स्यादतः सोऽविनाशीत्यर्थः । यद्येवं तर्हि तद्दर्शनार्थं विशेषोऽपि वक्तव्य इत्याकाङ्क्षायां विशेषतस्तत्कथने हेतुमाह । यद्वै तमित्यारभ्य यावत्समाप्ति । तत्रायमर्थः, यद्वै तन्न पश्यतीत्यनुस्वारस्य परसवर्णः । तत्र, यद्वै तन्न पश्यतीत्यनेनात्मदर्शनाभावमनूद्य, कार्यस्य कारणात्मकत्वाद्रूपमप्यात्मैवेति तद्दर्शने कथमात्मादर्शनमित्याशङ्कायां, पश्यन् वै तद्द्रष्टव्यं न पश्यतीत्यनेन रूपात्मकमात्मानं पश्यन्नपि द्रष्टव्यत्वेन न पश्यतीति तस्यात्मदर्शनाभावस्य स्वरूपं, न तु सर्वथा तद्दर्शनाभावरूपं स्वरूपमित्युक्त्वा, कथं न सर्वथादर्शनाभावरूपमित्याकाङ्क्षायां युक्तिमाह । नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येदिति । दृष्टेरिति पञ्चमी । अग्रे प्राणाद्रसादिति पञ्चमीप्रवाहस्यैव दर्शनात् । तथाच द्रष्टुरात्मनो दृष्टेश्चक्षुरिन्द्रियाद्दर्शनात्मकज्ञानाद्वा विपरिलोपः सर्वथा अविषयत्वं न विद्यते, कुतः? अविनाशित्वात् । स्वरूपतः स्वरूपधर्मतश्च नित्यत्वात् । तर्हि पश्यत्वमेव यत्कारणं पश्येत्, तथाऽपश्यत्त्वमित्यतो ब्रवीति । द्वितीयं इन्द्रियं ततोऽन्यन्नास्ति, ततो विभक्तं च नास्ति । भेदे विभागे च द्रष्टृदृश्यभावः । स तु परस्परं कार्ययो रूपचक्षुषोः, अतो रूपदर्शनम्, न तु कार्यस्य कारणाद्भेदो विभागो वा । अतस्तदभावाच्चक्षुः स्वकारणमात्मानं न पश्यतीत्यपश्यत्वम् । अत उभयमपि युक्तमित्यर्थः । एवं द्रष्टृदृश्यव्यवहारे अज्ञानावस्थायां विशेषतस्तज्ज्ञानं, न चेज्ज्ञानोत्तरं तस्य ज्ञानोपायो वक्तव्य इत्यत आह । यत्र वेत्यादि । यत्र वा अन्यदिव स्यात्, तत्रान्योऽन्यत् पश्येज्जिघ्रेदित्यादि । यत्र त्वस्य सर्वमात्मैवाभूत्, तत्केन किं पश्येज्जिघ्रेदित्यादि । यत्राज्ञानदशायामन्याभावेऽपि रूपादिदर्शनादन्यदिव स्यात्, तत्रैव चेद्दर्शनम्, तर्हि यत्र ज्ञानदशायामस्य ज्ञातुः सर्वमात्मैवाभूत्तत्र कर्मकर्तृभाव एव नास्तीति तत्र कथं दर्शनम् । अतोऽवस्थाद्वयेऽप्यशक्यवचनत्वाद्विशेषतो न वक्तुं शक्य इत्यर्थः । तदेतन्निगमयति । येनेदं सर्वं विजानातीत्यादिद्वयोपसंहरति । उक्तानुशासनासि मैत्रेय्येतावदरे खल्वमृतत्वमिति । सर्वनिमित्तोपादानभूतमविनाश्येकमेवेत्याकारकज्ञानोत्तरं यन्निर्विषयमात्मरूपं ज्ञानं तदेव अमृतत्वमित्यर्थः । तथाचात्रादिमध्यावसानेषु जीवस्यैवोक्तत्वाज्जीवप्रकरणमेवेदमिति प्रतिभाति । नचामृतत्वजगत्कर्तृत्वयोर्महालिङ्गयोरत्रोक्तत्वादात्मभिन्नं ब्रह्मैवात्रोच्यत इति शङ्क्यम् । अस्याभ्यर्हितत्वादेतदुत्कर्षार्थं तयोः कथनात् नचोत्कर्षार्थमेवेदमित्यत्र किं मानमिति शङ्क्यम् । एतावदरे खल्वमृतत्वमिति नियमेनान्यथानुपपत्तेरेव मानत्वात् । ब्रह्मणोऽविकारित्वेनैव सिद्धतया तस्य सर्वरूपेण विकारायोगस्यापि तथात्वाच्च । तस्माद्वेदे सृष्टिवाक्यानामेतन्न्यायेनान्यार्थत्वाच्च ब्रह्म जगत्कारणमतः प्रकृतिकारणवाद एव युक्त इति प्राप्ते, अभिधीयते, वाक्यान्वयादिति । अत्रापि कारणत्वेनेत्यनुव-

र्तते । अत्रापि कारणत्वेन ब्रह्मैवावगन्तव्यम्, न जीवः । कुतः ? वाक्यान्वयात् । वाक्यानामन्वयो
वाक्यान्वयस्तस्मात् । अत्रत्यानामवान्तरवाक्यानां भगवत्परत्व एवान्वयान्नात्र जीवप्राधान्यगन्धो येन
प्रकृतिवादः शङ्क्येत । नचोपक्रमे निरुपाधिप्रियत्वेन जीवात्मन एव प्रकृतत्वात्प्रकृततावच्छेदकवि-
कारे प्रियत्वस्य सुखधर्मत्वात्, सुखस्य च "यो वै भूमा तत्सुख"मिति श्रुतेर्ब्रह्मरूपत्वात्, ब्रह्मणश्च
सर्वत्र समन्वयेन जीवेऽप्यन्वयात्, तेनैव जीवप्रियत्वमिति तस्यापि ब्रह्मण्येवान्वयस्य पर्यवसानात् ।
उपक्रमाद्यपेक्षया उपपत्तेर्बलिष्ठत्वाच्च । किञ्चेदमवान्तरवाक्यं दुर्बलम् । महावाक्यं तूपनिषत् । ततो
महान् वेदः, तत्र च "तं त्वौपनिषदं पुरुष"मिति, "सर्वे वेदा यत्पदमामनन्ती"ति, "वेदैश्च सर्वै-
रहमेव वेद्य" इत्यादिश्रुतिस्मृतिभिर्ब्रह्मपरत्वमेव स्फुरतीति तदनुरोधेनाप्यस्य ब्रह्मपरत्वमेव युक्तम् ।
अन्यथा एतस्य तत्रानन्वयप्रसङ्गात् । किञ्च, "तमेव विदित्वा अतिमृत्युमेती"त्यवधारणाद् ब्रह्मज्ञान-
मेव मोक्षसाधकम्, अतोऽत्र मोक्षसाधनत्वेन दर्शनादिविधानवाक्यानामपि तत्रैवान्वयः । अन्यथा
अवधारणबाधापत्तेः । किञ्च, यथार्द्रैन्धाग्नेरिति कारणत्ववाक्यस्य, "स यथा सर्वासामपा"मिति
प्रलयाधानवाक्यस्यापि ब्रह्मपरत्व एवान्वयः । आनन्दाद्ध्येवेत्यवधारणात् । नच जीव एव ब्रह्मेति-
युक्तम् । "सर्वे एवात्मनो व्युच्चरन्ती"ति सावधारणश्रुतिविरोधात् । किञ्चामृतत्वरूपं फलमपि तत
एव । "एष ह्येवानन्दयाती"ति सावधारणश्रुतेः । अत एवजातीयेषु निःसन्दिग्धत्वेन ब्रह्मरूपस्य कार्य-
स्वांशानां च प्रतिपादनादिदमपि वाक्यं ब्रह्मपरमेवोचितम् । नच मात्रासंसर्गवाक्यस्यानन्वयः ।
सर्वव्यवहारस्य ब्रह्ममूलकतया जीवमुख्यप्राणलिङ्गसूत्रे व्युत्पादितत्वाज्जीवस्य ब्रह्माश्रितत्वेन जीवधर्मा-
णामपि तत्रोपासनार्थे कथनेन तस्याप्युपपत्तेः । विज्ञातृत्वं तु "नान्योऽतोऽस्ती"ति श्रुतेर्ब्रह्मधर्म एवेति
तस्य तु सुखेनान्वयः । अतो ब्रह्मपरत्वे सर्वेषां वाक्यानामन्वयान्नात्र जीवपरत्वाशङ्का । तथा सति
विप्रतिषेधाभावान्न प्रकृतिकारणवादस्यात्र प्रत्याशेत्यर्थः ॥

अत्रोक्तं प्रियत्वं जीवधर्म एव, न ब्रह्मधर्म इति वादिनामेकदेशिनामपि मतेऽत्र प्रकृतिकारणवादो
न सम्भवतीति सम्मतिबोधनाय तेषां मतानि त्रिभिः सूत्रैराह । तत्र जीवो नाम स्वस्य भोगनिष्पत्त्यर्थं
स्वांशो भगवता विस्फुलिङ्गवत् कृत इत्याश्मरथ्य आचार्यो मन्यते । तत्र लौकिकैः पतिपुत्रादिभिः
सहास्य प्रियत्ववचनं लौकिकमेवातोऽत्रात्मपदेन जीव एव परामृश्यत इति जीवप्रकरणमेवेदमिति
प्रतिवादिशङ्कायां जीवोपक्रमस्यान्यत् प्रयोजनमित्याह प्रतिज्ञेत्यादि । प्रतिज्ञासिद्धेरिति षष्ठी । "मैत्रे-
य्यात्मनि वा अरे दृष्टे श्रुते मते विज्ञाते सर्वमिदं विदितं भवती"ति हि प्रतिज्ञा । सा च सर्वस्यै-
वात्रे, "ब्रह्म तं परादा"दित्यादिना व्युत्पादनादवगम्यते । सा तदा पूर्यते, यदा जीवोऽपि सर्वमध्ये
प्रविशति । अतस्तत्सिद्ध्यर्थं ब्रह्माभेदेन जीवोपक्रमः । अन्यथा सर्वस्य ब्रह्माभेदव्युत्पादनकोटौ जीव-
स्यानुक्तत्वात्तत्प्रतिज्ञा न सिध्येत् । कृते तु तदभेदेनोपक्रमे ब्रह्मक्षत्राद्यभिमानित्वेन सोऽपि प्रविशेदत
उपक्रमः प्रतिज्ञासिद्धेर्लिङ्गं भवतीति पूर्वोक्ता प्रतिज्ञैवास्य ब्रह्मप्रकरणत्वगमिका पूर्वसूत्रोपन्यस्तश्रुतिभि-
र्ब्रह्मण एव श्रवणादिविधिविषयत्वादिति प्रियत्ववज्जीवधर्मत्वे न जीवोपक्रमो दोष इत्यर्थः ॥

अनादिसिद्ध एव चैतन्यमात्रो जीवः सङ्घाते प्रविष्टः संसारमापद्यते । केवलस्वरूपेण चिति प्रविष्टः
संसारान्मुच्यते । अतो यदत्र प्रियत्वबोधितेन जीवोपक्रमेण भगवतः श्रवणादिकमुक्तम्, तद्, एव-
म्भावादुत्क्रमिष्यतो लिङ्गम् । मुक्तौ जीवो भगवानेव भविष्यतीत्यस्य ज्ञापकम् । लिङ्गमित्यनुवर्तते ।

तन्मते केवलस्य जीवस्य चित्स्वरूपे ब्रह्मणि प्रवेशो मुक्तिरिति मुक्त्युपयोगिकैवल्यबोधनार्थं जीवोपक्रमः। एतद्गमकं तु "येनाहं नामृता स्या"मिति मैत्रेयीवाक्यम्। सा हि मोक्षमिच्छन्ती विद्यां पृच्छति। यदि तस्यै मोक्षयोग्यं जीवस्वरूपं न ज्ञापयेत्, सा कथं मुक्ता भवेत् । इतिशब्दो हेतौ। तथाच स्त्रिया विश्वासार्थं गौणप्रियवैराग्यार्थं जीवोपक्रम इति न तेन जीवस्य प्रकरणित्वसिद्धिरित्यौडुलोमिराचार्यो मन्यते इत्यर्थः ॥

आसक्त्या विषयभोक्तृ यद्भगवतो रूपं स जीव इति तन्मतम् । अत्रापि लिङ्गमित्यनुवर्तते। अतः संसारदशायामपि जीवो ब्रह्म तदवस्थाविशेषरूपत्वादिति बोधनार्थं जीवोपक्रमः। अतो नोत्क्रमलिङ्गत्वं, न वोपचारः। एतन्मतगमकं तु "आत्मनस्तु कामाय सर्वं प्रियं भवती"ति वाक्यम् । तथाच सर्वभोक्तारमेकमात्मानं बोधयितुं प्रतिनियततत्तद्भोक्तारं तदवस्थाविशेषमुपक्रमे वदतीति जीवोपक्रमो जीवे भगवदवस्थाविशेषत्वपक्षस्य लिङ्गमिति काशकृत्स्न आचार्यो मन्यते ॥



## ८ प्रकृतिश्चेत्यधिकरणम् ।

( दृष्टान्तानुपरोधान्न प्रकृतिः समवायिकारणम् )

**प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॥ १।४।२३ ॥**

एवं प्रकृतिकारणवादनिराकरणेन ब्रह्मण एव कारणत्वे सिद्धेप्यर्धजरतीयतयो-
भयस्थापनपक्षं परिहर्तुमधिकरणमारभते । ननु ब्रह्मकारणतां न निराकुर्मः
श्रुतिसिद्धत्वात् । किन्तु समवायिकारणं प्रकृतिरेव । कार्यकारणयोरवैलक्षण्यात् ।
समवायिकारणानुरोधि हि कार्यम् । अन्यत्सर्वं भगवानस्तु । अपेक्ष्यते च सम-
वायिनिमित्तयोर्भेदः । कर्मण्यपि श्रुतिस्मृतिसमवायो धर्मे । एवं ब्रह्मवादेऽपि
स्मृत्युक्ता प्रकृतिः समवायि कारणम् । ब्रह्म निमित्तकारणमित्येवं प्राप्ते—

उच्यते, प्रकृतिश्च । निमित्तकारणं समवायिकारणं च ब्रह्मैव । प्रकृतिपद-
प्रयोगात्स्मृतिसिद्धतृतीयसर्वधर्मापदेशः । चकारात् यत्रेत्यादिसर्वसङ्ग्रहः ।

---

**प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्** । दृष्टान्तानुपरोधाधिकरणप्रयोजनमाहुः—**एवमिति** ।
पूर्वोक्तरीत्याऽधिकरणसप्तकेनेत्यर्थः । संशयस्तु समवायिकारणं प्रकृतिः, निमित्तकारणं ब्रह्म, अथवा सर्व-
विधकारणं ब्रह्मेत्येवंरूपो बोध्यः । पूर्वपक्षमाहुः—**नन्विति** । **अवैलक्षण्यादिति** । कार्ये कुत्रचि-
त्सत्त्वरजस्तमसां प्रत्येकं मिलित्वा वा दर्शनात् जगतः प्रकृत्यवैलक्षण्यादित्यर्थः । **अन्यदिति** । निमि-
त्तमित्यर्थः । ननु सत्त्वादीनां कार्येऽनुकृतिर्दृश्यते इति प्रकृतेर्यथा समवायित्वं तथा सत्तायाः अप्यनुवृ-
त्तिर्दृश्यते इति ब्रह्मणोऽपि समवायित्वं स्यादित्यत आहुः—**अपेक्ष्यते** इति । समवायिनिमित्तयोर्यदि
भेदो न स्वीक्रियते चेत्, ब्रह्मगुणानामपहतपाप्मत्वादीनां कार्येऽनुवृत्तिर्दृश्येतेत्येतदर्थं भेदोऽपेक्ष्यत
इत्यर्थः । अत्रार्थे वैदिकीं दृष्टान्तयुक्तिमाहुः—**कर्मणीति** । धर्मे । यज्ञे । तथाच तत्र ब्रह्मभिन्नस्य
जीवस्य ऋत्विगादेर्निमित्तत्वं यथा, तथात्रापीत्याशयेनाहुः—**एवमिति** ।

समाधानमाहुः—**उच्यत** इति । प्रकृतिशब्दस्य समवायिकारणे शक्तिः । मृत्प्रकृतिर्घट इति प्रयोगेन
व्यवहारस्य शक्तिग्राहकत्वात्प्रकृष्टा कृतिर्येनेति योगमादृत्य निमित्तकारणेऽपि शक्तिरित्याशयेनाहुः—**प्रकृ-
तिश्चेति** । तथाच समवायिकारणं निमित्तकारणं च ब्रह्मैवेत्यर्थः । नन्वेवं चेत्तर्हि ब्रह्मणि निमित्तकारणत्वं
भन्मतसिद्धं तत्स्वीक्रियते चेन्मन्मतप्रवेश इति चेत्, सत्यं नहि त्वन्मते इदं सिद्धम्, किन्तु नैय्यायिकमत-
सिद्धं अस्माभिरपि स्वीक्रियते, अत एव सूत्रे समवायिकारणपदं परित्यज्य प्रकृतिपदं प्रयुक्तमित्याशयेनाहुः—
**प्रकृतिपदे**ति । **स्मृतिसिद्धे**ति । नैय्यायिकस्मृतिसिद्धा ये तृतीयसर्वधर्माः निमित्तकारणधर्माः सर्वे
कालाकाशत्वादयस्तेषामपदेशः कथनमित्यर्थः । नैय्यायिकमते समवाय्यसमवायिभिन्नं निमित्तकारणमेव सर्वं
कालादिकम् । तदपि भगवत्स्वरूपत्वादस्माकमविरुद्धमित्याशयेन स्मृतिसिद्धेत्युक्तम् । एवंचासमवायि
कारणं समवायिकारणे प्रत्यासन्नत्वान्न पृथगुपन्यस्तम् । एवंच सर्वकारणं ब्रह्मेति । अथवा, स्मृतिसिद्धाः
ये तृतीयकारणात्मका असमवायिनः सर्वे धर्माः संयोगादयस्तेषामपदेशः कथनमित्यर्थः । किम्पुनर्वक्तव्यं
सर्वकारणं ब्रह्मेति सर्वकारकमपि तदेवेत्याहुः—**चकारादिति** । **यत्रेत्यादीति** । "यत्र येन यतो यस्य
यस्मै यद्यद्यथा यदा । स्यादिदं भगवान् साक्षात् प्रधानपुरुषेश्वर" इति पुराणोक्तसर्वकारकस्वरूपमपि

कुत एतत्? प्रतिज्ञादृष्टान्तानुपरोधात् । प्रतिज्ञा–"अपि वा तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतं भवत्यविज्ञातं विज्ञातं भवति" ( छां. ६।१।२ ) इति दृष्टान्तो–"यथैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात्" (छां. ६।१।४) इत्यादि। प्रतिज्ञादृष्टान्तयोरनुपरोधोऽबाधनं तस्मात्। समवायिकारणज्ञाने हि कार्यज्ञानम् । उभयोर्ग्रहणमुपचारव्यावृत्त्यर्थम्। उपक्रमोपसंहारवत् । प्रतिज्ञामात्रत्वेऽदृष्टद्वारापि भवेत्। दृष्टान्तमात्रत्वे त्वनुमानविधया स्यात्, तथा सति सर्वसमानधर्मवद् ब्रह्मस्यान्न समवायिकारणम्। उभयोर्ग्रहणे तु प्रतिज्ञाया दृष्टमेव द्वारमिति समवायित्वसिद्धिः । कार्यकारणयोर्भेदाभेदमतनिराकरणाय पिण्डमणिनखनिकृन्तनग्रहणम् ॥

तथा सति यत्र कचिद् भगवाञ्ज्ञातः सर्वत्र ज्ञातो भवति। सर्वं च ज्ञातं भवतीति सामान्यलक्षणप्रत्यासत्तिनिराकरणाय च–"वाचारम्भणं विकारो नामधेयम्" (छां. ६।१।४) इति।

---

ब्रह्मैवेत्यर्थः । सौत्रं हेतुं विशदयन्ति—**कुत** इति । **प्रतिज्ञेति** । प्रतिज्ञा च दृष्टान्तश्च तयोरनुपरोधः अबाधनं तस्मात् । प्रतिज्ञावाक्यमाहुः—**अपि वेति** । दृष्टान्तमाहु—**यथैकेनेति** । अत्र छान्दोग्ये श्रुतिवाक्यम्। प्रसिद्धिमाहुः—**समवायीति** । हि प्रसिद्धम् । नन्वेकेन कार्यसिद्धौ किमर्थमुभयोर्ग्रहणमत आहुः—**उभयोरिति** । **उपचारः** गौणत्वम् । अत्र दृष्टान्तमाहुः—**उपक्रमेति** । उपक्रमोपसंहाराभ्यामेकार्थसिद्धौ न तत्रोपचारशङ्का तथात्रापीत्यर्थः। उपचारशङ्कामेव विवृण्वन्ति—**प्रतिज्ञामात्रत्वेति** । केवलं प्रतिज्ञावाक्यस्य हेतुत्वे । अदृष्टद्वारा अलौकिकयोगजप्रत्यासत्तिद्वारा, योगिनां तादृशज्ञानं जायते इति तेन वाक्येन ब्रह्मणः समवायित्वसिद्धिर्न स्यात् । **अनुमानविधयेति** । "सर्वं वाच्यं ज्ञेयत्वात्, पटो वाच्यो ज्ञेयत्वात् घटवत् इति यथाऽनुमानं तथा सर्वं सत् ज्ञेयत्वात् इत्यनुमानविधया ज्ञेयत्ववत् ब्रह्म भवति न तु समवायिकारणमित्यर्थः । **उभयोरिति** । प्रतिज्ञादृष्टान्तयोरित्यर्थः। **प्रतिज्ञायाः** । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञायाः । दृष्टमेव कार्यैकदेशप्रत्यक्षमेव द्वारम् । समवायिकारणत्वगमकम्। **समवायित्वसिद्धिरिति** । एकस्मिन् मृत्पिण्डे मृद्विकारत्वज्ञानोत्तरं सर्वत्र तादृशज्ञानेन मृत्समवायित्वज्ञानं एकदेशप्रत्यक्षादेव जायते नत्वनुमानेन यथा, तथा प्रकृतेऽप्येकत्र सन्मयत्वे निश्चिते तद्विकारेषु सर्वेषु सद्विकारत्वज्ञानात् सन्मात्रे सर्वसमवायित्वज्ञानं प्रत्यक्षादेव जायते इति सद्रूपे भगवति समवायत्वसिद्धिरित्यर्थः । दृष्टान्ते पिण्डादिपदग्रहणस्य प्रयोजनमाहुः—**कार्यकारणयोरिति** । **निराकरणायेति** । कार्यं कारणाद्भिन्नमिति न स्वीक्रियते चेत् इदं कारणविदमस्मादुत्पन्नमिति व्यवहारो न स्यात् । यदि स्वीक्रियते तदा एकेन मृन्मयज्ञानेन सर्वं मृन्मयं ज्ञातं भवतीत्युपनिषद्बाधः, इत्यतो भेदाभेदमतमादर्तव्यं तन्निराकरणायेत्यर्थः । **पिण्डेति** । मृत्पिण्डस्यैवावस्थाविशेषो घटः, एवं लोहमणिकार्येपि तदवस्थाविशेषः । **नखनिकृन्तनमिति** । नखाः निकृत्यन्ते येन शस्त्रेण तन्नखनिकृन्तनम् । तेन सर्वं कार्ष्णायसं लोहमयं शस्त्रं वेदितव्यम् । एवं चावस्थाभेदादेव व्यवहारसाङ्कर्यवारणं भविष्यतीति भावः ॥

**तथा सतीति** । कारणमेवावस्थाविशेषरूपं कार्यमिति ज्ञाते सतीत्यर्थः । नैय्यायिकमतसिद्धसामान्यलक्षणानादरे बीजमाहुः—**वाचारम्भणेति** । वाचिकक्रियात्मकः कम्बुग्रीवादिमदभिन्नो विकारो नामैव इत्यर्थः । तथाचात्र व्यक्तिभेदाभावेन सामान्यलक्षणावसर एव नास्तीति भावः । इदं च एका-

अलीकत्वनिराकरणाय च मृत्तिकेत्येव । ब्रह्मत्वेनैव जगतः सत्यत्वं नान्यथेति । सामान्यलक्षणप्रत्यासत्तिनिराकरणं च स्पष्टमेवाग्रे त्रीणि रूपाणीत्यत्र करिष्यति । अतो ब्रह्मरूपेण सत्यस्य जगतो ब्रह्मैव समवायिकारणम् । देहात्मबुद्धिस्तु सत्यां विकारबुद्धौ दोषः । श्रुतिसामर्थ्यं प्रमाणमित्युक्तम् । तस्माद् ब्रह्मैव समवायिकारणम् । न प्रकृतिः ॥ १।४।२३ ॥

( अभिध्यानादपि न प्रकृतिः समवायिकारणम् )

अभिध्योपदेशाच्च ॥ १।४।२४ ॥

लिङ्गान्तरमाह । "सोऽकामयत बहु स्यां प्रजायेये"ति ( तै. २।६ ) इत्यत्र कामनं तस्याभिध्यानम् । आप्तकामत्वान्न कामना । तदभिध्यानं सृष्टावुपदिश्यते । बहु स्यामिति स्वस्यैव बहुरूपत्वाभिध्यानेन सृष्टं स्वयमेव भवति । सुवर्णस्यानेकरूपत्वं सुवर्णप्रकृतिकत्व एव । अध्यासाभावाद् गौणत्वापत्तेश्च ।

---

दशस्कन्धे भगवत एवोक्तं "यथा सुवर्णं सुकृतं पुरस्ताद्"त्यादिना वाङ्मात्रं विकारः इति स्वीक्रियमाणे ब्रह्मणः विवर्तोपादानत्वमपि स्वीकर्तव्यम् ।

तथाच प्रपञ्चस्य वाग्विलसितत्वादलीकत्वं स्यादित्यत आहुः—**अलीकत्वेति** । नन्वेकस्मिन् घटे घटत्वज्ञाने जाते घटत्वसामान्यलक्षणालौकिकसन्निकर्षेण घटाः इत्याकारकं ज्ञानं यथा जायते, तथा ब्रह्मत्वेन "सर्वं खल्विदं ब्रह्मे"ति ज्ञानं भविष्यतीत्यत आहुः—**सामान्येति** । **करिष्यतीति** । श्रुतिरिति शेषः । अग्न्यादिविद्युदन्तेषु तेज इत्येव सत्यमित्यकथनात् । त्रीणि रूपाणीत्येव सत्यमिति कथनात् सर्वं तत्तद्रूपमेकमेव ब्रह्मेति व्यक्तिभेद एव नास्तीति ब्रह्मत्वं सामान्यप्रत्यासत्तिर्नास्तीति भावः । नैय्यायिकानां मते अलौकिकप्रत्यक्षे सामान्यलक्षणाप्रत्यासत्तिः स्वीक्रियते, मीमांसकानां मते तु तस्याः "अनादर एवेति निराकरणं चेत्यनेन ध्वनितम् । **ब्रह्मरूपेणेति** । तथाच यावत्पर्यन्तं जगद्भावः तावत्पर्यन्तमेवासत्यत्वभ्रमः ब्रह्मभावे तु सत्यत्वमेव इति भावः । नन्वेवं चेत्, देहादेरपि जगदन्तःपातित्वादात्मत्वेन सत्यतायां सत्यां देहात्मबुद्धेर्दुष्टता न स्यादत आहुः—**देहात्मेति** । **विकारबुद्धाविति** । यावत्पर्यन्तमात्मस्वरूपज्ञानं नास्ति तावत्पर्यन्तं बहुजन्माभ्यस्तविकारबुद्धिर्वर्तत एवेति तस्या आत्माभिन्नत्वेन देहावगाहित्वं नास्ति प्रत्युक्तदेहाभिन्नत्वेनात्मावगाहित्वमिति दोष इत्यर्थः । अस्मिन्नर्थे प्रमाणमाहुः—**श्रुतीति** । एकेन मृन्मयेन सर्वं मृन्मयं विज्ञातं भवतीति दृष्टान्तश्रुतिसामर्थ्यमित्यर्थः । सामर्थ्यं च बोधकत्वम् । लोके हि दृष्टान्तेन बोधनं सौकर्यार्थम् । **उक्तमिति** । प्रागिति शेषः ॥

**अभिध्योपदेशाच्च** । ननु दृष्टान्ते मृत्तिकेत्येव सत्यमित्यनेन कारणे सत्यत्वस्योक्तत्वाद्घटादौ कार्ये मिथ्यात्वं समायाति यथा, एवं कारणीभूते ब्रह्मणि सत्यत्वेऽपि कार्ये जगति मिथ्यात्वं वक्तव्यं, एवंच दृष्टान्तश्रुत्या ब्रह्मणः विवर्तोपादानत्वं सिद्ध्यतीत्यत आहुः—**लिङ्गान्तरेति** । "सोऽकामयत"-इत्यनेन कामनारूपा इच्छा प्रतीयते, सा च भगवति न सम्भवति, आप्तकामत्वादतः कामनापदार्थमाहुः—**अभिध्यानमिति** । विलक्षणप्रपञ्चरचनामित्थङ्करिष्यामीत्यभितः ध्यानं विचार इत्यर्थः । नन्वेतावता भगवति समवायिकारणत्वं कथं सिद्धमत आहुः—**बहु स्यामितीति** । **सुवर्णप्रकृतिकत्व एवेति** । सम्भवतीति शेषः । तथाच सुवर्णवत् समवायिकारणत्वं ब्रह्मणोऽपि सम्भवतीति भावः । ननु योगिभिरपि मायया बहुभवनं क्रियते इति योगिषु यथाऽध्यासस्तथाऽत्रापीत्यत आहुः—**अध्यासाभावादिति** । ब्रह्मणि अध्यासो न सम्भवतीत्यर्थः । **गौणत्वापत्तेरिति** । मायया सृष्टिकर्तृत्वरूप

नहि मुख्यं बहुभवनं योगिनां सम्भवति । सर्वभवनसामर्थ्यान्मुख्ये सम्भवति गौणकल्पनाया अन्याय्यत्वात् । चकारात्–"इदं सर्वं यदयमात्मा" ( बृ. २।४।६ ) इति कार्यस्य ब्रह्मत्वश्रुतिर्ब्रह्मप्रकृतित्वे सम्भवति नान्यथा ।

अथवा "सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत" ( छां. ३।१४।१ ) इति तस्य जगद्रूपत्वेनाभिध्यानमुपदिश्यते । तद् ब्रह्मसमवायित्वे घटत इति चकारा"देकत्वेन पृथक्त्वेन बहुधा विश्वतो मुखमि"ति ॥ १।४।२४ ॥

( तत्र श्रुतिप्रमाणम् )

साक्षाच्चोभयाम्नानात् ॥ १।४।२५ ॥

लिङ्गमुक्त्वा श्रुतिमेव प्रमाणमाह । साक्षाच्छ्रुत्यैव समवायित्वमुच्यते । चकारात् स्मृत्याऽपि । कथं श्रुत्योच्यते तत्राह । उभयाम्नानात् । ब्रह्मणः सकाशाद् ब्रह्मण्येव च सृष्टिप्रलययोराम्नानात् । "सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्त आकाशं प्रत्यस्तं यन्ति" ( छां. १।९।१ ) इति । "अहं सर्वस्य जगतः प्रभवः प्रलयस्तथा" ( भ. गी. ७।६ ) इति च । न ह्येतस्मिन्निमित्तत्वं सम्भवति । सुवर्णादिषु तथोपलब्धेः । लोकवेदन्यायेन साक्षात्त्वम् । तस्माद्भगवानेव समवायिकारणम् ॥ १।४।२५ ॥

( परिणामस्यात्मकृतित्वादविकृतपरिणामवादः )

आत्मकृतेः परिणामात् ॥ १।४।२६ ॥

ननु–"स एव सर्वं सृजति स एवावति हन्ति च" ( भा. ४।११।२९ ) इति कर्तृत्वप्रतीतेराकाशादिवाक्यमप्यौपचारिकं भविष्यतीति तन्निराकरणायाह । आत्मकृतेः । "तदात्मानꣳ स्वयमकुरुत" (तै. २।७) इति स्वस्यैव कर्मकर्तृभावात् । सुकृ-

---

गौणत्वं च स्यादित्यर्थः । योगिनां तु मायासहकारित्वमित्याहुः—**नहीति** । **नान्यथेति** । तथा चाभिध्योपदेशात्समवायिकारणं ब्रह्मैवेत्यर्थः ।

ननु मास्तु, मायायोगबलेन सर्वं भगवति क्रियते, एवं च समवायिकारणत्वव्याघात इत्यत आहुः—**अथवेति** ।

**साक्षाच्चोभयाम्नानात्** । सूत्रमवतारयन्ति—**लिङ्गमिति** । श्रुतिमाहुः—**सर्वाणीति** । स्मृतिमाहुः—**अहमिति** । **लोकेति** । सुवर्णादिषु लोकन्यायः ॥

**आत्मकृतेः परिणामात्** । आत्मनः कृतिः आत्मकृतिः तस्याः परिणामत्वं श्रुतौ उच्यते, तेन कृत्वा समवायिकारणत्वं ब्रह्मण एव न प्रकृतेरिति सूत्रार्थः । **कर्तृत्वप्रतीतेरिति** । कुलालवन्निमित्तकारणत्वप्रतीतेरित्यर्थः । **आकाशादिवाक्यमिति** । "सर्वाणि ह वा इमानी"ति वाक्यमित्यर्थः । तथा चाकाशवाक्ये चिदाकाशरूपब्रह्मणः सकाशादुत्पत्तिर्बोधितेति तस्यैव समवायिकारणत्वं श्रुतौ प्रतीयते । यथा लोके सुवर्णात्कुण्डलादीनामुत्पत्तेर्दर्शनात् सुवर्णस्य समवायिकारणत्वं प्रतीयते इति । इदं च तदैव सम्पद्यते यदि आकाशवाक्यं मुख्यार्थवाचकं चेत्, तदेव तु न सम्भवति, कुतः, "स एव सर्वमि"ति वाक्यात्, ब्रह्मणः निमित्तकारणत्वप्रतीतेः सत्त्वात्तद्वाक्यमौपचारिकं भविष्यतीति भावः । **तदात्मानमिति** । इय च ब्रह्मनिरूपपाठके श्रुतिः । तथाहि "तदात्मानꣳ स्वयमकुरुत । तस्मात्तत्सुकृतमुच्यत"- इति । ननु स्वयमेव कार्यं करणं चेत्तादृशकार्यकारणभावः, लोके कुत्रापि न दृश्यत इति तस्या लौकिकत्वं वक्तुं हेतुद्वयं पूरयन्ति—**स्वस्यैवेति** । तथाच सुवर्णस्य समवायित्वेऽपि कुण्डलादिकर्तृत्वं नास्तीति

तत्ववचनाचालौकिकत्वम्। तथापि ज्ञानार्थमुपपत्तिमाह। परिणामात्। परिण-
मते कार्याकारेणेति। अविकृतमेव परिणमते सुवर्णम्। सर्वाणि च तैजसानि।
वृद्धेश्चालौकिकत्वाद् ब्रह्मकारणत्व एव घटते। पूर्वावस्थान्यथाभावस्तु कार्यश्रुत्य-
नुरोधादङ्गीकर्तव्यः। वक्ष्यति च-श्रुतेस्तु शब्दमूलत्वात्। (ब्र. सू. २।१।२७)
इति। अन्यानि च युक्तिदूषणानि परिहरिष्यति। तस्माद् ब्रह्मपरिणामलक्षणं
कार्यमिति जगत्समवायिकारणत्वं ब्रह्मण एवेति सिद्धम्॥ १।४।२६॥

( भगवानेव सर्वस्य योनिरतो प्रकृतिवादोऽवैदिकः )

योनिश्च हि गीयते॥ १।४।२७॥

चेतनेषु किञ्चिदाशङ्क्य परिहरति। नन्वस्तु जडानां ब्रह्मैककारणत्वम्। चेतनेषु
तु योनिबीजयोः समवायित्वदर्शनात्पुरुषत्वाद् भगवतो योनिरूपा प्रकृतिः सम-
वायिकारणं भवतु। शुक्रशोणितसमवेतत्वाच्छरीरस्येत्याशङ्क्य परिहरति। योनिश्च
ब्रह्मैव। शाक्तवादनिराकरणाय चकारः। तत्र युक्तिश्रुती प्रमाणयति। हि गीयत
इति। युक्तिस्तावत्-"सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयम्" (छां. ६।२।१)
इति पूर्वमेकमेव प्रतिज्ञातम्। आकाशादेव आनन्दाद्ध्येवेत्याद्येवकारैश्चानन्यकार-
णत्वं जगतोऽवगम्यते। इतरापेक्षायां द्वैतापत्तेः। गीयते च, "कर्तारमीशं पुरुषं
ब्रह्मयोनिम्"। (मुं. ३।१।३) "यद्भूतयोनिं परिपश्यन्ति धीराः" (मुं. १।१।६) इति
च। "मम योनिर्महद्ब्रह्म तस्मिन्गर्भं दधाम्यहम्" (भ. गी. १४।३) इति। "तासां
ब्रह्म महद्योनिरहं बीजप्रदः पिता" (भ. गी. १४।४) इति च। अक्षरपुरुषोत्तम-
भावेन तथात्वम्। तस्माद्योनिरपि भगवान्पुरुषोऽपि सर्वं वीर्यं जीवश्च सर्वं भगवा-
निति। "इदं सर्वं यदयमात्मे"ति सिद्धम्। तस्मात्केनाप्यंशेन प्रकृतिप्रवेशो नास्ती-
त्यशब्दत्वं साङ्ख्यमतस्य सिद्धम्॥ १।४।२७॥

---

लोकतः विशेषस्य श्रुतौ सत्त्वान्न तद्वाक्यमौपचारिकमिति भावः। नन्वस्मन्मते परिणामवादो नास्तीति
कथमुक्तं परिणामादित्यत आहुः—तथापीति। यद्यपि नास्ति तथापि अविकृतपरिणामः सर्वं ब्रह्मेति
ज्ञानार्थं,व्यास आहेत्यर्थः। ननु लोके दुग्धं दध्यादिरूपेण विकृतं सदेव परिणमते इति तं विहायावि-
कृतपरिणामे दृष्टान्तमाहुः—सुवर्णमिति। सर्वाणि च तैजसानीति। "लोहकार्ष्णायसमि"ति
श्रुत्युक्तानीत्यर्थः। ननु बहुभवनं विकारित्वं विना न सम्भवतीत्यत आहुः—वृद्धेरिति। पूर्वं बहु
स्यामिति तदनन्तरं तत्तेजोऽसृजत, तदनन्तरं जीवानुप्रवेश इति श्रुतौ उक्तं तद्ब्रह्मणः कारणत्वे एव घटते
इत्यर्थः। तथा चालौकिकवृद्धौ विकारो नास्तीति भावः। ननु पूर्वावस्थाऽन्यथाभावो विकारः, स च
ब्रह्मणोऽप्यस्तीत्यत आहुः—कार्यश्रुतीति। बहु स्यामिति कार्यश्रुत्यनुरोधात् सङ्ख्यारूपाऽन्यथाभावः
स्वीक्रियते ब्रह्मणि सुवर्णे च गन्धरूपान्यथाभावरूपाविकृतिस्तु दध्यादिवन्न स्वीक्रियते इत्यर्थः। इदं
मया नोच्यते किन्तु सूत्रकारेणेत्याहुः—वक्ष्यति चेति। श्रीभागवते वेदस्तुतौ "नहि विकृतिं त्यजन्ति
कनकस्य तदात्मतये"त्यादावुक्तम्॥

योनिश्च गीयते। परिहरतीति। चैतन्यं शरीराश्रितं, शरीरं न योनिसमुद्भूतं, योनिश्च प्रकृति-
रिति किञ्चिन्मूर्खाशङ्कां परिहरतीत्यर्थः। अत्र योनिः अक्षरं ब्रह्म पिता पुरुषोत्तम इत्यस्मिन्सूत्रे उक्तं
सामान्यत इत्यन्यत्सर्वं सुगमम्॥

( वेदविरुद्धवादान्तरनिरासः )

**एतेन सर्वे व्याख्याता व्याख्याताः ॥ १।४।२८ ॥**

ब्रह्मवादव्यतिरिक्ताः सर्वे वादा अवैदिका वेदविरुद्धाश्चेत्याह । एतेन ब्रह्मवादस्थापनपूर्वकसाङ्ख्यमतनिराकरणेन सर्वे पातञ्जलादिवादा व्याख्याताः । अवैदिका अनुपयुक्ताश्च । वैदिकानां हि वेदः प्रमाणम् । तस्मिन्नव्याकुले भ्रान्तिप्रतिपन्ना एव सर्वे वादा इति । एतत्सौकर्यार्थं विस्तरेणाग्रे वक्ष्यते आवृत्तिरध्यायसमाप्तिबोधिका ॥ १।४।२८ ॥ ८ ॥

इति श्रीवेदव्यासमतवर्तिश्रीवल्लभाचार्यविरचिते ब्रह्मसूत्राणुभाष्ये प्रथमाध्यायस्य चतुर्थः पादः ॥ १।४ ॥

---

**एतेन सर्वे व्याख्याता व्याख्याताः ।** एवंरीत्या पातञ्जलादिमतनिराकरणं ज्ञेयम् । एवं च सामान्यतः निराकरणं कृतं, विशेषतः निराकरणार्थमग्रिमाध्यायप्रयोजनमिति सामान्यविशेषभावसङ्गतिर्बोधितेति सर्वमनवद्यम् । इत्यष्टमाधिकरणम् ॥ १

इति श्रीमन्मुकुन्दरायसहजमाधुरीपरमानिर्वचनीयसरसवदनतामरसरससुधाह्रदाऽवगाहिश्रीमदाचार्यपदाब्जकृपापारसारश्रीमत्प्रभुचरणात्मजमहाराजयदुनाथकुलोद्भवगोस्वामिश्रीगोपालात्मजगिरिधरविरचितेऽणुभाष्यविवरणे प्रथमाध्यायस्य चतुर्थः पादः समाप्तिमफाणीत् ॥

---

१ अत्रेत्थं व्याख्यानान्तराणि—

(१) तत्र शाङ्कराः—पूर्वम् "जन्माद्यस्य यतः" इति सूत्रे ब्रह्मणो जगत्कारणत्वमभिहितम् । तदधुनात्र विचार्यते । एवं च सामान्यज्ञानस्य विशेषविचारहेतुत्वात्तेन हेतुहेतुमद्भावसङ्गत्येदमाह । अत्र पूर्वपक्षे एकविज्ञानात्सर्वविज्ञानप्रतिज्ञाया गौणत्वम्, सिद्धान्ते तन्मुख्यत्वमिति फलभेदः । तत्र किं ब्रह्मणो जगन्निमित्तत्वमात्रमिति पूर्वः पक्षः । सिद्धान्तस्तु—प्रकृतिश्च ब्रह्म चकारान्निमित्तमपि । कुतः, प्रतिज्ञादृष्टान्तानुपरोधात् "येनाश्रुतं श्रुतं भवति" इत्याद्येकविज्ञानेन सर्वविज्ञानप्रतिज्ञा, "यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद्वाचारम्भणम्" इत्यादिदृष्टान्तश्च । तयोः सामञ्जस्यादित्यर्थः । किं च । "सोऽकामयत" इत्यात्मनो ध्यानोपदेशात्कर्तृत्वम्, "बहु स्याम्" इति ध्यानोपदेशात्प्रकृतित्वम् इति । प्रकृतित्वे हेत्वन्तरमाह । "सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते, आकाशं प्रत्यस्तं यन्ति" इत्याकाशशब्देन साक्षाद्ब्रह्म गृहीत्वा जगदुत्पत्तिप्रलययोरुभयोराम्नानाद्ब्रह्म प्रकृतिरित्यर्थः । नन्वेकस्य कृतिमत्त्वं कृतिविषयत्वं च विरुद्धमित्याशङ्क्याह । "तदात्मानं स्वयमकुरुत" इति आत्मानमिति द्वितीयया कृतिविषयत्वं स्वयमकुरुत इत्यनेन कृतिमत्त्वं चाम्नायते । तथा च ब्रह्मण उपादानत्वं निमित्तत्वं चाविरुद्धम् । कुत, आत्मकृतेः आत्मसम्बन्धिनी कृतिरात्मकृति', ततो हेतो. । नन्वात्मनः कर्तृत्वेन पूर्वसिद्धस्य कथं कृतिकर्मत्वमत आह—परिणामात् । परिणामो विवर्तः, सिद्धस्यापि विवर्तात्मना साध्यत्वात्कर्मत्वोपपत्तिरित्यर्थः ॥ किं च । "यद्भूतयोनिं परिपश्यन्ति" इति प्रकृतिवाचकयोनिशब्देन आत्मा हि यस्माद्गीयते, तस्मात् प्रकृतिः ब्रह्मेत्यतो ब्रह्मणः प्रकृतित्वं कर्तृत्वं च सिद्धम् ॥ इत्यमभिहितेन न्यायेन "ईक्षतेर्नाशब्दम्" इत्यादिना अशब्दत्वादि-

हेतुभिः प्रधानकारणवादो यथा निराकृतः, न तथेहाणुस्वभावासत्कारणवादः, तेषामपि कारणत्व-बोधकशब्दानां श्रुतत्वादिति प्रत्युदाहरणसङ्गत्येदमाह । अत्र पूर्वपक्षे ब्रह्मण्येव वेदान्तसमन्वयासिद्धिः, सिद्धान्ते तत्सिद्धिरिति फलभेदः । अत्र वेदान्ता विषयः । तत्र किं ब्रह्मण इव परमाणुशून्यादीनामपि क्वचिज्जगत्कारणत्वं श्रुतमस्ति, अथवा सर्वत्र ब्रह्मण एव सर्वकारणत्वं प्रतिनियतमिति संशये, "अण्व्य इवेमा धानाः" "असदेवेदमग्र आसीत्" "स्वभावमेके" इत्यादिषु अण्वादीनामणुकारणत्वं श्रुतमिति पूर्वः पक्षः । सिद्धान्तस्तु—एतेन प्रधानवादनिराकरणे ये हेतवः अशब्दत्वाचेतनत्वैकविज्ञानप्रतिज्ञानुप-पत्त्यादयः तेषामण्वादिपक्षेऽपि साम्येन, सर्वेऽण्वादिकारणवादा निराकृतत्वेन व्याख्याताः । न चासदि-त्यादिशब्दविरोधः । असच्छब्दस्य अनभिव्यक्तनामरूपपरत्वेनाविरोधात् । सूक्ष्मत्वाद्यात्मन्यणुशब्दो गौणः । स्वभाववादस्तु पूर्वपक्षत्वेनोपन्यस्तः । व्याख्याता इति पदाभ्यासोऽध्यायपरिसमाप्त्यर्थः । तस्माज्जगत्कारणे सर्वज्ञे जिज्ञास्ये ब्रह्मणि वेदान्तानां समन्वयो नान्यत्रेति सिद्धम् ॥ चतुस्त्रिंशत्परं सूत्रशतकं तु समन्वये । अध्याये तद्वदेकोनचत्वारिंशन्मया मताः ॥ ब्रह्मनास्ति परे धाम्नि प्रत्यपादि समन्वयः । अत्यन्तसन्ततेर्यस्मिंस्तद् सिद्धयोतिरातताम् ॥

(२) रामानुजीये—एवं निरीश्वरसाङ्ख्ये निरस्ते सति सेश्वरसाङ्ख्यः प्रत्यवतिष्ठते । यद्यपीक्षणा-दिगुणयोगात्सर्वज्ञमीश्वरं जगत्कारणत्वेन वेदान्ताः प्रतिपादयन्ति, तथापि वेदान्तैरेव जगदुपादानतया प्रधानमेव प्रतिपाद्यत इति प्रतीयते । न हि वेदान्ताः सर्वज्ञस्यापरिणामिनोऽधिष्ठातुरीश्वरस्याधिष्ठे-येनाचेतनेन परिणामिना प्रधानेन विना जगतः कारणत्वमवगमयन्ति । तथा ह्यपरिणामिनमेनं प्रकृतिं चैतदधिष्ठितां परिणामिनीमधीयते । "निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्", "स वा एष महानज आत्माऽजरोऽमरः", "विकारजननीमज्ञामष्टरूपामजां ध्रुवाम् । ध्यायतेऽध्यासिता तेन तन्यते प्रेर्यते पुनः ॥ सूयते पुरुषार्थं च तेनैवाधिष्ठिता जगत् । गौरनाद्यन्तवती सा जनित्री भूतभाविनी ।" इति । तथा प्रकृतिमुपादानभूतामधिष्ठायैवेश्वरो विश्वं जगत्सृजतीति श्रूयते । "अस्मान्मायी सृजते विश्वमेतत्" "मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्" इति । स्मृतिरपि—"मयाऽध्यक्षेण प्रकृतिः सूयते सच-राचरम्" इति । एवमश्रुतेऽपि प्रधानोपादानत्वे ब्रह्मणो जगत्कारणत्वश्रुत्यन्यथानुपपत्त्यैव प्रधान-स्वरूपं तस्येश्वराधिष्ठितस्य जगदुपादानकारणत्वं च सिध्यति । एवमेव हि लोके निमित्तोपादानयो-रत्यन्तभेदो दृश्यते । मृत्सुवर्णादेरचेतनस्य घटकटकाद्युपादानत्वं चेतनस्य कुलालस्वर्णकारादेश्च निमि-त्तत्वं च नियतमुपलभ्यते । कार्यनिष्पत्तिश्च नियमेनानेककारकसव्यपेक्षा दृष्टा । एवं निमित्तोपादा-नयोर्भेदनियमं कार्यनिष्पत्तेरनेककारणसव्यपेक्षत्वनियमं चातिक्रम्यैकमेव ब्रह्मोपादानं निमित्तं च प्रतिपादयितुं न प्रभवन्ति वेदान्तवाक्यानि । अतो ब्रह्म निमित्तकारणमेव नोपादानम्, उपादानं तु तदधिष्ठितं प्रधानमेवेति, एवं प्राप्तेऽभिधीयते, प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधादिति । प्रकृतिश्चोपादानं च, न निमित्तकारणमात्रं ब्रह्म । उपादानकारणं च ब्रह्मैवेत्यर्थः । कुतः ? प्रतिज्ञादृष्टान्तानुपरोधात् । एवमेव हि प्रतिज्ञादृष्टान्तौ नोपरुध्येते । प्रतिज्ञा तावत्तथा "उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्" इत्येकविज्ञानेन सर्वविज्ञानविषया । दृष्टान्तश्च यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यात्"' यथा सोम्यैकेन लोहमणिना"' यथा सोम्यैकेन नख-निकृन्तनेन" इति कारणविज्ञानात्कार्यविज्ञानविषयः । यदि निमित्तकारणमेव जगतो ब्रह्म, तदा तद्वि-ज्ञानाद्य समस्तं जगद्विज्ञातं स्यात् । न हि कुलालादिविज्ञानेन घटादि विज्ञायते । अतः, प्रतिज्ञादृष्टा-न्तयोर्बाध एव । ब्रह्मण एवोपादानत्वे उपादानभूतमृत्पिण्डलोहमणिनखनिकृन्तनविज्ञानेन घट-

मणिकटकमुकुटवासीपरश्वधादितत्कार्यविज्ञानवन्निखिलजगदेककारणभूते ब्रह्मणि विज्ञाते तत्कार्यं निखिलं जगद्विज्ञातमेव स्यात् । कारणमेवावस्थान्तरमापन्नं कार्यं न द्रव्यान्तरमिति कार्यकारणरूपेणावस्थितमृत्तद्विकारादिनिदर्शनेन प्रतिज्ञासमर्थनाद्ब्रह्मैव जगदुपादानं चेति निश्चीयते । यत्तु, निमित्तोपादानयोर्भेदः श्रुत्यैव प्रतीयत इति, तदसत्; निमित्तोपादानयोरैक्यप्रतीतेः । "उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवति" इति । आदिश्यते प्रशिष्यतेऽनेनेत्यादेशः । "एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः" इत्यादिश्रुतेः साधकतमत्वेन कर्ता विवक्षितः । "तमादेष्टारमप्राक्ष्यो येनाश्रुतं श्रुतं भवतीति" । येनादेष्ट्राधिष्ठात्रा श्रुतेनाश्रुतमपि श्रुतं भवतीति निमित्तोपादानयोरैक्यं प्रतीयते । "सदेव सोम्येदमग्र आसीदेकमेव" इतिप्राक्सृष्टेरेकत्वावधारणात् । अद्वितीयपदेनाधिष्ठात्रन्तरनिषेधाच्च । "नन्वेवं सति विकारजननीम्" "गौरनाद्यन्तवती" इत्यादिभिः प्रकृतेराद्यन्तवद्विरहेण नित्यत्वं जगदुपादानत्वं च श्रूयमाणं कथमुपपद्यते ? तदुच्यते, तत्राप्यविभक्तनामरूपं कारणावस्थं ब्रह्मैव प्रकृतिशब्देनाभिधीयते । ब्रह्मव्यतिरिक्तवस्त्वन्तराभावात् । तथा हि श्रुतयः "सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेद" "यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्"……"केन कं विजानीयात्" इत्याद्याः । "सर्वं खल्विदं ब्रह्म", "ऐतदात्म्यमिदं सर्वम्" इति कार्यावस्थं कारणावस्थं च सर्वं जगद्ब्रह्मात्मकमिति श्रवणाच्च । एतदुक्तं भवति । "यः पृथिवीमन्तरे सञ्चरन्यस्य पृथिवी शरीरं यं पृथिवी न वेद" इत्यारभ्य "योऽव्यक्तमन्तरे सञ्चरन्यस्याव्यक्तं शरीरं यमव्यक्तं न वेद", "योऽक्षरमन्तरे सञ्चरन्यस्याक्षरं शरीरं यमक्षरं न वेद" "यः पृथिव्यां तिष्ठन्यः पृथिव्यन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति" इत्यारभ्य "य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति स त आत्मान्तर्याम्यमृतः" इति च सर्वं चिदचिद्वस्तुशरीरतया सर्वदा सर्वात्मभूतं परं ब्रह्म कदाचिद्विभक्तनामरूपं कदाचिच्चाविभक्तनामरूपम् । यदा विभक्तनामरूपं तदा तदेव बहुत्वेन कार्यत्वेन चोच्यते । यदा विभक्तनामरूपं तदैकमद्वितीयं कारणमिति च । एवं सर्वदा चिदचिद्वस्तुशरीरस्य परस्य ब्रह्मणो विभक्तनामरूपा या कारणावस्था "सा गौरनाद्यन्तवती", "विकारजननीमज्ञाम्", "अजामेकाम्" इत्यादिभिरभिधीयत इति । ननु च "महानव्यक्ते लीयते", "अव्यक्तमक्षरे लीयते" इति प्रलयश्रुतेरव्यक्तस्योत्पत्तिप्रलयौ प्रतीयेते । तथा च महाभारते । "तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम" "अव्यक्तं पुरुषे ब्रह्मन्निष्कले सम्प्रलीयते" इति । नैष दोषः । अचिद्वस्तुशरीरस्य ब्रह्मणोऽव्यक्तशब्दवाच्यायास्त्रिगुणावस्थायाः कार्यत्वात् । यदा "तमस्तन्न दिवा न रात्रिरि"ति कृत्स्नप्रलयदशायामपि ब्रह्मात्मकस्यातिसूक्ष्मस्याचिद्वस्तुनः स्थित्यभिधानाज्जगत्कारणस्य परस्य ब्रह्मणः प्रकारभूतमतिसूक्ष्मं चिदचिद्वस्तु नित्यमेवेति तत्प्रकारं ब्रह्मैव गौरनाद्यन्तवती इत्यादिष्वभिधीयते । अत एवच "अक्षरं तमसि लीयते तमः परे देव एकीभवति" इति तमस एकीभावमात्रमेव श्रूयते न तु लयः । एकीभाव इति तमोऽभिधानादतिसूक्ष्मा चिद्वस्तुप्रकारस्य ब्रह्मणोऽविभक्तनामरूपतयावस्थानमभिधीयते । "तम आसीत्तमसा गूढमग्रे प्रकेतम्" "तमसस्तन्महिनाजायतैकम्" इत्याद्यप्येतदेव वदति । तथाच मानवं वचनम् "आसीदिदं तमोभूतमप्रज्ञातमलक्षणम्, अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः" इति । "अस्मान्मायी सृजते विश्वमेतत्" इत्याद्यनन्तरमेवोपपादयिष्यते ब्रह्मणोऽपरिणामित्वश्रुतयश्च । यत्त्वेकस्य निमित्तत्वमुपादानत्वं च न सम्भवति, एककारकनिष्पाद्यत्वं च कार्यस्य, लोके तथा नियमदर्शनात् । अतोऽमिना सिद्धेदितिवेदान्तवाक्यान्येकस्मादेवोत्पत्तिं प्रतिपादयितुं न प्रभवन्तीति । अत्रोच्यते । सकलेतरविलक्षणस्य

परस्य ब्रह्मणः सर्वशक्तेः सर्वज्ञस्यैकस्यैव सर्वमुपपद्यते । मृदादेरचेतनस्य ज्ञानाभावेनाधिष्ठातृत्वा-
योगादधिष्ठातुः कुलालादेर्विचित्रपरिणामशक्तिविरहादसत्यसङ्कल्पतया च तथादर्शननियमः । अतो
ब्रह्मैव जगतो निमित्तमुपादानं च । इतश्चोभयं ब्रह्मैव । "सोऽकामयत बहु स्यां प्रजायेय" इति
"तदैक्षत बहु स्यां प्रजायेय" इति स्रष्टुर्ब्रह्मणः स्वस्यैव बहुभवनसङ्कल्पोपदेशात् । विचित्रचिदचिद्रूपे-
णाहमेव "बहु स्यां प्रजायेयेति" सङ्कल्पपूर्विका हि सृष्टिरुपदिश्यते, न केवलं प्रतिज्ञादृष्टान्ताभिध्योप-
देशादिभिरयमर्थो निश्चीयते । ब्रह्मण एव निमित्तत्वमुपादानत्वं च साक्षादाम्नायते । "किं स्विद्वनं
क उ स वृक्ष आसीद्यतो द्यावापृथिवी निष्टतक्षुः । मनीषिणो मनसा पृच्छते दुतद्यदध्यतिष्ठद्भुवनानि
धारयन्", "ब्रह्म वनं ब्रह्म स वृक्ष आसीद्यतो द्यावापृथिवी निष्टतक्षुः । मनीषिणो मनसा विब्रवीमि
वो ब्रह्माऽध्यतिष्ठद्भुवनानि धारयन्" इति । अत्र हि "स्रष्टुर्ब्रह्मणः किमुपादानं कानि चोपकरणानीति
लोकदृष्ट्या पृष्टे सकलेतरविलक्षणस्य ब्रह्मणः सर्वशक्तियोगो न विरुध्यत" इति ब्रह्मैवोपादानमुप-
करणानि चेति परिहृतम् । अतश्चोभयं ब्रह्म ॥ "सोऽकामयत बहु स्यां प्रजायेय" इति सिसृक्षुत्वेन
प्रकृतस्य ब्रह्मण"स्तदात्मानं स्वयमकुरुत" इति सृष्टेः कर्मत्वं कर्तृत्वं च प्रतीयत इत्यात्मन एव बहुत्व-
करणात्तस्यैव निमित्तत्वमुपादानत्वं च प्रतीयते । अविभक्तनामरूप एवात्मा कर्ता स एव विभक्तनामरूपः
कार्यमिति कर्तृत्वकर्मत्वयोर्न विरोधः । "स्वयमेवात्मानं तथा कुरुते" इति निमित्तत्वमुपादानं च ॥"
"सत्यं ज्ञानमनन्तं ब्रह्म" "आनन्दो ब्रह्म" "अपहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपि-
पासः" "निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्" "स वा एष महानज आत्माऽजरोऽमरः" इति
स्वभावतो निरस्तसमस्तचेतनाचेतनवर्तिदोषगन्धस्य निरतिशयज्ञानानन्दैकतानस्य परस्य ब्रह्मणो
विचित्रानन्तापुरुषार्थास्पदविचित्रचिदचिन्मिश्रप्रपञ्चरूपेणात्मनो बहुभवनसङ्कल्पपूर्वकं बहुभवनं कथ-
मुपपद्यत इत्याशङ्क्याह—परिणामस्वाभाव्याभावोपविश्यमानस्य परिणामस्य परस्मिन्ब्रह्मणि दोषाव-
हत्वस्वभावः प्रत्युत निरङ्कुशैश्वर्यावहत्वमेवेत्यभिप्रायः । एवमेव हि परिणाम उपदिश्यते । अशेषहेय-
प्रत्यनीककल्याणैकतानं स्वेतरसमस्तवस्तुविलक्षणं सर्वज्ञं सत्यसङ्कल्पमवाप्तसमस्तकाममनवधिकातिश-
यानन्दं स्वलीलोपकरणभूतसमस्तचिदचिद्वस्तुजातशरीरतया सदात्मभूतं परं ब्रह्म स्वशरीरभूते प्रपञ्चे
तन्मात्राहङ्कारादिकारणपरम्परया तमःशब्दवाच्यातिसूक्ष्माचिद्वस्त्वेकशेषे सति तमसि च स्वशरीरतया
पृथग्विनिर्देशानर्हातिसूक्ष्मदशापत्त्या स्वस्मिन्नेकतामापन्ने तथाभूततमःशरीरं ब्रह्म पूर्ववद्विभक्तनाम-
रूपचिदचिन्मिश्रप्रपञ्चशरीरं स्यामिति सङ्कल्प्याप्ययं क्रमेण जगच्छरीरतयाऽऽत्मानं परिणमयतीति सर्वेषु
वेदान्तेषु परिणामोपदेशः । तथैव बृहदारण्यके कृत्स्नस्य जगतो ब्रह्म शरीरत्वं ब्रह्मणस्तदात्मकत्वं
चाम्नायते । "यः पृथिव्यां तिष्ठन्पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवी-
मन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः" इत्यारभ्य यस्यापः शरीरं, यस्याग्निः शरीरं, यस्यान्तरिक्षं
शरीरं, यस्य वायुः शरीरं, यस्य द्यौः शरीरं, यस्यादित्यः शरीरं, यस्य दिशः शरीरं, यस्य चन्द्र-
तारकं शरीरं, यस्याकाशः शरीरं, यस्य तमः शरीरं, यस्य तेजः शरीरं, यस्य सर्वाणि भूतानि
शरीरं, यस्य प्राणः शरीरं, यस्य वाक्शरीरं, यस्य चक्षुः शरीरं, यस्य श्रोत्रं शरीरं, यस्य मनः शरीरं,
यस्य त्वक्छरीरं, यस्य विज्ञानं शरीरं, यस्य रेतः शरीरम् इत्येवमन्तेन काण्वपाठे । माध्यन्दिने तु
पाठे, विज्ञानस्य स्थाने यस्यात्मा शरीरमिति विशेषः । लोकयज्ञवेदानां परमात्मशरीरत्वमधिकम् ।
सुबालोपनिषदि च पृथिव्यादीनां तत्त्वानां परमात्मशरीरत्वमभिधाय वाजसनेयकेऽनुक्तानामपि तत्त्वानां
शरीरत्वं ब्रह्मण आत्मत्वं च श्रूयते । "यस्य बुद्धिः शरीरं, यस्याहङ्कारः शरीरं, यस्य चित्तं शरीरं,

यस्याव्यक्तं शरीरं, यस्याक्षरं शरीरं, "यो मृत्युमन्तरे सञ्चरन्यस्य मृत्युः शरीरं यं मृत्युर्न वेद सः" "सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः" इति। अत्र मृत्युशब्देन परमसूक्ष्ममचिद्वस्तु तमःशब्दवाच्यमभिधीयते। "अव्यक्तमक्षरे लीयतेऽक्षरं तमसि लीयते" इति तस्यामेवोपनिषदि क्रमप्रत्यभिज्ञानात्। सर्वेषामात्मनां ज्ञानावरणानर्थमूलत्वेन तदेव हि तमो मृत्युशब्दव्यपदेश्यम्। सुबालोपनिषद्येवं ब्रह्मशरीरतया तदात्मकानां तत्त्वानां ब्रह्मण्येव प्रलय आम्नायते। "पृथिव्यप्सु प्रलीयते, आपस्तेजसि लीयन्ते, तेजो वायौ लीयते, वायुराकाशे लीयते, आकाशमिन्द्रियेष्विन्द्रियाणि तन्मात्रेषु, तन्मात्राणि भूतादौ लीयन्ते, भूतादिर्महति लीयते, महानव्यक्ते लीयतेऽव्यक्तमक्षरे लीयतेऽक्षरं तमसि लीयते, तमः परे देव एकीभवतीति"। अविभागापत्तिदशायामपि चिदचिद्वस्त्वतिसूक्ष्मं सकर्मसंस्कारं तिष्ठतीत्युत्तरत्र वक्ष्यते "न कर्माविभागादिति चेन्नानादित्वादुपपद्यते चाप्युपलभ्यते च" इति। एवं "स्वस्माद्विभागव्यपदेशानर्हतया परमात्मन्येकीभूतात्यन्तसूक्ष्मचिदचिद्वस्तुशरीरादेकस्मादेवाद्वितीयान्निरतिशयानन्दात्सर्वज्ञात्सर्वशक्तेः सत्यसङ्कल्पाद्ब्रह्मणो नामरूपविभागार्हस्थूलचिदचिद्वस्तुशरीरतया बहुभवनसङ्कल्पपूर्वको जगदाकारेण परिणामः श्रूयते "सत्यं ज्ञानमनन्तं ब्रह्म", "तस्माद्वा एतस्माद्विज्ञानमयात् अन्योऽन्तरः आत्माऽऽनन्दमयः एष ह्येवानन्दयाति सोऽकामयत। बहुस्यां प्रजायेयेति। स तपोऽतप्यत। स तपस्तप्त्वा। इदं सर्वमसृजत। यदिदं किञ्च। तत्सृष्ट्वा। तदेवानुप्राविशत्। तदनुप्रविश्य। सच्च त्यच्चाभवत्। निरुक्तं चानिरुक्तं च। निलयनं चानिलयनं च। विज्ञानं चाविज्ञानं च। सत्यं चानृतं च सत्यमभवत्" इति। अत्र तपःशब्देन प्राचीनजगदाकारपर्यालोचनरूपं ज्ञानमभिधीयते। "यस्य ज्ञानमयं तपः" इत्यादिश्रुतेः। प्राक्सृष्टं जगत्संस्थानमालोच्येदानीमपि तत्संस्थानं जगदसृजदित्यर्थः। तथैव हि ब्रह्म सर्वेषु कल्पेष्वेकरूपमेव जगत्सृजति। "सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्, दिवं च पृथिवीं चान्तरिक्षमथो सुवः", "यथर्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये, दृश्यन्ते तानि तान्येव तथा भावा युगादिषु" इतिश्रुतिस्मृतिभ्यः। तदयमर्थः। स्वयमपरिच्छिन्नज्ञानानन्दैकस्वभावोऽत्यन्तसूक्ष्मतयासत्कल्पः स्वलीलोपकरणचिदचिद्वस्तुशरीरतया तन्मयः परमात्मा विचित्रानन्तक्रीडनकोपादित्सया स्वशरीरभूतप्रकृतिपुरुषसमष्टिपरम्परया महाभूतपर्यन्तमात्मानं तत्तच्छरीरकं परिणमय्य तन्मयः पुनः सत्यच्छब्दवाच्यविचित्रचिदचिन्मिश्रदेवादिस्थावरान्तजगद्रूपोऽभवत्। "तदेवानुप्राविशत्, तदनुप्रविश्य" इति कारणावस्थायामात्मतयाऽवस्थितः परमात्मैव कार्यरूपेण विक्रियमाणद्रव्यस्याप्यात्मतयावस्थाय तत्तदभवदित्युच्यते। एवं परमात्मचिदचित्सङ्घातरूपजगदाकारपरिणामे परमात्मशरीरभूतचिदचिदंशगताः सर्वे एवापुरुषार्थास्तथाभूताचिदंशगताश्च सर्वेविकाराः परमात्मनि कार्यत्वं तदवस्थयोस्तयोर्नियन्तृतयात्मभूतस्तद्गतापुरुषार्थैर्विकारैश्च न स्पृश्यते अपरिच्छिन्नज्ञानानन्दमयः सर्वदैकरूप एव जगत्परिवर्तनलीलयाऽवतिष्ठते। तदेतदाह "सत्यं चानृतं च सत्यमभवत्" इति। विचित्रचिद्रूपेण विक्रियमाणमपि ब्रह्म सत्यमेवाभवन्निरस्तनिखिलदोषगन्धमपरिच्छिन्नज्ञानानन्दमेकरूपमेवाभवदित्यर्थः। सर्वाणि चिदचिद्वस्तूनि सूक्ष्मदशापन्नानि च परस्य ब्रह्मणो लीलोपकरणानि सृष्ट्यादयश्च लीलेति भगवद्द्वैपायनपराशरादिभिरुक्तम्। "अव्यक्तादिविशेषान्तं परिणामर्द्धिसंशयम्। क्रीडा हरेरिदं सर्वं क्षरमित्युपधार्यताम्। क्रीडतो बालकस्येव चेष्टां तस्य निशामय। बालः क्रीडनकैरिव" इत्यादिभिः। "वरयति च लोकवत्तु लीलाकैवल्यम्" इति। "अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया सन्निरुद्धः" इति च ब्रह्मणि जगद्रूपतया विक्रियमाणेऽपि तत्प्रकारभूताचिदंशगताः सर्वे विकारा-

स्तत्प्रकारभूतक्षेत्रज्ञगताश्चापुरुषार्था इति विवेक्तुं प्रकृतिपुरुषयोर्ब्रह्मशरीरभूतयोस्तदानीं तथानि-
र्देशानर्हातिसूक्ष्मदशापत्त्या ब्रह्मणैकीभूतयोरपि भेदेन व्यपदेशः । "तदात्मानं स्वयमकुरुत" इत्येव-
मादिभिरैकार्थ्यात् । तथा च मानवं वचः "सोऽभिध्याय शरीरात्स्वात्सिसृक्षुर्विविधाः प्रजाः । अप
एव ससर्जादौ तासु वीर्यमपासृजत्" इति । अत एव ब्रह्मणो निर्दोषत्वनिर्विकारत्वश्रुतयश्चोपपन्नाः ।
अतो ब्रह्मैव जगतो निमित्तमुपादानं च । इतश्च जगतो निमित्तमुपादानं च ब्रह्म यस्माद्योनित्वेनाभि-
धीयते "कर्तारमीशं पुरुषं ब्रह्मयोनिम्" इति । "यद्भूतयोनिं परिपश्यन्ति धीराः" इति च । योनिशब्दश्चो-
पादानवचन इति । "यथोर्णनाभिः सृजते गृह्णते" च इति वाक्यशेषादवगम्यते । एतेन पादचतुष्टयोक्त-
न्यायकलापेन सर्ववेदान्तेषु जगत्कारणप्रतिपादनपराः सर्वे वाक्यविशेषाश्चेतनाचेतनविलक्षणसर्वज्ञ-
सर्वशक्तिब्रह्मप्रतिपादनपरा व्याख्याताः । व्याख्याता इति पदाभ्यासोऽध्यायपरिसमाप्तिद्योतनार्थः ॥

(३) माध्वे—एतेन सर्वे शून्यादिशब्दा अपि व्याख्याताः । "एष ह्येव शून्य एष ह्येवं तुच्छ एष
ह्येवाभाव एव ह्येषाव्यक्तोऽदृशोऽचिन्त्यो निर्गुणश्चे"ति महोपनिषदि । "शम्बलं कुरुते विष्णुरहृदयः सन्
परः स्वयम् । तस्माच्छून्यमिति प्रोक्तस्तोदनात्तुच्छ उच्यते । नैष भावयितुं योग्यः केनचित् पुरुषो-
त्तमः । अतो भावं यदस्त्येनं नाद्यत्वाच्चाशा इत्यपि । सर्वस्य तदधीनत्वात्तत्तच्छब्दाभिधेयता । अन्येषां
व्यवहारार्थमिष्यते व्यवहर्तृभिरि"ति महाकौर्म्मे एतेन तदधीनत्वादयुक्तयुक्तिसमुदायेन । "अवधारणार्थं
सर्वस्याप्युक्तः स्वाध्यायमूलतः । द्विरुक्तिं कुर्वते प्राज्ञा अध्यायान्ते विनिर्णये" इति वराहसंहितायाम् ।

(४) निम्बार्कः—प्रकृतिरुपादानकारणं चकारान्निमित्तकारणं च परमात्मैव, "उत तमादेशम-
प्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतं भवत्यविज्ञातं विज्ञातं भवति" इति प्रतिज्ञायाः, "यथा सौम्य एकेन
मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यात्" इति दृष्टान्तस्य च सामञ्जस्यात् । "तदैक्षत बहु स्यामि"-
त्यभिध्योपदेशाद्ब्रह्मणः स्रष्टृत्वप्रकृतित्वे वर्त्तेते । "ब्रह्मवनं ब्रह्म स वृक्ष आसीद्यतो द्यावापृथिवी
निष्टतक्षुर्मनीषिणो मनसा पृच्छथते तद्यदध्यतिष्ठद् भुवनानि धारयन्नि"ति निमित्तत्वमुपादानं च ब्रह्मणः
आम्नानाद्ब्रह्मैवोभयरूपम् । "यद् भूतयोनिं परिपश्यन्ति धीराः", "कर्त्तारमीशं पुरुषं ब्रह्मयोनिमि"ति
चेति योनिशब्देन ब्रह्म गीयते, अतो ब्रह्मैवोपादानम् ॥

(५) भैक्षवे—तत्राद्यं पक्षं सिद्धान्तयति । "मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् । अस्या-
वयवभूतैस्तु व्याप्तं सर्वमिदं जगदि"ति प्रतिज्ञाया"स्तन्तुनाभ इव तन्तुभिः प्रधानजैः स्वभावतः देव
एकः समावृणोति स नो दधातु ब्रह्माव्ययमि"ति दृष्टान्तस्य च वाक्यशेषस्थयोरनुपरोधार्थमाञ्जस्ये-
नोपपत्त्यर्थमित्यर्थः । प्रकृतित ईश्वरोपाधेरत्यन्तभेदे तथेश्वरस्य निरुपाधित्वे च हि तयोः पीडा स्यादिति
विष्णुपुराणादौ त्वपरिणामित्वरूपवैधर्म्येणेश्वरोपाधिः प्रधानादतिरिक्त एवोक्तः । अत्र तु समानतन्त्र-
पातञ्जलसिद्धान्तत्वादानन्दादयः प्रधानस्येत्यागामिसूत्राच्च ईश्वरोपाधेः प्रधाने प्रवेश एव सूत्रकारा-
भिप्रेतो जडत्वसाधर्म्येणेत्यवगम्यत इति । यद्यपि, "स्वभावस्तु प्रवर्तते" "कार्यकारणकर्तृत्वे हेतुः प्रकृति-
रुच्यत" इत्यादिप्रयोगात् प्रकृतिशब्दस्य स्वभावकारणोभयवाचित्वं, तथाप्यत्र प्रकृतिः स्वभाव एव
बोध्यः "आनुमानिकमप्येकेषामि"त्यादिना सूत्रेणैव परमात्मशेषतया जगत्कारणत्वस्य प्रधाने सिद्ध-
त्वेन ( पुनस्तत्प्रतिपादनवैयर्थ्यात् ), तथा आकाशस्तल्लिङ्गादित्यादिसूत्रवदिदं सूत्रं न प्रकृत्याख्यशक्ति-
रूपेण ब्रह्ममीमांसकमपि भवति सर्वत्र प्रसिद्धोपदेशादिति सामान्यसूत्रेणैव गतार्थत्वात् (तथा सति
पूर्वपादत्रय एवैतदधिकरणौचित्याच्चेति) । तथा साक्षाद्ब्रह्मणो जगत्प्रकृतित्वमपि नास्य सूत्रस्यार्थः ।

अस्मिन्पादे शक्तेरेव प्रकृतत्वात् "जन्माद्यस्य यतः", "तत्तु समन्वयात्", "तदधीनत्वादर्थवत्", इत्यादिसूत्रैरेवाधिष्ठानकारणत्वस्य ब्रह्मणि लब्धत्वाच्च । स्वतः प्रकृतित्वस्य तु निर्विकारश्रुतिस्मृतिविरुद्धत्वात्। ननु विकाराणां विवर्तत्वे नायं दोषः परिहर्तव्य इति चेन्न (यत आत्मकृतेः परिणामादित्यागामिसूत्रादेवात्रापि दर्शने औपाधिकपरिणाम एव सिद्धान्तः विवर्तप्रतिज्ञायां सूत्राभावाच्च, किं च) विकाराभ्युपगमदशायामेव प्रकृतेरेव विकारित्वं नात्मन इति सकलश्रुतिस्मृतिष्ववगम्यत इति तथा च गीता "न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः । न कर्मफलसंयोगं स्वभावस्तु प्रवर्तते ।" इति स्वीयो भावः पदार्थे उपाधिरित्यर्थः, (उपाध्युपाधिमतोश्चानादिः स्वस्वामिभाव इति । यदि चात्र सूत्रे ब्रह्मणः साक्षात्प्रकृतित्वमेवार्थ इष्यते, तर्ह्यत्र प्रकृतित्वमधिष्ठानकारणत्वं, यदि वा मूलविकारित्वमेवात्र प्रकृतित्वं, तर्हि आकाशादिरूपं तावद्ब्रह्मणः प्रकृतिरूपत्वमेवात्रार्थोऽस्तु, शक्तिशक्तिमदभेदात्, तदुक्तं विष्णुपुराणादिषु "स एव मूलप्रकृतिर्व्यक्तरूपी जगच्च सः" इत्यादिभिरिति दिक्) ईश्वरस्य उपाधिरूपा प्रकृतिरस्तीत्यत्र हेत्वन्तरमाह । अभिध्या सङ्कल्पः, तदुपदेशादपि परमात्मनः स्वभावः सिद्ध्यति, ईश्वरस्य निरुपाधित्वे बहु स्यामित्यादिसङ्कल्पोपदेशानुपपत्तेरित्यर्थः । आह च तन्मात्रमित्यादिसूत्रेषु ब्रह्मणश्चिन्मात्रस्वरूपताया वक्ष्यमाणत्वादिति भावः । ननु यदिदमानुमानिकं प्रधानमीश्वरोपाधिरपीत्युच्यते, किमिदं जीवस्येव विकारभावापन्नं शुद्धसत्त्वाख्यं सदीश्वरस्योपाधिर्भवति, किं वा साक्षादेवेति संशये निर्णयमाह । तदानुमानिकं न केवलं प्रकृतिः, अपि तु साक्षादपि विकारभावानापन्नमेव नित्यशुद्धसत्त्वांशेन ईश्वरस्य प्रकृतिर्भवति, कुत उभयाम्नानात्, उत्तरसूत्रेण वक्ष्यमाणयोरुभयोः कारणकार्य्यभावापन्नयोः कृतिपरिणामयोस्तत्राम्नानादित्यर्थः । उभयाम्नानमेवाह । "तदात्मानं स्वयमकुरुते"ति श्रुत्या स्वकृतित एवेश्वरस्य सर्वपरिणामावगमादित्यर्थः । तथा चेश्वरस्य कार्य्योपाधित्वे तत्कृतितः समस्तपरिणामो नोपपद्येत स्वोपाधेः पूर्वं स्वकृत्यभावेन उपाधिरूपपरिणामस्य स्वकृतिजन्यत्वासम्भवात् । अत ईश्वरोपाधिर्नित्य एवेति तस्यैवानुमानिकस्यापरं विशेषमाह । तदानुमानिकमीश्वरस्य योनिरपि जीवाख्यगर्भाधानस्थानमपि अंशभेदेन भवति हि यस्मात् तथा गीयते "यो योनिं योनिमधितिष्ठत्येक" इत्यादिश्रुतिभिः । "मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम् । सम्भवः सर्वभूतानां ततो भवति भारत" ॥ इत्यादिस्मृतिभिश्चेत्यर्थः । (अजाप्रकरणस्थत्वात् योनियोनिमितिवीप्सा अंशभेदेन बहुत्वमभिप्रेत्येति बोध्यम् महद्ब्रह्मेति महतो ब्रह्मेत्यर्थस्तत्कारणत्वात्) तदयं सिद्धान्तः प्रकृतिर्नित्यशुद्धकेवलसत्त्वांशेन नित्यज्ञानेच्छादिमतीश्वरोपाधिः, सैव च प्रकृतिर्मलिनसत्त्वविशेषरूपैरंशान्तरैरजस्तमःसम्भिन्नैः पुरुषसंयोगेन महत्तत्त्वरूपतः परिणता सती जीवो य उपाधिर्भवति "कार्योपाधिरयं जीवः कारणोपाधिरीश्वर" इतिश्रुतेः ( ततोऽपि निकृष्टैरंशान्तरैःसर्वमन्यद्विकारजालमुत्पादयतीति ) विभाग इति । एतेन प्रधानप्राणादीनां ब्रह्मशक्तित्वप्रतिपादनेनान्येऽप्यानुमानिकाः कालादृष्टादयो ब्रह्मशक्तितया व्याख्याता वेदितव्याः, न तु स्वतन्त्रं किमप्यन्यदस्ति, अतो न तत्कारणताप्रतिपादकश्रुतिभिरपि ब्रह्मकारणतावाक्यानां विरोध इत्यर्थः । तत्र कालादिकारणवर्गेश्वरशक्तिताप्रतिपादकश्रुतिर्यथा श्वेताश्वतरे "कालः स्वभावो नियतिर्यदृच्छा भूतानि योनिः पुरुष" इति चिन्त्यमिति कालादीनि प्रकृत्य "यः कारणानि निखिलानि तानि कालात्मयुक्तान्यधितिष्ठत्येक" इति कालात्मयुक्तानि कालादीन्यात्मान्तानीत्यर्थः । तेषां चाधिष्ठेयत्ववचनाच्छक्तित्वं सिद्धम् । प्रलये च भूतादीनां परमासूक्ष्मावस्था सत्त्वादिशब्दवाच्येति मन्तव्यम् , तथा "तेनेशितं कर्म विवर्तते ह पृथ्व्याप्यतेजोऽनिखिलानि नित्यम् । एतस्यैवाक्षिस्य एतावान् न्यग्रोधस्तिष्ठति रथात् रथयोगात्पयः सृजत" इत्यादि श्रुतयोऽपि

कर्माणुजीवादिकारणतायामुदाहार्य्यशक्तित्वेन समाधेयाः । विवर्त्तते विकरोतीत्यर्थः । अथवेदं सूत्रमेवं व्याख्येयमेतेन पादचतुष्टयकृतब्रह्मवाक्यव्याख्यानेनान्येऽपि सर्वे वेदान्ता व्याख्याता वेदितव्या पभिरेव तर्कैस्तेषामपि निर्णेतुं शक्यत्वादित्यर्थः। व्याख्याता इत्यस्य द्विः पाठोऽध्यायसमाप्तिसूचनार्थः । जगज्ज-न्मादिहेतुत्वे द्वाराणीश्वरशक्तयः । आक्षेपोद्धारमुखतः पादेऽत्र प्रतिपादिताः ॥

(६) भास्करीये—उक्तं प्रधानं जगत्कारणं न भवति, किन्तु ब्रह्मैवेति । तत्रेदमाक्षिप्यते । चेतना-नामीश्वराणां राजवैद्यस्वतप्रभृतीनां निमित्तकारणत्वमेव दृष्टं नोपादानकारणत्वम् । अचेतनानां मृदा-दीनां तु दृष्टं तच्च निरस्तं भवता तदिदानीं बलादेष्टव्यम् । अन्यथा सर्गानुपपत्तेरिति प्राप्तेऽभिधी-यते, प्रकृतिरुपादानकारणं च, कुतः, प्रतिज्ञादृष्टान्तयोरनुपरोधादवाधनात् । यदि ब्रह्मैवोपादानकारणं ततस्तदुक्तमुपपद्यते । "उत तमादेशमप्राक्षो येनाश्रुतं श्रुतं भवत्यमतं मतं भवत्यविज्ञातं विज्ञातं भव-ती"ति।"यथा सौम्येकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं भवती"ति कार्यकारणयोरनन्यत्वात्। कारणा-नुस्यूतमेव हि कार्यमतोऽवगते हेतौ कारणे कार्यं सामान्येनावगतं भवतीति विज्ञानव्याप्तिः कार्य-स्योच्यते श्रुत्या न प्रविलयः तत्र यत्केनचिदुक्तं प्रविलयमानः प्रपञ्चो विज्ञातो भवतीति तत्स्वबुद्ध्यु-त्प्रेक्षितमित्युपेक्षणीयम् । न चानुमानेनास्माभिर्जगत्कारणं वर्ण्यते येन राजादि दृष्टान्तमपेक्षामहे । इतश्चोपादानम् । "तदैक्षत बहु स्यां प्रजायेये"ति बहु भवामीति सङ्कल्पपूर्विकाप्रवृत्तिरभिध्यानम् । इतश्च "सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्ती"त्युत्पत्तिप्रलययोराम्नायतश्च यदुत्पद्यते तत्रैव तत् प्रलीयते यथा पृथिव्यां भूतग्रामः । इतश्च तदात्मानं स्वयमुपकुरुतेत्यात्मनः कृतिः करणं कर्तृत्वेन कार्यत्वेनात्मा निर्दिश्यते । कथं पुनरात्मनः करणं सम्भवतीत्याह । परिणामादिति । परमात्मा स्वयमात्मानं कार्यत्वेन परिणमयामासेत्यर्थः । शक्तिविक्षेपं कृतवान् । अनन्ता हि तस्य शक्तयोऽचिन्त्याश्च । तासां विक्षेपं करोति सृष्टिस्थितिकाले यथा सूर्यो रश्मीनां तद्वदेव संहरति तथा च मन्त्रवर्णः श्वेताश्वतराणाम् "न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते । परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" इति । ननु च "न जायतेऽजो नित्य" इत्यजत्वं श्रूयते । न दोषः । परतो जन्मप्रतिषेधाच्चतुर्मुखादिवत् । तदुक्तम् "न तस्य कश्चिज्जनिता न चाधिप" इति । तस्मात् स्वतन्त्रस्य शक्तिविशेषोपसंहारौ न विरुद्धौ सूत्रकारः श्रुत्यनुकारी परिणाम-पक्षं सूत्रयाम्बभूव । अयमेव छान्दोग्ये वाक्यकारवृत्तिकाराभ्यां सम्प्रदायमतः समाश्रितः । तथा च वाक्यं परिणामस्तु स्यात् दध्यादिवदिति विगीतं विच्छिन्नमूलं माहायानिकबौद्धगाथितं मायावादं व्यावर्णयन्तो लोकान् व्यामोहयन्ति । हीति हेतौ। "कर्तारमीशं पुरुषं ब्रह्म योनिमि"ति। तथा "यद्भू-तयोनिं" योनिरुपादानकारणं पृथिवी योनिरोषधीनामिति दर्शनात् । एतेन प्रधाननिराकरणन्यायेन सर्वे परमाण्वादिकारणवादा हेयतया व्याख्याता वेदितव्याः । द्विरभ्यासोऽध्यायसमाप्तिद्योतनाय ।

(७) श्रीमद्वल्लभाचार्यमतेऽयमभिप्रायः—एवं प्रकृतिकारणवादनिराकरणेन ब्रह्मणः कारणत्वेऽत्र सामानाधिकरण्या अवधारितेऽपि ब्रह्मणो निर्विकारत्वान्निमित्तत्वमभ्युपेयम्, न तु समवायित्वमपि । कार्यस्य त्रिगुणात्मकत्वदर्शनाच्च । अन्यथा प्रत्यक्षविरोधापत्तेः । यदि च "यतो वा इमानी"त्यादिश्रुत्य-नुरोधादुपादानत्वमप्युच्यते, तदापि श्वेताश्वतरेऽजावाक्यस्याजापदस्य छागीशरीराभिधायकत्वाच्छागी-शरीरं यथा तदधिष्ठातृजीवोपाधिविधया नानाविधं प्रजाजनकम्, तथा साङ्ख्योक्तं प्रधानमपि ईश्वरो-पाधिभूतं सन्नानाविधप्रजाजनकमित्येतमर्थं रूपकातिशयोक्त्या बोधयितुं शक्नोति । किञ्च, "यस्तन्तु-नाभ इव तन्तुभिः प्रधानजैः स्वभावतो देव एकः समावृणोति, स नो दधातु ब्रह्माव्यय"मिति तत्रत्य-

वाक्यान्तरे तन्तुनाभशरीरस्य दृष्टान्तितत्वेन तन्तूनां प्रधानजत्वकथनेन चेश्वरशरीरात्मकप्रधानांशैः शरीरैर्जीवानावृणोतीति सिध्यति । अतः पूर्वोक्तन्यायैः सिद्धेऽपि ब्रह्मणः कारणत्वे शरीराख्यशक्तिरूपां तां विना कारणतानिर्वाहाभावादर्धजरतीयतया मायायाः समवायित्वं ब्रह्मणो निमित्तत्वमित्युपेयमिति वादं निराकर्तुमधिकरणान्तरमारभ्यते । तत्र च श्रुत्युक्तत्वाविशेषात् समवायिकारणं प्रकृतिर्निमित्तकारणं ब्रह्म, उत सर्वविधं कारणं ब्रह्मेति संशयः । पूर्वपक्षस्त्वधिकरणप्रयोजनकथन एवोक्त इति ब्रह्म निमित्तकारणमेवेति प्राप्ते, प्रतिवदति, प्रकृतिश्चेत्यादि । प्रकृतिः समवायिकारणं, चकारान्निमित्तकारणम् । "यत्र येन यतो यस्य यस्मै यद् यद्यथा यदा । स्यादिदं भगवान् साक्षात् प्रधानपुरुषेश्वर" इति वाक्योक्तसर्वरूपसमवायिरूपं च ब्रह्मैव । कुतः । प्रतिज्ञादृष्टान्तानुपरोधात् । छान्दोग्ये श्वेतकेतूपाख्याने, "उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातं भवती"ति प्रतिज्ञा, निश्चितार्थो नियमविशेषः । "सम्विदागूः प्रतिज्ञानं नियमाश्रवसंश्रवा" इति कोशात् । दृष्टान्तः श्रोतृबोधसौकर्यहेतुर्वक्तृश्रोतृसम्प्रतिपत्तिविषयोऽर्थः । इह वाच्यवाचकाभेदविवक्षया तयोर्बोधके वाक्ये प्रतिज्ञादृष्टान्तपदाभ्यामुच्यते । तयोरनुपरोधादबाधनात् । यदि हि ब्रह्मणः प्रकृत्यादिरूपत्वं नाङ्गीक्रियते, तदोक्तप्रतिज्ञादृष्टान्तवाक्ये पीड्येतामतस्तदभावादेवमभ्युपेयमिति । अत्रायमर्थः । समवायिकारणज्ञानेन हि सकलकार्यज्ञानम् । अत्र चाश्रुतादिपदैः सर्वकार्यजातं परामृश्यते । तदश्रुतममतमविज्ञातमपि येनैकेन श्रुतेन श्रुतं मतं विज्ञातं भवति तत्कारणं ब्रह्मेवेति । तत्रैकविज्ञानेन सर्वविज्ञानं योगजधर्मेणापि भवति । यथा, "विश्वं पश्यति दूरत" इति, "अनागतमतीतं चे"ति । तथाच न समवायित्वसिद्धिरित्यतो दृष्टान्तस्यापि ग्रहणम् । केवलदृष्टान्तग्रहणे तु सर्वं वाच्यं, ज्ञेयत्वात्, तदेकदेशवत् । घटो वाच्यो, ज्ञेयत्वात् पटवत्, सर्वं सत्, ज्ञेयत्वादित्यनुमानविधया ज्ञेयत्वादिरूपसामान्यधर्मात्मकं ब्रह्म स्यात्, न तु समवायीत्यतो द्वयोर्ग्रहणम् । तथा सत्येकविज्ञानेन सर्वविज्ञानप्रतिज्ञायाः कार्यैकदेशप्रत्यक्षरूपं दृष्टमेव द्वारं समवायित्वगमकम् । यथा ह्येकस्मिन् मृत्पिण्डे मृद्विकारत्वनिश्चयोत्तरं सर्वस्मिंस्तत्सजातीये तथा ज्ञानान्मृत्तिकायां तत्समवायित्वज्ञानं तादृशैकदेशप्रत्यक्षादेव भवति, नानुमानात्, तथा प्रकृतेऽप्येकत्र सन्मयत्वेऽपि निश्चिते सर्वेषु तत्सजातीयेषु सद्विकारत्वज्ञानात्, सति सर्वसमवायित्वज्ञानं तादृशैकदेशप्रत्यक्षादेव भवतीति सति सर्वसमवायित्वसिद्धिरिति न स्मृतिसिद्धायाः प्रकृतेः समवायित्वमिति बोध्यः । ननु भवत्वेयमेकविज्ञानात्सर्वविज्ञानम्, तथापि पूर्वोक्तश्रुतिभिः सा ब्रह्मोपाधिभूतत्वाद् ब्रह्माविनाभूता वा, ब्रह्माविभक्ता वास्तीति शरीरद्वारकं ब्रह्मण एव समवायित्वम्, स्वतश्च नियामकत्वात् कर्तृत्वमित्येव युक्तम् । न तु केवलस्य प्रकृतित्वम् । उक्तव्याकोपात् । नच "सदेव सौम्येदमग्र आसीदेकमेवाद्वितीय"मित्यादिश्रुतिव्याकोपः । तत्र सदेवेत्येवकारेणान्ययोगं व्यवच्छिद्याग्रे एकमेवेति विवरणेन मुख्यस्यैवान्यस्य व्यवच्छेदादमुख्यस्याविनाभूतस्याविभक्तस्य शरीरस्य सत्त्वेप्यविरोधात् । नच "एके मुख्यान्यकेवला" इति कोशात्प्रधानार्थस्यैकपदस्य मुख्यस्वरूपस्यैवार्थस्य ग्रहणे किं नियामकमिति शङ्क्यम्, सुबालोपनिषदि प्रलयप्रकरणे पृथिवीलयमारभ्य "अक्षरं तमसि लीयत" इत्यन्तेन सर्वस्य तमसि लयमुक्त्वा, अग्रे "तमः परे देवे एकीभवति, दिव्यो देव एको नारायण" इति तमसो नामरूपविभागानर्हतया ब्रह्माविनाभावेनाविभक्ततया वावस्थितिबोधनस्यैव गमकत्वात् । नच लिङ्श्लेषण इति धात्वर्थादरयन्तानां तमसा अविभागस्तमसस्तु ब्रह्मणा स्वरूपैक्यमिति शब्दान्तरादवगम्यते, न त्वविनाभावोऽविभागो वेति वाच्यम् । अन्तर्यामिब्राह्मणे "यस्य तेजः शरीरं, यस्य तमः शरीर"मिति शरीरत्वेन भावनात् । सुबालोपनिषद्यपि "यो मृत्युमन्तरे सञ्चरन् यस्य मृत्युः शरीर"मिति मृत्युपदेन सर्वानर्थ-

मूलतया तस्यैवोल्लेखाच्च तमसः शरीरतयैव सिद्धत्वेन स्वरूपैक्यस्य ग्रहीतुमशक्यत्वात् । तस्माच्छरीरस्यैव प्रकृतित्वं सच्छब्दवाच्यत्वं च, न केवलस्येति चेत्, मैवम्; अद्वितीयपदविरोधापत्तेः । एकमेवेति कथनोत्तरं मुख्यान्यार्थवारणार्थमेव तत्प्रयोगात् । अन्यथा तद्वैयर्थ्यात् । नचाद्वितीयपदेन मुख्यस्यैव विविच्यत इति वाच्यम् । एकपदेनैव समभ्यधिकराहित्ये सिद्धे व्याख्यानापेक्षाया एवाभावात् । तेनासिद्धावनेन सुतरां तदसिद्धेश्च । एतेनैव "नान्यत्किञ्चनमिष"दिति मिषदन्तरनिषेधपरत्वमपि इत्युत्तरम् । "साक्षी चेता केवलो निर्गुणश्च ।" "यदा तमस्तन्न दिवा न रात्रिर्न सन्न चासच्छिव एव केवल" इति सर्वभूतवति काले तद्रहिते तमोऽवशेषाद्वित्ते च काले ब्रह्मण एव केवलत्वश्रावणेन, यदा तमस्तत्त्वेनैकीभूतं तदा केवलो न शरीरीत्यर्थव्यकोद्वित्वसङ्ख्यापूरक एव निषेधपर्यवसानसिद्धेश्च । नच कालोक्तिविरोधः । तस्याः सृष्ट्युत्तरव्यवहारे सर्वाधारतया प्रतीयमानकालोपरञ्जनेन पूर्ववृत्तान्तबोधनमात्रार्थत्वात् । अन्यथा शिष्यस्य सृष्टिकालस्थत्वेन कालसत्तामवधारयतः पूर्ववृत्तान्तबोधाभावात् । नच तस्याः कालसत्तावोधकत्वे किं बाधकमिति शङ्क्यम् । एतस्याः सर्वतः पूर्ववृत्तान्तबोधकत्वेन, तत्र च सतोऽन्यस्य व्यवच्छेदे कालावेदकप्रमाणस्यापि व्यवच्छिन्नत्वादत्र कालानुवादस्य वक्तृमशक्यत्वेन स्वतन्त्रतया कालसत्ताबोधने वाक्यभेदप्रसक्तेरेव बाधकत्वात् । नचात्र कालविशिष्टसत्तावोधकत्वमिति शङ्क्यम्, गौरवप्रसङ्गात् । समानजातीये बृहदारण्यकवाक्ये "सोऽनुवीक्ष्य नान्यदात्मनोऽपश्य"दित्यनुवीक्षाश्रवणस्य बाधापत्तेश्च । तस्माच्छरीरविशिष्टस्योपादानत्वाङ्गीकारे केवलाद्वितीयश्रुत्योर्विरोधो दुर्वार एव । एवञ्च,"तमः परे देवे एकीभवती"त्यादौ य एकीभावः, स परस्वरूपाभेद एव, न तु नामरूपविभागानर्हत्वमात्रमित्येव मन्तव्यम् । लयस्य श्लेषरूपत्वेन विभागाभावात्मकत्वे एकीभावस्य भेदाभावात्मकत्व एव पर्यवसानात् । नच शरीरत्वबोधकश्रुतिविरोधः । तस्याः सृष्टिकालीनवृत्तान्तपरत्वात् । अन्तर्यामिब्राह्मणेऽधिदैवादिश्रावणेन तथात्वस्य स्फुटत्वात् । सुबालोपनिषदपि, "अन्तःशरीरे निहितो गुहायामज एको नित्य" इत्युपक्रम्य पृथिव्यादिमृत्य्वन्तानां शरीरत्वकथनेन तत्रापि सृष्टिपूर्वकालस्यालाभात् । प्रलयप्रकरणस्य प्रागेव समाप्तत्वाच्च । तस्मान्नोक्तशरीरविशिष्टस्य प्रकृतित्वं, नापि प्रधानादेर्गर्तपतितसृतसर्पादिवत् स्थितिरिति निश्चयः । एवञ्च, 'प्रकृतिं पुरुषं चैव विद्ध्यनादी'ति यानि वाक्यानि तानि चतुर्मुखाजन्यायेन जगत्साधारणोत्पत्तिनाशनिषेधपराण्येव । "तन्मायाफलरूपेण केवलं निर्विकल्पतम् । वाङ्मनोगोचरातीतं द्विधा समभवद् बृहत् । तयोरेकतरो ह्यर्थः प्रकृतिः सोभयात्मिका । ज्ञानं त्वन्यतमो भावः पुरुषः सोऽभिधीयते" इत्यादिश्रीभागवतीयभगवद्वाक्येभ्यः । तेन 'यस्तन्तुनाभ' इति वाक्यमपि प्रधानोत्पत्त्यनन्तरकालवृत्तान्तबोधकमेवेत्येव निश्चयः । एषैव परमाण्वादिकारणवादानामपि गतिर्बोध्या । "कालस्वभावो नियतिर्यदृच्छे"ति श्रुत्यैव तेषामनादरयोगजधर्मादिमहिम्ना, किन्तूक्तेन दृष्टेनैव द्वारेणेति सिद्धम् ।

प्रकृतमनुसरामः । नन्वस्तु ब्रह्मणः समवायित्वं तथापि कार्यकारणयोरभेदो ? भेदो वा ? नाद्यः, त्रैलोक्यव्यवहारसङ्करापत्तेः । नेतरः, एकविज्ञानेन सर्वविज्ञानप्रतिज्ञायाः बाधप्रसङ्गात् । अतो भेदाभेद एवैव । तस्मात्, केवलस्यैव ब्रह्मणः समवायित्वमित्येकविज्ञानेन सर्वविज्ञानं नाविनाभावाविभागबोधनात् ।

एव कार्यकारणयोरास्थेय इति मतं निराकर्तुं लोहमणिनखनिकृन्तनदृष्टान्तौ । तत्र हि कार्यस्य कारणावस्थाविशेषरूपत्वं स्फुटम् । यत्र क्वचित् कारणज्ञाने सर्वत्र कारणाभेदज्ञानस्य सौकर्यात् । तत्रापि क्वचिल्लोहमणौ लाक्षासम्बन्धसत्त्वान्न सम्यग्ज्ञानं स्यादतो नखनिकृन्तनग्रहणम् । एवं सति यत्र क्वचिद् भगवान् ज्ञातः सर्वत्र ज्ञातो भवेत्, सर्वं च भगवदभिन्नत्वेन ज्ञातं भवेदिति सौकर्यम् । अत्र च सामान्यलक्षणप्रत्यासत्तिर्न विवक्षितेति ज्ञापनाय "वाचारम्भणं विकारो नामधेय"मिति । तत्रायमर्थः । यो विकारः पृथुबुध्नोदरादिः स वाचारम्भणं वाचिकक्रियात्मको, न तु कारणाद् व्यक्तिभेदापादकः । यथा सुप्त उत्थित उपविष्टे च पुरुषेऽवयवविन्यासभेदोऽतो नामधेयं, नैमित्तिकक्रियायाः पदार्थस्वरूपभेदानापादकत्वान्न व्यक्तिभेद इत्यतो न सामान्यलक्षणेत्यर्थः । एतदेवैकादशस्कन्धे भगवताप्युक्तम् । "यथा सुवर्णं सुकृतं पुरस्तात्पश्चाच्च सर्वस्य हिरण्मयस्य । तदेव व्यवहार्यमाणं नानापदेशैरहमस्य तद्वत् । न यत् पुरस्तादुत यन्न पश्चान्मध्येऽपि तन्न व्यपदेशमात्रम् । भूतं प्रसिद्धं च परेण यद्यत्तदेव तत् स्यादिति मे मनीषे"ति । यत्परेण भूतं यच्च परेण प्रसिद्धं तत्तदेव स्यादित्यर्थः । अंशो कार्यत्वाभावात् प्रसिद्धमिति पृथग्व्यपदेशः । अष्टमस्कन्धे अमृतमन्थने ब्रह्मस्तुतौ च । "त्वय्यग्र आसीत्त्वयि मध्य आसीत्त्वय्यन्त आसीदिदमात्मतन्त्रे । त्वमादिरन्तो जगतोऽस्य मध्यं घटस्य मृत्स्नेव परः परस्मा"-दिति । नचैवं कुत्सितादिभानस्य का गतिरिति शङ्क्यम्, ब्रह्मविद्यायां क्वचिदपि कुत्सितत्वभानाभावात् । दोषदुष्टदृशामेव तद्भानाच्च प्रसिद्धं चैतद् ऋषभदेवादिषु । किञ्च, लौकिकेऽपि गोमूत्रगोमयादिषु न कुत्सितत्वभानम् । तस्माद् भगवतः समवायित्वमप्रत्यूहम् ।

ननु यदि विकारस्य वाङ्मात्रत्वं तदैतेन वाक्येन विवर्तोपादानत्वं ब्रह्मणोऽङ्गीकृत्य प्रपञ्चस्यालीकत्वमेवाङ्गीकार्यमित्येतन्निराकरणायाह मृत्तिकेत्येव सत्यमिति । प्रपञ्चस्य ब्रह्मरूपेणैव सत्यत्वं, न जगद्रूपेणाविकाररूपेणान्येन वा केनचिद् भिन्नेन रूपेण । तेषां रूपाणामागन्तुकत्वेन व्यवहारनिर्वाहमात्रार्थत्वात् । तथाच जगतो ब्रह्मत्वेन सत्यत्वान्नालीकत्वमित्यर्थः । ननु यद्यलीकत्वं श्रुत्यनभिप्रेतम्, तदा "अपागादग्नेरग्नित्व"मिति न वदेदिति चेत्, न, यदग्न्यादे रोहितादिगुणकं रूपत्रयं तदनागन्तुकरूपविचारे अग्निवृत्त्युत्तानां तेजोऽबन्नानामेव, न तु त्रिवृत्कृतस्याग्न्यादेः कार्यस्य । त्रिवृत्करणात् प्रागपि तस्य सत्त्वात् । अतोऽग्न्यादेरनागन्तुकरूपविचारे त्रिवृत्करणोत्तरं जातमग्नित्वादिकमनागन्तुकानारोपितरूपेणापागात्, अग्न्यादेः सकाशादपगतम् । यतोऽग्नित्वादिकं वाचारम्भणम् । अवस्थारूपत्वाच्चाग्न्यादीनां तेभ्यो भेदकम्, अतस्त्रीणि रूपाणीत्येव सत्यम्, अग्नित्वाद्यपेक्षया अनागन्तुकानारोपितरूपमिति तदर्थेनालीकत्वानापादकत्वात् । एतेनापि सामान्यलक्षणा निवारिता । अग्न्यादिविद्युदन्तेषु तेजस्त्वस्य सामान्यधर्मस्य विद्यमानत्वेऽपि तदनादरणात् त्रिवृत्करणस्य च बोधनात्, "त्रीणि रूपाणी"त्येव सत्यमिति सावधारणकथनाच्चेति । इदं च मूलकारणस्यात्यन्तं परोक्षत्वादन्यकार्यापेक्षया शिष्यविश्वासायोक्तम् । तच्च मूलकारणे ब्रह्मण्येव पर्यवस्यतीत्यभिप्रायेण । एतदग्रे च यदुपदिष्टं तत् सर्वं मूलकारणस्य कार्यद्वारा परिचायनार्थम् । अतः सर्वं सुस्थम् । नच जगतो ब्रह्मरूपेण सत्यत्वे जगति ब्रह्मधर्मविरुद्धधर्माध्यासो न स्यात्, देहादेरप्यात्मत्वेन सत्यता स्यात्, तथा सति देहात्मबुद्धेर्दोषत्वा-

इति वाच्यम् । जगन्मिथ्यात्वमेव साधीय
भावेन तज्जनकाविद्यानिवर्तकशास्त्रवैयर्थ्यमप्यापद्येतेत्यतो जगन्मिथ्यात्वमेव साधीय इति वाच्यम् ।
वस्तुविचारेण जगतो ब्रह्मत्वेऽपि इदानीं बहुजन्माभ्यस्तविकारबुद्धेरनिवृत्तत्वात्तस्यां सत्यां या देहात्म-
बुद्धिः सा देहाभिन्नत्वेनात्मावगाहिनी, न त्वात्माभिन्नत्वेन देहावगाहिनी, आत्मस्वरूपसाक्षात्त्वाद्तो
दोषरूपैवेति तदपनोदार्थत्वेन शास्त्रसार्थक्याच्च जगन्मिथ्यात्वं युक्तम् । श्रौतदृष्टान्तबलेन तथा निश्च-
पात् । अतो ब्रह्मणः समवायित्वे दोषगन्धस्याप्यभावाद् ब्रह्मैव समवायिकारणम्, न प्रकृतिरित्यर्थः ॥

ननु दृष्टान्ते मृत्तिकेत्येव सत्यमिति कारणे सत्यत्वमुक्तम् । अतस्तत्सामर्थ्येन कार्ये मिथ्यात्वमपि
प्रमातुं शक्यत इति शङ्कायां प्रपञ्चे विवर्तत्वस्य ब्रह्मणि विवर्तोपादानत्वस्य च निरासाय लिङ्गान्तर-
माह । अभिध्येत्यादि । अभिध्यानं अभिध्या । इदमेवं करिष्यामीत्यालोचनं, तस्या उपदेशात् कथनात् ।
"सोऽकामयत बहु स्यां प्रजायेयेती"ति स्वस्य बहुरूपाभिध्यानं सृष्ट्यादावुपदिश्यते । तथाच स्वस्य बहु-
रूपाभिध्यानेन सृष्टं स्वयमेव भवति, न तु स्वविवर्त इत्यर्थः । न चात्र कामनमुच्यते, नाभिध्यानमिति
शङ्क्यम् । आप्तकामत्वश्रुतेः कामनाभावेन तस्यात्र वक्तुमशक्यत्वात् । नच योगिकायव्यूहवदपि भव-
नादभिध्योपपत्तेर्नेयं अभिध्या समवायित्वसाधिकेति वाच्यम् । ब्रह्मणोऽभ्यासाभावात् । आत्मनो
बहुत्वाभावेन श्रुतौ गौण्यापत्तेश्च । चकारा"दिदं सर्वं यदयमात्मे"ति कार्यस्य ब्रह्मत्वश्रुतिः सङ्गृह्यते ।
तथाचैताभ्यां जगतो ब्रह्मैव समवायीत्यर्थः ॥

ननु "मयाध्यक्षेण प्रकृतिः सूयते सचराचर"मिति गीतास्मृतेः प्रकृतिमादृतया किञ्चिदंशं
उपादानत्वमस्त्विति शङ्कायां साक्षाच्छ्रुतिमेव समवायित्वे प्रमाणमाह । साक्षादित्यादि । साक्षा-
च्छ्रुत्यैव ब्रह्मणः समवायित्वमुच्यते । चकारात् स्मृत्यापि । कथमुच्यत इत्यपेक्षायामाह । उभयाम्ना-
नात् । ब्रह्मणः सकाशाद् ब्रह्मण्येव च सृष्टिप्रलययोराम्नानात् । "सर्वाणि ह वा इमानि भूतान्याक
शादेव समुत्पद्यन्ते, आकाशं प्रत्यस्तं यन्ति", "अहं सर्वस्य जगतः प्रभवः प्रलयस्तथे"ति । प्रकर्षेणैकी-
भावेन लयो यस्मिन्नित्यर्थः । न ह्येतस्मिन् प्रलयबोधके आकाशवाक्ये तस्यानिमित्तत्वं सम्भवति ।
सुवर्णादिषु तथैव दर्शनात् । अतो लौकिकेन वैदिकेन च न्यायेन साक्षाद् भगवानेव समवायी । अतो
मयाध्यक्षेणेत्यादीनां परम्परासृष्टिविषयत्वेन पाश्चात्यवृत्तान्तबोधकत्वम् । "हेतुनानेन कौन्तेय जगद्विपरि-
वर्तते" इत्युत्तरार्धे विपरिवर्तनार्थत्वकथनात् । विपरिवर्तश्चात्र भ्रम एव । "अवजानन्ति मां मूढा"
इत्युत्तरवाक्यस्वारस्यादिति ॥

ननु, "स एव सर्वं सृजति स एवावति हन्ति चे"ति कर्तृत्वं प्रतीयते । अत आकाशवाक्यमप्यौ-
पचारिकं भविष्यतीत्याशङ्कायामाह । आत्मकृतेरित्यादि । आम्नानादित्यनुवर्तते । "स आत्मानꣳ स्वय-
मकुरुत, तस्मात् तत्सुकृतमुच्यते' इति स्वस्यैव कर्मकर्तृभावस्याम्नानात्, सुकृतत्ववचनेनालौकिकत्व-
बोधनाच्च सिद्धे समवायित्वे वाक्यांशमादायौपचारिकत्वकथनं न युक्तमित्यर्थः । ननु स्वस्य कर्तृत्वेन
सिद्धत्वात् कर्मत्वं कथं युद्धाद्यायोहेदित्याकाङ्क्षायां युक्तिमाह । परिणामादिति । कार्यकारणभावात् ।
तथाच सुवर्णादितैजसद्रव्यवदविकृतस्यैव तथात्वाद् बुद्धेश्चालौकिकत्वात् सुवच एवैकस्य कर्मकर्तृभाव
इत्यर्थः । अत एव वेदस्तुतौ "न हि विकृतिं त्यजन्ति कनकस्य तदात्मतया स्वकृतमनुप्रविष्टमिदमात्म-

तयाऽवसितम्” इत्युक्तम् । नच पूर्वावस्थान्यथाभावरूपस्य बहुभवनात्मकस्य श्रुत्यैव कथनात् कथं ब्रह्मणोऽप्यविकारित्वमिति शङ्क्यम् । दधिदुग्धन्यायेन स्वरूपस्य स्वरूपगुणानां च योऽन्यथाभावस्तस्यैवात्र दोषत्वेन विवक्षितत्वात्तदभावे सुखेनाविकारित्वसिद्धेः । नचात्र मानाभावः । श्रुत्यैव तथोक्तत्वात् । व्यासचरणैरपि “श्रुतेस्तु शब्दमूलत्वा”दिति वक्ष्यमाणत्वात् । तस्माद् ब्रह्मपरिणामलक्षणं कार्यमिति ब्रह्मैव जगतः समवायिकारणमिति सिद्धम् ॥

नन्वस्तु जडानां ब्रह्मण एव कारणत्वं, चेतनेषु तु योनिबीजयोः समवायित्वदर्शनाद् भगवतः पुरुषत्वेन योनिरूपा प्रकृतिरपि समवायिकारणमस्तु, शुक्रशोणितसमवेतत्वाच्छरीरस्येत्याशङ्क्य परिहरति । योनिरित्यादि । योनिरपि ब्रह्मैव । चकारेण शाक्तवादो निराक्रियते । योनिरपि, न तु योनिरेवेत्यर्थात् । कुत इतिचेत्, तत्राह । हि गीयत इति । यतो हेतोर्गीयते, श्रुत्यैव । “सदेव सोम्येदमग्र आसीदेकमेवाद्वितीय”मिति श्रुतेः पूर्वमेकमेव कारणं प्रतिज्ञातम् । आकाशादेव आनन्दाद्ध्येवेत्यादिभिरवधारणैश्च निर्णीतः । अतोऽनन्यकारणत्वे सिद्धे कथं तत्र स्मृत्युक्ता प्रकृतिः प्रविशेत् । द्वैतापत्तेः । किञ्च । “कर्तारमीशं पुरुषं ब्रह्मयोनिम् । तं भूतयोनिं परिपश्यन्ति धीरा” इति प्रत्यक्षश्रुत्यैव गीयते । गीतासु च “मम योनिर्महद् ब्रह्म तस्मिन् गर्भं दधाम्यह”मिति “तासां ब्रह्म महद्योनिरहं बीजप्रदः पिते”ति च । अतोऽक्षरपुरुषोत्तमभावेनैकस्यैवोभयरूपत्वोपपत्तेर्योनिः पुरुषो वीर्यं जीवश्च भगवानिति । इदं सर्वं यदयमात्मेति सिद्धम् । तस्मात् केनाप्यंशेन प्रकृतिप्रवेशो नास्तीत्यशब्दत्वं साङ्ख्यमतस्य सिद्धम् ॥

( माध्वास्तु प्रकृतिश्चेति सूत्रे “हन्त तमेव पुरुषं सर्वाणि नामान्यभिवदन्ति,” “यथा नद्यः स्यन्दमानाः समुद्रायणाः समुद्रमभिसम्विशन्त्येवमेवैतानि नामानि पुरुषमभिसम्विशन्ती”ति श्रुतिम्, अभिध्यासूत्रे च “मायां तु प्रकृतिं विद्या”दिति, “महामायेत्यविद्येति नियतिर्मोहिनीति च । प्रकृतिर्वासनेत्येवं तवेच्छाऽनन्त कथ्यत” इति वचनम्, “सोऽभिध्या स जुतिः स प्रज्ञा स आनन्द” इति श्रुतिम्, “ध्यायति ध्यानरूपोऽसौ सुखी सुखमतीव च, परस्यैश्वर्ययोगेन विरुद्धार्थतयेष्यत” इति ब्रह्माण्डवाक्यम्, साक्षात्सूत्रे चैष ह्येष पुरुष एव प्रकृतिरेष आत्मैव ब्रह्मैव लोक एव आलोको योऽसौ हरिरादिरनादिरनन्तोऽन्तः परमः पराद्धिस्वरूप” इति पैङ्गश्रुतिं चोपन्यस्य भगवतः सर्वविधशब्दवाच्यत्वं च स्थापयित्वा, आत्मकृतिसूत्रे प्रकर्षेण करोतीति प्रकृतिरिति योगात् प्रकृतावनुप्रविश्य तां परिणाम्य तत्परिणामनियामकत्वेन तत्र स्थित्वाऽऽत्मनो बहुधाकरणात् प्रकृतिशब्दवाच्यतां स्थापयित्वा, “अथ हैष आत्मा प्रकृतिमनुप्रविश्यात्मानं बहुधा चकार, तस्मात् प्रकृतिरित्याचक्षत” इति भाल्लवेयश्रुतिम्, “अविकारोऽपि परमः प्रकृतिं तु विकारिणीम्, अनुप्रविश्य गोविन्दः प्रकृतिश्चाभिधीयते” इति नारदीयवाक्यं च तदुपष्टम्भायोदाहरन्ति । तच्चिन्त्यम् । श्रुतेरप्रसिद्धत्वात् । तादृश्या अपि कथञ्चित् प्रामाण्योपगमेऽप्यस्या आत्मनो बहुधाकरणबोधकतयाऽऽत्मकृतिबोधकत्वाभावेन विषयतयोपन्यासायोगाच्च । हन्त तमित्यारभ्य, विश्वरूप इत्यन्तासु स्वोपन्यस्तासु श्रुतिषु सर्वशब्दवाच्यत्वस्य च स्फुटत एव बोधनेन तासां पूर्वकालीनव्यवस्थाबोधकतायाः, भाल्लवेयश्रुतौ चाथशब्देन पाश्चात्यबोधकतायाः स्फुटं भानेन कालभेदरूपविषयभेदस्य स्फुटतयैतदनुरोधेन तदर्थनिर्णयस्याप्ययुक्तत्वाच्च ।

ध्यायतीति ब्रह्माण्डवाक्ये ऐश्वर्ययोगेन विरुद्धार्थतया सर्वरूपत्वादेरिष्टताया उक्ततया सर्वानुपपत्तिप-
रिहारसम्भवे प्रकृतिशब्दयोगादरणेन रूढ्युपष्टम्भस्य व्यर्थत्वाच्च ।

यत्तु जयतीर्थः ब्रह्मणो जगदुपादानत्वे एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाया मृत्पिण्डादिदृष्टान्तोक्तेश्च
न प्रमाणत्वम्, तस्या अन्यार्थत्वस्य सूत्रव्याख्याने सम्यग्व्याख्याततत्वादित्याह, तदपि श्रद्धाजाड्य-
मात्रम् । सूत्रव्याख्यानस्यैवासङ्गततायाः प्रदर्शितत्वादिति । यदपि—ब्रह्मणः परिणामोक्तिरसङ्गतैव ।
एतदध्यायस्याशेषशास्त्रस्य ब्रह्मणि समन्वयप्रतिपादनाय प्रवृत्तत्वादित्याह, तदप्यसङ्गतम्, अशेषशा-
खमध्ये "स आत्मान१ँ स्वयमकुरुत", "सर्वं खल्विदं ब्रह्म तज्जलानिति", "स आत्मानमेव द्वेधापात-
यत्, ततः पतिश्च पत्नी चाभवताम्," "हन्ताऽहं मदेव मन्मात्रं सर्वं यस्मिन्नाकाश ओतश्च प्रोतश्चे"-
त्यादिश्रुतीनां, "विश्वं वै ब्रह्म तन्मात्रं," "नैतच्चित्रं भगवति ह्यनन्ते जगदीश्वरे, ओतप्रोतमिदं यस्मिंस्त-
न्तुष्वङ्ग यथा पटः", "त्वय्यग्र आसीदि"त्यादिस्मृतीनां च प्रविष्टत्वात् तासां समन्वयस्यावश्यं प्रतिपाद्य-
त्वात् परिणामं विना च तदसम्भवादिति । यदप्यानुमानिकपादे, प्रकृतेः शब्दप्रतिपाद्यत्वनिराकरणं
चेत्, प्रकृतिस्वरूपस्यानिराकृतत्वात् तस्या उपादानतया वर्तमानत्वात् प्रकृतित्वेन ब्रह्मण उपादानत्व-
स्थापनमसङ्गतमेव । प्रकृतिस्वरूपनिराकरणं चेत्, सूत्रेषु तददर्शनात् तदप्यसङ्गतमिति न ब्रह्मण
उपादानत्वे कापि सङ्गतिरित्युक्तम् । तदप्यबुद्धैव । प्रकृतेर्मूलकारणतायाः शब्दप्रतिपाद्यत्वस्य निरा-
करणं सूत्रेषु सिद्धमिति तस्या अवान्तरोपादानतया विद्यमानत्वेऽपि ब्रह्मणि मूलोपादानत्वाबाधात् ।
एकादशस्कन्धे "आसीज्ज्ञानमयो ह्यर्थ एकमेवाविकल्पितम् । यदा विवेकनिपुणा आदौ कृतयुगे युगे ।
तन्मायाफलरूपेण केवलं निर्विकल्पितम् । वाङ्मनोगोचरातीतं द्विधा समभवद् बृहत् । तयोरेकतरो
ह्यर्थः प्रकृतिः सोभयात्मिका" इत्यादिना भगवतैव तथा निर्णीतत्वात् । अतो ब्रह्मण उपादानत्वान-
ङ्गीकरणमबोधाग्रहयोरन्यतरमूलकमेवेति दिक् ) ॥

एतेन ब्रह्मवादस्थापनपूर्वकं साङ्ख्यमतनिराकरणेन सर्वे अवैदिका विरुद्धाश्च वादा व्याख्याताः ।
अनुपयुक्तत्वेन बोधिता इत्यर्थः । द्विरुक्तिरध्यायसमाप्तिबोधनाय ॥

॥ इति प्रथमाध्यायः समाप्तः ॥

## मतान्तरपाठसमेतः सूत्रपाठः ।

### प्रथमाध्याये चतुर्थप्रकरणः ।

॥ प्रथमं सप्तसूत्रमानुमानिकाधिकरणम् ॥ १ ॥

१. आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ॥ १ ॥

२. सूक्ष्मं तु तदर्हत्वात् ॥ २ ॥

३. तदधीनत्वादर्थवत् ॥ ३ ॥

४. ज्ञेयत्वावचनाच्च ॥ ४ ॥

५. वदतीति चेन्न प्राज्ञो हि प्रकरणात् ॥ ५ ॥

६. त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ॥ ६ ॥

७. महद्वच्च ॥ ७ ॥

॥ द्वितीयं त्रिसूत्रं चमसवदित्यधिकरणम् ॥ २ ॥

८. चमसवदविशेषात् ॥ १ ॥

९. ज्योतिरुपक्रमात्तु तथा ह्यधीयत एके ॥ २ ॥

१०. कल्पनोपदेशाच्च मध्वादिवदविरोधः ॥ ३ ॥

॥ तृतीयं त्रिसूत्रं न सङ्ख्योपसङ्ग्रहाधिकरणम् ॥ ३ ॥

११. न सङ्ख्योपसङ्ग्रहादपि नानाभावादतिरेकाच्च ॥ १ ॥

१२. प्राणादयो वाक्यशेषात् ॥ २ ॥

१३. ज्योतिषैकेषामसत्यन्ने ॥ ३ ॥

॥ चतुर्थमेकसूत्रं यथाव्यपदिष्टाधिकरणम् ॥ ४ ॥

१४. कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः ॥ १ ॥

॥ पञ्चममेकसूत्रं समाकर्षाधिकरणम् ॥ ५ ॥

१५. समाकर्षात् ॥ १ ॥

॥ षष्ठं त्रिसूत्रं जगद्वाचित्वाधिकरणम् ॥ ६ ॥

१६. जगद्वाचित्वात् ॥ १ ॥

१७. जीवमुख्यप्राणलिङ्गादिति चेत् तद्व्याख्यातम् ॥ २ ॥

१८. अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ॥ ३ ॥

---

१. "प्रकरणात्" इति योगविभागेन पृथग्भाष्यपाठ । २. "त्रयाणामपि चैवम्" इति भैक्षव पाठ । ३. "महद्वाच" इति कश्चिद्भास्करादर्शपाठ । ४. "अविशेषाच" इति कश्चिद्भास्करादर्शपाठ । ५. "ज्योतिरुपक्रमा तु" इति पाठो गोविन्दकृत्कुम्भके प्रदीपे भास्करभास्करनिम्बार्करामानुजशैवश्च । ६. "कारणत्वेन च" इति भास्करपाठ । ७ अत्र [illegible] जगत्स चतुर्थ [illegible] विषयवाक्यत्वेन गृहीत । ८. "जीवमुख्यप्राणलिङ्गान्नेति चेत्" इति [illegible] ह- निम्बार्करामानुजशैवभैक्षवपाठ । ९. सप्तदशसूत्र एवान्तर्भावयन्नेतत्सूत्रं भास्करः ।

॥ सप्तमं चतुःसूत्रं वाक्यान्वयाधिकरणम् ॥ ७ ॥

१९. वाक्यान्वयात् ॥ १ ॥

२०. प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ॥ २ ॥

२१. उत्क्रमिष्यत एवम्भावादित्यौडुलोमिः ॥ ३ ॥

२२. अवस्थितेरिति काशकृत्स्नः ॥ ४ ॥

॥ अष्टमम्पञ्चसूत्रम्प्रकृतिश्चेत्याधिकरणम् ॥ ८ ॥

२३. प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॥ १ ॥

२४. अभिध्योपदेशाच्च ॥ २ ॥

२५. साक्षाच्चोभयाम्नानात् ॥ ३ ॥

२६. आत्मकृतेः परिणामात् ॥ ४ ॥

२७. योनिश्च हि गीयते ॥ ५ ॥

२८. एतेन सर्वे व्याख्याता व्याख्याताः ॥ ६ ॥

इति श्रीमत्कृष्णद्वैपायनविरचिततत्त्वसूत्रेषु समन्वयाख्ये प्रथमाध्याये मतान्तर-श्रौतताश्रमजनकप्रकीर्णवाक्यार्थविचारो नाम चतुर्थश्चरणः ॥ ४ ॥

---

बृहदारण्यकस्य चतुर्थाध्यायस्य पञ्चमं ब्राह्मणम्। २. "परिणामात्" इति योगविभागेन पृथक् पठतो रामानुजशैवौ। ३. "योनिश्च गीयते" इतिपाठः प्रदीपे प्रतिभाति। ४. इदं सर्वव्याख्यानाधिकरणं श्रीमत्प्रकाशकारमतेन नवमं विवरणे-त्यष्टाधिकरणसङ्ख्यायाञ्चोपमासते श्रीभावप्रकाशिकाकाराणां प्रदीपकाराणां निर्भयरामभट्टानां च मतेन त्वष्टममेव।



